आनन्दपूर्णविद्यासागरकृतिश्चापरा, क्रमेणाभिप्रायप्रकाशि[illegible]ा,भावशुद्ध्याख्या व्याख्यानरत्नाख्या वा, तत्त्वसमीक्षाख्या वाचस्पति[illegible]कृतिश्च। तत्रान्त्या नोपलभ्यते कुत्रापि। प्रथमा तु १९३५ तमे वत्सरे पूज्यश्रीकुप्पुस्वामिशास्त्रिपादैर्बहुतरादर्शादिपरिशोधनपूर्वकं बहुना परिश्रमेण संशोध्याचिरप्रकाशनीयावस्थायामासीत्॥

### तत्र शंखपाणिव्याख्यया साकं ब्रह्मसिद्धिः प्राक्ःप्रकाशिता

तत्र ब्रह्मसिद्धिर्मूलमात्रं प्रथमतः, अन्ते परिशिष्टरूपेण शङ्खपाणिव्याख्यया पण्डितकुलस्य, संस्कृतवाङ्मयस्य वा दौर्भाग्यवशादस्तं गतेष्वपि तेषु यशःकायेषु तदन्तेवासिना पी. पी. एस्. शास्त्रिमहोदयेन क्षुद्रेणाऽऽमुखेन स्वीयेनापि साकं सा प्राकाशि॥

### प्रकाशितायां ब्रह्मसिद्धेर्भूमिकाद्वये प्रथमया महत्या मण्डन-सुरेश्वरयोरनैक्यम्, क्षुद्रया द्वितीयया भूमिकया तयोरैक्यं च सूच्यत इवोभयत्रार्थसाम्यमात्रेण, परं तु तदप्रयोजकम्, किन्तु विचारसाध्यम्, अतोऽस्या भूमिकाया उदयः

तत्र शास्त्रिपादानां गम्भीर-जटिल-विप्रतिपन्न-बहुतरसमस्यापरीक्षाभरिता भूमिका मण्डनसुरेश्वरैक्यम्, तत्प्रसङ्गेन मण्डन-सुरेश्वर-भगवत्पादानां पक्षप्रतिपक्षरूपाणि च परीक्षमाणा सर्वमेव पण्डितकुलमधमर्णयति॥

पी. पी. एस्. शास्त्रिमहोदयास्तु मण्डन-सुरेश्वरयोरैक्यानैक्यविषये स्वीयं मतं स्वीयेनामुखेन सूचयन्ति, केषाञ्चन श्लोकानां ब्रह्मसिद्धिगतानाम्, सुरेश्वरवार्तिकगतानां चार्थतः समानानां समुद्धरणपूर्वकं मण्डन-सुरेश्वरयोरैक्यमिव॥

तत्र शब्दतोऽसाम्येऽप्यर्थतः साम्यमात्रं वाक्यविशेषाणां तत्कर्त्रैक्यसाधनेऽकिञ्चित्करम्। तत्र शास्त्रिमहोदया वदन्ति नामभेदमात्रमकिञ्चित्करमवस्थाभेदेन तदुपपत्तिं मन्वानाः। अयमेव न्यायो यद्यत्राप्यनुसन्धीयते, तर्हि सुरेश्वरवाक्यं किं मण्डनेनानुसंहितम्, उत मण्डनस्य वाक्यं सुरेश्वरेणेति दुर्निश्चयम्। तत्र मण्डन-सुरेश्वरयोर्भेदो यदि प्रमाणसिद्धः, तर्हि साम्यमिदमकिञ्चित्करमेव, इति साम्यमात्रं वाक्यविशेषाणामादाय तदैक्यसाधनं न क्षोदक्षमम्। तत्र मण्डन-सुरेश्वरयोरैक्यानैक्यविषये, तत्सिद्धान्तस्य, भगवत्पादसुरेश्वरादिसिद्धान्तस्य च कियद् वैषम्यम्, तेन का वा संगतिः प्रकृतस्य विषयस्येत्यादिकं बहुतरपरीक्षासाध्यम्, इति नेह हठादेव किमपि सुवचम्। सर्वं

चेदमत्र भूमिकायां यथाशक्ति, यथासम्भवं च परीक्ष्य विवेचयितुं विधेयतमस्यास्य "मन्दः कवियशः प्रार्थी"ति न्यायेनायं प्रयत्नः। तत्साधुत्वासाधुत्वविचारे तु पण्डितप्रवराः पाठकाः सुधिया एव प्रमाणम् ॥

**व्याख्याद्वयस्य साम्प्रतं संस्क्रियमाणस्य स्वरूपविवेकः**

तत्रेदं संस्करणं ब्रह्मसिद्धेर्व्याख्यानद्वयमात्रस्य चित्सुखानन्द(मुनि)-प्रणीतस्यावतार्यते, येन ब्रह्मसिद्धिसिद्धान्ता बहवो विशदमवगन्तुं पार्येरन् ॥

यद्यपीदं व्याख्यानद्वयं किञ्चित् किञ्चिदादौ, मध्ये च लुप्तमेवोपलभ्यते; तथापि पाठकानां तत्राप्यंशे तदर्थविमर्शने क्लेशो मा भूत्, इति तावन्मात्रस्य कृते तदंशमात्रे शंखपाणिव्याख्योपह्रियते ॥

तत्र चित्सुखमुनिकृतायामभिप्रायप्रकाशिकायामादौ तुरीयपृष्ठे तृतीय-पंक्तिपर्यन्तस्य मूलस्य विवरणं नोपलभ्यते, भाव[1]शुद्धौ तु तर्ककाण्डे पृष्ठाष्टकपरि-मितमूलव्याख्यांशः, अपरं सर्वं त्वन्यूनम्, परिपूर्णं च सुसम्बद्धमुपलभ्यत उभयत्र ॥

तत्र मुद्रितस्य पुनर्मुद्रणमप्रकाशितादर्शमात्रप्रकाशनमात्रलक्ष्यस्य केन्द्र-शासनविद्याविभागस्य न नियतं कृत्यम्, प्रथमं संस्करणमपि मूलव्याख्ये पृथगेव मुद्राप्य प्रकाशं प्रापितम्, इति साम्प्रतमपि सैव नीतिरालम्ब्यते। मूलांशस्तु तत्तत्पृष्ठादिसंख्यानिर्देशमात्रेण प्रथमे संस्करण इवात्रापि सूच्यते ॥

**ब्रह्मसिद्ध्यर्थानां विस्तरेण संकलनप्रतिज्ञा**

ब्रह्मसिद्ध्यर्थानां संग्रहस्तु तत्तादृशानां तदीयसिद्धान्तविशेषाणां तत्तत्प्र-करण एव ब्रह्मसिद्धेः, वार्तिकादेश्च परीक्षावसरे नितरामुपकरिष्यति, इति यथासम्भवमुपयुक्तांशमात्रसंग्रहोऽयं विस्तरात्माऽपि संग्रहनाम्ना तत्र तत्र क्रिय-माणोऽपि न व्याघाताय ॥

**"आनन्दमेकमि"ति प्रथमश्लोको वस्तुनिर्देशोऽपि, मङ्गलाचरणमपि, नात्र व्याख्यानां सिद्धान्तवैषम्यम्**

तत्र प्रथमे काण्डे—

"आनन्दमेकममृतमजं विज्ञानमक्षरम्।
असर्वं सर्वमभयं नमस्यामः प्रजापतिम् ॥"

इति मङ्गलश्लोको वस्तुनिर्देशोऽपि। तेन न स्तुतिमात्रेण, न वा प्रणत्या, किन्तु

वस्तुनिर्देशेनापि मङ्गलाचरणमिति स्वयं ब्रह्मसिद्धिः, तद्विवर[illegible]ेन व्याख्यानानि चावगमयन्ति । प्रायेण सर्वाणि व्याख्यानान्येकरूपमेव[illegible]तुं प्रवर्तन्ते, न तु लेशतोऽपि सिद्धान्तवैषम्यं कुत्रापि ॥

**आनन्दस्य न दुःखाभावरूपत्वम्, किन्तु भावरूपत्वम्**

तत्र मङ्गलश्लोकगतानन्दपदविवरणप्रसङ्गेन ब्रह्मसिद्धिर्दुःखनिवृत्तिरेव तदत्यन्ताभावरूपाऽऽनन्द इति वैशेषिक-पातञ्जलादिमतपरीक्षणप्रसङ्गे शीतह्रदे निमग्नार्धकायस्य, कुम्भीपाकादौ च दुःख-तदभावयोरुभयोरपि दर्शनेनाविरोधात्, भावरूपस्य ब्रह्मणः पुंलिङ्गप्रजापतिशब्देन निर्दिष्टस्यानन्दरूपत्ववत् दुःखाभावरूपत्वासंभवाद् न दुःखाभावोऽत्रानन्दपदार्थः । अयमेव न्यायः कामनिवृत्तेरानन्दरूपतायामपि । अयमत्राधिको विशेषः—यत्कामनिवृत्तिः केषाञ्चन दुःखायापि भवति, अशक्या च ; यतः—

न जातु कामः कामानामुपभोगेन शाम्यति ।
हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते ॥

**आनन्दस्य भावरूपत्वं पुरुषार्थत्वेनापि**

तत्र ब्रह्मणो भावरूपानन्दरूपत्वोपपादनं मुमुक्षाया अप्यधिकारिविशेषणस्य सूचनार्थम्, यतः पुरुषार्थत्वं ब्रह्मणः सूपपादम् ॥

**इच्छाया द्वैविध्येन मुमुक्षाया इच्छान्तरवद् न दुःखनिदानत्वम्**

तत्र ब्रह्मसिद्धिर्मुमुक्षाया मोक्षेच्छारूपत्वादन्यत्र रागस्य संसारहेतुत्वदर्शनात् मुमुक्षाऽपि संसारायैव स्यादिति शङ्कां द्वेधा समाधत्ते—तत्त्वदर्शनवैमल्यादिच्छा मोक्षाय, तददर्शननिबन्धना तु सा संसारायेति। अथवा श्रुतिप्रामाण्यात् शान्ताद्यधिकारिकश्रवणादौ मुमुक्षा न संसारायेति ॥

निष्कर्षस्तु—रजस्तमोवृद्धिमूलिकेच्छा बन्धाय, सत्त्ववृद्धिमूलिका तु सा शान्तये, मोक्षाय वेति । इदमेवाभिप्रेत्य भगवद्गीता—आसक्तिः कर्मफलेषु बन्धाय, अनासक्तिस्तु तत्र शान्तये, भगवति त्वासक्तिरपि भक्तियोगाख्याऽनासक्तिरिव मोक्षायेति। अतो न मुमुक्षाऽप्यनासक्तियोगरूपा ब्रह्मजिज्ञासाधिकारिविशेषणतां नार्हति। इयं हि व्यवस्था ब्रह्मसिद्धिमेवोपजीव्याऽऽत्मानं लभते॥

इदमेवाभिप्रेत्य—

"दैवप्रसादकाम्या च चित्तशुद्धेश्च कामना ।
मोक्षस्य कामना चेति कामनेयं न कामना ॥"

'कामात्मता न प्रशस्ता न चैवेहास्त्यकामता ॥'

इति। न चानन्द न ‍भावरूपत्वेऽपि ब्रह्माऽऽनन्दवत्, किन्त्वानन्दस्वरूपमात्रम्; "आनन्दो ब्रह्मे... ...नादि"त्यादिश्रुतेः। अत एव श्रुतिः—"एकमेवाद्विती-यमि"ति। अत एव ...नाभावरूपं ब्रह्म; संवेदनरूपत्वाच्च। इदमेवाभिप्रेत्य मङ्गलश्लोके 'विज्ञानमि'ति विज्ञानरूपतोक्तिः; अन्यथा ब्रह्मणो भावरूपत्वाभावे तदनुपपत्तिः। 'यतो न चतुष्कोटिविनिर्मुक्तं ब्रह्म

अत एव न दुःखाभावरूपताऽऽनन्दस्य, न वा दुःखाभाववत् तत्, इति न भावाद्वैतवादो मण्डनस्य॥

ब्रह्मणो ज्ञानरूपत्वं ज्ञेयत्वं चाविरुद्धम्। तत्र घटादिवैलक्षण्यं ज्ञेयत्वेऽपि

तत्र विज्ञानरूपस्यापि तस्य विज्ञेयत्वमपि वृत्तिव्याप्यतामात्रेण, न तु घटादिवत् फलव्याप्यतया। इदमेवाभिप्रेत्य—

"फलव्याप्यत्वमेवास्य शास्त्रकृद्भिर्निराकृतम्।
ब्रह्मण्यज्ञाननाशार्थं वृत्तिव्याप्यत्वमिष्यते॥"

इत्यादिवचनानि, "अनुभूतिः, स्वप्रकाशा, अनुभूतित्वात्; अनुभाव्यत्वे घटादिवदननुभूतित्वप्रसङ्गात" इति चेष्टसिद्धिः। 'अविद्यानिवृत्तिपरत्वाच्छा-स्त्रस्ये'ति भाष्यमूलश्चायं सिद्धान्तो ब्रह्मसिद्धेः। भामतीविवरणप्रस्थानमप्येवमेव॥

"सर्वप्रत्ययवेद्येऽस्मिन् ब्रह्मरूपे व्यवस्थिते।
प्रपञ्चस्य प्रविलयः शब्देन प्रतिपाद्यते॥"

इत्यस्याप्ययमेवाशयः। मोहावरणापगमे चास्य स्वप्रकाशं ब्रह्माविर्भवति, इति प्रपञ्चाभावमात्रे न वेदान्तानां तात्पर्यम्, न वा तेनात्र भावाद्वैतवादे मण्डनस्य तात्पर्यमुन्नेयम्॥

अत्र विवरण-भामतीप्रस्थानविवेकः।

भामतीसिद्धान्तोऽप्ययमेव। इयान् विशेषः— यद् ब्रह्मसिद्धिप्रस्थाने-ऽविद्यानिवृत्तेः, तत्प्रयोजकप्रमाणजन्यवृत्त्युपहितस्वरूपबोधात्मत्वम्, इति बोधात्मा न वृत्तिविषयः, न वा शुद्धं वृत्तिविषयः, किन्तूपहितम्, विवरणमते तु वृत्तिविषयबोधरूप आत्मा, इत्युभयत्र ब्रह्मणो घटादिवन्न फलव्याप्यत्वम्॥

अभिप्रायप्रकाशिकाऽत्र ब्रह्मस्वप्रकाशतावादे "तस्मादसंवेद्यः, आत्मा, प्रकाशत्वात, असंवेद्यत्वं च विषयवत् कर्मभावाभावादि"रिति, ब्रह्मसिद्धिव्या-

ख्यानप्रसङ्गे विशेषेण विवेचयति भावशुद्ध्यादिरिव, इत्या[...]ावरूपत्वपक्षेणा-द्वैतसिद्धान्तव्यवस्था ॥

**ब्रह्मदत्तादीनां भावाद्वैतवादः, तन्नि[...]ः।**

तत्र प्रपञ्चप्रविलापनं ज्ञानकार्यमिति वदन्तो ब्रह्मदत्तादयः दुःखाभावरूपत्व-तद्वत्त्वाभ्यामा'नन्दमि'ति स्वप्रकाशब्रह्मणोऽत्र निर्देश इति मन्वाना भावाद्वैतमत्रावतारयन्तीति "अन्ये मन्यन्ते" इति (पृ० 4) ब्रह्मसिद्धिरुपक्षिपति ॥

तत्र "स्यादेतत्" इत्यपि धर्म-धर्मिणोर्भेदेनाभावस्यापि मिथ्यात्वेन भावाद्वैतायोगमाशंक्य 'विज्ञानात्मनो ब्रह्मणोऽस्थूलत्वादिरिव दुःखाभावोऽप्युपाधिविशेषः' इति ब्रह्मणोऽभावरूपत्वम्, इति तद्व्यतिरेकेण भावरूपद्वैताभाव एवाद्वैतवाद इति भावाद्वैतमतम् । स च भावाद्वैतवादो मण्डनस्याभिप्रेतः, भगवत्पाद-सुरेश्वरादीनां तु न सोऽभिप्रेत इति सिद्धान्तभेदं शास्त्रिपादाः प्रथमसंस्करण-भूमिकायां विवेचयन्ति। तत्रैव संस्करणे विषयसूचिकायां तु नवमं विषयम्, 'आनन्दो भावरूपो धर्मो नाद्वैतं विहन्ती'ति केषांचिन्मतस्य निरूपणमित्युपक्षिपन्तः शास्त्रिपादा अपि भावाद्वैतवादोऽन्येषामेव केषाञ्चनेति वदन्तोऽपि तन्निराकरणं विषयान्तरमत्र न सूचयन्ति। तत्र 'अत्रोच्यते' इत्यादिसन्दर्भार्थासंग्रहणमेकमेव पर्याप्तम्—यत् शास्त्रिपादा प्राध्यापकहिरियण्णमहाशयाभिप्रायं समर्थयितुमेवात्र यतन्त इति ॥

**ब्रह्मसिद्धिर्भावाद्वैतं नाभिप्रैति, किन्तु तं निरस्यति, अत्र तत्त्वप्रदीपिकादिरपि प्रमाणम् ।**

तत्र न ब्रह्मसिद्धिर्भावाद्वैतं लेशतोऽप्यनुमन्यते । "अविद्यास्तमयो मोक्षः" "प्रपञ्चस्य प्रविलयः शब्देन प्रतिपाद्यते", किं तर्हि शब्देन प्रतिपाद्यते ? प्रपञ्चाभाव इति वदन्ती ब्रह्मसिद्धिरपि (1. त्र. 15 11. 2. 40 17.) वेदान्तवाक्यानां शक्तिविधया साक्षादबोधकत्वम्, तदुपलक्षितस्तदात्मा वा, परमात्मा तु लक्षणयाऽवगम्यते, इति व्यक्तं तत्तुरीये काण्डे विवेचयति ॥

अनेन ब्रह्मसिद्धिः "न हि शास्त्रमिदन्तया ब्रह्मावबोधयति"; अविद्यानिवृत्तिपरत्वाच्छास्त्रस्ये"ति भाष्यमेवोपष्टम्भयति, इति शास्त्रिपादोक्तरीत्या ब्रह्मसिद्धिकारा भावातिरिक्तं तद्वद्वा ब्रह्मस्वरूपं न वेदान्तप्रतिपाद्यं मन्यन्ते; न वा भगवत्पादाशयविरुद्धं तद्भाष्यानारूढं वा किमपि मण्डनो ब्रह्मसिद्ध्या विवक्षति ॥

अत एव न प्रदीपिका (तं. पृ. पृ. ३८ ब्रह्म ११९) अज्ञाननिवृत्तेर्ब्रह्मज्ञानरूपतया सिद्धि न्त्वाभावात् 'ज्ञातोऽर्थः, तज्ज्ञप्तिर्वाऽज्ञानहानिरि'तीष्टसिद्धिकारैरभिधानात् "विद्यैवाद्वया शान्ता तदस्तमय उच्यते" (ब्रह्म. पृ. १४०) इति ब्रह्मसिद्धिकारैरप्युक्तत्वात् "निवृत्तिरात्मा मोहस्य ज्ञातत्वेनोपलक्षितः।" इति वार्तिकनिर्दिष्ट एव पक्षो ब्रह्मसिद्धेरपीति ॥

**ब्रह्मणोऽवाच्यस्याप्रमेयस्यापि शास्त्रगम्यत्वे ब्रह्मसिद्धिरेव मूलम्**

श्रीमदानन्दतीर्थपादाः, न्यायसुधादयः, किं बहुना ? शतदूषण्यादयोऽपीक्षत्यधिकरणादौ शक्त्याऽवाच्यस्य, प्रमाणान्तराप्रमेयस्य च न लक्षणयाऽपि वेदान्तविषयत्वमिति भगवत्पादसिद्धान्तं यदाक्षिपन्ति, तदिदं—'न हि शास्त्रमपीदन्तया ब्रह्म बोधयितुं शक्नोति ; अविद्यानिवृत्तिपरत्वाच्छास्त्रस्ये'ति (ब्र. भा. १५७) भाष्याशयं ब्रह्मसिद्ध्युपपादितं यथावदनवगम्यैव, इति सुरेश्वरवार्तिकस्याप्यत्रैक्यमेव ॥

**भावाद्वैतवादस्वरूपम्, मण्डनमते तदभावश्च**

इदमत्र विचार्यम्—को वाऽयं भावाद्वैतवादो नाम ? यदि द्वितीयोऽभावो ब्रह्मणो विशेषणतया विवक्ष्यत इति द्वितीयाभाववद् ब्रह्म वेदान्तगम्यमिति, तर्हि मण्डनेन वक्ष्यमाणरीत्या प्रपञ्चाभावरूपतयैव ब्रह्मणः प्रतिपादनाद् न भावाद्वैतवादः। स्पष्टं चात्र 'अत्रोच्यते' (ब्र. ५-४) इत्यादिना विज्ञानानन्दयोरभेदमेव ब्रह्मसिद्धिर्वदति, न तु दुःखाभाववद्विज्ञानस्वरूपं ब्रह्म; अन्यथाऽऽनन्दस्य भावरूपत्वसमर्थनम्, विज्ञानेनाभेदव्यवस्था च कथमुपपद्येत ? इत्यानन्दपदविवरणप्रकरणमिदमानन्दस्य दुःख-कामादिनिवृत्तिरूपत्वनिरसनपरमत्यन्तमसङ्गतं स्यात् ॥

**पञ्चमप्रकाराविद्यानिवृत्तिर्न भावाद्वैतवादः**

पञ्चमप्रकाराविद्यानिवृत्तिस्तु न मण्डनस्य, किन्तु विमुक्तात्मन इति शास्त्रिपादाः स्वयं वदन्ति। तत्रानन्दबोधाचार्या अपि विमुक्तात्मनः पक्षमेवानुमन्वानाः

"निवृत्तिरात्मा मोहस्य ज्ञातत्वेनोपलक्षितः।"

इति वार्तिकमप्रमाणं मन्यन्त इति तदीयेष्टसिद्धिव्याख्यादौ, इति न केवलं मण्डनस्य, किन्तु सुरेश्वरस्यापि स वादोऽनभिमतः इति मण्डन-सुरेश्वरयोर-

त्रापि सिद्धान्तभेदः। विमुक्तात्मा हि स्वीयमेव किमपि प्र... मत्र प्रस्थापयति। तदपि तु प्रस्थानं न भावाद्वैतस्य, किन्तु सदद्वैतवादस्य...न्मतेऽपि हि ब्रह्म सद्रूपमेव, न तु तत् पञ्चमप्रकाराविद्यानिवृत्तिः, तद्वद्वा। सा हि सदसदादि-चतुष्कोटिविनिर्मुक्ताऽपि तत्त्वज्ञानजन्यत्वात् सप्रतियोगिकत्वात् शून्यकल्पा शून्यवद् धर्मताम्, धर्मिताम्; भावताम्, अभावतां वा नार्हति, इति न तेनापि भावाद्वैतवादव्यवस्था। अतोऽविद्यानिवृत्तिस्वीकारमात्रेण न भावाद्वैतं मण्डनसिद्धान्तेऽपि। यतः—

"निवृत्तिरात्मा मोहस्य ज्ञातत्वेनोपलक्षितः।"

इति वार्तिकसिद्धान्त एव मण्डनस्यापि, यः पूर्वोक्तरीत्या भाष्यारूढोऽपि, इति नात्र मण्डनः किमपि स्वतन्त्रं प्रस्थानं प्रस्थापयति॥

**मण्डनसिद्धान्तो न भगवत्पादसिद्धान्तबाह्यः**

मण्डनोऽपि सुरेश्वर इव 'अध्यारोपापवादाभ्यां निष्प्रपञ्चं प्रपञ्च्यते' इति भगवत्पादानां सर्वसिद्धान्तसारसंग्रहनिष्कर्षमेवानुकुरुते, इति कथं वाऽत्र शास्त्रिपादोक्तरीत्या भगवत्पादबाह्यता मण्डनसिद्धान्तस्य? तत्राद्वैतसिद्धान्ते प्रपञ्चाभावो मिथ्या, स सत्यः, स तदुभयविलक्षण इति त्रीणि प्रस्थानानि। तत्राद्येऽभावस्यापि मिथ्यात्वाद् न भावाद्वैतम्। द्वितीये स आत्मरूपत्वाद् वार्तिकप्रस्थान इव न धर्मः, इति न भावाद्वैतं भावसत्यत्वेन। तृतीये प्रस्था-नेऽपि शून्यकल्पत्वाद् भावाभावोभयविलक्षणत्वाद् न भावाद्वैतमभावधर्मत्वेन। सर्वथा तु नेदं मण्डनप्रस्थानस्य विषयः, इति कथं मण्डनस्य भावाद्वैतपक्षपाति-त्वम्? वार्तिककारस्य वा ततो बाह्यत्वमत्र?

"अध्यारोपापवादाभ्यां निष्प्रपञ्चं प्रपञ्च्यते।"

इति तु समानं तत्त्वं भगवत्पादभाष्य-वार्तिक-ब्रह्मसिद्धीनाम्॥

**मोक्षस्वरूपे मण्डन-सुरेश्वरयोरैकमत्यम्**

इदमत्र मुख्यमनुसन्धेयम्-यदैकरूप्यमेव मोक्षे ब्रह्मसिद्धि-वार्तिकयोः; यतः

"अविद्यास्तमयो मोक्षः सा संसार उदाहृता (पृ. ११९)

इति ब्रह्मसिद्धिः,

"अविद्यास्तमयो मोक्षः सा च बन्ध उदाहृतः॥"

इति वार्तिकं चैकार्थमेव॥

अत एवं 'न [illegible]ाहुरि'ति स्वीयमेव वाक्यं वार्तिकोपष्टम्भतयैव प्रमाणं ब्रह्मसिद्धिरुपक्षिपति'द्धि [illegible]दं च लघुचन्द्रिका वार्तिकमिति (२) पृष्ठे निर्दिशति, यस्यैवार्थतोऽनुवादो ब्रह्मसिद्धौ ॥

अध्यारोपापवादाभ्यां वस्तुतत्त्वनिर्णय एव
मण्डन-भगवत्पादयोर्लक्ष्यम्,
इति न भावाद्वैतवादस्तत्र कस्यापि

तत्र—

"अध्यारोपापवादाभ्यां निष्प्रपञ्चं प्रपञ्च्यते।"

इति वाक्यं सर्ववेदान्तसिद्धान्तसारसंग्रहे दृश्यते (पृ. २९५)। स भगवत्पादानां वा, अन्येषां सम्प्रदायविदां वा'देहात्मप्रत्ययो यद्वत्' इत्यादिरिवेति त्वन्यदेतत्। सिद्धान्तस्त्वयं भगवत्पाद-मण्डनयोरेक एव ॥

अत्र भगवत्पादा अपि नाद्वैतवादं स्वीयं स्वतन्त्रं मन्यन्ते, स्वबुद्धिमात्रविजृम्भणं वा। इदमेवात्र पृच्छयते—मण्डन इदं वाक्यं भगवत्पादनिबन्धादेव संजग्राहेति वर्णने को वा दोषः? यदि सिद्धान्तैक्यमुभयोरपि तत्र। 'परे' (पृ० २६) इत्युल्लेखस्तु स्वीयपक्षस्याप्यन्यशब्देनाध्यासभाष्ये भगवत्पादैरपि निर्देशात्, भगवत्पादीयस्य स्वसिद्धान्तत्वे न कथमपि विरुध्यते ॥

न केवलमिदम्, किन्तु बहूनि निदर्शनानि भगवत्पादभाष्यगतान्येव मण्डनेन मनसि धृतानीत्युपरि प्रदर्शयिष्यन्ते। तदेवं भावाद्वैतवादमादाय मण्डन-सुरेश्वरयोर्भेदो न क्षोदक्षम इति विवेचितम् ॥

भगवत्पादानां वा अन्येषां वा—"अध्यारोपापवादाभ्यां निष्प्रपञ्चं प्रपञ्च्यते" इति वचनमूलकः सिद्धान्तो यदि भावाद्वैतवादः, तर्हि भगवत्पादानामपि भावाद्वैतवाद एव सम्मतः स्यात्, इति भगवत्पादसिद्धान्ताद् बाह्यः कथं मण्डनसिद्धान्तः?

भावाद्वैतवाद-सदद्वैतवादवैलक्षण्यं न मण्डन-सुरेश्वरयोः।

तत्र यदि सुरेश्वरो भावाद्वैतं नोरीकरोति, मण्डनस्तु तमूरीकरोतीति व्यवस्थायां "अध्यारोपापवादाभ्यामि"ति नीतिर्न सुरेश्वराभिप्रेता, तर्हि भगवत्पादसिद्धान्ताद् बाह्यो वार्तिकसिद्धान्त एव स्यात्, न मण्डनसिद्धान्तः।

एतद्वचनमूलकस्तु वादः सर्वत्र सदद्वैतवाद इति त्वगत्या [illegible]र्तव्यम्। अतः सिद्धान्तभेदाद् न मण्डन-सुरेश्वरयोरनैक्यं भावाद्वैतवाद-[illegible]ांदभेदमादाय॥

तदेवं मङ्गलश्लोकगतानन्दपदविवरणप्रसङ्गेनाऽऽनन्दस्य भावरूपत्वम्, नाभावरूपत्वमिति विषयमादाय मण्डन-भगवत्पाद-सुरेश्वराणामनैक्यम्, न तु मतभेदस्तेषाम्, इति न तन्निबन्धनो मण्डन-सुरेश्वरयोर्भेदः। वस्तुतस्तु—न मतैक्यम्, तद्भेदो वा किञ्चित्करः। तदैक्येऽपि भगवत्पाद-सुरेश्वरादीनां भेदात्। तदभेदेऽपि शिवार्कमणिदीपिका-परिमलादिवेदान्तनिबन्धेष्वप्यय्यदीक्षितस्यैक्यादिति तु केचन॥

### अद्वैतवादेऽपि कल्पितेन, व्यावहारिकेण वा भेदेन भोगव्यवस्थाद्युपपत्तिः

मङ्गलश्लोकगतैकपदं त्वद्वितीयार्थकं सर्वेषु प्रस्थानेष्वेकार्थमेव; सर्वप्रकारभेदनिवृत्तिपरताया एव तत्र सर्वैरपि स्वीकारात्, जीवेश्वर-जीवपरस्परादिभेदवादनिरासार्थतायां सर्वेषामैकमत्याच्च॥

तत्राद्वैतवादेऽपि भोगव्यवस्थादिकं कल्पितम्, व्यावहारिकं वा भेदमादाय सर्वत्र न विरुध्यते। अभेदो हि जीवानाम्, जीवेश्वरयोर्वा निर्गलिततत्तदुपाधिसंविन्मात्ररूपेण, व जीवत्वादिना, इति न सर्वानुसन्धानं सर्वेषामापतति। अयमेव न्यायो दृग्दृश्ययोरभेदे। स हि केवलं दृगात्मना, विवेकस्तु परस्परविविक्तस्वभावदृश्यात्मनेति हि व्यवस्था॥

### मण्डनकालेऽपि न गौडपादः सौगतसमयगन्धी; यतो मण्डनेन सौगतसमय-निरासो बहुशः कृतः

तत्र मण्डनः सति प्रसङ्गे सौगतमतनिरसनं न जहाति—भगवत्पादसिद्धान्तो गौडपादकारिकोपष्टब्धो न सौगतसमयगन्धीति विवेक्तुम्। अतो ज्ञायते—मण्डनसमयेऽपि गौडपादीयं मतं सौगतसमयानुसारीति वादः कश्चनासीदिति। तत्र सौगतमत आलयविज्ञानस्य तत्तद्वासनाधारस्य तत एव लब्धात्मभावस्योच्छेद एव मोक्ष इत्यात्मनैरात्म्यवादः प्रायेण निरस्यतेऽत्र; यतोऽत्र क्षणिकविज्ञानोपरम एव मुक्तिरित्यात्मनैरात्म्यपक्ष उपन्यस्यते (पृ. ९-२)॥

ततस्तु शुद्धविज्ञानस्य विपाकपरिणाम एवालयविज्ञानं नाम। तत्र च तत्तद्वासनादिविपाकोपरमेण शुद्धविज्ञानभाव एव मोक्ष इति विषयनैरात्म्यवादस्त्वपरो विंशतिका-त्रिंशतिकाद्युपक्षिप्तोऽपि॥

### न विद्याया अविद्याविरोधित्वप्रकारः

अत्र प्र[illegible] द्धि [illegible]द्यास्वभावत्वाद् ब्रह्मणः, विद्यायाश्चाविद्याप्रतिबन्दित्वाद् नाविद्याया विद्यानि[illegible]त्वादिसंभव इति शास्त्रवैयर्थ्यमापाद्य, अविद्याया न ब्रह्मस्वभावत्वम्, न वाऽर्थान्तरत्वम्, नापि वाऽसत्त्वम्, किन्त्वनिर्वचनीयत्वम्। तच्च सर्ववादिसम्प्रतिपन्नं स्वीकर्तव्यम्—यथा—शून्यवादिनां सत्त्वेनाविद्या, असत्वेन व्यवहारः, विज्ञानवादेऽपि सत्त्वेनार्थापह्नवः, असत्त्वेन प्रतीत्यनुपपत्तिः, एवमेवान्यत्रापीत्यनिर्वचनीयत्वमेव स्वीकर्तव्यमिति ब्रह्मसिद्धिरपूर्वमेव तत्त्वमवतारयति॥

तत्रावभासमात्रसत्तावादस्तु विना विषयावभासैर्दुर्निरूपः; अन्यथा तदवभासो भ्रान्तिरेव स्यादिति व्यवस्थापयन्ती ब्रह्मसिद्धिरसतोऽपि विषयस्यार्थक्रियाकारित्वमङ्गीकर्तव्यम्, इति भ्रमस्थले ज्ञानेनैव व्यवहार इति पक्षं सत्ख्यातिवादिनाम्, असत्ख्यातिवादिनां च निरस्यति। तेन च सत्ख्यातिपक्षे यदि ज्ञानमात्रस्यार्थक्रियाकारित्वम्, तर्हि सर्वेषां ज्ञानानां सर्वार्थक्रियाकारितापत्तिरसत्ख्यातिमत इव स्यात्। यदि न सविषयस्यैवार्थक्रियाकारित्वम्, तर्हि भ्रम-प्रमाऽविवेकः, भ्रमबाधानुपपत्तिश्चेत्यनिर्वचनीयख्यातिरनिवार्येति ब्रह्मसिद्धिः साधयति॥

तत्राविद्यानिवृत्तिर्विद्ययेत्यपि न दुष्यति। तत्र विद्या यद्यपि ब्रह्मस्वभाव एव; तथापि तस्या निवर्तकत्वं श्रवणादिप्रमाणजन्यवृत्त्याकारताप्रयुक्तमेव, न तु ब्रह्मस्वभावत्वप्रयुक्तमिति ब्रह्मसिद्धिः। अस्य च ब्रह्मसिद्धिसिद्धान्तस्य मूलम् 'तमेतमेवंलक्षणमध्यासं पण्डिता अविद्येति मन्यन्ते, तद्विवेकेन च वस्तुस्वरूपावधारणं विद्यामाहुः' इति भगवत्पादानामध्यासभाष्यभाग एव। अयमपि 'विद्यामाहुरि'ति भाष्ये निर्देशात् न भगवत्पादोपज्ञः, किन्त्वनादिसम्प्रदायसिद्ध इति स्वीकर्तव्यम्। मण्डनो हि भगवत्पादवाक्यमपरामृशन् तदीयसिद्धान्तमेव सयुक्तिनिर्देशं साधयंश्च भाष्यार्थमेव विशदयति। अतो ब्रह्मसिद्धिरियं भगवत्पादभाष्यादपि प्राचीनेति न स्थापयितुं शक्यते॥

### भगवत्पादानां मण्डनस्य च ज्ञाने कर्मोपयोगेऽविरोधः

तत्र शास्त्रिपादाः—मण्डनो बहुषु स्थलेषु भगवत्पादभाष्यं स्वयं निरस्यतीति स्वीयभूमिकायां (३०-४१ पृष्ठेषु) भाष्यादिवाक्यानां संग्रहेण विवेचयन्ति, तेनापीदमेवावगम्यते भगवत्पादभाष्यानन्तरमेव ब्रह्मसिद्धिरिति॥

वस्तुतस्तु —भगवत्पादसिद्धान्तं कमपि ब्रह्मसि[illegible]निरस्यति, किन्तु तदुपबृंहणद्वारा ज्ञानप्रतिबन्धकनिवृत्तिद्वारा वा कर्मणां [illegible]वं संयोगपृथक्त्व-न्यायेन विद्योत्पादे दृष्टविधयैव (३६ तमे पृष्ठे) उ[illegible]त्योपपादयति। सम्मतं चेदं भगवत्पादानामपि—

"कर्मणैव हि संसिद्धिमास्थिता जनकादयः"

इत्यत्र 'संसिद्धि'पदेन मोक्षो विवक्ष्यत इति भाषमाणानाम् ॥

तत्र मोक्षो यद्यपि शमदमाद्यभ्यासेनापि भवति; तथापि साऽना-श्रमिणामूर्ध्वरेतसां चैव विषये शमादिमात्रसाध्या, न यज्ञाद्यपेक्षा। तदपेक्षया तु ज्ञानोत्पादः, प्रत्यक्षप्रमा वाऽचिरेण भवति, न त्वनाश्रमिणामिव चिरेणेति सूचयितुमेव "अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते" इति भाष्यम्। अविद्यया=कर्मणा निवर्त्य-निवर्तकभावेन सहोक्तिरिति; अन्यथा वितथमिद-माम्नानम्। सगुणोपासनमात्रविषयत्वे त्वस्य कर्म-भक्तियोगयोः सहसमुच्च-यस्याविरुद्धत्वात्, अविप्रतिपन्नत्वाच्च नात्र तद्विवक्षा सप्रयोजना। सारांशस्तु—विवि दिषासन्यासापेक्षया विद्वत्सन्यासो गरीयानिति ॥

**कर्मणामविद्यानिवर्तनक्षमे ज्ञान उपयोगः**

तत्र हि सन्यासः साधकावस्थायां कर्मयोग एव। सिद्धावस्थायां त्वनधिकारात् कर्मणि स्वतः सिद्धः सन्यासः। अत एव भाष्यम्—कर्माधिकारिविरोधित्वमशनायाद्यतीतात्मतत्त्वज्ञानस्येति ॥

**गृहस्थानामपि ब्रह्मविद्याधिकारो मण्डनमते**

इदमेव भाष्यमुपजीव्य कर्मणां संयोगपृथक्त्वन्यायेनावगतिपर्यन्ते ज्ञान उपयोगो मण्डनेनाभिप्रेयते। 'शान्तो दान्त उपरतस्तितिक्षुरि'त्यत्रोपरति-पदेन चित्तविक्षोभराहित्यं गृहस्थसाधारणं विवेकचूडामणौ भगवत्पादैर्भाषित-मप्यत एवोपपद्यते ॥

विविदिषासंन्यासस्य विद्याङ्गत्वे, विद्वत्सन्यासस्येशोपनिषत्तात्पर्यविषय-त्वाभावे च—

"कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः" इत्युपक्रमविरोधोऽपि। ईशोपनिषद्भाष्यमपि विद्यापदेन देवताप्रसंख्यासनमेव विवक्षति, देवताशब्दार्थस्तु "सा च प्रशासनादि"ति सूत्रात् परमात्मैवान्तर्याम्यधिष्ठानं वा विवक्ष्यते, इति कथमीशमन्त्रप्रस्तुतपरमात्मस्वरूपातिरिक्तस्याप्रकृतस्य विवक्षायामुपपद्यते ?

### उपास[illegible]र्थोऽप्यत्र स्वरूपसाक्षात्कारो निदिध्यासनमेव भावनापरपर्यायं प्रसंख्यानमेव

अतो भाष्य[illegible] संयोगपृथक्त्वन्यायेन कर्मण्यपि योगे तात्पर्यमविरुद्धम्, इति नात्र भगवत्पादसिद्धान्तबाह्यो ब्रह्मसिद्धिसिद्धान्तः। आनन्दगिरिरप्यत्र "अविद्यां चे"त्यत्राविद्या शास्त्रीयं कर्म; तत्कार्यत्वात्, निवर्त्य-निवर्तकभावेन च तयोः सहोक्तिरिति संयोगपृथक्त्वन्यायविषयतायामेवोपपद्यते। कथमन्यथा निवर्त्य-निवर्तकभावः कर्माविद्ययोः?

### मण्डनाभिमतो ज्ञान-कर्मसमुच्चयवादः, तत्र भाष्याविरोधश्च

इदं हि ज्ञान-कर्मणोः फले जननीये सहसमुच्चयविवक्षायां नोपपद्यते, किन्तु पुरुषसंस्कारविधया, संयोगपृथक्त्वेन वा ब्रह्मसिद्ध्यभिप्रेतेन। "सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत्" इति सूत्रेऽश्वदृष्टान्तः कर्मसहभावः श्रवणादेः क्षिप्रतरं फलसाधनत्व एव स्वरस इति ब्रह्मसिद्धिः। ब्रह्मसिध्यभिमतः कर्मसहभावः प्रसंख्यानेन साक्षात्कारे जननीये, न तु भास्करमत इव मोक्षे जननीय इति त्वन्यदेतत् ॥

शास्त्रिपादास्तु वदन्ति 'अश्ववदि'ति दृष्टान्ते मण्डन—भगवत्पादयोर्विरोधः—अश्ववदिति योग्यतानिदर्शनम्—यथा च योग्यतावशेनाश्वो न लाङ्गलाकर्षणे युज्यते, रथचर्यायां तु युज्यते 'एवमाश्रमकर्माणि फलसिद्धौ नापेक्ष्यन्ते, उत्पत्तौ चापेक्ष्यन्त इति' इति भाष्यविरुद्धाऽत्र ब्रह्मसिद्धिरिति ॥

एतद्भाष्याशयस्तु—यत्र मन्दगतिरपेक्ष्यते—लाङ्गलकर्षणादौ, न तत्राश्वो योज्यते, यत्र तु क्षिप्रगतिरपेक्ष्यते, तत्रैव रथचर्यादावश्वो नियुज्यत इति क्षिप्रतरमुपयोगो यज्ञादीनां विद्योत्पत्तावेवेति। अतो विद्योत्पत्तौ यज्ञादीनां संयोगपृथक्त्वन्यायेनोपयोग इति ब्रह्मसिद्धिपक्ष एव स्वरस इति नात्र भाष्यविरोधलेशः, प्रत्युतात्रैव भाष्यस्वारस्यम् ॥

इदमेवाभिप्रेत्य "सत्यमूर्ध्वरेतसां चाऽनाश्रमिणां वा विनाऽपि तैर्विशुद्धविद्योदय इष्यते, किन्तु कालकृतो विशेषः। साधनविशेषाद्धि क्षिप्रम्, क्षिप्रतरं च व्यज्यते, तदभावे चिरेण, चिरतरेण च। तदुक्तम्—"सर्वापेक्षा च यज्ञादिश्रुतेरश्ववदि"ति इत्यादि। शीघ्रं फलसाधने योग्यता यज्ञादीनाम्। अतः सति शीघ्रगतिसाधनलाभे तस्यैवोपयोगः कर्तव्य इत्येव भाष्याशयाद् भाष्यविरोधोऽत्र न मात्रयापि ॥

"नैष्कर्म्यसिद्धिं परमां सन्यासेनाधिगच्छति ॥" [illegible] गीताऽपि परमां नैष्कर्म्यसिद्धिं विद्वत्सन्यासेनाभिप्रैति। अत एव ज्ञ[illegible]रे तृतीये षट्के तदुपक्षेपः। अत एव कर्मयोगपरप्रथमषट्कस्य स्थित[illegible]लक्षणेनोपसंहार उपपद्यते। तेन हि स्थितप्रज्ञतायाः कर्मयोगेन साधकावस्थायां सहयोगः, अतिक्रान्तायां तु साधकावस्थायाम्—

"एषा ब्राह्मी स्थितिः पार्थ नैनां प्राप्य विमुह्यति ॥"

इति यावद्ब्रह्मभावं कर्मयोगनिष्ठाऽऽवश्यिकेति प्रतीयते ॥

अत एव तत्र—

"न कर्मणामनारम्भाद् नैष्कर्म्यं पुरुषोऽश्नुते।
न च सन्यसनादेव सिद्धिं समधिगच्छति ॥"

इति कर्मयोगस्य फलसिद्धिनियमस्योपक्रान्तस्यैव—

"नैष्कर्म्यसिद्धिं परमां सन्यासेनाधिगच्छति।"

इत्युपसंहार उपपद्यते। नैष्कर्म्यसिद्धिर्न स्वरूपतः कर्मत्यागेनाऽऽविद्योदयम्, किन्तु तामसः त्याग इति गीतोपदिशति ॥

## ब्रह्मसिद्धि-गीताभाष्ययोरैकार्थ्यम्

तत्र यद्यपि श्रीभाष्यादिमतादस्य सिद्धान्तस्याविशेषः प्रतीयते; तथापि विद्यापदेन फलरूपम्, प्रपञ्चोपशमरूपं वाऽऽत्मस्वरूपं विवक्ष्यते, न तु तन्मत इव सगुणोपासनमिति तु विशेषोऽनुसन्धेयः। न हि तन्मत आसगुणब्रह्मोपासनं कर्मयोगः, तस्मिन्निष्पद्यमाने वा कर्महानिः।

"अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते।"

इति वा यथाश्रुतम् ॥

## नैष्कर्म्यसिद्धि-ब्रह्मसिद्ध्योरविरोधः

न च नैष्कर्म्यसिद्धिः सुरेश्वराभिमता, ब्रह्मसिद्ध्यभिमता वा तस्या विलक्षणा, इति न केवलेन भाष्येण, किन्तु वार्तिकेनापि न ब्रह्मसिद्धेर्विरोधगन्धोऽपि ॥

सुरेश्वरोऽपि शङ्कर इव विविदिषासन्यासमिव, विद्वत्संन्यासमपि स्वीकरोतीति व्यक्तमुत्तरत्र। मण्डनोऽपि—विद्वत्सन्यासमिव विविदिषासन्यासमपि, सत्यम्,

फलाय कल्पते, न तु क्षिप्रम्, स तु तदनधिकारिणोऽनाश्रमिण ऊर्ध्वरेतस एवाधिकरोतीति म[illegible]द्धि[illegible]

अत एव गृहस्थानामपि ब्रह्मविद्याधिकारः, न तु संन्यासिनामेव। सन्यासस्तु गृहाद्वापि यद्यपि शास्त्रीयोऽनाश्रमिणाम्, ऊर्ध्वरेतसामिव वा, परंतु स गृहस्थानामिव क्षिप्रफलावाप्तिविरोधीत्येव मण्डनाशयः। गृहस्थानां ब्रह्मविद्याधिकारं भगवत्पादादयोऽप्यनुमन्यन्त इति पूर्वमेवोपरतिपदार्थविचारप्रसङ्गे सूचितमेवेति न भाष्यादिविरोधोऽत्रापि ब्रह्मसिद्धेः। अधिकमुत्तरत्र॥

**स्थितप्रज्ञस्तु साधको न तु सिद्ध इति, स्थितप्रज्ञविषये मण्डनाभिप्रेते न भाष्यादिविरोधः। तस्यावस्थाविशेषमादाय साधक-सिद्धावस्थाद्वयाविरोधात्**

स्थितप्रज्ञस्तु साधकः, न तु सिद्ध इति तु ब्रह्मसिद्धिः सत्यं लिखति, परं तु न जीवन्मुक्त्यङ्गीकारपक्षे, किन्तु तदनङ्गीकारपक्षमभिप्रेत्यैव॥

मण्डनो हि (पृ. १२८-१३१) केचन जीवन्मुक्तिमूरीकुर्वन्ति, परे नोररीकुर्वन्तीति पक्षद्वयमप्युपन्यस्य नान्यतरकल्पमत्रागृह्णाति। तत्र भगवत्पादसिद्धान्तो यदि विद्वत्संन्यास एव, तर्हि न जीवन्मुक्तिः। यदि विविदिषासन्यासः, तर्हि जीवन्मुक्तिरक्षः। तत्र पूर्वोक्तरीत्याऽनाश्रमिणाम्, ऊर्ध्वरेतसां च चिरेण मुक्त्यर्हाणां जीवन्मुक्तिः, स्थितप्रज्ञानां च साधकावस्था चेति विषयविवेकमात्रमाशेते। व्यक्तं चैतत् ब्रह्मसिद्धौ (पृ. १२८-१३१) पृष्ठेषु॥

भाष्यकारस्तु (३-३-३२) "यावदधिकारमवस्थितिराधिकारिकाणाम्" इत्यत्राप्यपान्तरतमःप्रभृतयोऽपीश्वराः परमेश्वरेण तेषु तेष्वधिकारेषु नियुक्ताः सन्तः सत्यपि सम्यग्दर्शने कैवल्यहेतावक्षीणकर्माणो यावदधिकारमवतिष्ठन्ते" इत्याधिकारिकाणामक्षीणकर्मत्वमवगमयन्, सम्यग्दर्शिनामपि कर्माधिकारं व्यवस्थापयंश्च यावत्कैवल्यं कर्माधिकारसाधनात् स्थितप्रज्ञानां साधकावस्थामेवात्र मन्यते, इति स्थितप्रज्ञस्तु साधकः, न तु सिद्ध इति सिद्धान्तोऽपि भाष्यारूढः॥

मण्डनो हि—"स्थितप्रज्ञस्तावन्न विगलितनिखिलाविद्यः सिद्धः, किन्तु साधकावस्थाविशेषं प्राप्त" इति वदन् न स्थितप्रज्ञस्य ब्रह्मसाक्षात्काराभावम्, किन्तु निखिलबन्धनिवर्तनक्षमसाक्षात्काराभावमेवाभिप्रैति। भाष्यमप्यनुपदो-

द्धृतं "सत्यपि सम्यग्दर्शनेऽक्षीणकर्माण:" इति जीवन्मु... तत्त्वसाक्षात्कारं सन्तमनुमन्यते, तत्र निखिलाविद्याविगलनाभावमात्रं ...थो जीवन्मुक्तानां विशेषः ॥

**स्थितप्रज्ञस्तु साधकः, न सिद्ध इति भामत्यविरोधः**

तत्र "स्थितप्रज्ञश्च न साधक:" इति-भामत्युक्तिस्तु जीवन्मुक्तस्य साधकत्वमवस्थाविशेषे, प्रथमादितुरीयान्तभूमिकासु, पञ्चमादिभूमिकासु तु सिद्धत्वम्, तत्राप्यनुत्थितैकावस्थस्य ब्रह्मविद्वद्वरिष्ठस्य शरीरादिधारणं जीवन्मुक्तस्यापि तस्य न बन्धायेत्यभिप्रायेणैव, इति नात्र भगवत्पाद-मण्डन-वाचस्पतीनां विरुद्धभाषिता। अत एव भामती—"तस्योत्तरोत्तरध्यानोत्कर्षेण पूर्वप्रत्ययानवस्थितत्वात्, निरतिशयस्तु स्थितप्रज्ञः सिद्धः एवे"ति लिखति। तेन च पूर्वपूर्वभूमिकास्थः स्थितप्रज्ञः साधकः, अन्तिमभूमिकागतस्तु सिद्ध एव, इति नात्र ब्रह्मसिद्धिमतनिरासो भगवत्पादानाम्, वाचस्पतेर्वा मण्डनपृष्ठगामिन इति (४८) पृष्ठगतानां शास्त्रिपादोक्तीनामपि नात्रावसरः ॥

**योगवासिष्ठरीत्या शुद्धप्रत्यगात्मज्ञानी स्थितप्रज्ञः साधक एव**

द्वितीयाध्याये सांख्ययोग एव स्थितप्रज्ञलक्षणोक्त्या शोधित-त्वम्पदार्थप्रत्यगात्मज्ञानवानेव स्थितप्रज्ञो नाम, स च न जीवन्मुक्तः, किन्तु साधक एव। "भोगेन त्वितरे क्षपयित्वे"ति सूत्रभाष्यं तु ज्ञानयोगनिष्ठं जीवन्मुक्तं विषयीकरोति, इति स सिद्ध एव, इति तत्रत्यभाष्य-भामत्यादिग्रन्थसन्दर्भः। गुणातीतावस्थैव जीवन्मुक्तावस्थेति मत्वा स्थितप्रज्ञस्तु साधको न तु सिद्ध इति ब्रह्मसिद्धिः ॥

भाष्ये स्थितप्रज्ञलक्षणनिर्देशो जीवन्मुक्तिसाधक उक्तः। तत्र "स्थितप्रज्ञः साधको न साक्षात्कारवानि"ति मण्डनमिश्रोक्तं दूषणमुद्धरतीति कल्पतरोर्भामत्युक्तमवतरणमपि 'स्थितप्रज्ञश्च साधकः' इति भामतीग्रन्थस्य व्याख्यानम्। अवस्थाविशेषेण साधकत्व-सिद्धत्वयोरुभयोरपि मण्डनमिश्राभिप्रेतत्वेनाविरोधात् कुत्रचन भाष्य-वार्तिकसिद्धान्तनिरासो वार्तिकनीत्या मण्डनस्याविरुद्ध इति निवेदितम् ॥

इयमेव नीतिः "अप्रवृत्तफलस्य तु कर्माशयस्य मुक्तेषोरिव वेगक्षयाद् निवृत्तिरि"ति भाष्यस्य ब्रह्मसिद्धौ (१३३) निरासे। प्रारब्धकर्मणां भोगातिरिक्तं

न निवर्तकमिति । न [illegible]न्तो भाष्य-ब्रह्मसिद्ध्योरविप्रतिपन्नः । उदाहरणविशेष-मात्रे विप्रतिप्रत्तिस्सिद्धि [illegible]त्करी ॥

### "भोगेन त्वितरे क्षपयित्वे"त्यत्र भोगपदं भोगपर्यन्तमभ्यस्यमानज्ञानपरम्

"भोगेन त्वि"ति सूत्रस्थं भोगपदं ज्ञानातिरिक्तं निवर्तकं वारयतीति ब्रह्म-सिद्धिरभिप्रैति, तेनावगम्यते—आभोगसमाप्त्यभ्यस्यमानं ज्ञानमेव तत्रापि निवर्त-कमिति। अत एव ज्ञाननिवर्त्यत्वेन मिथ्यात्वाविरोधः। अतो भोगपदं तदवसान-पर्यन्तमभ्यस्यमानज्ञानपरमिति फलति । तत्रापान्तरतमःप्रभृतय ईश्वराः स्वेच्छया शरीरान्तरं गृह्णन्तो न जीवन्मुक्ताः, इति न "भोगेन त्वितरे क्षपयित्वे"ति सूत्रविषयाः । अत एव तदर्थं "यावदधिकारमि"ति सूत्रान्तरम्, अधिकरणान्तरं वा । अतस्तेऽपि जीवन्मुक्ता इति वादो नोपपद्यते ॥

### शाब्दपरोक्षापरोक्षवादयोर्न मण्डनविरोधः

शाब्दापरोक्षवादः, शाब्दपरोक्षवादश्चोभावपि ब्रह्मसिद्धौ संगृहीतौ श्रुत्यारूढौ च, इति न तयोः प्रस्थानभेदमात्रयोर्विरोधः ॥

### अविद्याया जीवाश्रयत्वपक्षोऽपि भाष्यारूढः, तथा तस्या ईश्वराश्रयत्वपक्षोऽपि

"अनिर्वाच्याविद्याद्वितयसचिवस्य प्रभवतः" इत्यत्राविद्याद्वितयम्, तस्य जीवाश्रयत्वं च प्रतिपादितमपि "तदधीनत्वादर्थवत्" (२-१) इति सूत्र-विवरणावसरे—"यदा तु जीवो महान्, तदाऽव्यक्ताधीनत्वाद् जीवभावस्य, 'महतः परमव्यक्तमि'त्युक्तम्। अविद्या ह्यव्यक्तम्। अविद्यावत्त्वेनैव जीवस्य सर्वो व्यवहारः" इति भाष्यव्याख्यावसरे भामत्यां व्यक्तम्। एवमेव तत्रैव "अविद्या हि बीजशक्तिरव्यक्तशब्दनिर्देश्या परमेश्वराश्रया मायामयी महासुषुप्तिरि"त्यत्रेश्वर-मायाश्रयत्वपक्षोऽपि स्वीक्रियते, इति न जीवाश्रयाविद्यास्वीकारोऽपि ब्रह्मसिद्धे-र्भाष्याशयविरुद्धः । तत्रैकस्य पक्षस्य वार्तिकेन स्वीकारो न भाष्यबाह्यत्वं कस्यापि साधयितुमलम्। तत्र द्वितीयमज्ञानं कार्याध्यास उत्तरोत्तराध्याससाधकः प्रस्थानान्तरम्, तूलाज्ञानं वेति त्वन्यदेतत्। अधिकं त्वत्र न्यायचन्द्रिकाभूमि-कातोऽवगन्तव्यम् ॥

### मण्डनाभिमता विपरीतख्यातिरनिर्वचनीयख्य[illegible]व, नान्यथाख्यातिः, इति न तत्रापि भाष्या[illegible]धः

तत्र विपरीतख्यातिर्मण्डनस्य " अन्ये तु यत्र य[illegible]सः, तस्यैव विपरीतधर्मत्वकल्पनामाचक्षते " इत्यत्र विपरीतधर्मपदेनानिर्वचनीयवादस्यैव विवक्षणात्, अन्यथा मुख्यविप्रतिपत्तिविषयानिर्वचनीयख्यातेरत्रानुल्लेखाद् अनिर्वचनीयख्यातेरत्र भाष्ये स्थानमेव न स्यात्, इत्यद्वैतवादो नोत्तिष्ठेदपि, इति न विपरीतख्यातिरियं नैयायिकानामन्येषां वा विपरीतख्यातिः शास्त्रिपादोक्तरीत्या । सर्वथा तु ब्रह्मसिद्धिर्भाष्यानारूढं न कमपि सिद्धान्तमत्रानुवदति ॥

### प्रस्थानभेदेन विरोधोऽकिञ्चित्करः

न च कल्पद्वये भाष्याभिप्रेत एकत्रैकतरस्य, अपरत्रापरस्य समर्थनम्, दूषणं वा तत्तत्प्रस्थानमात्ररक्षणैकदीक्षे विरुद्धम्, इति वार्तिके, ब्रह्मसिद्धौ च प्रस्थानभेदसमर्थनं, न भिन्नसिद्धान्तत्वम्, ततः कर्तृभेदं वा साधयति ; अन्यथा स्वयं भाष्यमपि तु प्रस्थानद्वयमवलम्बते स्वसिद्धान्तसमर्थनाय, इति भाष्यकारोऽपि भिन्न आपद्येत ॥

किं बहुना ? भाष्यकारोऽपि—"विद्यां चाविद्यां चे"त्यादिमन्त्राणामीशमुण्डकगतानामर्थभेदं व्याख्याभेदेनाभिप्रैति, एवं समन्वयाधिकरणे श्रवणादिविधिपक्षनिरासम्, अन्यत्र च विधिपक्षम्, वार्तिकं तु विध्यन्तरपरत्वं श्रोतव्यादिवाक्यानाम्, किं बहुना ? सर्वं विधिपक्षम्, अविधिपक्षं च समर्थयति । नैतावता प्रस्थानभेदमात्रेण सिद्धान्तभेदो वार्तिकस्य, भाष्यसिद्धान्तबाह्यत्वं वा कोऽपि मन्यते । अतः प्रस्थानभेदमात्रं ब्रह्मसिद्धि-वार्तिकयोर्दृष्ट्वा, एकेनान्यस्य निरसनं चावलोक्य वार्तिक-ब्रह्मसिद्ध्योः कर्तृभेदसाधनं दुःशकमित्यलमधिकविस्तरेण । प्रकृतमेवात्राविद्यामनिर्वचनीयामधिकृत्य विचारयामः ॥

### जीवस्याविद्याश्रयत्वेऽन्योन्याश्रय-दूषण-परिहारप्रकाराः

तत्रेतरेतराश्रयत्वं वस्तुसिद्धावेव दूषणम्, न त्वनादिसिद्धे, इति जीवस्य, अविद्यायाः, तस्य तदाश्रयत्वस्य चानादिसिद्धत्वाद् नात्रान्योन्याश्रयो दूषणम्, तदनिर्वचनीयतासिद्धौ तु तद्दुर्निरूपत्वं न दूषणम्, किन्तु भूषणमेवेति ब्रह्मसिद्धिः ॥

### अविद्याया जीवाश्रयत्वे मण्डनाभिमते न दोषलेशोऽपि

तत्र जीवत्वं बुद्धिमात्रस्याविद्योपाधिप्रयुक्तम्, तदुपाधित्वं च जीवाश्रयत्वेन। अनिर्वचनीयसिद्धौ तु तद् दुर्निरूपत्वमप्रयोजकं भूषणमेवेत्येकं मुख्यं ब्रह्मसिद्धेः समाधानम्, यत्तु न केनाऽपि कुत्रापि वाऽनुसन्धीयते ॥

अपरं तु समाधानमविद्याश्रयत्वं जीवस्याविद्यारूपोपाधिधर्माक्रान्तत्वमेव, न तु तदुपधानप्रयुक्तं जगत्कारणत्वादि, इति स्फटिकमण्यादिस्थल इव नान्योन्याश्रयशङ्काऽपीति कृपाणादौ मुखप्रतिबिम्बादिदृष्टान्तेन ब्रह्मसिद्धिः सूचयति ॥

अपरस्तु परिहारोऽन्योन्याश्रयो यदि कार्याध्यासमाश्रित्य, तर्हि बीजाङ्कुरवदध्यासस्यानादित्वान्नात्र स दोषः। न च कार्याध्यासत्वमत्र तत्त्वज्ञाननिवर्त्यायास्तस्याः स्वीक्रियते, किन्तु ब्रह्मविवर्तोपादानताप्रयोजकाविद्याया एव। सा च स्वभावतोऽनादिर्न बीजाङ्कुरन्यायविषयः। अत एव "मिथ्याऽज्ञाननिमित्तः" इति कार्याध्यासातिरेकेण निमित्तरूपा सा स्वीक्रियते। तस्या निमित्तत्वं ब्रह्मावरणमात्रेण। अतो नोपादानत्वमपि तस्याः। तत्स्वीकारे हि न प्रयोजनमिति शङ्का तु तदनिर्वचनीयत्वेन सुपरिहरा ॥

### ब्रह्मणोऽविद्यास्वीकारे प्रयोजनानि

तत्र तत्स्वीकारप्रयोजनं ब्रह्मणो न परानुग्रहार्थम्; प्राक् सर्गात् परस्यानुग्राह्यस्याभावात्, नात्मक्रीडार्थम्; आप्तकामत्वात्। प्रयोजनमनपेक्ष्य प्रवर्तनं त्वविद्याया न युक्तम्। न च विवर्तमानताप्रयोजना सा; विशुद्धस्य ब्रह्मणोऽशुद्धायाः विकृतेः स्वीकारे बाधापत्तेरिति, शङ्का तु नात्र प्रसरति; आप्तकामानां कृतार्थानामेव लोकविलासार्थं, क्रीडादर्शनात्। आत्मक्रीडैव ह्यविद्यास्वीकारस्य परस्य प्रयोजनम् ॥

### ब्रह्मणि वैषम्य-नैर्घृण्यदोषापत्तिपरिहारः, तत्र भाष्यानुसरणं च

तत्र वैषम्य-नैर्घृण्यदोषस्तु मायाविनो विचित्रवस्तुसर्जनदीक्षस्येव न पर्यनुयोगमर्हतीत्येकेन कारणेन नावसरति। तत्र बालानां मृन्मयादिभिः क्रीडनमप्यत्रोदाहरणम्। अन्तिमं तु समाधानमत्र कर्माशयानुरोधेन विदधतो वैचित्र्यं न दोष इत्याचार्या इति ॥

अत्राचार्यपदेन सूत्रकारो विवक्ष्यत इति भावशुद्धि[illegible]अतो ज्ञायते— भाष्यमपि सूत्रारूढमेव मण्डनः प्रमाणं मन्यते, प्राची[illegible]ीयानुसारि वा। अत एव जीवन्मुक्तेषु कर्माशयस्य मुक्तेषूदाहरणं मण्डनो निराचष्टे ॥

### ब्रह्मणः शुद्धस्याशुद्धप्रपञ्चविवर्ततोपपत्तिप्रकारः

तत्र शुद्धस्याशुद्धा विकृतिः कथमिति शङ्कापरिहारस्तु 'नविलक्षणत्वा'-धिकरणपूर्वपक्षाभिमतप्रकृति-विकृतिभावस्यात्यन्तसालक्षण्यप्रयुक्तत्वे न नियमः; द्रवाणामपि कठिनकरकभावदर्शनेन व्यभिचारादिति मण्डनः प्रथममुदाहरति, गोमयाद् वृश्चिकोत्पत्तिस्त्वपरमुदाहरणमत्र व्यभिचारप्रदर्शनार्थम् ॥

### जीवानामविद्याश्रयत्वोपपत्तिः

तत्र जीवानामपि परमार्थतः संविन्मात्रत्वात् कथमविद्याश्रयत्वमिति शङ्का तु बिम्ब-प्रतिबिम्बन्यायेनौपाधिकत्वाद् बिम्ब-प्रतिबिम्बयोरिवौपाधिक-शुद्धयोरभेदात् परिह्रियते, तेन चाविद्याश्रयत्वं जीवस्याविद्योपधानमात्रम्, यथा बिम्बस्योपधानमात्रेण, इति तदुपधानमेवात्रापि विभ्रमहेतुः ॥

### अनादेरप्यविद्याया निवृत्त्युपपत्तिः

अत्राविद्या तूपाधिरनादिर्निर्हेतुकाऽप्युच्छेदमर्हतीत्यत्र युक्तिः, निदर्शनं च निर्दिश्यते। तत्र हेतुरविद्याया अनुच्छेदे शास्त्रप्रवृत्त्यनुपपत्तिः। तत्रानादेरुच्छेदे निदर्शनं तु पाकनाश्यानि परमाणुरूपाणि। उच्छेदिका त्वागन्तुक्यविद्याया अपि जीवाश्रिताया प्रमाणजन्या वृत्तिरेव, न विद्यास्वरूपमात्रम् ॥

### वृत्तेराविद्यक्या अप्यविद्यानिवर्तकत्वम्

तत्राविद्यानिवर्तिका वृत्तिरप्यविद्याकार्याऽविद्यैव; तथापि यथा रजः-सम्पर्ककलुषितमुदकं द्रव्यविशेषचूर्णरजःक्षिप्तं रजोऽन्तराणि संहरत् स्वयमपि संह्रियमाणमुदकस्य स्वच्छरूपावस्थामुपनयति, एवमविद्यां नाशयन्ती वृत्तिः स्वविषयं स्वच्छतामुपनयन्ती स्वयमपि नश्यतीति न दोषः ॥

### वृत्त्या अविद्यानाशकत्वे श्रुतिरपि प्रमाणम्, तत्र भाष्याविरोधश्च

तत्राविद्याकार्याणां विद्यया नाशे श्रुतिरपि "अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते" इति प्रमाणमिति ब्रह्मसिद्धिः। अत्र भगवत्पादानां भाष्यम्—कर्मणा विद्याविघातकपापनिवृत्तिपरं विद्ययाऽविद्याकार्ययाऽविद्या-निवृत्तेरप्युपलक्षणमित्येव ब्रह्मसिद्धेराशयः, नैतावता भाष्यविरुद्धं विवरणमत्र।

अविद्ययाऽविद्यानिं न ःरिति तु फलितोऽर्थः, यस्तु कर्मणा पापनिवृत्तिरित्यत्रापि समानः ॥

### असत्यादपि सत्योत्पत्त्युपपत्तिः

तत्र यद्यपि श्रवणादिकमप्यविद्यैव, इति बाधितत्वात् कथं तेन सत्यविद्याधिगम इति शङ्कावारणार्थमसत्यादपि सत्यार्थनिर्वाहे बहूनि निदर्शनानि ब्रह्मसिद्धिः प्रस्तौति ; यथा—माया प्रीतेः, भयस्य च निमित्तम्, रेखागवयः, लिप्यक्षराणि च सत्यगवय-वर्णादिप्रतिपत्तिकारणम्। तत्र रेखागवयादीनां सत्यत्वमकिञ्चित्करम्। येन रूपेण कारणम्, तेन रूपेण तेषामसत्यत्वादसत्यात् सत्योत्पत्तिरविशिष्टा। न च रेखागवयादीनां सादृश्येन हेतुत्वम् ; बालानां विनैव सादृश्यज्ञानं वर्णत्वेनैव बोधकत्वानुभवात् ॥

अत्राप्यवसरं दृष्ट्वा क्षणिकविज्ञानवादनिरासं मण्डनः प्रस्तौति—क्षणिकत्वे ज्ञानस्य स्वरूपेण स्वत एवोपरमात् मोक्षशास्त्रवैयर्थ्यापत्तेरिति ॥

### क्षणिकविज्ञानवादनिरासार्थं 'विज्ञानमि'ति विशेषणम्, तेन ब्रह्मणः क्षणिकविज्ञानरूपत्वनिरासः, तत्र श्रुतिप्रमाणं च

तदेव'मानन्दममृतमजमि'त्यंशं व्याख्याय 'विज्ञानमक्षरमि'त्यंशं व्याख्याति—विज्ञानरूप एवात्मा, न विज्ञानगुण इति। अत्र च प्रमाणम्—'सत्यं ज्ञानमनन्तमि'ति वाक्यम्। सर्वस्य प्रकाशो विज्ञानात्मनः सम्बन्धादेव। तथाच श्रुतिः—"तमेव भान्तमनुभाति सर्वम्" इति। तत्रोदाहरणम्—दाहकोऽग्निः स्वसम्बद्धं दाह्यं दहति, सूर्यश्च प्रकाशस्वभावः स्वोपनीतमितरं प्रकाशयतीत्यादि। युक्तिश्चात्र विज्ञानात्मतामात्रेण, न तु विज्ञानगुणवादेन ; सतो गुणस्य नाशायोगात्। आत्यन्तिकपुरुषार्थत्वं च विज्ञानात्मतायामेवात्मन उपपद्यते—इति ॥

### प्रकारान्तरेण भावाद्वैतनिरासः

अत्रात्मनो विज्ञानरूपस्य ज्ञानगुणकत्वस्यापि निरासात्, आनन्दवत्त्ववद् दुःखाभाववत्त्वस्यापि निरासात् भावाद्वैतवादो न मण्डनस्येति विज्ञायते ॥

### स्फोटवादोऽप्यद्वैतवाद एव, इति मण्डनमतस्य भाष्याविरोधः

अथाक्षरपदविवरणप्रसङ्गेन स्फोटवादमाश्रित्य स्फोटताऽऽपन्नमोमर्थं ब्रह्मेत्येकं विवरणम्। तत्रोमर्थो हि विज्ञानात्मैव, स्फोटोऽपीति। अन्यत्राचेत-

नात्मना तस्य भाष्यादौ निरासेऽप्यानन्दामृताजविज्ञा[illegible]स्वरूपस्फोटो न केनापि निरस्यते ॥

अत्र विमुक्तात्मनः, किं बहुना ? भगवत्पादानामपि स्फोटवादनिरासः जडं स्फोटमभिप्रेत्य, न तूक्तरूपं स्फोटम्, इति तस्य शब्दाद्वैतम्, घटाद्वैतं वेत्युक्तिर्न मण्डनाभिमतस्फोटमभिप्रेत्य। स्फोटसिद्धिरपि ब्रह्मसिद्धिमेवात्रावलम्बते। सत्यप्येवं स्फोटस्य शब्दात्मता तदुपाधिकत्वेन, इति तेनैव रूपेण स्फोटोऽपि ब्रह्मैवोपादानम् ॥

### सर्वत्र शब्दानुवेधोऽपि स्फोटोपादानत्वे प्रमाणम्

अत एव शब्दस्यापि कार्येषु सर्वेष्वनुवेधः, येन--

"न सोऽस्ति प्रत्ययो लोके यत्र शब्दो न भासते।"

इति प्रथा। प्रपञ्चस्य रूपमिव, नामापि स्वोपादानानुगतमेवानुगच्छतीत्यभिप्रेत्यैव वाक्सूक्तादिकम्, येन बालानामप्यन्यपरिहारेण स्तनादौ प्रवृत्तिस्तत्तच्छब्दानुरागनिबन्धनैव ॥

### स्फोटस्यापि विज्ञानात्मत्वेनाद्वैताविरोधः

न हि शब्दसंस्पर्शमन्तरा अर्था विशदमवबुध्यन्ते, अन्ये तु 'अक्षरमि'ति मृदादिवत् जडात्मना परिणममानं ब्रह्म नाचिद्रूपम्, न वाऽनित्यमिति बोधयितुमक्षरमिति वदन्ति। तेन च न ब्रह्मणः परिणामिता, किन्तु विवर्तमानतैव, इति नित्यं सर्वात्मकं च ब्रह्म ॥

### ब्रह्मणः सर्वात्मनोऽसर्वत्वं तदितराभावेनेति तदनन्यत्वाधिकरणसिद्धान्तः

तत्र सर्वात्मत्वं 'सर्वगन्धः सर्वरसः' इत्यादिवचनसिद्धं विषयाणामपि संविदभेदं विना नोपपद्यत इति जडकार्यकथैव लुप्येतेति शङ्कावारणार्थम्-- 'असर्वमि'ति पदम्, इति तत्र सर्वात्मनोऽसर्वत्वं तद्व्यतिरेकेण सर्वाभाव एव। इदमेवाभिप्रेत्य "तदनन्यत्वमारम्भणशब्दादिभ्यः" इत्यत्र—'अनन्यत्वमिति नाभेदः, किन्तु तद्व्यतिरेकेणाभाव इति मण्डनपृष्ठगामिनी भामती। तेन प्रपञ्चमिथ्यात्वमर्थसिद्धम्, इति निष्प्रपञ्चं ब्रह्म न शून्यम्, यतः सर्वम्; सर्वाधिष्ठानत्वात्। अधिष्ठानारोप्ये हि सर्वत्र भिन्ने एव प्रतिभासेते; तयोस्तादात्म्यात्। परस्पराध्यासेऽप्यधिष्ठाने तादात्म्यमारोप्यस्य स्वरूपेण, तादात्म्येन चाध्यासात्, आरोप्ये ब्रह्मणस्त्वधिष्ठानस्य तादात्म्यमात्राध्यासादिति ब्रह्मसिद्धिः ॥

भाष्य न ... न प्राचीना ब्रह्मसिद्धिः ; भाष्यविवरणात्

इदं तु '...द्धि ...न्योन्यस्मिन्नन्योन्यात्मकतामि' 'त्यत्राधिष्ठानांशे संसर्गाध्यासमात्रम्, न तु स्वरूपाध्यास इति भगवत्पादाशयं विवरीतुमेव, इति ब्रह्मसिद्धिरियं ब्रह्माद्वैतं ब्रह्मेतरमिथ्यात्वेनैवेति विशदयति ॥

तत्र परस्पराध्यासे ब्रह्मणोऽप्यन्तःकरणादावनध्यासेऽप्यन्तःकरणादीनामज्ञानकार्याणाम्, जडानां चाज्ञानविषयत्वायोगेनाधिष्ठानत्वायोगः प्रधानो हेतुः। ब्रह्ममात्राधिष्ठानत्वे तु तस्याज्ञानविषयस्याधिष्ठानत्वं सूपपादम्। तस्यान्यत्र संसर्गमात्राध्यासेऽपि तद्विषयमेवाज्ञानं निमित्तमिति गुरुचन्द्रिकायां व्यक्तम्। अत उच्यते 'ब्रह्मैव सर्वम्, न न प्रपञ्चः सर्वमि'ति। एतेन—शून्यवादोऽप्यत्र परास्तः; यतः शून्यं नाधिष्ठानमिति ब्रह्मसिद्धिर्वदति (पृष्ठ २०-१६)

ब्रह्मणोऽभयत्वं ब्रह्मणो भावरूपानन्दरूपत्वेन,
न तु दुःखाभावरूपत्वेन

ततोऽभयपदविवरणं स्वयं मण्डनस्य—अन्यत्र दुःखाविनाभावेऽपि सुखस्य दुःखसंस्पर्शविविक्तता मुक्ताविति ज्ञापयितुमभयपदमिति। अभयत्वं च ब्रह्मणो द्वितीयाभावेन। तथाच श्रुतिः—"द्वितीयाद्वै भयं भवती"ति ॥

मुक्तानां पुनरावृत्तिभयाभावोपपादनम्

अत्र मुक्तानां पुनरावृत्तिभयं वर्तत इति शङ्का, तत्समाधानं च ब्रह्मसिद्धिगतं संगृह्यते। तत्र मुक्ता यदि ब्रह्मणो भिन्नाः, तर्हि विभागः स भोगार्थम्, क्रीडार्थम्, विभूतिख्यापनार्थम् स्वभावाद्वा, अविद्यानिबन्धनो वा, उताभेदः। अभेदेऽपि जीवानां कर्मरूपाविद्यानिबन्धनः संसारः। स च यदि द्रष्टृ-दृश्ययोः परस्परयोग्यतानिबन्धनः, तर्हि योग्यताया अनपायात् पुनरावृत्तिभयमच्युतम्। कृतकार्यत्वमसकृच्छब्दाद्युपलब्ध्या नानावृत्तिप्रयोजकम्। अनन्तविकारा प्रकृतिः सर्वात्मनोपलब्धौ निवर्तते, अविकृतरूपान्तरोपलब्धये प्रवर्तत इति तु न सम्भवति; विकाराणामानन्त्येन सर्वात्मनोपलब्ध्यसम्भवात् ॥

अत एव कर्माविद्यानिबन्धनत्वं संसारस्य, कर्मनाशे च नापुनरावृत्तिः; कर्मणामानन्त्यात्। न चाविद्यानिबन्धनत्वं तस्याः; निर्हेतुकत्वात्, अप्रयोजनत्वाच्च। सुषुप्ते ब्रह्मप्राप्तावपि पुनरावृत्तिदर्शनाद् न ब्रह्मप्राप्तिरप्यपुनरावृत्तिप्रयोजिका; सति देहेन्द्रियादिभोगहेतौ पुनर्देहेन्द्रियादिसम्बन्धो दुर्वारः। क्रीडार्थम्, विभूतिख्यापनार्थं वा ब्रह्मणा विभक्तानां जीवानां सृष्टौ पुनरपि स्वेच्छया सृष्टिस्तदर्थं

न निवारयितुं शक्या, इति कथमभयं ब्रह्म ? इति शङ्कापरि[illegible]तु प्रायश्चित्तादिना तत्तत्कर्मविपाकवत् शास्त्रप्रामाण्यात् कर्मणाम्, त[illegible]नन्तविकारप्रकृतेश्च निवृत्त्या न पुनरावृत्तिभयं सम्भाव्यत इति। तथाच स्मृतिः—

"ज्ञानाग्निः सर्वकर्माणि भस्मसात् कुरुतेऽर्जुन ।"

—इति। सति चैवमविद्यानिमित्तोऽपि न संसारः। न चाविद्याऽनादिर्हेतुं स्वोत्पत्तावपेक्षते। अप्रयोजनत्वशङ्का तु तदनिर्वचनीयत्वादेव नावतरति ॥

तदेवं प्रथमया कारिकया मङ्गलपरया सच्चिदानन्दैकरसमद्वितीयम्, सर्वाधिष्ठानं ब्रह्मस्वरूपं प्रकृतप्रकरणप्रतिपाद्यं वस्तु निर्दिष्टम् ॥

### कारणवाक्यानामद्वितीये ब्रह्मण्येव पर्यवसानम्

अत्र प्रथमया कारिकया, द्वितीयया च चतुःसूत्रीप्रतिपादिते ब्रह्मतत्त्वे प्रतिपादितेऽपि जगत्कारणत्वस्य तत्स्वरूपतया निर्देशात् जगत्कारणत्वं ब्रह्मस्वरूपान्तर्गतमध्यारोपविधयैव विवक्षितम्, इति न तस्य सत्यतोपास्यतावच्छेदकतया; अन्यथा तस्या अप्युपास्यतावच्छेदकत्वे तत्क्रतुन्यायेनोपासकस्य ब्रह्मभावे जगत्कारणत्वमपि मुक्तस्याऽऽपद्येत, इति 'जगद्व्यापारवर्जं प्रकरणादसंनिहितत्वाच्च" इति जगद्व्यापारवर्जं भोगमात्रसाम्यं ब्रह्ममीमांसायामसङ्गतं स्यात्, इति सर्वेषां कारणवाक्यानामध्यारोपापवादपरतया निर्विशेषे तत्त्व एव मुख्यं तात्पर्यमिति ब्रह्मसिद्धिः सूचयति। अत एवावाच्यस्य, अप्रमेयस्य च तस्य कथं लक्षणयाऽपि बोध इति शङ्कासमाधानादिकमुत्तरत्रोपपद्यते ॥

तत्र 'आनन्दमि'ति पदेन "यतो वे"ति कारणवाक्यस्य "आनन्दो ब्रह्मे" त्यत्रोपसंहारादध्यारोपापवादनयेन निर्विशेषपरत्वम्, 'एक'मिति 'सदेवे'ति वाक्यस्याद्वितीये ब्रह्मणि तात्पर्यम्, 'अक्षरमि'त्यनेन परविद्यायास्तत्रैव तात्पर्यम्, 'विज्ञानमि'त्यनेन 'विज्ञानं ब्रह्मे'ति वाक्यैकवाक्यतया कारणवाक्यानां निर्विशेषे पर्यवसानम्, 'असर्वं सर्वमि'ति "सर्वं खल्विदं ब्रह्म" "तस्मिन् विदिते सर्वमिदं विदितं भवती"त्यादिप्रतिज्ञा-दृष्टान्तानुपरोधेन सर्वेषां ब्रह्मपराणां वाक्यानामद्वितीयब्रह्मपरत्वमेवेत्यादि सूच्यते ॥

### द्वितीया कारिकाऽखण्डब्रह्मणः प्रकाशार्थम्, प्रमाणाभावशङ्कानिरासार्था च

द्वितीया तु कारिका—तस्मिन् ब्रह्मण्यद्वितीये द्वैतविषयं प्रत्यक्षम्,

अनुमानमर्थापत्तिर्वा न प्रमाणम्। न हि भेदमन्तरेण व्यवहारो भवति। अत एव नानुपलब्धिरपि। तद्धि प्रमाणमभेदस्य भेदाभावरूपस्य भेदप्रतीतिं विना दुरवगमत्वात्। अत आगम एव तत्र प्रमाणमिति वक्तव्यम्। सोऽप्याप्तप्रणीतः प्रमाणान्तरप्रवृत्तिमपेक्षते। अपौरुषेयस्तु कार्यमात्रगोचरो न सिद्धे ब्रह्मणि प्रमाणम्; प्रवृत्ति-निवृत्त्यन्यतरविषय एव पदानां सङ्गतिग्रहात्। न चात्यन्तापरिदृष्टम्, अवाच्यं च लक्षणयाऽपि शब्दगोचरः। न च प्रत्यस्तमितभेदं वस्तु शब्दगोचरः। प्रत्यस्तमितसर्वविशेषं तु शून्यमेव, न वस्तु—इति शङ्कासमाधानार्थम्। इयमेव शङ्का श्रीमदानन्दतीर्थपादैरीक्षत्यधिकरणस्य सिद्धान्तार्थ इति मन्यते। तत्समाधानं तु कार्यान्वित एव सङ्गतिग्रह इति नियमाभावात्, भूतार्थत्वेऽपि प्रत्यक्षादीनामिव प्रामाण्यसंभवाद् न विरोध इति ॥

## भूतार्थपराणामपि वाक्यानां प्रामाण्यम्

तच्च वाक्यप्रमाणं प्रयोजनमपेक्षते, न तु प्रवृत्तिमपि। भूतार्थपराणि, निन्दावचनानि, प्रियाख्यानपराणि, 'नायं सर्पः' इत्यादीनि च प्रमाणान्येव दृश्यन्ते। न च तत्र 'मा भैषीरि'त्यादौ नियोगो वाक्यार्थः; अशक्यार्थत्वात्। न चात्र प्रवृत्तिरर्थः। व्यक्तीकरिष्यते चेदं नियोगकाण्डे तृतीये। किं बहुना? भूत-वर्तमानकालसम्बन्धिवाक्यार्थपराणि सर्वाणि वाक्यान्यप्रमाणान्यापद्येरन्, यदि नियोगपराण्येव तानि प्रमाणानि स्युः ॥

## अध्यारोपापवादाभ्यामद्वितीयब्रह्मावबोधः

अखण्डमद्वितीयं च ब्रह्म प्रत्यस्तमितसर्वविशेषमितरनिषेधमुखेन विनापि तत्र पदविशेषस्य सङ्गतिग्रहमागमेन द्वितीयनञादिपदानां सङ्गतिग्रहणमात्रेणेतरप्रविलयमुखेन सुबोधम्। अत एव न्यायः—

"अध्यारोपापवादाभ्यां निष्प्रपञ्चं प्रपञ्च्यते"

इति। इदमेवाभिप्रेत्य ब्रह्मसिद्धिः—"प्रपञ्चस्य प्रविलयः शब्देन प्रतिपाद्यते।" इति। प्रत्यक्षाद्यगम्यमप्यखण्डं ब्रह्माऽऽगमगम्यमेवेति। इदं हि समाधानम्—"अपि च 'आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानाम्' इत्येकान्तेनाभ्युपगच्छतां भूतोपदेशानर्थक्यप्रसङ्गः" इत्यादि "प्रयोजनस्य दृष्टत्वादि"त्यन्तं (पृष्ठ २५-१२ २६-२०) भाष्यमवष्टभ्येतरनिषेधमुखेन वेदान्तानां ब्रह्मणि प्रवृत्तिव्यवस्थापनाद् नोद्भाव्यम् ॥

### द्वैतिनामीक्षत्यधिकरणसिद्धान्तोऽपि निर्मूलः, ब्रह्मसिद्धिनिर्दिष्टपूर्वपक्षमात्रमूलः, तदीयसिद्धान्तापरामर्शमूलश्च

'अध्यारोपापवादाभ्यां निष्प्रपञ्चं प्रपञ्च्यते।"

इति न्यायानुसरणमपि भगवत्पादानां सर्ववेदान्तसारसंग्रहनिर्दिष्टत्वाद् नोद्भाष्यम्। अयं न्यायो भगवत्पादानाम्, पूर्वाचार्याणां केषाञ्चन सम्प्रदायविदां वा भवतु, अन्यथा वा; मण्डनोऽपि तमेव न्यायमत्रावलम्बते। अनादिसम्प्रदायसिद्धसिद्धान्तानामपि भगवत्पादानुयायित्वम्, तन्मूलाचार्यानुसारित्वं चाकिञ्चित्करम्। भाष्यकाराणां सिद्धान्तोपपादनप्रकारा एव प्रायेण सर्वत्रात्र मण्डनेनानुसन्धीयन्ते, इति भगवत्पादवत् पूर्वाचार्यानुयायित्वमेव मण्डनस्य, न तु भगवत्पादानुयायित्वमिति वादो न विकल्पसहः॥

### अखण्डस्य ब्रह्मण आम्नायैकसमधिगम्यत्वं सर्वप्रपञ्चप्रविलयमुखेनेति ब्रह्मदत्तमतम्, तत्प्रकारश्च, तेन भावाद्वैतवादोपक्षेपश्च

तत्राम्नायैकसमधिगम्यत्वमखण्डस्य ब्रह्मणः किं प्रपञ्चविलयमुखेन, किं सर्वस्य तत्परत्वेन, उत तदेकदेशस्येति विचार्यते। तत्र ब्रह्मदत्तादयः—सर्वेषां प्रपञ्चविलयनमुखेन ब्रह्मणि प्रामाण्यमिति वदन्ति। तत्र 'स्वर्गकामो यजेते'त्यादयः शरीरात्मत्वप्रविलयद्वारेण ब्रह्मावगमयन्ति। गुणकामवाक्यान्यधिकारिभेदविलयमुखेन रागादिनिबन्धननैसर्गिकप्रवृत्तिभेदविलयमुखेन, अन्यान्यज्ञानाधिकारोपयोगीनि, इति कानिचन साक्षात्, कानिचन परम्परयाऽऽत्मनि पर्यवसायीनीति तदाशयः।

### ब्रह्मदत्तादिमतनिरासः, तेनापि न मण्डनस्य भावाद्वैतवादः, स्वर्गकामादिविधिसार्थक्यमप्यत एव

इदं तु न युक्तम्; कर्मविधयः स्ववाक्यावगतस्वर्गादिकार्यपरा न कार्यान्तरमपेक्षन्ते। न चाखण्डात्मज्ञाने कर्मविधीनामुपयोगः; अन्यथा सर्वविधिनिषेधानामखण्डात्मज्ञानार्थत्वे जन्तूनामभ्युदयविनिपाता आकस्मिकाः स्युः, तत एवापवर्गस्यापि सिद्धेर्वेदान्तशास्त्रवैयर्थ्यमापद्येत॥

तत्र स्वर्गादिकामोपदेशो द्वारमात्रम्, मुख्यं तु लक्ष्यं तदुपदेशस्यापि मोक्ष एव, यथाऽऽनन्दमीमांसायाः पूर्व-पूर्वानन्दोपदेशा उत्तरोत्तराऽऽन्दोप-

देशार्था इति कल्पनायां तु शब्दसामर्थ्यावगतस्वर्गाद्यर्थत्वं तत्तद्वाक्यस्य बाध्येत ॥

**कर्मकाण्डानां संयोगपृथक्त्वन्यायेनोपयोग इति स्वसिद्धान्तोपन्यासः**

कर्मकाण्डानां च स्वार्थतात्पर्याभावात् संयोगपृथक्त्वन्यायेन, अन्यथा वा कर्मविधीनामनुपयोगात् तेषां तत्राप्रामाण्यमापद्येत, इति क्रमप्राप्त्या न ब्रह्मप्राप्तिपरत्वम्। कर्मविधीनामधिकारिभेदोऽपि कर्म-ज्ञानयोरन्यथा नोपपद्यते। अतो न कृत्स्नस्य वेदस्य प्रपञ्चविलयमुखेनाखण्डब्रह्मपरत्वम् ॥

**ब्रह्मदत्त-भाष्यसिद्धान्तयोर्मूलनिर्देशः**

अत्र ब्रह्मदत्तमतस्य मूलम्—"शास्त्रीये व्यवहारे तु यद्यपि बुद्धिपूर्वकारी नाविदित्वाऽऽत्मनः परलोकसम्बन्धमधिक्रियते" इति भाष्यम्, सिद्धान्तमूलं तु "तथापि न वेदान्तवेद्यमशनायाद्यतीतमपेतब्रह्म-क्षत्रादिभेदमसंसार्यात्मतत्त्वमधिकारेऽपेक्ष्यते; अनुपयोगात्, अधिकारविरोधाच्चे"ति भाष्यम् ॥

**कर्मकाण्डानां ब्रह्मलोकप्राप्तिक्रमेणाऽऽत्म-दर्शनोपयोग इति मत-तन्निरासौ**

द्वितीयकल्पोऽत्र कर्मवाक्यानां कामनिर्बर्हणद्वारा ब्रह्मलोकप्राप्तिक्रमेणाऽऽत्मदर्शनोपयोगित्वमिति। इदमपि न युक्तम्; आनन्दपदविवरणप्रसङ्गे कामनिवृत्तेरसंभवादिनाऽपुरुषार्थत्वस्य व्यवस्थापनात् ॥

**ऋणापाकरणद्वारा कर्मणामुपयोगो न मण्डनाभिमतः**

तृतीयकल्पस्तु ऋणापाकरणद्वारा कर्मविधीनां परम्परयाऽऽत्मज्ञानाधिकारावतरणमुखेनोपयोग इति। अयं तु प्रकारः प्रस्थानान्तरे। तुरीयस्तु प्रकारः संयोगपृथक्त्वेन कर्मणामुपयोग इति। स तु मुख्यः कल्पः। वक्तव्यं चात्र सर्वं पूर्वमेवोक्तम्। अयमेव न्याय आत्मसंस्कारद्वारा कर्मणामुपयोग इति पञ्चमप्रकारे—

"महायज्ञैश्च यज्ञैश्च ब्राह्मीयं क्रियते तनुः।"

इति वचनानुसारी पुरुषसंस्कारद्वारा ज्ञानाधिकारे कर्मविधीनामुपयोग इति। इयमेव नीतिः षष्ठेऽपि कल्पे ॥

**ज्ञानस्यैव कर्मोपकारित्वमिति मत-तन्निरासौ**

कर्मविधीनां नात्मज्ञानाधिकार उपयोगः, किन्त्वात्मज्ञानोपदेशपराणा-

मेव वेदान्तवाक्यानां कर्माधिकार उपयोग इति षष्ठः कल्पस्तु वेदान्तवेद्यात्मतत्त्वज्ञानस्य कर्माधिकारविरोधित्वान्नोत्तिष्ठति ॥

## जीव-ब्रह्माभेदोपदेशोपपत्तिः

तत्र जीव-ब्रह्मणोरैक्यं परमार्थतः, अविद्योपाधिनिबन्धनस्तु तयोर्भेदः, इति न कर्मात्मज्ञानोपदेशद्वयानुपपत्तिः। कर्म-ज्ञानोपदेशयोर्द्वैताद्वैतविषययोर्विरोधादसम्बन्ध एवेति सप्तमे पक्षे तु द्वैतोपदेशविरोधेनाद्वैतोपदेशस्य प्रामाण्यासम्भवाद् नाद्वैतप्रतिपत्त्युत्पादः। इदमुपलक्षणमद्वैतोपदेशेन द्वैतोपदेशाप्रामाण्यस्यापि। न चासम्बन्धयोरुपायोपेयभावः; तत्रैकतरेणेतरस्य बाधात्। तत्र न कर्मणां प्रमाणतन्त्र आत्मज्ञान उपयोगः, न वा मोक्षसाधने; तदनित्यत्वापत्तेः। विद्योदयस्यैवाविद्यानिवृत्तिरूपत्वाद् नाविद्यानिवृत्तिरपि ज्ञानसाध्या; पौर्वापर्याभावात्, (पृ० ३२-१९) विद्योदयस्यैवाविद्यानिवृत्तिरूपत्वात् ॥

## मण्डनाभिमता मुक्तिर्नाभावरूपा, अतो न तस्य भावाद्वैतम्

मण्डनाभिप्रेता मुक्तिर्नाभावरूपा। अतो न तस्य भावाद्वैतम्। मण्डनाभिप्रेता मुक्तिर्नाभावरूपा; अविद्यास्तमयस्यापि विद्यारूपतयैव पुरुषार्थत्वात्,

"निवृत्तिरात्मा मोहस्य ज्ञातत्वेनोपलक्षितः।"

इति वार्तिकसिद्धान्तेनैक्याच्च; इत्यविद्यास्तमयमोक्षतामात्रेण मण्डनस्य भावाद्वैत एव तात्पर्यमिति श्रीशास्त्रिपादादीनामाशयो ब्रह्मसिद्धिविरुद्धः। ज्ञाननिवर्त्यत्वमिथ्यात्वनिरुक्तौ चन्द्रिकायामविद्यानिवृत्तेर्ज्ञानरूपत्ववर्णनम्, ज्ञानाज्ञाननिवृत्त्योर्व्याप्य-व्यापकभावविवक्षाऽप्येतन्मूलैव ॥

## अग्रहणाविद्यात्वनिरासोऽविद्याया अनिर्वचनीयभावरूपत्वात्

अत्र प्रसङ्गे कथमग्रहणमेवाविद्या, तन्निवृत्तिरेव ज्ञानोत्पाद इति शङ्कायां न भावस्य भावान्तरव्यावृत्तिरूपत्वम्; भावाभावयोः परस्परविरहरूपत्वायोगात्, अन्यथा भाव एवाभावः स्यादित्यग्रहणाविद्यात्वपक्षो निरस्यते; अग्रहणस्य विपर्यासानिमित्तत्वात्; अन्यथा स्वाप-मूर्च्छादावपि विपर्यासप्रसङ्गात्। न चाविद्याऽग्रहणम्; 'अनादिरप्रयोजना चाविद्ये'ति ब्रह्मसिद्धावेवोपपादनात् ॥

## ज्ञानेनाज्ञाननिवृत्तौ न कर्मणां सहकारिकारणता

ज्ञानेनाज्ञाननिवृत्तौ सहकारितया कर्माण्यपेक्ष्यन्त इति तु न युक्तम्; ज्ञानस्योत्पन्नत्वे कर्मणां समूलानां स्वयं निवृत्तत्वात् कथं सहकार्यपेक्षाऽपि? सर्वं चेदं भामत्यां विस्तरेणोपपादितम् ॥

### ज्ञाननैर्मल्यायापि न कर्मापेक्षा

न च ज्ञाननैर्मल्याय कर्मापेक्षा; संशय-विपर्यासादिरूपस्यास्य प्रमाण-जन्यज्ञानेऽप्रसक्तस्य निरासानपेक्षणात्। शब्देनात्मज्ञाने जननीये कर्मोपासनाद्य-पेक्षा शाब्दज्ञानस्य प्रत्यक्षत्वे न सम्भवति। तज्ज्ञानस्य परोक्षत्वेऽप्ययमेव न्यायः; न वा शाब्दमपरोक्षं नामेति भामती। अत्र "तत्त्वमसी"ति ब्रह्मात्मभावेऽवगतेऽपि सांसारिकधर्मदर्शनात्। यस्तु सांसारिकधर्मभाक्, नासाववगतात्मभावः॥

### अवगतब्रह्मात्मभावस्य सांसारिक-धर्मादर्शने भाष्यं मूलम्

अत्र—"अत्रोच्यते—नावगतात्मभावस्य यथापूर्वं संसारित्वं शक्यं दर्शयितुमि"ति भाष्यं मूलम्। क्वचित्तु सांसारिकधर्माणामनुवर्तनं जीव-न्मुक्तानामविद्यासंस्कारवशात्, प्रारब्धकर्मसंस्कारवशाद्वेत्यादीनां जीवन्मुक्ति-नयेन व्यक्तीकृतं ब्रह्मसिद्धावेवोपरिष्टात्। तस्य निवृत्तिस्तु द्रढीयसाऽभ्यस्तेन प्रसङ्ख्यानेन। अत एव मनन-निदिध्यासने अपि विधीयेते। न च विना मननादि शब्दमात्रेण, ब्रह्मचर्यादिमात्रेण वा तत्त्वज्ञानोदयः। शब्दमात्राधीन आत्म-ज्ञाने ब्रह्मचर्यादेरनपेक्षणात्। ब्रह्मचर्यादि ह्यधिकारिसंस्कारविधयाऽधिकार-निर्वाहकमात्रम्, न तत्त्वज्ञाने सहकारिकारणम्॥

### जीवन्मुक्तानां प्रपञ्चमिथ्यात्वनिश्चयवतामपि रङ्गगतादिदृष्टान्तेन निर्वाहः

अत्र ब्रह्मसिद्धिर्जीवन्मुक्तानां प्रपञ्चमिथ्यात्वनिश्चयवतां कथं प्रपञ्चेन व्यवहार इति शङ्कां रङ्गगतानां मिथ्यावभासेऽपि शोक-मोहाद्यनुभववतां भरतादीनां निदर्शनेन परिहरति। इदं तु मण्डनस्यापूर्वमेव निदर्शनम्। इदमुपलक्षणम्—नाटकं पश्यतां सभ्यानामपि नायक-नायिकादीनामिव करुणादि-रसविशेषमनुभवताम्। अपरं तु निदर्शनमन्येषां प्रसिद्धम्—निश्चितेऽपि गुडस्य माधुर्ये तत्र मिथ्यातिक्तावभासोऽवितथ एव दुःखयति; अवितथस्येव तस्यापि थूत्कृत्य त्यागादिति। अतो निश्चितात्मतत्त्वेनापि तदभ्यासस्तन्निवृत्तयेऽपेक्ष्यते॥

### तत्त्वज्ञाने कर्मापेक्षाऽश्वदृष्टान्तेन

तत्र तत्त्वज्ञानस्य दृष्टफलस्य दृष्टोपायाः शमादय एव यद्यपि पर्याप्ताः, न तु यज्ञादीनां तत्रापेक्षा। "तमेतं वेदानुवचनेने"ति तु विविदिषोपयोग-मात्रं ज्ञापयति; तथाप्यनाश्रमिणां विषये, ऊर्ध्वरेतोविषये वा नेदमुपपद्यते,

इति यदि तद्वचनं तदतिरिक्तविषयम्, तर्हि गृहस्थानां न यज्ञादिकं विना तत्त्वज्ञानोदयः, इति सति यज्ञाधिकारे यावत्तत्त्वज्ञानोदयं संयोगपृथक्त्व-न्यायेन कर्मापेक्षा दुर्वारा। तत्फलं तु "सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत्" इत्यत्राश्वदृष्टान्तात् क्षिप्रम्, क्षिप्रतरं वा ज्ञानावाप्तिरिति व्यक्तमुक्तमधस्तात्। इदं च न भाष्यविरुद्धम्, किन्तु तदनुगुणमेवेति निरूपितमधस्तात्—शास्त्रि-पादानां भूमिकासमालोचनप्रसङ्गे ॥

विद्याऽविद्यास्वरूपविचारः, विद्याया
अविद्याविरोधित्वहेतुत्वं च

तत्र ब्रह्मैव विद्या। सा च नित्या, न कार्या, इति कथं तत्र कर्मणाम्, अन्येषां वाऽपेक्षेति शङ्कां हि ब्रह्मसिद्धिर्यथोपाध्युपधानतिरोहित-स्फटिकमणिरुपधानापकर्षणं स्वरूपाभिव्यक्तयेऽपेक्षते, एवमत्रापि संविन्मात्ररूपेण विद्यात्वेऽप्यविद्योपधानतिरोधानादावृतं संविन्मात्रमविद्योपधानापकर्षणेन विशुद्धं संविन्मात्रमवतिष्ठते, तदाकर्षणं तु श्रवणादिजन्यवृत्तिवशात्, इति संविन्मात्रो-पाध्यविद्यास्थाने श्रवणादिजन्यवृत्त्युपधानमात्रेणाऽऽकृष्टायामविद्यायां स्वप्रकाश-शुद्धस्वरूपमात्रतया विद्यास्वरूपं ब्रह्मावतिष्ठत इति परिहरति ॥

उपहितं ब्रह्मैव कारणम्, शास्त्रवेद्यं च

इदमेव गृहीत्वाऽविद्योपहितं ब्रह्म बन्धाय, वृत्त्युपहितं तु ब्रह्म मोक्षाय, शास्त्राणि चोपहितपर्यन्तमेव प्रवर्तन्ते, न तु शुद्धेऽपीति सिद्धान्तः, य एव भामतीमतेऽपि। "शुद्धं ब्रह्मेति विषयीकुर्वाणा वृत्तिः स्वोपहितं गृह्णाति, स्वाविषया; स्वस्याप्युपाधित्वाविशेषादि"ति हि कल्पतरुः। तदेवं द्वितीय-कारिकार्थसंग्रहः ॥

तृतीयकारिकार्थसंग्रहः

तृतीया कारिका तु प्रपञ्चनिषेधमुखेन "नेति नेती"त्यादिविधया ब्रह्म प्रतिपादयति, न तु विधिमुखेन। यत उपाध्यपकर्षणमेव ब्रह्मतत्त्वप्रकाशायापेक्ष्यते। अत एव "अविद्यानिवृत्तिपरत्वाच्छास्त्रस्ये"ति भाष्यमिति विशदयति। तेन च सच्चिदानन्दादिरूपेण प्रस्तुते भूतार्थेऽपि वेदान्तानां प्रामाण्यात्, सर्वेषामपि वेदवाक्यानां पूर्वोक्तविधया ब्रह्मतत्त्व एव पर्यवसानात्, अवाच्यत्वे, प्रमाणान्त-रानपेक्षत्वेऽपि वेदान्तजन्याखण्डाकारवृत्तिमात्रेण "नेति नेति" विधयोपसंहृतं, च भावाभावसर्वोपाधिविगलितं ब्रह्मस्वरूपं सिद्धमिति ब्रह्मकाण्डार्थः ॥

॥ इति ब्रह्मकाण्डार्थसंग्रहः ॥

# अथ तर्ककाण्डार्थविमर्शः ।

### प्रत्यक्षस्य भावार्थपरस्य नाभावपरत्वम्, इति न प्रत्यक्षेणागमबाधः

प्रत्यक्षस्येतरव्यावृत्ततत्तदर्थावबोधकत्वात् तद्विरोधादद्वैतपराणामागमानामप्रामाण्यमिति शङ्का । न चेयं युक्ता ; प्रत्यक्षस्य भावार्थनिषेधविषयकत्वायोगेनाभेदविरोधित्वाभावात्, इति न तेनागमबाधः ॥

### प्रत्युत प्रत्यक्षस्यैवाऽऽगमेन बाधः

तत्र यद्यपि पौरुषेयाणां वाक्यानां प्रमाणान्तरापेक्षार्थबोधकानां तद्विरोधेऽप्रामाण्यं युक्तम्, अपौरुषेयागमानां तु प्रमाणान्तरनिरपेक्षाणां प्रमाणान्तरेण विरोधशङ्का, ततोऽप्रामाण्यशङ्का वा न प्रसरति, प्रत्युत विरोधात् प्रत्यक्षादीनामेवाप्रामाण्यं युक्तम् ॥

### मुख्यत्वात्, प्राथम्यात्, उपजीव्यत्वात्, निरवकाशत्वाच्च प्रत्यक्षमेव प्रबलमिति शङ्का

तत्रेयमाशङ्का—यद्यपि वेदान्तानां प्रत्यक्षानपेक्षत्वम्, प्रत्यक्षस्यापि त्वागमानपेक्षत्वम्, इत्यनपेक्षत्वे तुल्य आगमस्य स्वरूपसिद्धये प्रत्यक्षानपेक्षत्वात् तत्प्रामाण्ये निश्चित आम्नायस्यैव तदुपजीव्यप्रत्यक्षविरोधेऽप्रामाण्यं युक्तम्। तत्र शब्दा अप्रमाणान्यपि दृश्यन्ते, प्रत्यक्षं तु प्रमाणमेव । अतोऽपि प्रत्यक्षमेवाम्नायापेक्षया प्रबलम्। एवं सावकाश-निरवकाशन्यायेनापि निरवकाशस्य प्रत्यक्षस्यैव प्राबल्यम्, न तूपचरितार्थत्वेनापि सावकाश आगमस्ततः प्रबलः ॥

तत्राम्नाया भेदपरा अपि, अभेदपरा अपि, इति परस्परव्याघातादपि न प्रमाणम्। न चैवं प्रत्यक्षादौ परस्परव्याघातः। अत एव व्याकुला वेदान्ताः, प्रत्यक्षं त्वव्याकुलम् । अतोऽविरोधाय प्रयत्ने क्रियमाणे मुख्यत्वात्, प्राथम्यात्, पद-पदार्थविभागाधीनत्वादाम्नायार्थपरिच्छेदस्योपजीव्यत्वाच्च प्रत्यक्षमेव प्रबलम् । तत्र प्राबल्यं प्रत्यक्षस्य प्राथम्येनोपक्रमाधिकरणन्यायेनेति वक्तव्यम् ॥

### अपच्छेदन्यायादिनाऽऽगमप्राबल्यव्यवस्था

परन्तु— "पूर्वात् परबलीयस्त्वं तत्र नाम प्रतीयताम् ।
अन्योन्यनिरपेक्षाणां यत्र जन्म धियां भवेत् ॥"

इति न्यायादपच्छेदाख्यादुत्तरकालप्रवृत्तस्योपक्रमाधिकरणापवादत्वाच्चोक्तन्यायेनाऽऽम्नायस्यैव प्राबल्यम् । तत्र प्रत्यक्षादिषु बहुशो बाधाद् भ्रमत्वमवगम्यते । अतो निश्चितप्रामाण्यस्याऽऽम्नायस्यासम्भाव्यमानदोषस्य नाप्रामाण्यम् ॥

व्यावहारिकप्रामाण्येन प्रत्यक्षस्य सावकाशत्वम्, न तु निरवकाशत्वम्

तत्र प्रत्यक्षादीनामाम्नायबाधितानामपि व्यवहारे विसंवादाभावाद् व्यावहारिकप्रामाण्येन सावकाशता । न चैवमाम्नायस्य । तस्य हि प्रत्यक्षेण बाधः । उपचरितार्थत्वं हि नामान्तरेणाप्रामाण्यमेव, इति सावकाश-निरवकाशन्यायोऽप्याम्नायप्राबल्य एव निराबाधः ॥

प्रत्यक्षस्य प्रामाण्यांशे न शब्दस्योपजीव्यत्वम्, विस्तरश्चास्य भामत्याम्

न चोपजीव्यत्वं प्रत्यक्षस्याऽऽम्नाये । तद्धि स्वरूपसिद्धावेव, न प्रामाण्ये । प्रामाण्यं हि तत्कारणमात्रमुत्पत्तावेवापेक्षते, न तु कारणस्य सत्त्वमपि, येन प्रत्यक्षादीनामागमप्रामाण्यं प्रत्युपजीव्यत्वं स्यात् । तत्र स्वरूपसिद्धावन्यापेक्षत्वं कार्यसामान्यस्य समानम्, इति प्रत्यक्षादयोऽप्यन्यापेक्षा एव । सत्यपि व्यावहारिकप्रामाण्ये प्रत्यक्षादीनामुपजीव्यत्वं न व्याहतम्; व्यावहारिकादपि प्रमाणात् तत्त्वज्ञानदर्शनात् । इदं च सर्वं यथावदेवाध्यासभाष्योपक्रमे भामत्यां संगृह्योपक्षिप्तम् ॥

अभेदप्रतीतेर्भेदप्रतीत्यपेक्षादिना न दौर्बल्यम्, प्रामाण्ये सत्त्वस्याप्रयोजकत्वम्

तत्राभेदस्य भेदाभावरूपत्वेन भेदप्रतीत्यपेक्षत्वेऽपि भेदप्रतीतेर्व्यावहारिकभेदापेक्षया निर्वाहाद् नोक्तरीत्याऽऽगमबाधकत्वम् । तत्र यद्यपि प्रतीतिरुपायमाक्षिपति, न तु तस्य परमार्थसत्ताम् । अतो न प्रत्यक्षस्य पारमार्थिकाभेदपराऽऽगमबाधकत्वम् । विश्वस्यते—इमामेव नीतिमवलम्ब्य—

पूर्वसम्बन्धनियमे हेतुत्वे तुल्य एव नौ ।
हेतुतत्त्वबहिर्भूतसत्त्वासत्त्वकथा वृथा ॥
"अन्तर्भावितसत्त्वं चेत् कारणं तदसत् ततः ।
नान्तर्भावितसत्त्वं चेत् कारणं तदसत् ततः ॥"

इति खण्डनखण्डखाद्यम्, अध्यासभाष्यभामती चानुपदोद्धृता ॥

### निरवकाशत्वमपि वेदान्तानामेव, न प्रत्यक्षस्य

एतेन—सावकाश-निरवकाशन्यायेन प्रत्यक्षप्राबल्यमपि—व्याख्यातम् ; सावकाश-निरवकाशन्यायो ह्युभयोरपि प्रामाण्ये प्रवर्तते। तत्र यदि वेदान्ताः प्रत्यक्षविरोधेनाविवक्षितार्थाः, उपचरितार्था वा, तर्हि तेषामद्वैते प्रामाण्याभावात् कथं स न्यायोऽत्र प्रसरति ?

### स्वतः प्रामाण्यवादे न प्रमाणान्तरापेक्षं प्रामाण्यम्, इति वेदान्तप्रामाण्यं न प्रमाणान्तरापेक्षम्, अतः प्रतिहतविषयं प्रत्यक्षमेव

अद्वैतपरत्वे तु वेदान्तानां पारमार्थिके तत्रैव सावकाशत्वम्, प्रत्यक्षादीनां तु व्यावहारिकं प्रामाण्यम्। न च प्रमाणान्तरापेक्षं प्रामाण्यं स्वतःप्रामाण्यवादे जागरूके। सत्यम्, लौकिकं वाक्यं प्रमाणान्तरमपेक्षते स्वप्रामाण्याय। न चेयं कथाऽपौरुषेय आम्नाये॥

अतो न तुल्यमनपेक्षत्वं प्रत्यक्षाम्नाययोः, अन्यथा विपर्यय-तद्बाधकज्ञानयोर्विपर्ययस्य प्राथम्यात्, उपजीव्यत्वाच्च कथं स एव तत्र न बाधकः? न चात्रोभयानुग्रहः; विनिगमनाविरहेण गौण-मुख्यविभागव्यवस्थाया असंभवात्। अतो विरोधेऽन्यतरस्य बाध एव युक्तः, नोभयानुग्रहेण स्वस्वाशयमात्रेण॥

तत्राविवक्षितार्थत्वम्, उपचरितार्थत्वं वा वादिनः, प्रतिवादिनो वा स्वस्वाभिमतं समानम्, इति न क्वापि गमनिका तत्र स्यात्॥

तत्र मुख्यत्वेऽपि नाऽऽम्नाय एव प्रतिहतविषयः; अन्यथा रजतज्ञानविरोधेन शुक्तिज्ञानमेव प्रतिहतविषयं स्यात्। सूचितं चादावेव पूर्वात् परबलीयस्त्वमिति, इति प्रत्यक्षमेवाम्नायविरुद्धं प्रतिहतविषयं युक्तम्॥

### कर्मविधीनाम्, वेदान्तानां च न विरोधः

नचैवं सति कर्मविधीनाम्, वेदान्तानां च व्याकुलत्वम्; व्यावहारिकप्रामाण्य-पारमार्थिकप्रामाण्याभ्यामविरोधेनाव्याकुलत्वात्। तत्राप्रतिबुद्धानधिकृत्य कर्मविषयः, प्रतिबुद्धानधिकृत्य तु वेदान्ताः, इत्युत्तममध्यमाधिकारिपरत्वेनोभयप्रामाण्यं निर्वहति॥

### कर्मविधीनां वेदान्तबाधितानामप्यर्थक्रियाकारित्वाविरोधः

न च कर्मविधयो भेदमुपजीव्य वर्तमाना अपि तत्परा वेदान्ता इव; वेदान्तविरोधात्। भेदवाक्यानामेवान्यथागतिः, न तु वेदान्तानाम्। न च

परमार्थतोऽसतामपि न कार्यकारित्वम्; मन्दविषेणापि वृश्चिकेन दंशे मरणदर्शनात् ॥

### 'शब्द-बुद्धि-कर्मणामि'ति न्यायेन स्वरूपमात्रपरस्य प्रत्यक्षस्य भेदाभावाबाधकत्वम्

तत्र प्रत्यक्षं स्वरूपमात्रपरं भेदविषयं नाद्वैतस्य भेदाभावस्यापि विरोधि, न वा तत्र विधिपूर्वको भेदो विषयः; शब्द-बुद्धि-कर्मणां विरम्यव्यापाराभावेन युगपदुभयायोगेन क्रमिकत्वं स्वीकर्तव्यम्, इति तयोरेकप्रमाणज्ञानव्यापारायोगः, क्रमवतोर्व्यापारयोः पश्चात्तनो व्यवच्छेदव्यापारो न प्रत्यक्षस्य प्राक्तनस्य विषयः, इति न तेनापि प्रकारेणाद्वैतस्य विरोधः ॥

बुद्धेर्हि व्यापारो जन्मैव। न च तदा विधिव्यापारातिरिक्तो निषेधो विषयः। अतः सन्निहितविषयं प्रत्यक्षं न व्यवच्छेदमपि गोचरयति, इति कथं प्रत्यक्षेणाद्वैतागमस्य विरोधः? इति न प्रत्यक्षमद्वैतागमस्य बाधकम्। तत्र 'इदं रजतमि'त्यादौ क्रमेण विधिपूर्वको निषेधो दृश्यते, प्रत्यक्षं विधिव्यापारम्, आगमस्तु निषेधव्यापारदृष्ट्या प्रत्यक्षस्य बाधकः ॥

### अयमेव न्यायो विधावपि; तस्य निषेधाविषयकत्वात्

तत्र विधेरपि निषेधोऽपि विषय इति त्वेकस्य विधानस्य व्यापारद्वयाभावाद् नोपपद्यते। स्वरूपमात्रव्यापारेणोपक्षये व्यापारद्वयकल्पनाया अयोगेन तन्मात्रप्रतीतिविधया न व्यवच्छेदोऽपि प्रत्यक्षस्य विषयः। तत्रैकस्य ज्ञानस्यैक एव विषयः, तदितरव्यवच्छेदपरत्वे तु भूतलव्यवच्छेदकाले घटोऽपि व्यवच्छिन्नो न भायात्; एकस्याः प्रतीतेः सर्वव्यवच्छेदकत्वे तु सर्वत्र सर्वव्यवच्छेदो विषयः स्यात्। अतो दृश्यव्यवच्छेदे प्रतिनियमो न हेतुः ॥

### एकनियमस्य नान्यव्यवच्छेदकत्वम्

एवमात्मव्यवच्छेदेऽपि तत्रैकनियमादन्यव्यवच्छेदे चित्रादिषु नीलादीनामेकदर्शनविषयाणां भेदो न स्यात्। तत्तत्प्रकृत्यैव सर्वे भावा भिन्नाः, इति भावान् विदधत् ज्ञानं व्यावृत्तिमपि विदधाति; धर्मिस्वरूपत्वाद् भेदस्येति तु न युक्तम्। व्यावृत्तेरेकानेकाधिष्ठानाया हि वस्तुस्वभावत्वायोगः; अन्यथा वस्तूनामपि भेदो न स्यात्। व्यावृत्तेरर्थान्तरत्वे तु प्रत्यक्षस्य स्वरूपमात्रव्यापारस्य भेदविषयत्वायोगस्तदवस्थः। परस्परानात्मताभेदोऽप्यनेनैव न्यायेन न वस्तुनः स्वभावः; अभावात्मकत्वाच्च ॥

**भेददुर्वचत्वम्, अतो भेदज्ञानस्य नाभेदविरोधित्वम्**

तत्र भेदस्य वस्तुस्वभावत्वे सर्वं भिन्नमेव वस्तु स्यात्, नैकं किमपि वस्तु स्यात्, इति परमाणुरप्यनेकः स्यात्। तत्र वस्तुनो भेदाभेदोभयरूपत्वं त्वेकस्य तत्रानिर्वचनीयत्वं विना नोपपद्यते। तत्र च न भेदोपादानाऽभेद-कल्पना, किन्त्वभेदोपादानैव भेदकल्पना॥

निष्कर्षस्तु—भेदस्य प्रतियोग्यपेक्षत्वात्, वस्तुनस्तदनपेक्षत्वाच्च भेदो न वस्तुस्वभावः; अन्यथा भेदस्य घटादिशब्दमात्रेण प्रतीतिरापद्येत। पित्रादीनां जन्य-जनकशक्त्यादिकमपेक्ष्य तत्तत्स्वरूपपरत्वं तु लोकसिद्धम्, इति सापे-क्षत्वेऽपि तत्सिद्धिरप्रत्यूहा, नैवं भेदः। अयमेव न्यायो ह्रस्व-दीर्घादौ, यत्राप्ये-कजातिक्रियाया देशव्याप्तौ न्यूनाधिकभावात् सापेक्षत्वेऽपि न तेषामसिद्धिः॥

यद्येवमर्थक्रियाभेदात् वस्तूनां स्वभावो भिद्यताम्, भेदस्य तत्स्वभाव-त्वेऽपीति शङ्का तु न युक्ता; एकस्यानेकार्थक्रियाकारित्वस्य वह्न्यादौ दर्शनेन तेन भेदसाधनासम्भवात् इति तस्यानिर्वचनीयत्वं विना न व्यवहारनिर्वाहः— इति तु बहुतरं विविनक्ति ब्रह्मसिद्धिः॥

**भेदपराणां वाक्यानां व्यावहारिकप्रामाण्यम्**

तदेवं भेदस्य, तदाश्रयाणां भावानां चानिर्वचनीयानामपि नाम-रूपांश-मात्रमादाय व्यावहारिकसत्त्वं स्वाभाविकं स्वीकृत्य तदपारमार्थिकत्वमवगाह-मानस्याम्नायस्य प्रत्यक्षापेक्षया प्राबल्यमवलम्ब्य प्रपञ्चाभावात्मकनित्य-शुद्ध-बुद्ध-स्वरूपात्ममात्रपर्यवसायित्वं साधितम्, येन प्रत्यक्षाविरोधोऽर्थसिद्धो भवति। अत एव 'सन् घटः' इत्यादिप्रतीतौ सद्रूपब्रह्मानुवेधेनैव सत्प्रतीतिरिति सिद्धान्तः॥

**'सन् घट' इत्यत्र सत्त्वमर्थक्रिया-**
**कारित्वमात्रम्, नाबाध्यत्वम्**

" सर्वप्रत्ययवेद्येऽस्मिन् ब्रह्मरूपे व्यवस्थिते।
प्रपञ्चस्य प्रविलयः शब्देन प्रतिपाद्यते॥ "

इत्यसिद्धवत्कृत्य प्रपञ्चगतस्यैव सत्त्वस्य, सत्तासामान्यरूपस्य वा व्याव-हारिकस्यार्थक्रियाकारित्वस्य वा व्यवहारमात्रनिर्वाहकस्य 'सदि'त्यत्र भानमिति कृत्वाचिन्तयैव॥

**'सन् घट' इत्यादेः सन्नित्यधिष्ठाना-**
**नुवेधमात्रम्, न वस्तुतः सत्त्वं घटादेः**

न चेयं वस्तुस्थितिः; 'सन् घटः' इत्यादौ सन्नित्यधिष्ठानस्यैवारोपित-

प्रपञ्चतादात्म्यापन्नस्य भानम् ; विनाऽधिष्ठानभानमारोप्यमात्रप्रतीतेरसम्भवात् । न हीदमित्यधिष्ठानानुवेधं विना रजतमात्रस्य बोधो भ्रमो नाम । अतोऽर्थक्रियाकारित्वादेरेव सत्त्वप्रतीतिविषयत्वेन प्रपञ्चस्यानिर्वचनीयताऽपि कथामात्रं स्यात्, सर्वप्रत्ययवेद्यत्वं च ब्रह्मणो बाधितं स्यात् । अत "अथात आदेशो नेति नेति" इति प्रपञ्चनिषेधानुपपत्त्या परमार्थगतिरपि प्रपञ्चबाधोपपादनार्थमत्र प्रतिपादनीयेति ब्रह्मसिद्धिः प्रकुरुते—

"मायाया नैकरूपेषु न निषेधोऽवकाशवान् ॥"

इति ॥

**'सन् घटः' इत्यादौ सत्तादात्म्यमेव विषयः, इत्येकसत्तोपन्यासः, तेन सर्वेषां ज्ञानानां सदंशे प्रमात्वं प्रकारांशे भ्रमत्वम्**

अयं भावः—'सन् घटः' इत्यादिप्रतीतिर्घटादिकमवगाहमाना सन्मात्रतादात्म्येनैव तद् वस्तुस्वरूपमवगाहते, न तु स्वभावतः सर्वं वस्तुतामर्हति, इति स्वतः सत्त्वप्रतीत्यविषयत्वात् घटादिप्रत्यक्षं वस्तुतस्तद्विषयस्य वस्तुत्वाभावपरमाम्नायं बाधितुं न क्षमते। सर्वं ज्ञानमधिष्ठाने सन्मात्रांश एव प्रमाणम्, न तु विकल्पे प्रकारांशेऽपि । न चाधिष्ठानभानमन्तरा विकल्पप्रतीतिः, इति प्रत्यक्षेण प्रपञ्चाभावपर आम्नायो न बाधितुं शक्यते । 'सन् घटः' इति सामानाधिकरण्यप्रतीतिस्तादात्म्यमवगाहमाना नार्थानां तादात्म्यं प्रमापयति, किन्तु सदर्थयोः ; अन्यथा सत्त्वस्यार्थस्वभावत्वे घट-पटादीनां सर्वेषामपि सत्त्वाविशेषात् सर्वेषां भावानामभेदापत्तिः ॥

**सदर्थयोरभेदे घट-पटाद्यभेदापत्तिशङ्का, आध्यासिकोऽभेदः सन्मात्रेण, न घट-पटाद्यात्मनाऽपीति तत्परिहारश्च**

न च घट-पटादिकमभिन्नम् ; तथा प्रत्यभिज्ञानाभावात् । सदधिष्ठानानुवेधे तु सतां सर्वेषां भावानां तादात्म्यमात्रेणाध्यस्तेनाभेदप्रतीतिर्निर्वहति ॥

अयमेव निष्कर्षोऽध्यासभाष्यस्य । तेन हि सदंश एव ज्ञानमात्रस्य प्रामाण्यम्, प्रकारांशे तु भ्रम इति हि तत्त्वार्थो विवक्ष्यते । इमं चार्थं न ब्रह्मसिद्धिमपहाय कोऽपि निबन्धो निष्कृष्टं निबध्नाति, तत्त्वशुद्धिं विनाऽन्यत्राद्वैतनिबन्धेषु, न्यायामृत-न्यायसुधादौ द्वैतग्रन्थेऽपि नास्योल्लेखः ॥

न च मतान्तरावलम्बिनोऽपि प्रत्यक्षबाधप्रसङ्गे ब्रह्मसिद्धिसिद्धान्तमिमं

न्यायसुधादावनुवदन्ति न्यायामृतादौ द्वैतनिबन्धे वा। किं बहुना ? तत्त्वशुद्धिं विनाऽद्वैतग्रन्थोऽपि कोऽपीममर्थं न परामृशत्यप्यद्वैतसिद्ध्यादावपि न्यायामृतादि-निरसनैकदृष्टौ—न्यायामृतादावस्य निरसनं न कृतमिति कृत्वैव, विश्वस्यते, नेदं तत्त्वं मुख्यमपि नोल्लिख्यते ॥

### सिद्धान्तलेशसंग्रहे तत्त्वशुद्धिकार-मतमित्युल्लेखश्छिन्नमूलः

सिद्धान्तलेशसंग्रहोऽपि वस्तुतो ब्रह्मसिद्धिमूलमपीदं तत्त्वं तत्त्वशुद्धिकारोपज्ञमिति संगृह्णाति। न चेदं तत्त्वं ब्रह्मसिद्धिमपहायान्यत्र विस्तृतमुपलक्ष्यते ॥

### श्रीभाष्य-शतदूषण्यादावस्योल्लेखो ब्रह्मसिद्धेः पूर्वपक्षमतमवलम्ब्य सिद्धान्तांशपरिहाणेन

श्रीभाष्य-शतदूषण्यौ चेमं पक्षमन्यथा मत्वैव निरस्यतः। व्यक्तीकरिष्यते चेदं परस्तात् ॥

न च 'सन्नि'ति पदं पाचकादिवद् यौगिकम्। न च प्रमाणविषयः सन्पदार्थः, येन 'सन् घटः' इत्यादावभिन्नरूपप्रतिपत्तिः स्यात्, अन्यथोभयोरप्यभावेन निर्विषयत्वमेव ज्ञानस्येति विज्ञानवाद एव स्यात् ॥

न चात्र भेदस्य भानम्, किन्तु स्वरूपमात्रस्य, विधिपूर्वकभेदबोधो वा, येन प्रत्यक्षमभेदाम्नायबाधनक्षमं स्यादिति निरूपितमधस्तात् ॥

सदात्मना, सामान्यात्मना वा विशेषाणामभेदः, न तु विशेषात्मना। अतः 'सन्नि'ति सदनुवेधनिबन्धनैव प्रतीतिः। तत्र गोत्वं गवां सामान्यम्, द्रव्यत्वं द्रव्याणाम्, अन्यच्चान्येषाम्, 'सदि'ति तु सर्वेषाम्, इति सदात्मना सर्वेषामभेदः ॥

अस्य च तत्त्वस्य मूलं गौडपादानामजातवादगम्—'सद्रूपेण ह्यजं सर्वमि'ति वचनमेव ॥

इदं वचनं गौडपादीयमागमप्रकरणगतं सौगतमतमेवावलम्ब्येति वादो हि श्रीविधुशेखरभट्टाचार्येण "स्वरूपेण ह्यजं सर्वमि"ति परिवार्तनमाश्रित्य। अत्र सद्रूपेणाजातवादः प्रपञ्चस्य, स्वरूपेणोत्पत्तिवादस्य "यतो वा इमानि भूतानि जायन्ते" इति श्रुतिसिद्धस्य न विरोधीत्याद्यन्यत्र, वेदान्तरक्षामणि-भूमिकायां च व्यक्तम् ॥

### निर्विकल्पकज्ञानं स्वरूपमात्रस्याविरुद्धम्

न च भावानां सदात्मकत्व-स्वरूपोभयात्मकत्वेऽपि सन्मात्रस्य निर्विकल्पकबोधो विरुद्ध्यते। निर्विकल्पकबोधेऽपि द्व्यात्मकस्यापि वस्तुनः "ग्रहणं लक्षणाख्येयं ज्ञात्रा शुद्धं तु गृह्यते" इति श्लोकवार्तिकं प्रपञ्चतादात्म्येन प्रतीयमानमपि सद्रूपमखण्डाकारवृत्त्या निष्प्रपञ्चशुद्धात्मनाऽपि ज्ञातुं शक्यत इति ज्ञापयति। निर्विकल्पकत्वं हि ज्ञानस्य विकल्पस्य बाधितत्वात् स्वरूपमात्रपर्यवसायित्वम्=निष्प्रकारकत्वमेव ॥

### अर्थस्य विज्ञानादिवादेनासत्त्वादिव्यवस्था

तत्र ज्ञानातिरेकेणार्थस्याभाव एवेति विज्ञानवादः। अस्ति तद्व्यतिरेकेणार्थः, परंतु सत्स्वभावः सत्य इति त्वपरे। अद्वैतिनस्तु न स्वयं स सन्, किन्तु सत्तादात्म्यमात्रम्, स्वरूपं तु तस्यानिर्वचनीयमिति विवेकः। तेन च प्रकारांशे सर्वं ज्ञानं भ्रम इति ॥

### 'सन् घटः' इत्यादौ सामानाधिकरण्यं बाधायामेव, अन्यथा तदनुपपत्तेः

तत्र 'सन् घटः' इति प्रतीतौ सामान्यम्, व्यक्तिश्च द्वौ न प्रतीयेते; सामानाधिकरण्यविरोधात्। तत्र द्वयोर्विविक्तयोर्भाने दण्ड-देवदत्तयोरिव वैयधिकरण्यमेव प्रतीयेत। सम्बन्धिद्वयं हि विशेषण-विशेष्यभावेन द्वाभ्यामेकया वा बुद्ध्या गृह्यते, न तु सामानाधिकरण्येनाभेदनिबन्धनेन। तत्र समवायसम्बन्धस्तु दुर्वच इति सूत्र-भाष्ययोर्व्यक्तम् ॥

न च सामान्य-विशेषात्मकमेकं वस्तु; विरोधात्। न हि विप्रतिषिद्धार्थज्ञानानां प्रामाण्यं युज्यते संशयवत्, इति न प्रामाण्यं स्यात्। अनेकान्तवादो ह्ययं निरस्तः सूत्र-भाष्यादिषु। विशेषाणां भिन्न-भिन्नानां भानमपि तेषामभेदस्य बाधितत्वात् सामानाधिकरण्यप्रत्ययं व्याहन्ति। सामानाधिकरण्यं हि भेदाभेदात्मकं तादात्म्यमेव ॥

### 'सन् घटः' इति तादात्म्यमद्वैतवाद एव

न च विरुद्धयोस्तयोरेकत्वसंभवः। अतस्तत्रैकं कल्पितम्, अपरं तु पारमार्थिकमिति वक्तव्यम्। तत्राभेदोपादानैव भेदकल्पना युक्ता, न भेदोपादानाऽभेदकल्पना, इति कल्पितं भेदमादायैव सामानाधिकरण्यं निर्वाह्यम्।

तच्च सतोऽज्ञानविषयस्याधिष्ठानत्वसंभवादद्वैतवाद एव भेदस्यैव कल्पनयेति युज्यते। अतः—

यदि वाऽखिलभावानामभेदात् तदतत्त्वतः।
अभेदवादाश्रयणं स्यादन्यविधया गिरा॥

इति ब्रह्मसिद्धयुक्तैव दिशा गतिः॥

तदाशयस्तु 'सन् घटः' इति हि न सामान्य-विशेषोभयसंभिन्न-स्वरूपमवगाहते; शबलस्यान्यत्राननुगमात्, अतस्तत्रैकांशमात्रमन्यत्रानुगच्छद् वस्त्विति वक्तव्यम्॥

**विशेषा व्यावृत्ता न सन्तः, किंतु सदेवानुवर्तमानं वस्तु**

तत्र च किं विशेषा वस्तूनि, अनुवर्तन्ते च, उत सामान्यमिति परीक्ष्यम्। तत्र सामान्यांशादनुवृत्तादद्वैतवादः, विशेषांशानुवृत्तिस्तु बाधिता। तत्र प्रथमे कल्पे गौः स्वतो गौः, सामान्यात्मना त्वश्वोऽपि; 'सती गौरि'तिवत् 'सन् अश्वः' इत्यपि प्रतीतेः। तदेवं गौर्गौश्च, अश्वश्च रूपभेदेन। तेन चार्थक्रियाभेदोऽप्यभेदेऽपि—यथा जगतः स्वरूपेणोत्पत्तिः, सद्रूपेणानुत्पत्तिरजातवादे। अयमेव न्यायो गोषु, अश्वेषु च, इति नाश्वकार्यं गवा, गोकार्यं वाऽश्वेनेति व्यवस्था न व्याहन्यते॥

तत्र सदात्मना जगदद्वैतम्, तत्तदात्मना द्वैतम्। सत्यप्येवं गौर्न स्वरूपेणाश्वाभिन्नः, अश्वो वा न स्वरूपेण गवाऽभिन्नः, येन गोकार्यमश्वेनाप्यापद्यते॥

**'सन् घटः' इत्यत्र सदात्मनाऽभेदे**
**गवाश्वादिकार्यापत्त्यापादनं**
**ब्रह्मसिद्धिविरुद्धम्**

श्रीभाष्यं तु सन्मात्रे ज्ञानस्य प्रामाण्यमिति पक्षे गोकार्यमश्वेनापि स्यादिति ब्रह्मसिद्धेर्भावमन्यथैव कृत्वा भाषते, तद्भावानवबोधेन वा तदत्र श्रीभाष्यम्—'प्रत्यक्षस्य सन्मात्रग्राहित्वेऽश्वार्थिनां महिषादितो निवृत्तिर्न स्यादि'ति विशेषानुगमपक्षे ब्रह्मसिद्ध्यनभिप्रेते ब्रह्मसिद्ध्युक्तं दूषणं सामान्यांशानुगमपक्षेऽप्यतिदिशति, यत्तु ब्रह्मसिद्धिः स्वयमेव निरस्यति। शतदूषण्याशयोऽपि श्रीभाष्यानुयायी "आम्रान् पृष्टः कोविदारानाचष्टे" इति प्रतिष्ठते। अत्र शतभूषणी ब्रह्मसिद्ध्याशयं संगृह्णानोक्तनिबन्धद्वयोक्तिमनुक्तोपालम्बनम्, अथवा विपरीतोपालम्भनं विशदयति॥

अत्रेत्थं ब्रह्मसिद्धिः—अथ गौर्वस्तु कथं वक्तव्यम्—किं यद् गौर्भव-त्येव, अथ यन्न भवत्यपि । तत्र पूर्वस्यां कल्पनायां न वस्तुनोऽनुगमः, इत्यनन्वितानि वस्तूनि । द्वितीयस्यां वस्तुनो वस्त्वन्तरेऽननुगमाद् द्वैतम् । सर्वथा येन विशेषेणायमश्वाद् गोवस्तु व्यवस्थापयत्यन्यत् , तद्विशेषयुजस्तु तस्यानन्वयाद् भेदवादः, अथानन्वयदोषाद् विशेषमाश्रयति, तर्ह्यभेदवाद, इति न द्वैताद्वैत-कल्पनोपपद्यते—इति ॥

### ब्रह्मसिद्धिरनेकान्तवादमनेनैव नयेन निरस्यति

तथाहि—अनेकान्तवादिनामपि वस्तुनो वस्त्वन्तरान्वयेऽपि प्रागभावाद् द्रव्यमात्रं स्यात् ; द्रव्य-पर्यायस्वरूपत्वाद् वस्तुनः । तत्र यदि पर्यायान्तरे पर्यायान्तराननुगमादनन्वितानि, तर्हि व्यावृत्तस्वभावानि वस्तूनि —इति ॥

सर्वथा तु विशेषरूपेण, पर्यायरूपेण वा कार्येण भेदवाद एव, सदात्मना द्रव्यात्मना वा त्वभेदः, उभयात्मता तु विरोधाद् न युक्तेति निष्कर्षः ॥

अतः सामानाधिकरण्यप्रतीतिनिर्वाहः सामानाधिकरण्योपलक्षिताभेदाख्येन तादात्म्येनैव वाच्यः । तत्र चाभेदोपादानो भेदः, न भेदोपादानोऽभेदः, इति भेदानिर्वचनीयतावादेन , भेदाताित्त्वकतया वा 'सन्' इत्यादि-प्रतीतिर्निर्वहणीया । इदमेवाभिप्रेत्य ब्रह्मसिद्धिः—

दर्पणादौ मुखस्येव भेदोऽभेदावलम्बनः ।
भेदावलम्बनोऽभेदो न तथा तदभावतः ॥
प्रत्येकमनुबद्धत्वादभेदेन मृषा मतः ।
भेदो यथा तरङ्गाणां भेदाद् भेदः कलावतः ॥

इति । सर्वथा तु प्रत्यक्षस्य भेदावगाहिनोऽपि कल्पितभेदविषयत्वस्यैव युक्तितोऽप्युपपन्नत्वात् पारमार्थिकाभेदपरम्पराम्नायस्य न तेन बाधः, न वाऽप्रामाण्यम् ॥

### प्रत्यक्षेणागमाबाधोपसंहारः

प्रत्यक्षादिभिरभेदोपादानकल्पितव्यावृत्तिमतामेव भावानामवगमात् पारमार्थिकाभेदपराम्नायस्य, प्रत्यक्षादेश्च भिन्नविषयत्वेनाविरोधात् , तत एव प्रत्यक्षेणाम्नायस्याबाधाच्च न ग्रावप्लवनाद्यर्थवादतुल्यत्वमागमस्य ॥

एतेन—अर्थवादाधिकरणे "एतेनोपनिषदो व्याख्याताः" इति भट्टपादैरुपनिषदामर्थवादत्वोक्तिरपि—व्याख्याता ॥

॥ इति तर्ककाण्डार्थसंग्रहविमर्शः ॥

॥ नियोगकाण्डार्थसंग्रहः ॥
प्रथम-द्वितीय-तुरीयकाण्डप्रतिपाद्यार्थः

प्रथमे काण्डे वेदान्तप्रतिपाद्यम्, प्रकृतप्रकरणविषयो वाऽऽनन्दामृताजविज्ञानाक्षरासर्वसर्वाभयं ब्रह्मस्वरूपं प्रतिज्ञातम्, येन ब्रह्मजिज्ञासाविषयो निरूपितः ॥

द्वितीयेन काण्डेन वेदान्तानां प्रत्यक्षविरोधादप्रामाण्यं ब्रह्मण्याशङ्क्य, आम्नायस्यैव प्रत्यक्षापेक्षया मुख्यत्व-निरवकाशत्व-भिन्नविषयत्वादिना प्राबल्येन वेदान्तानामप्रामाण्यशङ्का निरस्ता; तुरीयेन तु वेदान्तानां भूतार्थपरत्वेऽनुवादकत्वमुपचरितार्थत्वं चाशङ्क्य निरसिष्यते ॥

तृतीयकाण्डार्थसंग्रहः

तत्र प्रभाकरमतेन वेदान्तानां प्रतिपत्तिविधिविषयपरतैव, इति सिद्धे ब्रह्मणि न प्रामाण्यमिति तृतीयकाण्डप्रतिपाद्यनिष्कर्षः ॥

मण्डनसिद्धान्तो भगवत्पाद-
सिद्धान्तश्चात्रैकः

अत्र तृतीये काण्डे वेदवाक्यानां कार्यपराणामेव प्रामाण्यात्, अन्यथाऽवाच्येऽप्रमेये च सिद्धे वस्तुनि प्रामाण्यायोगमाशङ्क्य, भूतेऽपि ब्रह्मणि प्रामाण्यं समर्थ्यते, येन प्रतिपत्तिविधिविषयपरतया प्रामाण्यव्याजेनाप्रामाण्यं ब्रह्मणि समन्वयाधिकरणद्वितीयवर्णकेनाशङ्कितं निरस्य, वेदान्तानां प्रतिपत्तिविधिविषयपरतया ब्रह्मबोधकत्वेऽपि प्रतिपत्तेरखण्डाकारवृत्तिरूपायाः प्रमाणतन्त्रायाश्चोदनाऽतन्त्राया एव विवक्षणान्न ब्रह्मासिद्धिरिति निष्कृष्यते, इति तेनापि व्याजेन वेदान्तानां नाप्रामाण्यमिति व्यवस्थाप्यते, इति मण्डनसिद्धान्तो भगवत्पादसिद्धान्ताद् लेशतोऽपि न बाह्यः ॥

सति चैवं तृतीयेन काण्डेन शास्त्रयोनित्वाधिकरणार्थो वेदान्तानां कर्माङ्गकर्तृ-देवतादिस्तावकतया प्रामाण्यमिति समन्वयाधिकरणप्रथमवर्णकार्थ इव द्वितीयवर्णकार्थोऽत्र निरूपितप्रायो भवति। ततश्च भगवत्पादानामुत्तरमीमांसायाः

संग्रहात्मकचतुस्सूत्र्या भाष्यार्थ एवात्र काण्डचतुष्टयेनापि समर्थ्यते, इति मण्डनो न भगवत्पादप्रस्थानात् पदात् पदमपि बहिरवतरति ॥

### मण्डनमते नैकान्तेन व्यवहारे भाट्टनयः

इष्टसाधनत्वं विध्यर्थः, नापूर्वमिति भाष्य-ब्रह्मसिद्ध्योः समानम्, यस्यैव भामत्यादिना कृतो निष्कर्षो भाट्टाभिमतभावनाविध्यर्थनिरासपूर्वकम्। तेन व्यवहारे भाट्टनयो नैकान्तेन मण्डनमते। तत्र सिद्धेऽपि वस्तुनि वेदान्तानां प्रामाण्यनिरूपणप्रसङ्गे "अपि च 'ब्राह्मणो न हन्तव्य' इति चैवमाद्या निवृत्तिरुपदिश्यते। न च सा क्रिया, नापि क्रियासाधनम्; अक्रियार्थानामुपदेशोऽनर्थकश्चेत्, 'ब्राह्मणो न हन्तव्यः' इत्यादिनिवृत्त्युपदेशानामानर्थक्यं स्यात्, तच्चानिष्टम्; न च स्वभावप्राप्तहन्त्यर्थानुरागेण नञः शक्यमप्राप्तक्रियार्थत्वं कल्पयितुं हननक्रियानिवृत्त्यौदासीन्यव्यतिरेकेण। नञश्चैष स्वभावो यत् स्वसम्बन्धिनोऽभावं बोधयति" इति समन्वयाधिकरणभाष्यं हि विधि-निषेधस्थलेऽपि न नियोगः कार्यमपूर्वाख्यं वाक्यार्थः, किन्त्विष्टसाधनत्वमेवेतीष्टसाधनत्वविध्यर्थतामेव व्यवस्थापयति ॥

व्यक्तं चैतद् भामत्याम्। अतोऽवसीयते—उक्तभाष्यमूल एवायं नियोगकाण्डः—इति। न चेदं भाट्टाभिमतभावनाविध्यर्थतावादे, अन्याभिमतव्यापारसामान्यविध्यर्थतावादे वा सम्भवति—इति। स्वाचार्यकुमारिलभट्टसिद्धान्तं नियोगवाक्यार्थवादेन प्रभाकरो निरस्यति, मण्डनस्त्विष्टसाधनताविध्यर्थतावादेन निरस्यति, इति मण्डन-प्रभाकरावुभावपि कुमारिलपादसिद्धान्तमत्र निरस्यतः। अतो व्यवहारे भाट्टनय इत्यद्वैतिनामपि नैकान्तेन ॥

### भट्ट-प्रभाकरयोरुभयोरप्यद्वैतनिरास एव तात्पर्यम्

तत्र कुमारिलः तर्ककाण्डनिरस्यकल्पेनार्थवादतया वेदान्तमप्रमाणं ब्रह्मणीति मन्यते पूर्वोक्तरीत्या, प्रभाकरस्तु नियोगवाक्यार्थवादेन ब्रह्मणि वेदान्तानामप्रामाण्यमाशेते, इति परस्परप्रतिद्वन्द्विनावुभावपि नाऽद्वैतविरोधं निरुन्धतः ॥

### मण्डनस्य विधिविवेकोऽपि तदाशय एव

मण्डनस्तु भगवत्पादैः साकं शंकरविजयोक्तदिशा भाट्टसिद्धान्तम्, प्रभाकरसिद्धान्तं च दुष्टमवगत्याद्वैते वेदान्तानां प्रामाण्यं समर्थनीयम्, इति पूर्वोक्त-

भाष्याशयं मूलीकृत्येष्टसाधनत्वलिङर्थतावादमेव साधु मन्यते। इदमेव लक्षीकृत्य मण्डनस्य विधिविवेकः, ब्रह्मसिद्धेर्नियोगकाण्डश्च ॥

एतदाशयस्तु न्यायचन्द्रिकायां भावशुद्धिकारेणाऽऽनन्दपूर्णमुनिनोक्तप्रकारेण 'व्यवहारे भाट्टनयः' इति न मानववचनमिति वचनेन व्यक्तीक्रियते। अतः स्वतन्त्रप्रतिभो मण्डनः प्रमाणमात्रपरतन्त्रः स्वाचार्यं कुमारिलम्, स्वसतीर्थ्यं प्रभाकरम्, किं बहुना भगवत्पादानप्यद्वैतसिद्धान्ताविरोधे क्वचन क्वचन निरस्यति। व्यक्तीकृतं चेदं प्रथमकाण्डार्थसंग्रहावसरे मण्डनोऽद्वैताविरोधेनैव भगवत्पादसिद्धान्तं प्रतिपादयतीति ॥

### भगवत्पादानां मण्डनस्य, मण्डन सुरेश्वरयोश्च विवाद-विषयः कर्मणां ज्ञानोपयोगः

तत्र ब्रह्मसिद्धेराद्यन्तसमालोचनेनेदमवगम्यते—मण्डन-सुरेश्वरयोर्विवादो भगवत्पादविजययात्राकाले विध्यर्थवाद एव, यत्र मीमांसका उपनिषदोऽप्रामाण्यमेव मन्यन्ते ॥

### मण्डनस्य भगवत्पादान्तेवासिता नियोगपरतानिरासेन

अन्ये तु प्रामाण्येऽपि नियोगपरतयैव वेदान्तानामपि प्रामाण्यम्, परत्यप्येवमुपास्यब्रह्मपरतयैव वेदान्तानां प्रामाण्यम्, तेन च न ब्रह्मस्वरूपं सत्यमित्यभिप्रयन्त आसन्। तत्र, विश्वस्यते, भगवत्पादानामेव तत्र विजय आसीत्, यमेव प्रमाणीकृत्य विमलीकृतमना मण्डनः भगवत्पादान्तेवासितां स्वीकर्तुमायतत ॥

### कर्मणां ज्ञानोपयोगविषयो मण्डन-भगवत्पादयोर्विवादविषयः

अपरोऽपि विषयो मीमांसकसम्मतो भगवत्पादानाम्, मण्डनस्य च विवादविषय आसीत्, यत् कर्मणां ज्ञानोपयोगविषयो नाम। तत्र तु गृहस्थानामपि, विरक्तानां संन्यासनियमः, तस्यैव प्राधान्यकल्पः, तद्विपरीतकल्पश्च। तत्र निर्णयस्तु—मण्डनानुमतः—अस्ति संन्यासोऽपि वेदान्ततात्पर्यतो धर्म इति, परन्तु स न कर्माधिकारिविषयः प्रधानः, किन्तूर्ध्वरेतसां विषये मुख्यः; तेषां कर्मानधिकारात्। अतो ब्रह्मचर्यात् संन्यासो भगवत्पादानाम्, सत्यम्, मुख्यः, गृहस्थानां तु संन्यासो गौणकल्प इति ॥

### मण्डन-शङ्करविजयविषयः, तत्फलं च, "सर्वापेक्षा च" सूत्रेऽश्व-दृष्टान्तस्वारस्यं मण्डनमते

मण्डनमते तु गार्हस्थ्यावस्थया कर्मानुष्ठान एव क्षिप्रं मुक्तिलाभः, अन्येषां स्वतः कर्मानधिकारिणां चानधिगतकर्मोपकरणानां चिरेणैव मुक्तिरिति। तत्र मण्डनमते "सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत्" इत्यश्वदृष्टान्तोऽतीव स्वरसः। इदमनेनावगम्यते—भगवत्पादैः साकं वादे पराजयानन्तरं कर्मणां संयोगपृथक्त्वन्यायेनोपयोगपक्षस्यापि भगवत्पादैरप्यनुमोदनानन्तरमेव ब्रह्मसिद्धिरियं मण्डनेन विरचिता। सर्वथा तु प्रधाने विषयेऽद्वैतवादसाधुत्वम्, विध्यर्थनियोगायोगः, तदनुसारेण वेदान्तस्यापि प्रामाण्यं च तत्प्रसङ्गानुप्रसङ्गेन मण्डनेन ब्रह्मसिद्धौ बहूनि तत्त्वान्यद्वैतोपबृंहकानि समर्थितानि, यानि विषयानुक्रमिणिकायां विशदानि॥

### मण्डन-सुरेश्वरयोरैक्यानैक्यविचारस्य तूत्तरत्र चर्चाप्रतिज्ञा

तत्र मण्डन-सुरेश्वरयोरैक्यानैक्यविमर्शः, तदुभयसिद्धान्तयोर्भेदाभेदचर्चा च परस्तादत्र विशदीकरिष्यते। तत्र मुक्तिस्वरूपे तयोः—

"निवृत्तिरात्मा मोहस्य ज्ञातत्वेनोपलक्षितः॥"

इत्युपक्षिप्ते पक्ष उभयोरप्यैक्यमित्यधस्तात् सप्रमाणं सविस्तरं चोपपादितम्। अन्यत्र तयोरैक्यानैक्यचर्चा तु वार्तिक-नैष्कर्म्यसिद्ध्यादिसन्दर्भसमालोचनैकनिबन्धनाऽप्युपरि स्वावसरे व्यक्तीभविष्यति, साम्प्रतं तु प्रकृतं नियोगकाण्डार्थसंग्रहमेवाधिकृत्य लेखनी व्याप्रियते॥

### वेदार्थः कार्यमेव, तच्च न वाक्यजन्यज्ञानम्, तदभ्यासः, साक्षात्कारो वा वाक्यविधया, किन्तु कृतिसाध्या प्रतिपत्तिरेव वाक्यार्थः

स यथा—कार्य एवार्थो वेदार्थः; "चोदनालक्षणोऽर्थो धर्मः" इति सूत्रणात्। चोदना हि प्रवर्तकं वचनम्, इति मन्त्रार्थवादोपनिषदः सर्वा अपि भूतमुखेन कार्यपरा एव, इति वेदान्तानामपि विधिविषयप्रतिपत्तिशेषतयैव प्रामाण्यम्। तत्र तिस्रः प्रतिपत्तयो ब्रह्मणि भवन्ति—आद्या श्रवणादिजन्या वाक्यार्थज्ञानरूपा। तत्र शब्दादर्थज्ञानं न विधेयम्; शब्दमात्र-

निबन्धनस्य तस्य यागादिवद् नियोगाविषयत्वात्। न हि "स्वर्गकामो यजेत" इत्यादौ वाक्यजन्यं ज्ञानमपि यागादिकार्यमिव विधेयम्; प्रमाणजन्यस्य ज्ञानस्य, प्रमाणतन्त्रस्य वा पुरुषप्रयत्नाविषयत्वेन चोदनातन्त्रत्वाभावात्, इच्छाविषयः, तद्द्वारा कृतिसाध्यो वा; अन्यथा वाक्यजन्यज्ञानेऽपि विध्यपेक्षायां स्वर्गकामादिवाक्यार्थज्ञाने विध्यन्तरमपेक्षितं स्यात्, एवं तदर्थज्ञानेऽपीत्यनवस्थापत्तेः॥

### विधिवाक्यानां न ज्ञानार्थत्वम्, न वा तत्फलकत्वम्, किन्त्वदृष्टफलार्थत्वात् कार्यार्थत्वम्

तत्र यद्यपि "स्वाध्यायोऽध्येतव्यः" इति विधिस्तदर्थज्ञानमपेक्षते; तथापि तत्र वाक्यार्थज्ञाने प्रवृत्तिर्न विध्यधीना; पुरुषान्तराधीतादपि ततस्तस्य चान्येषां च वाक्यानामध्ययने प्रवृत्तिसम्भवात्॥

तत्र वाक्यानि श्रूयमाणान्येव विनाऽपि विधिमर्थमवबोधयन्त्येव। अत एव "स्वाध्यायोऽध्येतव्यः" इत्यध्ययनस्यार्थज्ञानार्थत्वस्य लोकसिद्धत्वाद् नियमविधिः, न त्वपूर्वविधिः। अतो वेदान्तानां तत्त्वप्रतिपत्तिपराणामपि स्वसामर्थ्येनैवार्थबोधपर्यवसायित्वाद् न ज्ञानविधिरुपपद्यते। तत्र लोक इव वेदेऽपि वाक्यानामर्थपरत्वमौत्सर्गिकम्, तत्तु तात्पर्यादिनिर्णयापेक्षत्वाद् न विधितात्पर्यविषयबोधार्थं विधेरपेक्षा॥

तत्र विधिः, स्वर्गकामादिवाक्यं वाऽदृष्टफलार्थमिति वक्तव्यम्। ज्ञानफलं तु दृष्टमेव ज्ञेयावाप्तिः ज्ञातारं प्रति प्रकाशादिकम्, यत्तु नादृष्टमपेक्षते। अतो न फलार्थमपि विधिः॥

### न वाक्यजन्यज्ञानमात्रं मोक्षफलकम्, किन्तु तदधीनप्रतिपत्तिरेव, अत्र वेदान्तानामपि विधिपरत्वं प्रतिपत्तिपरतयैव

न च वाक्यार्थज्ञानस्य मोक्षः फलम्; तस्य तत्साध्यत्वेऽनित्यत्वापत्तिः। भावरूपं हि कार्यं नश्वरमेव। अतः कार्यनाश्यताया ध्वंसे न व्यभिचारः। तत्र बन्धहेतुक्षयो यद्यपि नित्यः; ध्वंसरूपत्वात्, तथापि न सोऽपि वाक्यार्थज्ञानादन्यः। तत्राविद्यैव बन्धहेतुः, ज्ञानमेव तु हेतुस्तन्निवृत्तेरिति पूर्वकाण्डे विवेचितम्॥

### वेदान्तानां कार्यपरतयैव प्रामाण्यमिति प्रभाकरमतानुवादः, यदेव मूलीकृत्य श्रीभाष्यमतम्, तत्र ब्रह्मसिद्धिमतस्य विशेषश्च

एतेन—'परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिसम्पद्यते'' इति वचनसिद्धा स्वरूपस्थितिर्न मोक्ष इति—व्याख्यातम् ; तस्याः सार्वदिकाया असाध्यत्वात्, अपुनरावृत्तिश्रुतिबलाद् मोक्षनित्यता तु प्रत्यक्षविरुद्धा, युक्तिविरुद्धा च । नित्यप्राप्तस्यैवात्मनः मुक्तरूपस्यानुवादमात्रं तु वेदान्तानां वर्तमानापदेशेनार्थवादत्वापादकम्, अप्रामाण्यापादकं वा । अर्थवादादपि फलकल्पना तु दृष्टेन ज्ञेयत्वावभासेनैव फलाकाङ्क्षाया उपक्षयाद् नोपपद्यते । विनाऽपि कार्यान्वयं भूतार्थमात्रबोधकमनुवादत्वादप्यप्रमाणं स्यात् । अतो वेदान्तवाक्यानामपि विधिनिष्ठत्वं स्वीकर्तव्यम् । तच्च शब्दप्रमाणमात्राधीने ज्ञाने बाधितम्, इति वाक्यार्थज्ञानमात्रम् विना कार्यसम्बन्धं न वेदान्तानां विषयः ॥

### पूर्वोक्तं प्रभाकरसिद्धान्तं मूलीकृत्यैव श्रीभाष्यम्

अयमेवार्थः श्रीभाष्य उपक्रमे 'ज्ञानादज्ञाननिवृत्तिरिति सम्प्रतिपन्नम् । तच्च ज्ञानं वाक्यार्थज्ञानादन्यदेव ध्यानोपासनादिशब्दवाच्यमि'त्यादिना स्वसिद्धान्तत्वेन स्वीकृतः, यां ब्रह्मसिद्धिर्द्वितीयां प्रतिपत्तिमाशेते, यस्या निरसनेन तृतीया प्रतिपत्तिरेवात्र विहितेति व्यवस्थाप्यते ॥

अत इदमेवात्र परीक्षणीयम्—यद् द्वितीयप्रतिपत्तिनिरासेन तृतीयप्रतिपत्तिसमर्थनावसरे ब्रह्मसिद्ध्युक्तानि दूषणानि श्रीभाष्येण स्वसिद्धान्तसमर्थनप्रसङ्गे कथं परीक्षितानि, को वा परिहारक्रमस्तत्र समादृत इति च ॥

### भूतार्थत्वं वेदान्तानां नानुवादत्वेनाप्रामाण्यप्रयोजकम्, अनुवादत्वस्वरूपपरीक्षा च

अत्र ब्रह्मसिद्धिः प्रथमां प्रतिपत्तिमेव भूतार्थविषयामेव समर्थयिष्यन्त्यनुवादकत्वं प्रथमप्रतिपत्तिविवक्षायां किं रूपं विवक्षितमिति परीक्षते—किं प्रमाणान्तराधिगतार्थबोधकत्वमनुवादत्वम्, उत भूतार्थमात्रपरत्वम्, उताधिगमान्तरसंभिन्नार्थत्वमिति । तत्राऽऽद्येऽधिगमान्तरसापेक्षत्वं सत्यं नियतम्, येनानुवादता । न च वेदान्तवाक्यान्यधिगमान्तरसम्भिन्नार्थानि, इति न तेषामनुवादत्वम्, भूतार्थत्वमात्रं तु प्रत्यक्षानुमानयोरपि प्रमाणयोस्तथाभूतयोरनुवादत्वापादकं स्यात् ॥

### वाक्यानां प्रामाण्याप्रामाण्ये सापेक्षत्व-निरपेक्ष-त्वनिबन्धने, न तु भूतार्थत्व-कार्यार्थत्वनिबन्धने, इदं च समन्वयसूत्र-भाष्यमूलम्

तत्र वैदिकानामपि वाक्यानां भूतार्थत्वेऽपि प्रत्यक्षादिवत् प्रामाण्यमप्रत्यूहम्। अतो भूतार्थम्, अभूतार्थं वा लौकिकं वचनमेव सापेक्षम्, अनुवादकं च स्यात्। न वैदिकं वचनमधिगमान्तरासम्भिन्नार्थम्। सत्यमपौरुषेयेऽपि भूतार्थे "अग्निर्हिमस्य भेषजम्" इत्यादौ प्रमाणान्तरसंवादः सम्भवति, कार्यार्थे च न प्रमाणान्तरसम्भवः, तदपेक्षा वा, इति कार्यार्थत्वमेवापौरुषेयवाक्यस्य निरपेक्षप्रामाण्यार्थं स्वीकर्तव्यमिति शङ्का सम्भवति; तथापि न संभवमात्रेण प्रमाणान्तरायोग्येऽपि भूतार्थे प्रमाणान्तरापेक्षा सम्भवति; अन्यथा सम्भवमात्रेण शब्दापेक्षाऽपि प्रत्यक्षादिप्रमाणानां स्यात्, प्रमाणान्तरसम्भवस्योभयत्राविशेषात्, इति तेषामप्यप्रामाण्यं स्यात्॥

तत्र प्रत्यक्षादिकमेव प्रमाणम्, न शब्द इत्यत्र न गमकं किमपि। अतः सम्भवमात्रेण शब्दस्य सापेक्षत्वापादनं न युक्तम्। न च कार्यार्थत्वेऽपि निरपेक्षत्वं नियतम्; अन्यथा लौकिकानामपि "आरोग्यकाम औषधमिदं पिबेत्" "स्वर्गकामः सिकतां भक्षयेत्" इत्यादिवाक्यानामपि कार्यपराणां निरपेक्षत्वेन प्रामाण्यं स्यात्। अतः पुरुषबुद्धिपूर्वकत्वमेव सापेक्षत्वप्रयोजकम्॥

तत्र वैदिकानां नियोगनिष्ठत्वमिति वैषम्यं तु शब्दत्वे लौकिक-वैदिक-शब्दयोः समान एकत्र नियोगनिष्ठत्वम्, अपरत्र विनियोगनिष्ठत्वमिति कल्पनायां प्रमाणाभावादयुक्तम्। सारांशस्तु :—

'लोकावगतसामर्थ्यः शब्दो वेदेऽपि बोधकः॥'

इति न्याये जाग्रति वैदिकवचनस्यापि विनियोगनिष्ठत्वं कथं न दुर्वारम्? सम्भवत्प्रमाणान्तरविषयकत्वस्योभयत्राविशेषात्॥

अतोऽपौरुषेयत्वमेव वैदिकानां शब्दानामनपेक्षत्वे कारणम्, न तु भूतार्थत्वम्। अत एव सूत्रम् "औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धः" इति, येन चोदना प्रमाणमेवेति नियमो व्यवस्थाप्यते॥

अतः सापेक्षत्व-निरपेक्षत्वाभ्यां प्रमाणान्तरस्य, वेदस्य च प्रामाण्या-प्रामाण्यविवेकः सिध्यति। न चात्र चोदनैव प्रमाणमिति नियमान्तरं जैमिन्य-भिमतम् ॥

यत्तु—"तत्सम्प्रयोगे पुरुषस्येन्द्रियाणामि"त्यादिना प्रत्यक्षानुमानादि-प्रमाणलक्षणम् "तस्य निमित्तपरीष्टिरि"ति प्रस्तुत्य लक्ष्यते, तदिदमवैदिकार्थ एव प्रमाणान्तरविषयत्वयोग्यता, न तु वैदिकस्यार्थस्येति वैषम्यं प्रदर्शयितुमेव, न तु तेषां धर्मेऽप्रामाण्यनिरासाय। अयं तु प्रभाकरमतेन। सर्वं चेदं ब्रह्मसिद्धेर्न स्वबुद्धिमात्रविजृम्भितम्, किन्तु "न च परिनिष्ठितविषयत्वेऽपि प्रत्यक्षादि-विषयत्वं ब्रह्मणः; "तत्त्वमसी"ति ब्रह्मात्मभावस्य शास्त्रमन्तरेणानवगम्यत्वात्" इति भाष्यमेवास्य मूलम् ॥

"अयमाशयः" इत्यारभ्य प्रवृत्ता भामती सर्वमेतत् प्रकरणं ब्रह्मसिद्धि-भागमेव संग्रह-विस्तराभ्यां विवेचयति ॥

निष्कर्षस्तु—प्रमाणान्तरं हि न धर्मे प्रवर्तते; अन्यथा बुद्धादि-वाक्यान्यपि तत्र प्रमाणान्तरासम्भवात् प्रमाणं स्यात्। न च तेन धर्मतत्त्वमबा-धितं स्यात्, अथवा बुद्धादिवाक्यविरोधात् चोदनाऽप्रमाणम्, तुल्यबलत्वे संशयो वा स्यात्। अतो वैदिकः शब्दः प्रमाणान्तरानपेक्षमर्थं प्रत्याययति, इति न तत्र विरोधिप्रमाणाभावः कारणम्, विरोधिसम्भवमात्रेण प्रामाण्यं तु प्रत्यक्षादावपि ततोऽप्रामाण्यापत्त्या न युक्तम्। तेन च भूतार्थतायामपि बोध-कत्वलक्षणं प्रामाण्यं शब्दस्याबाधितम्; अन्यथा कार्यपरत्वेऽपि विरोधिसम्भव-मात्रेणाप्रामाण्यमापद्येत। तदेवं भूतार्थत्वेऽपि वेदान्तानां प्रामाण्यमप्रतिहतम् ॥

तदेवं सामान्यतो वैदिकवचनानां प्रामाण्यं न कार्यार्थत्वेनैवेति प्रति-पादितम्, येषां "कार्यार्थात् ब्रह्मनिश्चयः" इति भामत्याः प्रतिज्ञाभागः, तन्निरासप्रकारश्च ब्रह्मसिद्धिमूल इति ज्ञायते ॥

### अज्ञातसङ्गतित्वेन वेदान्तवाक्यानामप्रामाण्यशङ्का, तन्निरासश्च

साम्प्रतं त्व'ज्ञातसङ्गतित्वेन कार्यार्थत्वमि'ति शङ्का, तन्निरासप्रकारश्च संगृह्यते। पदस्य कार्यान्वित एव सङ्गतिग्रहात् भूतार्थतामात्रे तदसम्भवात् भूतार्थत्वे वाक्यानामप्रामाण्यं स्यात् ॥

## प्रमाणान्तरानपेक्षं वेदप्रामाण्यम्

न चास्तिक्रियामात्रसम्बन्धिभूतार्थप्रतिपादकत्वम्; वेदान्तानामस्त्यर्थस्य सत्प्रधानत्वात्, सद्रूपब्रह्मबोधकत्वेन प्रामाण्यं तु प्रमाणान्तरगम्यातिरिक्तसत्ताया असम्भवात्। नचास्त्यर्थः क्रिया, न वाऽर्थक्रियाभेदः सत्ता; तस्यापि प्रमाणभावाभावनिबन्धनत्वात्, तस्य च सापेक्षत्वं विनाऽसम्भवात्। भूतार्थत्वेऽप्रामाण्यमेव वेदान्तानामिति शङ्का तु नात्रावसरति। प्रमाणसम्बन्धस्यैव सत्तारूपत्वं हि न प्राक् प्रमाणसम्बन्धाद् भवति। प्रमाणसम्बन्धानन्तरं सत्ताप्रतीतिस्तु तस्यैव प्रमाणस्य न सम्भवति। प्रमितेर्हि प्रमाणसम्बन्धः स्वात्मसम्बन्धितामात्रेण, सत्ताप्रतीतिस्तु सार्वकालिकी, इति 'अस्ति' 'आसीत्' 'भविष्यती'ति प्रतीत्या तत्रैव विध्यनुपपत्त्या नोपपद्यते, इत्यन्यस्या एव क्रियारूपायाः सत्तात्वात् कार्यपरत्वमेव वाक्यानामस्त्यर्थनिष्ठत्वेऽपि॥

यद्यपि प्रमाणान्तरगम्यत्वस्य सत्तारूपत्वेऽपि प्राक् प्रत्यक्षस्यैव लिङ्गेनातीतकाले भविष्यत्यपि प्रत्यक्षं भविष्यत्येव, वर्तमाने तु प्रत्यक्षमेव; अतो न त्रैविध्यानुपपत्तिरिति तु नित्यानुमेये न सम्भवति। न च लिङ्गमपि प्रमाणान्तरापेक्षं सति प्रमाणं स्यात्। तत्र यदि लिङ्गादेव प्रमाणसम्बन्धरूपसत्ता प्रमाणान्तरमनपेक्ष्य सिध्यति, तर्हि वेदोऽपि तथैव प्रमाणं भविष्यति—भूतार्थत्वेऽपि विनैव प्रमाणान्तरापेक्षम्। तत्र लौकिकवचसां तत्तत्प्रमाणसम्बन्धमात्रेण प्रामाण्यम्; तदर्थस्य प्रमाणान्तरेणावगतत्वात्, ब्रह्म तु न प्रमाणान्तरगम्यम्, इति न तत्र प्रामाण्यसम्भव इति तु न युक्तम्; ब्रह्मणोऽपि स्वप्रकाशस्याखण्डाकारवृत्त्याऽविद्योपसंहारेऽखण्डात्मन औपनिषदत्वं न विरुद्धम्। तत्र लौकिकानां वचनानाम्, प्रत्यक्षादेश्च प्रामाण्यं तन्निबन्धनयाऽऽवरणनिवृत्त्या प्रकाशेनैव। तत्रान्यत्र प्रकाशः प्रमाणजन्यवृत्त्यभिव्यक्तचैतन्यतादात्म्येन, ब्रह्मणस्तु वृत्त्याऽऽवरणनिवृत्तौ स्वत इति त्वन्यदेतत्॥

## ब्रह्म-तदतिरिक्तयोः प्रमेयत्वप्रकारभेदः, येन तत्रापि प्रामाण्यव्यवस्था

तत्र प्रमेयत्वमुभयत्राप्यावरणनिवृत्त्या प्रकाशमात्रे समानम्। तत्र प्रमाणाधीनं वृत्त्युपधानमात्रं ब्रह्मणः प्रमेयत्वं नाम। तच्चावरणनिवृत्तिमात्रेण,

लक्षणया, उपचारेण वा, इतरत्र तु निवृत्तावरणविषयचैतन्यकत्वेन। तत्र ब्रह्मणीवान्यत्रानानन्दतापादकाज्ञानविषयत्वं न निवर्तते, ब्रह्मणि तु तदपि निवर्तते। न च प्रमाणान्तरविषय एव शब्दस्य विषय इति नियमः॥

### शब्देनाखण्डार्थबोधव्यवस्था

अस्तु नाम सङ्गतिग्रहः; तथापि शब्दानां क्रियासम्बन्धेनैव शाब्दबोधस्तात्पर्यविषय एव भवितुमर्हति, इति शब्दप्रमाणेनापर्यायानेकशब्दात्मकेन तात्पर्यवशादखण्डस्वरूपमात्रबोधो न व्याहन्यते। अखण्डस्य ब्रह्मण आम्नायैकसमधिगम्यत्वं तदवगमप्राक्कालपर्यन्तमविद्यावतामेव, विद्यायां तूत्पन्नायां नाम्नायस्तत्र प्रवर्तते; अविद्यानिवृत्तिरूपत्वात् तस्याः। अविद्यानिवृत्तिपरत्वाच्च शास्त्रस्य न स्वप्रकाशं ब्रह्म शास्त्रस्यापि विषय इति व्यक्तमधस्तात्॥

### मेयत्वनिष्कर्षः, तस्य सत्तात्वनिरासश्च

अयमत्र निष्कर्षः—मेयत्वं यदि सत्ता, न तत्त्रैविध्यमुपपद्यते; प्रमाणसम्बन्धस्यैकरूपत्वात्। तथापि यदि वर्तमानप्रमाणयोगः सत्त्वम्, असत्त्वं च तद्विपर्ययः, तर्हि स्मृत्यादावसद्विषयत्वमापद्येत। यद्यपि स्मर्यमाणे विनाशः सम्भवति; तथापि न स नियतः। सम्भवत्यपि विनाशे न 'नास्ती'ति प्रत्ययस्तत्र॥

प्रमाणयोग्यतामात्रं सत्त्वम्, तद्विपर्ययोऽसत्त्वमिति तु प्रमितनष्टघटस्यापि मधुधारणादिक्रियाशक्त्यापत्त्या न सम्भवति, प्रमितेऽर्थे पुनर्जिज्ञासानुपपत्तिश्च दूषणान्तरम्॥

### प्रमेयत्वस्य सत्तारूपत्वनिरासः, सत्तादाम्येनैव सत्प्रतीतिः, न तु प्रमाणविषयत्वादिरूपानेकसत्ताविशिष्टप्रतीतिः

अतो न मेयत्वयोग्यतामात्रं सत्त्वम्; स्मृत्यादौ व्यभिचारात्। किञ्च प्रमाणयोग्यत्वं सत्त्वमर्थगतः स्वभावविशेषः, यत् क्वचित् नश्यति, क्वचित्तु तिष्ठतीति पर्यवसानात्। न प्रमाण-तदभावोपाधी सत्त्वासत्त्वे इति पक्षः परित्यक्त एव। न हि नीलज्ञानोपाधिर्नीलशब्दः; प्रमाणसंशयस्य तत्राभावात्, किन्तु नीलोपाधिरेव। अतो भिन्नस्वभावा अर्था एव प्रमाणयोग्याः, सच्छब्दवाच्याश्चेति वक्तव्यम्। न चेदमत्र साध्यम्; प्रमेयत्वासत्त्वस्यैवात्र सापेक्षत्वसाधनार्थं साध्यत्वात्॥

### 'सन्' इत्येकाकारप्रतीतिनिर्वाहः सत्तादात्म्यमात्रेण

तत्र च यदि प्रमाणभेदेन सत्ताऽप्यनेका स्यात्, तर्हि 'सन्नि'त्यनुगतैक-सत्त्वानुभवो बाध्येत। तत्रैकशब्दो हि भिन्नेष्वभिन्नप्रतीतिनिमित्तं विशेषण-विधया, उपलक्षणविधया वा प्रवर्तते। न चानन्तार्थस्वभावेषु साधारणो धर्मः कश्चन सम्भवति, विना सामान्यशब्दम्। द्रव्यत्वादिकं तु द्रव्य-गुण-कर्मणामेव साधारणम्, न तु सामान्य-विशेषाभावादीनाम्। अतोऽनन्तार्थस्वभावेषु 'सन्' इति प्रतीतिनिमित्तं सर्वानुगतिप्रयोजकं सर्वोपादानातिरिक्तं न किमपि भवितु-मर्हति, यथा 'मृदि'ति घट-शरावाद्यनुगतप्रतीतिनिमित्तं मृत्स्वरूपम्। अतः सर्वानुगतप्रतीतिप्रयोजका न द्रव्यत्वादयः परिमिता अनेकधर्मा अत्र साधारण-शब्दाः। न हि ते नापरिमितार्थेषु सन्ति, इत्येकप्रतीतिर्न भवितुमर्हति॥

न चाक्षादिशब्द इव 'सन्नि'ति शब्दो भिन्नप्रवृत्तिनिमित्तकः। तथा सति हि को वाऽक्षपदार्थो विवक्षित इतिवत् को वा सन्नत्र विवक्षित इति संशयः स्यात्, न विशेषप्रतीतिः—सन् घटः, सन् पट इति। अतो द्रव्य-गुणादिसा-धारणं निमित्तं 'सन्' पदार्थ एकः 'सन्' प्रतीतिविषयो द्रव्यत्वाद्यतिरिक्त एव कश्चन सत्पदार्थः। तत्र 'सन्नि'ति साधारणेऽपि शब्दे द्रव्यं वा गुणो वा कर्म वेति संशयस्तु न लौकिकानाम्। लौकिकास्तु तत्र भिन्नमेव रूपं निमित्तं प्रतिपद्यन्ते॥

### सत्तादात्म्यातिरिक्तार्थक्रियाकारित्वादिकं न मिथ्यात्वविरोधि

इदमेव प्रकरणं मूलीकृत्याद्वैतसिद्धौ मिथ्यात्वविरोधि सत्त्वं प्रमाविषय-त्वादि प्रत्यक्षयोग्यं न निर्वक्तुं शक्यत इति निर्णीयते। अभावोऽपीह प्रमेयः, इति न सत्तासामान्यादिकं सत्त्वं प्रत्यक्षविषयः। एतावताऽस्त्यर्थनिष्ठत्वेनापि क्रियानिष्ठत्वमिति वादोऽत्र निरस्तः॥

### वाक्यानां क्रियाबोधकत्वेनैव प्रामाण्यनियमः

न च क्रियासंसर्गं विना वाक्यमबोधकम्; "राज्ञोऽयं पुरुषः" "नद्यास्तीरे पञ्च फलानि" इत्यादिवाक्यानां भूतार्थमात्रपराणामपि प्रमाणानां दर्शनात्। तत्र हि पुरुषादीनां राजसम्बन्धमात्रं प्रतीयते, न तु क्रियाऽपि॥

### प्रतिपत्तिपरत्वेऽपि वाक्यजन्यज्ञानस्य प्रतिपत्तेरपि साक्षात्काराभ्यासरूपत्वात्मना नाज्ञाननिवर्तकत्वायोगः

तत्र प्रतिपत्तिक्रियाविधिना क्रियावत्तयापि प्रतिपत्तेरेव क्रियायाः शब्दमात्रात् सिद्धत्वात्, उक्तविधप्रतिपत्तिव्यतिरिक्तपुरुषप्रयत्नसाध्यक्रियाया अबोधनाच्च न वाक्यार्थज्ञानातिरिक्तं ज्ञानमज्ञाननिवर्तकं वेदान्तार्थ इत्यत्र नाननुकूलम् ॥

### क्रियापरत्वेऽपि न नियोगपरत्वनियमः, इति प्रवृत्तिहेतुरेवार्थो न वेदार्थः

तत्र क्रियापराणां प्रामाण्यमपि न नियोगाख्यक्रियापरत्वेनैव, किन्तु जन्यक्रियासम्बन्धेनापि, इति तेन न्यायेन प्रतिपत्तिपरत्वेन प्रामाण्यमदुष्टम् । अतो जगत्कारणत्वादिना ब्रह्मबोधकान्यनियोगपराणि प्रमाणानि, एवं 'नेति नेति' विधया प्रवर्तमानानि वाक्यानि, इति वेदान्तानामध्यारोपापवाद–नयेन ब्रह्मणि प्रामाण्यं न सुवारम् । सर्वथा तु प्रवृत्तिहेतुरेवार्थो यदि वेदे लिङर्थः, तर्हि श्रेयःसाधनत्वमेव तदर्थो मन्यताम्; तज्ज्ञानस्यापि प्रवृत्ति-हेतुत्वाद् लोक-वेदयोः, इति कार्यपराणामेव प्रामाण्यमिति रिक्तमिदं वचनम् ॥

इदमत्र विचार्यम्—यन्नियोगपरत्वनियमे वाक्यानां तत्र नियोगस्य प्रमेयं किम्? यदि यागः, तर्हि स यजतिपदार्थः, न नियोगपदार्थः । न च प्रमाणान्तरगोचरः संसर्गो नियोगार्थः; तस्याविधिसाधारणस्यानियोगार्थ-त्वात् । फलसाधनसामर्थ्यं तु कामिनो नियोगेऽकामोपाये धात्वर्थे न कल्पते, इति न नियोगस्य प्रमेयम् । अनन्तरफलादर्शनं हि नियोगेऽपि समानम्, इति न तदनुपपत्त्या तत्कल्पनम्, तदर्थता वा शब्दस्य । अतो न नियोग-निबन्धनः पदार्थसंसर्गः ॥

### सिद्धेऽपि वाक्यानां प्रामाण्ये सङ्गतिग्रहणादि

तत्र वाक्यार्थः संसर्गोऽभिहितान्वयदिशा पदाभिहितपदार्थानां पदार्था न्तरेण तात्पर्यवशाद् निर्णयः सिद्धार्थग्रहेऽपि समानः । अयं तु न्यायो लोकेऽपि । तदेवं सङ्गतिग्रहसम्भवात् सिद्धेऽप्यर्थे वेदान्तानां प्रामाण्याद् न कार्यार्थत्व-नियम इति व्यवस्थापितम् । अयमेवार्थोऽज्ञानसङ्गतित्वेन कार्यार्थत्वनियममुक्त-प्रकारमाशङ्क्य सिद्धान्ते निरस्यते ॥

### शास्त्रत्वेनाऽर्थवत्तया वेदान्तवाक्यानामप्रवर्तकाना-मप्रामाण्यशङ्कानुवादः तत्परिहारश्च

ततस्तु 'शास्त्रत्वेनार्थवत्तये'त्यंशः परीक्ष्य निरस्यते ब्रह्मसिद्धया, यस्यैवानुवादो भामत्यामपि। तत्र यदि वस्तुस्वरूपज्ञानमात्रे विना प्रवृत्तिम्, निवृत्तिं वाऽऽनर्थक्यम्, तर्हि प्रतिपत्तिविधावपि कथं सार्थक्यनिर्वाहः? तत्र प्रतिपत्तिविधिर्यदि 'एवमात्मा प्रतिपत्तव्यः' इत्येव, तर्हि तदापि स्वरूपज्ञानातिरिक्तं किं वाऽत्र विवक्ष्यते? येन नानर्थक्यं तदापि; स्वरूपमात्रनिष्ठत्वात्। तत्र यदि "विज्ञाय प्रज्ञां कुर्वीत" "स क्रतुं कुर्वीत" "आत्मेत्येवोपासीत" इत्यधिकारविध्यपेक्षितप्रज्ञोपासनादेर्वाक्यार्थज्ञानातिरिक्तस्य समर्पणेन सार्थक्यम्, एवमपि तेषां वाक्यानां स्वरूपनिष्ठत्वमपि वक्तव्यम्॥

### प्रथमप्रतिपत्तौ, द्वितीयप्रतिपत्तौ वा स्वरूपनिष्ठत्वमेव वाक्यानाम्, इति न नियोगपरता

तत्र नियोगपरत्वे यदि न स्वरूपनिष्ठता वाक्यानाम्, तर्हि प्रथमप्रतिपत्तेर्वाक्यार्थज्ञानस्य, द्वितीयप्रतिपत्तिवाक्यस्य च नियोगमात्रपरस्य न स्वरूपनिष्ठत्वमित्यापत्त्या प्रथमं वाक्यं वाक्यार्थज्ञानमात्रपर्यवसायि वितथम्; उभयोरनेकवाक्यता च। अत एकवाक्यतानिर्वाहार्थं नियोगानुप्रवेशिता तत्त्वप्रतिपत्तिविधेः। न हि तस्य स्वरूपनिष्ठताऽपि, इति कथं नियोगपरत्वेऽपि न स्वरूपनिष्ठता? सर्वथा तु तत्त्वप्रतिपत्तिर्नानर्था। सति चैवं विनाऽपि विधिं तत्त्वप्रतिपत्तिसिद्धया नियोगपरत्वं परित्यक्तमेव॥

### उत्पत्त्यधिकारविध्योरपि स्वरूपनिष्ठतैव, न नियोगमात्रपरत्वम्

तत्र "अग्निहोत्रं जुहोती"त्युत्पत्तिविधिः, "अग्निहोत्रं जुहुयात् स्वर्गकामः" इत्यधिकारविधिरिति व्यवस्थावदत्रापि विधिद्वयसार्थक्यमिति न युक्तम्; उत्पत्तिविधावपि सामान्यतः फलसम्बन्धावगमेनाधिकारविधेः फलविशेषसम्बन्धमात्रज्ञापनैकप्रयोजनत्वेन चोभयत्र नियोग-फलोभयप्रवेशेन, विना स्वरूपनिष्ठतामधिकारविधिः, उत्पत्तिविधिर्वा न संभवति। तत्र यस्याधिकारसम्बन्ध उपासनाविषयस्याऽऽत्मतत्त्वस्य, तस्याक्रियात्मत्वाद् न तद् विधिविषयः। यत्तु विधिविषयस्तत्त्वज्ञानम्, तस्य नाधिकारसम्बन्धः॥

### द्वितीयप्रतिपत्त्यतिरिक्तध्यानोपासनादिकं न वेदान्तवाक्यविषयः

अतो वाक्यार्थज्ञानातिरिक्तध्यानोपासनादिशब्दवाच्या प्रतिपत्तिर्न वेदान्तवाक्यविषयः। इदं सर्वं ब्रह्मसिद्ध्युक्तमसिद्धवत् कृत्वैव श्रीभाष्यादि ब्रह्मज्ञानमौपनिषदमुपासनादिरूपम्, न वाक्यार्थज्ञानमात्रमिति मन्यते ॥

### श्रीभाष्यादिमते नियोगपरत्वम्, अत इव ब्रह्मासत्त्वमेव वाग्धेनुत्वादिवत्

अतः श्रीभाष्यकारैः प्रभाकरसिद्धान्त एव स्वीकर्तव्यः, यत्र प्रतिपत्तिविधिविषयमात्मतत्त्वं वाग्धेनुत्वादिवदवस्तु, कल्पनामात्रविजृम्भितमिति मन्यते, वस्तुमात्रनिष्ठं ज्ञानमिति वा। तत्र द्वितीये न वाक्यार्थज्ञानादन्या काऽपि प्रतिपत्तिर्वेदान्तानामर्थः। आद्ये तु नात्मनो वस्तुता ; अतात्पर्यविषयत्वात् तस्य, उभयपरत्वे तु वाक्यभेदः। सति चैवं प्रतिपत्तिविधिपरत्वं पूर्वपक्षयित्वा प्रतिपत्तिविधिपक्षस्यैव समर्थनं श्रीभाष्यकाराणां कथमुपपद्यते ?

### तृतीयप्रतिपत्तेरेव वेदान्तार्थत्वाद् न तस्या ध्यानोपासनादिशब्दबोध्यत्वम्

अतोऽगत्या तृतीया प्रतिपत्तिरेव वेदान्ततात्पर्यविषय इत्यूरीकर्तव्यम्। सा तु वाक्यार्थज्ञानमेव, न ततोऽतिरिक्ता, सा च शब्दाद् लब्धात्मरूपा विगलितनिखिलविकल्पसाक्षात्काररूपा च, न तु सा शब्दादर्थं प्रतिपद्य तत्सन्तानवती ध्यानोपासनादिशब्दवाच्या। व्यक्तं चैतद् ब्रह्मसिद्धौ। (पृ. १५३-१२ १५५-११)

### तृतीयप्रतिपत्तेः साक्षात्काररूपाया मानसत्वम्, न तु शाब्दत्वम्

तृतीया प्रतिपत्तिरियं साक्षात्काररूपा श्रवणादिसहकृतनिदिध्यासननिबन्धना केवलं मानसी, न शाब्दीति ब्रह्मसिद्धिः, तदनुसारिणी भामती च, याभ्यां शाब्दापरोक्षवादो नोररीक्रियते। सर्वथा तु न "निदिध्यासीत" इत्यंशमात्रार्थेऽपि प्रतिपत्तिः श्रीभाष्यादिमत इव, यत्र निदिध्यासनमेव दर्शनसमानाकारज्ञानं मुख्यम्, 'द्रष्टव्यः' इत्यपि तस्यानुवादमात्रम्। परं तु शब्दादर्थं प्रतिपद्य ततस्तत्सन्तानवदुपासनादिशब्दवाच्यद्वितीयप्रतिपत्त्यभ्यासनिबन्धन-

पाटवेन तदधीनात्मलाभसाक्षात्कारस्तृतीयप्रकार एव विगलितनिखिलबन्धोऽखण्डाकारसाक्षात्कारः प्रतिपत्तिपदाभिधेय आन्तरप्रमाणजन्यप्रत्यागात्मतत्त्वात्मा वेदान्तार्थ इति तु हृदयम्। तेन चेदमवगम्यते—प्रथमा प्रतिपत्तिः श्रवणादिरूपा, द्वितीया निदिध्यासनपदवाच्या, तृतीया तु द्रष्टव्यपदार्थ इति, प्रतिपत्तेः प्रकारत्रयं ब्रह्मसिद्धिमत इति ॥

### श्रीभाष्यमताद्द्वैतमते प्रतिपत्तिरूपभेदः श्रोतव्यादिपदसार्थक्यं च

तत्र श्रीभाष्यसिद्धान्त एकैव प्रतिपत्तिः श्रोतव्यवाक्यतात्पर्यविषयः, तत्र प्रथमा श्रवण-मननरूपा, तृतीया च मुख्यनिदिध्यासनस्वरूपान्तर्गताऽङ्गत्वेन, अङ्गित्वेन वा स्वतन्त्रं न विवक्ष्यते, अद्वैतमते तु तिस्रोऽपि विधा अत्र विवक्षिताः स्वतन्त्राः, परं तु तृतीयाङ्गत्वेनान्ययोरुपयोगः। तत्रापि शाब्दापरोक्षवादे श्रवणमङ्गि, मनन-निदिध्यासने अङ्गे, मुख्यं फलं तु द्रष्टव्यपदविवक्षितो निर्विशेषात्मस्वरूपसाक्षात्कार इति विवेकः ॥

### साक्षात्कारस्याप्युपासनाप्रसंख्यानादिपदेनोपन्यासोपपत्तिः, तत्र सविशेषविषयत्व उपासनापदेन तन्निर्देशः, निर्विशेषविषयत्वे तु द्रष्टव्यादिपदेनोपन्यासः, तस्याः साक्षात्कारत्वं च

उपासनात्वाविशेषेऽपि 'आत्मेत्येवोपासीत' 'विज्ञाय प्रज्ञां कुर्वीत' 'स क्रतुं कुर्वीत' इत्यादौ सविशेषविषयत्व एवैश्वर्यादिफलकत्वम्, निर्विशेषविषयत्वे तु साक्षात्कारमात्रपर्यवसायीति विशेषात् साक्षात्कारातिरिक्तफलकत्वे तत्र विधिव्यापाराभावात्, तद्विषयपरमार्थस्वरूपमात्रपर्यवसानमिति विशेषोऽप्यत्रानुसन्धेयः। तत्र द्वितीयप्रतिपत्तिपर्यन्तमेव वेदान्तानां प्रवृत्तौ "द्रष्टव्यः" "श्रोतव्यः" "मन्तव्यः" इति द्रष्टव्यादिपदवैयर्थ्यम्। तृतीयप्रतिपत्तिपर्यवसाने तु साधनसमर्पकतया पदत्रयं सार्थकम्, फलपरतया तु द्रष्टव्यपदमित्यपि बोद्धव्यम् ॥

### श्रीभाष्यकाराणां मुख्यलक्ष्यं ब्रह्मसिद्धिनिरसनम्

इदमनेन प्रकरणेन प्रतीयते—यत् श्रीभाष्यकाराणां मुख्यं लक्ष्यं ब्रह्मसिद्धिप्रकरणनिरसनमेव, अनुषङ्गतो विवरणादिसिद्धान्तानामपि निरासस्तु नापह्नवमर्हति ॥

**मण्डन-श्रीभाष्ययोः प्रतिपत्तिपरत्वेऽविवादः, किन्तु तत्स्वरूप एव**

अत्र प्रतिपत्तिविधिविषयतयैव मण्डनोऽपि ब्रह्मणः शास्त्रगम्यत्वमभिप्रैति, परंतु प्रथमा, द्वितीया, तृतीया वा ब्रह्मणि प्रतिपत्तिर्न विधेया, किन्तु प्रमाणतन्त्रा विगलितसकलबन्धाखण्डब्रह्मविषया च। या न चोदनातन्त्रा सगुणोपासनेव ॥

**श्रीभाष्यमते चोदनातन्त्रा प्रतिपत्तिः, मण्डनमते तु सा प्रमाणतन्त्रा ब्रह्मसिद्धिदृष्ट्या प्रतिपत्तित्रयमपि प्रमाणतन्त्रमिति श्रोतव्यादि-वाक्येऽविधिपक्षः**

अतः प्रतिपत्तिविधिशेषतया ब्रह्मणः समर्पणे न तस्य विप्रतिपत्तिः, परंतु तत्र विधिपदेनाज्ञातज्ञापनमात्रं विवक्ष्यते। तच्च क्रियात्मकेन वस्तुतन्त्रेणापि ज्ञानेन निर्वोढुं पार्यते ॥

"अत एव तिस्रश्च प्रतिपत्तयो ब्रह्मणि—प्रथमा शब्दात्, अन्या शब्दात् प्रतिपद्य तत्सन्तानवती ध्यान-भावनोपासनादिशब्दवाच्या, इतरा ततो लब्धो-त्पत्तिर्विगलितनिखिलविकल्पा साक्षात्काररूपेति (पृ. ७४-१०) विध्यतन्त्रां ब्रह्मणि प्रतिपत्तिं मण्डनस्त्रेधा विभजति। अतो निर्विशेषस्याप्युपासनाविषयत्वे न विवादः, किन्तु सा ब्रह्मणि विगलितनिखिलविकल्पा न चोदनातन्त्रा, किन्तु वस्तुतन्त्रेत्येव मण्डनाशयः ॥

**ब्रह्मसिद्धिमतस्यात्र भाष्यमूलत्वम्**

अयं प्रकारविशेषो मण्डनस्य नासाम्प्रदायिकः, न वोद्भाष्यः। अत एव (२२-१३) 'तस्माद् ज्ञानमेकं मुक्त्वा क्रियाया गन्धमात्रस्याप्यनुप्रवेश इह नास्ती'ति समन्वयसूत्रे भाष्यम्। अत्र ज्ञानमेकं मुक्त्वा क्रियाया इति वर्णनाद् ज्ञानमपि क्रियेति भगवत्पादानामाशयो वक्तव्यः ॥

अत एवोपरितनं भाष्यम्—"ननु ज्ञानं नाम मानसी क्रिये"ति शङ्कायां "न; वैलक्षण्यात्; क्रिया हि नाम सा, यत्र वस्तुस्वरूपनिरपेक्षैव चोद्यते, पुरुष-व्यापाराधीना चे"ति पुरुषतन्त्रक्रियात्वमेव ज्ञानस्य निरस्यते, न तु क्रियात्व-मपि। अत एव तस्य प्रकरणस्योपसंहारः—"तत्रैवं सति यथाभूतब्रह्मात्मविषयं ज्ञानं न चोदनातन्त्रम्, किन्तु वस्तुतन्त्रमेव" इति। "ज्ञानमेवैतत्, न क्रिये'ति परामर्शोऽपि 'ज्ञानं तु प्रमाणजन्यं केवलं वस्तुतन्त्रमेव, तद् न

चोदनातन्त्रम्, नापि पुरुषतन्त्रमि'त्युपक्रमवशात् वस्तुतन्त्रक्रियात्वम्, चोदनातन्त्रत्वं वा ज्ञानस्य निराकरोति, न तु क्रियात्वमेव। विशदश्चायमर्थः— "अयमर्थः" इत्यारभ्य भामत्यां विवेचितः। अयं च प्रकारविशेषो ज्ञानस्य ब्रह्मसिद्धौ नियोगकाण्डोपसंहारे 'स क्रतुं कुर्वीत' 'विज्ञाय प्रज्ञां कुर्वीते'त्यादीनां विषयविवेकद्वारा विशदीक्रियते ॥

### ब्रह्मसिद्धि-नैष्कर्म्यसिद्धि-वार्तिकानामविरोधः श्रवणादिविषये

एवमुपसंहृते—केचित् स्वसम्प्रदायबलावष्टम्भादाहुः—"यदेतद् वेदान्तवाक्यादहं ब्रह्मेति ज्ञानं समुत्पद्यते, तद् न स्वोत्पत्तिमात्रेणाज्ञानं निरस्यति, किं तर्हि ? अहन्यहनि द्राघीयसा कालेनोपासीनस्य सतो भावनोपचयाद् निःशेषमज्ञानमपगच्छती"ति नैष्कर्म्यसिद्धिः ॥

"अन्ये तु पण्डितम्मन्या सम्प्रदायानुसारतः ।
विज्ञायेति वचः श्रौतमिदं व्याचक्षतेऽन्यथा ।
तत्त्वमस्यादिवाक्योत्थविज्ञानेन यथोदितम् ॥" (बृ. वा. श्लो: ७९६)

विज्ञाय वस्त्वसंसर्गिप्रज्ञां कुर्वीत यत्नतः ।"
इति बृहदारण्यकसुरेश्वरवार्तिकं च (श्लो. ७११)।

"जीवन्मुक्तिगतो यदाह भगवान् सत्सम्प्रदायप्रभु-
र्जीवाज्ञानवस्तदीदृगुचितं पूर्वापरालोचनात् ।
अन्यत्रापि तथा बहुश्रुतवचः पूर्वापरालोचनात्

नेतव्यं परिहृत्य मण्डनवचस्तद्ध्यन्यथा प्रस्थितम् ॥"
इति (पृ० ५५५) संक्षेपशारीरकमिव—मण्डनोऽपि साम्प्रदायिकमेव प्रस्थानमनुचकार, सोऽपीह भाष्यानुसार्येवेति—गमयति। अत एव विश्ववेदस्य संक्षेपशारीरकव्याख्यायाम्—'मण्डनमिश्रस्य तु प्रस्थानान्तरत्वात् तदीयं वचो यथाश्रुतमेवास्तु", वेदानन्दव्याख्यायाम्—"अयमेव न्यायो वार्तिकादिषु नेयो परिहृत्य मण्डनवचः ; तस्यान्यथा प्रस्थितत्वात्" इति मण्डनस्यापि समादरणीयत्वमेव विवेचितम् ॥

तत्र 'सत्सम्प्रदायप्रभुरि'ति वार्तिकस्य सत्सम्प्रदायानुसारित्वोक्ति-

स्तत्रैव प्रस्थाने सर्वज्ञात्ममुनेर्भक्त्यतिशयनिबन्धनैव । तत्र वार्तिकं समन्वयसूत्रगतश्रवणादिविधिपक्षमपि संगृह्णानं ज्ञानस्यापि क्रियात्वमेव, परन्त्वविधितन्त्रत्वपक्षं स्वीकरोतीति वक्तव्यम्, इति "विज्ञाय प्रज्ञां कुर्वीत" इति मन्त्रविवरणं मण्डनाभिमतं न निराचष्टे ॥

### मण्डन-सुरेश्वरयोरैक्यम्, न मण्डन उद्भाष्यं किमपि वदति

तत्राविद्यास्तमयमोक्षतावादोऽपि पूर्वोक्तविधया मण्डन-सुरेश्वरयोरेक एव, किं बहुना ?

"अविद्यास्तमयो मोक्षः सा संसार उदाहृतः ।"

इति ब्रह्मसिद्धिः—

"अविद्यास्तमयो मोक्षः सा च बन्ध उदाहृतः ।"

इति तु वार्तिकम् । तत्र ब्रह्मसिद्धिः—"तत्राहुरि"ति प्रस्तुत्य—

'अविद्यास्तमयो मोक्षः सा संसार उदाहृतः ।'

इति वाक्यं संगृह्णाना वार्तिकेनाविरोधं स्वप्रक्षस्याभिप्रैति । सति चैवं सिद्धान्तैक्ये, तद्भेदे वा मण्डन-सुरेश्वरयोरैक्यानैक्यपक्षो बहु विमर्शनमर्हति । साम्प्रतं तु मण्डनो न किमप्युद्भाष्यं निबध्नाति, न वा तदीयसिद्धान्तोऽसाम्प्रदायिकः ; तथापि कुत्रचनोदाहरणविषये भाष्यं नानुसरतीत्येतावन्मात्रं तु दुरपह्नवम् । कुत्रचनाद्वैतसिद्धान्तो भगवत्पादानामिव मण्डनस्यापि प्राचीनं साम्प्रदायिकं च प्रस्थानभेदमवलम्ब्यैवेत्यपि न सुवारम् ॥

### भाष्यमिव ब्रह्मसिद्धिरपि प्राचीन-सम्प्रदायमेवाऽनुसरति

भाष्यकारोऽपि प्राचीनमेव सम्प्रदायं भाष्येषु भाषते, तथापि कुत्रचनोदास्ते, मण्डनस्तु तमप्युद्बोधयतीत्येव वक्तव्यम् ॥

### शाब्दपरोक्षापरोक्षवाद-जीवाश्रय-ब्रह्माश्रयाज्ञानवादानां भाष्यारूढत्वम्

तत्र शाब्दापरोक्षवाद इव तत्परोक्षवादोऽपि भगवत्पादानां समादरमर्हति । अत एव सिद्धान्तलेशसंग्रहे पक्षद्वयमपि संगृहीतम् । जीवाश्रयाज्ञानवादोऽपि

भगवत्पादानां सम्मत एव। अत एव "तदधीनत्वादर्थवत्(१-४-३५)इति ब्रह्मसूत्रे—"यदा जीवो महान्, तदाऽप्यव्यक्ताधीनत्वाज्जीवभावस्य 'महतः परमव्यक्तमि'त्युक्तम्। अविद्या ह्यव्यक्तम्। अविद्यावत्त्वेनैव जीवस्य सर्वः संव्यवहारः सन्ततो वर्तते" इति भगवत्पादानां भाष्यम्। प्रकृतः ज्ञानोपासनयोः स्वरूपभेदाभेदप्रकारोऽपि भाष्यरूढ एव। तत्र "विज्ञाय प्रज्ञां कुर्वीत" इत्यत्र शब्दजन्यं परोक्षज्ञानमहन्यहनि सन्तत्यमानं भावनापाटवात् साक्षात्काररूपमापद्यमानमेव मोक्षसाधनम्, अज्ञाननिवर्तकं वेत्यत्र मोक्षजनकत्वं साक्षात्कारस्यैवेत्यत्र च न विप्रतिपत्तिः। साक्षात्कारसाधनं तु साक्षाच्छब्दो वा शब्दजन्यं ज्ञानं वाऽभ्यस्यमानमित्येव विप्रतिपन्नम्, फलभेदस्तु तत्र न कोऽपि ॥

तत्र जीवन्मुक्त्यनङ्गीकारपक्षे शाब्दपरोक्षवादः, तदङ्गीकारे तु तदापरोक्ष्यवाद इति तु निष्कर्षः। ब्रह्मसिद्धिर्हि पक्षद्वयमपि संगृह्णाना न शाब्दापरोक्षवादमेकान्तेन तिरस्कुरुते ॥

तत्र—"अपि संराधने सूत्रे शास्त्रार्थज्ञानजा प्रमा शास्त्रदृष्टिर्मता" इति भामत्याशयोल्लेखोऽपि कल्पतरोः शब्दपरोक्षवादे सत्यं समादरातिशयमाविष्करोति, तच्चु प्रस्थानभेदमात्रतया। तत्र शाब्दापरोक्षवादे मनन-मिदिध्यासनयोः सहकारित्वम्, तत्परोक्षसंवादे तु शास्त्रार्थज्ञानस्य द्वारत्वम्, ध्यानस्याङ्गित्वमिति विशेषः। तत्र त्रीण्यपि ज्ञानानि न पुरुषतन्त्राणि विधितन्त्राणि वा, तेषां निष्प्रपञ्चब्रह्मविषयत्वमिति च। वार्तिकं त्वत्र पक्षद्वयमपि समाद्रियते।[1]मोक्षसाधने साक्षात्कारे पुरुषतन्त्रत्वनिरास एव पक्षद्वयस्यापि तात्पर्यम् ॥

तत्र शाब्दज्ञानस्य प्रथमस्यानन्तरमानिदिध्यासनावस्थमात्मतत्त्वं न तथा विशदम्, अज्ञाननिवर्तनक्षमं वा भवति; तृतीयप्रकारस्यैव हि तत् कृत्यम्, तत्र द्वितीयबोधावस्थायां प्रमातृ-प्रमेयद्वयावगाहः। तृतीये तु न तदवगाह इति वस्तुस्थितिः, अन्यथा मननादिविधिवैयर्थ्यं दुष्परिहरम् ॥

### मननादीनां साक्षात्कारार्थत्वेन सार्थक्यम्

तत्र समन्वयसूत्रान्ते भाष्यम्—'अवगत्यर्थत्वान्मनन-निदिध्यासनयोः'। यदि ह्यवगतं ब्रह्मान्यत्र विनियोज्येत, भवेत् तदा विधिशेषत्वम्, न तु तदस्ति; मनन-निदिध्यासनयोरपि श्रवणावगत्यर्थत्वात् इति मनन-निदिध्यासनयोरवगत्यर्थत्ववर्णनेन हि निदिध्यासनस्याप्यवगत्यर्थत्वं भाष्यं भाषते, न तु शब्दस्यैव, इति

1. विस्तरस्त्वस्य (ख) परिशिष्टे ।

शाब्दपरोक्षतावादोऽपि भाष्यारूढः। तत्र शाब्दं प्रथमम्, द्वितीयं ध्यानोपासनादिपदवाच्यम्, तृतीयं साक्षात्कारात्मकं च। सर्वं निष्प्रपञ्चतत्त्वविषयकमेव, न संसृष्टविषयं विधेयमुपासनमिव। तत्रोपासनं संसृष्टविषयं विधेयम्, इति शाब्दमपि तथा, प्रकृते तूभयमपि निष्प्रपञ्चसंसृष्टविषयमिति विशेषः। तत्र श्रवण-निदिध्यासनयोरङ्गाङ्गिभावे विप्रतिपत्तिस्त्वकिञ्चित्करी ॥

## विधिरुपायांशे, नोपेयांशे

तत्र विधानमुपायांश एव, न तूपेयांशे, इत्युपायविधेयत्वोपाधिकं गौणमेव श्रवणादीनां विधानम्। अत एव तव्यप्रत्ययः। शान्त-दान्तादिलक्षणोऽधिकारी शमादिसाधनसम्पन्नो विशुद्धान्तःकरणश्च प्रमाणमात्रेण, विना पुरुषव्यापारमलौकिकमात्मतत्त्वं जानाति। तत्र यद्यपि सावच्छेदमेवात्मतत्त्वमादौ शब्देनावगम्यते; तथापि वस्तुतो द्वैतलेशसंस्पर्शविकलात्मतत्त्वबोधस्तु तदुपाध्यवच्छेदविरहात् स्वरूपमात्रेणावतिष्ठते, सावच्छेदस्त्वन्यथा प्रकाशते। तथाच श्रुतिः—"सत्यं ज्ञानमनन्तं ब्रह्मे"ति। तद्धीष्टमेव, न तत्साधनम्, इति न विधेर्विषयः। अत एव भाष्यम्—

"अवगतिपर्यन्तं च ज्ञानं सन्वाच्याया इच्छायाः कर्मे"ति। साध्यविषय एव विधेर्व्यापारः, नतु फले, इति पूर्वमीमांसायाः षष्ठाद्यमधिकरणम्। शाब्दज्ञानं तु स्वफलरूपम्, इति कथं तत्र विधेर्व्यापारः?

## ज्ञानस्याविधेयत्वम्

अध्यवसायो हि फलं ज्ञानमात्मम्, न तु प्रवृत्तिः, इति तत्साधनमेव मृग्यते, फलं तु साधनमात्राधीनात्मलाभम्, न स्वात्मलाभार्थं ततोऽन्यदपेक्षते। अतो यदि ज्ञानमपि फलसाधनमेव, न तु फलम्, तर्हि सविशेषोपासनादि कार्यं विधीयताम्, यत्र शब्दस्य ज्ञानविधौ न व्यापारः; विधेरशब्दार्थत्वात् ॥

विधिर्हि नियोगाख्यो नियोगविषयमेव नियोज्यं प्रति विधेयतया ज्ञापयति, न तु वाक्यजन्यज्ञानमपि। नियोगो हि कार्यम्, अपूर्वं वा, न तु तज्ज्ञानम्, अतो नात्र ज्ञानं विधेयम्; इष्टसाधनत्वाभावात्। न च मोक्षः शाब्दज्ञानस्य फलम्; ज्ञानस्यैवावगतिपर्यन्तस्य मोक्षत्वात्। 'विद्ययाऽमृतमश्नुते' 'विद्यया तदारोहन्ति' इत्यादिवाक्यानि तु न विद्यासाध्यमपरं मोक्षमुपदिशन्ति; साध्यत्वे मोक्षस्यान्तवत्त्वापत्तेः। वाक्यं हि मुक्तस्य पुनरावृत्तिं निषेधत्

मोक्षं नित्यमवगमयति। न चालौकिको मोक्षस्तर्कगम्यः; शब्दैकगम्यत्वात् तस्य। शब्दादेव हि तत्त्वव्यवस्था॥

### मोक्षस्वरूपं मण्डन-सुरेश्वराभिमतमेकमेव

अत्रावसरप्राप्तं मोक्षस्वरूपविमर्शनं नाम। तत्राद्वितीयबुद्ध्युपलक्षित आत्मरूपो बोधात्मकोऽज्ञाननिवृत्तिर्मोक्षः, य एव वार्तिकेन—

"निवृत्तिरात्मा मोहस्य ज्ञातत्वेनोपलक्षितः।"

इति निष्कृष्यते। न चायं मोक्षोऽविद्यास्तमयोऽभावरूपः; न वा तद्वान् मुक्तात्मा, परमात्मा वा, येन भावाद्वैतं ब्रह्मसिद्ध्यर्थः स्यात्, इति विवेचित-मधस्तात्। अत एव विद्यैवाविद्यास्तमय इत्युच्यते। निष्कृष्टं च पूर्वमज्ञान-निवृत्तिर्भावरूपा विद्यैवेति। अतः शान्तत्वं वृत्त्युपलक्षितत्वमित्यभिप्रायः। तेन च साध्यत्वं वृत्तेः दग्धेन्धनाग्निवत् स्वयमेवोपशान्तायाः श्रवणाद्यधीनात्मलाभ-मात्रेण। अविद्यास्तमयोऽपि तत्कालिकत्वात्, तद्रूपत्वाद्वा शास्त्रसाध्योऽप्यत एव॥

### मोक्षो न दिव्यशरीरप्राप्त्या, न वा शरीर-प्रागभावपरिपालनेन, नापि वा चैत्रादिप्राप्तिवद् ब्रह्मप्राप्त्या, किन्तु स्वरूपाविर्भावेन

तदुक्तम्:—"अविद्यानिवृत्तिपरत्वाच्छास्त्रस्ये'ति"। अत्र "अशरीरं वाव सन्तं प्रियाप्रिये न स्पृशतः" इति जीवन्मुक्त्यङ्गीकारपक्षे, सत्यपि शरीरे तत्र तदात्मत्वबुद्ध्यभावेन। अन्यत्रापि देहानात्मत्वभावनापाटवेन शरीरदुःखेनादुः खित्वाशयेन—"कर्मण्यकर्म यः पश्येदकर्मणि च कर्म यः" इति न्यायेन, न त्वनागतशरीरानुत्पादमात्रेण, शरीरादिप्रागभावपरिपालनमात्रेण वा॥

तत्र प्रागभावो न साध्यः, इति तस्य न मोक्षत्वम्, नापि ब्रह्मप्राप्तिश्चैत्र-ग्रामयोरिव; सर्वगतत्वादात्मनः, मुक्त्यवस्थायां भेदाभावेन वा। 'तेऽर्चिष-मेवाभिसंभवन्ति अर्चिषोऽह्नः" "मधुनि नानारसानाम्" समुद्रे च नदीनां प्राप्तिरिवाविभागोऽपि; भेदगर्भत्वात्॥

अत एव "तथा विद्वान् पुण्य-पापे विधूय निरञ्जनः परमं साम्यमुपैति" इति श्रुत्या कार्यस्य कारणभावापत्तिर्न मुक्तिः; कार्यस्य सर्वदा कारणरूपत्वेना-

साध्यत्वात्। तत्र कार्यस्य कारणात्मता यदि कार्यनाशः, तर्हि उच्छेदात्मता मुक्तावात्मन आपद्येत। न चात्मोच्छेदः कस्यापीष्टः। अक्षरत्वादि'ति ब्रह्म-काण्डे मुक्तात्मनः परमात्मनो वाऽक्षरत्वोपवर्णनेन प्रतिषिद्धश्चायं पक्षः ॥

अत एव तद्रूपपरिणामो न मुक्तिः; अनन्यत्वात्। चैतन्यस्य ब्रह्म-रूपस्याविशेषत्वात्। विज्ञानात्मनः शोक-मोहाद्यभाव एव तद्रूपपरिणाम इति तु न युक्तम्; शोक-मोहादीनामात्मस्वभावत्वेऽनुच्छेद्यत्वात्। अथ गुणाः, तर्हि तेषां क्षणिकत्वे स्वत एवोच्छेदाद् न साधनापेक्षा, न वाऽऽगामिनामनुपपत्तये; प्रागभावस्यासाध्यत्वादित्यनुपदमेवोक्तम् ॥

ऐश्वर्यविशेषस्तु मुक्तात्मनां परमात्मनो भेदेऽनेकेश्वरप्रसङ्गात् नोप-पद्यते। तत्र ब्रह्मणः सममैश्वर्यं त्वनुपपन्नम्। जगद्व्यापारवर्जमैश्वर्ये तु न ब्रह्मरूपापत्तिः, 'आप्नोति स्वाराज्यमि'ति श्रुतिविरोधश्च, इत्यतोऽपि न समत्वपक्ष उपपद्यते; अन्यथाऽनेकेश्वरवादापत्तिः ॥

तत्र यद्येकः सर्वाधिपतिः प्रशासिता च, तर्हि परः किं कुर्वन्नीशः स्यात्? विरोधोऽपि सर्वेषामेकमतित्वाभावात्; भिन्नमतित्वे च परिषत्कार्यवत् न कार्यसिद्धिः। न च पर्यायेणैश्वर्यम्; अन्तवत्त्वात्। न च विरोधे जगत्सर्ग-निर्वाहः। अतः स्फटिकस्येव रागाद्यपकर्षणेनाविद्यारूपोपाधिनिवृत्त्या स्वस्व-रूपेणावस्थानमेव मोक्षः, य एव—"विद्यैव चाद्वया शान्ता तदस्तमय उच्यते।" इत्युपक्षिप्यते ॥

### अज्ञाननिवृत्त्या स्वरूपाविर्भावे दृष्टान्ताः

अत्र निदर्शनानि—मलापगमे शुक्लमेव सद् वस्तु शुक्लं जातमित्युच्यते: उपचारात्, तेनैव न्यायेन मोक्षसाध्यत्वस्योपचारमात्रम्, न तु साध्यो मोक्षः, इति नानित्यत्वं मोक्षस्योक्तलक्षणाविद्यास्तमयरूपत्वे। तथा च श्रुतिः—"ब्रह्मैव सन् ब्रह्माप्येति," "परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते" इति। साध्यत्वं हि तत्राविद्यास्तमयस्य तत्प्रयोजकश्रवणाद्यधीनाया वृत्तेर्वा तदुपधान-निवृत्तिमात्रेणोपचारात् ॥

### उपहितमेव ब्रह्म कारणम्, मुक्तात्मस्वरूपं च

इदमेवाभिप्रेत्योपहितमेव जगत्कारणम्, उपहितमेव मुक्तात्मस्वरूपम्। तत्राऽऽद्येऽविद्योपाधिः, द्वितीये तद्विरोधिनी वृत्तिः। तत्र शास्त्रस्य विषयो वृत्त्यु-

पहितम्, मुक्तात्मा तु वृत्तेरप्यविद्याकार्यत्वात् तस्या अपि निवृत्तौ वृत्त्युपलक्षितत्वेन स्वप्रकाशाखण्डात्मरूपः ॥

### अविद्यानिवृत्तिः=कार्य-कारणाध्यासोभयनिवृत्तिः

तत्राविद्यानिवृत्तिर्न केवलं कार्याध्यासमात्रनिवृत्तिः, कारणाध्यासनिवृत्तिर्वा, किन्त्वनिर्वचनीयाविद्याद्वितयस्यापि निवृत्तिः। तेन च कारणाविद्यानिवृत्तावपि जीवन्मुक्तानां कार्याध्यासानुवृत्तिर्दग्धपटन्यायेन न सुखाय, दुःखाय वा; न वा कार्याध्यासमात्रनिवृत्तिः, येन पुनरपि बन्ध आपद्येत ॥

तेन चाहंममाद्यध्यासस्य बीजाङ्कुरन्यायेनानुवर्तमानस्यापि विद्योदये निवृत्तिरेव, न तु तदनन्तरमपि तेन न्यायेनानुवृत्तिः। अयमेव न्यायः शुक्तिरजतादिभ्रमस्थलेऽपि। इयान् विशेषः—तत्र कारणाविद्यामात्रेण भिन्नाभिन्नेन कार्याध्यासमात्रम्। अनादित्वं तु तत्र कार्याध्यासनिमित्तस्य तूलाज्ञानमात्रस्य, न तु कार्याध्यासस्यापि। अतो न तत्र बीजाङ्कुरन्यायः। अहमाद्यध्यासे तु स न्यायः। सत्यप्येवं तत्रैव विद्ययाऽज्ञाननिवृत्तिस्त्वनादित्वेऽपि भावस्यापि नान्तवत्त्वं विरुध्यते ॥

### ज्ञानाज्ञानयोर्निवर्त्य-निवर्तकभावस्तूभयत्र समानः, ज्ञानाज्ञानयोर्निवर्त्य-निवर्तकभावनिमित्तोपन्यासः

तत्र दृष्टान्ते शुक्तिज्ञानोत्पादादन्या न रजताज्ञाननिवृत्तिः, रजतनिवृत्तिर्वा नाविद्यानिवृत्तितोऽन्या विद्येति; तयोर्यौगपद्यात्, प्रयत्नानन्तरानपेक्षणाच्च। तथाच श्रुतयः' 'ब्रह्म वेद ब्रह्मैव भवती''त्यादयः। तत्र क्वचित् पौर्वापर्यम्नानं तु समकालत्वेऽपि 'मुखं व्यादाय स्वपिती'तिवदवधार्यम् ॥

### मण्डनस्य भावाद्वैतातात्पर्येऽपरः प्रकारः

निष्कर्षस्तु—विद्याऽविद्यानिवृत्त्योरेकतैव, इत्यतोऽपि हेतोर्न मण्डनो भावाद्वैतवादी; अविद्यानिवृत्तेरपि भावरूपतयैव मुक्तित्वात्। एकत्वेऽपि तयोः साध्य-साधकभावस्त्वेकस्यापि वस्तुनो 'घटो नश्यति' 'कपालानि जायन्ते' इतिवद् भावाभावरूपेणोपपद्यते। सति चैवं प्रागविभागं मार्गादिश्रुतीनां गतिस्तु विषयभेदादुत्पद्यते ॥

### मार्गश्रुतीनां सविशेषब्रह्मविषयत्वम्

तत्र मार्गश्रुतयो न निरुपाधिब्रह्मविद्याविषयाः, किन्तु सविशेष-

चोदनातन्त्रब्रह्मोपासनाविषयाः, निरुपाधिब्रह्मविद्याविषयास्तु "ब्रह्म वेद ब्रह्मैव भवती"त्यादिश्रुतयः, "न तस्य प्राणा उत्क्रामन्ती"त्यादयश्च। तत्र सोपाधिब्रह्मविद्याफलमुत्क्रमणसाध्या ब्रह्मलोकावाप्तिः, यत्र न ब्रह्मभावः फलम्। कार्यब्रह्मलोकस्वरूपं तु "अरश्च वै ण्यश्चार्णवौ ब्रह्मलोके तृतीयस्यामृचो दिवि तदैरम्मदीयं सरस्तदश्वत्थः सोमसवनस्तदपराजिता पूर्ब्रह्मणः प्रभुत्वमितं हैरण्यं वेश्मे"ति बृहदारण्यकवाक्यं निरूपयतिं। स च ब्रह्मलोकोऽब्रह्मविदामप्यर्चिराद्युपासकानामिति त्वन्यदेतत् ॥

तत्र प्राप्तब्रह्मलोकानामप्यपुनरावृत्त्याम्नानं तु केषांचित् क्रममुक्त्यभिप्रायम्। अत्र प्रमाणम्—

वेदान्तविज्ञानसुनिश्चितार्थाः
संन्यासयोगाद् यतयः शुद्धसत्त्वाः।
ते ब्रह्मलोके तु परान्तकाले
परामृताः परिमुच्यन्ति सर्वे ॥

इति श्रुतिः,

"ब्रह्मणा सह ते सर्वे सम्प्राप्ते प्रतिसञ्चरे।
परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम् ॥"

इति स्मृतिः, 'सामीप्यात्तु तद्व्यपदेशः' इति सूत्रं च। अतोऽविकृतस्य नियतदेशस्य ब्रह्मणः प्राप्तये युज्यते मार्गविशेषः, मधु-नदीनिदर्शनानि मुक्तात्मनो ब्रह्मणा विवेकज्ञानभावप्रतिपादनपराणि, न तु तथाऽविभागपराणि ॥

सर्गश्रुतयस्त्वेकात्मप्रतिपादनपरतयैव योजनीयाः, न सर्गादौ मुख्यतात्पर्यवत्यः, इति तदनुगुणतयैव तासां व्यवस्थापनं युक्तम् ॥

सृष्टिश्रुतीनां तु परमार्थविषयत्वमध्यारोपापवादविधयैव प्रवृत्तत्वात्, सृष्टिप्रकरणस्य सर्वस्योपक्रमोपसंहाराभ्यां निर्विशेष एव तात्पर्याच्च ॥

एवम्परत्वे सृष्टिश्रुतीनां मण्डनाभिप्रेते, "लोकवत्तु लीलाकैवल्यम्" इति सूत्रगतम्—

'न चेयं परमार्थविषया सृष्टिश्रुतिः; अविद्याकल्पितनाम-रूपव्यवहारगोचरत्वात्' इति भाष्यमेव मूलम् ॥

अयमेव न्यायोऽप्ययंश्रु[illegible]न्यथैकविज्ञानेन सर्वविज्ञानप्रतिज्ञां प्रस्तुत्य सृष्ट्याम्नानं सद्विद्यादावुपपद्यते; "एकमेवाद्वितीयमि"त्युपक्रमः, 'तत्त्वमसी'त्याद्युपसंहारश्च। अद्वितीयत्वमुपक्रम्य 'ऐतदात्म्यमिदं सर्वमि'ति तस्यैवोपसंहारोऽप्युपांशुयाजवाक्य इवैवम्परतायामेव सृष्टिश्रुतेः स्वरसः; ब्रह्म-प्रपञ्चयोः कार्य-कारणभावोपदेशो नान्यथोपपद्यते ॥

## ब्रह्मपरिणामवादनिरासः

वाचारम्भणत्वाम्नानं कारणात्मनैकत्वम्, कार्यात्मना नानात्वम्, इति भेदाभेदौ ब्रह्मपरिणामितायां सत्यं युज्येते। न च ब्रह्म तथेति 'अक्षर'-पदविवरणावसरे व्यक्तमधस्तात्। न च ब्रह्मपरिणामः प्रपञ्चः; 'तत् सत्यमि'ति ब्रह्ममात्रसत्यताम्नानविरोधात्, समसत्ताकत्वाच्च परिणामि-परिणामयोः। अतो यदि कार्य-कारणभावनिबन्धनोऽभेदः स्वीकर्तव्यः, तर्हि ब्रह्मविवर्तवाद एव पर्यवसानम् ॥

तत्र च भेदः कार्य-कारणभावेऽनिर्वचनीय एवोररीकर्तव्यः। एवं सर्ग-श्रुतीनां तात्पर्यावधारणे "अभ्युपगम्य चेमं व्यावहारिकं भोक्तृ-भोग्यलक्षणं विभागं "स्याल्लोकवदि"ति परिहारोऽभिहितः, न त्वयं विभागः परमार्थतः" इति भाष्यमेव मूलम्। इदमेवाभिप्रेत्य तदनन्यत्वं चात्र तद्व्यतिरेकेणाभाव इति भामती व्याचष्टे ॥

## भेदमिथ्यात्वे प्रमाणम्

तत्र भेदमिथ्यात्वम्, तन्मायामयत्वं वा "इन्द्रो मायाभिः पुरुरूप ईयते" इति श्रुतिरप्युपबृंहयति। तत्र भेदाभेदयोरेकत्राविरोधो भेदस्य कल्पितत्वेन, अभेदस्य तु पारमार्थिकत्वेन, इति सृष्टिश्रुतयः सृज्यमानाऽपार-मार्थिकतामादायोपपद्यन्ते। स्वप्नेऽपरमार्थानां सृष्ट्याम्नानादपीदमवगम्यते। अतो वेदान्तानामद्वैत एव मुख्यतात्पर्ये सृष्टिश्रुतयः, प्रलयश्रुतयो वा नानुप-पन्नार्थाः ॥

## स्वप्नदृष्टान्तेन जागरमिथ्यात्वम्

तत्र स्वप्ने वस्तुगत्येश्वरस्य कारणत्वेऽपि भगवत्पाददृष्ट्या जीवकर्तृकत्व एव स्वीकृतेऽपि—"अथ रथान् रथयोगान् पथः सृजते" इति सृष्ट्याम्नानं नान्यथो-पपद्यते। अयमेव न्यायो जगत्सृष्टावपि। अधिकमन्यत्र ॥

### ऐश्वर्यश्रुतीनां [illegible]ब्रह्मविद्या[illegible]थत्वम्

एतेनैश्वर्यश्रुतयोऽपि व्याख्याताः; सगुणविद्याविषयपरत्वाच्चासाम्, सगुणविद्याविषयत्वेऽप्यपुनरावृत्तिश्रुतेर्गतिः पूर्वमुक्तैव ॥

### मुक्तात्मनां सर्वैश्वरत्वाद्युपपत्तिः

तत्र मुक्तात्मनः सर्वेश्वरत्वादिकमाविर्भूतब्रह्मस्वरूपत्वेन सर्वकामावाप्त्या, सर्वात्मकत्वेन च। न च सर्वात्मत्वेऽपि शोक-मोहाद्यापत्तिः; अविद्वद्विषयत्वात् शोक-मोहादेरध्यस्तस्य, विदुषश्चाविद्या, तन्निबन्धनोऽध्यासो वा नास्तीति न कोऽपि दोषः ॥

आविर्भूतब्रह्मस्वरूपो हि ब्रह्मवत् सर्वेशितृत्वमश्नुते । तच्च सर्वेशितृत्वं नेशितव्यकृतम्, किन्तु सिद्धेन ज्ञानस्वरूपादिना ज्ञेयादिप्रकाशकत्वेनैव। अतः सति ज्ञेयादौ सर्वेशितृत्वम्, अन्यथा तु स्वप्रकाशसंविद्रूपमात्रत्वम् ॥

### सर्वेशितृत्वादिकं ध्यानार्थं कल्पितमेव, न परमार्थम्

अन्ये तु मन्यन्ते—सर्वेशितृत्वादिकं सर्वं माहात्म्यं ब्रह्मणो ध्यानायैव, न तु परमार्थतस्तत्स्वरूपान्तर्गतमिति। अतोऽविद्यानिवृत्तौ विद्याया मोक्षत्वे न सर्गादिश्रुतिविरोधः, न वा मोक्षस्यानित्यत्वापत्तिः । बन्धहेतुक्षयोऽप्यविद्याया एव बन्धहेतुत्वात्, तदस्तमयस्यैव मोक्षत्वाच्च। तत्र तत्त्वज्ञानानन्तरमेव सर्वबन्धनिवृत्तिस्त्वसति प्रारब्धशेषे । सति तु तस्मिन् तस्यापि भोगपर्यन्तमभ्यस्यमानेन तत्त्वज्ञानेनैव मुक्तिः, तावत्पर्यन्तं तु देहपातप्रतीक्षा कर्तव्या—"तस्य तावदेव चिरं यावद् न विमोक्ष्येऽथ सम्पत्स्ये।" इति श्रुतेः ॥

### स्थितप्रज्ञसिद्धत्व-साधकत्वपक्षावुभावपि मण्डनेन मतौ

अत्र जीवन्मुक्त्यङ्गीकारानङ्गीकारपक्षयोः स्थितप्रज्ञसिद्धत्वे, साधकविषये च वक्तव्यं सर्वं पूर्वमेव निवेदितम्। तत्र मण्डनः पक्षद्वयमपि संगृह्णाति, न त्वन्यतरपक्षमागृह्णाति। न च भगवत्पादसिद्धान्ताद् बाह्यो मण्डनसिद्धान्तः । न चात्र भामत्यपि प्रस्थानान्तरेण प्रतिष्ठते ॥

### जीवन्मुक्तस्य व्यवहारो न बन्धाय, तत्र प्रमाणं च

तत्र मण्डनः—प्रारब्धकर्म स्वरूपतो न तत्त्वज्ञानानन्तरमस्यानुवर्तते । स च बद्धानां बन्धदशायां प्रारब्धविशेष इव जीवन्मुक्तं न बन्धयति, किन्तु केवलं प्रतीयते छायादिवत्, चित्रमयव्याघ्रादिवच्चेति स्वीकरोति। सोऽपि

संस्कारो न स्वनिवृत्त्यर्थं त[illegible]र्यते [illegible]दंनिवृत्ताविव तत्त्वज्ञानादन्यं हेतुमपेक्षत इति प्रतिपादयति (पृ. १३१-२१)––“यथा खल्वविदुषो मृद्दारुरचिते स्त्र्यादौ विषये छायामात्रदर्शनमभिनिवेशविकलम्, तथा विदुषः क्षीणकर्माविद्यस्य तत्संस्कारमात्राद् दर्शनं छायामात्रेणेव विषयेषु। तथाच ‘तद्यथाऽहिनिर्ल्वयनी वल्मीके मृता प्रत्यस्ता शयीत, एवमेवेदं शरीरम्’ इति विदुषः शरीरेऽनास्थां दर्शयति, यतो न मूलकारणतुल्यफलः संस्कारः कम्पादिवदेव। न च चिरकालानुवृत्तिः; अल्पकालस्थायित्वात् संस्कारस्य”––इति॥

### जीवन्मुक्तस्य संस्कारोऽपि ज्ञानादेव निवर्तते, तेन तस्यापि ज्ञाननिवर्त्यत्वम्

तद्वदेव च तन्निवृत्तये न हेत्वन्तरमपेक्षते; तत्त्वदर्शनादेव क्रमेण तस्यापि निवृत्तेः, स्वयमेव वेति। तत्र संस्कारो विनश्यदवस्थं प्रारब्धकर्मैव, इत्याऽऽभोगसमाप्त्यभ्यासस्तत्त्वदर्शनस्य मन्यताम्, विनश्यदवस्थत्वात् स्वयमेव वा नश्यतीति। स्वयं नाशोऽपि हि विनश्यदवस्थस्य परम्परया तत्त्वज्ञानाधीन एव। अतो न तत्र ज्ञाननिवर्त्यत्वमिथ्यात्वानुपपत्तिः, तत्त्वज्ञानस्य द्राघीयसा कालेनाभ्यस्यमानस्यैव विदेहकैवल्यहेतुत्वं तत्र तत्र ब्रह्मसिद्धावुक्तमत्रानुसन्धेयम्। अतो “भोगेन त्वितरे क्षपयित्वे”त्यत्र भोगपदमभ्यस्यमानतत्त्वज्ञानसध्रीचीनभोगपरम्, ‘इतरे’ पदं तु प्रारब्धपुण्य-पापसंस्कारपरमिति मन्तव्यम्॥

शतदूषण्यादि तु स्वत एव प्रारब्धकर्मणां भोगान्ते नाशस्वीकारात् ज्ञाननिवर्त्यत्वानुपपत्तिमापादयदुक्तब्रह्मसिद्ध्या शिक्षणीयम्। तत्र ‘स्वयमि’ति तु विनश्यदवस्थत्वमभिप्रेत्य, न तु स्वरूपतोऽनुवृत्तिमपेक्ष्येति तु निष्कर्षः। स्पष्टञ्चैतत् ब्रह्मसिद्धौ (पृ. १३३-४)

### संस्कारकार्यशेषयोर्विलीनावस्थयोर्न जीवन्मुक्ते बन्धकत्वम्

ननु संस्कारकार्यशेषोऽविद्यैव, तत्र कथं सर्वाविद्याप्रलयः? कथं वा नोच्छेद्यमवशिष्यते? उच्यते; विशुद्धात्मैक्यदर्शनप्रतिपक्षग्रस्तौ विलीनावेव तावदुदितौ; अकिञ्चित्करत्वात्, अबन्धत्वात्, तन्निवृत्तये हेत्वन्तरस्यानपेक्षणाच्च। विशुद्धं खल्वात्मानमनुभवतो विपाकाभ्यासस्तमस्पृशन्नकिञ्चित्करो बन्धात्मा प्रलीन एव––यथा चित्रादौ चित्रादितत्त्वमनुभवतः, तत्र त्ववदातमात्मानं जानत

उत्पन्नोऽपि तत्त्वदर्शनादवकाशमलभमानो ब्रह्मविद एव। तथाच न तन्निमित्तेन मलिनत्वेन शोचत्यात्मानम्—इति ॥

निष्कर्षस्तु—कर्मविपाको ह्यात्मसंस्पर्शी शोकाभिनन्दनवानविदुषः, विदुषस्तु तदसंस्पर्शादाभासमात्रम्, न विपाकः; अनभिसन्धिमात्रत्वात्। तथाच :—

तत्तत् प्राप्य शुभाशुभम्, नाभिनन्दति न द्वेष्टि

इति दर्शितम्। तथा—

"यस्यां जाग्रति भूतानि सा निशा पश्यतो मुनेः।"

इति पश्यत एव शरीरादिप्रपञ्चो निशा तदसंस्पर्शादहश्यमानसमत्वादिति ॥

### संयोगपृथक्त्वन्यायेन कर्मणामुपयोगाद् स्थितप्रज्ञसाधकत्वपक्ष एव यावदात्म-साक्षात्कारं मण्डनाभिमतः, सुरेश्वरस्याप्ययमेवाशयः

अनेनेदमवगम्यते—ब्रह्मसिद्धिकारो जीवन्मुक्तिपक्षेऽपि स्थितप्रज्ञं विनाऽभिनिवेशं व्यवहरन्तमपि साधकावस्थं मन्यते, तेन च समाधितो व्युत्थितोऽपि स्वोचितकर्माधिकारान्न निवर्तत आसाक्षात्कारम्, ततस्तु मण्डनमतेऽपि सिद्ध एव। 'संयोगपृथक्त्व'न्यायेन कर्मणामुपयोगमेव मुख्यकल्पं मण्डनो मन्यते। तथाच जीवन्मुक्तोऽपि जनकादिर्गृहस्थावस्थो मोक्षभागेव भवतीति सुस्थम् ॥

### संयोगपृथक्त्वन्यायेन कर्मणामुपयोगे गीताभाष्योपष्टम्भः

अत एव भगवत्पादा गीताभाष्योपक्रमे ज्ञान-कर्मसमुच्चयनिराकरणप्रसङ्गे, अन्ते "कर्मणैव हि संसिद्धिमास्थिता जनकादयः" इत्येतद् द्वेधा व्याचक्षते—यदि तावत् पूर्वे जनकादयस्तत्त्वविदोऽपि प्रवृत्तकर्माणः स्युः, ते लोकसंग्रहार्थम् "गुणा गुणेषु वर्तन्ते" इति ज्ञानेनैव संसिद्धिमास्थिताः; कर्मसंन्यासे प्राप्तेऽपि कर्मणा सहैव सिद्धिमास्थिताः, न कर्मसंन्यासं कृतवन्त इत्येकोऽर्थः, अथ न ते तत्त्वविदः, ईश्वरसमर्पितेन कर्मणा साधनेन संसिद्धिं चित्तशुद्धिं ज्ञानोत्पत्तिलक्षणां संसिद्धिमास्थिता इति व्याख्येयमिति ॥

तत्र प्रथमं विवरणं ब्रह्मसिद्धिगतं संयोगपृथक्त्वन्यायमाश्रित्य, इति स्थिते कथं संयोगपृथक्त्वन्यायेन कर्मणामुपयोगपक्षो भाष्यबाह्यः? भगवत्पादतः

प्राक्तनसम्प्रदायानुसारी वा [illegible]र्यते [illegible]न्त—भगवत्पादानामीशावस्योपनिषदि "विद्यां चाविद्यां च यस्तद्वेदोभयं सह। अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृत-मश्नुते॥" इत्यस्य मन्त्रस्य मुख्यविद्यया सह कर्मसमुच्चयोऽप्यभिप्रेयत इति। न चैतावताऽनाश्रमी, ऊर्ध्वरेता वा गृहस्थाश्रमं स्वीकृत्यैव विद्याधिकारीति तदाशयः। सत्यपि साक्षात्कारे, सत्यम्, यावद्देहधर्माभिमानं कर्माधिकारो न निवर्तते; निषिद्धकर्मानुष्ठानं तु बन्धायैव स्याद् जीवन्मुक्तानामपि॥

### जीवन्मुक्तानामपि समाधितो व्युत्थितानां विधि-निषेधाधिकारे भामती

इदमेवाभिप्रेत्य भामती—'न चैवं विरुद्धकर्मतापातः' इत्यादिना जीवन्मुक्तः, स्थितप्रज्ञो वा समाधितो व्युत्थितः षष्ठभूमिकापर्यन्तं विधिष्वप्यधि-कारी। तत्र पञ्चमभूमिकावस्थातः स्वयमुत्तिष्ठन् कर्मानुष्ठानकालं नातिक्रमेत। तदतिक्रमे तु पापभागेव। षष्ठभूमिकास्थस्तु स्वयं नोत्थानयोग्यः, यदि नान्येनो-त्थापितः। ततः समाध्यवस्थो नित्यकर्मातिपाती न पापभाक्, अकस्मादन्येनोत्था-पितस्तु न कर्माधिकारात् निवर्तते। सोऽपि कर्मकालानन्तरमकस्मात् अन्येन वोत्थापितस्तु निषिद्धं कर्म कालातिक्रमेऽपि नानुतिष्ठेदिति तु निष्कर्षः॥

### विद्वत्संन्यासिनः स्वरूपम्

तत्र सप्तमभूमिकास्थस्त्वाऽऽदेहपातं कर्मविपाकसंस्कारमात्रानुवर्तनाद् व्युत्थितावस्थायामपि न कर्माधिकारी, इति स एव विद्वत्संन्यासी नामेति मण्डनाशयः॥

### मण्डन-भगवत्पादयोर्विवादफलं संयोग-पृथक्त्वन्यायसाधनम्, संन्यासस्वीकारश्च

अतो मण्डन-भगवत्पादयोर्विवादफलं मण्डनाभ्युपगतं संन्यासविषय इदमेव, यद् विविदिषासंन्यासेऽनाश्रमिणामेवाधिकारः, ऊर्ध्वरेतसां वा, ये गार्हस्थ्येन कालयापनं नेच्छन्ति। न च वैराग्यातिशयाभावे तेषां विनापि कर्मानुष्ठानं ब्रह्मविद्यायामधिकारः। सति वैराग्यातिशये तु ते संन्यासमर्हन्ति। गृहस्थास्तु सत्यपि वैराग्यातिशये न संन्यासमेकान्ततोऽर्हन्ति॥

यस्य त्वज्ञानाद्, रागादिदोषतो वा कर्मणि प्रवृत्तस्य यज्ञेन दानेन तपसा वा शुद्धसत्त्वस्य ज्ञानमुत्पन्नम्, परमार्थतस्त्वेकमेवेदं सर्वं ब्रह्माकर्तृ चेति, तस्य

कर्मणि, तत्प्रयोजने च निवृत्तेऽ[illegible]पिब्रह्मविद[illegible]कर्मणि प्रवृत्तिर्दृश्यते, तस्य न तत् कर्म बन्धात्मकम्, येन बुद्धेः समुच्चयः स्यादिति ॥

### गीताभाष्ये ज्ञान-कर्मसमुच्चयनिरासः समसमुच्चयाभिप्रायेण, न तु सहसमुच्चयाभिप्रायेण

गीतायां हि कर्मयोगविधिर्विरक्तान् कर्मयोगिनोऽधिकृत्यैव । ज्ञान-कर्मसमुच्चयनिरासो हि गीतायां ज्ञानस्य समसमुच्चयमभिप्रेत्यैव । अत एव कर्मयोगिनमधिकृत्यैव स्थितप्रज्ञलक्षणं भगवद्गीतायाम् । अत एव—

"कर्मणैव हि संसिद्धिमास्थिताः जनकादयः ।
लोकसंग्रहमेवापि सम्पश्यन् कर्तुमर्हसि ॥"
"न मे पार्थास्ति कर्तव्यं त्रिषु लोकेषु किञ्चन ।
नानवाप्तमवाप्तव्यं वर्त एव च कर्मणि ॥"
"सक्ताः कर्मण्यविद्वांसो यथा कुर्वन्ति भारत ।
कुर्याद्विद्वांस्तथाऽसक्तश्चिकीर्षुर्लोकसंग्रहम्"
"संन्यासः कर्मयोगश्च निःश्रेयसकरावुभौ ।
तयोस्तु कर्मसंन्यासात् कर्मयोगो विशिष्यते ॥"
"ज्ञेयः स नित्यसंन्यासी यो न द्वेष्टि न काङ्क्षति ।"
अनाश्रितः कर्मफलं कार्यं कर्म करोति यः ।
स संन्यासी च योगी च न निरग्निर्न चाक्रियः ॥
यं संन्यासमिति प्राहुर्योगं तं विद्धि पाण्डव ।
"न ह्यसंन्यस्तसंकल्पो योगी भवति कश्चन ॥"

इत्यादिवचनानि भगवत उपपद्यन्ते ॥

एतैर्हि कर्मणा सह श्रवणाद्यनुष्ठाने क्षिप्रं मुक्तिसिद्धिः, विना कर्म श्रवणादिकं तु चिरेण मोक्षोपयोगीति ब्रह्मसिद्धिप्रस्थानमेव विशदं प्रतीयते । अत एव स्थितप्रज्ञमधिकृत्य गीता—

"एषा ब्राह्मी स्थितिः पार्थ नैनां प्राप्य विमुह्यति ।
स्थित्वाऽस्यामन्तकालेऽपि ब्रह्म निर्वाणमृच्छति ॥"

इत्याऽऽदेहपातं कर्मयोगेन सह स्थितप्रज्ञानामवस्थानं प्रतिपादयति, इति

भगवत्पादा अपि गीताभाष्ये [illegible] पृथक्त्वन्यायेन कर्मणामुपयोग इति, स्थितप्रज्ञश्च साधक एवेति च पक्षमनुमन्यन्ते ॥

### सिद्ध-साधकावस्थजीवन्मुक्तविवेकः

अनेनेदं प्रतीयते—अनाश्रमिणः, ऊर्ध्वरेतसो वा आधिकारिका वा सिद्धा जीवन्मुक्ता भवितुमर्हन्ति, गृहस्थास्तु साधकावस्था एव देहपातावस्थायां विदेहकैवल्यं प्राप्तुमर्हन्ति, तदपि क्षिप्रमेव ॥

तत्राऽऽधिकारिका अपान्तरतमःप्रभृतयोऽपीश्वराः परमेश्वरेण तेषु तेष्वधिकारेषु नियुक्ताः सन्तः सम्यग्दर्शिनोऽपि स्वस्वाधिकारं निर्वोढुं स्व-स्वाश्रमोचितं कर्म साक्षाद् मोक्षासाधनमपि लोकसंग्रहार्थं कर्तुमर्हन्ति, एवं कर्मयोगिनोऽपि ॥

### आधिकारिकजीवन्मुक्त-सिद्धजीवन्मुक्तविवेकः

इयान् विशेषः—आधिकारिकाणां स्वाधिकारनिर्वाहार्थं जन्मान्तरग्रहणमपि कर्तव्यम्; यथाऽपान्तरतमआदीनाम्। वेदाचार्यः पुराणर्षिर्विष्णोर्नियोगात् कलि-द्वापरयोः सन्धौ कृष्णद्वैपायनः सम्बभूव, तथा वसिष्ठोऽपि ब्रह्मणो मानसः पुत्रः सन्नपि शापादपगतस्वदेहः पुनर्ब्रह्मादेशात् मित्रावरुणाभ्यां सम्बभूव। निवृत्ते त्वधिकारे तेऽपवृज्यन्ते, इति तेषां यावदधिकारसमाप्ति न मुक्तिः, नैवं कर्मयोगिनां विदुषाम्, इति न तेषां जीवन्मुक्तता, किन्तु साधकावस्थैव ॥

### स्थितप्रज्ञः साधकावस्थ इति मण्डनमतं न भाष्यवाह्यम्

न चैतावता जीवन्मुक्ता एव कर्मानधिकारिणः सिद्धाः, स्थितप्रज्ञा वा न सन्ति। विवेकचूडामणिर्हि गीताया द्वितीयाध्यायगतं स्थितप्रज्ञम्, चतुर्दशाध्यायगतं गुणातीतं च जीव-ब्रह्मसाक्षात्कारवन्तं जीवन्मुक्तमभिप्रैति, न तु कर्मयोगिमात्रम्, अतो भगवत्पादाभिमतो जीवन्मुक्तः, कर्मयोगी स्थितप्रज्ञश्च नैकः; तथापि वस्तुगत्या शोधितत्वम्पदार्थस्यैव ज्ञायमानस्य तत्पदार्थशोधनावस्थायामपि वस्तुगत्या मुक्तात्मस्वरूपत्वात्, विवेकचूडामणावपि तत्त्वमसिमहावाक्यार्थसाक्षात्कारवत्यपि वस्तुगतिमनुरुध्य स्थितप्रज्ञपदप्रयोगात्, गुणातीत-स्थितप्रज्ञयोरपि वस्तुगत्यैक्यात्, "अनारब्धकार्ये एव तु पूर्वे

तदवधेः" इति सूत्रव्याख्यावसरे "ब्रह्मविद्[illegible]र्देषु स्थितप्रज्ञलक्षणनिर्दे-शेनैतदेव निरुच्यते" इति भाषणं न गीताया द्वितीयाध्यायोक्तं स्थितप्रज्ञमभिप्रेत्य, इति "स्थितप्रज्ञस्तावन्न विगलितनिखिलाविद्यः सिद्धः, किन्तु साधक एवावस्थाविशेषं प्राप्तः स्यादि"ति भामती। न चात्र पूर्वोक्तरीत्या स्थितप्रज्ञस्वरूपभेदे भाष्य-मण्डनाभ्यामभिप्रेते श्रीभगवत्पादसिद्धान्ताद् बाह्यो मण्डनसिद्धान्तः ॥

### कर्मयोगानधिकारिणां संन्यासेन नैष्कर्म्य-सिद्धिः, न तु कर्मयोगिनाम्

निष्कर्षस्तु—स्थितप्रज्ञे न नैष्कर्म्यसिद्धिः, नतरां परमनैष्कर्म्यसिद्धिः; कर्मयोगेऽप्यनधिकारिणामनाश्रमिणाम्, ऊर्ध्वरेतसां तु संन्यासेन परमनैष्कर्म्य-सिद्धिः, परं तु चिरेण, न तु क्षिप्रमिति मण्डनाशयः। तत्राश्वदृष्टान्तस्वारस्यं संयोगपृथक्त्वन्यायपक्ष एव, न तु चित्तशुद्धिद्वारा कर्मणामुपयोग इति पक्ष इति सहृदयहृदयैकवेद्यम्। एवं स्थिते—

"कर्मणैव हि संसिद्धिमास्थिता जनकादयः।"

इत्यत्र भगवत्पादाभिप्रेतप्रथमव्याख्याभिप्राया ब्रह्मसिद्धिव्याख्या, "सर्वापेक्षा चे"ति सूत्रस्य तु तदीयद्वितीयव्याख्याभिप्रायं भगवत्पादभाष्य-मुक्तसूत्रे, उभयत्राप्युभयोरपि तात्पर्याद् न निरस्य-निरासकभाव उक्तनिबन्धन-द्वयस्य। उररीकृतं चेदं भगवत्पादैरपि "यदेव हि विद्यया" (४-१-१८) इति सूत्रे—यद्यपि कर्म नाङ्गं विद्यां प्रति; तथापि विद्यासहायस्याग्निहोत्रादेर्विद्यानि-मित्तेन सामर्थ्यातिशयेन योगादात्मानं प्रति कश्चित् कारणत्वातिशयो भविष्यति, न तथा विद्याविहीनस्येति युक्तं समाश्रयितुम् ॥

अत एव तत्रोपसंहारः—तस्माद् द्विधा संयुक्तमग्निहोत्रादि, विद्याविहीनं चोभयमपि मुमुक्षुणा मोक्षप्रयोजनोद्देशेनेह जन्मनि, जन्मान्तरे च प्राग् ज्ञानोत्पत्तेः कृतं यत्, तद् यथासामर्थ्यं ब्रह्माधिगमप्रतिबन्धकारणोपात्तदुरितक्षयहेतुत्वद्वारेण ब्रह्माधिगमकारणत्वं प्रतिपद्यमानं श्रवण-मनन-निदिध्यासनतात्पर्याद्यन्तरङ्ग-कारणापेक्षम्, ब्रह्मविद्यया सहैकं कार्यं भवतीति। अनेनेदमवगम्यते—कर्मयो-गेन सह श्रवणाद्यनुष्ठानं क्षिप्रं कार्यसाधनमित्यश्वदृष्टान्तस्वारस्यं भगवत्पादा-नामप्यभिमतमिति ॥

तत्र "अग्निहोत्रादि तु [illegible] तद्दर्शनात्" इत्यत्रारादुपकारकत्वात् कर्मणो ज्ञानस्यैव प्रापकं सत् कर्म प्रणाड्या मोक्षकारणमित्युपचर्यते। अतश्चातिक्रान्तविषयमेतत् कार्यैकत्वाभिधानमिति यदुक्तम्, तदिदं पूर्वोद्धृत—'यदेव विद्यये'ति सूत्रभाष्यावगतं—आजीवं श्रवणादिभिः सह कर्मानुष्ठाने क्षिप्रं मोक्षः; अन्यथा तु जन्मान्तर इत्यभिप्रायं नेतव्यम्। अतो न मण्डनसिद्धान्तोऽत्र भाष्याशयविरुद्धः ॥

### जीवाश्रयाविद्यानानात्ववादोऽपि भाष्यारूढः

अविद्याविषयः, तदुपहितं वा संविद्रूपं ब्रह्म, तद्विशिष्टस्तु जीवः, यावज्जीवमविद्यानानात्वमिति मण्डनसिद्धान्तोऽपि भगवत्पादाभिमत इति पूर्वमावेदितम्॥

तत्र शोधितत्वम्पदार्थातिरेकेण न तत्पदार्थो नाम कोऽपि। अत एव कर्मयोगपरद्वितीयाध्यायान्ते—

"एषा ब्राह्मी स्थितिः पार्थ नैनां प्राप्य विमुह्यति।
स्थित्वाऽस्यामन्तकालेऽपि ब्रह्म निर्वाणमृच्छति॥"

इति स्थितप्रज्ञः ब्राह्मस्थित्यर्हतयोपसंह्रियते॥

तत्र गुणातीत-स्थितप्रज्ञयोरैक्यमेव। गुणातीतावस्थाख्यसप्तमभूमिकास्थः स्थितप्रज्ञः सिद्धः, अपरस्तु साधक एवावस्थाविशेषं प्राप्त इत्यवस्थाविशेषं प्राप्तस्यैव साधकत्वमुक्तं भामत्याम्॥

सिद्धो हि विगलिताऽऽदेहपातप्रतीतिरपि प्राप्तकैवल्य एवेति जीवन्मुक्त्यनङ्गीकार एव मण्डनसिद्धान्ते। सत्यप्येवं साधकावस्थं स्थितप्रज्ञमभिप्रेत्यापि स्थितप्रज्ञातिरिक्तजीवन्मुक्त्यनङ्गीकारपक्षेऽपि "अनारब्धकार्ये एव तु पूर्वे तदवधेः" इति सूत्रोपपत्तिरित्यभिप्रायं भाष्यमित्यभिप्राया भामती योज्या। सर्वथा तु न भाष्याशयबाह्यो मण्डनः। अत एवः—

"ज्ञानाग्निः सर्वकर्माणि भस्मसात् कुरुतेऽर्जुन।"

इति साङ्ख्ययोगापरपर्यायशोधिततत्त्वम्पदार्थज्ञानेनापि संचिताऽऽगामिकर्मनिवृत्तिः प्रारब्धकर्मवर्जमिति भगवत्पादानां भाष्यम्॥

### प्रारब्धकर्मणामनुवृत्तौ भाष्य-मण्डनयोर्निदर्शनभेदाविरोधः

सति चैवमारब्धकार्याणां स्वरूपतः, संस्कारात्मना वाऽनुवर्तमानानां

कथं निवृत्तिरिति शङ्कायां निदर्शनञ्च त्रिद[illegible]र्शनसम्मतं मण्डनोऽनुसन्धत्ते—'तिष्ठति संस्कारवशात् चक्रवत्' इति। इदं निदर्शनं भगवत्पादा अपि 'अनारब्धकार्ये एवे''ति सूत्रविवरणावसरे "न तावदनाश्रित्यारब्धकार्ये कर्मातिशयं ज्ञानोत्पत्तिरुपपद्यते। आश्रिते च तस्मिन् कुलालचक्रवत् प्रवृत्तवेगस्याप्यन्तराले प्रतिबन्धासम्भवात् भवति वेगक्षयप्रतिपालनम्" इति। 'अकर्त्रात्मबोधोऽपि हि मिथ्याज्ञानबन्धनानि कर्माण्युच्छिनत्ति, बाधितमपि तु द्विचन्द्रज्ञानवत् संस्कारवशात् कंचित् कालमनुवर्तत एवे'ति समाद्रियते। अत्र 'द्विचन्द्रज्ञानवत्' "संस्कारवशात्" इत्यत्र संस्कारवशशब्दप्रयोगात् तस्योपलक्षणत्वं भय-कम्पाद्यनुवृत्तेरपि, इति ब्रह्मसिद्धिस्तमपि निदर्शयति॥

यत्तु—ब्रह्मसिद्धिः "ये तु मन्यन्ते—कर्मणां प्रवृत्तवेगस्येषोरिव चक्रस्येव वा न शक्यः प्रतिबन्धः, अतो भोगेन क्षयप्रतीक्षा—इति, तदसत्; शक्यो हीषुः प्रतिबन्धुं कुड्यादिभिः, नाशयितुं वा शक्यत इति। तत्र चक्रनिदर्शनं भगवत्पादैरप्याहृतमेव पर्याप्तम्, उपपन्नतरं च। मुक्तेपूदाहरणमयुक्तमित्याशयो वा, इति न भगवत्पादीयमुदाहरणं सर्वात्मनाऽयोग्यमित्येव योजनीयम्। सिद्धान्तस्तु प्रवृत्तवेगस्य क्षयप्रतीक्षेति समान एवोभयत्रापि॥

शास्त्रिपादा अपि हि स्वीयायां भूमिकायां +८७ पृष्ठे—स्वतन्त्रो हि मण्डनो यदपेक्षितं भाष्यकारमतिक्रम्य स्वीयं सिद्धान्तमेवोपक्षिपतीति वदन्ति, परन्तु कुत्रापि भगवत्पादसिद्धान्तमतिक्रमते। स हि भाष्यकारोपक्षिप्तेषु प्रकारभेदेषु सत्यमाद्रियते। सोऽपि प्रस्थानभेदमात्रेण, न तु भाष्यविरुद्धं किमपि। प्रकृते तु तन्त्रान्तरसम्मत एव चक्रभ्रमदृष्टान्तोऽपीति तत्परित्यागे न निमित्तं किमपीति विप्रतिपन्नमुदाहरणं न निदर्शयितव्यमित्येव मण्डनस्याशयः॥

### जीवन्मुक्तानां बद्धानामिव नाऽऽरूढाभिनिवेशेन व्यवहारः, येन तेषां न बन्धः

वस्तुतस्तु तत्र जीवन्मुक्तस्य भयविगमे लब्धाश्वासस्यापि संस्कारमात्रात् कम्पाद्यनुवृत्तिः। न च भयविगमेऽनुवृत्तिरित्येतावता चिरकाला सा भवति। न च मूलकारणतुल्यफलः संस्कारः। न च स्थायी; अन्यथा कम्पादीनां निवृत्तिरेव न स्यात्। न च भयविगमहेतोस्तत्त्वदर्शनात् तन्निवृत्तये हेत्वन्तरमपेक्ष्यते। तत एव हि संक्रमेण निवर्तते, स्वयमेव वा कुलालचक्रभ्रान्तिसंस्कारवत्,

तथा निवृत्तायामविद्यायाम्, …र्यन्ते [illegible] …णारब्धकार्येष्वनारब्धकार्येषु च निवृत्तेष्वाऽऽरब्धविपाकसंस्काराच्छरीरिणं भोक्तारमिव ज्ञानात्मानं प्रत्येत्याऽऽभासमात्रेण विद्वानपि, न चाविद्वानिवारूढाभिनिवेशः। स चायमीदृशः स्थितप्रज्ञो वर्णितो वीतकामादिरूप इति वर्णयन् मण्डनः जीवन्मुक्त्यङ्गीकारपक्षे सिद्धमेव जीवन्मुक्तमभिप्रैति, इति न भाष्यविरोधलेशोऽपि ब्रह्मसिद्धेः (पृ. १३१.) ॥

अतस्तत्त्वज्ञानानन्तरमेव मुक्तौ स्थितप्रज्ञः साधकः, तत्त्वज्ञानानन्तरं प्रारब्धभोगक्षयापेक्षायां तु स सिद्ध इति व्यवस्था 'स्थितप्रज्ञस्तावद् विगलितनिखिलाविद्यः सिद्धः' इत्यत्र स्थितप्रज्ञश्चेत्यस्यावतरणं तु जीवन्मुक्त्यङ्गीकारपक्षेण, तदनङ्गीकारपक्षेण तु स साधकः। अतः कल्पतरुरपि मण्डनमतं स्थितप्रज्ञसाधकत्व एवेति न युक्तं कल्पयितुम्। सिद्धोऽपि स्थितप्रज्ञः पक्षान्तर इति मण्डन एव वदतीत्यनुपदमेवोपपादितम् ॥

### सिद्धस्थितप्रज्ञस्वरूपविवेकः, तत्र भाष्याविरोधश्च

अत एवोत्तरत्र कर्मविपाको ह्यात्मसंस्पर्शी, शोकाभिनन्दनो वा न विदुषः, विदुषस्तु तदसंस्पर्शादाभासमात्रम्; मणि-कृपाण-दर्पणादिनिबन्धनविशेषवत्, न विपाकः; अनभिनन्द्यमानत्वात्, अद्विष्यमाणत्वाच्च। तथा च—

"तत्तत्प्राप्य शुभाशुभम्, नाभिनन्दति न द्वेष्टि ॥"

इति दर्शितम्। तथा—

"यस्यां जाग्रति भूतानि सा निशा पश्यतो मुनेः"

इति पश्यत एव शरीरविप्रलम्भो निशा; तदसंस्पर्शात्, अदृश्यमानसमत्वाच्चेति सिद्धमेव जीवन्मुक्तमभिप्रैति। सर्वं चेदं मण्डन-भगवत्पादयोरैकमत्यं विशदयति। अतो स्थितप्रज्ञविषये भाष्यकारो मण्डनमतं निरस्यतीति भामती, कल्पतरुर्वा नाभिप्रैति ॥

### शाब्दपरोक्षापरोक्षवादेऽपि भाष्याविरोधो मण्डनस्य; फलतो वादद्वयस्याविशेषात्।

अयमेव न्यायः शाब्दपरोक्षवादे ध्यानोपासनादिशब्दवाच्यद्वितीयप्रतिपत्तिनिबन्धनतृतीयप्रतिपत्त्युपधानतायामपि। उपपादितं हि सर्वं मनन-निदिध्यासनयोः श्रवणसिद्ध्यर्थत्वादिति भाष्यात् निदिध्यासनप्रधानत्वपक्षोऽपि भगवत्पादानामिति ॥

तत्र शाब्दापरोक्षवादात् [illegible]परोक्षतावादस्य फलतो न विशेषः। तत्र प्रथमे शब्दात् प्रथममेव साक्षात्कारे जातेऽपि तद्वैमल्यार्थं मनन-निदिध्यासने अपेक्ष्येते, द्वितीये तु शाब्दे परोक्षे वैमल्यसम्पादनेन तत्सन्तानाख्योपासनाविशेषरूपतापादने शाब्दमेव परोक्षज्ञानमपरोक्षसाक्षात्काररूपतां क्रमेणापद्यते। पक्षद्वयेऽप्यपरोक्षभ्रमस्यापरोक्षसाक्षात्कारेणैव निवृत्तिरित्यविवादम् ॥

उभयत्र श्रवणात् पराचीनयोर्मनन-निदिध्यासनयोरवगत्यर्थत्वस्याविशेषात्। इममेवार्थमाक्षेप-समाधानाभ्यामुपपादयितुं ब्रह्मसिद्धिः (पृ. १३४-१) "ननु—तत्त्वज्ञानप्रतिहतश्चेदुत्पन्नोऽपि प्रपञ्चावभासो नात्मसंस्पर्शी, न किञ्चित्करः, न वा बन्धः; शब्दादेव तस्योत्पत्तेः किमर्थमुपासनादी"त्यादिना शङ्कायाम्—तत्रायं परिहारः—शाब्दज्ञानं परोक्षं नापरोक्षभ्रमनिरसनक्षमम्। क्षणिकं तु तद प्रमाणाधीनमपि विनाऽभ्यासं नाज्ञाननिवर्तकम्; अन्यथा प्रमाणाननुसन्धाने पुनरपि सर्पादिभयमिव संसार आपद्येत। तत्र शाब्दपरोक्षतावादेऽपि शाब्दस्य, मननस्य, निदिध्यासनस्य च सर्वेषां साक्षात्कारत्वं वक्तव्यम् ॥

तत्रानुमानस्याप्यपरोक्षज्ञानजनकत्वं बाधितं स्यात्, इति तेन परोक्षे ज्ञाने संजाते निदिध्यासनस्याशाब्दस्यानुमानाधीनात्मलाभस्यापि साक्षात्कारजनकत्वं वर्णनीयम्, इति तस्यैव शाब्दानुमानिकज्ञानसन्तानरूपस्य भावनाऽभिधेयस्यैव भावनाया अन्यत्र कामिनीसाक्षात्कारजनकत्वदर्शनात् तन्मात्रस्य साक्षात्कारजनकत्वं युक्तम्, न तु शाब्दस्य; अनुपयोगात्; अन्यथा मननादिविधिवैयर्थ्यस्य दुष्परिहरत्वादिति ब्रह्मसिद्ध्याशयः। व्यक्तं चैतद् भामत्याम् ॥

तत्र द्वितीयप्रतिपत्तिरपि प्रथमप्रतिपत्तिसन्तानरूपत्वाविशेषादुपासनेति व्यपदिश्यते निदिध्यासनवत्। तत्र शाब्दं ज्ञानं शब्दमात्राधीनत्वाद् न नियोगविषयः, एवं मननमपि। तथा निदिध्यासनमपि "स क्रतुं कुर्वीते"त्यादाविव न नियोगविषयतामर्हति; अन्यथा त्रिष्वपि स्वतन्त्रे नियोगत्रये सर्वेषामेकब्रह्मविषयकत्वं न स्यात्। मण्डनस्यापि प्रभाकरमत इव प्रतिपत्तिपरत्वाद् वेदान्तानां प्रतिपत्तिस्वरूपभेदाद् नियोगविषयत्वाविषयत्वाभ्यां विशेषः। अयमेव न्यायः श्रीभाष्यमतेऽपि ॥

तत्र तिसृणां मि[illegible] र्यते [illegible]ऽमृतत्वसाधनत्वव्यवस्थानात् तत्र मानसं निदिध्यासनं यदि साक्षादमृतत्वसाधनम्, तर्हि वाग्धेनुत्वादिनयेनौपनिषदत्वं ब्रह्मणो हीयेत; तत्रापि तात्पर्यकल्पनाया असम्भवात्। अतोऽप्यपहतपाप्मादिस्वरूपं ब्रह्मापि न सिध्येत्, इति निर्विषयं शास्त्रमापद्येत। तत्रापि तात्पर्यकल्पना तु वाक्यभेदभयाद् न सम्भवति ॥

इदं च दूषणं प्राभाकराणामिष्टापादनमेव, परंतु नोपनिषदामप्रामाण्यं युक्तं ब्रह्मणीति नियोगपरत्वनिरासो मण्डनमिश्रस्यात्र विस्तरेण ॥

तत्र श्रीभाष्यं प्रभाकरवत् नियोगमभ्युपगम्याप्यपहतपाप्मादिब्रह्मस्वरूपेऽपि वेदान्तानां तात्पर्यमवलम्ब्य स्वीयं सिद्धान्तं समर्थयति—कर्ममीमांसकानां मतनिरसनपूर्वकम् "तत्तु समन्वयादि"त्यत्र। तत्र नियोगपरत्वेऽपहतपाप्मादिस्वरूपमपि प्रामाणिकं मन्वानं प्रति वाक्यभेदो न दूषणम्; तस्येष्टत्वादिति विवेचयति ॥

### प्रभाकरमतात् श्रीभाष्यस्य विशेषो वेदान्तानां सिद्धार्थेऽपि प्रामाण्येन प्रतिपत्तिविषयस्यापि सत्यत्वेन च

परंतु एवं भाषमाणमपि प्राभाकराणां सिद्धेऽर्थे वेदान्तानां न प्रामाण्यम्, किन्तु कार्ये, तत्संसृष्टे वाऽर्थे; शब्दसामान्यस्य विशिष्य वेदान्तानामपि प्रामाण्यमिति मतं न स्वीकरोति। श्रीमदानन्दतीर्थानुयायिनोऽपीतरान्विते वाक्यप्रामाण्यमेव स्वीकुर्वाणा अपि नियोगार्थत्वं नोररीकुर्वन्ति। तत्राप्युपास्यं वस्तुसदौपनिषदमिति वाक्यभेददोषो दुष्परिहरः ॥

नियोगवाक्यार्थत्वे 'एवमिदं प्रतिपत्तव्यमि'त्येव वाक्यार्थः, प्रतिपत्तिविधिपरत्वे त्वेवमिदमिति। अतो नात्मतत्त्वं तद्विषयः स्यात्। तत्त्वं हि कालत्रयेणापि सम्बध्यते, विधेयं तु नैवम्, भविष्यत्कालता तु सत्यं प्रतीयते; तथापि नानेकान्तस्तत्रानुष्ठानस्य ॥

"सोमेन यजेत" इत्यादौ विशिष्टविधेर्विशेषणमपि यद्यपि विधेयम्; तथापि प्रतिपत्तिर्विशिष्टविषया विशेषणमपि न नियमेन सदिति साधयति। "असौ वा गौतमाग्निः" इत्यादौ द्युप्रभृतयोऽपि नाग्नयः—अग्निरूपेण प्रतिपत्तव्या अपि। तदेवं नियोगवाक्यार्थतायामात्मतत्त्वासिद्धिः साधिता ॥

### मण्डनस्य विपरीतख्यातिर[illegible]व, इति न तत्रापि भाष्यविरोधः; ख्यातौ विपरीत[illegible]प्रयोगस्यान्यथाऽसत्ख्यात्यनिर्वचनीयख्यातिसाधारण्यात्

विपरीतख्यातिस्तु न प्रत्याख्यातुमलम्, येनाख्यातिवादे सर्वं ज्ञानं प्रमेति स्थापयितुं शक्येत। श्रीभाष्यानुयायिनस्तु सर्वज्ञानयाथार्थ्यवादिनो रजतं सदेव मन्यन्ते, असत्ख्यातिवादिनस्तु तदसदिति विशेषः॥

अत्र विपरीतख्यातिपदं न केवलमन्यथाख्यातिवादिभिः, न वाऽसत्ख्यातिवादिभिर्द्वैतिभिः, किन्त्वनिर्वचनीयख्यातिवादिभिरपि प्रयुज्यते। विशेषस्तु "परत्र पूर्वदृष्टस्य संसर्गाध्यासमात्रं नैयायिकानाम्, परत्र स्वरूपतो रजतस्य, तत्संसर्गस्योभयस्याध्यासो द्वैताद्वैतवादयोः। तत्र विशेषस्तु द्वैते रजतमसत्, तदात्मतामात्रेण शुक्तेर्भानम्, अद्वैतमते तु रजतं न सत्ख्यातिवाद इव सत्, असत्ख्यातिवाद इव वा नासत्, किन्तु सदसद्विलक्षणमनिर्वचनीयम्। तत्रापि नैकत्रैकाध्यासमात्रम्, किन्तु परस्पराध्यास इति विशेषोऽनुसन्धेयः॥

अत्र सत्ख्यात्यसत्ख्यात्याद्ययोगेनानिर्वचनीयख्यातिर्विशदं ब्रह्मसिद्धौ निरूप्यते। भामती त्वत्राध्यासभाष्योपक्रमे ब्रह्मसिद्धिमेव प्रायेण शब्दतः, अर्थतश्चानुकरोति॥

तत्रानिर्वचनीयख्यातावपि विपरीतख्यातिरिति पदप्रयोगः। तद्यथा—"अन्ये तु यत्र यदध्यासस्तस्यैव विपरीतधर्मकल्पनामाचक्षते" इति भाष्ये विपरीतशब्दप्रयोगः। तत्र नैयायिकानामन्यथाख्यातिः, विज्ञानवादिनामात्मख्यातिवादश्च विना विपरीतपदम्—तं केचिदन्यत्रान्यधर्माध्यासः" इत्यन्यपदप्रयोगेणैव प्रस्तूयते॥

विभ्रमविवेकेऽपि मण्डनोऽसत्ख्यातिवादनिरसनेन विपरीतख्यातिमनिर्वचनीयख्यातिमेव समर्थयति, न तु भाट्टसिद्धान्तम्, नैयायिकानामन्यथाख्यातिं वा॥

### विपरीतख्यातिरित्यनिर्वचनीयख्यातिरेव, न भाट्टानां ख्यातिः, न च मण्डनो व्यवहारे भाट्टनयमेकान्तेन स्वीकरोति

शास्त्रिपादा अपि स्वीयभूमिकायाम् (पृ. २७-५) विपरीतख्यातिरियमनिर्वचनीयख्यातितो न विवेक्तुं शक्यते; तथापि भाट्टानामेव मण्डनेन

सा समर्थिता—व्यवहारे भाट्ट[illegible]तिनां शरणमिति मत्वेति लिखन्ति ॥
परंतु तत्र भाट्टाः—

"स्वरूप-पररूपाभ्यां नित्यं सदसदात्मके ।
वस्तुनि ज्ञायते रूपं किञ्चित् कैश्चित् कदाचन ॥"

इति मन्वाना नियतसदसत्ख्यातिवादिनः साङ्ख्या इव नान्यथाख्यातिवादिनः, न वा विपरीतख्यातिवादिनः । अत एव षड्दर्शनसमुच्चय आर्हतानां भाट्टापेक्षया विशेषः—भाट्टा नियतसदसत्ख्यातिवादिनः, आर्हतास्त्वनियतसदसत्ख्यातिवादिनः; स्याद्वादवादावलम्बनत्वात्—इति ॥

न च व्यवहारे भाट्टनय इत्येकान्तो मण्डनस्येति विधिविवेकः, ब्रह्मसिद्धेर्नियोगकाण्डश्च । न केवलं प्राभाकरम्, किन्तु भट्टपादमपि वेदान्तविचारावसरेऽपीष्टसाधनत्वविध्यर्थतावादस्वीकारेण निरस्यति । न्यायचन्द्रिकायामानन्दपूर्णमुनिर्ब्रह्मसिद्धिव्याख्याता तु व्यवहारे भाट्टनय इति न मानवं वचनमिति वर्णयति ॥

विधिविवेकः, विभ्रमविवेकश्च ब्रह्मसिद्धेर्मूलभित्तिः । तत्र विधिविवेकार्थो नियोगकाण्डेन, तत्रैव प्रस्तुतानिर्वचनीयख्यातिस्तु भ्रमविवेकार्थः । अतो विपरीतख्यातिरियं मण्डनस्य नान्यथाख्यातिः । अयमेवाशयो भामत्या अपि विभ्रमविवेकं ब्रह्मसिद्धिं चावलम्ब्य "तं केचिदि"त्याद्यध्यासभाष्यं व्याचक्षाणायाः । वस्तुतस्तु विपरीतख्यातिः, अन्यथाख्यातिरिति वोभयमप्यनिर्वचनीयख्यातेरपि साधारणम् । अत एव ब्रह्मसिद्धिः (पृ० १४९-१२) 'प्रतिपादितमेतत् नाग्रहमात्रमेतत्, अन्यथाख्यातिस्तु" इत्यन्यथाख्यातिपदेनाप्यनिर्वचनीयख्यातिं व्यपदिशति । तात्पर्यं तु मण्डनस्यानिर्वचनीयख्यातावेव । अत एव कल्पतरुः—

"स्वरूपेण मरीच्यम्भो मृषा वाचस्पतेर्मतम् ।
अन्यथाख्यातिरिष्टाऽस्येत्यन्यथा जगृहुर्जनाः ॥"

इति । इदं हि मण्डनस्याप्युपलक्षणम् । मण्डनोपजीवी हि वाचस्पतिः ॥

**प्रतिपत्तिविधिपरत्वेऽपि ब्रह्मणोऽपि स्वीकार**
**इति श्रीभाष्यमपि**

तत्राख्यातिवादनिरासप्रसङ्गे विवेकाग्रहस्य भ्रमकारणत्वं बहुधा निरस्यति

ब्रह्मसिद्धिः । अयञ्चाख्यातिवादनिरा[illegible]विशेषणविषयत्वायोगप्रसङ्गा-गतः, इति प्रकृतं तमेवावलम्ब्य ब्रह्मसिद्धिः परीक्षते, तद्यथा 'मा नाम भूत्—विशिष्टविधिमहिम्ना विशेषणस्वरूपं सिध्यतीति, 'व्रीहीन् प्रोक्षती'त्यादौ स्वरूपेण प्रोक्षण एव तदुद्देश्यतया कर्मत्वेन व्रीहीणामपि तात्पर्यविषयत्वम् । अनेनैव न्यायेनात्मनोऽपि प्रतिपत्तिकर्मत्वात् तत्रापि तात्पर्यविधिः कथं न भवतीति शङ्का तु प्रसज्यते ॥

इमामेव नीतिमवलम्ब्य श्रीभाष्यकारा अपि प्राप्यतया पुरुषार्थतयाऽन्वयात् ज्ञानविधेर्ज्ञेयस्य स्वरूपसत्तायामपि प्रामाण्यमिति मन्यन्ते । उक्तशङ्कापरिहारस्तु ब्रह्मसिद्ध्यभिमतो व्रीहीणां प्रमाणान्तरप्राप्तानामुद्देश्यतयाऽन्यतः स्वरूपसिद्धिः, नैवमपहतपाप्मादि स्वरूपमन्यतः सिद्धम्—यदि कार्य एव विधीनां तात्पर्यम्, सिद्धार्थे च न प्रामाण्यम् । तदर्थं सिद्धार्थेऽपि प्रामाण्ये तेन स्वतन्त्रेण, विनैव विधिं ब्रह्मस्वरूपस्य तज्ज्ञानमात्रेण पुरुषार्थस्य सिद्धेर्वितथं प्रतिपत्तिविधिशेषताकल्पनम् । अतो ज्ञानकर्मतया नापहतपाप्मादिस्वरूपात्मसिद्धिः स्याद्—यदि विधिशेषतैव ब्रह्मणो मन्येत । अतोऽत्र ब्रह्मसिद्धिः (पृ. १४९-१४) आत्मज्ञानविधिर्नात्मरूपविलयार्थः । अनात्मविलयनेन वस्तुतोऽवगतिर्दृष्टा । यदि च नात्मनो नाम-रूपप्रपञ्चप्रकाशनम्, किं प्रविलाप्येतेति ॥

**आवरण-विक्षेपशक्तिद्वयवज्जीवाश्रिताविद्यावृतब्रह्मविवर्तः प्रपञ्चः। जीवाश्रितविक्षेपशक्त्यात्मिकाविद्याविक्षेपत्वात् स्वप्न-जागरादिविक्षेपवत्त्वं जीवस्यैव न ब्रह्मणः**

अत्र प्रसङ्गे द्विप्रकारामविद्यां मण्डनः प्रस्तौति (पृ. १४९-१७) "द्विप्रकाराऽविद्या—प्रकाशस्याच्छादिका, विक्षेपिका च । स्वप्न-जागरयोर्विक्षेपिका, सुषुप्त आच्छादिका लयलक्षणा । तत्राच्छादिकाविद्यानिवृत्तिर्ज्ञानविधेः फलम् । तच्चासत्, यतो नाच्छादिकाया अविद्यायाः निवृत्तिः पुरुषेणार्थ्यते तथा, यथा विक्षेपस्य । स हि विविधदुःखात्मकः, लयस्तु विविधदुःखनिवृत्तेरसकृदानन्दत्वेन श्रुतौ गीतः प्रत्युतार्थनीयः ॥

अपि च विपर्यासमनिच्छतोऽविद्याभेद एव न स्यात्; अवस्थात्रयेऽप्यग्रहणमात्रत्वात् । तस्मादग्रहण-मिथ्याग्रहणे द्वे अविद्ये कार्य-कारणभावेनावस्थिते स्वप्न-जागरयोरुभे, कारणभूताग्रहलक्षणा सुषुप्त इत्यविद्याप्रविभागः—इति ॥

अनेन चेदमवगम्यते [illegible] वरणशक्त्यात्मिका, अपरा तु विक्षेपकशक्त्यात्मिका। तत्रोभयोरपि स्वप्न-जागर-सुषुप्तिष्वेव कार्यकारित्ववर्णनात्। जीवाश्रितमेवाविद्याद्वयमपि तदुभयोपहितमेव संविन्मात्रं विवर्तमानतया, अधिष्ठानविधया वोपादानम्। तच्चोपहितमेकमेव। तद्धि स्वोपाध्यविद्ययाऽऽवृतम्, विक्षिप्तं च भवति। तादृशविक्षेपाश्रया जीवा अनेके नानाऽऽवरण-विक्षेपाणामाश्रया अविद्याविशिष्टाः॥

**अविद्याभेदेन जीवानां भेदेऽप्येकब्रह्मप्रतिबिम्बत्वात् ब्रह्माभेदो जीवानाम्, अतो ब्रह्मसिद्धिमते बिम्ब-प्रतिबिम्बभाव एव, नावच्छेदवाद इति प्रतिभाति, भामत्याशयस्तु औपाधिककर्त्राश्रयत्वात्, प्रतिबिम्बत्वोपचारमात्रम्। अतोऽवच्छेदवादः; किञ्चिज्ज्ञत्व-सर्वज्ञत्वव्यवस्था च**

तत्रोपादानत्वमुपहितरूपस्य, तत्रोपहितस्यैकस्य रूपाणि जीवा अनेकेऽपि बिम्ब-प्रतिबिम्बन्यायेन भिन्नाः, अभिन्नाश्च॥

अत्र जीवानामावरणशक्तिमदज्ञानकार्याग्रहणान्वयित्वेन किञ्चिज्ज्ञत्वादि, विक्षेपशक्तिमदज्ञानकार्यान्तःकरणाद्याश्रयत्वेन चाहमादिप्रतीतिविषयत्वम्। अत्राग्रहण-मिथ्याज्ञानात्मनाऽविद्या जीवाश्रयाऽऽवरण-विक्षेपशक्तिमदविद्याद्वयोपधानमात्रेण ब्रह्मणो जगदुपादानता, इत्युपाधि-तत्कार्याश्रयत्वेन जीव-ब्रह्मविभागः। अत एव जीवो न जगत्कारणम्, न वा ब्रह्माग्रहणमिथ्याज्ञानाश्रयः, इति किञ्चिज्ज्ञत्व-सर्वज्ञत्वादिव्यवस्था। अज्ञानाश्रया जीवाः, अज्ञानं नानेति सिद्धान्तस्त्वग्रहणमिथ्याज्ञानत्वमाश्रित्यापि। सति चैवम्:—

अनिर्वाच्याविद्याद्वितयसचिवस्य प्रभवतो
विवर्ता यस्यैते वियदनिल-तेजोऽबवनयः।
यतश्चाभूद्विश्वं चरमचरमुच्चावचमिदं
नमामस्तद् ब्रह्मापरिमितसुखज्ञानममृतम्॥

इत्यत्र नाग्रहणमिथ्याज्ञानपदवाच्याविद्याद्वितयस्य ग्रहणम्; तदकार्यत्वात् वियदादिविक्षेपस्य; यतो न जीवो जगत्कारणं ब्रह्मसिद्धिमते, तदनुयायिवाचस्पतिमते च। इदमेवाभिप्रेत्य जगद्वाचित्वाधिकरणे कल्पतरुः—

11

"जीवाज्ञानाद् जगत् ब्रह्मविवर्तं ब्रुवन्।
क्षिपन् समन्वयं जीवे न लेजे वाक्पतिः कथम् ॥"

इति । वाचस्पतिरपि हि—अत्त्रधिकरणादौ संहर्तृत्वलिङ्गेन जीवातिरिक्तमेव जगत्कारणं विवेचयति ॥

### अग्रहणस्यैवाविद्यात्वमिति वादायोगः

अतः—'अनिर्वाच्याविद्याद्वितयसचिवस्ये'त्यत्राविद्याद्वयमग्रहण-मिथ्याज्ञानाख्यमेवेति केषांचन विवरणं न साधु । तत्राग्रहणस्यैवाविद्यारूपत्वेऽग्रहणकार्यं विपर्यासोऽख्यातिवाद एव स्यात्, न तु विपर्यये । तत्र विपर्ययनिबन्धनो विपर्ययः "अन्योन्यस्मिन्नयोन्यात्मकतामन्योन्यधर्मांश्चाध्यस्य 'अहं ममेदमि'ति नैसर्गिको लोकव्यवहारः" इत्युपपद्यते बीजाङ्कुरन्यायेन ॥

न चैवमप्यग्रहण-मिथ्याज्ञानमात्रे अविद्ये; ताभ्यां जगद्विवर्तानुपपत्तेः । अत एवाध्याससिद्धान्तभाष्ये 'मिथ्याज्ञाननिमित्तः' इति मूलाज्ञानमपि निर्दिश्यते । तत्रापि मिथ्याज्ञानस्यैव ग्रहणेऽनिर्वाच्याविद्याद्वयानुवादानुपपत्तिः । तद्द्वितीयत्वं तु मूलाज्ञानमादायैव ॥

### 'तदधीनत्वादर्थवदि'ति सूत्रभाष्यं जीवाश्रयाविद्यायां प्रमाणम्

यत्तु—"तदधीनत्वादर्थवत्" इति सूत्रे—'अविद्यात्मिका बीजशक्तिरव्यक्तशब्दनिर्देश्या परमेश्वराश्रया मायामयी महासुषुप्तिः, यस्यां स्वरूपप्रतिबोधरहिता शेरते संसारिणः" इति भाष्यम्, तत्राविद्या मायेति शब्दभेदो मायाऽविद्ययोर्भेदव्यपदेशात्, शक्तिभेदेऽपि स्वरूपैक्यमभिप्रेत्य वा । तत्र परमेश्वराश्रयत्वं तदुपाधित्वमात्रेणेति ब्रह्मसिद्धेराशयः ॥

### ब्रह्मसिद्धिमते भामतीमते चाविद्याया न मिथ्याज्ञानत्वम्

अत एव बीजशक्तिरिति । अग्रहण-मिथ्याज्ञाने तु बीजशक्तिः, तत्र परमेश्वरत्वं संविन्मात्रस्योपहितरूपाभिप्रायम् । प्रस्थानान्तरे तु ब्रह्माश्रया, ब्रह्मविषयिणी चाविद्याऽऽवरणशक्तिमती जगदुपादानं परिणामविषया, ब्रह्मसिद्धिप्रस्थाने त्वविद्योपाधिवशाद् ब्रह्मैव केवलमुपादानम्, नाविद्याऽपीति तत्त्वम् । अध्यासभाष्येणान्तःकरण-चैतन्ययोरेव परस्पराध्यासचर्चा मिथ्याज्ञाननिबन्धन-

कार्याध्यासमात्राभिप्रायेण त[illegible]र्यन्ते [illegible]य मूलाज्ञानोपहितरूपेण जगदुपादानत्वमनपहायैवाध्यासभाष्यमिति सूचनार्थमेव

"अनिर्वाच्याविद्याद्वितयसचिवस्य प्रभवतः"

इति भामती। अत एवोत्तरसूत्रम् "जन्माद्यस्य यतः" इति ॥

### ब्रह्मसिद्धौ नैकमुक्तौ सर्वमुक्तिः

तत्र जीवस्य मिथ्याज्ञाननिवृत्तिस्तन्मूलसंविन्मात्रस्वरूपमात्रसाक्षात्कारेण, स च यस्य, तस्यैव मुक्तिः, इति नैकमुक्तौ सर्वमुक्त्यापत्तिः ॥

### अज्ञाननिवर्तकं ज्ञानं तृतीयप्रतिपत्तिः साक्षात्कार एव, यत्र न विधिव्यापारः; इत्यविधिपक्ष एव

इदं च ज्ञानाज्ञानयोरेव विरोधात् वेदान्तानामात्मतत्त्वावगतिमात्रपर्यन्तत्व एव युज्यते, न तु तद्विधानेऽपि। विधितन्त्रं ह्यनुष्ठानापेक्षमेव फलसाधनम्, न ज्ञानमात्रेण। विधेयत्वे ह्यात्मज्ञानस्य "स क्रतुं कुर्वीत"त्यादाविवादृष्टार्थत्वापत्तिः। अवगतिमात्रपर्यन्तत्वे तु दृष्टं फलमज्ञाननिवृत्तिः। न च दृष्टे फलेऽदृष्टं फलं युज्यते। सति चैवं किमर्थं "श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" इति श्रवणादिविधिः? शब्दस्यार्थज्ञानजनकत्वस्य लोकसिद्धत्वात् ॥

### न च श्रवणादौ नियमविधिः; असंभवात्

न च व्रीह्यवघातादिवद् नियमार्थम्; तत्र नियमापूर्वद्वारा क्रतुफले परम्परयोपयोगाद् युक्तो नियमविधिः। न चायं न्यायः श्रवणादिविधौ; अत्रापि नियमापूर्वार्थत्वेऽदृष्टार्थत्वपर्यवसानात्। अदृष्टार्थमुपासनाविधिना किमपराद्धमिति शङ्का तु मण्डनेनैव परिह्रियते। नात्र नियमविधिः; वेदान्तविचाररूपार्थज्ञानार्थताया अध्ययनविधिनैव सिद्धत्वात्—इति ॥

यत्रार्थज्ञानस्यापि क्रत्वपूर्व उपयोगः; तत्र विचारनियमोऽर्थवान् स्यात्। न चात्रात्मतत्त्वज्ञानमदृष्टार्थम्, इति नात्र श्रवणादीनां विधिः। तव्यप्रत्ययस्तु आत्मतत्त्वविमुखस्याभ्युदयमात्राभिमुखस्य निःश्रेयसार्थिनश्च निःश्रेयससाधनेऽभिमुखीकरणार्थम्; यथा द्रष्टव्यार्थविमुखं पुरुषमुद्दिश्य 'पश्येदमि'ति द्रष्टव्याभिमुखीकरणार्थता, तत्रैव चक्षुरादिव्यापारार्थं तु दर्शनविधिः ॥

### ज्ञाने न विधिः ; अकर्तव्यत्वा..., किन्तु तदुपाये

विधिस्तु तत्र कृतिसाध्ये चक्षुर्व्यापार एव, एवमत्रापि ज्ञाने न विधिः, किन्तु तदुपाये। अतो नात्र तव्यप्रत्ययानुपपत्तिः। विधित्वञ्चात्राज्ञातज्ञापनविधया, न तु प्रवर्तनविधया ; प्रमाणतन्त्रस्य ज्ञानस्य पुरुषतन्त्रत्वाभावात्। अलौकिकेऽपहतपाप्मादिरूप आत्मतत्त्वे शब्दात् प्रतिपन्ने तस्य साक्षात् तदनुभवोपायत्वात् स्वयमेव पुरुषस्याभिमुख्यं भवति, इति व्यर्थं तद्विधानम्—यत् आश्चर्यभूते कस्मिंश्चिदर्थे आगमात् प्रतिपन्ने तस्य साक्षात्करणे स्वयमेवोन्मुखत्वं भवति ॥

### ज्ञानोपायेषु तु विधिरेव, श्रवणं तु ज्ञानम्, नोपायः, अतो न तत्र भाष्यं मूलम्

न चैतावता तदुपायेष्वपि ज्ञानेषु विधानं वार्यते। श्रावणादिशब्दार्थस्तु ज्ञानमेव। तत्र शाब्दं ज्ञानं श्रवणम्। तदेव विमलीकृतमुपपत्त्याऽनुमानेन वा मननम्, तदेव सम्पत्स्यमानं निदिध्यासनं भावना नाम, तन्निबन्धनं साक्षात्करणं तु दर्शनम्, इति सर्वस्य प्रमाणतन्त्रज्ञानरूपत्वाद् न तत्र विधिः ॥

अयं च मण्डनसिद्धान्तः समन्वयसूत्रगतः—"किमर्थानि तर्हि 'आत्मा वा अरे द्रष्टव्यः' इत्यादीनि विधिच्छायापन्नानि वाक्यानि ? स्वाभाविकप्रवृत्तिविषयविमुखीकरणार्थानीति ब्रूमः" इति भाष्यसिद्धान्त एव ॥

### मण्डन-वाचस्पत्योर्न विरोधः

'न च ज्ञानं विधेयमि'त्यत्र मुख्या युक्तिस्तु 'द्रष्टव्यः' 'श्रोतव्यः' 'मन्तव्यः' 'निदिध्यासितव्यः' इति पदचतुष्टयप्रयोगः। तत्रोपासनाविधिरेव यदि 'स क्रतुं कुर्वीते'त्यादाविव विवक्षितः, तर्हि—एकेन पदेन तन्निर्वाहात् पुनरुक्तानि बहूनि पदानि ; यथा—श्रीभाष्यमतेऽनुवादपराणि श्रोतव्यादिपदानीति। इदं तु नामान्तरेण वैयर्थ्यदूषणस्य हृदयेनाभ्युपगममात्रम्। यत्र तु ज्ञानोपदेशः, तत्रैव मननाद्युपदेशोऽपि ; यथा "अधीहि भगवो ब्रह्मे"त्युपदेशपर्यनुयोगे "यतो वा इमानि भूतानि जायन्ते" इति तत्त्वोपदेशे कृतेऽपि पुनः पुनः तत्त्वनिर्णयार्थम् 'तपसा ब्रह्म विजिज्ञासस्वे'ति। अतो न श्रोतव्यवाक्यं नियोगपरम् ॥

### सविशेष एवोपासनादिविधिः, न तु निर्विशेषे

अतो नात्रामृतत्वफलार्थं ध्यानविधानम्। तत्र वाक्यान्तरावगतस्य

तत्त्वस्य ध्यानविधानं तु न वार्यते—यथा "विज्ञाय प्रज्ञां कुर्वीते"त्यादौ। न च वेदान्तेषु न ध्यानविधिरेवेत्यद्वैतसिद्धान्तः, मण्डनाभिप्रायो वा, यत्र 'स क्रतुं कुर्वीत' इति नाम-रूपोपाधिकमनोमय-प्राणशरीरादिरूपानुसन्धानविधिः, न तु सकलविशेषातिगतनिर्विशेषस्वरूपतत्त्वानुचिन्तनविधिः कुत्रापि॥

### श्रोतव्यादिवाक्येऽविधित्वेऽपि तव्यप्रत्ययोपपत्तिः

अत इदमवसीयते——वेदान्तवाक्यानि सविशेषपराणि तद्विषयोपासनानियोगपराणि वा भवन्तु नाम। निर्विशेषसंविन्मात्रोपदेशप्रकरणं तु नात्मतत्त्वविज्ञानविधिपरम्। तव्यप्रत्ययास्तु "आत्मा वा अरे द्रष्टव्यः" इत्यादावर्हार्थाः "विष्णुरुपांशु यष्टव्यः" इत्यादाविव, इति न ज्ञानाविधिपक्षेऽपि विरुध्यते॥

### चोदनालक्षणोऽर्थो धर्म इति सिद्धार्थपरमपि

अत एव शास्त्रभेदः, जिज्ञासाद्वयं च। "चोदनालक्षणोऽर्थो धर्मः" इति तु सिद्धार्थविचारस्याप्युपलक्षणम्; अन्यथा कथं मन्त्रार्थवादादीनां प्रामाण्यं तत्र संगतं स्यात्? अतो ज्ञायते 'चोदनालक्षणोऽर्थो धर्मः इति धर्ममीमांसापरम्, 'अथातो ब्रह्मजिज्ञासे'ति सिद्धवेदार्थजिज्ञासापरम्। उभयत्रापि चोदनालक्षणपदेन वेदार्थस्यैव विवक्षणेऽपि न शास्त्रैक्यम्, किन्तु शास्त्रभेद एव॥

'स्वाध्यायानन्तर्यं तु समानम्' इति भाष्याशयोऽनेन विशदीक्रियते। वेदार्थविचारत्वे समानेऽपि "अथातो ब्रह्मजिज्ञासे"ति जिज्ञासान्तरप्रतिज्ञावैयर्थ्याद् न शास्त्रैक्यमुभयोरपि मीमांसयोरिति। व्यक्तीकृतं चैतद् भाष्य एव समन्वयसूत्रोपसंहारे—"प्रतिपत्तिविधिपरत्वे हि "अथातो धर्मजिज्ञासे"त्येवारब्धत्वाद् न पृथक् शास्त्रमारभ्येत—"अथातो ब्रह्मजिज्ञासा" इत्यादि। सर्वं चेदं भामत्याम्—'स्वध्यायानन्तर्यं तु समानमि'त्यस्यावतरणादिमुखेनानुसंहितम्। इदमेवात्र चित्रम्—यत् श्रीभाष्यानुयायिनो भामतीप्रकरणमिदं शास्त्रैक्यसमर्थनपरतया योजयन्ति॥

### मण्डनमतेऽपि "चोदनालक्षणोऽर्थो धर्मः" इति प्रभाकरमत इव धर्मपदं वेदार्थपरम्

मण्डनो हि "अथातो धर्मजिज्ञासा" इत्यत्र धर्मपदं प्रभाकर इव वेदार्थपरं मन्यते, न तु कुमारिलवत् क्रियामात्रपरम्। अतः प्रभाकरवत् वेदार्थविचारत्वोपाधिकमेकशास्त्रत्वम्, इत्यध्ययनविधिमूलकत्वमेव वेदान्त-विचारस्यापि

तन्मते। इदमेवाभिप्रेत्य वेदार्थविचारत्वेनैकप्राबन्ध्यमद्वैतसिद्धान्तस्याविरुद्धमिति विविच्यते, न तु विषय-प्रयोजनैक्येन ॥

### वेदार्थस्यापि सिद्ध-साध्यभेदेन द्वैविध्यं मण्डनमते

इयांस्तु विशेषः–नियोगो न विनाऽपूर्वमिति प्रभाकरमतम्, सिद्ध-साध्यभेदेन वेदार्थभेदमवान्तरमादाय मण्डनसिद्धान्तः ॥

अयं च विशेषः—विध्यर्थो नियोगः, स चेष्टसाधनत्वमिति सिद्धान्त-भेदेन। अत्रापि भाट्टसिद्धान्तं प्रभाकरवद् मण्डनोऽपि नाद्रियते ॥

तत्र पूर्वमीमांसान्यायप्रसङ्गे बहूनामेव शब्दतोऽर्थतः संगृह्णाना भाव-शुद्धिः सत्यविरोधे प्रभाकरप्रस्थानमेव मण्डनस्येति ज्ञापयति ॥

### ज्ञानपराणामपि ज्ञानस्यापि क्रियात्वात् कार्यपरत्वमेव मण्डनमते, तदेव भाष्यस्यापि

तत्र "आम्नायस्य क्रियार्थत्वादि"त्यत्र नियोगविषयक्रिययैव वेदवाक्यानां पर्यवसानमिति प्रभाकरः। स च साक्षाद् अनुबन्धविधया दध्यादीनामिति तत्सिद्धान्तः। मण्डनस्तु क्रियापदेन ज्ञानमपि विवक्षति। अतो वेदान्तानां ज्ञानपर्यवसानेनापि क्रियार्थत्वम्; विध्यर्थस्येष्टसाधनत्वानतिरेकात्। व्यक्तीकृतं च पूर्वं ज्ञानक्रियात्वसमर्थनपरमेव—"ननु ज्ञानं नाम मानसी क्रिया, न" इत्यादिभाष्यमिति भामत्युद्धरणेन ॥

अत एव भाष्यम्—"क्रियार्थत्वं च प्रयोजनं तस्य, (आम्नायस्य) इति। यस्तु तत्रोपसंहारः 'तदवगत्या मिथ्याज्ञानस्य संसारहेतोर्निवृत्तिः प्रयोजनं क्रियत इत्यविशिष्टं क्रियासाधनवस्तूपदेशेनेति, स तु ज्ञानात्माऽविद्यास्तमय एव,

"निवृत्तिरात्मा मोहस्य ज्ञातत्वेनोपलक्षितः।"

इति मण्डनाभिमतमोक्षपर्यवसायित्वेन वेदान्तानां प्रामाण्यमवगमयतीति ॥

### मण्डनसिद्धान्तस्य नोद्भाव्यत्वम्

सर्वोऽप्ययं सिद्धान्तो मण्डनसिद्धान्तमेवोपष्टम्भयति। वाचस्पतिमिश्रस्य भामतीनाम्ना भाष्यव्याख्याने प्रयत्नस्तु 'मण्डन उद्भाव्यमेव कमपि सिद्धान्तं प्रस्थापयती'ति केषांचन भ्रमं वारयितुम्। न हि मण्डन उद्भाव्यं किमपि

लिखति, न वा भाष्यतः प्राचीनमपरं तद्विरुद्धं सम्प्रदायं वाऽनुवर्तते। भामत्याशयो हि विवरणप्रस्थानमूलं पञ्चपादिकासिद्धान्त एवोद्भाव्यम्—इति ॥

**कठवल्ल्युपनिषदेव मण्डनाभिमतपरस्वरूपतत्त्वे मूलम्**

कठवल्ल्युपनिषदि हि—

"येयं प्रेते विचिकित्सा मनुष्येऽस्तीत्येके नायमस्तीति चैके।
एतद्विद्यामनुशिष्टस्त्वयाऽहं वराणामेष वरस्तृतीयः ॥"

इति नचिकेतःप्रश्नोत्तरप्रसङ्गेन—

"ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्धे।
छायातपौ ब्रह्मविदो वदन्ति पञ्चाग्नयो ये च त्रिणाचिकेताः ॥"

इत्यौपाधिकम्, अनौपाधिकं च जीवात्मतत्त्वमेव परमात्मपरतत्त्वमिति बोधयन्ती औपाधिकधर्मवदुपहितानुपहितभेदेन द्विविधमात्मस्वरूपं प्रस्तुत्यानुपहितशुद्धात्मतत्त्वं मण्डनाभिमतमेवोपदिशति ॥

**तैत्तिरीयोपनिषदपि मण्डनसिद्धान्ते मूलम्**

अयमेव न्यायः—तैत्तिरीयोपनिषद्यपि, यत्रापि "ब्रह्मविदाप्नोती"ति प्रस्तुतं ब्रह्मस्वरूपमन्नमयाद्यौपाधिकधर्मवदात्मस्वरूपमुखेन, अविद्योपहितानन्दमयपरामर्शेन च 'ब्रह्म पुच्छं प्रतिष्ठा" इति 'अन्नं ब्रह्मेति व्यजानात्" इत्येवमुपक्रमेण 'सैषा भार्गवी वारुणी विद्या परमे व्योमन् प्रतिष्ठिता" इत्युपसंहारेण च मण्डनाभिमतमेवात्मतत्त्वमुपदिश्यते ॥

**सन्मात्रप्रामाण्यवादस्य गौडपादकारिकामूलकत्वम्**

सन्मात्रप्रामाण्यवादो यद्यपि विशदं भाष्ये न प्रस्तूयते, तथापि नायमपि भगवत्पादसम्प्रदायतो बाह्यः। अयं हि "सद्भावेन ह्यजं सर्वमि"ति गौडपादकारिकामूलक इति यथावसरमधस्तादावेदितम् ॥

॥ इति नियोगकाण्डार्थसंग्रहः ॥

**अथ सिद्धिकाण्डार्थसंग्रहः**

**काण्डचतुष्टयप्रतिपाद्यार्थसंग्रहः**

प्रथमेन काण्डेन ब्रह्मस्वरूपमुपनिषदेकसमधिगम्यमद्वितीयं प्रस्तुत्य, तर्ककाण्डेन तस्य प्रत्यक्षविरोधादद्वितीयत्वमाक्षिप्य, प्रत्यक्षस्य सन्मात्रविषयकत्वेन,

मिथ्यात्वाविरोधिसत्त्वाविषयकत्वेन, व्यावहारिक-पारमार्थिकसत्त्व-तदभावा-विषयकत्वेनोभयविरोधेन च वेदान्तनां न प्रामाण्यम्; वाक्यानामितरा-न्वितार्थबोधकत्वनियमादित्याशङ्क्याखण्डेऽपि ब्रह्मणि वेदान्तानां प्रामाण्यं प्रति-पाद्य, तृतीयेन वेदान्तानां कार्यपरतयैव प्रामाण्यात् सिद्धेऽर्थेऽप्रामाण्यमाशङ्क्य, सिद्धेऽप्यर्थे प्रामाण्यं विविच्य, तुरीयकाण्डेनाखण्डे ब्रह्मणि वेदान्तानां न प्रामाण्यम्; वाक्यानामितरान्वितार्थबोधकत्वनियमादित्याशङ्कयाखण्डे ब्रह्मणि वेदान्तानां प्रामाण्यं समर्थ्यते। तेन प्रथमकाण्डप्रस्तुतस्य प्रत्यक्षाद्यसिद्धस्य वेदान्तेन साधनात्, "अथातो ब्रह्मजिज्ञासा" "शास्त्रयोनित्वात्" "तत्तु समन्वादि"ति त्रिसूत्र्यर्थस्य सिद्ध्या ब्रह्मसिद्धिरिति निबन्धतात्पर्यम् ॥

### ब्रह्मणोऽखण्डस्यावाच्यस्यानौपनिषदत्वमिति शङ्का

तत्रान्तर्याम्यादिपदं ब्रह्मणः प्रमाणान्तरासिद्ध्या सङ्गतिग्रहासम्भवाद् न बोधकम्; वाक्यं तु न वाचकम्, अन्विताभिधानवादेऽन्वितार्थानां पदानामेव वाच्यतयाऽनन्वितेऽखण्डेऽपदार्थे वाक्यानां न प्रामाण्यम्, अभिहितान्वयवादे यद्यपि वाक्यार्थोऽभिहितार्थनिबन्धन एव, न तु पदाधीनः; तथापि तत्राप्यर्थस्य पदेनाभिधानं विना नोपपद्यते तत्र प्रामाण्यम्, लक्षणा तु पदान्तरवाच्य एव दृष्टचरी 'गङ्गायां घोषः' इत्यादौ, यत्र तीरं लक्ष्यं तीरपदस्य वाच्यम्, न चाखण्डवाचकं किमपि पदमस्ति, इति न लक्षणाऽपि तत्र संभवति। अतो वेदा-न्तानामखण्डे ब्रह्मणि न प्रामाण्यमिति शङ्का ॥

### इयं शङ्का नान्यत्र ब्रह्मसिद्धितः

श्रीमदानन्दतीर्थस्य सिद्धान्त ईक्षत्यधिकरणे, शतदूषण्या एतदाशङ्काया एवाद्वैतदूषणत्वेनोपक्षेपोऽपि ब्रह्मसिद्ध्युपक्षिप्तसमाधानापरामर्शेन, इयं तु शङ्का भगवत्पादैरन्यैर्वा कैरपि न समाहिता। शङ्का हीयमन्वितार्थबोधकत्वमेव वाक्यसामान्यस्येति मन्वानानां सर्वेषामपि संभाव्यते, परं तु कैर्वा कस्मिन् वा निबन्धे प्रस्तुतेति न ज्ञायते ॥

इयमेव शङ्का सिद्धान्त इति श्रीमदानन्दतीर्थपादैरीक्षत्यधिकरणे व्यवस्थाप्यते—ब्रह्म, अवाच्यम्, नेक्षतेः=प्रमाणाविषयत्वात्, अवाच्यस्या-प्रमेयत्वादिति सूत्रयोजनया। अतो ज्ञायते—सूत्रकारोल्लिखितेयं शङ्केति श्रीमदा-नन्दतीर्थाशय इति। "अथातो ब्रह्मजिज्ञासा" "शास्त्रयोनित्वादि"ति सूत्राभ्यां

ब्रह्मणः शास्त्रगम्यत्वे प्रतिज्ञाते, निर्धारिते च तत्र समन्वये समन्वयाधिकरणेन, नेयं शङ्का क्षोदक्षमेति तु भगवत्पादाशय इति ब्रह्मसिद्धिरभिप्रैति ॥

न केवलं श्रीमदानन्दतीर्थेन, किन्तु श्रीभाष्यानुयायिन्या शतदूषण्याऽपीयं शङ्काऽद्वैतसिद्धान्त आपाद्यते, यस्याः समाधानं न्यायरत्नदीपावली, पदार्थसंग्रहश्चानन्दानुभवस्य विशदयति—वाच्यस्य, प्रमेयस्य वा लक्ष्यत्वमिति न नियम इतीक्षु-क्षीरमाधुर्यादिदृष्टान्तेन—'न हीक्षु-क्षीर-गुडादीनां रसः सरस्वत्याऽप्याख्यातुमलमि'ति भामत्युपक्षेपेण । ततो न्यायसुधा जयतीर्थस्य माधुर्यादीनामपि माधुर्यविशेषशब्दवाच्यत्वाद् नावाच्यस्य लक्ष्यत्वमिति श्रीमदानन्दतीर्थाशयं समर्थयति । सर्वं चेदं ब्रह्मसिद्धेरुक्तशङ्कायाः समाधानमपरामृश्यैवानन्दतीर्थ-जयतीर्थादयः किमपि किमपि लिखन्ति ॥

ब्रह्मसिद्धेरुक्तशङ्कायाः समाधानम्

ब्रह्मसिद्धिर्हि—

सामान्येन पदार्थत्वे सिद्धेऽसाधारणैर्गुणैः ।
शक्यार्थस्य विशेषस्य लोकवत् प्रतिपादनम् ॥

इति 'द्वीपविशेष एवंनामानो मरकतमयपादा पद्मरागमयाश्चञ्चवः सौवर्ण-राजतपक्षाः पक्षिणः' इति पक्षिसामान्यं प्रमाणान्तराधिगतमनन्यसाधारणेन धर्मकलापेन संसृज्यमानं प्रमाणान्तरानधिगतं विशेषरूपमासादयति, वाक्येन च प्रमीयते प्रमाणान्तराधिगतेन विशेषरूपेण, किं बहुना ? 'सर्वस्यैव वाक्यस्य प्रमाणान्तरानधिगतो विशेष एव प्रमेयः' इत्यनेन न्यायेन कारणसामान्यम्, सत्सामान्यं वा "यतो वा इमानि भूतानि जायन्ते" इति "अस्थूलमनण्वि"त्यादिपदार्थैः संसर्गाद्, भेदाच्च प्रमाणान्तरानधिगतं विशेषरूपमासादयति, वाक्यस्य च प्रमेयं भवति, इति लोकसिद्धपदार्थान्वयमुखेनैवार्थप्रतिपत्तेर्नानवबोधकत्वम्, अनुवादकत्वं वेति शङ्कामिमां समाधत्ते ॥

तत्र सद्रूपं ब्रह्म न शब्दमात्रेण, किन्तु सर्वप्रमाणेन प्रमीयते, यतः—

" सर्वप्रत्ययवेद्येऽस्मिन् ब्रह्मरूपे व्यवस्थिते ।
प्रपञ्चस्य प्रविलयः शब्देन प्रतिपाद्यते ॥ "

इति सदात्मना प्रसिद्धं ब्रह्मेति, 'सदेव सोम्येदमग्र आसीदि'ति सर्वतादात्म्यापन्नतया बोधनं कथं न वाक्याधीनम् ?

अत एव भाष्यम्—"न हि शास्त्रमिदन्तया ब्रह्म बोधयति; अविद्यानिवृत्तिपरत्वाच्छास्त्रस्ये"ति। न हि सद्रूपब्रह्मव्यतिरेकेण कस्यापि प्रतीतिरस्ति, अन्यथा घटादीनामपि स्वतः प्रतिपत्त्यभावात् सर्वमप्रमेयं स्यात्; स्वरूपतोऽप्रमेयत्वात् ॥

वस्तुतस्तु प्रत्यक्षादेः सन्मात्र एव प्रामाण्यस्य पूर्वं साधनात्, विकल्पानां सर्वेषामप्रमेयत्वात् 'सदेव ब्रह्म प्रमेयम्, तच्चाखण्डमपि ब्रह्म संवेद्यम्; तत्त्वमस्यादिवाक्यजन्याया वृत्तेः तदाश्रिताज्ञाननिवर्तकत्वेनैव तस्य प्रमेयत्वात्। न च प्रमाणान्तरप्रमेयस्यैव वाक्यप्रमेयत्वं नियतम्; स्वर्गकामादिवाक्यानामप्रामाण्यापत्तेः। तत्र वाच्यत्वं विशिष्टस्य ब्रह्मण एव भवतु, निर्विशेषं तु ब्रह्म विशेषनिषेधमुखेन कथं नाप्रमेयम्, प्रसिद्धिमात्रं हि प्रमेयस्य सामान्यरूपमपेक्ष्यते। अतः श्रीमदानन्दतीर्थपादानामवाच्यस्याप्रमेयत्वनिरासपरतयेक्षत्यधिकरणयोजनं न क्षोदक्षमम् ॥

### आनन्दपूर्णविद्यासागरस्य तदीयन्यायचन्द्रिकाया-मुक्ताशङ्कासमाधानप्रकारः

आनन्दपूर्णमुनिस्तु भावशुद्ध्या स्वीयया निर्णीतं तत्त्वमेवाश्रित्य न्यायचन्द्रिकायां प्रसिद्धिमात्रेण वाक्यबोध्यत्वमविरुद्धमवाच्यस्याप्रमेयस्यापीति प्रतिपादनेनैव न्यायसुधोक्तां शङ्कां निरस्यति ॥

### अभिहितान्विताभिधानवादद्वयेऽप्युक्तशङ्का नावतरति

तत्र वाक्यानां विनाऽपि पदार्थाभिधानमर्थाध्याहारेणाप्यनुभावकत्वमभिहितान्वयवादे दृष्टम्। तच्च पदार्थतासमान्यरूपेण प्रसिद्ध्यापि निर्वहतीत्यनुपदमेवोक्तम्, इत्यभिहितान्वयवादेनापि वाक्यस्य प्रमेयं ब्रह्म। अयमेव न्यायोऽन्विताभिधानवादेऽपि। उभयत्रापि हि तात्पर्यविषयत्वमेवान्वयपदार्थः, न तु संसर्गः। तत्र संसर्गस्यैवान्वयपदार्थत्वेऽपि संसर्गसामान्य एव शक्तिग्रहात्, तद्विशेषस्य प्रमाणान्तरावेद्यस्य, अवाच्यस्य च कथं वाक्यप्रमेयता?

### 'सन् घटः' इत्यादिज्ञानानां नाज्ञाननिवर्तकत्वं ब्रह्मविषयत्वेऽपि

तत्र सर्वप्रत्ययवेद्यत्वेऽपि ब्रह्मणो न घटादिज्ञानादेव मुक्त्यापत्तिः; ज्ञानाज्ञानयोरुभयोरुपहितान्याविषयकत्वे सत्युपहितविषययोरेव विरोधेनाखण्डब्रह्मज्ञानस्यैवाज्ञाननिवर्तकत्वात्, तस्याज्ञानाखण्डाकारवृत्त्योरेव संभवाच्च।

'सन् घटः' इत्यादिज्ञानं ह्यविद्योपहितान्यं सत्तादात्म्यापन्नं घटादिकमपि विषयीकरोति, न त्वज्ञानविषयं संविन्मात्रमखण्डाकारवृत्तिरिव ॥

'आनन्दमेकमि'ति प्रथमकारिकासंग्रहव्याजेनाज्ञाननिवृत्ति-
स्वरूपं ब्रह्मैव पुरुषार्थं इति विवेचनम्,
भावाद्वैतनिरासश्च

अथ—

आनन्दमेकममृतमजं विज्ञानमक्षरम् ।
असर्वं सर्वमभयं नमस्यामः प्रजापतिम् ॥

इत्युपक्रान्तं स्वप्रकाश-सच्चिदानन्दरूपं ब्रह्म सञ्जिहीर्षुः ब्रह्माज्ञाननिवृत्तिरूप-विज्ञानात्मकमेव पुरुषार्थः । आनन्दरूपत्वोपहितात्मा मुख्यः पुरुषार्थः; हिततमत्वात् । हितसाधनं हि गौणः पुरुषार्थः । न च हितसाधनपरमेव वाक्यं प्रमाणम् । वस्तुतस्तु प्रमाणस्य प्रमाणत्वं न पुरुषार्थपर्यवसायित्वेन ; उपेक्षाविषयाणामपि प्रमाणेन प्रतिपादनात् । न च प्रवृत्तिपराणामेव वाक्यानाम्, निवृत्तिपराणां वा तत्, किन्तु भूतार्थनिष्ठानामपीत्यधस्ताद् विशदम् । "तत्त्वमसी"ति हि तत्त्वम्पदार्थैक्योपदेशेनैव श्वेतकेतोरनुशासनमुपसंहरति, न तु तं प्रेरयति । अतः सच्चिदानन्दरूपेणाज्ञाननिवृत्तिरूपवृत्त्युपलक्षितं प्रत्यस्तमितनिखिलभेदं ब्रह्म प्रमाणान्तराविरोधाद् भूतार्थमप्याम्नायैकसमधिगम्यं स्वयं पुरुषार्थश्चेति सिद्धमिति विवेचयति ॥

इति सिद्धिकाण्डार्थसंग्रहः,
विमर्शश्च

अथ ब्रह्मसिद्ध्याऽऽलोचितानां प्रधानानां तत्त्वानां संग्रहः

तत्र ब्रह्मकाण्डे ब्रह्मसिद्धिः साक्षात्, प्रसङ्गाच्चोपरि दृश्यमाना अद्वैतप्रक्रियाः संगृह्णाति

(१) दुःखनिवृत्तिः, कामनिवृत्तिर्वाऽभावरूपा नानन्दस्वरूपं ब्रह्म, किन्तु भावरूपमेव

(२) रागेच्छयोस्तत्त्वदर्शन-तदभावनिबन्धनात् स्वरूपभेदात् विशिष्य च विध्यन्यथानुपपत्त्या मुमुक्षोपपत्तिः

(३) आनन्दरूपं ब्रह्म वृत्तिव्याप्यत्वात्, फलाव्याप्यत्वाच्च संविद्रूपं स्वप्रकाशं च संवेद्यम्, असंवेद्यं च

(४) जीव-परस्पर-जीव-जड-जड-परस्परादिभेदनिरासः

(५) अविद्यायां सर्वदर्शनाविप्रतिपन्नत्व-जीवाश्रयत्वादिव्यवस्था

(६) ब्रह्मरूपाया अपि विद्यायाः प्रमाणजन्यवृत्त्युपधानेनाज्ञाननिवर्तकत्वोपपत्तिः

(७) असत्यादपि सत्यप्रतिपत्तिः

(८) क्षणिकविज्ञानाद्वैतवादयोर्विशेषः

(९) ब्रह्मणः स्फोटरूपस्य शास्त्रवेद्यत्वकल्पः

(१०) ब्रह्मपरिणामवादनिरासः

(११) मुक्तानां पुनरावृत्तिशङ्कापरिहारः

(१२) ब्रह्मणः प्रत्यक्षादिप्रमाणान्तरवेद्यत्वनिरासः, यस्तर्ककाण्डस्य मुख्योऽर्थः

(१३) नियोगकाण्डस्य मुख्योऽर्थस्तु भूतार्थनिष्ठानामपि प्रामाण्यं लौकिकवाक्यानामिव

(१४) प्रत्यस्तमितसकलभेदस्याप्याम्नायैकसमधिगम्यत्वम्, यत् सिद्धिकाण्डस्य मुख्योऽर्थः

(१५) कृत्स्नस्य वेदस्येतरव्यावर्तनविधया ब्रह्मज्ञानोपयोगित्वपक्षः, तन्निरासश्च

(१६) कर्मणां ज्ञानसाधनतयोपयोगपक्षः, तन्निरासश्च

(१७) संयोगपृथक्त्वन्यायेन कर्मणामुपयोगपक्षः, यो मुख्यो मण्डनसिद्धान्तः

(१८) कर्मणां पुरुषसंस्कारविधया, ऋणत्रयापाकरणविधया वोपयोगः, यो मण्डनासम्मतः

(१९) आत्मज्ञान-कर्मोपयोगित्वपक्षः, यो निरस्यते

(२०) कर्म-ज्ञानयोः परस्परासम्बन्धः, योऽपि निरस्यत इव, परंतु प्रस्थानभेदमात्रमत्र। तत्रासम्बन्धपक्षः शाब्दापरोक्षवादेन, तत्सम्बन्धपक्षस्तु संयोगपृथक्त्वनयेन मण्डनसिद्धान्तः

(२१) ब्रह्मणः सद्रूपत्वसमर्थनम्, यत्तु तर्ककाण्डे विशेषतो विविच्यते

तत्र 'तमेतमि'ति श्रुतेर्ज्ञानार्थतया कर्मणां विनियोगः, न जिज्ञासार्थतयेति भगवत्पादमतम्, ज्ञानार्थतयेति तु मण्डनमतमिति मतभेदेऽपि तत्र तत्रोक्तरीत्या मण्डनः स्वीयं ज्ञान-कर्मसमुच्चयं मुख्यमन्यसात्; शीघ्रं फलदातृत्वात्, संन्यासं तु मन्दाधिकाराणामभिप्रैति, परंतु संन्यासं न प्रतिरुणद्धि। भगवत्पादा अपि गृहस्थानामपि विनैव संन्यासं विद्याधिकार इत्युपरतिपदेन चित्तक्षोभराहित्यस्यैव विवरणात् न मण्डनमतं वारयन्ति। अयमेव न्यायो "विज्ञाय प्रज्ञां कुर्वीत" इत्यत्रापि वार्तिकानुसारेण विवेचितमत्रैव। नैष्कर्म्यसिद्धिस्तु शाङ्करं संन्यासपक्षं स्वीकरोति। मण्डनस्तु विनैव संन्यासं संयोगपृथक्त्वेन स्वीयं निबन्धं प्रबबन्धेति सुष्टु लगति। यथा चात्र मण्डन-सुरेश्वरयोरपि न विरोधलेशोऽपि, तथा व्यक्तमत्रैवोत्तरत्र। तेन च शास्त्रिपादैः XLVI पृष्ठोक्तरीत्या ज्ञान-कर्मसमुच्चये न मण्डन-भगवत्पादयोर्विरोधः; उभयोरत्राविरोधात्॥

शास्त्रिपादाः—भूमिकायां स्वीयायां ज्ञान-कर्मासम्बन्धपक्षोऽयं भगवत्पादानामेव, इति तन्निरासात् भगवत्पादविरोधी मण्डन इति—वदन्ति, परंतु वाक्यार्थज्ञानमात्रस्य साक्षात्कारस्यापि विना मनन-निदिध्यासनाभ्यां न मोक्षसाधनत्वमित्येव भगवत्पादानामपि सिद्धान्तः। समन्वयसूत्रभाष्ये—"ननु वस्तुमात्रकथनेऽपि रज्जुरियं नायं सर्प इति भ्रान्तिदर्शननिमित्तभय-कम्पादिनिवर्तनेनार्थवत्त्वं दृष्टम्, तथेहाप्यसंसार्यात्मवस्तुकथनेन संसारित्वभ्रान्तिनिवर्तनेनार्थवत्त्वं स्यात्—स्यादेतदेवम्, यदि रज्जुस्वरूपावगम इव सर्पभ्रान्तिः, संसारित्वभ्रान्तिर्ब्रह्मस्वरूपश्रवणमात्रेण निवर्तेत, न तु तदस्ति; श्रुतब्रह्मणोऽपि यथापूर्वं सुख-दुःखादिसंसारिधर्मदर्शनात्, "श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" इति च श्रवणोत्तरकालयोर्मनन-निदिध्यासनयोर्विधिवैयर्थ्यात्" इति पूर्वपक्षमुपक्षिप्य भगवत्पादैरपि ब्रह्मणो न सविशेषत्वम्, किन्तु स्वरूपपर्यवसायित्वमिति समर्थनेन ज्ञान-कर्मासम्बन्धपक्षस्य समर्थनेऽपि तस्य शाब्दापरोक्षवादमधिकृत्यैव प्रवृत्तत्वात् संयोगपृथक्त्वनयेन ज्ञान-कर्मसम्बन्धपक्षस्य शाब्दपरोक्षवादविषयत्वाच्चोभयोः प्रस्थानभेदमात्रत्वम्, पक्षद्वयस्यापि भाष्यारूढत्वादिति नात्र मण्डन-भगवत्पादसिद्धान्तयोर्विरोधः॥

### ब्रह्मकाण्डमुख्यतत्त्वसंग्रहः

एतेषु ब्रह्मकाण्डस्यासाधारणानि तत्त्वानि—

(१) आनन्दस्य भावरूपत्वसमर्थनम्,

(२) रागेच्छयोर्भेदव्यवस्था,

(३) ब्रह्मणो विज्ञानरूपस्य संवेद्यत्वासंवेद्यत्वोभयरूपत्वम्,

(४) विद्याया ब्रह्मरूपाया अविद्याविरुद्धाविरुद्धस्वरूपभेदः,

(५) अविद्यायाः सर्वदर्शनसंमतत्वम्,

(६) असत्यादपि सत्यार्थसिद्धिः,

(७) स्फोटस्यापि ब्रह्मत्वम्,

(८) ब्रह्मपरिणामवादनिरासः,

(९) मुक्तानां पुनरावृत्तिशङ्कापरिहारः,

(१०) संयोगपृथक्त्वन्यायेन कर्मणामुपयोगः,

(११) आनन्दपदेन भावरूपस्यैव ब्रह्मणो निर्देशः—इति

### तत्र भावाद्वैतस्य मण्डनेन निरासः

आनन्दस्य भावरूपत्वसमर्थनावसरे केषांचन भावाद्वैतवादमुपक्षिप्य तन्निरास एव कृतः, न तु स मण्डनसम्मत इति पूर्वं विस्तरेण परीक्षितम् ॥

स यथा "आनन्दमि"ति च भावरूपेण, अभावरूपेण वा धर्मेण धर्मवत्त्वमिति ब्रह्मसिद्धौ तुरीयपृष्ठे १६ पङ्क्तिमारभ्य षष्ठपृष्ठे षष्ठपङ्क्तिपर्यन्तेन स्वरूपानन्द एवानन्दोऽत्र, न दुःखाभावरूपः, तद्वान् वेति विवेचितम् ॥

एकपदेन त्वभावेनाप्यद्वितीयत्वं सूचयति ।

एकपदमपि मण्डनश्लोकगतमद्वितीयार्थकमत्रैवानुकूलम् ।
व्यक्तं चैतद् ब्रह्मसिद्धावप्यत्रैव प्रकरणे ॥

### भावाद्वैते न प्रामाण्यम्

(१) शुद्धस्य ब्रह्मणो न शास्त्रवेद्यत्वम्, किन्तूपहितब्रह्मण एव । तच्च वृत्त्याऽज्ञाने निवृत्ते स्वतः स्वप्रकाशमवतिष्ठते, तेन प्रपञ्चाभाव एव निषेधमुखेन शास्त्रार्थः, न त्विदंरूपतया ब्रह्म शास्त्रवेद्यमिति, "अविद्यानिवृत्तिपरत्वाच्छास्त्रस्ये"ति भाष्यार्थः संकल्पते, येन मोहावरणापगमे ब्रह्मस्वरूपाविर्भावो लक्ष्यते, अतो 'नेति नेति' विधया ब्रह्म प्रतिपाद्यते, न तु तत्त्वमसीत्यादिविधिविधयेति निषेधप्राधान्यपक्षः संक्षेपशारीरकप्रथमाध्यायगत (२५०) श्लोकार्थस्संगृह्यते, न त्वनेन ब्रह्मातिरिक्ताभावधर्मतो ब्रह्मणोऽत्र निरूपणं स्यादिति, नानेनापि भावाद्वैतस्य विवक्षा ॥

(२) अविद्यास्तमयस्य ब्रह्मात्मनैव मोक्षत्वम्

'अविद्यास्तमयो मोक्षः' इति तु 'विद्यैव चाद्वया शान्ता' इति नियोगकाण्डगत १०६ श्लोकोक्तरीत्या संक्षेपशारीरकप्रथमाध्यायगत २९३ श्लोकीयमधुसूदन-नृसिंहाश्रम-रामतीर्थाग्निचिदादिसर्वव्याख्यासु चात्मरूपैवाविद्यानिवृत्तिः, नाभावरूपा, न वा तद्वद्ब्रह्मस्वरूपा चेत्यवगमात् भावाद्वैतवादो न मण्डनाभिमतः ॥

(३) पञ्चमप्रकाराविद्यानिवृत्त्या न भावाद्वैतम्

पञ्चमप्रकाराविद्यानिवृत्तिस्तु न भावरूपा, न वाऽभावरूपा, इति न तया धर्मेण भावाद्वैतवादः । स तु विमुक्तात्मन एव, न मण्डनस्येति मण्डनो भावाद्वैतवादीत्यत्र नेदमप्यनुकूलम् ॥

(४) मधुसूदन-ब्रह्मानन्दयोर्मण्डनस्य भावाद्वैते न तात्पर्यम्

मधुसूदन-ब्रह्मानन्दसरस्वत्योः—मण्डनो भावाद्वैतवादीति वादस्तु "अविद्यास्तमयो मोक्षः" इत्यस्याभाव एव मोक्ष इत्यापातदर्शिनां न्यायामृतकारादीनां कृत्वाचिन्तयाऽनुवादमात्रम्, यतो मधुसूदनसरस्वत्यविद्यानिवृत्तेर्ब्रह्मात्मनैव मोक्षत्वं पूर्वोक्तरीत्याऽभिप्रैति । वस्तुतस्तु—'संहृताखिलभेदः' इति प्रथमकाण्डान्तिमश्लोकेऽभावेनापि साध्येन ब्रह्मणो न सविशेषत्वम्, किन्तु निर्विशेषमेव तदिति ब्रह्मसिद्ध्युपसंहारात् भावाद्वैतवादस्य परिपन्थी मण्डनः । अधिकमन्यत्र तत्त्वप्रदीपिकादितोऽवगन्तव्यम् ॥

ब्रह्मणः संवेद्यत्वासंवेद्यत्वोभयोपपत्तिः

विज्ञानस्य संवेद्यत्वासंवेद्यत्वोभयरूपत्वे संवेद्यत्वं न घटादेरिवानुभाव्यत्वम्, फलव्याप्यत्वं वेति सिद्धान्तेनैवेतीष्टसिद्धिः—अनुभूतिः, स्वप्रकाशा, अनुभूतित्वात्, अन्यथाऽनुभाव्यत्वे घटादिवदननुभूतित्वप्रसङ्गादिति प्रक्रमते । इयं हि समस्याऽद्वैतिनाम्, अन्येषां च विप्रतिपत्तिविषयः, यां श्रीभाष्यं शब्दतोऽनूद्य दूषयति । शतदूषणी तद् समर्थयति, शतभूषणी तद् निरस्यतीति विवेकः ॥

ब्रह्मण एव विद्यात्वात् तस्याविद्याश्रयत्वाद्यनुपपत्तिशङ्का, यस्या एव सिद्धान्ततया श्रीभाष्य उल्लेखः

विद्यैव ब्रह्मेति ब्रह्मसिद्धेः पूर्वपक्षः, ततस्तस्या वृत्त्युपधानेनैवाविद्यानिवर्त-

कत्वमित्युक्तम् । अत्र मूलं तु 'तद्विवेकेन च वस्तुस्वरूपावधारणं विद्यामाहुः' इति भाष्यम् । तत्र श्रीभाष्य-शतदूषण्यादि, न्यायसुधादयश्च पूर्वपक्षांशमात्रं गृहीत्वाऽविद्याश्रयत्व-विषयत्व-निवर्त्यत्वादिसप्तानुपपत्तीरुपाक्षिपन् । सिद्धान्तस्तु 'अविद्यानिवृत्तिपरत्वाच्छास्त्रस्ये'ति भाष्यमूलं वृत्त्युपधानेन विद्याया अविद्याविरोधित्वं ब्रह्मसिद्ध्युक्तं गोपायति ॥

## प्रमाणजन्याया वृत्तेरेवाज्ञानविरोधित्वम्

श्रवणादिप्रमाणजन्यवृत्तेरेवाज्ञानविरोधित्वं, तदुपधानमात्रेण विद्यारूपस्य ब्रह्मण इति तु ब्रह्मसिद्धिनिष्कर्षानालोचननिबन्धना इमाः श्रीभाष्यादीनामज्ञानेऽनुपपत्तयः । सत्यमावृतावस्थायामपि ब्रह्मणः प्रकाशरूपत्वम्, स्वोपाध्यविद्याप्रकाशकत्वं च वर्तते; तथाप्यानन्दात्मनाऽऽवरणनिवृत्तिर्वृत्त्यपेक्षयैव; अन्यथा सर्वात्मनाऽनावृतावस्थत्वे ब्रह्मणः 'मायिनं तु महेश्वरमि'ति मायित्वव्यपदेशः, जगदुपादानत्वं च नोपपद्येत । मायित्वं तु ब्रह्मणो मायोपधानमेव ॥

## मायित्वं ब्रह्मणस्तदुपधानेन

तत्राविद्याश्रयत्वं जीवानामविद्योपाधिप्रयुक्ताऽऽविद्यकविक्षेपधर्माश्रयत्वेन। तच्चाग्रहण-मिथ्याज्ञानात्मककार्याविद्याश्रयत्वेन ब्रह्मण आवरणप्रयुक्तेन, कारणाज्ञानाश्रयत्वं तु तदुपधानमात्रम्, सर्वं चेदं तत्तत्प्रकरणार्थसंग्रहावसरे विवेचितमधस्तात् ॥

## असत्यात् सत्यार्थक्रियोपपत्तिः

असत्यात् सत्यप्रतिपत्तिविषये ब्रह्मसिद्धिरप्रकम्प्यां कांचन युक्तिमवतारयति। सा यथा—नायं नियमः—असत्यं न कस्मैचित् कार्याय कल्पत इति । माया प्रीतेः, भयस्य च कारणम् । असत्यं च सत्यप्रतिपत्तेः, यथा रेखागवयो लिप्यक्षराणि च ॥

स्यादेतद्—स्वरूपेणेदं सत्यम्, न शून्यम्, मिथ्या वेति, ऐकात्म्यवादिनस्तु स्वरूपेणाप्युपाधीनामसत्यतेति, उच्यते; भवन्तु स्वरूपेण सत्याः, येन तु रूपेण प्रतिपादकाः, तदसत्यम् कार्योपयोगरहिता स्वरूपसत्यता व्यर्था, अविद्या भेददर्शनोपायोऽपि । अद्वैतसिद्धं पारमार्थिकं ब्रह्मैव स्वरूपम्, स्वरूपसत्यत्वमात्रमविशिष्टमिति । अनेनेदमवगम्यते—कार्यकारितावच्छेदक-

स्वरूपं रेखागवयादिष्वपि समानम्, स्वरूपेण सत्यत्वं तु मिथ्याभूतानामपि परमार्थतः सत्याधिष्ठानस्वरूपेणाविशिष्टम् ॥

इदमेवाभिप्रेत्य भामती "न हि लौकिका नाग इति वा, नग इति वा पदात् कुञ्जरं तरुं वा प्रतिपद्यमाना भवन्ति भ्रान्ताः" इति। श्रीभाष्यादयस्तु सर्वत्र भ्रमस्थले ज्ञानस्यैवार्थक्रियाकारित्वम्, न विषयस्येति वदन्ति। तत्र भ्रमस्य निर्विषयस्यार्थक्रियाकारित्वे सर्वं कार्यं सर्वस्मादापद्येत, शुक्तिरजतज्ञानात् सर्पभ्रमकार्यापत्तिश्च। निर्विषयं ज्ञानम्, विषयाणां ज्ञानाकारत्वमिति सौगतमतापत्तिश्चेत्याद्यपि ब्रह्मसिद्धौ व्यक्तमेव ॥

## भ्रमस्थले ज्ञानस्यापि न सत्यत्वम्

वस्तुतस्तु—भ्रमस्थले भ्रमोऽपि विषयवत् तूलाविद्यापरिणामत्वात् मिथ्यैव, इति कथं ज्ञानस्यैवार्थक्रियाकारित्वेऽपि नासत्यात् सत्योत्पत्तिः ? परमार्थतस्तु वेदान्तानां ब्रह्मप्रतिपत्त्युपायत्वमपि ज्ञानत्वेनैव, इति वेदान्तज्ञानमेव ब्रह्मप्रतिपत्तेरुपायः। तत्रोपायविषयोऽसत्यः, उपेयविषयस्तु सत्य इत्यङ्गीकारे का वा बाधा ? उपायोपेयज्ञानयोः समसत्ताकार्यविषयकत्वेनैव कार्य-कारणभाव इति विवक्षायां चासत्यज्ञानादप्यसत्यार्थज्ञानमेव स्यात् ॥

"असत्ये वर्त्मनि स्थित्वा ततः सत्यं समीहते।"

इति च बाध्येत, इति भ्रमस्थले, स्वप्नस्थले वा सत्यज्ञानस्य कथं सत्यार्थप्रतिपत्तिहेतुत्वमिति शङ्का समुत्तिष्ठति। अतोऽसत्यात् सत्यप्रतिपत्तिव्यवस्था ब्रह्मसिद्धेरकम्प्या। निर्विषयस्य ज्ञानमात्रस्योपायत्वे तूपेयं ज्ञानमपि निर्विषयं कथं न स्यात् ? इति तत्र ज्ञानमात्रस्योपायतावादे सौगतमतप्रवेशापत्तिः ॥

तत्र सर्वज्ञानयाथार्थ्यवादः प्रभाकरसंमत एव विभ्रमविवेके, ब्रह्मसिद्धौ च निरस्यते, श्रीभाष्यकाराणामपूर्वसर्वज्ञानयाथातथ्यवादनिरासस्तु रामानुजशृङ्गभङ्गादौ विशदः, अद्वैततत्त्वशुद्ध्यादौ च, इति तत एवाधिकमवगन्तव्यम् ॥

(५) स्फोटवादोऽपि भगवत्पादानामद्वैतवादाविरोधीति व्यवस्था मण्डनमिश्रस्य हरिकारिकासिद्धान्तमनुसृत्य, स्फोटस्यैव चैतन्यरूपत्वमपि स्वीकृत्य ॥

अयं प्रकारो जयन्तभट्टेनाप्यनुक्रियते, इति मण्डनमिश्रो नाद्वैतविरुद्धं कुत्रापि कमपि निबन्धमन्य इव निबध्नाति, स्फोटसिद्धेरप्यत्रैव तात्पर्य-

मिति तु ब्रह्मसिद्धेराशयः। सति चैवमिष्टसिद्धिकाराणाम् 'तस्मादात्माद्वैतमेव सिध्यति, न शब्दाद्वैतम्, घटाद्वैतं वे"ति स्फोटब्रह्मवादनिरसनं न स्फोट-सिद्धेर्निरसनम्, न वा ब्रह्मसिद्धेर्मङ्गलश्लोकगताक्षरपदस्य स्फोटवादसमर्थनपर-तयाऽपि विवरणस्य ॥

ब्रह्मसिद्धिरक्षरपदविवरणप्रसङ्गे स्फोटस्याऽऽनन्दामृतैकविज्ञानासर्वसर्वा-श्रयत्वं सर्वमूरीकृत्यैव स्फोटब्रह्मवादं समर्थयति, न त्वक्षरपदार्थतामात्रम्। अधिकं चात्र वक्तव्यं पूर्वमुक्तम्। सत्यं भगवत्पादा देवताधिकरणे स्फोटवादं निरस्यन्ति, तत्तु वर्णात्मकं जडं स्फोटं मत्वा, अर्थात्मा शब्दोपाधिकस्तु स्फोटो-ऽत्र समर्थ्यते, येन तस्याप्यनुवेधः सर्वत्र प्रतीतिषु—

'न सोऽस्ति प्रत्ययो लोके यत्र शब्दो न भासते।'

इति। अतो भगवत्पादानामपि न तावानाग्रहः स्फोटवादनिरास इत्येव मण्डनस्य स्फोटसिद्धिः, मण्डनानुसारिणो वाचस्पतिमिश्रस्य तत्त्वबिन्दुश्च, यत्रोभयोः परमं लक्ष्यम्—स्फोटवादोऽप्यद्वैतस्य प्रस्थानान्तरपरमिति स्थापनम् ॥

### संयोगपृथक्त्वन्यायेन कर्मणामुपयोगः।

षष्ठस्तु प्रधानतया विषयो मण्डनोपज्ञ इव संयोगपृथक्त्वन्यायेन कर्म-णामुपयोगः, यस्यैव शाखोपशाखान्यायेनापरा अपि समस्याः स्फुरन्ति ॥

सत्यमत्र श्रीशास्त्रिपादोक्तरीत्या (पृ० XXXIV) ज्ञान-कर्मसमुच्चयो मण्डनेन विवक्ष्यते, ज्ञान-कर्मसमुच्चयस्तु भगवत्पादैर्निरस्यते, इति भगवत्पाद-विरुद्धं मण्डनोऽत्र निबध्नातीति प्रतिभाति। अत्र वक्तव्यं सर्वं पुरस्ताद् विवेचितं शास्त्रिपादसिद्धान्तसमालोचनपूर्वकम् ॥

### भास्कराभिमतज्ञान-कर्मसमुच्चयाद् मण्डनमतज्ञान-कर्मसमुच्चयस्य विशेषः, यस्य भाष्यकारेण न कुत्रापि निरासः

तत्र ज्ञान-कर्मसमुच्चयो भास्कराभिमतस्तयोः समसमुच्चयः, न तु मण्ड-नाभिमतस्तत्सहसमुच्चयः। तत्र भास्करमते ज्ञानं सविशेषविषयम्, कर्मणा तस्य समुच्चयः समसमुच्चयः; उभयोरप्येकफलसाधनत्वात्। मण्डनमते तु द्वितीयप्रति-पत्तिसहकारमात्रेण कर्मणा सह समुच्चयो द्वितीयप्रतिपत्त्या साक्षात्कारे जननीये द्वितीयप्रतिपत्तौ शक्तिविशेषाधायकत्वमात्रमारादुपकारकत्वेन, येन क्षिप्रमेव तृतीयप्रतिपत्तिरात्मानं लभते ॥

न चास्य समुच्चयस्य गीताभाष्यादावन्यत्र कुत्रापि निरासः क्रियते ; गृहस्थोऽप्यनाश्रम्यूर्ध्वरेतोवत् ब्रह्मविद्याधिकारी। तत्रानाश्रम्यादिर्विविदिषा-संन्यासेन ब्रह्मविद्याधिकारी, गृहस्थस्तु विनाऽपि संन्यासं कर्मसहकृतेन ज्ञानेन, प्रसंख्यानेन वा सन्तन्यमानेन ब्रह्मसाक्षात्कारमासादयति, तस्य कर्मयोगसहकृतनिर्विशेषब्रह्मविषयज्ञानसन्तानेनापि साधकावस्थस्य स्थितप्रज्ञत्वम्, प्राप्त-साक्षात्कारस्तु स तेन प्रारब्धेतरविलये सिद्धो जीवन्मुक्त इति विवेकः॥

### मण्डनमुख्यमते स्थितप्रज्ञः साधकः, प्रस्थानान्तरे तु सिद्धः

तत्र सिद्धस्थितप्रज्ञावस्था विविदिषासंन्यासद्वारा ब्रह्मविद्यार्थं प्रस्तुता-नामपि ब्रह्मसाक्षात्कारानन्तरं समानैव, न तु तावत्पर्यन्तं स्थितप्रज्ञस्य साध-कावस्थाऽपि। साधकावस्थायां स्वाधिकारिकाणामिव परोक्षमिथ्यात्वनिश्चयेऽपि न कर्माधिकारनिवृत्तिः। अत एव संयोगपृथक्त्वन्यायो मण्डनमते॥

### तर्ककाण्डार्थानां केषांचन मुख्यानां संग्रहः

शब्दस्य भूतार्थविषयत्वेऽपि प्रत्यक्षाद् बाधो न भवति; अपौरुषेयत्वस्यैव प्राबल्यप्रयोजकत्वात्॥

### तत्र प्रत्यक्षागमयोर्बलाबलविचारः

यत्र प्रत्यक्षस्य दौर्बल्यम्, आगमस्यैव प्राबल्यमिति प्रधानो विषयः। तत्रागमस्य प्रत्यक्षादिसापेक्षत्वं भूतार्थविषयत्वेऽपि न संभवति; पौरुषेयत्वस्यैव सापेक्षत्वप्रयोजकत्वात्। अपौरुषेयत्वाच्च शब्दस्य न प्रमाणान्तरापेक्षेति तु ब्रह्मसिद्धेरकम्प्यो विषयः॥

अस्य सिद्धान्तस्य मूलम् "न च परिनिष्ठितविषयत्वेऽपि प्रत्यक्षादि-विषयत्वं ब्रह्मणः" इति भाष्यम्, यस्य विशदं निष्कर्षो भामत्यां पृष्ठे (१०५) उपलभ्यते॥

न चागमप्राबल्येऽपि प्रत्यक्षाणां व्यवहारसम्वादलक्षणमपि प्रामाण्यं हीयते, इति सावकाशं प्रत्यक्षम्, निरवकाशस्त्वागमः, इति सावकाश-निरव-काशन्यायोऽप्यत्रानुकूलः, "प्रत्यक्षस्य व्यावहारिकप्रामाण्येन सावकाशत्व-मि"ति ब्रह्मसिद्ध्युक्तं गृहीत्वाऽद्वैतसिद्धिरपच्छेदन्यायवैषम्यं न्यायामृतोल्लि-खितं भञ्जयति॥

### प्रत्यक्षस्येवागमत्वेऽपि सगुणवाक्यापेक्षया निर्विशेषवाक्य-बलीयस्त्वम्, प्रत्यक्षस्य प्रकारांशे सत्त्वाविषयत्वादपि दौर्बल्यम्

अत्र प्रसङ्गेऽद्वैतवाक्यानामेव सगुणवाक्यापेक्षया प्रामाण्यमिति विषयमपि ब्रह्मसिद्धिरुपक्षिपति। प्रत्यक्षस्य सत्त्वविषयस्यापि तत्सत्त्वानपगमेनाविरोधः। प्रत्यक्षेण प्रपञ्चस्य सत्तादात्म्यावगमेऽपि न तस्य सत्त्वविधायकत्वम्; प्रत्यक्षादीनां सन्मात्र एव प्रामाण्यात्। प्रकारांशे त्वप्रामाण्यमित्यपि ब्रह्मसिद्धिरेव प्रस्तौति, यदेव तत्त्वशुद्धिरनुवदति, श्रीभाष्यं च निरस्यति, परं त्वन्यथा ब्रह्मसिद्धिग्रहणेनेत्यादि पूर्वं तर्ककाण्डसंग्रहावसरे विवेचितम्॥

### प्रत्यक्षस्य विषयस्वरूपांशे प्रामाण्यम्, न तु भेदनिरासे

तत्र प्रत्यक्षस्य वस्तुमात्रग्राहकस्येतरभेदनिरासे न प्रामाण्यमिति चर्चा तु प्रत्यक्षे विधिमात्रपरत्वम्, विधिपूर्वकेतरनिषेधपरत्वम्, निषेधपूर्वकविधिपरत्वमिति प्रकारत्रयेण परीक्षया भेददुर्वचत्वं ब्रह्मसिद्धिगतमवष्टभ्यैव खण्डनखण्डखाद्य-चित्सुख्यादिनिबन्धा भेददुर्वचत्वोपपादनपराः॥

### भेदाभेदव्यवस्था भेदमिथ्यात्वेन, अभेदसत्यत्वेन च

तत्र भेदाभेदयोरभेदोपादाना भेदकल्पना, न तु भेदोपादानाऽभेदकल्पनेति विचारे ब्रह्मव्यतिरेकेण सर्वाभावनिरूपणपरं प्रकरणं 'तदनन्यत्वाधिकरणे' निष्कृष्टं सद्विवर्तवादं विशदयति, यदेव प्राधान्येनावलम्ब्य सदानन्दकृतिरद्वैतब्रह्मसिद्धिः प्रवृत्ता॥

### असत्कार्यवाद-सत्कार्यवाद-सद्विवर्तवादानां स्वरूपम्, फलविशेषश्च

तत्रासत्कार्यवादो नैयायिकानाम्, सत्कार्यवादः साङ्ख्यानाम्, तत्रोभयोः परस्परवादनिरासफलं सदसद्विलक्षणत्वरूपमनिर्वचनीयत्वमेव ब्रह्मव्यतिरिक्तस्य सर्वस्येति वेदान्तसिद्धान्त इति जगद्गुरुपूज्यश्रीकामकोटिपीठाधीशाः श्रीचन्द्रशेखरेन्द्रसरस्वतीभगवत्पादाः प्रयागक्षेत्रे उपन्यसन्ति स्म॥

### मण्डनमतमूलं भगवत्पादीय'तदनन्यत्वा'धिकरणभाष्यम्

ब्रह्मविवर्ततामात्रं प्रपञ्चस्य, न तु प्रपञ्चो मायायाः, ब्रह्मणो वा परिणाम इति तु तत्त्वं नान्यतो ब्रह्मसिद्धितोऽवगम्यते। भगवत्पादानेव प्रपञ्चापार-

मार्थिकत्वनिरूपणार्थमेव तदनन्यत्वाधिकरणमिति भाषमाणानत्र ब्रह्मसिद्धि-रुपजीवति ॥

**नियोगकाण्डार्थनिर्णयः, तत्र पूर्वोत्तरपक्षयोः प्रतिपत्ति-परत्वं समानं मण्डनमते**

नियोगकाण्डस्तु प्राधान्येन कार्यं नियोगाख्यमपूर्वमेव वाक्यानां प्रमेयम्, सिद्धं ब्रह्ममात्रं न प्रमेयम्; अतः पुरुषतन्त्रोपासनापरतयैव प्रामाण्य-मिति प्राभाकरमतमाशङ्क्य समाधानार्थं प्रवृत्तः ॥

तत्र ज्ञानं प्रतिपत्तिरिति चानर्थान्तरं मत्वा प्राभाकरमतेन प्रतिपत्तिपदं यथाश्रुतं गृहीत्वा विधिशब्दस्याप्रवृत्तप्रवर्तनाज्ञातज्ञापनोभयसाधारण्यं चाभि-प्रेत्य प्रतिपत्तिविधिविषयतयैव शास्त्रेण ब्रह्मसमर्पणमिति वाक्यमेव सिद्धान्तेऽपि ब्रह्मसिद्धिर्मन्यते ॥

**श्रवणादिविधौ प्रकारभेदाः**

तत्र भाष्ये प्रतिपत्तिविधिविषयतयैव शास्त्रेण ब्रह्म समर्प्यत इति पूर्वपक्षे निर्दिश्यते। सिद्धान्ते तु तैरेव पदैः सिद्धान्त उपक्षिप्यते; तथापि समन्वयसूत्रे "ननु ज्ञानं नाम मानसी क्रिया, न; विलक्षणत्वादि"त्यत्र ज्ञानसामान्यस्य क्रियात्वेऽपि वस्तुतन्त्रत्व-पुरुषतन्त्रत्वभेदेन द्वैविध्यमुपपाद्य, वस्तुतन्त्रज्ञानस्यैव सिद्धे ब्रह्मणि स्वीकाराद्, तस्य श्रवण-मनन-निदि-ध्यासनदर्शनरूपस्य सर्वस्य साक्षात्, परम्परया शाब्दमात्रस्यैव श्रोतव्य-वाक्यविषयत्वात् शाब्दस्य ज्ञानस्य श्रवण-मननयोरेकीकरणेनैकं प्रकारम्, निदिध्यासनेनापरं प्रकारम्, दर्शनपदेन चेतरप्रकारमिति त्रैविध्यम-वलम्ब्य शाब्दज्ञानस्यैव श्रवण-मननाभ्यां विमलीकृतस्य निदिध्यासनस्य सन्त-न्यमानस्य साक्षात्कारजनकत्वम्, तत्र प्रथमं द्वितीयं च परोक्षमेव न प्रत्यक्षम्, निदिध्यासनजन्यमेव साक्षात्करणं चेति विविच्य, आसाक्षात्कारं स्थितप्रज्ञः साधकः, सम्पन्ने तु साक्षात्कारे स एव सिद्धः; जीवन्मुक्तावस्था तु कर्मांश-संस्कारानुवृत्तिमात्रेण, न कर्मानुवृत्त्येति विद्वत्संन्यासं समर्थयित्वा च सर्वं प्रतिपाद्यमर्थं ब्रह्मसिद्धिः संगृह्णाति। यथा च सर्वमिदं भाष्यारूढम्, न तु मण्डनस्य किमपि स्वमनोरथमात्रविजृम्भितम्, न वा शाङ्करसम्प्रदायबाह्यम्, किन्तु तत्संप्रदायानुवर्ति, तथा सर्वसंग्रहविमर्शावसरे विवेचितम् ॥

### प्रसिद्धिमात्रेण विनापि शक्तिम्, लक्षणया ब्रह्मबोधोपपत्तिरिति मण्डनः, तदीयपूर्वपक्षमात्रमवलम्ब्य द्वैति-विशिष्टाद्वैति-नामद्वैतनिरासश्च

सिद्धिकाण्डस्तु कथञ्चन प्रसिद्धिमात्रेण शब्दान्तरावाच्यस्य, प्रमाणान्तराप्रमेयस्यापि वा लक्षणयौपनिषदं ब्रह्मस्वरूपं प्रतिपादयितुं सामान्यतः सर्वप्रत्ययवेद्यत्वं निष्कर्षति। यथाच 'सन् घटः' इति सदात्मना ब्रह्मप्रतीतावपि न घटादिज्ञानादेव मुक्तिः, तथा तत्रैव व्यक्तीकृतम्। सारांशस्तु श्रीमदानन्दतीर्थ-जयतीर्थादयो द्वैतसिद्धान्तावलम्बिनः, भगवद्रामानुजीयाश्च सर्वेऽप्यद्वैतसिद्धान्त-निरासावसरे ब्रह्मसिद्धिगतान् पूर्वपक्षानेव स्वसिद्धान्तरूपेण संगृह्य तत्सिद्धान्तांशमपरामृश्य चाद्वैतसिद्धान्तं निरस्यन्ति ॥

### शतदूषण्या अवाच्यस्यापि लक्ष्यत्वानुपपत्त्यादयो ब्रह्मसिद्धिसिद्धान्तो-पक्षेपेणैव सुपरिहराः

तत्र शतदूषण्याः प्रथमो विषयो ब्रह्मशब्दवृत्त्यनुपपत्तिः, सन्मात्रप्रामाण्य-वादानुपपत्तिः, जिज्ञासानुपपत्तिः, पूर्वोत्तरमीमांसानैक्यायोगः, अविद्याश्रयत्वाद्य-नुपपत्तयः, जीवन्मुक्त्यनुपपत्तिरित्यादयः ब्रह्मसिद्धेः पूर्वपक्षांशमात्रसंग्रह-मात्राणि, तदीयसिद्धान्तभागोपक्षेपणेनैव सुपरिहराः ॥

### जयतीर्थादीनामवाच्यत्वेऽपि लक्ष्यत्वायोग-शङ्कायामप्ययमेव न्यायः

अयमेव न्यायो जयतीर्थानाम्, व्यासतीर्थादीनां चाद्वैताक्षेपेष्वपि। सर्वं चेदं तत्तत्काण्डार्थसंग्रहविमर्शावसरे व्यक्तीकृतम्। ब्रह्मसिद्धिरेवाद्वैतसिद्धान्त-वादप्रस्थानस्य मूलभित्तिः संग्रहेण भाष्येणोपक्षिप्तानां तत्तत्प्रक्रियाणामिति तत्तत्प्रकरणभामतीतो विशदमेव ॥

### सन्मात्रप्रामाण्यवादो मण्डनस्य तत्त्वशुद्ध्यैव प्रपञ्चितः, इति तस्य तत्त्वशुद्धिमतत्वेन सिद्धान्तलेशसंग्रह उट्टङ्कः

विश्वस्यते, अत्यन्तं सुरक्षिताया ब्रह्मसिद्ध्या बहिरप्रकाशनादेव तदीयानामेव सिद्धान्तानां बहूनां विशदं भामत्योपपादितानां भामती-प्रस्थानत्वेन व्यपदेशः। तत्र भामत्यां सन्मात्रप्रामाण्यवादः केवलं "तदन-न्यत्वमिति नाभेदं ब्रूमः, किन्तु भेदं व्यासेधामः" इति तदनन्यत्वाधिकरणे

सूचितः, न तु विस्तरेण प्रक्रियान्तरवदुपक्षिप्यते। स तु तत्त्वशुद्धयैव संगृहीतः। अत एव तत्त्वशुद्धिकाराणां मतमिति तस्य सिद्धान्तलेशसंग्रहेण संग्रहः। यथा पञ्चमप्रकाराविद्यानिवृत्तिरिष्टसिद्ध्युपज्ञाऽपि तद्व्याख्यातुरानन्दबोधाचार्यस्येति, यथा च श्रवणादावविधिपक्षः, साक्षिभास्येषु वृत्त्यनङ्गीकारपक्षः, वेदान्तानामुपहितपर्यन्तपरत्वमात्रम्, अज्ञानजीवाश्रयत्वकल्पः, वेदार्थस्यैव धर्मपदार्थत्वमिति प्राभाकरसिद्धान्तावलम्बनेऽपि पूर्वोत्तरमीमांसयोर्नैक्यम् ॥

### तदनन्यत्वमेकसत्तावादः, तत्त्रैविध्यवादः परस्पराध्यासे ब्रह्मणः संसर्गाध्यासमात्रमित्यादीनां ब्रह्मसिद्धिरेव मूलम्

तदनन्यत्वं ब्रह्मविवर्ततामात्रेण, इति तद्व्यतिरेकेणेतराभावः, ब्रह्मणः सर्वप्रत्ययवेद्यत्वम्, एकसत्तावादः, व्यवहारसंवादमात्रसत्तया सत्तात्रैविध्यवाद इति सत्ताद्वैविध्यवादः, परस्पराध्यासो ब्रह्मणोऽन्यत्र संसर्गाध्यासवादमात्रेण, कार्याध्यासो बीजाङ्कुरन्यायेनानादिः, मूलाज्ञानं तु नित्यानादिः, अनिर्वचनीयख्यातेरेव नामान्तरं विपरीतख्यातिः, जगदुपादानं ब्रह्मोपहितम्, तदेवाविद्याधर्माश्रयत्वेन विशिष्टो जीवः, सिद्ध-साधकभेदेन स्थितप्रज्ञभेदः, प्रतिपत्तिपदार्थो वस्तु-पुरुषोभयतन्त्रसाधारणः, व्यवहारे भाट्टनयैकान्ताशरणतेत्यादयो वाचस्पतिप्रस्थानविषयाः सर्वेऽपि ब्रह्मसिद्धिमूला एव ॥

### उदाहरणविशेषमात्रे मण्डनेन वार्तिकाद्यतिक्रमेऽपि सिद्धान्तेषु नानैक्यम्

तत्र मण्डनः मननविधया शाब्दज्ञानविमलीकरणार्थं प्रस्तुतो विचारावसरे वार्तिकपद्धत्या कुत्रचनोदाहरणविशेषादौ भगवत्पादानप्यतिशेत इति तु सत्यम्। न चैतावता कमपि भाष्यानभिमतं स्वीयं प्रस्थानं प्रस्थापयति ॥

### अग्रहण-मिथ्याज्ञानातिरिक्तमूलाज्ञाने प्रमाणनिर्देशः

अत्राग्रहण-मिथ्याज्ञानातिरिक्ता मूलाविद्या नास्तीति वादो बौद्धानाम्, भास्करादीनां च, नाद्वैतसिद्धान्ते तत्र तत्र तयोरप्यज्ञानपदेन व्यपदेशोऽपीति ब्रह्मसिद्धिः स्पष्टयति। अतो नागेशादीनां मञ्जूषादौ मूलाविद्यानिरासो ब्रह्मसिद्धिसमीक्षायां दूरतोऽपसरति ॥

### मण्डन-सुरेश्वरकृत्योः सिद्धान्तैक्यानैक्यविचारः, अविद्यास्तमयमोक्षतायां मण्डन-सुरेश्वरयोरैक्यम्

'अविद्यास्तमयो मोक्षः सा संसार उदाहृतः ।'

इति ब्रह्मसिद्ध्यभिमतो मोक्ष :—

'निवृत्तिरात्मा मोहस्य ज्ञातत्वेनोपलक्षितः ।'

इति सुरेश्वरवार्तिकसिद्धान्तश्चैक एव ॥

यत :—

"विद्यैव चाद्वया शान्ता तदस्तमय उच्यते ।"

इति वदन्ती ब्रह्मसिद्धिरपि :—

"निवृत्तिरात्मा मोहस्य ज्ञातत्वेनोपलक्षितः ।"

इति सिद्धान्तमेव मुक्तौ स्वाभिप्रेतं गमयति (नियोगकाण्डे १०६) तत्र चित्सुखी (पृ० १४०-२) अज्ञाननिवृत्तेर्ब्रह्मज्ञानरूपतया तज्जन्यत्वाभावात् ज्ञातोऽर्थः, तज्ज्ञप्तिर्वाऽज्ञानहानिरितीष्टसिद्धेरप्यैकमत्यमत्रेत्यवगमयति ॥

### कर्मणामुपयोगे मण्डन-सुरेश्वरयोरैक्यम्

संयोगपृथक्त्वन्यायेन पुरुषसंस्कारार्थतया कर्मणामुपयोग इति कल्पद्वयमपि भगवत्पादानां गीताभाष्यानुमतम्, एकत्रारादुपकारकतया, अपरत्र ज्ञानजनकतया संनिपत्योपकारकतयेति विशेष इति पूर्वमावेदितम्। वार्तिकं तु नात्र ब्रह्मसिद्ध्या विरुध्यते। भगवत्पादैर्निरस्तः समुच्चयवादः, काम्यकर्म-ज्ञानसमुच्चयवादः, निर्विशेषात्मतत्त्वज्ञान-कर्मसमुच्चयो वा, समः, सह वा नोपासनाकर्मसमुच्चयोऽपिं ॥

### शाब्दापरोक्षवादो मण्डनस्याप्यविरुद्धः

तत्र शाब्दापरोक्षवादो यद्यपि वार्तिकस्य विषयः, न तु ब्रह्मसिद्ध्यभिप्रेतः शाब्दापरोक्षवादः ; तथापि पूर्वोक्तरीत्या तत्परोक्षतावादप्रस्थानस्यापि भाष्यसम्मतत्वात्, शाब्दपरोक्षवादे साक्षात् शब्देनापरोक्षसाक्षात्काराभावेऽपि श्रवणादीनां निदिध्यासनाङ्गतया परम्परयाऽभिहितान्वयवादे बोधस्य शाब्दत्वव्यवहारवत् प्रयोजकविधया शाब्दापरोक्षवाद एव पर्यवसानात्, फलतोऽविशेष इति प्रस्थानभेदमात्रमुभयोः, इति तत्र प्रस्थानभेदमात्रत्वमकिञ्चित्करम् ॥

'दशमस्त्वमसी' त्यादौ शाब्दपरोक्षवादाविरोधः

'दशमस्त्वमसी'त्यत्रापि शाब्दज्ञानं मनन-निदिध्यासनमुखेनैवापरोक्ष-जनकमिति हि शाब्दपरोक्षवादिनः। सिद्धान्तद्वयमपि यदि भाष्यारूढम्, कथं वा स्वसम्प्रदायमात्रमूलत्वं शाब्दपरोक्षवादस्य ?

जीवाज्ञानवादस्यापि साम्प्रदायिकत्वम्, भाष्यारूढत्वं च सति चैवम्—

जीवन्मुक्तिगतो यदाह भगवान् सत्सम्प्रदायप्रभु-
र्जीवाज्ञानवचस्तदीदृगुचितं पूर्वापरालोचनात्।
अन्यत्रापि तथा बहुश्रुतवचःपूर्वापरालोचनाद्
नेतव्यं परिहृत्य मण्डनवचः तद्धयन्यथा प्रस्थितम् ॥

इति संक्षेपशरीरकम्,

"केचित् स्वसम्प्रदायावष्टम्भबलादेवमाहुः—यदेतत् वेदन्तवाक्यादहं ब्रह्मेति विज्ञानं समुत्पद्यते, तन्नैव स्वोत्पत्तिमात्रेणाज्ञानं निरस्यति, किं तर्हि ? अहन्यहनि द्राघीयसा कालेनोपासीनस्य सतो भावनोपचयात् निःशेषमज्ञान-मपगच्छति" इति नैष्कर्म्यसिद्धिः,

"अन्ये तु पण्डितम्मन्याः सम्प्रदायानुसारतः।
विज्ञायेति वचः श्रौतमिदं व्याचक्षतेऽन्यथा ॥
तत्त्वमस्यादिवाक्योत्थविज्ञानेन यथोदितम्।
विज्ञायेति वस्त्वसंसर्गि प्रज्ञां कुर्वीत यत्नतः ॥

इति सुरेश्वरवार्तिकं च निदिध्यासाङ्गित्वपक्षमपि साम्प्रदायिकं प्रस्थान-भेदमात्रमित्यवगमयति, न हेयत्वम् ॥

सर्वज्ञात्ममुनिमते मण्डनमतभेदोऽकिञ्चित्करः;
प्रस्थानान्तरपरत्वात्तस्य

सर्वज्ञात्ममुनिस्तु जीवन्मुक्तविषये, स्थितप्रज्ञविषये वा मण्डनवचः प्रस्थानान्तरमिति प्रतिपादयन्नपि तस्मिन् स्वस्यानभिप्रायमेव ज्ञापयति। अत एव "तद्धयन्यथा प्रस्थितम्" इति तस्य प्रस्थानान्तरत्वमेवोक्तम्, न तु हेयत्वम्।

यथा च मण्डनसम्प्रदायोऽपि जीवन्मुक्त्यादिविषये भाष्यारूढ एव, तथा पूर्व मावेदितम् ॥

अत एव विश्ववेदव्याख्या (पृ० ५५-९-३३) "मण्डनमिश्रस्य तु प्रस्थानान्तरत्वात् तदीयं वचो यथाश्रुतमेवास्तु" इति, वेदानन्दव्याख्या च "अयमेव न्यायो वार्तिकादिषु नेतव्यः परिहृत्य मण्डनवचः; तस्यान्यथा प्रस्थितत्वादिति वदतः ॥

नैष्कर्म्यसिद्धिस्त्वत्र स्वसम्प्रदायबलावष्टम्भमात्रादिदमिति वदन्ती सति संप्रदायद्वये स्वाभिप्रेतमेकं सम्प्रदायमवष्टभ्येत्येवाभिप्रैति, न तु स्वकपोलकल्पितत्वम्, अनादरणीयत्वं वा ॥

अत एव सुरेश्वरवार्तिके "अन्ये तु पण्डितम्मन्याः" इत्यत्र 'सम्प्रदायानुसारतः' इत्येव निर्दिश्यते, न सम्प्रदायाननुसारत इति। अतो विश्वस्यते, "अन्ये तु पण्डितम्मन्याः इति न समस्तं पदम्, किन्तु व्यस्तम्। स्वस्यापि सिद्धान्तस्यान्ये त्विति निर्देशो हि भगवत्पादानामपि "अन्ये तु यत्र यदध्यासस्तस्यैव विपरीतधर्मत्वकल्पनामाचक्षते" इत्यत्र दृश्यते। तदाशयो हि न स्वोपज्ञत्वमस्य सिद्धान्तस्य; किन्तु सम्प्रदायागतत्वमेवेति। अतोऽन्यथा "विज्ञाय प्रज्ञां कुर्वीते"त्यपि सम्प्रदाय एव, परंतु प्रस्थानान्तरमित्येवात्र वक्तव्यम् ॥

अतः सर्वज्ञात्ममुनेः, सुरेश्वरस्यान्यस्य वा मण्डनसिद्धान्तस्यासाम्प्रदायिकत्वे, अनादरणीयत्वे, स्वस्य तत्रासम्मतौ वा न तात्पर्यम्। अतो न मण्डन-सुरेश्वरयोरनैक्यं सिद्धान्तभेदनिबन्धनं सम्भवति ॥

### मण्डन-सुरेश्वरयोः सिद्धान्तभेदशङ्का

अत्र केचित्

"तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत ब्राह्मणः"

इति श्रुतिव्याख्याप्रसङ्गे भर्तृप्रपञ्चमतमुपन्यस्य तन्निरसनानन्तरम्—(पृ० १८५२-७९६)

"अन्ये तु पण्डितम्मन्याः सम्प्रदायानुसारतः।
विज्ञायेति वचः श्रौतमिदं व्याचक्षतेऽन्यथा ॥
तत्त्वमस्यादिवाक्योत्थविज्ञानेन यथोदितम्।
विज्ञायेति वस्त्वसंसर्गिप्रज्ञां कुर्वीत यत्नतः ॥"

इत्यत्रानन्दगिर्युक्तरीत्या मण्डनमतमुत्थाप्य वार्तिकं तन्मतं निरस्यति। अतो मण्डन-सुरेश्वरयोः सिद्धान्तभेद इति मन्यन्ते, इदं किमुचितम्, उत नेत्यनुपदमेव तत्प्रकरणपूर्वोत्तरसन्दर्भपर्यालोचनेन परीक्षिष्यते ॥

### विध्यर्थे मण्डन-सुरेश्वरयोरैक्यम्

तत्र मण्डनो ब्रह्मसिद्धौ सिद्धिकाण्ड आत्मज्ञाने स्वरूपमात्रनिष्ठे न विधिः; दृष्टार्थत्वात्, किन्तु तदुपाय एवेति वार्तिकसिद्धान्त एव स्वस्यापीति निष्कर्षति ॥

### 'विज्ञाय प्रज्ञां कुर्वीते'त्यत्र मण्डन-सुरेश्वरयोरैकमत्यम्

पूर्वं तु निश्चितेऽपि प्रमाणात् तत्त्वे सर्वत्र मिथ्यावभासाः निवर्तन्ते, हेतुविशेषा नानुवर्तन्तेऽपि, तन्निवृत्तये चान्यदपेक्ष्यम्। स च तत्त्वदर्शनाभ्यासो लोकसिद्धः। अयं भावः—जातेऽपि तत्त्वदर्शने, अनाहिते च पटुतरे संस्कारे, द्रढीयसि च मिथ्यादर्शनजे संस्कारे निश्चया अपि मिथ्यार्था भवन्तीति प्रतिपाद्यते। तेन चेदमवगम्यते—प्राथमिकं शाब्दं ज्ञानं परोक्षमपि मनन-निदिध्यासनादिसमानविषयमेव मण्डनेनापेक्ष्यते, न तु शाब्दं ज्ञानं परोक्षमपि संसृष्टविषयमिति। अयमेव चार्थः साम्प्रदायिकोऽपि।

अत एव—

"अन्ये तु पण्डितम्मन्याः सम्प्रदायानुसारतः।
विज्ञायेति वचः श्रौतमिदं व्याचक्षतेऽन्यथा ॥
तत्त्वमस्यादिवाक्योत्थविज्ञानेन यथोदितम्।
विज्ञायेति वस्त्वसंसर्गि प्रज्ञां कुर्वीत यत्नतः ॥"

इति विज्ञायपदविवक्षितं प्राथमिकं ज्ञानमप्यसंसृष्टविषयमित्यनूद्यते, न तु संसृष्टविषयमिति ॥

### पण्डितंमन्यपदस्य मण्डनादन्याभिप्रायत्वम्

सति चैवमत्र 'अन्ये तु पण्डितम्मन्याः' इति न मण्डनमतोल्लेखः, 'नन्वत्रापि कृतैवासावि'ति कस्यचन भर्तृप्रपञ्चस्य वा पूर्वं निरस्त आक्षेपः;

"मैवं पदार्थसंसर्गरूपस्यैवाऽतथात्मके।
ऐकात्म्ये वाक्यहेतूत्थबोधस्योद्भूतिकारणात्" ॥

इति निराकरणात् (७९९,)

"ब्रह्मासंसर्गि तद्यस्मादसामान्यविशेषवत् ।
संसर्गरूपं वाक्योत्थं ज्ञानं नीलोत्पलादिवत् ॥"

(८००) इत्यादिना वाक्योत्थं ज्ञानं प्रथमं संसृष्टविषयं विज्ञानम्, अभ्यासजं त्वपरमपरोक्षं ज्ञानमसंसर्गि स्वरूपज्ञानमिति "प्रज्ञानमि"ति किञ्चिदपरं मतं मण्डनमतादुपक्षिप्यते, न तु मण्डनमतमिति स्वीकर्तव्यम् । अत एवोक्तमत्रोपसंहारे—

"इत्येवमादिवाक्यानि गम्भीरन्यायवादिनः ।
केचिद् व्याचक्षते यत्नादत्र प्रतिविधीयते (८१०) ॥"

इति मण्डनादपर एव परामृश्यन्ते ॥

अत्र केचिद् गम्भीरन्यायवादिन इति सोपहासं केचित्पदप्रयोगात्, अन्ये तु मन्वते, केचिद् गम्भीरन्यायवादिन इति वाक्य इव ब्रह्मदत्तम्, तदनुयायिन एवाऽत्र निरस्यान् सूचयति, यः सर्वस्यापि वेदस्य प्रपञ्चविलापनद्वारा ब्रह्मणि पर्यवसानं मनुते, यस्य निरासं मण्डनोऽपि ब्रह्मसिद्धौ (२९-३०) करोति । सति चैवं "केचिदाचक्षते यत्नादत्र प्रतिविधीयते" इत्यादिग्रन्थसन्दर्भः ॥

मानान्तरापरिज्ञाने प्रमेयोऽर्थप्रमां स्फुटाम् ।
मेयाज्ञाततत्वबाधेन कुर्वन् मानमितीर्यते ॥ ८१५ ॥

न च प्रमान्तरैः साक्षादज्ञाते ब्रह्मवस्तुनि ।
अयथावस्त्विति ज्ञानं वक्तुं शक्यं विपश्चिता ॥ ८१६ ॥

अपि मानान्तराज्ज्ञाते तद्विरुद्धस्वभावके ।
न चैवं युज्यते वक्तुं द्वयोरपि मितित्वतः ॥ ८१७ ॥

न च मिथ्याधियोऽभ्यासात् सम्यग्ज्ञानसमुद्भवः ।
तथा सत्यप्रयत्नेन मुक्तिः स्यात्सर्वदेहिनाम् ॥ ८२९ ॥

इत्यादिना सिद्धान्तो न मण्डनसिद्धान्तनिरासेन । मण्डनसिद्धान्तस्तु बार्तिके भर्तृप्रपञ्चसिद्धान्तनिरसनप्रसङ्गे मानसः साक्षात्कारः, न तु शाब्द इत्यादिना (१८४३ श्लोकाः ७४१-७४४) स्वीकारात् मण्डनेन ब्रह्मसिद्धौ

शाब्दं परोक्षमपि ज्ञानमसंसर्गि स्वरूपज्ञानमित्युररीकारात्, "अन्ये तु पण्डितमन्याः" इति मण्डने पूज्यतामादायैव । अत एव "सम्प्रदायानुसारतः" इत्यप्यत्र । न चात्र मण्डनमतं कुत्रापि निरस्तम् ॥

शाब्दविज्ञानमानेन प्रज्ञामैकात्म्यलक्षणाम् ।
ब्रह्मास्मीति प्रकुर्वीत बुभुत्सोच्छेदिनीं दृढाम् ॥

(१८५८–८३५)

प्रज्ञा वा परमात्मेह प्रज्ञानमिति वाक्यतः ।
विज्ञायेह तमात्मानं प्रज्ञां कुर्वीत सद्द्विजः ॥
इमं देहस्थमात्मानं विज्ञायोक्तेन वर्त्मना ।
परां प्रज्ञां प्रकुर्वीतेत्येष शास्त्रस्य संग्रहः ॥

(१८६४-८७३-८७४, इत्यादिना मण्डनमतमपि वार्तिकं समर्थयति ॥

'विज्ञाय प्रज्ञां कुर्वीते'त्यत्र न वार्तिक-मण्डनयोर्विरोधः

सति चैवं पूज्यश्रीशास्त्रिपादानां भूमिकायाम्—"विज्ञाय प्रज्ञां कुर्वीत" त्यस्य विवरणप्रसङ्गे वार्तिकं संसृष्टार्थविषयम्, मण्डनमते शाब्दं ज्ञानं, तदेवाभ्यासतो संसृष्टविषयम्, तत्र ब्रह्मसिद्धि-वार्तिकयोर्निरस्यनिरासकभाव एवेत्यादि-समीक्षा पुनर्विमर्शनार्हा ॥

शाब्दपरोक्षापरोक्षवादयोरुभयसंमतत्वम्

तत्र शाब्दापरोक्षवाद-मानसापरोक्षवादावुभावपि वार्तिकस्याप्यभिमताविति त्वन्यदेतत् । तत्र प्रस्थानान्तरमात्रम, न सिद्धान्तभेद इति तु निष्कर्षः ॥

तत्र मतद्वयेऽपि प्राथमिके, निदिध्यासनजे वा साक्षात्कारे सत्यपि सांसारिकव्यवहारदर्शनविरोधशङ्का-तत्समाधाने ब्रह्मसिद्धि-वार्तिकयोः समाने, न तु तत्र वैमत्यम्। यत्तु वार्तिके तत्त्वज्ञानेन मानसेनापि नैसर्गिकाविद्यानिवृत्तिपर्यन्तं ज्ञानमभ्यसनीयमिति गौडपादकारिकोल्लेखपूर्वकं महामीमांसकमतमेकं निर्दिष्टम्,

यच्च—

यदाऽसाधारणाऽविद्या प्रत्यगात्मैकगोचरी ।
अज्ञानाद्यात्मिका सिद्धा द्वैविध्यं स्यात्तदा कुतः ॥

(८९२) इत्यादिना

राहादिदर्शनं यच्च ज्ञानिनोऽपीह चोद्यते ।
बाधितस्यैव तत्सूतेस्तदप्युक्ते न दूषणम् ॥

(१८७७ श्लो. ९५७) इत्यन्तेन निरस्तम्, तदिदमपरोक्षसाक्षात्कार-स्यैवोभयत्राज्ञानविरोधित्वाविरोधित्वयोस्तत्र प्रस्तावात् मण्डनमतेऽप्याऽऽनिदिध्यासनमेव रागानुवृत्तिः, ध्यानाभ्यासपाटवाधीनसाक्षात्कारेणाज्ञाने निवृत्ते द्वितीयकल्प इव बाधितानुवृत्तेरेव रागादिषु स्वीकारात, श्रवण-मनन-निदिध्यासनावस्थायाः साधकस्थितप्रज्ञावस्थारूपत्वस्यैवाङ्गीकाराच्च महामीमांसकपदं ब्रह्मदत्तपरम्, अथवा प्रभाकरस्याप्यन्ततो वेदान्तसिद्धान्ते श्रद्धातिशय आसीदिति विवक्षायां प्रभाकरपरं वा मन्तव्यम् ॥

भगवत्पादानां मण्डनेनेव प्रभाकरादिनापि विवाद आसीत्,
तत्र सोऽपि पराजितः संन्यासं स्वीकृतवान्

तत्र प्रभाकर-मण्डन-ब्रह्मदत्त-भर्तृप्रपञ्च-सुरेश्वर-कुमारिलानां सर्वेषां परस्परं भगवत्पादकालिकानाम्, भगवत्पादानां च प्रभाकरेण साकं वादः कश्चनासीत्, यत्र मण्डन-ब्रह्मदत्त-भर्तृप्रपञ्च-वार्तिककारा एकमता आसन् । भगवत्पादानाम् 'अत्रापरे प्रत्यवतिष्ठन्ते' इति तु प्रभाकरमतमेव । तेनावगम्यते—प्रभाकरोऽपि पराजितो भगवत्पादैः ॥

अत एव नियोगवाक्यार्थत्ववादो न कस्यापि सम्मतः । तत्र भगवत्पादा अपि—"अत्रापरे प्रत्यवतिष्ठन्ते" इति प्रतिपत्तिविधिविषयतया शास्त्रेण ब्रह्मसमर्पणमिति समन्वयाधिकरणद्वितीयवर्णकेन प्रभाकरमतमेव निरस्यन्तीति ब्रह्मसिद्धौ व्यक्तं नियोगकाण्डोपक्रमे । ब्रह्मसिद्ध्युपक्रम इव तद्धि मतं वार्तिकेऽपि तत्र तत्र निरस्तमेव । अतो ज्ञायते—प्रभाकरोऽपि पराजितोऽद्वैतसिद्धान्तं कर्मसंन्याससाधुतापक्षमपि स्वीकरोति स्मेति । विश्वस्यते, इदमेवाभिप्रेत्य न्यायरत्नदीपावल्याम् "प्रसिद्धप्रभावैर्विश्वरूप-प्रभाकर-मण्डन-वाचस्पति-सुचरित-मिश्रैः शिष्टाग्रणीभिः परिगृहीतस्य संन्यासस्य कथं द्वेष-मोहाभ्यां विनाऽपलापसंभवः,? ननु विश्वरूप-प्रभाकरावपि भवत्पक्षपातिनौ; तावप्येकदण्डिनावि'ति ॥

तत्र को वा विश्वरूपः? को वा मण्डन इति व्यक्तीकरिष्यते परस्तात् । तत्र प्रभाकरो नियोगपदार्थवादी सर्वेषामपि तत्कालीनानां निरसनीय आसीत्,

विशिष्य तु मण्डनस्य, यस्य प्रतिवचनं प्रभाकरान्तेवासिनः शालिकनाथस्य परमं लक्ष्यमासीत् ॥

तत्र शालिकनाथेन स्वीयप्रकरणपञ्चिकायां मण्डनसिद्धान्ताः (ख)परिशिष्टेऽनूद्यैवं निरस्ताः, येषां परिहारोऽपि तत्र विशदः। तद्यथा—निष्कर्षस्तु —वार्तिके "इति व्याचक्षते केचिद्विज्ञायेति वचः स्फुटम्" "महामीमांसका धीराः" "अत्र प्रतिविधीयते" इति निर्दिष्टो महामीमांसकोऽपि न मण्डनः, किन्तु ब्रह्मदत्तः, अन्यो वा। ब्रह्मदत्त एव हि प्रपञ्चविलयद्वारा सर्वस्याम्नायस्यैकात्म्यपर्यवसानवादी, भावाद्वैतवाद्यपि, यस्यापि निरासः स्वयं मण्डनेनानन्दपदव्याख्यावसरेऽकारि। यथाच मण्डनो मुक्तात्मस्वरूपे वार्तिकमेवानुसरति, न तु तद्विरुद्धम्, तथा विवेचितमधस्तात्। संग्रहस्तु—न मण्डन-सुरेश्वरौ भिन्नसिद्धान्तौ कुत्रापि। आनन्दगिरिरपि वार्तिकव्याख्यायाम्—

"अन्ये तु पण्डितम्मन्याः सम्प्रदायानुसारतः।
विज्ञायेति वचः श्रौतमिदं व्याचक्षतेऽन्यथा॥
तत्त्वमस्यादिवाक्योत्थविज्ञानेन यथोचितम्।
विज्ञाय वस्त्वसंसर्गि प्रज्ञां कुर्वीत यत्नतः॥"

इति वार्तिकस्याभिमतं परमसिद्धान्तमेवोपस्थापयतीति लिखति, यतो नोपरि वार्तिकं नैनं सिद्धान्तं कुत्रापि निरस्यतीति विशदमधस्तात्॥

### मण्डन-सुरेश्वरयोः सिद्धान्तभेदादनैक्यायोगः

तत्र मण्डन-सुरेश्वरयोः सिद्धान्ते नानैक्यमित्येतावन्मात्रमत्र समीक्षितम्। यत्तु मित्रप्रवरेण श्रीमता पी. पी. एस्. शास्त्रिमहोदयेन ब्रह्मसिद्धेः प्रथमसंस्करणे स्वीय आमुखे ब्रह्मसिद्धि-वार्तिकयोः केषुचन वाक्येष्वर्थतः साम्यमुपक्षिप्यते, किं बहुना? असाधारणा मण्डनसिद्धान्ता ब्रह्मसिद्ध्युपक्षिप्तक्रमेणैन वार्तिकेऽप्युपक्षिप्यन्ते। द्रष्टव्यं चात्र(क)परिशिष्टान्ते संयोजितम्॥

### शाब्दपरोक्षापरोक्षवादे न वैमत्यं ब्रह्मसिद्धि-वार्तिकयोः, यतो मननेनानुमानेनापि साक्षात्कार इत्यभिप्रायप्रकाशिका

प्रस्थानभेदस्तु यद्यपि प्रस्थानवादमात्रेण शाब्दापरोक्ष-तत्परोक्षवादे भाष्यारूढे दुर्निवारः। तत्र शब्देनाप्यपरोक्षज्ञानं भवितुमर्हति, नेन्द्रियजमेव ज्ञानं

प्रत्यक्षमिति नियम इति शाब्दंपरोक्षवादव्यवस्था वार्तिकेनोपक्षिप्यते ; तथापि भर्तृप्रपञ्चमतनिरासावसरे—

"मनसैवानुद्रष्टव्यमिति यद् भवतेरितम् ।
सत्यमेतद् मनो मुक्त्वा न तस्यास्त्यन्यतो गतिः ॥
तत्त्वस्माभिर्यथाऽभाणि मनसैवेति दर्शनम् ।
मनसा शक्यते द्रष्टुं तत्तथैव प्रमान्वयात् ॥"

इति परम्परया शब्दोपजीवनमात्रेण मनसैव साक्षात्कार इति पक्षमपि वार्तिकं स्वीकरोति ॥

तत्र मननाह्वयं प्रसंख्यानमनुमानमेव साक्षादपरोक्षकारणमिति ब्रह्मसिद्धिमतमिति परं विशेषः । उभयत्रापि परोक्षज्ञानजनकत्वं शब्दस्य, अनुमानस्य चौत्सर्गिकम्, न तु स्वाभाविकमिति समानम् । इदमेवाभिप्रेत्याभिप्रायप्रकाशिका 'पर्वतो वह्निमानि'त्यत्रानुमानजन्यमपि ज्ञानं पर्वतांशे सन्निकृष्टेऽपरोक्षमिति वदति, यदेव वेदान्तपरिभाषाऽप्यनुवदति, शारीरकमीमांसाभाष्यवार्तिकं तु विशदं लिखत्यनुमानादप्यपरोक्षं ज्ञानं भवतीति । विश्वस्यते, तदपि ब्रह्मसिद्धिसिद्धान्तमेवावलम्बत इति । प्रमाणविशेषस्य परोक्षापरोक्षज्ञानजननस्वभावस्तूभयत्रापि नोररीक्रियते, परोक्षत्वमपरोक्षत्वं वा विषयस्वभावैकनियतम्, न तु प्रमाणनियतमिति निष्कर्षः ॥

### शाब्दज्ञानमात्रेणाज्ञाननिवृत्तेर्मननाद्यपेक्षा साक्षात्कारस्याज्ञाननिवर्तकत्वे

तत्र शाब्दज्ञानमात्रेणाज्ञाननिवृत्तेरननुभवात् तेन परोक्षज्ञानमखण्डार्थविषयम्, तदेव विमलीकृत्याभ्यस्यमानमज्ञाननिरसनक्षमापरोक्षज्ञानमुत्पादयतीति ब्रह्मसिद्धिसिद्धान्तः, शाब्दमेवापरोक्षं विमलीकृतमभ्यस्यमानमज्ञाननिरसनक्षममिति तु शाब्दापरोक्षवादसिद्धान्तः ॥

अज्ञाननिवर्तनक्षमापरोक्षसाक्षात्कारपर्यन्तं स्थितप्रज्ञस्य साधकावस्था, ततः सिद्धावस्थेति प्रस्थानभेदोऽयं मननादिविधिवैयर्थ्यं मा भूदित्युभाभ्यां स्वीक्रियते । फलभेदस्तु तत्र स्थितप्रज्ञसाधकावस्था, सिद्धावस्था वा श्रवणमात्रेणेति ॥

ब्रह्मसिद्धिस्तु तत्रापरोक्षसाक्षात्कारात् पूर्वं साधकावस्थैव, तदनन्तरं तु सिद्धावस्थैवेति स्वीकरोतीति पूर्वमावेदितम्। इतः परमत्र पण्डितप्रवराः प्रमाणमित्यलमतिविस्तरेण॥

अतः परमवशिष्यते किं मण्डन-सुरेश्वरौ भिन्नौ, उताभिन्नौ चेति चर्चा

मण्डन-सुरेश्वराभेदवादनिष्कर्षे कारणानि

तत्र पूज्यश्रीकुप्पुस्वामिशास्त्रिपादाः स्वीयब्रह्मसिद्धिसंस्करणभूमिकायां प्राध्यापकप्रवरहिरयण्णमतमवष्टभ्य मण्डन–सुरेश्वरौ भिन्नौ; सिद्धान्तभेदात्, विश्वरूपस्यैव सुरेश्वरत्वात्, तस्य न्यायरत्नदीपावल्युक्तरीत्या मण्डनादतिरिक्तत्वात्, शङ्करविजयानां बहूनामैकरूप्याभावेन तेष्वन्यतममात्रावलम्बनेन तत्त्वभेदसाधनासम्भवात्, मण्डनस्य भगवत्पादमतविरुद्धतत्प्राक्तनसम्प्रदायानुसारित्वात्, बहुषु स्थलेषु वार्तिके सुरेश्वरकृतौ मण्डनसिद्धान्तानां निरासाच्चेति समीक्ष्य निश्चिन्वन्ति॥

सिद्धान्तभेदेन न मण्डन-सुरेश्वरभेदः

तत्र ब्रह्मसिद्धि-वार्तिकयोः कुत्रापि न सिद्धान्तभेदः, न वा ब्रह्मसिद्धि-सिद्धान्तः कोऽपि वार्तिके निरस्तः, किं बहुना? १. मण्डनकुलघनमिष्टसाधनता-लिङर्थतावादः, २. श्रोतव्यादिवाक्ये ज्ञानोपायस्यैव विधानम्, न तु ज्ञानस्येति समर्थनम्, ३. आशरीरपातं कर्मविपाकसंस्कारेणैव जीवन्मुक्तानां लोकव्यवहारः, ४. ज्ञानत्वोपलक्षिताज्ञाननिवृत्तेर्भावरूपात्मस्वरूपतैव मुक्तिः, ५. भावाद्वैतनिरासः, ६. सर्वस्याम्नायस्य प्रपञ्चविलयविधयैवैकात्म्यवादायोगः, ७. संयोगपृथक्त्वन्यायेन कर्मणां ज्ञान उपयोगः, तेन तद्द्वैकात्म्यमेव मोक्ष इति ब्रह्मदत्तमत-निरासः इत्यादिसिद्धान्ता वार्तिक-ब्रह्मसिद्ध्योरुभयोरपि समाना एव॥ (क)परिशिष्टमत्र द्रष्टव्यम्

विध्यर्थ इष्टसाधनत्वम्, न तु भाट्टानां प्रेरणा, प्राभाकारस्य नियोगो वेति मण्डन-सुरेश्वरयोः समानम्

तत्र ब्रह्मसिद्धिवत्, न केवलं नियोगलिङर्थतावादम्, किन्तु भाट्टाद्यभिमतप्रेरणाव्यापारसामान्यलिङर्थतावादं च निरस्य, इष्टसाधनतालिङर्थतामेव सम्बन्धवार्तिके (पृ० १८२)—

15

"लिङादिः प्रेरणावाची कुतः कार्यमितीर्यताम् ।
विषयत्वेन नाक्षेपो भावार्थो विषयो यतः ॥ ६३३ ॥

प्रेरणाऽपीह नैवं स्यादज्ञातज्ञापनात् पृथक् ।
समस्तकार्यदोषोक्तिप्रसङ्गान्नित्यभावतः ॥ ६३४ ॥

न स्वरूपं लिङादीनां प्रेरणाज्ञापकत्वतः ।
अन्योन्यरूपभेदेऽपि प्रेरणानुगमात्तथा ॥ ६३५ ॥

शक्तेरनभिधेयत्वात् तद्व्यापारोऽपि नेष्यते ।
प्रेरकाभावतो वेदे तद्व्यापारोऽपि नेरणा ॥ ६३६ ॥

अतः समीहितोपायतया वस्त्ववबोधयन् ।
अबुद्धं प्रेरको वेदो ज्ञापना प्रेरणा मता ॥ ६३७ ॥"

इत्यादिना सुरेश्वरो मण्डनमतमेव विधिविवेक-ब्रह्मसिद्धिसर्वस्वं व्यवस्थापयति ॥

**ज्ञानक्रियात्वेऽपि तस्य चोदनातन्त्रत्वाभावो**
**मण्डन-सुरेश्वरयोः समानः**

ज्ञानाविधित्वपक्षस्तु क्रियात्वेऽपि ज्ञानस्य वस्तुतन्त्रत्वात्, अपुरुषतन्त्रत्वाच्चेति ब्रह्मसिद्धिरिव वार्तिकमप्यभिप्रैति ॥

तद्यथा—

"वस्तुतन्त्रं तु सद् यत्र विज्ञानं जायते बलात् ।
तत्रापुरुषतन्त्रत्वाद् न कश्चिद्विधिरिष्यते ॥"

(पृ. १८४५ श्लोकः ७५६)

व्यापारः कर्तृतन्त्रो हि तमेतमिति शास्त्रतः ।

नित्यो ध्यानादिरूपो वा स स्याद् बुद्धिविशुद्धये ॥ ७५७ ॥

इति । अत्रानन्दगिरिवाक्यानि—

"अत्र हि ज्ञानस्य विध्यनर्हत्वात् तद्धेतुर्विधेयः । स च वेदानुवचनादिः, शमादिश्च पुरुषाधीनो व्यापारो विविदिषावाक्येन, शान्तादिवाक्येन च विधास्यते ॥

तत्र मण्डन-विश्वरूपौ भिन्नौ, विश्वरूप एव सुरेश्वर इति च "प्रसिद्धप्रभावैर्विश्वरूप-प्रभाकर-मण्डन-वाचस्पतिमिश्रैः शिष्टाग्रणीभिः परिगृहीतः संन्यासः कथं द्वेष-मोहाभ्यां विनाऽपलापसम्भवः? ननु विश्वरूप-प्रभाकरौ भवत्पक्षपातिनौ, न; तावपि त्रिदण्डिनावेव। गृहस्थावस्थाविरचिते च विश्वरूपग्रन्थे दर्शितवाक्यपरिग्रहो दृश्यते। न चासौ ग्रन्थः संन्यासिना रचितः। तथाहि परिव्राजकाचार्यसुरेश्वरविरचितेति ग्रन्थनाम स्यात्, लिखितं तु भट्टविश्वरूपरचिते" इति। अत्र न्यायरत्नदीपावली सत्यं मण्डन-विश्वरूपौ विविनक्ति, एकीकरोतीव सुरेश्वर-विश्वरूपौ ॥

विश्वरूप-सुरेश्वरयोरैक्याविरोधः; सुरेश्वरपदस्येन्द्रसरस्वतीपरत्वात् ॥

तथापीदं प्रतिभाति—नैतावता विश्वरूप-सुरेश्वरौ भिन्नाविति। तेन हीदमेवावगम्यते-विश्वरूप एव सुरेश्वर इति, न तु मण्डनो न सुरेश्वर इति। सुरेश्वरपदं हीन्द्रपरम्, इन्द्रपदपर्यायत्वादिन्द्रोपपदं योगपट्टपरमिन्द्रसरस्वत्या उपस्थापकम् ॥

व्यक्तं चानन्तानन्दगिरिशङ्करविजये इन्द्रसम्प्रदायो नाम कश्चन भगवत्पादान्तेवासिनामासीदिति ॥

तत्र ५० तमेऽध्याये भगवत्पादमण्डनसंवादात् पूर्वं कश्चन सुरेश्वरो नामान्तेवास्यासीदिति विज्ञायते। मण्डनोऽपि पराजितः संन्यासं स्वीचकार तदीयपणबन्धानुसारमित्यनुमीयते। यद्यप्यानन्दगिरिशङ्करविजये स्पष्टं तस्य संन्यासाश्रमस्वीकारो न वर्णितः ॥

**मण्डनस्य भगवत्पादशिष्यत्वे माधवीयशङ्करविजयः प्रमाणम्, तदुपदेशानन्तरं संन्यासग्रहणानन्तरमेव तस्य ब्रह्मसिद्धिरपि**

माधवीयशङ्करविजयस्तु दशमे सर्गे न पणबन्धस्य कृते, किन्तु परमेण विश्वासेनैव संन्यासो मण्डनेन स्वीकृतः, न केवलं संन्यासदीक्षा, किन्तु बहुभिः प्रकारैः वेदान्ततत्त्वोपदेशोऽपि भगवत्पादैस्तत्र कृत इति लिखति। विश्वस्यते, तदनन्तरमेव भगवत्पादानां सिद्धान्तमेदान् सम्यगधीत्य ब्रह्मसिद्धिं निबबन्ध

मण्डन इति। संन्यासदीक्षानन्तरमपि मण्डनरूपेणैव तस्य व्यवहारः सर्वत्रानन्द-पूर्णस्येव विद्यासागरनाम्नाऽऽसीदिति व्यवस्थाऽपि नानुपपन्ना। ततश्च ६० तमाध्याये आनन्दगिरिशङ्करविजय उल्लिखितो विश्वरूपोऽपरः सुरेश्वरः, मण्डनस्त्वपर इन्द्रसरस्वत्याख्यः। तत्र विश्वरूप एव मण्डन इति माधवीये सप्तमाध्याये (११३-११८) श्लोकेषु प्रतिपाद्यते ॥

गुरुवंशकाव्यमपि शृङ्गगिर्यास्थानपण्डितरचितम्—गृहावस्थायां विश्वरूप एव, संन्यासावस्थायां सुरेश्वर इति शास्त्रिपादसिद्धान्तं पोषयति, यत्तु श्रीवाणी-विलासमुद्रालयेन प्रकाशितमेवं लिखति—मण्डन इति बिरुदमात्रम्, न तु तन्नामा कश्चिदासीत्, स तु गृहावस्थायामेव मृतः—इति मित्रप्रवरश्रीशास्त्रिमहोदयः जगद्गुरु-तपस्विवर श्रीशृङ्गगिरिपीठाधिप-पूज्यपाद-श्रीनृसिंहभारतीस्वामिपादानां वर्तमानजगद्गुरुश्रीमदभिनवविद्यातीर्थपादानां परमगुरूणामुपदेशमुपक्षिपति ॥

तत्र मण्डनपदं यदि बिरुदम्, तर्हि कस्येदमिति तु न विशदम्। स्यान्नाम तत्र यथा तथा वा, मण्डनस्तु न सुरेश्वर इति सोऽपि मन्यते, एवमपि माधवीये सप्तमे सर्गे उल्लेखस्तु मण्डनस्यैव विश्वरूप इत्यादि नामान्तरमित्यङ्गीकारेऽपि न विरुध्यते। न चैतावताऽपरो विश्वरूपो नासीदिति कल्पनाऽवसरति ॥

### गुरुवंशकाव्यस्य माधवीयशङ्करविजयेन विरोधः, मण्डनेन वार्तिकरचनात् पूर्वं ब्रह्मसिद्धिर्लिखिता

गुरुवंशकाव्यं तु—मण्डनसंवादात् पूर्वं विश्वरूपो भगवत्पादैर्दृष्टः, तस्य संन्यासदीक्षा तु वार्तिकद्वयसमापनानन्तरमिति प्रस्तौति। तत्तु माधवीयशङ्कर-विजयविरुद्धम्, यत्र त्रयोदशसर्गे—मण्डन एव सुरेश्वराख्यः संन्यासदीक्षानन्तरं भगवत्पादभाष्ये वृत्तिं कर्तुमयाचत, परं स्वपरैरन्तेवासिभिः सः प्रतिरुद्धः—पद्मपाद एव वृत्तिं भाष्यस्य निबध्नात्विति भगवत्पादाः प्रार्थिताः। पद्मपादस्तु हस्तामलक एव भाष्यस्य वार्तिकमारचयत्विति न्यवेदयत, तदनु भगवत्पादाः हस्तामलकोऽयं जन्मत एव स्थितप्रज्ञः, स तादृगात्मा न बहिः प्रवृत्तौ नियोगमर्हत्यत्र वृत्तौ ॥

स मण्डनस्त्वर्हति बुद्धतत्त्वः सरस्वतीसाक्षिकसर्वविस्वः।
तत्तादृशात्युज्ज्वलकीर्तिराशिः समस्तशास्त्रार्णवपारदर्शी ॥

आसादितो धर्महितः प्रयत्नात् स चेन्न रोचेत न दृश्यतेऽन्यः ।
किंचात्र संशीतिरमून्ममातो यदेककार्ये बहवः प्रतीपाः ॥

इति प्रत्युदतरन्निति—निबद्धम् ॥

अनेनेदमवगम्यते—वार्तिकरचनात् पूर्वं संन्यासदीक्षानन्तरम्, ततः पूर्वं वा मण्डनेन ब्रह्मसिद्धिर्विरचिता, येन भगवत्पादा नितरां सन्तुष्टा आसन्निति ॥

### सुरेश्वरद्वये प्रमाणनिर्देशः

अयमत्र निष्कर्षः—विश्वरूपोऽपि सुरेश्वर एक आसीत्, य आद्यः सुरेश्वरोऽनन्तानन्दशङ्करविजये निर्दिष्टः, गुरुवंशे मण्डनदर्शनात् प्राक् भगवत्पादैः साक्षात्कृत इत्युल्लिखितम्, परन्तु न स वार्तिककर्ता, वार्तिककर्ता तु मण्डनः सुरेश्वर एव, यतो ब्रह्मसिद्धावुक्ता सिद्धान्ताः सर्वेऽपि वार्तिकेऽपि वर्तन्त इति विवेचितम्। एवमङ्गीकारे हि न न्यायरत्नदीपावल्या, न वा केनापि शङ्करविजयेन विरोधः। व्यासाचलस्तु माधवीयशङ्करविजयोक्तरीत्या मण्डनस्यैव विश्वरूप इति नामान्तरम्; "तस्माद् द्विनामा ब्राह्मणः स्यादि"ति श्रुत्यन्तरादिति मत्वा विश्वरूपशब्देनापि मण्डनमेव मन्यते। शृङ्गगिरिपरम्परायां स एवापरः सुरेश्वरो भवितुमर्हति। (11291) संङ्ख्याकायां मातृकायां मद्रासराजकीयग्रन्थागारे व्यासपूजावसरे सुरेश्वरस्थाने विश्वरूपाचार्य एव पूजनीयतया निर्दिश्यते, न तु सुरेश्वरो नाम कोऽपि पूजनीयः। कामकोटिसम्प्रदाये तु सुरेश्वरस्यैव वार्तिककारस्य पूजनीयकोटौ निर्देशः। आनन्दगिरिशङ्करविजये सुरेश्वरस्यैव तत्पीठाभिषेकश्रवणाच्च मण्डन—सुरेश्वरावुभावभिन्नाविति निश्चीयते; विश्वरूपस्यैव सुरेश्वरत्वात्। इदमेवाभिप्रेत्याभिनवद्राविडाचार्यश्रीबालकृष्णानन्दसरस्वतीविरचिते शारीरकमीमांसाभाष्यवार्तिके मण्डन एव कुमारिलजामाता सुरेश्वरोऽभूदिति निष्कृष्यते ॥

तत्रानन्तानन्दगिरिर्भगवत्पादानां प्रशिष्य इति स्वयं स्वीये शङ्करविजये प्रस्तौति। मित्रवर्यः श्री पी. पी. एस्. शास्त्रिमहोदयोऽपीदमेवमनुवदति, तथापि 'तत्र यदि विश्वासः' इति लिखन् स तत्प्रामाण्ये परं सन्दिग्धे, परं तु न तत्र संशीतिकारणं किमपि निर्दिशति। तत्र मण्डन एव सुरेश्वराख्यः शृङ्गगिरौ शारदापीठमारोपित इति तदुल्लेखस्तु कलिकातामुद्रापितानन्दगिरिशङ्करविजयमवलम्ब्य ॥



शृङ्गगिरौ पद्मपादाचार्य एवाभिषिक्तः, काञ्च्यामेव सुरेश्वर इति तारकमठस्थानन्दगिरिशङ्करविजयो निर्दिशति ॥

प्राचीनवाराणसीतारकमठमातृका तु शृङ्गगिरौ पद्मपाद एव पीठमध्यारोपित इति वदति, काञ्च्यां तु स श्रीकामकोटिपीठमारोपित इति । मण्डन एव यत्र कुत्रापि सुरेश्वर इति त्वविप्रतिपन्नम् ॥

शृङ्गगिरिपरम्परा तूच्चतमाधिकरणिकप्रवरतिलाङ्कमहोदयप्रकाशिता पृथ्वीधराख्यं प्रथममन्तेवासिनमुपक्षिपति, अनन्तरं तु विश्वरूपम्, अन्या तु श्रीशृङ्गगिरिपूजापेटिकातो निस्सारिता सुरेश्वरमेव प्रथमं निर्दिशति । मठाम्नायस्तु प्रथममन्तेवासिनं पृथ्वीधरमाद्रियते । स एव दशनामिसंप्रदायप्रवर्तक इति त्वपरत्रोल्लिख्यते । महामहोपाध्यायश्रीवेङ्कटरत्नमहाशयस्तु श्रीकामकोटिपीठश्रीमुखव्याख्यापरीक्षामप्युपलक्ष्य श्रीविद्यारण्यस्य काञ्चीपुर एव निवासं तस्यैव श्रीशृङ्गगिरौ श्रीनृसिंहभारत्याख्यस्य संन्यासिनः तत्पीठेऽध्यारोपणम्, काञ्चीपुर एव तस्य समाधिम्, अत एव श्रीशृङ्गगिरौ विद्याशंकरनाम्नैव मुद्राऽपीत्यादि निर्धारयति । अतो ज्ञायते—मध्ये विच्छिन्नायाः श्रीशृङ्गगिरिपरम्परायाः श्रीविद्यारण्येनैवोद्धरणमिति ॥

भवतु नाम, प्रकृते मण्डन-सुरेश्वरैक्यविषये सर्वेषां शङ्करविजयानां को वा विरोधः? येन सर्वथा तेषामप्रामाण्येन मण्डन-सुरेश्वरयोरैक्यानैक्ये न निर्धारयितुं शक्येते ॥

तत्र शालिपादोद्धृतन्यायरत्नदीपावल्यपि किं वा मूलमवष्टभ्य मण्डन-विश्वरूपयोर्भेदम्, विश्वरूपस्यैव सुरेश्वरत्वञ्चोदलिखत्?

तत्रापि शङ्करविजय एव खलु प्रमाणम्। अतोऽत्र किं वा निर्धारणमत्र भवितुमर्हति शङ्करविजयपरीक्षायामिति चर्चा नानुचिता ॥

### माधवीयानन्दगिरीयशङ्करविजययोर्-विरोधः, तत्प्रामाण्यं च

तत्र माधवीयशङ्करविजयो भगवत्पादानां मण्डनेन विवादम्, श्राद्धकाले मण्डनगृहप्रविष्टानां भगवत्पादानां पणबन्धपूर्वकं विवादप्रसङ्गम्, तत्र सरसवाण्या उभयभारत्या माध्यस्थ्यं च संगृह्णाति ॥

अयमंशः यथावदेव गद्यशैल्या, न तु पद्यशैल्याऽनन्तानन्दगिरिशङ्कर-विजयेऽपि दृश्यते, यत्र नैकोऽप्यंशोऽनन्तानन्दशङ्करविजयगतो माधवीये प्रायेण भगवत्पादानामन्तिमसमाधिम्, काञ्च्यां भगवत्पादैः कामकोटिपीठस्थापनम्, सौर-गाणपत्यादिमतस्थापनादिकं वा वर्जयित्वा माधवीये न दृश्यते। तत्र यद्युभयोरप्यविरोधः, तर्ह्युभयमपि प्रमाणमाद्रियताम्, इतरथा त्वेकमेव प्रमाण-मित्यूरीक्रियतां नाम ॥

तत्र षण्मतस्थापनकथा न कस्यापि विप्रतिपन्ना, काञ्च्यां कामकोटिपीठ-स्थापनम्, तत्र सुरेश्वराचार्याणां कामकोटिपीठेऽभिषेकः, तत्र समाधाव-वस्थाय ब्रह्मीभावादिकं च सत्यं शङ्करविजये माधवीयेऽनुपलभ्यमानं प्रमाणम्, अप्रमाणम् वेति सत्यं परीक्षणमर्हति ॥

काञ्च्यां कामकोटिपीठे सुरेश्वरस्याभिषेककथाऽऽनन्दगिरिशङ्करविज-यानुबन्धिनी शिवरहस्योपबृंहिताऽपि ॥

तत्र शिवरहस्यनवमांशः काञ्च्यां भगवत्पादानां समाध्यवस्थायां ब्रह्मीभाव-मुपबृंहयति। सत्यं सति विरोधेऽप्रमाणमन्यतरत्, विरोधस्तु विरुद्धार्थभाषणे, न त्वेकस्यैकत्राभाषणमात्रेणेति ब्रह्मसिद्धिरपि तर्ककाण्डे विवेचयति। एतादृशस्थले हि 'अनुक्तमप्यविरुद्धमन्यतो ग्राह्यमि'ति नीतिरेव शरणम्। संभवति चात्र माध-वीयशङ्करविजयेन सहैकवाक्यताऽनन्तानन्दगिरिशङ्करविजयस्य सर्वत्र ॥

### भगवत्पादानां काञ्च्यामेव कामकोटिपीठे सुरेश्वर-प्रतिष्ठापनानन्तरमेव ब्रह्मीभावे माध-वीयशङ्करविजयाविरोधः

तत्र माधवीयशङ्करविजये बदरिकाश्रमगतान् भगवत्पादान् कृतावतार-कृत्यान् कैलासं प्रति प्रत्यागमनार्थं देवानां सत्यं प्रार्थनाऽऽसीत्, अनन्ताऽऽनन्द-शङ्करविजये तु काञ्चीतः स्वरूपब्रह्मात्मनाऽवस्थानमुपवर्णितम्, तेन च बदरि-काश्रमतः कैलासगमनमेकत्र, अपरत्र काञ्च्यामेव ब्रह्मीभाव इति तत्रोभयोर्विरोध इव प्रतीयते। तत्र च यथा 'कारणत्वेन चाकाशादिषु यथाव्यपदिष्टोक्तेः' इति न्यायेन आकाशादिकाया एकत्र, तेजआदिकाया अपरत्र सृष्टेराम्नाने न विरोधः —तत्र हि प्रतीयमानोऽपि विरोधः 'आकाशं वायुं च सृष्ट्वा तेजआदिसृष्टिरि'ति व्यवस्थया परिह्रियते, तथा बदरिकाश्रमात्तदुक्तप्रकारेण काञ्चीं समागत्य



ब्रह्मीभूता भगवत्पादा इति योजना कथं नाम विरुद्धा ? साम्प्रतमपि पूज्यपादान् कस्मिंश्चन ग्रामान्तरेऽवस्थितान् स्वग्रामं प्रत्यागन्तव्यमिति कृतायां प्रार्थनायां तत्स्वीकारेऽपि मध्ये मध्येऽन्यत्रावस्थाय वत्सरत्रयानन्तरं तत्रागमनं किमप्रमाणम् ?

चिद्विलासशंकरविजयस्तु विज्ञानकन्द-चिद्विलासयतीन्द्रसंवादः शङ्करविजयविलासान्तर्गतः कस्येति न ज्ञायते । अतः साक्षात् भगवत्पादप्रशिष्यानन्तानन्दगिरिशङ्करविजयतो न्यूनमेव तस्य प्रामाण्यम् । सर्वथा तु तत्रापि काञ्च्यां सर्वज्ञपीठं भगवत्पादैरधिष्ठितमिति वर्णनात् काञ्चीपीठं सर्वज्ञपीठं भगवत्पादानामिति तु तत्त्वम् ॥

वस्तुख्यातिविघातिवादितिमिरं नैष्कर्म्यसिद्धिस्फुट-
व्याख्याचन्द्रिकया विधूय सुधियां सद्दृष्टिमुन्मीलयन् ।
अन्तः संभृतशान्तवेदनसुधोद्द्योतः समुद्द्योतते
सर्वज्ञाश्रमचन्द्रमाश्चिजगतीसर्वज्ञचूडामणिः ॥

इति नैष्कर्म्यसिद्धिव्याख्यामुपसंहरन् ज्ञानोत्तमो हि (1300 A.D.) शतकवर्ती स्वस्य सर्वज्ञाश्रमभूषणत्वम्, विशिष्य सर्वज्ञचूडामणित्वं च निर्दिशन् स्वीयं कामकोटिपीठमेव सर्वज्ञस्य भगवत्पादस्य मुख्यं पीठं मन्यते । तत्र ज्ञानोत्तमः कश्चन श्रीशृङ्गगिरिपरम्परायामप्यासीदिति श्रीशृङ्गगिरिगुरुपरम्परातोऽवगम्यते, यः श्रीविद्यारण्यादपि प्राक्तनः, परन्तु स ज्ञानोत्तमभारती, श्रीकामकोटिपीठाधिपस्तु ज्ञानोत्तमो ज्ञानोत्तमेन्द्रसरस्वतीति विशेषोऽनुसन्धेयः । ज्ञानोत्तमः कश्चन श्रीकाञ्च्यां पीठाधिपतिरासीदिति गुरुराजरत्नमालायाम्—

जातो मङ्गलनाम्नि चोलविषये नागेशसंज्ञाद् द्विजात्
श्रीज्ञानोत्तम इत्यवाप्तविरुदो यस्तार्किकाग्रेसरः ।
ज्ञानानन्दमुनिस्त्रिषष्टिशरदः संमण्व्य पीठीं गुरोः
सिद्धिं मन्मथमार्गशीर्षसितसप्तम्यामवापत्सुधीः ॥

इति निर्देशेनावसीयते । ज्ञानोत्तमोऽयं जगद्गुरुश्रीशंकराचार्यपीठमध्यतिष्ठदित्यत्र तु योगसूत्रभोजवृत्तिविवरणप्रसङ्गे—

ज्योतिर्यद् दाक्षिणामूर्तं व्यासशंकरशब्दितम् ।
ज्ञानोत्तमाख्यं तद् वन्दे सत्यानन्दपदोदितम् ॥

इति श्रीसदाशिवेन्द्रसरस्वत्युक्त्याऽप्यवगम्यते ॥

अधिकं तु मैसूरनिवासि-यशःकाय-प्राध्यापकप्रवर-श्रीहिरियण्णमहोदयस्य नैष्कर्म्यसिद्धिभूमिकातोऽवगन्तव्यम् ॥

तत्रानन्दगिरिशङ्करविजय एक एव हि शृङ्गगिरौ शारदाप्रतिष्ठाम्, भारतीसम्प्रदायस्य प्रशंसां चातिसुन्दरं प्रस्तौति, न तु माधवीयशङ्करविजयोऽपि। किं बहुना ? प्रायेण सर्वत्र भगवत्पादविजययात्रोभयत्रैकरूपैव दरीदृश्यते ॥

अत्र शङ्करविजयौ द्वावपि मण्डन-सुरेश्वरविषये समानावेव दृश्येते । तत्रानन्तानन्दगिरिशङ्करविजयः पञ्चाशेऽध्याये सुरेश्वरादिभिः साकं विजययात्राम्, ५६ तमाध्यायमारभ्य मण्डनेन विवादकथासन्दर्भांश्च प्रस्तौति ॥

अनेनेदमवगम्यते—प्रथमप्रस्तुतसुरेश्वरादपरो मण्डनो विजययात्रायां भगवत्पादैः पराजित इति । माधवीयशङ्करविजयस्तु अष्टमे सर्गे—

"अथ प्रतस्थे भगवान् प्रयागात् तं मण्डनं पण्डितमाशु जेतुम्।"

इत्युपक्रम्य नवमे सर्गे—

अथ संयमिक्षितिपतेर्वचनैर्निगमार्थनिर्णयकरैः सनयैः ।

शमिताग्रहोऽपि पुनरप्यवदत् कृतसंशयः सपदि कर्मजडः" ॥

इत्यादिना तमेव विवादमनुकृष्य जैमिनिनापि भगवत्पादवचनस्यैव समादरेण पराजिते मण्डने सरसवाण्या सह विवादोऽनन्तरं प्रस्तूयते, यत्र कामकलाप्रश्नोत्तरं दातुमशक्तस्य शङ्करस्यामरुकशरीरप्रवेशादिकम्, ततः सरसवाण्या अपि पराजयं च प्रस्तुत्य मण्डनेन निजेच्छयाऽतिश्रद्धया च संन्यासाश्रमस्य ग्रहणम्, सुरेश्वरादिद्वारा षण्मतस्थापनम्, ततः—

"दृष्टानर्थानृष्यशृङ्गादिकेषु क्षेत्रेष्वास्व प्राप्तसत्सन्निधाना" ॥

इति शृङ्गगिरौ शारदाया आदेशः, कापालिकस्य शङ्करवधार्थं प्रस्तुतस्य पद्मपादेन हननम्, नृसिंहाविष्टस्य पद्मपादस्य सतीर्थ्यैः स्तोत्रादिभिः संशमनानन्तरं पुनः शङ्करस्य तीर्थयात्राप्रसङ्गे हस्तामलक-तोटकादिशिष्यसंग्रहम्, ततः शृङ्गगिरिं प्रति प्रस्थानम्, तत्र शारदाया निवासः, तत्र शिष्याणां भाष्यप्रवचनादिकम्, तदाऽऽनन्दगिरेर्गङ्गापारान्तरगतस्य प्रत्यागमनप्रतीक्षं शङ्करं वीक्ष्य 'तस्य भित्तितुल्यस्य प्रतीक्षणं वितथमि'ति पद्मपादाशयमभिवीक्ष्य शङ्करस्य तदनुग्रहणम्, तेन तोटकवृत्तेन सर्ववेदार्थस्य संग्रहणम्, सर्वमेवाश्चर्यदृष्ट्यादिकं चावेक्ष्य स्तौति द्वादशान्तैरध्यायैः ॥

16



आनन्दगिरिस्तु तीर्थयात्राप्रसङ्गम्, कापालिकवृत्तान्तम्, शिष्यग्रहणम्, भाष्यप्रवचनादिकं च न प्रस्तौति, परं तु तत्र तत्र सुरेश्वर-हस्तामलकादीनां शिष्याणां विजययात्रायां भगवत्पादैः सहावस्थानमात्रं संगृह्णाति। न चात्रोभयोरपि कोऽपि विरोधः। एतावता को वा सुरेश्वरः,-किं मण्डन एव, उतान्य इति न माधवीयशङ्करविजयः संगृह्णाति। तत्र माधवीयशङ्करविजयः सप्तमसर्ग (१०३-११०) श्लोकेषु मण्डनमिश्रशर्मा प्रसिद्धो विश्वरूपो भगवत्पादकृतौ वार्तिककर्ता भविष्यतीति कुमारिलेन शङ्करस्य सविधे निवेद्यते॥

तेन चावगम्यते मण्डन-विश्वरूपयोरैक्यम्, वार्तिकरचयिता सुरेश्वरोऽपि स एवेति। तत्र मण्डनपदं विरुद्मिति वादो विरुद्ध्यते। विश्वरूप इति तु नामान्तरम् 'तस्माद् द्विनामा ब्राह्मणः स्यादि'ति श्रुत्योपपद्यते एव। तत्र तु न्यायरत्नदीपावल्यां विश्वरूप-मण्डनयोर्भेदः प्रतीयमानो व्याहन्यते। अत इदं प्रतिभाति—विश्वरूपाख्यो मण्डन एक आसीत्, अपरोऽपि मण्डन इति—यस्य तु महान् विश्वासः संयोगपृथक्त्वनयेन कर्मणामुपयोग इति पक्ष एव॥

ब्रह्मसिद्धि-वार्तिकयोर्भगवत्पादभाष्येणाविरोधः

अयं मण्डनो ब्रह्मसिद्धिकारः, सुरेश्वरो वा वार्तिककारो न भगवत्पादसिद्धान्तविरुद्धं भगवत्पादानां प्राक्तनसम्प्रदायानन्तरं वा न किमपि स्वीयब्रह्मसिद्धौ, वार्तिके वा निबध्नातीति व्यक्तीकृतमधस्तात्॥

मण्डनः

मण्डनस्य निवासः माहिष्मतीनगरमिति शङ्करविजयाद् अनन्तानन्दगिरीयतः, माधवीयाच्चावगम्यते, उभयत्रापि तद्गृहपरिचयादिविषये समानैव वाक्यशैली दृश्यते॥

तत्र माधवीये'कुतो मुण्डी'त्यादिप्रश्नोत्तरपरम्पराऽसाधारण्युपलभ्यते, आनन्दगिरीये तु न सा दृश्यते, केवलं श्राद्धावसरे समागमः, ततो वादव्यवस्थामात्रं च तत्र दृश्यते॥

माहिष्मतीनगरं तु दरभङ्गाप्रान्ते प्रसिद्धे मैथिलदेशे वर्तते, यस्य महिषीनाम्ना प्रसिद्धिः साम्प्रतम्। साम्प्रतिका राजकीयाः समितिमेकां संघट्य मण्डनस्मारकं किमपि कर्तुं साम्प्रतं प्रयतन्ते। तत्र बहूनि चिह्नानि तद्वाससंबद्धान्युपलभ्यन्त इति सर्वतः प्रथा। अतोऽयं मैथिलो गोडो ब्राह्मणः। तस्य मातुः

पितुर्वा नाम न साम्प्रतमपि ज्ञायते, न वा गोत्रम्, कियद्वयस्कः स आसीदित्यपि न ज्ञायते, पद्मपाद-हस्तामलक-तोटकाद्यनन्तरमेव तस्य संन्यासदीक्षाऽऽसीदिति माधवीयशङ्करविजये। सुरेश्वरस्य वार्तिकरचना तु—

"सनन्दनो नन्दयिता जनानां निबन्धमेकं विदधातु भाष्ये।
न वार्तिकं तत्तु परप्रतिज्ञं व्यधात् प्रतिज्ञां स हि नूत्नदीक्षः॥
आदिश्येत्थं शिष्यसङ्घं यतीन्द्रः प्रोवाचेत्थं नूत्नभिक्षुं रहस्तम्।
भाष्ये भिक्षो मा कृथा वार्तिकं त्वं नेमे शिष्या सेहिरे दुर्विदग्धाः॥"

इति भगवत्पादवाक्यादवगम्यते; तथाप्यतीव वृद्धोऽसाविति तु प्रथा सर्वतः॥

## मण्डनकृता निबन्धाः

तदीया निबन्धास्तु स्फोटसिद्धिः, विधिविवेकः, विभ्रमविवेकः, ब्रह्मसिद्धिश्च प्रसिद्धाः। तदीयदर्शनान्तरसिद्धान्तावलम्बिनां स्फोटसिद्ध्यादीनामप्यद्वैताविरोधमुपपादयत्ययं सर्वेषां सिद्धान्तानामविरोधेन। ब्रह्मसिद्धिनिबन्धनेन स्फोटवादे वैयाकरणसिद्धान्तेन मीमांसकसिद्धान्तस्य; तत्सिद्धान्तेनाद्वैतसिद्धान्तस्य च न विरोधलेशोऽपीति तु तदीयं हृदयम्॥

तत्र प्रथमस्तदीयो निबन्धः स्फोटसिद्धिः, ततो विधिविवेकः, ततो विभ्रमविवेकः। महामीमांसकोऽयं प्रभाकरसिद्धान्तस्य स्वसिद्धान्तविरोधे निरसने बद्धदीक्ष आसीत्, तत्र विभ्रमविवेकस्य प्रभाकररीत्याऽख्यातिवादनिरासः परमं लक्ष्यम्, विपरीतख्यातिसमर्थनं च। तदीया विपरीतख्यातिस्त्वनिर्वचनीयख्यातिरेवेति, न केवलं विभ्रमविवेकेन, किन्तु ब्रह्मसिद्धितोऽप्यवगम्यते। विपरीतख्यातिरियं न नैयायिकानामन्यथाख्यातिरिति प्राक्तनब्रह्मसिद्धिसंस्करणभूमिकापरीक्षणप्रसङ्गे विशदीकृतम्॥

## मण्डनाभिमतविपरीतख्यातिनिष्कर्षः

मण्डनो हि निरुपाधिकाध्यासे धर्म्यध्यासेऽप्यनिर्वचनीयख्यातिम्, सोपाधिकाध्यासे त्वन्यथाख्याति चाङ्गीकरोति। तेन तस्यांशतोऽनिर्वचनीयख्यातिः, अंशतश्च विपरीतख्यातिरिति तु तत्त्वम्, तेन शुक्तिरजतादौ, अन्यत्र च रजतत्वविशिष्टस्याधिष्ठानेऽध्यासः, रजतत्वादेस्तु लोहितस्फटिकन्यायेन सोपाधिकाध्यास एव, इति तत्रांशेऽन्यथाख्यातिर्विपरीतख्यातिर्वा। सा चात्र न नैयायिकानामिव; सन्निकृष्टविषयत्वादस्याः, असंनिकृष्टविषयत्वाच्च तस्या इति तत्त्वमत्रानुसन्धेयम्। तत्र माधवीयशङ्करविजयेऽष्टमे सर्गे—

'अयं च पन्था यदि ते प्रकाश्यः सुधीश्वरो मण्डनमिश्रशर्मा ।
दिगन्तविश्रान्तयशा विजेयो यस्मिन् जिते सर्वमिदं जितं स्यात् ॥
सदा वदन् योगपदं च साम्प्रतं स विश्वरूपः प्रथितो महीतले ।
महागृही वैदिककर्मतत्परः प्रवृत्तिशास्त्रे निरतः सुकर्मठः ।
निवृत्तिशास्त्रे न कृतादरः स्वयं केनाप्युपायेन वशं स नीयताम् ॥"

इत्यादिना मण्डनमधिकृत्य कुमारिलभट्टेनोद्‌बोधनेनावगम्यते—यदयं कर्मकाण्डमिव योगमार्गमपि वदति, येन तदाशयोऽवगम्यते—वेदान्ता अपि प्रमाणम्, परंतु विनापि संन्यासं योगसिद्धिर्भवितुमर्हतीति, तस्य प्रवृत्तिशास्त्रैकनिरतौ कारणमन्यदपि मैथिलसंप्रदायतोऽवगम्यते—यत् साम्प्रतमपि न कोऽपि मैथिलो ब्राह्मणः संन्यासं स्वीकरोति। इदमतोऽ-वगम्यते—यद् मैथिला मीमांसका अपि प्रभाकरवत् कुमारिलवद्वा नाविवक्षितार्थत्वेन, न वा प्रतिपत्तिविषयतयैव शास्त्रेण ब्रह्मणः समपर्णमिति सिद्धान्तं समाद्रियन्ते ॥

**मैथिलानां संन्यासविरोधित्वेनैव मण्डनस्य पराजये संन्यासपणबन्धः**

अत एव पणबन्धोऽपि मैथिलत्वं यज्ञोपवीतं वा मया परित्यज्येत इत्याशयेनैव संन्यासाश्रमो मया पराजये स्वीकरिष्यत इति मण्डनस्य, भगवत्पादानां तु—

बाढं जये यदि पराजयभागहं स्यां संन्यासमङ्ग परिहृत्य कषायचेलम् ।
शुक्लं वसीय वसनं द्वयभारतीयं वादे जयाजयफलं प्रति दीपिकाऽस्तु ॥"

इति संन्यासपरित्याग इति। अनेनेदमवगम्यते—संन्यासिनां शुक्लवस्त्रधारणवत्, मैथिलानां संन्यासस्वीकरणं, स्वसम्प्रदायविरुद्धत्वात् कलङ्कायैवेति ॥

मण्डन-शङ्करयोः "तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ती"ति वाक्यार्थ एव वादः ॥

सर्वथा तु संयोगपृथक्त्वन्यायेन कर्मणामुपयोगपक्षस्वीकारेऽप्यनाश्रमिणाम्, ऊर्ध्वरेतसां च ब्रह्मचर्यादेव प्रव्रजनं श्रौतमित्येतावन्मात्रस्वीकारेणैव मण्डनस्य पराजय इति ब्रह्मसिद्धितोऽवगम्यते, यत्र च "सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत्" इति सूत्रे दृष्टान्तस्वारस्यं मण्डनोक्तमप्रकम्प्यमेवेति वार्तिक-

तोऽवगम्यत इति पूर्वमावेदितम् । सर्वथा तु मण्डनोऽयं भूमण्डनो यथार्थनामा, न तु नामधेयमात्रेण ॥

### मण्डनग्रन्थानां मुद्रापितानां संग्रहः

तत्र विधिविवेकः चौखाम्बापुस्तकालयेन प्रकाशं गमितः । विभ्रमविवेकस्तु मद्रपुरराजकीयसंस्कृतादर्शभाण्डारेण । ब्रह्मसिद्धिस्तु कुलपत्यादिबिरुदभूषण-पूज्य-स्वनामधन्यश्रीकुप्पुस्वामिशास्त्रिपादैरित एव बहुपरिश्रमस्वीकारेण तत्तदादर्शस्थानानां संग्रहणेनातिगभीरशास्त्रार्थगुम्फितभूमिकोपहरणेन, बहुतरप्राचीनमातृकादिसाहाय्येन, पाठभेदानां तत्तादृशानां सतोलनं सङ्कलनेन सुयोग्यपाठस्यैव मूले बहु विचार्य योजनेन च (१९३९ तमे) सम्वत्सरे विस्तृतातिगम्भीरशङ्खपाणिव्याख्यया साकं बहिरवातारि । तत्रान्ते मण्डनावष्टम्भस्थानानि तत्तादृशकुमारिलवार्तिक-प्रकरणपञ्चिकादयः तदवष्टब्धास्तत्सिद्धान्तनिरासकाश्च बहवो ग्रन्थाः शास्त्रिपादैः संगृहीताः, येन सर्वमपि पण्डितकुलं शास्त्रिपादानां तद्वंशस्य चाधमर्णम् ॥

तत्र भूमिकापरीक्षणप्रसङ्गेन विधेयस्यास्य कस्यचन कस्यचन विषयस्योपक्षेपो हि शास्त्रिपादानुगृहीतस्यैव सहस्रकिरणस्य क्षुद्रदीपेन पूजनम्, तदपि "त्वदीयं वस्तु गोविन्द तुभ्यमेव समर्प्यते" इति न्यायेन, न तु स्वतन्त्रम् ॥

### प्रकाश्यमानव्याख्याद्वयविषये वक्तव्यम्

साम्प्रतिकं तु संस्करणं ब्रह्मसिद्धिव्याख्ययोश्चित्सुखानन्दपूर्णमुन्योर्यथार्थनाम्नोरभिप्रायप्रकाशिकाख्याया भावशुद्ध्याख्यायाश्च । इमे अपि शास्त्रिपादैर्यद्यपि तैरेव वहिरवतारयितुं संकल्पिते, परं तु सौभाग्यवशात् तच्चरणधूलेरस्यैव विधेयस्य कर्तव्यं दैववशात् तत् समापतितम्, येनायमात्मानं धन्यधन्यं मन्यते ॥

### भावशुद्धिः

तत्र सत्यपि शङ्खपाणिव्याख्याने विद्यासागरव्याख्या भावशुद्धिः 'नामूलं लिख्यते किञ्चिन्नानपेक्षितमुच्यते" इति नीत्या गम्भीरतराणां तत्त्वानाम्, समस्यानां च सुललितमुपपादयन्ती मण्डनकृतेर्ब्रह्मसिद्धेर्नूनं मण्डनमेव । अस्या व्याख्यानरत्नमिति तु नामान्तरम् । सानुनयमिदमुपक्षिप्यते मध्येषु केचन स्थानेषु भावशुद्धिरियं तत्त्वशुद्धिरिति मुद्रापिता, एतां भावशुद्धिरिति विपरिणमय्य प्रियपाठकाः पठन्त्विति ॥



## अभिप्रायप्रकाशिका

अभिप्रायप्रकाशिका तु ततोऽपि संग्रहात्मिकाऽपि वादप्रस्थानोपयुक्त-स्वप्रकाशतावादमितरव्यख्यातोऽपि विशदयति—चित्सुख्यां तत्त्वप्रदीपिकाख्याया-मिव (पृ० १४०-२) "विपर्ययाभावस्तु युक्तोऽनुमातुमि"ति ब्रह्मसिद्धिस्तस्या मूलम्। किं बहुना ? ब्रह्मसिद्धेः—'आत्मा संवेद्यः, असंवेद्यश्चेति वाक्यमेव तदीय-स्वप्रकाशतावादस्य मूलम्। ब्रह्मसिद्ध्याः स्वप्रकाशतावाद एव चित्सुख्याः श्रीजयतीर्थवादावल्यद्वैतसिद्ध्यादीनां वादप्रस्थानस्य भित्तिस्थानम्। इष्टसिद्धेः—"अनुभूतिः, स्वप्रकाशा, अनुभूतित्वात्, अनुभाव्यत्वे घटादिवदननुभूतित्व-प्रसङ्गादि"त्यादेरपि प्रकृता ब्रह्मसिद्धिरेव मूलम् ॥

अयमेव न्यायो भावशुद्ध्यादेरवाच्यस्यापि लक्ष्यत्वसिद्धान्तेऽपीत्यनु-पदमेवोक्तम् ॥

तत्र भावशुद्धिः, अभिप्रायप्रकाशिका च प्रतिकारिकं तत्तत्कारिकायाः पदादियोजनया विवक्षितं स्वतन्त्रं स्वयमपि व्याख्यानेन विशदीकरोति ॥

ब्रह्मसिद्धिस्तु विशिष्टं भावार्थमादायैव कारिकार्थं संगृह्णाति, कारिकाया ब्रह्मसिद्धेर्भावशुद्ध्याऽपि भावो विशदं प्रतीयते, नैषा नीतिः शङ्खपाणिना समादृता। अतोऽत्र ब्रह्मसिद्धिव्याख्यानमात्रस्य संस्करणेऽधिकारिभिर्निर्णीतेऽप्यर्थे प्रतिकारिकं तत्तत्कारिकाया अपि मूलरूपेण मुद्राप्य तावन्मात्रस्य भाव-शुद्धिविवरणमिति पृथग् योजितम्। तत्र मुख्या बृहती च ब्रह्मसिद्धिस्तु राज-कीयानामाज्ञया न मुद्रिताऽत्र ॥

## ब्रह्मसिद्धिव्याख्यानम्

अभिप्रायप्रकाशिका तु न भावशुद्धिरिव बहुशः प्रतिकारिकं कारिका-व्याख्याक्रममनुसरति। सर्वथा तु चित्सुख्यनन्तरमेव भावशुद्धिः, यतः चित्सुखाचा-र्याणां तत्त्वप्रदीपिका श्रीजयतीर्थेन स्वीयवादावल्यां निरस्ता। श्रीजयतीर्थव्याख्या न्यायसुधा तु न्यायचन्द्रिकयाऽऽनन्दपूर्णमुनिना निरस्ता, इति चित्सुखानन्तरमेव भावशुद्धिव्याख्या श्रीमदानन्दपूर्णविद्यासागरमुनेः, यस्या समयः त्रयोदश-शतकारम्भः। तत्र स्वयं ब्रह्मसिद्धिकारिकायाः व्याख्याक्रमस्य चित्सुखमुनिरेव मार्गदर्शी ॥

॥ आनन्दपूर्णमुनेर्देश-कालादिः ॥

परमहंसपरिव्राजकाचार्यश्रीमदानन्दपूर्णमुनीन्द्रविद्यासागरः, परमहंसपरि-

व्राजकाचार्यपूज्यपादश्रीमदभयानन्दसरस्वतीशिष्यः, पूज्यसुरेश्वराचार्यप्रवर्तिता-नन्दसरस्वतीसम्प्रदायपरम्परायां संन्यासदीक्षादीक्षित इति वस्तुस्थितिः, इति तदीयं नाम पूर्णानन्दसरस्वती, नानन्दपूर्णः। आनन्दपूर्णेति प्रसिद्धिस्तु—

"आत्मनाम गुरोर्नाम नामातिकृपणस्य च।
श्रेयस्कामो न गृह्णीयाद् ज्येष्ठापत्य-कलत्रयोः॥"

इति नियममाश्रित्य तदन्तेवासिनाम्, तद्भक्तानां वा तथा व्यपदेशेन। विद्यागुरुस्त्वस्य श्वेतगिरिनामेति—

"अबोधपङ्काविलबोधसागरे
यदीयवाचः कतकायमानाः।
वन्दे मुनीन्द्रान् मुनिवृन्दवन्द्यान्
श्रीमद्गुरून् श्वेतगिरीन् वरिष्ठान्॥"

इति खण्डनटीकायां (चौखाम्बा) द्वितीयपृष्ठ आनन्दपूर्णमुनीन्द्रकृतमङ्गलश्लोकेनावगम्यते। तत्रैव (१३४४) तमे पृष्ठे—

"श्रीमच्छ्वेतगिरिं वन्दे शिष्यधीपद्मभास्करम्।
यत्पादस्मरणं लोके भवरोगस्य भेषजम्॥"

इति श्लोकोऽप्यमुमर्थमुपष्टम्भयति। तत्रैव (१०२७) पृष्ठादौ, "श्रीमत्परमहंसपरिव्राजकाचार्यवर्याभयानन्दपूज्यपादशिष्यस्य भगवदानन्दपूर्णस्य कृतौ खण्डनफक्किकाविभजने निग्रहनिरुक्तिर्नाम तृतीयः परिच्छेदः"इत्यादौ, (India office) पञ्चपादिकादर्शे च—"इति श्रीमत्परमहंसपरिव्राजकाचार्याभयानन्दपूज्यपादशिष्यस्याऽऽनन्दपूर्णमुनीन्द्रस्य विद्यासागरापरनामधेयस्य कृतौ पञ्चपादिकाटीका समाप्ता" इत्यादिदर्शनात् भगवदभयानन्दसरस्वती संन्यासदीक्षागुरुः, श्रीश्वेतगिरिस्त्वस्य विद्यागुरुरिति प्रतीयते॥

तत्र खण्डनफक्किकाविभजने स्वविद्यागुरोः श्वेतगिरेरेव नमस्कारेण तन्निबन्धोपक्रमात्, तृतीयपरिच्छेदान्ते भगवदभयानन्दपूज्यपादगुरोरुल्लेखाच्च प्रतिभाति—खण्डनटीकोपक्रमावसरे संन्यासदीक्षा न विद्यासागरेण गृहीतेति। अस्य विद्यासागर इति प्रसिद्धिस्तदीयपूर्वाश्रमनाम्नैव। गौडदेशे विद्यासागरसमाख्याः बहवः साम्प्रतमपि दृश्यन्ते, इति श्रीमदानन्दपूर्णमुनीन्द्रो गौडब्राह्मण इति भाति।

गौडोऽप्ययं गोकर्णपरिसरवर्ती विशेषतो वादीन्द्र इव महादेवभक्त आसीदिति—

" परापरस्वरूपेण परं यत् तत् प्रकाशितम् ।
श्रीमन्महाबलं देवं वन्दे गोकर्णमण्डनम् ॥"

इति न्यायचन्द्रिकोपसंहारमङ्गलश्लोकेनावसीयते । अयं हि शिवभक्तोऽप्यद्वैतदृष्ट्यैव शिवभक्तः, न तु शैवदृष्ट्येति—परापरस्वरूपेणेति, तत्रापि परं शिवमिति पदाभ्यां ज्ञाप्यते ॥

तत्र विष्णुपुराणे विष्णोरपि कौस्तुभाद्याभरणानां भगवत्तत्त्वरूपत्वं यदाम्नातम्, तदेव मनसिकृत्यानन्दपूर्णो द्वितीयमौपक्रमिकं न्यायचन्द्रिकायां लिखति—

" स्वप्रामाण्यविभूषणा श्रुतिवधूः प्रान्वेषमाणापि यम्
दृष्ट्वा लक्षणतो न वक्तुमशकत् सर्वप्रमाणातिगम् ।
शुद्धानन्दचिदद्वयात्मवपुषं द्वैतेन्द्रजालास्पदम्
वन्दे चन्द्रविभूषणं गिरिसुतादत्तार्धदेहं हरम् " ॥ २ ॥

इति। संन्यासाश्रमानन्तरमपि विद्यासागरनाम्ना तदुल्लेखस्तु लोक आनन्दपूर्णमुनीन्द्रस्य संन्यासाश्रमात् पूर्वमेव सर्वविद्यापारङ्गतत्वेन यथार्थविद्यासागरत्वं प्रकाशयितुम् । श्रीमदानन्दपूर्णमुनीन्द्रस्य सर्वतन्त्रस्वतन्त्रत्वम्, विद्यासागरनाम्नो यथार्थत्वं च तदीयन्यायचन्द्रिकाव्याख्यायां तत्परम्परायामेव संन्यासदीक्षादीक्षितस्य श्रीमदानन्दपूर्णमुनीन्द्रपञ्चमपरम्परागतस्य तत्तुरीयपरम्परागतगोविन्दानन्दसरस्वतीपादान्तेवासिश्रीस्वरूपानन्दसरस्वत्याः कृतावन्ते विशदम् । अत्र तदुपबृंहकाश्च श्लोका यथा—

" येनाखण्डि सुखण्डनस्य बहुशष्टीकाच्छलेनान्यदृक्
श्रीमद्भारतसागरप्रमथनेनाहारि चार्थामृतम् ।
येन व्याकरणाटवी स्फुटतरं सम्प्रापिता लीलया
विद्याब्धिं प्रणतोऽस्मि पण्डितसभाचूडामणिं श्रेयसे ॥

यद्वक्त्रचन्द्रसम्भूतवाक्पीयूषविशुद्धधीः ।
ब्रह्म संप्रतिपद्ये तं विमलारण्यभास्करम् ॥

आऽऽशान्तादुदयाचलात् समुदिता न्यायेन्दुसच्चन्द्रिका
लोकालोककुमुद्वती बुधजनश्रीकैरवप्रेयसी ।
प्रास्तावि प्रसभं मुनीश्वरकृता श्रीशङ्कराद्याश्रिता
तत्त्वार्थप्रतिपादने पटुतरा बुद्धेर्विशुद्ध्यै मया ॥" इति ।

आनन्दपूर्णयतीन्द्रस्य तत्र तत्र पुस्तकालयेषूपलभ्यमानाः, प्रकाशिताः, अप्रकाशिताः, अनुपलभ्यमाना वा निबन्धा नाम्ना प्रियपाठकानामुपह्रियन्ते—

| | | |
|---|---|---|
| (१) | महाविद्याविडम्बनटीका | (प्रकाशिता) |
| (२) | खण्डनखण्डखाद्यटीका—खण्डनफक्किकाविभजनम् | ( ,, ) |
| (३) | ब्रह्मसिद्धिव्याख्या—भावशुद्धिः व्याख्यारत्नं वा सांप्रतं प्रकाश्यमाना | ( ,, ) |
| (४) | पञ्चपादिकाटीका—टीकारत्नम् | (अप्रकाशिता) |
| (५) | विवरणटीका—समन्वयविवृतिः | ( ,, ) |
| (६) | बृहदारण्यकवार्तिकटीका—न्यायकल्पलतिका | ( ,, ) |
| (७) | काशिकावृत्तिव्याख्या—प्रक्रियामञ्जरी | ( ,, ) |
| (८) | न्यायसारव्याख्या—व्याख्यारत्नम् | ( ,, ) |
| (९) | मोक्षधर्मव्याख्या | ( ,, ) |
| (१०) | न्यायचन्द्रिका इत एव | (प्रकाशिता) |

तत्र षष्ठी न्यायकल्पलतिका श्रीनान्दिल्लगोपेन तदीयप्रबोधचन्द्रोदयटीकायां (pp. २०४ निर्णयसागर Edition) "एवमाद्यवशिष्टं बृहदारण्यकभाष्ये मधुकाण्डे विद्यासागरीतो द्रष्टव्यम्" इत्युल्लेखात्—आसीत् अस्ति वेत्यनुमीयते। वस्तुतस्तु—सेयं न्यायकल्पलतिकानाम्ना मद्रपुरराजकीयपुस्तकागारे वर्तते—अचिरप्रकाश्यग्रन्थमध्येऽन्मतमतया परिगणिता च ॥

न्यायचन्द्रिकाभूमिकानुसारी

## वंशवृक्षः आनन्दपूर्णमुनीन्द्रस्य

(१) श्वेतगिरिः (विद्यागुरुः) अभयानन्दः (संन्यासगुरुः)

(२) आनन्दपूर्णः-पूर्णानन्दसरस्वती १२५२—१४०० A. D.

(३) पुरुषोत्तमानन्दसरस्वती

(४) शिवरामानन्दसरस्वती

(५) गोपालानन्दसरस्वती

(६) गोविन्दानन्दसरस्वती (१) स्वयम्प्रकाशानन्दसरस्वती (२)

(७) रामानन्दसरस्वती-१, रघुनाथानन्दसरस्वती-२, नारायणानन्दसरस्वती-३, स्वरूपानन्दसरस्वती-४, श्रीधरानन्दसरस्वती-५, वासुदेवानन्दसरस्वती-६,

(८) कृष्णानन्दसरस्वती-१, (प्रथमः) ब्रह्मानन्दसरस्वती-२, बालकृष्णानन्दसरस्वती-३, (सिद्धान्तसिद्धाञ्जनकारः) रामचन्द्रानन्दसरस्वती-४,

(९) उपेन्द्रानन्दसरस्वती-१, बालकृष्णानन्दसरस्वती-२, रामानन्दयतिः-१, भास्करदीक्षितः-२,

(१०) महादेवः (वटुवरः)

धिकं न्यायचन्द्रिकाभूमिकातोऽवगन्तव्यम्

अत्र श्रीमङ्गेशमहोदयः—"अथ यदनन्तरं विजातीयप्रमित्सा, तद्भावस्तथात्वम्, तन्न; तत्साजात्यानवगतौ तद्विजातीयत्वानवगतेः, अरिसंसद्यनुमानादिविषयायां प्रत्यक्षयितुमनिष्टेश्च". इति (खण्डन ५८६ चौखाम्बा) खण्डनवाक्ये शङ्करमिश्रेण (१५२९ A.D.) कालिकेन—"अनुमानविषये" इत्येव पाठो योग्य इति विवरणं क्रियते। आनन्दपूर्णस्तु—अनुमानविषयायामित्यपि साधु समर्थयति। अतो ज्ञायते—शङ्करमिश्रानन्तर एवाऽऽनन्दपूर्णमुनीन्द्र इति। परं तु—आनन्दपूर्णमुनीन्द्रविवरणं शङ्करमिश्रविवरणस्यैव निराकरणमित्यत्र न किमपि प्रमाणम्, यत आनन्दपूर्णमुनीन्द्रस्य काले तद्विषये पण्डितगोष्ठ्यां काञ्चन चर्चां तादृशीं मनसि निधायापि तत्पाठनसमर्थनं सम्भाव्यते। सर्वथा त्वानन्दपूर्णसमयः त्रयोदशशतकान्त एव। तत्त्वातत्त्वनिर्णये तु चरितविमर्शकप्रवराः प्रमाणम्॥

### प्रकृते संस्करणे आहत्यसङ्ख्यानिर्देशः

तत्र प्रथमसंस्करणे कारिकाणां तत्तत्काण्डमात्रस्य संख्या निर्दिश्यते, प्रकृतं तु संस्करणं सर्वेषां काण्डानामाहत्यैव संख्या क्रमेण प्रक्रमते॥

भगवत्पादानन्तरं चित्सुखान्तं विद्यासागरान्तं वा वेदान्तग्रन्थनिबन्धॄणां नामावली तु न्यायचन्द्रिकायां सर्वेषामद्वैतग्रन्थनिबन्धॄणामाङ्गलभाषायां परिशिष्टरूपेण संग्रहात् तत एवाधिगन्तव्या, येन तदीयानां निबन्धानां मुद्रितानाम्, मुद्राप्यमाणानां च विज्ञानमपि करतलामलकं स्यात्॥

### प्रकाश्यमानव्याख्येतिहासः

तत्राभिप्रायप्रकाशिकायां मातृकैकैव मद्रपुरराजकीयप्राच्यग्रन्थभाण्डागारात् लभ्यते, यस्या संख्या तत्र (R. ३८५३)। इयं तु मातृकाऽतीव विशुद्धा, परन्त्वादौ ब्रह्मसिद्ध्याः पृष्ठचतुष्टयस्य नोपलभ्यते; तथाप्यत्र ग्रन्थार्थज्ञाने सौलभ्यं पाठकमहोदयानां भवत्विति तन्मात्रस्य शङ्खपाणिव्याख्या योजिता। इयं तु मातृका त्रिच्चूरवलियलमठास्समातृकया (१९२०-१९२१) समये शोधिता प्रतिकृतिः, भावशुद्धिमातृका तु मद्रपुरराजकीयप्राच्यग्रन्थभण्डार उपलभ्यमाना (R. ३९६७) संख्याकैव, या कुन्नंकोलं सभामण्डपनिर्वाहकनारायणनम्बूदिरिमहाशयानां मातृकया साकं तोलनेन शास्त्रिपादैरेव संशोधिता

तथा कालिकाता एषियाटिक् सोसेटिमातृकया। III B. ५४ संख्यया साकं तोलनेन संशोधिता। तत्र द्वितीयमातृकाया पाठः B. चिह्नितस्तत्र तत्र योज्यते ॥

मद्रपुरराजकीयमातृकायामेव स पाठस्तत्र तत्र योजित एव, सत्यप्येवं पूज्यश्रीशास्त्रिपादैः, तदीयैः सहायैर्वा ग्रन्थमध्य एव केचन पाठभेदाः संभाव्यमानाः सूचिताः, सांप्रतं तु मातृकाद्वयस्य पाठभेदमादाय संस्करणमिदमवतार्यते।

### मूलेन साकं व्याख्याद्वयस्याप्रकाशकारणम्

व्याख्याद्वयमिदं मूलेन साकमेव संस्कृत्यावतरणीयमिति संकल्प आसीद्विधेयस्यास्य, प्राक्तनस्य पुस्तकालयाध्यक्षस्य च, प्रयतितं च बहु तदर्थं पत्राणामधिकारिणां सविधे क्रियासमभिहारेण प्रेषणेन, परन्तु मुद्रितस्य पुनर्मुद्रापणं नैतत्संस्थायाः कृत्यमित्यधिकारिणामाज्ञां शिरसिकृत्य व्याख्याद्वयमात्रं संस्कृत्य साम्प्रतं प्रकाश्यते ॥

सत्यं ब्रह्मसिद्ध्या मूलपुस्तकस्यालाभे, तेन सह मिलित्वा पठने च महान् क्लेशः प्रियपाठकमहोदयानां स्यात्, परंतु व्याख्याद्वयं प्रतिवाक्यं विशदं भावसंकलनेन प्रक्रमते। तेन विनापि मूलब्रह्मसिद्धिभावावगमने विशिष्टः क्लेशो न भवितेति सूच्यते ॥

तत्र ब्रह्मसिद्धिरिति परममूलं केवलं कारिका, यस्या एव विवरणात्मिका विस्तृता ब्रह्मसिद्धिस्स्वपरा, याऽपि नाम्ना ब्रह्मसिद्धिरेव। ब्रह्मसिद्धिपदं हि प्राधान्येन तामेव ज्ञापयति, या तु कारिकारूपब्रह्मसिद्धेर्व्याख्या शङ्खपाण्यादिव्याख्यान्तराणां मूलमेव, तत्र शङ्खपाणिर्द्वितीयं मूलमेव व्याचष्टे, प्रकृतस्य व्याख्याद्वयस्य तूभयमपि प्रायेण मूलम्, इति कथञ्चन समाश्वासः प्रियपाठकानामिति विश्वस्यते ॥

एतत्संस्करणं वत्सरद्वयात् पूर्वं प्रक्रान्तमपि विधेयस्य शरीरास्वास्थ्यवशेन प्रायेण सार्धं वत्सरं शरीर-मन-आदिदौर्बल्यवशेन यथासमयं वत्सरमध्य एव प्रकाशं नेतुमतीवासामर्थ्यमासीत्; तथापि साम्प्रतं मासचतुष्टयमारभ्यैव कथञ्चन स्वास्थ्यं प्राप्तमिति संस्करणमिदं साम्प्रतमेवावतार्यते ॥

तत्र संशोधने श्रीकामकोटिपीठास्थानपण्डितेन श्रीरामकृष्णशास्त्रिणा महत् साहाय्यं कृतम्, इति तेषां प्रथमं धन्यवादो दीयते। सत्यप्येवं विधेयस्यैव

हृदयदौर्बल्येन, अन्यान्यकारणवशेन च यदि संभाविता दोषाः केचन, तर्हि स्वयं समीक्ष्य विधेयस्यास्यानवधाननिबन्धनान् दोषान् सदयं संशोध्य संस्करणमिदं पठनीयमिति प्रार्थ्यते ॥

सदुःखमिदं निवेद्यते—प्रायेण सार्धवत्सरपर्यन्तं प्रधानसम्पादकपदमधिष्ठाय प्रतिपृष्ठं तदीयसहायानां पण्डितप्रवरश्रीविश्वनाथशास्त्रिणामन्येषां च द्वारेण बहु साहाय्यं कृतवतां पण्डितप्रवरोत्साहमूर्ति-श्रीचन्द्रशेखरदीक्षितमहोदयानामकालेऽकस्माच्च परमपदप्राप्त्या संस्करणमिदमनाथं संवृत्तम्, परं तु सानन्दमिदं निवेद्यते, विधेयस्य सौभाग्यवशात् तेषां स्थानस्य पूरणेन संशोधनादिसूचनेन महान्तमुपकारं प्रकृताः पुस्तकालयाध्यक्षाः कुर्वन्ति स्म, इति तेषामपि हार्दा धन्यवादाः प्रदीयन्ते, इतोऽप्यधिकमानन्दनिदानमिदमेव, यत् बहूनामक्षरयोजकानाम्, अक्षराणां च वर्धनेन मासद्वयमध्ये संस्करणस्यास्य प्रकाशव्यवस्थापनेन, स्वयं तत्र भारग्रहणेन, भारग्राहणेन च भारतीविजयमुद्रणालयाध्यक्षमहोदयः प्रकृतसंस्करणप्रकाशनेऽत्यन्तमेव जागरूक आसीत् ॥

तत्र काशीत एवावस्थाय प्रकृतसंस्करणस्यावतारणमतिक्लेशसाध्यम्, असम्भवि च, इति प्रकृतसंस्करणप्रकाशनार्थं मद्रपुरेऽवस्थातुं विधेयस्यानुमतिप्रदानेनोपकृतवन्तः वाराणसेयसंस्कृतविश्वविद्यालयाध्यक्षाः श्रीसुरतनारायणमणित्रिपाठिमहोदयास्तु विधेयस्यात्यन्तमवोत्तमर्णाः। इमे हि यत्र कुत्रचित् प्राचीनादर्शानां मुद्राप्याववतारणम्, यत्र कुत्राप्यवस्थाय प्राचीनसंस्कृतनिबन्धसंस्करणम्, निगूढानां तत्त्वानां बहुतरनिबन्धानामुत्तोलनादिना येन केनापि प्रकाशनं च स्वीयस्य विश्वविद्यालयस्य मुख्यं कृत्यमिति मन्वानाः, अमुद्रितप्राच्यादर्शप्रकाशनमेव स्वस्य कुलधनं मन्यमानाश्च स्वत एवोत्साहमूर्तय इति सहृदयमिदं निवेद्यते ॥

राजकीयास्तु मद्रप्रान्ताधीशाः, ततोऽप्यधिकं केन्द्रशासन (Scientific-cultural Research) विद्याविभागाध्यक्षाश्च प्राचीनदुर्लभनिबन्धप्रकाशनैकदीक्षा न केवलं पण्डितवर्गस्य, किन्तु सर्वस्य भारतवर्षस्याऽऽजीवमुत्तमर्णाः, येषामुत्साह एव मुख्यनिदानमेतादृशनिबन्धानां बहिरवतरणे, इति तेषामपि हार्दाः परःशतं धन्यवादाः ॥

इति सुधीजनविधेयः

१९–३–१९६३. अनन्तकृष्णशास्त्री

# ANALYSIS OF THE SUBJCET

## (१) ब्रह्मकाण्डः

॥ इति सर्वपदविवरणम् ॥

## ॥ अथाभयपदविवरणम् ॥

2

* अस्य काण्डस्य प्रधानं लक्ष्यं भेदसत्यत्वप्रत्यक्षस्याद्वैतसिद्धान्तेन विरोधपरिहारः, तत्र च सन्मात्रे ज्ञानं प्रमा, विकल्पेषु तु भ्रम इति विकल्पाप्रामाण्यप्रक्रियाया अवलम्बनम्। अयं हि वादः सिद्धान्तलेशसङ्ग्रहे 'तत्त्वशुद्धिकाराणा'मिति वर्णितः, परंतु तत्त्वशुद्धेरपि ब्रह्मसिद्धिरेव मूलम्—यस्यैवोपपादनं भामत्यामप्यभेदोपादाना भेदकल्पना, न भेदोपादानाऽभेदकल्पनेति। तत्र श्रीभाष्यम्, शतदूषणी च विकल्पाप्रामाण्यवादमेतन्मूलमेव निरस्यति। तत्र सदात्मना सर्वाभेदेऽश्वेनापि गोकार्यं स्यादित्यापादनं विकल्पानां ब्रह्मव्यतिरेकेणाभावात्, अविद्याकार्यत्वेऽपि कार्यात्मना भेदाच्च नोत्तिष्ठति। विशेषात्मनां भेदाभेदोभयात्मत्वपक्षदूषणमिदं ब्रह्मसिद्धौ(६७)पृष्ठे प्रतिपादितम्, न चेदं विशेषसत्यत्वपक्षे संभवति। अधिकं भूमिकायाम्, शतभूषण्यादौ च॥

[1]अनेकजीववादे ईश्वरभावापत्तिर्मुक्तिरिति सिद्धान्तलेशसंग्रहस्येयं ब्रह्मसिद्धिरेव मूलम्

5

॥ इति नियोगकाण्डः ॥

## ॥ अथ सिद्धिकाण्डः ॥

॥ इति तुरीयः सिद्धिकाण्डः समाप्तः ॥

---



चित्सुखानन्दपूर्णमुनिविरचिते

# ॥ ब्रह्मसिद्धिव्याख्ये भावशुद्धिः अभिप्रायप्रकाशिका च ॥

## ॥ ब्रह्मकाण्डः ॥

### ॥ भावशुद्धिः ॥

नमस्तस्मै महाघोरप्रत्यूहोरगहारिणे ।
सतां धीपद्मनीडाय हैरम्बाय गरुत्मते ॥ १ ॥

यो विश्वोऽकारवाच्यः सकलविषयभूर्भ्रान्ति-तत्कारणाभ्यां
बद्धः संस्कारमात्रप्रविरचिततनुस्तैजसश्चेत्युवाच्यः ।
प्राज्ञो ज्ञानैकबद्धः सुर-नरसकलानन्दभुङ् माक्षरेक्ष्यो
वाक्यार्थो यस्तुरीयो विगलितसकलः सोऽहमेवास्मि भूमा ॥ २ ॥

जिह्वारङ्गतले मृगाङ्ककलया सम्प्रोतमौलिर्मुदा
नित्यं नृत्यतु नूपुरामलमुखोदाराभिरामाङ्घ्रिका ।
हेलास्फालनलोकनाखिलजगत्संदर्शिनी नर्तकी
क्षोणीरङ्गतलस्य संसद इयं विस्मापनी भारती ॥ ३ ॥

शिवौ नत्वैकसद्भावौ प्रकृति-प्रत्ययाविव ।
ब्रह्मसिद्धेर्निबन्धोऽयं भावशुद्धिर्विधीयते ॥ ४ ॥

ब्रह्मसिद्धिः कारिका

P. 1-4 आनन्दमेकममृतमजं विज्ञानमक्षरम् ॥
असर्वं सर्वमभयं नमस्यामः प्रजापतिम् ॥ १ ॥

---

भावशुद्धिः

ग्रन्थारम्भे सदाचारपरम्परापरिप्रापितकर्तव्यभावं परदेवता-स्तुति-नमस्काररूपं मङ्गळाचरणं कुर्वन्नधिकारि-प्रयोजन-प्रतिपाद्य-संगतिप्रतिपादनायाऽऽह—आनन्दमिति ॥ अस्य च नियोगतः फल-वत्कार्यान्तरारम्भसंयोगात्, स्वयं साक्षादफलत्वाच्च 'फलवत्संनिधावफलं तदङ्गम्' इति कार्यान्तरशेषत्वेऽवधृते सत्यारम्भस्य समाप्तिपर्यन्तत्वाद-पेक्षिताविघ्नपरिसमाप्तिः फलम्; 'अपेक्षितविधेरनपेक्षितविधानं दुर्बलम्' इति फलान्तरकल्पनाया दुर्बलत्वात्। अतो यथासाम्प्रदायिकम-ध्यायानध्यायादिस्वाध्यायाविघ्नार्थमिदमिति ॥

तदयमस्यार्थः—"अस्मद्युत्तमः" इत्युत्तमप्रयोगादात्मनि 'गुरुषु बहुवचनं प्राहुराचार्याः', इति वयम्, प्रजापतिं नमस्यामः=प्रतिविम्ब-भूता जीवाः=प्रजाः, तासां स्वरूपप्रतीतिप्रदानेन पालनात् पतिः=प्राज्ञः परमात्मा, "तत् सृष्ट्वा तदेवानुप्राविशत्," "रूपं रूपं प्रतिरूपो बभूव" इति श्रुतेः। जीवः, परस्मात् तत्त्वतो न भिद्यते, आत्मत्वात्, परमात्मवत्, कूप-कुम्भनभसोरिव भेदप्रतीतेरुपाधिनिबन्ध-नत्वेनापि संभवादिति भावः ॥

अस्याः कारिकायाः परमात्मस्तुतिद्वारा, अनुबन्धचतुष्टय-सूचनद्वारेण च स्वयं भावशुद्ध्या विवरणम्

स्वापोत्थितेन परामर्शात् सुखम्, आत्मनो न भिद्यते, आत्मेतराशेषप्रियतावत्त्वात्, आत्मवत्; आत्मा, सुखम्, निरु-

---

* टिप्पणी—प्रकरणारम्भे विघ्ननिवृत्तये पराम्=अत्र च प्रतिपाद्य-तयाऽभिमतां देवतां स्तुतिपुरःसरं नमस्यति—आनन्दमिति ॥ कार्यारम्भे

---

* चित्सुखी ब्रह्मसिद्धेः पृष्ठचतुष्टयं यावद् नोपलभ्यते। अतस्तावत्पर्यन्तं शङ्खपाणि-व्याख्या टिप्पणीरूपेण सुखावबोधार्थं योजिता ॥

भावशुद्धिः

पाधिप्रेमविषयत्वात्, व्यतिरेकेण दुःखवत्। सुख-तत्साधन-दुःखत्रय-तत्साधनापेक्षणीयेषु परिहारापेक्षक्रियेषु निरुपाधिप्रेमानुपपत्तिः, इति बाधकसहितकेवलव्यतिरेकिणः सदनुमानत्वेन नासाधारण्यम्। "एषोऽस्य परमानन्दः" इति श्रुतेश्चात्मनः सुखरूपत्वम्॥

परस्य सुखत्वे तद्रागजा मुमुक्षुप्रवृत्तिरनर्थाय, इत्यसुखत्वाद् न तयोरैक्यमज्ञातं प्रतिपाद्यम्, ज्ञातं च प्रयोजनं न स्यादिति, अत्राह—आनन्दमिति॥ *"विज्ञानमानन्दम्" इति श्रुतेः। परः, सुखम्, आत्मत्वात्; प्रत्यगात्मवदित्यर्थः॥

सुख-दुःखादिव्यवस्थादृष्टेः प्रतिदेहं देहिभेदाद् न तद्भिन्नः पर इति, अत्राह—एकमिति॥ दृश्यसुखादेरनात्मधर्मत्वात् विमतिपदेन्द्रियाणि, आत्मनोऽपरोक्षधीसाधनानि, इन्द्रियत्वात्, सम्मतवदिति प्रतिपाद्यम्; एकस्याप्युपाधिभेदाद् व्यवस्थायोगे रूपभेदकल्पनागौरवात्। चेतनप्रतियोगिकभेदहीनमित्यर्थः॥

यत् सत्, तत् क्षणिकम्, यथा मेघः, सन्तश्चामी भावाः; स्थिरत्वे समर्थस्य क्षेपायोगात्, यावज्जीवकृत्यमेकदा संपादितम्, इति द्वितीयक्षणेऽर्थक्रियारहितस्यासत्त्वमिति, अत्राह—अमृतमजमिति॥ अनागमादिप्रसङ्गादबाधितप्रत्यभिज्ञाविरोधायार्थक्रियाकारित्वे सत्त्वे तत्तत्क्षणस्यासत्त्वेनामूर्तमसत्त्वमिति

---

नमस्कारक्रियायामविगीतसदाचारः प्रमाणम्। न च जैमिनिना नमस्कारो न कृत इति विगानमाशङ्क्यम्; न ह्यकरणं विगानम्, अपि तु निन्दावादः। तथा होलाकादीनां नियतप्राच्यादिकर्तृकाणामपि प्रामाण्यमिति स्थितम्। स चात्र नोपलभ्यते। कृत एव वा जैमिनिनाऽप्यनिबद्धया वाचा, मनसा च नमस्कार इति विशिष्टत्वादनुमिमीमहे। स च कार्यारम्भे तत्समाप्तिफलाभिसन्धानेनैव शिष्टैराचर्यते। तेन विशिष्टफलाया एव स्तुतेस्तत्फलैव श्रुतिस्ततः कल्प्या। अतो न विश्वजिन्न्यायेन स्वर्गफलप्रसङ्गः। नमस्काराच्च धर्मविशेषः, ततो विघ्नहेतोरधर्मस्य क्षयः, ततो हेत्वभावाद्विघ्नानुत्पत्तौ

भावशुद्धिः

स्वरसभङ्गात्; अविरतोदयरहितमित्यर्थः ॥ परानन्दस्य मुक्तौ संवेदने तत्कारणं देहादि स्यात्, असंवेदने गेहनिहितहिरण्यवदपुरुषार्थत्वमिति, अत्राह—विज्ञानमिति ॥ *"अत्रायं पुरुषः स्वयं ज्योतिः" इति श्रुतेः; आत्मसिद्धेरपरोक्षत्वात्। न लिङ्गादिनापि मानसी—विमतम्, न स्वाश्रयविषयम्, ज्ञानत्वात्; ज्ञानान्तरवत्; इतरथा जानातेः सकर्मकत्वेन परसमवेतक्रियाफलभाजस्तत्कर्मणोऽनात्मत्वात्, न संवित्, आश्रयतयाऽपरोक्षा, अपरोक्षत्वात्, घटवत्, इति परिशेषात् स्वप्रकाशात्माभेदात् स्वतोऽपरोक्षमित्यर्थः ॥

सर्वकारणत्वेन परिणामित्वाद् मृदादिवदचिद्रूपत्वमिति, अत्राह—अक्षरमिति ॥ अवस्थितस्य तस्य पूर्वावस्थात्यागेनोत्तरावस्थापत्तिः परिणामोऽन्यथाभूतस्यान्यथा बुभूषोर्वा न संभवतीति; परिणा महीनमित्यर्थः ॥

*"सर्वं खल्विदं ब्रह्म" *"सर्वगन्धः सर्वरसः" इति परिणामिपृथिव्यादिरूपस्य कथमपरिणामित्वमिति? अत्राह—असर्वमिति ॥ *"नेति नेति" इति तत्परनिषेधश्रुतिविरोधात्, 'यद्रजतं सा शुक्तिः' इतिवदध्यस्तसर्वानुवादेन तदधिष्ठानमात्रतात्पर्यात्, असर्वम्=सर्वाभावोपलक्षितम्। निष्प्रपञ्चमित्यर्थः ॥

आत्मन्यनात्मवदनात्मन्यात्मनोऽध्यासात् तत्त्वधियाऽर्थाभावे शून्यता स्यादिति, अत्राह—सर्वमिति ॥ निरधिष्ठानभ्रम—निरवधिकबाधासिद्धेः, आत्मनः संसर्गाध्यासेऽपि स्वरूपाध्यासेऽधिष्ठानपरम्परापत्तेः; सर्वम्=सर्वस्याधिष्ठानम्; तत्त्वधीविषय इत्यर्थः ॥

सुखस्यानन्तरं दुःखम्, दुःखस्यानन्तरं सुखम्, इति सुखस्य दुःखाविनाभावाद् मोक्षे सुखित्वे दुःखित्वमपि, इति

---

प्रारिप्सितकार्यसमाप्तिः, इत्येवं कार्यसमाप्त्यर्थता नमस्कारस्य। स्तुतिपूर्वकश्च नमस्कारो वीर्यवत्तरः, अतस्तथैव कृत इति ॥

भावशुद्धिः

न तस्य निरवद्यपुमर्थत्वमिति, अत्राह—अभयमिति ॥ सर्वदुःख-भयहीनम्। सुखस्य न दुःखाविनाभावः; स्वापसुखे व्यभिचारादिति भावः ॥ १ ॥

वेदान्तानां भूतार्थत्वेनानुवादकत्वेन, अज्ञातसज्ञतिकत्वेन, शास्त्रत्वेन च कार्यार्थत्वमिति पूर्वपक्षो भर्तृमित्राभिमतः

औपनिषदस्योपनिषद्भ्यः प्रसिद्धत्वे कृतमनेन तत्साधन-प्रकरणेन; निष्पादितक्रिये कर्मण्यविशेषाऽऽधायिनः साधनस्य साधनन्यायातिपातात्, प्रसिद्धत्वे नतरां वेदान्तार्थतया व्युत्पादनीयः। न हि यो यतो न प्रतीयते, स तदर्थः। अतोऽनर्थकमेतत् प्रकरण-मिति, अत्राह—वेदान्तेष्विति ॥ मूढविप्रतिपत्तिनिराकरणं न प्रकरणप्रयोज-नमिति, अत्राह—विपश्चित इति ॥ न वेदान्तेभ्योऽन्यत्रेति शेषः। ब्रह्मकाण्डेन प्रमाण-प्रमेयप्रतिज्ञाने सत्येव त्रिविधविप्रतिपत्त्युत्थानम्, इति काण्डत्रय-निरस्यविप्रतिपत्तीराह—केचिदिति ॥ आत्मा मानान्तरसिद्धो वा, न P. 1-6

---

तत्र ब्रह्मज्ञानाय प्रकरणमिदमारम्भणीयम्, तच्च वेदान्तेभ्य एव सिध्यति, अतः किमनेनेत्याशङ्क्य 'वेदान्तेषु' इत्यादिना 'आरभ्यते' इत्यन्तेन श्रोतृजनप्रवृत्त्यर्थं प्रयोजनमाह। वादिविप्रतिपत्तिसमुत्थाप्रामाण्य-संशयादि-तिरोहितशक्तयो वेदान्ता न ब्रह्मज्ञानं कर्तुमीशते, अनेन तु प्रकरणेन समस्तसंशयनिरासे कृते सत्याविर्भूतशक्तयस्त एव ब्रह्म ज्ञापयन्ति। ततश्च कर्मविधीनामिव धर्ममीमांसा, वेदान्तानामपि ब्रह्मज्ञानं कुर्वतां विप्रतिपत्तिनिरा-करणद्वारेणेदं प्रकरणमङ्गम्; यच्च प्रधानस्य फलम्, तदेवाङ्गस्य—दर्श-पूर्णमास-फलमिव प्रयाजादेः। अतो ब्रह्मज्ञानमस्य प्रयोजनम्। तथा सति ब्रह्म विषयः, तेन चोपायोपेयलक्षणः संबन्ध इत्यप्यर्थात् सिद्धम्। ततश्च विषय-प्रयोजन-संबन्धैः संपन्नमिदं प्रकरणमारब्धव्यमित्यभिप्रायः ॥

ननु—अत्रापि ब्रह्ममीमांसाशास्त्रमङ्गमस्त्येव, अतः किमनेन पुनरुक्तप्रायेण प्रकरणेन? सत्यमस्ति, किन्तु तत्र नानाप्रदेशेषु संक्षेपतश्चार्थसिद्धं च सिद्धवच्च यदुक्तम्, तदत्रैकत्र प्रदेशे विस्तरेण साक्षात् सोपपत्तिकं कथ्यत इति पुनरारम्भः ॥

भावशुद्धिः

वा। आद्यं प्रत्याह—आत्मन इति ॥ अनुवादकत्वात्। अप्रामाण्यमित्यनुषङ्गः ॥ द्वितीयेऽबोधकत्वम्, तदाह—असिद्धत्व इति ॥ पदस्य स्वार्थबोधने संबन्धबुद्ध्यपेक्षा, आत्मनो वाक्यार्थत्वात् संबन्धासिद्धिरदोष इति, अत्राह—अपदार्थत्व इति ॥ पदार्थस्यैव संसृष्टस्य वाक्यार्थत्वादित्यर्थः। प्रवृत्ति-निवृत्तिसाध्यप्रयोजनरहितसिद्धार्थपरत्वेऽध्ययनविध्युपात्तोपनिषदामपुमर्थपर्यवसायित्वेनाप्रामाण्यमाह—प्रवृत्तीति ॥

P. 1-7

P. 1.8

---

तत्राद्यां विप्रतिपत्तिं तावदाह—केचिदिति ॥ कुत इत्याह—आत्मन इति ॥ विज्ञानात्मा वा वेदान्तैः प्रतिपाद्यः, परमात्मा वा। तत्र विज्ञानात्मनस्तावदहंप्रत्ययसिद्धत्वे सति तेषां वेदान्तानामनुवादकत्वादप्रामाण्यम्, स्वप्रकाशत्वेऽप्यात्मनः स्वतः सिद्धत्वादनुवादकत्वं वेदान्तानामविशिष्टम्; प्रमाणान्तरसिद्धत्वं तु परमतोपन्यासप्रक्रमादुक्तम्। परमात्मनस्तु प्रमाणान्तरेणासिद्धत्वे संबन्धिन्यगृहीते संबन्धग्रहणानुपपत्तेस्तेन सह तच्छब्दस्य वाच्य-वाचकलक्षणसंबन्धाग्रहादपदार्थत्वे सत्यवाक्यविषयत्वम्; यतः पदार्था एव वाक्यार्थ इति मतम्। ततश्च वेदान्तानामनवबोधकत्वादेवाप्रामाण्यमित्यर्थः ॥

अथाहंप्रत्ययसिद्धमप्यात्मानं निरस्तविशेषमवगमयताम्—*"अस्थूलमनण्वह्रस्वम्" इत्यादिवाक्यानामननुवादकत्वम्, स्थूलादिपदानां नञश्च ब्रह्मादिपदानां च बृहत्त्वाद्यर्थान्वयेन यथायथं स्वार्थे संबन्धग्रहणसंभवात् पदार्थत्वे सति वाक्यविषयत्वं चेदुच्यते, तथापि तेषां प्रवृत्ति-निवृत्त्युपदेशोऽसत्यपुरुषार्थत्वादप्रामाण्यम्। ननु—परिच्छेदलक्षणं प्रामाण्यम्, न तु पुरुषार्थोपयोगित्वलक्षणम्; पुरुषार्थोपयोगिनामपि घटादीनामप्रामाण्यात्, अपुरुषार्थानामप्यनपेक्षितवस्तुज्ञानानां प्रामाण्याच्च ॥

अस्ति परिच्छेदकत्वं वेदान्तानाम्, इति कथमप्रामाण्यम्? उच्यते—नानपेक्षितवस्तुज्ञानतुल्यमुपनिषदो परिच्छेदमात्रेण प्रामाण्यम्, किन्तु पुरुषार्थोपयोगित्वेन। न च तुल्यम्; साम्प्रदायिकत्वात्, अध्ययनविधिविषयत्वाच्च। न हि विधिः पुरुषार्थानुपयोगिनि पुरुषं प्रेरयति। पुरुषार्थोपायं च बोधयतः प्रमाणस्य पुरुषार्थोपयोगिता। व्यवहारश्च पुरुषार्थोपायः। स च प्रवृत्ति-निवृत्त्यात्मा। ते चेन्नोपदिशन्ति वेदान्ताः, नैषां यथाप्राप्तं प्रामाण्यमस्तीत्यप्रामाण्याभिधानम् ॥

भावशुद्धिः

वेदान्तानां कार्यार्थत्वाद् ब्रह्मणोऽवस्तुत्वम्, उपचरितार्थत्वं वेति प्राभाकरमतनियोगकाण्डनिरस्यकल्पः

संप्रदायतो ग्रन्थार्थोऽवगन्तव्य इति भर्तृमित्रविप्रतिपत्तिं तुरीयकाण्डनिरस्यामादावुक्त्वा नियोगकाण्डनिरस्यामाह—अन्ये त्विति ॥ P. 1-9
तुरिति वैलक्षण्यार्थः । *"तत् प्रमाणं बादरायणस्यानपेक्षत्वात्" इत्युक्तं प्रयोजकं वेदान्तेऽप्यविशिष्टं दृष्ट्वा सहसा तदभावं वक्तुमक्षमाधीर्नियोगपरत्वोक्तिच्छद्मना तदभावत्वमेवाहुः ; अन्यपरस्य प्रत्यक्षादिविरोधे स्वार्थप्रमाकरणाशक्तेरित्यर्थः ॥

प्रत्यक्षादिविरोधाद् वेदान्तानां न प्रामाण्यमिति तर्ककाण्डनिरस्यकल्पः

तर्ककाण्डनिरस्यविप्रतिपत्तिं दर्शयति—अन्ये त्विति ॥ *"एकमेवा- P. 1-9
द्वितीयम्" इत्यादिवेदान्तानां मुख्यार्थस्वीकारे मानान्तरविरोधात् ;

---

किमर्थं तर्हि तानध्ययनविधिरध्यापयति ? जपार्थमिति ब्रूमः । ननु—आपन्नं तर्हि तेषां पुरुषार्थोपयोगित्वम्, बाढं प्रमेयतया, न तु प्रमाणतया । प्रमाणतया च पुरुषार्थोपयोगित्वाभावोऽप्रामाण्योपयोगादिह प्रतिपाद्यः, न सर्वथा । ननु—अध्ययनविधिरर्थावबोधार्थः, न जपार्थः, सत्यम् ; पूर्वोक्तयुक्त्या तु तदसंभवात् वेदान्तेषु जपार्थो भविष्यति ॥

ननु—एकस्य विधेः द्व्यर्थत्वमयुक्तम्, अयुक्तमपि विकल्पवदगत्याऽऽश्रयिष्यते । तस्माद् यथा विध्यर्थवाद-मन्त्राणामध्ययनविधिविषयत्वाविशेषेऽपि 'यच्छक्नुयात्' इत्युपबन्धाद्विधिस्तुति-स्मृतयो यथासंभवमुपयोगविशेषाः, तथा वेदान्तानां जप इत्यदोषः ॥

अन्ये तु—कार्येऽर्थे वेदस्य प्रामाण्यं मन्यमानाः 'आत्मा प्रतिपत्तव्यः' इत्युक्ते 'कथम्भूतः' इत्यपेक्षायाम् 'इत्थम्भूतः' इत्यपेक्षितप्रतिपत्तव्यात्मस्वरूपसमर्पणादुपनिषदां कार्यानुप्रवेशात् प्रामाण्यं मन्यन्ते, तथा सति च विशिष्टविध्यनुपपत्त्या विशेषणभूतमात्मस्वरूपमप्यौपनिषदं सेत्स्यति—द्रव्य-देवताविशिष्टयागविधाविव द्रव्य-देवतम् ; अपुरुषार्थत्वम्, अध्ययनविधिव्यर्थत्वं च न भविष्यति—इति वदन्तः ॥

एकमपि तत्त्वमभिन्नदेशकालं दृष्टम्। आत्मानो नित्यविभुतया भिन्नदेशकालाः, इत्युपचरितैकार्थानि वेदान्तवाक्यानीत्यर्थः। तेषां प्रामाण्ये, प्रमेये च विपश्चितां विप्रतिपत्तेः साधक-बाधकमानाभावे संशयः। न चायमनुच्छिन्ननिदानः शक्यनिरासः, इति तन्निदानविप्रतिपत्तिफलं
P. 1-11 प्रकरणमित्याह—तन्निरासायेति ॥

P. 1.12 प्रकरणतात्पर्यमुक्त्वा कारिकातात्पर्यमाह—परां चेति॥ स्तुतिस्वरूपमाह—गुणेति॥ प्रणतिस्वरूपमाह—कायेति॥ यद्यपि नमस्याम इति वचनाद् वाङ्मनसयोस्साक्षात्, तन्नान्तरीयकतया च व्यापारो

---

तेषां तु व्याजमात्रमिदम्; परमार्थतस्तु नोपनिषदामात्मस्वरूपे प्रामाण्यं तदा सिध्यति; अतत्परत्वादुपनिषदाम्। 'एवम्भूत आत्मा प्रतिपत्तव्यः' इति हि तदा वचनं व्यज्यते, न 'एवम्भूत आत्मा' इति। ननु—कथमनेवम्भूत एवम्भूतः प्रत्येतुं शक्यते? न; अध्यारोपेणापि "वाचं धेनुमुपासीत" इतिवदुपपत्तेः। अत एव विशिष्टविधेरपि नात्मस्वरूपसिद्धिः, द्रव्य-देवतमन्तरेण तु यागो न सिध्यतीति युक्तं तदाक्षेप इति वैषम्यम्॥

प्रतिपत्तिविध्यसंभवाच्चाप्रामाण्यम्, एतच्च वक्ष्यते, तदाह—अन्ये त्विति॥

विप्रतिपत्त्यन्तरं चाह—अन्ये त्विति॥ *"एक एवायम्" *"अद्वितीयः" इत्यादिवचसां मुख्यार्थपरिग्रहे साध्य साधनेतिकर्तव्यतादिभेदाविषयत्वेन कर्मविधिविरोधात्, नीलादिभेदविषयत्वेन प्रत्यक्षादिविरोधाच्च देश-काल-जात्याद्यभेदेन 'एकोऽद्वितीयः' इत्युपचारेणोच्यते—इत्यन्ये मन्यन्त इत्यर्थः। उपलक्षणार्थाश्चैता विप्रतिपत्तय उक्ताः, इतरा अपि वक्ष्यमाणनिराकरणाद् द्रष्टव्याः॥

तदेवं विप्रतिपत्तिषु तासां निरासायेदमारब्धमित्याह—तन्निरासायेति॥ किं तदित्याह—आनन्दमितीति॥ आनन्दमिति प्रतीकेन प्रकरणमिदं निर्दिशति। प्रकरणमित्यर्थः॥

भावशुद्धिः

गम्यते, न कायस्य; तथापि तदितिकर्तव्यत्वेनाञ्जलिकरणादेः कायप्रह्वताया अपि विधानात् तद्धीरिति द्रष्टव्यम् ॥

देवतास्तुतिपरस्य मङ्गलस्य वस्तुनिर्देशपरत्वमपि

यदि विप्रतिपत्तिनिरासः प्रकरणार्थः, कथं तर्हि प्रजापतिस्तदर्थः ? तदनेकार्थत्वविरोधादिति, अत्राह— विप्रतिपत्तीनि ॥ एवम्भूते=आन- P. 1-13
न्दात्मके प्रजापतौ । एषोऽपि=प्रजापतिरपि । विप्रतिपत्तिनिरासस्य द्वारप्रयोजनत्वम्, ज्ञातपरमात्मनः परमप्रयोजनत्वमित्यर्थः ॥

कारिकागतानन्दपदविवरणम्, ब्रह्मणो भावरूपानन्दस्वरूपत्वसमर्थनं च

सम्प्रति कारिकाप्रथमावयवं व्याचिख्यासुराशङ्कते—अत्रेति ॥ P. 1-15

---

तत्राद्यश्लोकस्य तात्पर्यमाह—परामिति ॥ यद्यप्यद्वैतिनां निर्गुणं ब्रह्म; आनन्दादयश्च तस्य स्वरूपमेव, न गुणाः; तथापि स्तुत्य-स्तोतृभेदमविद्यासिद्धगुण-गुणिभेदमाश्रित्य गुणसंकीर्तनात्मिका स्तुतिः कृता। अतस्तया स्तुत्या, काय-वाङ्मनसां नम्रतास्वरूपया च प्रणत्या, देहेन्द्रिय-मनो-बुद्धिभ्यः पराम्= तैरसंस्पृष्टस्वरूपाम्, देवताम्=द्योतमानां स्वतः स्फुरन्तीं पूजयति; "नमसः पूजायाम्" इति क्यचः स्मरणात्। स्तुतिपूर्वया प्रणत्येत्युक्तं भवति ॥

काय-वाङ्मनःप्रह्वतालक्षणयेति च प्रणतिमात्रस्येदं लक्षणम्, इह तु प्रणतिविशेष एव वाचिकोऽभिप्रेत इति द्रष्टव्यम्। काय-मनःपूर्वक एव वाऽयं वाचिको नमस्कार इति ग्रन्थकृद्वचनादेवावस्यामः। तत्रानन्दमित्यादिना स्तुतिः, नमस्याम इति प्रणतिः कृता, इति नमस्कारार्थश्चेदाद्यश्लोकः, ततो नमस्कारपूर्वत्वात् प्रकरणारम्भस्य ततो बहिः, इति कथं प्रकरणप्रतीकत्वेनानन्दमित्युच्यत इत्याशङ्क्याह–प्रकरणार्थमिति ॥ य एवार्थस्तुत्यर्थ उक्ता गुणाः, त एव प्रकरणेन प्रतिपाद्याः, इत्यर्थात् प्रकरणार्थमपि संक्षेपतः सूचयति। अतः प्रकरणान्तर्गतत्वाद् युक्तमस्य प्रकरणप्रतीकत्वमिति भावः। ननु—'विप्रतिपत्तिनिरासायेदं प्रकरणम्' इत्युक्तम्; अतस्तन्निरासोपपत्तिरेवास्य प्रतिपाद्यत्वाद्विषयः, नानन्दादिरित्याशङ्क्याह—विप्रतिपत्तीति ॥ विप्रतिपत्तिनिरासोपपत्त्यभिधानं नादृष्टार्थम्, किं त्वानन्दादिरूपे ब्रह्मणि वेदान्तानां प्रामाण्यप्रतिपादनार्थम्,

2

भावशुद्धिः

आनन्दो हि रागनान्तरीयकस्तदभावे नार्हति भवितुम्। न ह्यस्ति संभवः, न च तत्र तुष्यति, तच्च यस्य सुखमिति। तस्मादानन्दात्मके ब्रह्मणि तद्रागादेव मुमुक्षुः प्रवर्तेतेत्यर्थः। प्रवर्ततां नाम, का नो हानिरिति? P. 1-17 अत्राह—रागेति॥ तदुक्तं न्यायभाष्ये—*"यद्ययं मोक्षे नित्यसुखमभिव्यज्यत इति नित्यसुखरागेण मोक्षाय घटमानो मोक्षमधिगच्छेत्, नाधिगन्तुमर्हति; बन्धनसमाज्ञातो हि रागः। न च बन्धने सति कश्चिद् मुक्त इत्युपचर्यते"—इति। किमत्र प्रमाणमिति? अत्राह—शान्त-

---

तदप्यानन्दादिरूपं ब्रह्मतत्त्वमिति प्रतिपादयितुम्; अतो भवत्यानन्दादिरूपं ब्रह्मापि प्रतिपाद्यत्वाद्विषय इत्यर्थः; न केवलं विप्रतिपत्तिनिरासोपपत्तिर्विषयः, किं त्वानन्दादिरपीत्यपिशब्दस्यार्थः॥

इदानीं प्राथम्यादानन्दादिरूपं व्याख्यातुकामस्तत्पूर्वपक्षं तावत् करोति—अत्रेति॥ आहुरित्यध्याहार्यम्, मन्यन्त इति वा व्यवहितमप्यपेक्षयाऽनुषञ्जनीयम्। ततः किमित्याह—रागेति॥ इतिशब्दो हेत्वर्थः। रागनिबन्धनायाश्च प्रवृत्तेः संसारहेतुत्वम्—*"कामात्मता न प्रशस्ता" *"विद्ध्येन मिह वैरिणम्" *"यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि स्थिताः। अथ मर्त्योऽमृतो भवति" इत्यादिश्रुति-स्मृतिभ्योऽवगतम्। अनुमानाच्च; तथा हि—मुमुक्षो रागनिबन्धना प्रवृत्तिर्धर्मिणी, संसारबीजमिति साध्यो धर्मः, रागनिबन्धनप्रवृत्तित्वात्; स्त्रीभोगादिप्रवृत्तिवदिति। किं च, रागतो मुमुक्षुप्रवृत्तौ यथाचोदितोऽधिकार्यपि न लभ्यत इत्याह—शान्तस्य=निगृहीतान्तःकरणस्य, दान्तस्य=निगृहीतबहिष्करणस्य, आत्मनि=विषये, दर्शनम्=*"तस्मादेवंविच्छान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वा आत्मन्येवात्मानं पश्येत्" इति श्रुत्योच्यते। न चानन्दरागात् प्रवर्तमानः शान्तो भवतीत्यर्थः॥

ननु—शान्तत्वं चेदनुपपन्नम्, पूर्वं दान्तोपन्यासोऽपि व्यर्थः, न व्यर्थः; स हि शान्तत्वस्य श्रौतत्वज्ञापनार्थः। अनेकपदोपादाने हि श्रुतिर्बुद्धौ संनिधीयते। अतः शान्तत्वस्य श्रौतत्वज्ञानं भवति। यद्वा—निगृहीतान्तःकरणश्चेन्न भवति, ततस्तन्मूलत्वाद् बहिष्करणप्रवृत्तेर्दान्तोऽपि न स्यादेव, शान्तग्रहणं तूपलक्षणार्थं मन्तव्यम्॥

भावशुद्धिः

स्येति ॥ रागादिरहितस्य मोक्षहेतुधीः स्यादिति श्रुत्या तदुक्तम्—शान्त इत्यादिकया। रागादिमतोऽपि तत्संभवे श्रुतिरनर्थिका स्यादिति; रागहेतुकप्रवृत्तेः संसारहेतुत्वधीरित्यर्थः ॥

मोक्षस्यानन्दत्वे तदिच्छाया रागनिबन्धनत्वात् तस्य संसारत्वापत्तिः, दुःखनिवृत्तिरेव मोक्षः

ब्रह्मसुखरागात् प्रवर्तमानः शान्त एवेति, अत्राह—न चेति ॥ कथं तर्हि मुच्यत इति? अत्राह—तस्मादिति ॥ यस्मादानन्दात्मकत्वेऽनुपपत्तिः, तस्मादाध्यात्मिकादिदुःखद्वेषी नब्रह्मप्राप्त्यर्थः श्रवणादौ यथा P. 1-19

---

ननु—*"विज्ञानमानन्दं ब्रह्म" इति श्रुतस्यानन्दस्य प्रयोजनवशादुत्सर्गो न युक्तः; न हि प्रयोजनवशात् प्रमाणव्यवस्थोचिता, बाढम्; न प्रयोजनवशादानन्दश्रुतिमुत्सृजामः, किं तु मुक्तिश्रुत्यन्तरबलादेव तामन्यथा नयामः; न चात्यन्तमुत्सृजाम इत्यदोषः। ननु—आनन्दात्मके ब्रह्मण्यपुरुषार्थत्वात् प्रवृत्तिर्न स्यात्, प्रवृत्तौ चास्य न नेच्छाऽस्ति; अनिच्छोः प्रवृत्त्यनुपपत्तेः। सैव च रागः। अतः कथं शान्तता तवापीत्याशङ्क्य परः स्वपक्षे प्रवृत्तिम्, अधिकारिणं च शान्तं दर्शयति—तस्मादिति ॥ यस्मादानन्दरागात् प्रवृत्तावेवं दोषः, तस्मादित्यर्थः ॥

सकलमाध्यात्मिकादिभेदभिन्नं दुःखजातमतिक्रान्ते ब्रह्मतत्त्वे तेभ्य एव दुःखेभ्य उद्विग्नः, सुखेभ्यश्च हैरण्यगर्भेभ्यः क्षयादिदोषपरिभावनया विगतस्पृहः प्रवर्तमानो मुच्यत इत्यर्थः। न हि दुःखनिवृत्तीच्छा रागः, किं तु सुखेच्छा; दुःखनिवृत्त्यर्थमपि लोके प्रवृत्तिर्दृष्टा। अतः प्रवृत्तिः, अधिकारी चास्मत्पक्षे घटत इति भावः ॥

ननु—यदि नानन्दात्मकं ब्रह्म, का तर्हि *"विज्ञानमानन्दम्" इत्यादिश्रुतीनां गतिरित्याशङ्क्याह—आनन्देति ॥ सकलस्य=आध्यात्मिकादिभेदभिन्नस्य त्रिविधस्य, अतिक्रमम्=अभावम्, आहुः=गमयन्ति, लक्षणयेत्यर्थः। सुखं हि दुःखाभावाविनाभूतम्, यत्रापि युगपत् सुख-दुःखे, तत्रापि सुखद्वारा दुःखाभावेनाविनाभूतम्, अनुपपन्नं च ब्रह्मणि पूर्वोक्तयुक्त्या। तस्मादानन्दश्रुतिषु लक्षणैव न्याय्या ॥

भावशुद्धिः

संसारद्वेषात् प्रवर्तते, तथा सुखविरागादपि प्रवर्तेत । एवं सति मुक्तिः स्यादित्यर्थः । ब्रह्मतत्त्व इति सप्तमी ब्रह्मतत्त्वप्राप्त्यर्थमिति, निमित्तार्थिका वा ॥ तर्हि *"विज्ञानमानन्दम्" *"आनन्दो ब्रह्म" इत्यादिश्रुतीनां
P. 1-20 का गतिरिति ? दुःखनिवृत्तिर्गतिरित्याह—आनन्देति ॥ दुःखनिवृत्तौ तच्छब्दप्रयोगो न लोके दृष्ट इति, अत्राह—दृष्टो हीति ॥ तदप्युक्तम्—*यदि कश्चिदागमस्य प्रामाण्याद् मुक्तस्याऽऽत्यन्तिकं सुखमिति, तर्हि आत्यन्तिके संसारदुःखाभावे सुखशब्दप्रयोगो बहुधा लोके"—इति ॥

तत्र चाऽमतुल्यत्वमिति शङ्कापरिहारौ

लोके सुखस्य भावत्वमुपेत्य ब्रह्मणि तन्नास्तीत्युक्त्वा लोकेऽपि दुःखनिवृत्तिरेव सुखमिति वृद्धवैशेषिकादिमतमाह—सैवेति ॥ एवं सति तदभावस्य पाषाणादावपि भावात् तत्र सुखीति शब्दप्रयोगः

---

केचित्तु—सुखे, दुःखाभावे च सुखशब्दस्य प्रयोगादक्षादिशब्दवदनेकार्थत्वमिच्छन्ति, तदयुक्तम्; एकार्थत्वेनैवेतरत्र लक्षणया प्रयोगोपपत्तेरभिधानशक्तिकल्पनानुपपत्तेः, निरूढा चैषा लक्षणा, नास्मत्कल्पितेत्यभिप्रायेणाह—दृष्टो हीति ॥ सुखशब्दस्य दुःखनिवृत्तौ प्रयोगे सिद्धे तत्पर्यायस्यानन्दस्यापि तत्र प्रयोगः सिद्धो भवतीत्यभिप्रायेण सुखशब्दप्रयोगो दर्शितः । सुखस्य वा वाचकः शब्दः सुखशब्दः, आनन्दशब्द एव द्रष्टव्यः ॥

मतान्तरमाह—सैवेति; दुःखनिवृत्तिरित्यर्थः; मन्यन्त इत्यध्याहार्यम् । दृष्टो हि दुःखादिनिवृत्तौ 'सुख्यहम्' इति सुखशब्दः । न च तस्य मुख्यार्थत्वसंभवे गौणत्वमुचितम्, उभयसिद्धा च दुःखनिवृत्तिः; भावात्मकसुखवादिनापि तत्र तन्निवृत्तेरिष्टत्वात्, अतः सैव सुखमस्तु, किं धर्मान्तरकल्पनया ? इति भावः ॥

ननु—एवमुपलादावपि दुःखनिवृत्तेरविशेषात् सुखित्वप्रसङ्ग इत्याशङ्क्याह—न चेति ॥ सुखित्वस्येत्यध्याहार्यम् । कुत इत्याह—प्रत्यगिति । प्रतिगतो व्यावृत्तः इदमंशेभ्योऽञ्चति चेति प्रत्यक् अनिदम्=चिदात्मा, तत्र वृत्तिः यस्या दुःखनिवृत्तेः सा प्रत्यग्वृत्तिरिति वैयधिकरण्येऽपि गमकत्वात् समासः ।

भावशुद्धिः

स्यादिति, अत्राह—न चेति ॥ प्रपञ्चयति—जानामीति ॥ प्रत्यक्= आत्मा, तस्य वृत्तिः प्रमाणादिलक्षणा, तस्यां सत्यां दुःखनिवृत्तौ सुखत्वादिति योगमतेन योजना । प्रत्यगात्माश्रयाया इति मतान्तरे योजनीयम् । निद्रापि प्रतीचो वृत्तिर्विक्षेपिकाऽविद्या-संस्काररूपा वा दुःखशून्या, इति सापि सुखं स्यादिति, अत्राह— उपलभ्यमानाया इति ॥ न चेयमात्मालम्बना वृत्तिर्निद्रा, विक्षेपः, संस्कारो वाऽनुभूयते, यथा चन्दनाद्यालम्बना प्रमाणादिवृत्तिरित्यर्थः ॥ P. 1.21

यस्त्वेवमपि चन्दनादीनामान्तरवृत्तिव्यतिकरात्तदालम्बना वृत्तिः कथञ्चिदात्माश्रयाऽपि स्वगोचरचन्दनादिप्रवणतया नान्तरसुखाभि-माननिबन्धनेति न तुष्यति, तं प्रत्याह—तद्विशिष्टेति ॥ सुखत्वा-दित्यनुषङ्गः । तदिति वृत्तिपरामर्शः । मतान्तरे दुःखनिवृत्तिपरामर्शः ॥

---

अश्मादौ च जीवात्मा नास्तीति भावः । मूर्च्छितादौ प्रत्यग्वृत्तिरपि दुःखनि-वृत्तिरनुपलभ्यमाना सुखं मा प्रसाङ्क्षीदित्युपलभ्यमानग्रहणम् । 'इदम्' इति बुद्धिवृत्तेः प्रतिगता='अहम्' इति बुद्धिवृत्तिः प्रत्यग्वृत्तिः, तत उपलभ्यमानाया दुःखनिवृत्तेः सुखत्वम्; न चाश्मादेः 'अहम्' इति बुद्धिरस्तीति वार्थः ॥

ननु भावरूपं सुखं प्रसिद्धम्; कथं निवृत्तिः सुखमित्याशङ्क्य पक्षान्तर-माह—तदिति । दुःखनिवृत्तिविशिष्टस्यात्मन उपलब्धेर्भावरूपाया एव वा सुखत्वान्नाश्मादौ प्रसङ्गः; तेन दुःखनिवृत्तिर्वा, तद्विशिष्टात्मोपलब्धिर्वा सुख-मस्तु, सर्वथा सुखं नाम न धर्मान्तरमस्तीति भावः । एवमानन्दात्मत्वं ब्रह्मण आक्षिप्य समाधत्ते—तानिति । तत्र दुःखाभावसुखपक्षे पूर्वमुक्ते ब्रह्मण्यानन्द-शब्दो मुख्य एव स्यात्; ततश्च गौणतापक्षो नावतरेदिति ॥

यद्यपि पूर्वपक्षे गौणपक्षमुपन्यस्य दुःखाभावसुखपक्ष उक्तः, तथापि बहुवक्तव्यत्वान्मुख्यसिद्धौ च गौणतायाः सुनिराकार्यत्वान्मुख्यपूर्वकत्वाच्च गौणचिन्ताया दुःखनिवृत्ति सुखपक्षमेव तावन्निरस्यति—न तावदिति ॥ दुःखाभावे हि सुखे नैकस्य भावाभावावेकत्र युगपत् स्याताम्; भावरूपे तु तस्मिन् धर्माधर्मयोरिव विरुद्धयोरप्येकत्र यौगपद्यमुपपद्यते । धर्माधर्मयोश्चैक-

भावशुद्धिः

शीतह्रदे निमग्नानिमग्नार्धकायादेर्युगपत् सुख-दुःखयोरनुभवाच्च दुःखाभावस्य सुखत्वम्; तयोरविरोधात्, अतो भावरूपमेव सुखम्

लोके सुखशब्दस्य भावार्थत्वमापाद्य * "य एव लौकिकास्त एव वैदिकाः" इति वेदेऽपि तदापादयितुं योगादिमतं तावन्निरस्यति—
P. 1-22 नेति ॥ कुत इति? अत्राह—युगपदिति ॥ एकदैकाश्रयेत्यर्थः । कस्मि-
P. 1-23 न्नाश्रये तयोर्यौगपद्यदर्शनमिति? अत्राह—सन्तापवत इति ॥ प्रचण्ड-भास्कराभितप्तस्य पुंसः शीतजलनिमग्नार्धशरीरस्य युगपत् सुख-दुःखयोरुत्पादप्रतीतिसंभवादित्यर्थः । शीतोष्णाभ्यां तप्तत्वक्संनिकर्ष-द्वारा मनोद्वाराधिष्ठिताभ्यां स्वविषयैकधीजनकाभ्यामपर्यायमुत्पादि-तयोः संयुक्तसमवायेन प्रतीतिरित्युक्तम् ॥ अत्र चोदयति—अथेति ॥ ऊर्ध्वकायद्वारेण दुःखमनुभवन्नपि जघन्येनानुभवति सुखम्, इति तत्रापि दुःखनिवृत्तिरेव सुखमित्यर्थः ॥ अतिप्रसक्त्यन्तरमुपन्यस्यति—
P. 2-1 कुम्भीपाक इति ॥

---

त्रात्मनि स्थिताविव, जन्मन्यपि यौगपद्यमस्त्येव; यत्रैकस्मात् व्यापारादेकस्य निग्रहोऽन्यस्य चानुग्रहः । सन्तापवतश्च शीतह्रदे निमग्नानिमग्नार्धकायद्वयद्वारे सुख-दुःखे युगपद् दृश्येते । अतो न दुःखाभावः सुखमित्यर्थः । न च—शष्कुली-भक्षणे गन्ध-रसादिज्ञानवदयौगपद्येऽपि नैरन्तर्याद् यौगपद्यभ्रम इति—वाच्यम्; तत्र रसादिग्राहिणामिन्द्रियाणां भिन्नत्वादणुतरेण मनसा युगपदधिष्ठानाशक्तेर्युक्त-मयौगपद्यम्, इह तु कृत्स्नदेहमभिव्याप्यावस्थितेन त्वगिन्द्रियावयविनैकेन तोयेनार्धसंयोगिना सकृन्मनःसंयोगाधिष्ठितेन चित्रेन सितासितज्ञानवदेकं शीतोष्णग्राहि ज्ञानमुपजन्यते, तेन च सुख-दुःखे युगपज्जन्येते, ते च मनः-संयोगाविशेषाद् युगपदेकत्र ज्ञाने प्रतिभातः । तस्मात् सूक्तम्—युगपत् सुख-दुखयोर्दर्शनादिति ॥

अत्राशङ्कते—अथेति ॥ अथ सत्यपि शीतह्रदेऽनिमग्नार्धकायद्वारे दुःखम्, इतरस्य निमग्नार्धकायद्वारस्य दुःखस्याभावात् सुखित्वमित्युच्यत इत्यर्थः । एवमाशङ्क्य दूषयति—कुम्भीति । कुम्भीपाके नरके पच्यमानस्य पुंसो रौरवादिनरकान्तरदुःखस्य भुक्तस्य प्रध्वंसाभावादभुक्तस्य च प्रागभावात्

भावशुद्धिः

"तामिस्रमन्धतामिस्रं महारौरव-रौरवौ ।
असिपत्रवनं घोरं कालसूत्रमवीचिमत् ॥"

इति ॥ नरकान्तरदेहावर्तित्वे सतीति विशेषणाद् नातिप्रसङ्गः, अत्राह—एकेति ॥ अक्षिरोगदुःखग्रस्तस्य श्रोत्रादिद्वारा दुःखाभावात् सुखित्वं स्यात्, न तथाऽनुभव इत्यर्थः ॥ P. 2-3

एकेन्द्रियद्वारं यस्य दुःखस्य, तदेकेन्द्रियद्वारं दुःखं यस्यास्ति, तस्येति विग्रहः । दुःखरहितस्याकस्मादुपनतविपश्चीस्वरश्रवणादौ भावरूपसुखोत्पादानुभवाद् न दुःखाभावः सुखमित्याह—इतश्चेति ॥

दुःखनिवृत्तौ सुखशब्दप्रयोगो दृश्यत इत्युक्तम्, तत्रापि भावसुखमस्तीत्याह—यत्रेति ॥ कुत इति ? अत्राह—नेति ॥ विषयविशेषस्वीकारो दुःखनिवृत्त्यर्थः किं न स्यादिति ? अत्राह—दुःखेति ॥ P. 2.4 P. 2-5

---

सुखित्वप्रसङ्गः स्यात् । न च तदिष्टम्; नरके हि सुखासंभिन्नमैकान्तिकं दुःखम् । तदिदमलौकिकमागममात्रसुज्ञेयमिति लौकिके विषयेऽतिप्रसङ्गदोषमाह—एकेति । एकेन्द्रियद्वारं दुःखं यस्य पुंसः, स तथोक्तः । तस्येन्द्रियान्तरद्वारा दुःखाभावात् । सुखित्वप्रसङ्ग इत्यनुषज्यते ॥

हेत्वन्तरमाह—इतश्चेति । इतश्च न दुःखाभावः सुखमित्यर्थः । कुत इत्याह—अदुःखस्येति । नास्ति दुःखं यस्य पुंसः सोऽदुःखः, तस्य कर्पूरादिविषयविशेषेण संयोगात् संवेद्यस्य ह्लादस्य सुखस्योत्पत्तेरित्यर्थः । संवेद्यग्रहणमनुभवसिद्धत्वान्नासौ 'नास्ति' इति वक्तुं शक्यत इति दर्शयितुम् । नादुःखस्य दुःखप्रध्वंसः सुखम्; असतो ध्वंसायोगात् । न च दुःखप्रागभावः; तस्य विषयैरजन्यत्वात्; अस्य च विषयजन्यत्वात्; ताभ्यां सुखमन्यदेव तत्र संवेद्यत इति भावः । यत्र तर्हि क्षुदादिदुःखमस्ति, तत्रान्नपानादिभिस्तत्प्रध्वंसः सुखं किं न स्यादित्याशङ्क्याह—यत्रापीति । कुत इति ? अत आह—अन्नेति । सुरसाम्भःसुशीतलान्नपानोपादानादित्यर्थः । ननु—अन्नपानविशेषोपादानात् तद्दुःखविगम एव भविष्यतीत्याशङ्क्याह—यैस्तैरिति । यादृशैस्तादृशैरस्वादुभिरपीत्यर्थः ॥

भावशुद्धिः

येन केनान्नपानाद्युपभोगेन क्षुधादिदुःखनिवृत्तेस्तादर्थ्येन तद्विशेषोपादानमयुक्तमित्यर्थः । दुःखनिवृत्तेः सुखविशेषत्वाद्विशिष्टविषयभोगाद्विशिष्टदुःखाभावसिद्धिरिति, अत्राह——न चेति ॥

सविशेषस्याभावत्वविरोधादित्यर्थः । भावस्यापि सविशेषत्वमयुक्तम्; विशेषस्यापि भावत्वे तदात्मनो भेदाभावात्, अभावत्वे विशे
P. 2-6 षस्यैवासिद्धेरिति, अत्राह——सुखे त्विति ॥ भावस्य भावाधिकरणत्वमनुभूयमानमशक्यापह्नवमिति भावः ॥

कामनिवृत्तेः सुखत्वशङ्का, अकामेऽपि विषयोपभोगेनाह्लादात् तन्निरासश्च

अदुःखस्यापि विषयविशेषात् सुखदृष्टेर्न दुःखाभावः सुखमित्युक्तं विशदयति—यदपीति ॥ कामात्मकदुःखनिवृत्तिरेव तत्रापि सुखमित्यर्थः ॥

तन्मतेऽप्यविद्यमानकामस्याकस्मादुपनतविषयसम्पर्के सुखिता
P. 2-9 न स्यादिति दूषयति——तत्रापीति ॥ अकामस्य रम्यदेशादिसंपर्के सुखं
P. 2.10 न जायते इति, अत्राह——भवतीति ॥ मध्यस्थः कामो यथा सकामः, तथाऽयमपीति समुच्चयार्थेऽपिशब्दः । सर्वथा विरक्तौ मुमुक्षोरन्यो नास्तीति चशब्देन द्योतयति ॥

कामनिवृत्तौ विषयस्य सुखहेतुत्वात् तन्निवृत्तिरेव सुखमिति पुनः शङ्का-परिहारौ

तत्रापि कामनिवर्तनेन विषयस्य सुखहेतुत्वात् कामनिवृत्तिः
P. 2-11 सुखमिति चोदयति——स्यादेतदिति ॥ सुखयति = सुखिनं करोति ।

---

ननु——दुःखविगमविशेषार्थमेवान्नपानविशेषोपादानं भविष्यति, दृष्टो हि कारणविशेषात् कार्यविशेष इत्याशङ्क्याह——न चेति । दुःखाभावस्यातिशयाभावादिति भावः । भावरूपे तु सुखे तस्यातिशयवत्त्वात् तदर्थं सुखसाधनविशेषापेक्षा युक्ता, तदुक्तम्——सुखे त्विति ।

अदुःखस्येति यदुक्तम्, तत्राशङ्कयति——यदपीति ॥ विषयप्राप्तिं विना काम एव दुःखम्, अतस्तन्निवृत्तिरेव सुखं भविष्यतीत्यर्थः । तद् दूषयति——तत्रेति । तस्मिन्नपि पक्षे, अकामस्य=अविद्यमानकामस्य पुंसः पवनोपनीताचिन्तितचम्पकगन्धादि विषयविशेषोपभोगे सति सुखिता न स्यादित्यर्थः ।

भावशुद्धिः

अन्वय-व्यतिरेकसिद्धमर्थं निगमयति—तस्मादिति॥ कामनिवर्तकत्वोपाधौ विषयस्य सुखहेतुत्वं कस्मात्? स्वाभाविकमेव किं न स्यात्? अत्राह—अन्यथेति॥ न हि तदर्थः कस्यचिद् सुखं करोति, कस्यचिद् दुःखमिति दृष्टं स्वभाववैचित्र्यम्। न हि तन्तुः कस्यचित् पटं करोति, कस्यचिद् घटमिति दृष्टं स्वभाववैचित्र्यमित्यर्थः। असुखः सुखयतीति सुखः। औपाधिकत्वेऽपि तुल्याऽनुपपत्तिरिति, अत्राह—कामेति॥ तु- P. 2-13
शब्दो विशेषार्थः। काम्यत इति व्युत्पत्त्या विषयः काम इति भ्रान्तिं वारयति—अभिरुचिरिति॥ अकस्मादुपनतरमणीयविषयसंपर्के काम-रहितस्यापि सुखं दृश्यत इत्युक्तम्, अत्राह—तत्रेति॥ तत्सुखत्वम्= P. 2-14
तस्य विषयस्य सुखहेतुत्वमित्यर्थः॥

कामनिवृत्त्यसम्भवात् तन्निवृत्त्यसम्भवेन तस्याः सुखत्वायोगः

विषयोपभोगात् कामनिवृत्तिरित्युक्तं दूषयति—तदपीति॥ विषय- P. 2-15
भोगात् कामनिवृत्तिरनुभूयत इति, अत्राह—यत इति॥ नावश्यम्=सर्वत्रैव न। कामान् निवर्हयन्तीति कामनिबर्हणाः, किन्तु तदुत्कटताप-शममात्रं स्यात्; अन्यथा पुनर्विषयं न संगोपयेदित्यर्थः। तर्कित-मेतत्, न प्रमितमिति, अत्राह—उक्तं हीति॥ कामानाम्=विषया- P. 2-16
णाम्। "हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते" इत्युत्तरार्धम्।
पातञ्जलमपि सूत्रमत्र प्रमाणमित्याह—तथेति॥ विषयोपभोगस्य P. 2-17

---

मा भवत्विति चेत्, तत्राह—भवति चेति॥ मध्यस्थः=राग-वैराग्ययोर्मध्ये वर्तमान इत्यर्थः॥

कामनिवृत्तेः सुखत्वव्यभिचारार्थमकामस्यापीत्युक्तम्, तत्र चोदयति—स्यादेतदिति॥ सुखयतीति सुखो विषयः, ण्यन्ताद्धातोः पचाद्यच्। स्वपक्षे साधुत्वमाह—कामनिवृत्त्या त्विति॥ अभिरुचिरिति कामस्य विवरणम्। यत्राकामस्य विषयविशेषयोगात् सुखं भवति, तत्र तर्हि का गतिरित्याशङ्क्याह—तत्रेति॥ सहजो हि रागः सर्वपुंसामस्ति, स तु विषयविशेषेणाविर्भवतीति धियोक्तम्—कामाभिव्यक्ताविति॥

भावशुद्धिः

P. 2-18 कामनिवर्तकत्वमूरीकृत्यापि न तन्निवृत्तिरेत्र सुखमित्याह—विषयदोषेति ॥ अनुत्पन्नदुःखानुपक्तत्वादिर्दोषः । उपभोगतुल्यः = उपभुङ्क्त इति भोक्ता=उपभोगः, तेन तुल्यः, उपभोगकृतौ वा तुल्यः स्यात् । कामनिवृत्तेः । सुखत्व इति शेषः ॥

P. 2-19 इतश्च न कामनिवृत्तिः सुखमित्याह—समाने चेति ॥ प्रार्थितयोः पुत्री-पुत्रयोः पुत्रप्रसूतौ सुखातिरेको दृश्यते, न तथा पुत्रीप्रसूतावित्यर्थः । कामितापत्यद्वयप्राप्त्या कामनिवृत्तेरविशेषादित्याह—कामेति ॥

कामनिवृत्तौ सुखातिशयाभिमानशङ्का-तत्परिहारौ

निवृत्तेर्विशेषो[षा]सत्त्वेऽपि प्रतियोगिविशेषाद् विशेषवत्त्वाद्
P. 2-20 नार्थ इति चोदयति—स्यादेतदिति ॥ 'अभिमान' इति प्रतियोगिविशेषोपाधिकमभावे विशेषं दर्शयति, तदयुक्तम् ; वैपरीत्यदर्शनादित्याह—
P. 2-21 तच्चेति ॥ प्रयस्यन्तम्=सेवादिप्रयासं कुर्वन्तम्, अर्थः=ग्रामादिः,

---

सिद्धान्ती प्रत्याह—तदपीति ॥ निबर्हणाः=हन्तारः । भवन्तीत्यध्याहार्यम् । इममेवार्थमभियुक्तोक्त्या द्रढयति—उक्तं हीति ॥ तथा पातञ्जलेनापि वचसा द्रढयति—भोगेति ॥ यथा भोगाभ्यासो विवर्धते, तथा रागोऽपीत्यर्थः । दोषान्तरमाह—विषयदोषेति ॥ कामनिवृत्तेरवस्तुत्वेनाविशेषादिति भावः । दोषान्तरमाह—समाने चेति ॥ एकस्य प्रार्थितार्थलाभे प्रमोदो महान् भवति, अन्यस्य चाल्प इति प्रमोदभेदो न स्यादित्यर्थः । कुत इत्याह—कामनिवृत्तेरिति ॥

पर इदानीं विशेषमाह—स्यादेतदिति । यस्य कामोऽतिरिक्तो महान्, स तन्निवृत्तौ सुखमनतिरिक्तमप्यतिरिक्तमभिमन्यते, न तत्त्वतोऽतिरिक्तम् ; कामनिवृत्तेरविशेषात्, इतरत्र त्वनतिरिक्ते कामे, अन्यथाऽनतिशयितमित्यर्थः ॥

तत्र दोषमाह—तच्चेति ॥ सत्यपि कामातिरेके क्लेशावाप्तेऽर्थे सुखातिरेकाभावात्, असत्यपि कामातिरेकेऽक्लेशादुपगते सुखातिशयदर्शनान्न कामातिरेकनिबन्धनः सुखातिरेकाभिमान इत्यर्थः । कामातिरेकाद्धेतोः प्रयासं

भावशुद्धिः

अप्रार्थितः=देहीति याचनागोचरप्रयासाद् विना=सेवादिक्लेशमन्तरेणोपनतः=प्राप्तो निध्यादिरित्यर्थः ॥

उक्तमुपपादयति—तथा हीति ॥ यथा मदुक्तमुपपद्यते, तथोपपाद्यते—बहुकालसेवयाऽयं मया लब्धः, यश्चानायासेन, तत्तुल्यलाभ इत्यत्र सुखातिशयः, अन्यत्रान्यथा, अतो न कामनिवृत्तिः सुखमित्यर्थः ॥ P. 2 22

कामाभावस्य तत्प्रागभाव-ध्वंसादिरूपस्य सुखत्वायोगः

किं च, कामस्य प्रागसत्त्वं सुखत्वम्, ध्वंसो वा, तदसत्त्वमात्रं वा । तत्राद्यन्तयोर्दोषमाह—कामेति ॥ अकामितविषयेति P. 2-23
छेदः। कामप्रागभावस्यावस्थात्रयेऽपि सत्त्वाद् भोगावस्थायामिवेतरावस्थयोरपि सुखं स्यादित्यर्थः । न भिद्येयाताम्=सुखवत्त्वेन विशेष्ये-

---

क्लेशं कुर्वाणं नरं न तथा लब्धोऽर्थः प्रीणयति, यथा विना प्रयासादुपनतोऽप्रार्थितः प्रीणयतीत्यन्वयः ॥

इममर्थं लोकसिद्धेनानुभवेन द्रढयति—तथा हीति ॥ अनाशंसितम्=अप्रार्थितमित्यर्थः । किं च, किं कामाभावमात्रं सुखम्, अथ प्रध्वंसः ? तत्राऽऽद्ये पक्षे दोषमाह—कामाभावमात्रे चेति ॥ अकामितविषयोपभोगे भोगात् प्राक् कामस्य प्रागभावः, भोगावस्थायां परत्र च विषयप्राप्त्युद्बुद्धस्य कामस्य प्रध्वंसाभावः, अतः कामाभावस्याविशेषाद् भोगावस्थातः सकाशात् पूर्वापरे अवस्थे न भिद्येयाताम्; तस्यामिव तयोरपि सुखी स्यात्, न चैवमस्तीति भावः । द्वितीये पक्षे दोषमाह—कामध्वंस इति ॥ कामध्वंसे च सुखे भोगावस्थातः सकाशात् परावस्था न भिद्येत; उभयत्रापि कामध्वंसाविशेषाद् भोगावस्थायामिव तदुत्तरकालमपि सुखी स्यादित्यर्थः ॥

अथ भोगावस्थायां सकामः पुमान्, पूर्वापरयोरवस्थयोस्त्वकामः, तेन कामाभावमात्रे सुखे भोगावस्थातः पूर्वापरे अवस्थे भिद्येते, कामप्रध्वंसे च सुखे परावस्था भिद्यते, अतः पक्षद्वयोक्तदोषाप्रसङ्ग इत्युच्यते, तदयुक्तम्; एवं ह्याद्ये पक्षे भोगावस्थातः पूर्वापरयोरवस्थयोः कामाभावमात्रात्मकसुखसद्भावात् सुखी स्यात्, द्वितीये च पक्षे कामध्वंसात्मकसुखसद्भावात् परत्र सुखी

P. 2-24 याताम् । मध्यमं विधूनुते—कामध्वंसे वेति ॥ ध्वंसस्य नित्यत्वादित्यर्थः ॥

भोगकालतुल्यमितरकाले सुखं स्यादित्युक्तप्रसंगमात्रपरिहारं
P. 2-25 शङ्कते—भोगेति ॥ प्रबुद्धोऽध्वस्तः कामो यस्य सः। तथा कामाभावो न कालत्रयतुल्य इत्यर्थः । काम-तदभावयोर्दुःख-सुखत्वाभ्युगमेऽनुभवविरोधः स्यादिति दूषयति—पूर्वेति ॥ भोगकाले प्रबुद्धकामत्वमभ्युप-
P. 3-2 गम्योक्त्वा, तद्पि न सम्भवतीत्याह—अप्राप्तश्चेति ॥ अभुज्यमानस्य कामोद्बोधकत्वे स्वापेऽपि तदुद्बोधः स्यात्, अत्राह—स्मरणेति ॥ भुक्तजातीयस्मरणा रूढतयेत्यर्थः । भुज्यमानस्य कामनिवृत्तिहेतुत्वाद् न तदुत्पादकत्वम्, विरोधादित्याह—प्राप्त इति ॥ व्यतिरेके
P. 3-3 दण्डमाह—प्राप्तस्येति ॥ ततो विषयभोगात् कामनिवृत्तिर्न स्यात्; तस्य तदभिव्यञ्जकत्वादित्यर्थः ॥

P. 3 4 यत्रैव कामः, स एव सुखयतीत्युक्तं दूषयति—न चेति ॥ तत्र सुखम्=तस्मिन् भुज्यमाने सुखमित्यर्थः । हेतुं चाचष्टे—मनोरथेति ॥ इच्छाशतविषयस्य प्रयासादाप्तदुष्टत्रिपिण्डस्य भोगे दुःखदर्शनात्।

---

स्यात्, भोगावस्थायां तु कामात्मकदुःखसद्भावात् दुःखी स्यात्, एतच्चानुभवविरुद्धम्। तदेतत् सर्वं साशङ्कमाह—भोगावस्थायामिति ॥ प्रबुद्धः, अध्वस्तः कामो यस्य स तथा इति विग्रहः । पूर्वापरयोरित्युपलक्षणम्, परत्रेति च द्रष्टव्यम्। अकामस्यापि विषयोपभोगात् कामाभिव्यक्तौ तन्निवृत्तिः सुखमित्युक्तम्, तदयुक्तम्; यतोऽप्राप्तः सुखहेतुत्वेन स्मर्यमाणो विषयः काममुद्बोधयति, प्राप्तश्च तं निवर्तयति; प्राप्तस्यापि विषयस्य कामोद्बोधकत्वे तस्यानिवर्तकत्वात्, ततो विषयात् कामस्य निवृत्तिर्न स्यात्, अतः सैव नास्ति, का सुखं भविष्यतीत्याह—अप्राप्तश्चेति ॥ अप्राप्तः=अभुज्यमानः, प्राप्तः= भुज्यमान इत्यर्थः ॥

किं च यदि कामनिवृत्तिः सुखम्, तदा यत्र कामः, तत्रावश्यं सुखेन भाव्यम्; उत्पत्तिमत्त्वेन कामनिवृत्तेरवश्यम्भावित्वात्, न चैतदस्तीत्याह—न चेति ॥ कुत

भावशुद्धिः

कामितस्य सुखहेतुत्वे तन्न स्यादित्यर्थः । वैषयिकसुखानुभवानुशायित्वात् कामस्य, न तन्निवृत्तिः सुखमित्याह—सुखेति ॥ तुनोक्तं हेतुं P. 3-5
विशदयति—अनुभूतेति ॥ अनुभूतस्तद्भावः सुखत्वम्, सुखहेतुत्वं यस्मिन् विषये, तत्र तस्य कामस्य दर्शनादित्यर्थः ॥

(अन[1]नुभूतेऽपि रासभादेर्घटकाष्ठादौ जा)तमात्रस्य रागस्य दृष्टेरसिद्धमेतदित्याशङ्क्य तत्रापि जन्मान्तरानुभवसंस्कारान्तरात्तदुत्पत्तिरित्याह—याऽपीति॥ प्राचि भवे भूतः=प्राग्भवीयः, स चानुभवः, तन्निबन्धनं कारणं यस्याः, सा तथा ॥

विषयस्य सुखहेतुत्वस्वाभाव्ये य एव कस्यचित् सुखः, स सर्वस्य स्यादिति यदुक्तम्, तत्र प्रतिबन्द्या प्रत्याह—यथा चेति ॥ P. 3-7

---

इत्याह—मनोरथेति ॥ मनोरथशतप्रार्थितस्यापि कस्यचिद्विषयस्य कुकलत्रादेरुपभोगदशायां दुःखदर्शनादित्यर्थः । किं च, यत्र विषये सुखमनुभूयते, तत्र कामस्य दर्शनात् सुखपूर्वक एव काम इति निश्चीयते, अतः कामनिवृत्तेरन्यत् प्राग्भावि सुखं वस्तुभूतमेष्टव्यमित्याह—सुखपूर्वकस्त्विति ॥ अनुभूतः सुखसद्भावो यस्मिन्निति विग्रहः । ननु=यदि सुखानुभवपूर्वक एव कामः, ततोऽननुभूते स्तनपानादौ कामासम्भवाद् गवादिजातिविशेषभाजां वत्सादीनां कामः, कामाद्वा स्तनपानादौ प्रवृत्तिर्न स्यादित्याशङ्क्याह—यापीति ॥ प्राग्भवः=पूर्वजन्म, तत्र भवोऽनुभवः प्राग्भवीयः; तन्निबन्धनेत्यर्थः ॥

इदमुक्तं भवति—अनादौ संसारे शतशो गवादिदेहानुगृहीतात्मनां स्तनपानादिसुखानुभवोद्भूतः, ततः संस्कारः, संस्काराच्च गवादिदेहहेत्वदृष्टोद्बोधिता सुखस्मृतिः, ततः कामप्रवृत्तिः, अतस्तत्रापि सुखानुभवपूर्वक एव कामः, कामाच्च प्रवृत्तिरिति । तदुक्तम्—*" तं विद्या-कर्मणी " इति । यत्र कामः, तत्र सुखम्; अन्यथा य एकस्य सुखः, स सर्वस्य स्यादित्यव्यवस्थोक्ता, तत्राह—यथा चेति ॥

---

1. (...) कुण्डलितो भागो B. चिह्नितपुस्तके नास्ति ।

भावशुद्धिः

कामनिवृत्त्याः सुखत्वेऽपि सर्वेषां सर्वविषयेषु कामः किं न स्यात्? अदृष्टादिनिमित्तव्यवस्थाऽस्माकमपि समेत्य[1]र्थः ॥

कामनिवृत्तौ कुत्रचन दुःखत्वमपि, अतो न सा सुखम्

कामनिवृत्तिमात्रस्य सुखत्वे कामनिवृत्तौ दृश्यमानसन्तापानु-
P. 3-8 पपत्तेरस्ति भावरूपं सुखमित्याह—अपि चेति ॥ दुःखरूपकामनिवृत्तौ
P. 3-9 किमिति परितप्यत इति? अत्राह—तदिति ॥ तदभावे=तस्य कामस्याभावे[2]। वीर्यवृद्ध्यर्थमौषधसेवनस्य विषयपरेषु दर्शनाद् भावरूप[3]सुखे तदुपपत्तिरित्यर्थः ॥

[4]'श्रोत्रियस्य चाकामहतस्य' इति ([5]कामनिवृत्तौ सुखप्राप्तिश्रवणाद् यदि दूयन्ते, न तर्हि तन्निवृत्तिरिति शङ्कते—नेति ॥ निवृत्तः कामो
P. 3-10 येषां ते, तथा। समाधत्ते—निवृत्तकामा इति ॥ हेतुमाह—तस्येति ॥) रागनिमित्तादित्यर्थः ॥

---

कामोऽपि न सर्वस्य सर्वत्र भवति, किं तर्हि? किंचिज्जातीयस्य, किंचिद्वयसः, किंचिदवस्थस्य क्वचिद्भवति; यथा—गोर्घासग्रासे, यूनः स्त्रैणे, रोगिणोऽपथ्ये, सुखमपि तथैव जात्यादिभेदात् व्यवस्थाप्यत इति नाव्यवस्थेति भावः। इतश्च न कामनिवृत्तिः सुखम्, अपि तु दुःखं यावदित्याह—अपि च केचित्, पित्ताद्युपहतेन्द्रियाः, दूयन्ते=दुःखेन तप्यन्ते; कामनिवृत्तौ सुखे तेऽपि सुखिनः स्युः, न चैवमस्ति; अतो न सा सुखमिति भावः। किमिति दूयन्त इत्याह—तदभाव इति। तदभावे=कामाभाव इत्यर्थः ॥

अपर आह—न तर्हीति ॥ यदि दूयन्ते, न तर्हि निवृत्तकामाः; न ह्यनिष्टे कामनिवृत्त्या केचिद् दूयन्त इति भावः। सिद्धान्तवाद्याह—निवृत्तेति ॥ पित्तदोषात् तिक्ततयाऽवभासमानं खण्डादिविषयं प्रति निवृत्तकामाः= निवृत्तरुचय रुचितं कामयन्त एव, 'कथमत्र नो रुचिः स्यात्' इति

---

1. मैवे B.
2. इति B.
3. पे B.
4. B. पुस्तकेऽधिकः पाठः
5. () अन्तर्गतं B. पुस्तके नास्ति।

भावशुद्धिः

अनिष्टविच्छेदो न [1]तापकारणम्; अतिप्रसंगादिति शङ्कते—किमिति ॥ विषयस्यानि[2]ष्टत्वेऽपि ततो जायमानेष्टसुखविच्छेदकत्वेन तापकत्वमित्याह — अनुभूतेति ॥ अनुभूतचरस्य = दृष्टसजातीयस्य, तज्जन्मनः=तस्माद्विषयाद् जन्म यस्य, तस्येत्यर्थः। नैतच्छक्योदाहरणमिति, अत्राह—यथेति ॥ तथा विषयान्तरेऽपि द्रष्टव्यमित्यर्थः। तत्र रोग[3] एव तापकारणम्, न तज्जन्यसुखाप्राप्तिरिति, अत्राह—तत्रेति ॥ अनुभूतचरतज्जन्माह्लाद[4]पदानां कर्मधारये सति तस्य विच्छेदादिति षष्ठीसमासः। रोगोऽपि न स्वरूपेण तापकः; पररोगेऽपि तत्प्रसङ्गात्, किं तु विशिष्टस्य सुखविच्छेदकत्वेनेत्यर्थः। भावत्वानुभवविरोधाद् दुःखध्वंसो न सुखम्, इतरथा दुःखं सुखध्वंसः, सु[5]खाभावरूपमिति कल्पयतो वारकाभावादित्याह—तस्मादिति ॥ आत्मानमात्मानं प्रति वेदनीयम्=प्रत्यात्मवेदनीयम्, तदेव सुखम्, तस्य प्रत्याख्यानमिति विग्रहः। कामनिवृत्त्या दूयन्ते यस्मादिति तच्छब्दार्थः[6] ॥

P. 3-11 P. 3-12 P. 3-13

---

विषयग्रहणम्। हेतुमाह—तस्येति ॥ तस्य=विषयस्य, कुतश्चित्=पित्तादिदोषात्, अनुपभोग्यत्वात्=सुखहेतुत्वादित्यर्थः ॥

विषयं प्रति चेन्निष्कामाः, कुतस्तर्हि हेतोस्तदभोग्यत्वेन दूयन्ते? न ह्यनिष्टविषयानुपभोगे दुःखं दृष्टमित्यभिप्रायेण हेतुं परः पृच्छति—किमिति ॥ सिद्धान्ती हेतुमाह—अनुभूतेति ॥ पित्तादिदोषात् पूर्वमनुभूतस्य खण्डादिविषयाज्जातस्य सुखस्य पित्तादिदुष्टेन्द्रियैरिदानीमप्राप्तेस्तदनुस्मृत्या ते दूयन्त इत्यर्थः। अत्रोदाहरणमाह—यथेति ॥ उपसंहरति—तस्मादिति ॥ प्रतिपुरुषवेद्यत्वेनानुभवसिद्धत्वादप्रत्याख्येयत्वमेव द्रढयति। यदि सुखं वस्तुभूतमस्ति, किमर्थं तर्हि *"अनित्याशुचि-दुःखानात्मसु नित्य-शुचि-सुखात्मख्यातिरविद्या"

---

1. वत्त B.
2. विषयनिष्ठत्वेऽपि B.
3. रोगे तावत् कारणं B.
4. जन्माद B.
5. खं B.
6. शंखपाणिस्तु—दुःखं जन्म तमः श्वभ्रमिति प्रथमं पादं पठति ॥

भावशुद्धिः

" तमः श्वभ्रनिभं दृष्टं वर्षबुद्बुदसंनिभम् ।*
नाशप्रायं सुखाधीनं नाशोत्तरमभावगम् ॥
चर्मखण्डं द्विधा भिन्नमपानोद्गारधूपितम् ।
ये रमन्ति नमस्तेभ्यः साहसं किमतोऽधिकम् ॥"

इति संसारे सुखलेशो नास्तीति व्या स वचनविरोधो भावरूप-
P. 3-14 सुखाङ्गीकार इति, अत्राह—सुखसञ्ज्ञीति ॥ विषयसुखश(स)क्तलोकस्य मुक्तिमार्गे प्रलोभनायैतद्वचनम्; 'अन्यनिन्दाऽन्यस्तुतये' इति न्याया-दित्यर्थः । तत्रभवद्भिः=पूज्यैः ॥

सुखम्, नाभावः, सातिशयत्वात्, माधुर्यवदिति निगमयति—तदेवमिति ॥ एवम्=उक्तप्रकारेणेत्यर्थः । सुखस्य भावत्वेऽपि सुख-शब्दो दुःखाभावविवक्षयैव प्रयुज्यत इति, अत्राह—स चेति ॥ नपुंसकं प्रकृत्य पुंलिङ्गप्रयोगोऽभिधेयाभिप्रायेण । [1](मुख्यार्थबाधक-मन्तरेणोपचारकल्पना न युक्तेत्यर्थः ।) लौकिकसुख[2]शब्दस्य भावार्थ-त्वेऽपि वेदे श्रूयमाणानन्दशब्दस्य दुःखाभावार्थत्वमिति, अत्राह—

*" दुःखं जन्म तमःश्वभ्रं वर्षबुद्बुदसंनिभम् ।
नाशप्रायं सुखाधीनं नाशोत्तरमभावगम् ॥"

इत्यादिवचोभिः व्या स - प त ञ्ज लि प्रभृतिभिराचार्यैः संसारे सुखाभाव उक्तः ? किमिति वा कैश्चित् पण्डितैर्दुःखनिवृत्तिः सुखमुक्तम् ? इत्याशङ्क्याह—सुखसञ्ज्ञीति ॥ विषयसुखेऽत्यन्तमासक्तं परमश्रेयोविमुखं जनमनुकूलयितुं तत्रभवद्भिः पूज्यैराचार्यैः सुखं नाम वस्तु नास्तीति वर्णितमिति कल्पयाम इत्यर्थः ॥

प्रकृतविचारफलं संकलय्य कथयति—तदेवमिति ॥ सिद्धमित्यध्या-हार्यम् । इदानीं यदुक्तमानन्दश्रुतयो दुःखाभावं लक्षणयाऽऽहुरिति, तद् दूषयति—स चेति ॥ अतः स एव ग्राह्य इति वाक्यशेषः । ननु गङ्गाघोषादिवाक्य-

1. कुण्डलितो भागः B. पुस्तके नास्ति 2. B. पुस्तके लुप्तम्

भावशुद्धिः

शब्देति ॥ शब्दः प्रमाणं यस्मिन्, तस्मिन्=शब्दप्रमाणके। यथाशब्दम्=शब्दशक्तिमनतिक्रम्य। लोके तावद् यो रवो गृहीतसङ्गतिकः, स वेदेऽपि तदर्थः; तत्र पृथक् सङ्गत्यधिगत्ययोगादित्यर्थः ॥

तत्त्वदर्शनवैमल्यादिच्छा, रागस्तु तद्विपरीतः, इति मोक्षे रागाभावेऽपि मुमुक्षोपपत्तिः

आनन्दात्मकत्वे ब्रह्म[1]ण आनन्दरागाद् मुमुक्षुप्रवृत्तिः स्यादिति यदुक्तम्, तत्राह—न चेति ॥ तत्त्वदर्शनेच्छया श्रवणादिप्रवृत्त्यङ्गीकारात् कथं रागनिबन्धनत्वाभाव इति? अत्राह—न हीति ॥ कीदृशं तर्हीति? अत्राह—अविद्येति ॥ द्वैतधीः=अविद्या, तया क्षिप्तम्, अत एव (वा) परमार्थगुणाभिनिवेशम्—सुभ्रूः, सुनासेत्याद्यध्यासनिबन्धनमिच्छादिभेदं[2] रागं कथयतीत्यर्थः। परमानन्देच्छा तु न रागः, किं तु श्रद्धा, सर्वथा वैपरीत्यादित्याह—तत्त्वेति ॥ निष्प्रपञ्चात्मदर्शन- P. 3-17 P. 3-18

---

वदमुख्योऽर्थः किं न गृह्यत इत्याशङ्क्य विशेषमाह—शब्देति ॥ तत्र प्रमाणान्तरगोचरत्वात् तथापि स्यात्, इह तु तन्नास्ति; शब्दैकगोचरत्वादात्मस्वरूपस्य, अतोऽत्र शब्दशक्त्यनुसारेणैवार्थे प्रतीतिर्युक्ता; न मानान्तरानुसारेण; यथा गङ्गाशब्दात् तीर इत्यर्थः ॥

ननु—अनुपपत्त्या लक्षणा भवति; सा चात्राप्यस्तीत्युक्तम् 'आनन्दरागात्' इत्यादिनेत्याशङ्क्याह—न चेति ॥ कुत इति? अत आह—न हीति ॥ न हि तपस्वी तपांसीच्छन् रागीत्युच्यते लोक इति भावः। को नाम स इत्याह—अविद्येति ॥ 'असत्ये सत्यम्' इति 'अनात्मन्यात्मा' इति ज्ञानमविद्या, तया क्षिप्तम्=कृतम्। अशान्तेषु रूप-रसादिगुणेष्वभिनिवेशं रागमाचक्षते धीरा इत्यर्थः। अविद्यया क्षेत्रधर्मादिसुखादीनात्मनि मन्यमानस्य तद्धेतुषु रूप-रसादिष्वसत्येष्वविद्यया सत्यतयाऽभिमतेषु योऽभिनिवेशः, सोऽविद्याक्षिप्तः। व्यतिरेकमाह—तत्त्वेति ॥ तत्त्वे तु=सत्त्वे स्वानन्दात्मकब्रह्मणि तद्दर्शनस्य वैमल्यात् संशय-विपर्ययमलविरहाद् या चित्तस्य प्रशान्तिः=अभीच्छा, सा न रागपक्षे व्यवस्थाप्यते धीरैः ॥

---

1. ब्रह्मणानन्द B. 2. -भेदरागं B.

मागमिकं तत्त्वदर्शनम्, यदाचक्षते—श्रवणमिति, तस्य युक्तिमतः संशय-विपर्यासव्युदासेन यथावदव[1]स्थापनं [2]वैमल्यं मननाह्वयम्, न तु साक्षात्कारः, तस्य=फलस्य [3]प्रवर्तकत्वात्। अभिरतिः, अभीच्छा, इति-पर्यायाभ्यामेतमर्थं[4] रागान्निवर्तयितुं विशदयति। दृष्टान्तेनैतदुपपाद-
P. 3-19 यति—यथेति॥ संसारस्यासारतैव तत्त्वम्, तस्य दर्शनान्निष्पन्न उद्वेगः= संसारासारतादर्शने संसारादुद्वेगो मुमुक्षुप्रवर्तको न द्वेषेऽन्तर्भाव्यते, द्वेषोद्वेगयोर्मिथ्यातत्त्वधीकारणभेदाद् यथेत्यर्थः। श्रद्धा-रागयोः
P. 3-29 कारणभेदाद् भेदानभ्युपगमे दोषमाह—अन्यथेति॥ संसारजिहासारूप उद्वेगस्तत्रापि द्वेष[5] एव, इति द्वेषनिबन्धन[6]मुमुक्षुप्रवृत्तिः संसारनिबन्धन-निषिद्धप्रवृत्तिवत् स्यादित्यर्थः। मुमुक्षुप्रवृत्तिरनिष्टजिहासयेत्युक्तं भवति। तदुक्तं न्यायभाष्ये[7]—अनिष्टोऽपरमार्थो मोक्षो[8]पायोपदेशः। प्रवृत्तिश्च मुमुक्षूणां नेष्टमनिष्टानुबन्धं सम्भवतीति। इष्टमप्यनिष्टं सम्पद्यते, अनिष्टहानाय च घटमान इष्टमपि जहाति; विवेकेन हानस्याशक्यत्वादिति॥

---

इदमुक्तं भवति—न सर्वैवेच्छा रागः, किं त्वभूतविषयेति। प्रसादोऽभिरुचिरभीच्छेति पर्यायनिर्देश एवंविधैः शब्दैर्लोके सा प्रसिद्धा, न रागशब्देनेति द्योतनार्थः। यथा तव नोद्वेगमात्रं द्वेष इत्याह—यथेति॥ तत इति=संसारादित्यर्थः। यदि पुनरुद्वेगमात्रं द्वेषः स्यात्, ततस्तत्रापि मुक्तिर्न स्यादित्याह—अन्यथेति॥ ततः=दुःखात्, द्वेषः=तन्निबन्धनेत्यर्थः॥

एवं तावत् तत्त्वभूतनित्यनिरतिशयानन्देच्छा न रागो भवतीत्युक्तम्, अधुना भवतु सा रागः, तथापि न सा शान्ततादिश्रुत्या निषिध्यते, किं तु तत्परि-पन्थि-तदल्प-क्षयिविषयसुखेच्छा, यथा प्रमाणान्तरदृष्टे परमे सार्वभौमे राज्याधु-

---

1. स्थानं B.
2. वेमल्यं B.
3. स्य B omit.
4. एतदर्थं B.
बाध B.
5. स्त ए B.
6. निषिद्धप्रवृत्ति- B.
7. न्यायभाष्य B.
8. मोक्षोपदेशः B.

भावशुद्धिः

रागेच्छयोरैक्येऽपि ब्रह्मानन्देतररागस्यैव हेयत्वान्न मुमुक्षानुपपत्तिः

भवतु वेच्छामात्रं रागः; तथापि ब्रह्मानन्दरागात् प्रवृत्तिर्न वन्धाय स्यादित्याह—अपि चेति ॥ दृष्टं परस्मिन् उत्कर्षे रागित्वं येषाम्, तेभ्यो P. 3-21
दृष्टपरोत्कर्षरागिभ्यः। (तादर्थ्ये चतुर्थी)। उत्तरोत्तरशतगुणावस्थितानन्देषूत्तरोत्तरं कामयमानेभ्यः पूर्व-पूर्वरागनिवृत्तिः "श्रोत्रियस्य चाकामहतस्य" इत्युपदिश्यते ॥ एवं च तदितरवैराग्यात्तद्रागाच्च प्रवर्तमानस्तमानन्दमाप्नोति यथेत्यर्थः। संसारसुखवैराग्यसहितमोक्षसुखरागाद् मुमुक्षुप्रवृत्तिर्मोक्षाय स्यादित्याह—तथेति ॥ P. 3-22

"अकामहतस्य" इति सामान्यश्रुत्याऽ[1]न्यत्रापि रागमात्रनिवृत्तिरुच्यते, न प्राक्तनसुखराग[2]निवृत्तिरेवेति चोदयति—कथं चेति ॥ P. 3-22
चोऽत्राप्यर्थो भिन्नसंक्रमः[3]। तत्र दृष्टान्तेऽपि समीहितात् परोत्कर्षादितरेषु प्राक्तनसुखेषु विषयेष्वभिष्वङ्गस्य[4] निषेधः कथं गम्यत इत्यर्थः ॥ परिहरति—सर्वेति ॥ यदिच्छति, तदितररागनिवृत्तिस्तस्य P. 3-23
साधनम्, तत्प्राप्तौ न तद्रागनिवृत्तिरपि; प्रवर्तकाभावेनाप्रवृत्तिप्रसङ्गादित्यर्थः। तद्विवक्षितार्थं दार्ष्टान्तिके योजयति—तथेति ॥ P. 3-24
उत्तमसुखाद् ब्रह्मानन्दादितरस्मादाविरिञ्चिसुखादुपनतात् स्मृत्यारूढात्

---

त्कर्षे ये रागिणः, दृष्टः परम उत्कर्षः=प्रकर्षो रागित्वेन वा येषां रागिणाम्, यद्वा परेभ्य उत्कर्षः, परोत्कर्षः, दृष्टश्चासौ परोत्कर्षश्च, तत्र ये रागिणः; तेषामर्थे काम-लोभादित्यागात्मक इन्द्रियजयस्तत्प्राप्त्युपायत्वेनोपदिश्यते, तथेहापि भविष्यतीत्याह—अपि चेति ॥ सर्वरागादिनिषेधे सार्वभौमराज्यरागस्यापि निषेधात् तत्राप्यप्रवृत्तेरुपदेशवैयर्थ्यं स्यात्, इति दोषाद् यथा तत्र समीहितात् सार्वभौमराज्यादितरस्मिन् तत्परिपन्थिनि विषयेऽभिषङ्गः=आसक्ती रागातिशयो निषिध्यते, तथेहाप्युत्तमब्रह्मानन्दरागादितरस्मादनुत्तमविषयसुखासङ्गादुपनतादुपस्थितादपि शमविधिना मुमुक्षोर्निवृत्तिरुपदिश्यत इत्याह—तथेति ॥

---

1. नत्रा B.
2. गा B.
3. चोऽत्राक्रमः B.
4. ष्वङ्गस्य B.

भावशुद्धिः

प्राप्ताच्च रागनिवृत्तिः । उत्तमसुखरागश्च तत्प्राप्तिसाधनमित्यर्थः । मनुनाप्युक्तमित्याह—तथा चेति ॥ कामात्मता=प्राप्तव्येतरकामपरता, न
P. 3-25 प्रशस्ता=श्लाघ्या । इह=पुरुषे[1], अकामता=प्राप्तव्यगोचररागरहितता नास्त्येव; अप्रवृत्तिप्रसङ्गात् । तद्रागस्तत्प्राप्तिहेतुरित्यर्थः ॥

"काम्यो[2] हि वेदाधिगमः कर्मयोगश्च वैदिकः" इत्युत्तरार्धम् ।

आनन्दस्य मोक्षरूपत्वे तस्य संवेद्यत्वेऽद्वैतविरोधः,
असंवेद्यत्वे पुरुषार्थत्वायोग इति शङ्का

एवं तावदानन्दात्मके ब्रह्मणि न रागनिबन्धनप्रवृत्तेर्बन्धानुबन्ध
P. 3-26 इत्यभ्यधायि, इदानीं स वेद्यो न वेति विकल्प्याऽऽद्येऽवद्यं दर्शयति—स्यादेतदिति ॥ न केवलं कर्तृ-कर्मभेदेन द्वैतम्, तदवि[3]नाभूतक्रिया-करणभेदादपीत्याह—कर्तृ-कर्मेति ॥ वेदनक्रियाश्रयाद् ब्रह्मणो वेद्यस्यानन्द-
P. 3-27 स्यानन्तत्वादानन्दात्मकत्वमित्याह—आनन्दमिति ॥ तद्वत्तया=आनन्दगुणकत्वेन *'विज्ञानमानन्दम्' इति व्यपदेशोपपत्तेरित्यर्थः । कर्तृ-कर्मक्रिया-करणभेदादद्वैतव्याहतिरित्याह—अद्वैतमि[4]ति ॥ द्वितीयमपवदति

---

एतदुक्तं भवति—ब्रह्मानन्दवर्जमितरत्र रागः शमविधिना निषिध्यते ; तेन ब्रह्मानन्दरागादपि मुमुक्षुप्रवृत्तौ न शमविधिविरोध इति । तथा चान्यैरपि सूरिभिरिदमुक्तमित्याह—तथा चोक्तमिति ॥ अत्यन्तकामात्मता न प्रशस्ता । न च मुमुक्षोरप्यत्यन्तमकामिताऽस्ति ; तस्यापि हि मुक्तौ कामोऽस्तीत्यर्थः ॥

एवं शमविधेर्विरोधे परिहृते परः पुनरपि ब्रह्मण्यानन्दमाक्षिपति—स्यादेतदिति ॥ यद्यानन्दः संवेद्यः, ततः=कर्तुः संवेदितुरन्यत् कर्म संवेद्यम्, इति हेतोर्द्वैतप्रसङ्गः ; आत्मनि क्रियाविरोधादिति भावः । इतश्च द्वैतप्रसङ्ग इत्याह—कर्त्रिति ॥ क्रियागर्भत्वात् कर्म-कर्तृसम्बन्धस्य, क्रियायाश्च करणमन्तरेणाभावादिति भावः । कर्तृ-कर्मभावेन चानन्द-ब्रह्मणोर्भेदे घट-पटयोरिव सामानाधिकरण्यमपि न स्यादित्याह—आनन्दमिति ॥ अथ 'शुक्लः पटः'

---

1. षः क. B.
2. काम्यो वेत्क. B.
3. पि
4. अद्वितीयमिति मुद्रितपुस्तके पाठः

भावशुद्धिः

—असंवेदन इति ॥ अज्ञातसत्त्वे मानाभावात्, सत्त्वेऽपि न तेनार्थ-क्रियेत्यर्थः । न हि प्रमेयं प्रयोजनानुबन्धमेवाध्यक्षगोचरम्; तृणादौ व्यभिचारात्, अत्राह—पुरुषेति ॥ मुक्तेः सुखसाक्षात्कारतया पुमर्थ-त्वात् व्यर्था संवेदनयुतिरित्यर्थः । सुखसत्त्वैव पुमर्थः, न तु तत्साक्षात्कारः, अत्राह—संवेद्यश्चेति ॥ स्व-परसुखयोरविशेषपरिहाराय स्वसमवेतसुखस्य साक्षात्कारः पुमर्थ इत्यर्थः ॥ P. 4-2

आत्मवत्, मानफलवच्च सुखस्य स्वप्रकाशत्वाद् न किञ्चिदवद्य-मित्याह—उच्यत इति ॥ आश्रयहीनमुदाहरणमिति, अत्राह—तथा हीते ॥ यदे[1]न्द्रियादि प्रमाणम्, तदाऽर्थसंवेदनं फलम्, यदा त्वर्थ- P. 4-3

---

इतिवदानन्दवद्ब्रह्मानन्दमित्युच्यते, ततो द्वितीयेन तद्वद्भावादद्वितीयं ब्रह्मेति न युज्यते, ततश्चाद्वैतश्रुतिविरोध इत्यभिप्रायेणाह–तद्वत्तयेति ॥ अथाऽऽनन्दोऽ-संवेद्य इत्युच्यते, तत्राह---असंवेदन इति ॥ *"विज्ञानमानन्दम्" इति श्रुतावित्यर्थः । कथं व्यर्थमित्याशङ्क्याह---पुरुषार्थेति ॥

अत्र समाधानमह—उच्यत इति ॥ फलम्=प्रमाणफलमनुभवः, कर्ता च संनिधेस्तस्यैवानुभविता आत्मा, तद्वदित्यर्थः । इममेवार्थं फलसद्भावप्रदर्शन-पुरःसरं प्रपञ्चयति—तथा हीति ॥ परशोश्छिदिवत् प्रमाणादर्थान्तरं वा फलमस्तु—

"यदाभासं प्रमेयं तत् प्रमाणं फलते पुनः ।
ग्राहकाकारसंवित्त्योस्त्रयं नातः पृथक् कृतम् ॥"

इति बौद्धमतेनार्थान्तरं वाऽस्तु, सर्वथा सर्वपरीक्षकैरभ्युपगम्यते, न तु तद्विशेषचिन्तोपयुज्यते; अतो न दृष्टान्तासिद्धिरिति भावः ॥*

अभिप्रायप्रकाशिका

.........[2]वि(चि)द्रूपता च; फलव्यवस्थापनीयत्वादित्याहुः ॥

---

1. यथेक B.

* एतावदेव चित्सुखीयाभिप्रायप्रकाशिका नोपलभ्यते, इतः परं तु सैवम् ।

2. ब्रह्मसिद्धेर्मुद्रितायास्तुरीयपृष्ठे तुरीयपङ्क्तिमारभ्यैव चित्सुखी लभ्यते ।

भावशुद्धिः

संवेदनमेव प्रमाणम्, तदाऽर्थप्राकट्यम्, हानोपादानोपेक्षाबुद्धयो वा फलं प्रमाणादर्थान्तरम्। अनर्थान्तरत्वेऽपि वैभाषिकनये ज्ञानस्य व्यावृत्तिभेदकल्पितभेदस्यानात्मप्रकाशनशक्तिः प्रमाणम्। तत्प्रकाशनं फलम्। सौत्रान्तिकस्य ज्ञानस्यार्थसारूप्यं प्रमाणम्, संविद्रूपता फलम्, विज्ञानवादे ज्ञानस्य स्वार्थाकारयुक्तं रूपं मेयम्, तत्प्रकाशनं फलम्, तत्प्रकाशनशक्तिर्मानमित्यर्थः। अनुभवसिद्धं
P. 4-4 चेत्याह—प्रज्ञायते चेति॥ दृष्टान्तस्य साध्यवैकल्यमुद्धरति—न चेति॥
P. 4-5 कुत इति? अत्राह—तदिति॥ स एव कस्मात्? अत्राह—तत्कृत-

अभिप्रायप्रकाशिका

योगाचारास्तु—विज्ञानमसत्या(था)कारोपेतं प्रमेयम्, प्रकाशनाकारेण प्रमाणफलम्, तस्यैव प्रकाशनशक्तिः प्रमाणमित्याचक्षते। अतः स्वरूपविशेषे विप्रतिपत्तावपि न स्वरूपमात्रे विप्रतिपत्तिरिति भावः। लौकिकानामपि फलं सम्प्रतिपन्नमित्याह—प्रज्ञायते चेति॥

तथापि कथं स्वप्रकाशतेति? तत्राह—न चेति॥ असंवेद्यमिति॥ अप्रकाशमानत्वं नास्तीत्यर्थः। तत्र हेतुः—तदसंवेद्यत्व इति॥ तदेव कुत इति? अत आह—तत्कृतत्वादिति॥ भवतु प्रकाशमानत्वम्, तदेव ज्ञानान्तराधीनं किं न स्यादिति? अत्राह—न च संवेद्यमिति॥ युगपदनुद्भवेऽपि क्षणान्तर-भाविना ज्ञानेन युगपदवस्थानात् प्रकाश्यतामिति, तत्राह—अनवस्थानाच्चेति॥

अयमाशयः—यदि विज्ञानं न प्रकाशेत, तदाऽविषयस्यापि स्वतोऽप्रकाशरूपत्वान्न विज्ञानम्, नापि विषयाः प्रकाशेरन्निति जगदान्ध्यं प्रसज्येत। विज्ञानं नयनादिवद् निलीनमेव विषयान् प्रकाशयतीति न साम्प्रतम्; विज्ञानस्य नयनादिवद् ज्ञानान्तरजननोपयोगे तस्यात्मत्वे नामान्तरेण विज्ञानस्यैवावश्याश्रयणीयत्वात् तत्प्रकाशनज्ञानस्यापि तदैवाभ्युपगमनम्, तज्ज्ञानानुपपत्तौ मूलक्षतिः। विषयधर्मत्वं चातीतानागतयोस्तदधिकरणत्वासम्भवादव्यवहार्यत्वप्रसङ्गाद् न च मन्तव्यम्॥

कथमन्यस्य प्रकाशेऽन्यः प्रकाशत इति व्यवहार इति? अपरोक्षसंवेदनवादिभिस्तदुदयमात्रेण विषये तथाभूतव्यवहारस्य स्वयमभ्युपगमात्, ज्ञानमनु-

भावशुद्धिः

त्वादिति॥ प्रकाशमानमेव ज्ञानमर्थं प्रकाशयेत्; अन्यथा ज्ञातोऽयमर्थ इति विशिष्टानुसन्धानं न स्यात्; विशेषणानवभासादिति भावः॥

आनन्दस्य ब्रह्मवत् फलाव्याप्यत्वेनासंवेद्यत्वम्, स्वप्रकाशत्वेन तु संवेद्यत्वम्, अतो नाद्वैतव्याघातः

संयुक्तसमवायाद् मनसाऽवसेयम्, संयुक्ततादूप्याद्वेति, अत्राह—न चेति॥ कुत इति? अत्राह—फलान्तरेति॥ प्रत्यक्षस्य वर्तमानविषय- P. 4·6
त्वात् फलद्वय*(यौगपद्यमनुपलब्धिविरुद्धं स्यादित्यर्थः। विनश्यद्-विनश्यदवस्थफलयौगपद्योक्तावप्याह—अनवस्थेति॥ न च—फलान्तरावस्थतद्भावानभ्यु)पगमान्नानवस्थेति—वाच्यम्; अनवगतस्य सप्तमरसवदसिद्धेरामूलमसिद्धिप्रसक्तेरित्यर्थः। संवेद्यत्वासंवेद्यत्वप्रतिषेधात् परिशेषसिद्धं निगमयति—तस्मादिति॥ P. 4·8

कर्तृवदिति विवृणोति—यथेति॥ 'आत्मप्रकाशतैव तस्य यथा' इत्युपरिसम्बन्धः। संवेदनेन फलेन समुच्चयार्थश्चकारः। कर्तरीत्यादिना तदुपपादयति। ननु—अज्ञातकारणमपि कार्यं जायमानं दृश्यत इति, अत्राह—न हीति॥ अज्ञातार्थः स्वाश्रयप्रमयाऽवगम्यः स्वयं प्रकाश-

अभिप्रायप्रकाशिका

मेयमिति वदद्भिश्चान्तरेणैव ज्ञाततान्तरमाद्यज्ञातताजननेनैव विषये प्रकाशत इति व्यवहाराङ्गीकारात्। न च—ज्ञानोदय एव तदर्थव्यवहारहेतुरस्तु, किमन्तर्गडुना तत्प्रकाशेनेति—शङ्कनीयम्; सम्प्रतिपन्नज्ञानसामग्रीत एवार्थव्यवहारोऽस्तु, किमजागलस्तनायमानेन ज्ञानेन? इति ज्ञानस्याप्यपलापप्रसङ्गात्। न च स्वसंवेद्यत्वे स्वात्मनि वृत्तिविरोधः; प्रकाशान्तरमन्तरेणैवालोकवत् स्वभावभेदादेव स्वभिन्नापरोक्षव्यवहारहेतुताभ्युपगमेन स्वविषयाया वृत्तेरा(त्माश्रयभावात्), विजातीयालोकप्रकाश्यत्वं तु विज्ञानस्यानाशङ्कनीयमेवेति। संवेदनस्य प्रकाशमानताम्, ज्ञानान्तराविषयतां च क्रमेणोपसंहरति—तस्मादिति॥

कर्तृवच्चेत्युक्तं दृष्टान्तभागं विवृणोति—यथा चेति॥ ननु—अविज्ञातकारणमपि कार्यं जायमानं दृश्यत एवेति, अत आह—न हीति॥

* ( ) अन्तर्गतं B पुस्तके नास्ति

### भावशुद्धिः

मानस्तदर्थं [1]विषय आदित्सा–जिहासाकृतप्रयत्नभेदस्तमाप्नोति, जहाति
P. 4-9 चेत्यर्थः। तदेतदात्मनोऽननुभवे न स्यादित्याह–न ह्यात्मेति ॥ असंवेद्य
इति छेदः। विशेषणस्यात्मनोऽनवगमे तद्विशिष्टानुसन्धानासिद्धि-
रित्यर्थः। यस्तु वैयात्यादनुभवमप्यवजानीते, तं प्रत्याह—
P. 4 10 अननुसन्धाने चेति॥ फल-विषययोरात्मानुसन्धानाभावे स्व-परसंवेद्ययो-
रविशेषादनुकूल-प्रतिकूलयोः प्रवृत्ति-निवृत्ती न स्यातामित्यर्थः ॥

### अभिप्रायप्रकाशिका

विशेषणभूतस्यात्मनः प्रकाशमानताऽभावे तद्विशिष्टविषयसंवेदनयोरनुभवासम्भवादित्यर्थः। तदेव स्पष्टयति—न ह्यात्मेति ॥ अनुसन्धानेऽपि विप्रतिपन्नं प्रत्याह—अननुसन्धाने चेति ॥ स्वात्मनोऽप्रकाशे स्वसम्बन्धितयाऽनुकूल-प्रतिकूलत्वातिशययुक्तार्थयोर्वेदनासम्भवात् प्रवृत्ति-निवृत्तिव्यवस्था न सिध्येदित्यर्थः ॥

तर्ह्यात्मा मानसप्रत्यक्षवेद्य इति, तत्राह—न चेति ॥ एकस्य कर्म-कर्तृभावानुपपत्तेर्ज्ञातुर्ज्ञेयादात्मनो भेदः स्यात्, अत एकस्मिन्नपि देहे नानात्मत्वं भवेदित्यर्थः। न च मन्तव्यम्—एकस्याप्यंशभेदेन ग्राह्य-ग्राहकभावादविरोधः—इति; तत्रापि ग्राहकांशस्याग्राह्यत्वे पुनरंशान्तरकल्पनायामनवस्थानात्, स्वतः प्रकाशमानत्वे च तस्यैवात्मतयेतरांशस्यानात्मत्वाप्रसङ्गादित्याह—अनात्मत्वेति ॥

### आत्मस्वप्रकाशत्वोपपादनं विशदं चित्सुख्याम्

स्यादेतत्–असंवेद्यत्वेऽपि नात्मनः स्वतः सिद्धिः; विषयसंविदधीनसिद्धिकत्वात्। न च घटादिवत् कर्ता(र्म)ऽपि; परसमवेतक्रियाफलशालित्वाभावात्। यथा गन्तृसमवेतया गत्या गन्तृ-गन्तव्याधिकरणेऽप्याधीयमाने प्राप्तिलक्षणे फले न गन्तुः कर्मभावः। न चेदमात्मनो मानसप्रत्यक्षत्वेऽपि समानम्; जानातेः

---

1. येदित्सा वे

भावशुद्धिः

मानसप्रत्यक्षवेद्यत्वेऽप्यात्मनः सकलमेतत्कल्पत इति, अत्राह— न चेति ॥ कुतः? तत्राह—कर्मत्व इति ॥ स्वात्मनि वृत्तिविरोधात् कर्तृ-कर्मणोरैक्यानुपपत्तेर्ज्ञातुर्ज्ञेयादात्मनो व्यतिरेकापत्तेरित्यर्थः । किं चायमात्मा ग्राहकैकरसोऽनुभवसिद्धः; तस्येय(स्यैव) स्वरूपतो ग्राहकैकरसत्वपरिलोपात् प्रच्युतिः स्यादित्याह—अनात्मत्वप्रसङ्गा- P. 4-11
च्चेति ॥ अप्रमेयस्य कुतोऽपरोक्षतेति शङ्कां निराकुर्वन्निगमयति—

अभिप्रायप्रकाशिका

सकर्मकतया कर्मणा व्याप्तस्य तन्निवृत्तौ निवृत्तेः। न हि तस्यात्मा कर्म, नापि विषयः; अहमित्यवगतेरात्मैकविषयत्वाङ्गीकारात् । न चैवमप्यनुमानादिज्ञानस्य विषये पारोक्ष्यम्, ग्राहकात्मनि चापरोक्ष्यमिति विरोधः; यतो वस्तुनः स्वरूपेण प्रतीति(रा)परोक्ष्यम्, उपहितस्य च वस्तुनः प्रतीतिः पारोक्ष्यमनुमानादौ, तथा ह्यनुमानार्थापत्ति-स्मृतिषु व्यापकत्वोपपादकानुभूतत्वोपधानेनार्थाः प्रतिभासन्ते, ततस्तदेवानुमानादिज्ञानं स्वं चात्मानं चापेक्ष्य स्वरूपप्रकाशः, अनुमेयाद्यपेक्षया तूपहितप्रकाश इति न विरोधः । एकस्यापि ज्ञानस्य परोक्षत्वापरोक्षत्वयोः 'पर्वतोऽयमग्निमान्' इति चैकानुमितिगोचरयोरपि पर्वत-पावकयोः परोक्षत्वापरोक्षत्वदर्शनाच्च—इति ॥(क)

तदयुक्तम्; पराधीनप्रकाशतायां नित्यसाक्षात्कारासम्भवादात्मनः स्थाण्वादिवत् कदाचित् संशयविपर्यासगोचरतापत्तेः । न हि कश्चिदप्यात्मन्यहं वा नैवाहमिति वा सन्दिग्धे, विपर्यस्यति वा, किं च, संविदतिरिक्तस्य संविदधीनापरोक्षव्यवहारगोचरत्वं संवित्कर्मत्वव्याप्तम् । तदिहात्मनि व्यावर्तमानं स्वव्याप्तं संविदधीनापरोक्षव्यवहारगोचरत्वमपि व्यावर्तयति ॥

दर्शितश्चात्र प्रयोगो वाचस्पतिमिश्रैः—*"आत्मा, संविदधीनतया (ना)-परोक्षः, संवित्कर्मतामन्तरेणापरोक्षत्वात्, अपरोक्षत्वे सति संशय-विपर्यासागोचरत्वाद्वा; संवेदनवत्" इति । न च दुःखादौ व्यभिचारः; तेषां मध्यस्थतयैव

(क) इदमेव गृहीत्वा शारीरकमीमांसाभाष्यवार्तिकेऽनुमानेनापि प्रत्यक्षं भवितुमर्हति; यथा पर्वतो वह्निमानित्यत्रानुमानैः पर्वतांशे प्रत्यक्षत्वमिति । वेदान्तपरिभाषायामप्ययमंशोऽनूदितः तेन च वृत्तिभेदमात्रमनुमाने, न चैतन्यभेद इति सिद्धान्तः ।

5

भावशुद्धिः

तस्मादिति ॥ आत्मा, स्वप्रकाशः, [1]संवित्कर्मतामन्तरेणापरोक्षत्वात्; संवेदनवदित्येवकारार्थः ॥

P. 4-12 दृष्टान्ते दर्शितार्थं दार्ष्टान्तिके दर्शयति—तथेति ॥ स्वप्रकाशनन् (ना)दात्मत्वं ब्रह्मणो न युक्तम्; तत् "केन कम्" इति दर्शननिषेध-
P. 4-13 विरोधादिति, अत्राह—तत्केनेति ॥ द्वैतदर्शननिषेध इत्यर्थः । "यत्र
P. 4-14 त्वस्य सर्वमात्मैवाभूत्" इत्युपक्रमालोचनयोपपादयति—तथा हीति ॥

भावाभावरूपेण धर्मद्वैविध्यम्, तंत्र भावाद्वैतमेव तत्त्वम्, विज्ञानानन्दयोभयवि-रूपत्वेऽप्यैक्ये, भेदे वा भावधर्मत्वादद्वैतव्याघाताशङ्का च

P. 4-16 भावरूपानन्दरूपत्वं ब्रह्मणो मतान्तरेणाक्षिपति—अन्य इति ॥ द्वैविध्यप्रदर्शनोपयोगमाह—तत्रेति ॥ [2]सदद्वैतस्वीकारादित्यर्थः ।
P. 4-17 एकत्वादेरविघातकत्वे हेतुमाह—न हीति ॥ भेदनिवृत्तिरेकत्वम्; उदयनिवृत्तिरजत्वम्, व्ययनिवृत्तिरमृतत्वम्। तत्रानन्दस्य भावत्वे विज्ञानानन्दयोरेकतरस्य ब्रह्मरूपत्वम्, उभयोर्वा? आद्ये किमानन्दस्य,
P. 4-18 विज्ञानस्य वा? आद्यं प्रत्याह—आनन्दश्चेति ॥ आद्यकल्पं द्वितीयेऽप्याह
P.4-19-20 —अथेति ॥ धर्मः स्यादित्यनुषङ्गः । द्वितीयं दूषयति—न हीति ॥ एकं द्विरूपमिति विप्रतिषेधादित्यर्थः । एकस्य ब्रह्मत्वे, परस्य तद्धर्मत्वे

अभिप्रायप्रकाशिका

संविदात्मनि सिद्धे वस्तुतोऽपरोक्षत्वाभावात् । न च स्वतः सिद्धत्वे सुप्त-जागरादावात्मनो विशेषाभावप्रसक्तिः; अर्थोपधानानुपधानाभ्यां विशेषसिद्धेरिति । दृष्टान्तमुपसंहरति—तस्मादिति ॥

दार्ष्टान्तिकमाह—तथेति ॥ स्वयंप्रकाशतयाऽऽत्मनो ज्ञानस्वभावत्वे कथं ज्ञाननिषेधश्रुतिरिति? अत्राह—तत्केनेति ॥

आनन्दस्य भावरूपत्वे प्रकारान्तरेणाद्वैतविरोधमाशङ्कते—अन्य इति ॥ यथाऽस्थूलादिधर्मसद्भावेऽपि नाद्वैतविरोधः, तथा किं न स्यादिति? अत आह—द्विविधा इति ॥ तदेव स्पष्टयति—न हीति ॥ प्रकृते वैषम्यमाह—आनन्दश्च यदीति ॥ विज्ञानानन्दयोरन्यतरस्यावश्यं ब्रह्मस्वरूपता वक्तव्या;

1. विद्रूप 2. त

भावशुद्धिः

किमनिष्टमिति ? अत्राह—तत्रेति ॥ धर्मः, न धर्मिणो[1] भिद्यते, विपक्षे [2]बाधकवत्त्वात्, ततो नाद्वैतविरोध इत्याह—स्यादिति ॥ P. 4-21

धर्म-धर्मिणोर्भेदशङ्कानिरासपूर्वकमानन्दत्वस्य दुःखाभावरूपत्व-
विज्ञानैक्यायोगशङ्कोपसंहारः

धर्मः, न धर्मिभिन्नः, विपक्षबाधकवत्त्वात्; वस्त्वन्तरवदिति शङ्कते—स्यादेतदिति ॥

प्रकरणसमोऽयं हेतुरिति दूषयति—तदसदिति ॥ भेदे, अभेदे P. 4-22
च धर्म-धर्मित्वानुपपत्तौ कथं तद्व्यवहारनिर्वाहः ? तत्राह—तस्मादिति ॥ P. 4-23
अभेदसहिष्णुर्भेदस्तादात्म्यं धर्म-धर्मिणोः सामानाधिकरण्यसिद्ध-
मित्यर्थः । स्याद् भेदाभेदः, का नः पीडेति ? अत्राह—तथा चेति ॥ P. 4-24
विज्ञानानन्दौ द्वावपि ब्रह्मधर्मावित्यत्रोक्तमत्रातिदिशति—एवमिति ॥ P. 4-25
तस्याप्यद्वैतश्रुतिर्न युज्यत इत्यर्थः । यस्मादानन्दस्य भावत्वेऽद्वैत[3]व्या-
कोपः, अतो ज्ञानं ब्रह्मैव । दुःखाभाव आनन्द इति निगमयति—तस्मा- P. 4-26
दिति ॥ [4]अन्याभावोपाधौ ब्रह्मणि वैदिकप्रयोगान् निदर्शयति—यथेति ॥ P. 5- 1

अभिप्रायप्रकाशिका

स्वरूपान्तरानभिधानात्, एकस्योभयस्वरूपताऽयोगाच्च । तत्रान्यतरस्य धर्मित्वं बलादापततीत्यभिप्रेत्य विकल्प इति द्रष्टव्यम् । फलितमाह—तत्रेति ॥

धर्म-धर्मिणोरभेदावलम्बनेन शङ्कते—स्यादेतदिति ॥ मैवम्; अत्यन्ताभेदासम्भवादिति परिहरति—तदसदिति । भेदेऽप्यनुपपत्तिरुक्तैवेति, तत्राह—तस्मात् कथञ्चिदिति ॥ अनुपपन्नत्वेऽपि प्रतीतिबलादवास्तवोऽपि भेदोऽभ्युपगन्तव्य इत्यर्थः । ततः किं स्यात्? अत आह—तथा चेति ॥ तर्हि मा भूत् परस्परं विज्ञानानन्दयोर्धर्म-धर्मिभावः, सल्लक्षणस्य ब्रह्मण एवोभावपि धर्मौ भवेतामिति, अत्राह—एवमिति । तस्याप्यात्यन्तिकभेदाभावश्रुतिरुपरुध्येतेत्यनुषङ्गः । परिशेषसिद्धमर्थमाह—तस्मादिति ॥

---

1. धर्मिणो न
2. कत्वात्
3. विघात इति मुद्रितपुस्तकपाठः
4. न्य B.

भावशुद्धिः

[1]ज्ञानानन्दाभ्यां (न्दयोः) परस्परं (रा)व्यतिरेकाद् ब्रह्मरूपत्वाच्च
P. 5-2 नाद्वैतविरोध इति, अत्राह—न चेति ॥ ज्ञानानन्दशब्दौ पर्यायौ, अपर्यायौ वा ? आद्यं प्रत्याह—शब्देति ॥ सहप्रयोगाभाव[2] इत्यर्थः। द्वितीयं दूषयति—कथं चेति ॥ ज्ञानानन्दौ नाभिन्नौ, अपर्यायानेकशब्द-वाच्यत्वात्; घट-पटवदित्यर्थः। य(त)स्मादानन्दस्य भावत्वेऽद्वैतविरोध
P. 5-3 इत्युपसंहरति—तस्मादिति ॥

'प्रकृष्टप्रकाशश्चन्द्रः' इत्यादाविव स्वरूपैक्येऽपि विज्ञानानन्दयोर्भावरूपयोरुपपत्त्या
नाद्वैतविघातः, न वा भावाद्वैतेनैवाद्वैतव्यवस्था
विशिष्टरूपेण भेदात्तु पदद्वयसार्थक्यं च

भिन्नो घटः, भेदो भिन्न इत्यत्रोक्तहेतोरै(रनै)कान्त्यं मत्वा
P. 5-5 परिहरति—अत्रेति ॥ शब्दद्वयवैयर्थ्यं परिहरति—विशिष्टस्येति ॥ आह्लादात्मनः प्रकाशस्य=सुखाभिन्नज्ञानस्य विशिष्टस्य कथञ्चित् कल्पितावच्छेदस्य शब्दद्वयेन प्रतिपादनाद् न वैयर्थ्यम्; तदर्थबुद्धे-रेकस्माच्छब्दादनुत्पादनात्, नापि पर्यायता; कथञ्चित् कल्पिताव-च्छेदतया प्रवृ[3]त्तिनिमित्तभेदादित्यर्थः। चान्द्रमसस्येवेत्येतद्विशदयति
P. 5-6 —यथेति ॥

"परीतं तु दिवा प्रोक्तं विपरीतं निशोच्यते।
पौर्णमास्योदितश्चन्द्रः सूर्य इत्यभिधीयते ॥"

अभिप्रायप्रकाशिका

तर्हि सर्वदोषपरिहाराय तयोरभेद एवेति, अत्राह—न चेति। न केवलमेकतानुपपत्तिः, भेदोऽप्यनुमीयत इत्याह—कथं चेति। अपर्याय-योरप्यन्यव्यावृत्तिमुखेनैकार्थपर्यवसायितासम्भवान्न वैयर्थ्यं शब्दद्वयप्रयोगस्येति सदृष्टान्तमाह—अत्रोच्यत इत्यादिना। वैशिष्ट्यमेव दर्शयति—आह्ला-दात्मनः प्रकाशस्येति ॥

अखण्डार्थतायां दृष्टान्तमाह—यथेति। कः सवितेति पृष्टे सवितृप्राति-पदिकार्थमात्रस्यैव पृष्टतया तावन्मात्रस्यैव प्रतिपाद्यत्वात्, तस्य प्रकर्षशब्द-

1. नन्दा A. 2. योग B. 3. वृत्ति A.

भावशुद्धिः

इत्युक्तत्वादस्मिञ्ज्योतिर्मण्डले कतमश्चन्द्र (सविता) इति पृष्टः प्राह—प्रकृष्ट इत्यादि ॥ ऐकार्थ्ये शब्दद्वयवै[1]यर्थ्यं तत्रापीति, अत्राह—न चेति ॥ प्रकर्ष(त्व ?)प्रकाशत्वरूपप्रवृत्तिनि[2]मित्तभेदादित्यर्थः ॥ P. 5-7

तर्हि संसृष्टपदार्थ एव वाक्यार्थ इति, अत्राह—अथेति ॥ तमेवाह—प्राकशविशेष इति ॥ अप्रकृष्टादप्रकाशाच्च व्यावृत्त इत्यर्थः । प्रकृष्टं तमः, खद्योतः प्रकाश इतिवदिहापि प्रकर्ष-प्रकाशयोर्भेद इति, अत्राह—न हीति ॥ चन्द्रमः(सवितृ)प्रातिपदिकार्थप्रश्नोत्तरत्वादित्यर्थः । P. 5-8
न च शब्दद्वयवैयर्थ्यम्; एकस्मात्ताद्दगप्रतिपत्तेरिति, अत्राह–अपि त्विति॥ P. 5-9
"विज्ञानमानन्दम्" इत्यादिवाक्यम्, अखण्डार्थम्, लक्षणवाक्यत्वात्, प्रकृष्टादिवाक्यवदित्याह — तथेति ॥ विज्ञानभेदो जडताव्यावृत्तिः, P. 5-10
आनन्दभेदो दुःखताव्यावृत्तः ॥

"एषोऽस्य परम आनन्दः" इति श्रूयमाणं पारम्यं दुःखाभावस्यानन्दत्वेऽनुपपन्नम्

"एषोऽस्य परम आनन्दः" इति श्रुतं परमत्वं दुःखाभावसुखवादिनः कथं प्रतिपादयन्ति ? अत्राह—परमतामिति ॥ लौकिकसुखस्यैव P. 5-11

अभिप्रायप्रकाशिका

मात्रात् प्रकाशमात्राच्चासिद्धेः शब्दद्वयेन बुभुत्सितसवितृप्रातिपादिकार्थ एव गुणसामान्याभिधायिनाऽन्यव्यावृत्तिद्वारेण लक्षणया प्रतिपाद्यत इत्यर्थः । एकस्य प्रतिपाद्यत्वे पर्यायता प्रसक्तेति, अत्राह–न चेति ॥ प्रवृत्तिनिमित्तभेदान्न पर्यायतेत्यर्थः । तर्हि भेदः स्यादिति, अत्राह—अथ चेति । प्रकर्ष-प्रकाश-धर्मयोर्विलक्षणत्वात् कथमनयोरेकार्थत्वमिति ? तत्राह—न हीति ॥

न वयमनयोर्वैलक्षण्यं वारयामः, किं तु, सवितृस्वलक्षणे बुबोधयिषिते तयोस्तात्पर्यवृत्त्या तावन्मात्रपर्यवसायितां ब्रूम इति भावः ॥ ब्रह्मणो [3]रूपमिति ॥ रूपशब्देन धर्म-धर्मिभावाशङ्काम्, एकस्य द्विरूपतां च व्यावर्तयति ॥

'एषोऽस्य परम आनन्दः' इति श्रूयमाणं परमत्वमानन्दस्य दुःखाभावपक्षे न घटत इति वक्तुं पराभिमतपरमतां तावद् दर्शयति—परमतामिति ॥

---

1. नै B. 2. वृत्ति A. 3. ब्रह्मरूपमिति मुद्रितपाठः ।

भावशुद्धिः

साधनपरतन्त्रतादिराहित्यं तदित्यर्थः। भावरूप एव परमत्वस्वीकारात्,
P. 5-12 अन्यथोपचारप्रसक्तेरिति दूषयति—तदपीति। उपचारे को दोषः?
P. 5-13 अत्राह—न हीति॥ मुख्ये बाधकं विनोपचारेऽतिप्रसक्तिरित्यर्थः।
P. 5-14 अखण्डपदार्थं निगमयति—तस्मादिति॥

लौकिकानन्दस्य ब्रह्मानन्दांशत्वानुप-
पत्त्याऽप्यानन्दस्य न दुःखाभावरूपत्वम्

P. 5-15 निरतिशयप्रकाशानन्दरूपत्वे लिङ्गमाह—एवं चेति॥ "एतस्यै-
वानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति" इति श्रूयते। भावस्योपाधि-
परिच्छिन्नस्य मात्रोपपत्तेरभावस्य तुच्छस्य तदनुपपत्तेरित्यर्थः। आत्मा,
आनन्दस्वभावः, निरुपाधिप्रेमगोचरत्वात्; यो नोक्तसाध्यः, नासा-
P. 5-16 वुक्तसाधनः, यथा संमतमित्याह—इतश्चेति॥ आत्मनि प्रेम्णः परमत्वं
P. 5-17 कुतोऽवगतम्? अत्राह—श्रूयते हीति॥ तदेतत्=आत्मतत्त्वमित्यर्थः॥

"सुखमहमस्वाप्सम्" इति परामर्शानुपपत्तिरपि
दुःखाभावस्यानन्दत्वं बाधते

P. 5-18 प्रसिद्धं तदित्याह—प्रतीयते चेति॥ प्रसि[1]द्धिमेवाह—तथा हीति॥

अभिप्रायप्रकाशिका

लौकिकानन्दस्यैवोत्कटदुःखतारूपनिकर्षाभावात् परमत्वमित्यर्थः। दूषयति—तदपीति। इदमपि यथाशब्दमित्याशङ्क्य मैवम्; औपचारिकत्वादित्याह—न हीति॥

"एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति" इति लौकिकानन्दस्यापि ब्रह्मानन्दांशत्वावगमाच्च भावरूपत्वम्, अभावरूपस्य भावांशत्वायोगादित्याह—एवं चेति। ब्रह्मानन्दस्य निरंशत्वात् कथं तदंशत्वमिति? घटाकाशवत् तदुपाध्यवच्छेदादित्याह—अवच्छेदादिति॥ इदानीं युक्तितोऽप्यानन्दरूपतामात्मनः साधयति—इतश्चेति॥ आत्मव्यतिरिक्ताशेषत्वे सति प्रियत्वात्, सुखवदित्यर्थः। हेतोरसिद्धिमागमतः परिहरति—श्रूयते हीति॥ अनुभवेनापि हेतुं साधयति—प्रतीयते चेति॥ तामेव दर्शयति—तथा हीति॥

1. ह A.

भावशुद्धिः

प्रसिद्ध्या वा कथमात्मनः प्रेमगोचरत्वम्? अत्राह—सा चेति ॥ P. 5-19
आशीश्चेत्यर्थः। उक्तहेतुरसाधारणानैकान्त इत्याशङ्क्य, न, विपक्षे बाधकवत्त्वादित्याह—प्रेमा चेति ॥ अवकल्पत इत्यनुषङ्गः। तदुपपादयति—नेत्यादिना॥ उभयरहिते=सुख-दुःखहीने, तृणादौ। क्रमेण हेतुद्वेषादित्यादि। दुःखाभाव-सुखसाधनयोः सुखार्थत्वेन प्रियत्वाद् न निरुपाधिप्रेमगोचरत्वमित्यर्थः ॥

सौषुप्तानुभवस्य दुःखोपरमविषयत्वे मुख्यार्थत्यागापत्तिः, "आनन्दमेकम्" इति कारिकागतानन्दपदविवरणोपसंहारश्च

आचार्यदेशीयानां मतमुपन्यस्यति—अन्ये त्विति ॥ सुखानुभवं P. 5-20
विनाऽयं परामर्श इति, अत्राह—न हीति ॥ सुषुप्तस्थानस्यैवाभावात् P. 5-21
सुखमिति [1](कथं तत्कालपरामर्शः? अत्राह—सुषुप्तेति ॥ सुषुप्तस्थानं सर्वैरुपेतमित्यर्थः। दुःखाभावानुभवात् सुखमिति परामर्शः, अत्राह—)

अभिप्रायप्रकाशिका

शरीरोपघातदुःखभयादपीयमाशीः स्यादिति, अत आह—सा[2]पीति। आत्मनः प्रेमास्पदतामन्तरेण तदेव भयं नोपपद्यते, परदुःखभयादर्शनादिति भावः। भवतु प्रेमास्पदत्वम्, तथापि कथमानन्दरूपतेति? तत्राह—प्रेमा चेति। न चात्मनः स्वतःप्रकाशमानपरमानन्दरूपतायां संसार-मोक्षयोरविशेषापत्तिः; संसारदशायां सविलासाज्ञानतिरोहितस्य विशेषतोऽनवभासमानानन्दस्य विद्यापनोदिताविद्याकलुषस्य व्यक्तं मुक्तावभिव्यक्तेः ॥

अन्ये पुनरर्थापत्त्या भावरूपं कल्पयन्ति, तत्पक्षं दर्शयति—अन्ये त्विति। कयाऽनुपपत्त्येति? तत्राह—न हीति। सुषुप्ते सुखमनुभूयत इति चेत्, तदा किमिति व्यक्तं नावभासते? ततोऽप्रतीयमानस्य कथं परामर्शात् सत्त्वमिति चेत्, मैवम्; तदानीमस्फुटमनुभूयमानायाः सुषुप्तेरिव परामर्शात् सत्त्वोपपत्तेरित्याह—सुषुप्तेति। अथवा सुषुप्तौ तत्परामर्शे वा विप्रतिपन्नं प्रत्याह—सुषुप्तेति। दुःखाभावविषयोऽयं परामर्शोऽस्त्विति, अत्राह—न चेति।

1. ( ) अन्तर्गतं A पुस्तके नास्ति। 2. सा च मुद्रितपाठः।

भावशुद्धिः

P. 6-1 (न चेति ॥ [1]स्वरूपसुखादन्यत् सुखं तत्रानुभूतमिति, अत्राह—न च तत्रेति ॥) सुषुप्तिविरोधादित्यर्थः । "तद्यथा हिरण्यनिधिं निहितमक्षेत्रज्ञा उपर्युपरि सञ्चरन्तो न विन्देयुरेवमेवेमाः सर्वाः प्रजा अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्ति" इति सुषुप्तिकाले ब्रह्मप्राप्तिश्रवणाच्च ब्रह्मसुखानु-
P. 6-2 भवादेव तत्परामर्श इत्याह—तथा चेति ॥

न्यायवादिनां मतमाह—तत्रेति ॥ पुनरप्याचार्यदेशीयं मत-
P. 6-3 माह—तान् प्रतीति ॥ सुषुप्तौ सुखानुभवग्राहकमानसानुभवविरोधात् सुखशब्दो दुःखाभावोपचरितः स्यादित्यर्थः । बाधकाभावे सुखशब्दो
P. 6-4 लोकावगतशक्त्यनुसारेण भावसुखमेव ब्रूयादित्याह—अन्यथेति ॥

P. 6-5 पुनर्न्यायवादिमतमाह—तत्रेति ॥ दुःखाभावपरतया भावसुखपरतया च लोके व्यपदेशदृष्टेः, इह च दुःखाभवानुभवादपि तत्परामर्शो-
P. 6-6 पपत्तेरित्यर्थः । पुनरप्याचार्यमतेन न्यायमतं दूषयति—अलमिति ॥ प्रतियोग्यस्मरणाद् दुःखाभावानुभवासम्भवाद् न तन्निमित्तः परामर्शः । न च—'दुःखमस्वाप्सम्' इति परामर्शाद् दुःखात्मत्वमिति—वाच्यम् ; "न लिप्यते लोकदुःखेन बाह्यः" इत्याद्यागमेन, परमप्रेमास्पदत्वलिङ्गानु-

अभिप्रायप्रकाशिका

अस्तु तर्हि तद्वैषयिकमेव सुखमिति, अत आह—न च तत्रेति ॥ सुषुप्ते सुखस्वभावब्रह्मप्राप्तिश्रुतेरपि भावस्वरूपानन्दानुभवः सम्भवतीत्याह—तथा चेति । "अहरहः ब्रह्मलोकं गच्छन्त्य एतं लोकं न विन्दन्ति" इति सुखस्वभावब्रह्मभावावाप्तिः श्रूयत इत्यर्थः । तद् दूषयति—तत्रान्य इति । पुनरर्थापत्तिवादिमतमुत्थापयति—तानिति । प्रमाणतः सुषुप्तौ सु(दुः)खाभावो निश्चितश्चेत् तच्छब्द-प्रत्यययोरुपचरितार्थत्वं युक्तम्, न त्वन्यत्रेत्यर्थः ॥

तदपि दूषयति—तत्राहुरिति ॥ व्यपदेशस्य सम्भवति मुख्येऽर्थे गौणार्थता न युक्तेति मन्वानं प्रत्याह—उपपत्तेश्चेति ॥ सुषुप्तोत्थितस्य पित्ताद्यतिशयवतः कदाचित् 'दुःखमहमस्वाप्सम्' इत्यपि परामर्शदर्शनान्न तन्मात्रादर्थसिद्धिः, मानान्तरान्वेषणे तु तदेवार्थसाधकमिति व्यर्थैवार्थापत्तिरित्यर्थः ॥

---

1. ( ) अन्तर्गतं B पुस्तके नास्ति ।

भावशुद्धिः

मानेन च विरोधात्, स्वप्नान्तानुभूतदुःखस्याविवेकात् सुपुप्तिकालीनत्वेन परामर्शादित्यर्थः ॥

"आनन्दमेकम्" इत्यत्रैकत्वं जाति-देश-
कालाविभागमात्रेणोपचारमात्रेण,
नैकात्म्याभिप्रायेणेति शङ्का

एकपदं व्याख्यातुं तन्निरस्यशङ्कामाह—अत्रेति ॥ [1]अनेकविध- P. 6.7
सुख-दुःखानुभवयोरुपभोगव्यवस्थाभाजः प्राणभृद्भेदा भासन्ते, तदैकात्म्ये न कल्पते। मुक्त-संसारिविभागोपपत्तेश्चात्मनानात्वम्। ऐकात्म्ये हि मुक्त एकस्मिन् मुक्ताः सर्व एव, इति सहसैव संसार उच्छिद्येत, न चोच्छिद्यत इत्यर्थः ॥

[2]आत्मनानात्वमुक्त्वाऽनात्मनोऽपि तस्माद्भेदमाह—दृगिति ॥ आत्मा=दृक्छक्तिः, श(तच्छ)क्यं दृश्यं विनाऽनर्थिका स्यात्। अस्तु तर्हि स्वात्मैवास्या दृश्यम्, अत्राह—स्वात्मनीति ॥ शक्तेः कार्यगम्यत्वा- P. 6-8
त्कार्यदर्शनं वाच्यम्। न च तदात्मैव; तस्य नित्यत्वात्। तथा च वृत्तिविरोधः। [3]प्राणादिः, परार्थः, संहतत्वात्; संमतवत्, स च स्वव्यतिरिक्तदृश्यः, दृश्यत्वात्, घटवत्, इति दृश्यत्वस्यात्मलिङ्ग(त्वा)च्च तत्त्वं स्वीकार्यमित्यर्थः[4] ॥

अभिप्रायप्रकाशिका

इदानीमेकपदव्यावृत्त्या (वर्त्या)शङ्कामाह—अत्र केचिदिति ॥ प्रथमं तावद्विरुद्धधर्मसंसर्गादात्मनां भेदमाह—भोगेति।

आत्मभेदं प्रसाध्यानात्मनामप्यात्मभ्यो भेदं साधयति—दृक्छक्तेरिति। शक्तेः कार्यैकगम्यत्वाद् दर्शनस्यैव चास्याः कार्यत्वात्, तस्य च व्यतिरिक्तविषयत्वे दृश्यसिद्धिः, स्वविषयत्वं पुनरनुपपन्नमित्याह—स्वात्मनीति। दृश्यानां पारार्थ्य-भोग्यतादिलिङ्गेन भोक्तुरात्मनोऽनुमानादपि व्यतिरिक्तं दृश्यं सिध्येदित्याह—दृश्येन चेति ॥

---

1. जीवपरस्परभेदः
2. जीव-जडभेदः
3. प्रापणादि B.
4. जडपरस्परभेदः

भावशुद्धिः

न केवलं द्रष्टुरेव दृश्यस्य भेदः, परस्परमपीत्याह—दृश्यस्येति ॥ सर्व एव हि शब्दादयोऽन्योन्यव्यावृत्तसुख-दुःख-मोहभेदवन्तोऽनुभूयन्ते। तद्यथा—मैत्रस्य दारेषु देवयान्यां मैत्रस्य सुखम्, तत्सपत्नीनां तु दुःखम्, चैत्रस्य तामविन्दतो मोहः, एवं प्रतिविषयमवगन्तव्यम्। सेयमेवंविधस्य दृश्यस्य विभागोपलब्धिस्तस्या इत्यर्थः। कथं तर्ह्यद्वैत-
P. 6-9 श्रुतिः ? अत्राह—एकत्वेति ॥

एकमपि तत्त्वमभिन्नदेश-कालम्, आत्मानोऽपि नित्यविभुतयाऽभिन्नदेश-काला इत्युपचारनिमित्तमित्यर्थः। सर्वेषां तर्हि भावानामनित्यासर्वगतानामात्मसमानदेश-कालत्वायोगादैक्योपचारनिमित्ता-
P. 6-10 भावात् "आत्मैवेदं सर्वम्" इति श्रुतिविरोधः, अत्राह—आत्मैवेति ॥ 'पटं करोति' 'घटं कुरु' इति पटार्थास्तन्तवः, एतद्व्यपदेशभाजः, पटस्योत्पत्स्यमानस्य कर्मकारकत्वायोगात्, एवं पुरुषार्थं विश्वम्, इति तेन व्यपदिश्यते ॥

विगीतो भेदः, मिथ्या, भेदत्वात्[1], चन्द्रभेदवत्। विपक्षे
P. 6-11 तन्मिथ्यात्वावगमबाध इत्याह—इन्द्र इति ॥ मायाभिः=मायाकार्यमिथ्याज्ञानैः ॥

अभिप्रायप्रकाशिका

न केवलं द्रष्टुरेव दृश्यं भिन्नम्, किं त्वन्योन्यमपीत्याह—दृश्यस्य चेति। शब्दादय एव विभज्यन्त इति विभागाः, तत एव च सुख-दुःख-मोहवन्तः; तथा भावेन दृश्यस्योपलब्धेरिति योजना। कथं तर्ह्यद्वैतश्रुतय इति ? तत्राह—एकत्वेति ॥ एकमपि हि तत्त्वं अभिन्नदेश-कालम्, (भिन्नमिव) आत्मानोऽपि तु नित्य-विभुतयाऽभिन्नदेश-कालाः, इत्युपचारनिमित्तभावादौपचारिकीत्यर्थः। तर्ह्यसर्वगतानित्यानात्मनाम्—"आत्मैवेदं सर्वम्" इति कथमुपचारादेकत्वश्रुतिरिति ? अत्राह—आत्मैवेति ॥ मन्यन्त इत्यन्वयः। ममाऽऽत्मा भद्रसेन इत्यादिवत्तादर्थ्यादुपचार इत्यर्थः ॥

---

1. भेदमिथ्यात्वम्

भावशुद्धिः

ब्रह्मैक्यमैकात्म्याभिप्रायेण मुख्यमेव, न तु गौणम्

विभेदभ्रमाधिष्ठानस्वरूपाभेदस्य भाविकत्वान्नोपचार इत्याह —तत्रेति। विगीतः, मिथ्या, प्रतिपन्नोपाधौ निषिद्धत्वात्; रज्जु-सर्पवदि- P. 6-12
त्याह—तथेति ॥ विपक्षे भेदनिषेधपरत्वान्निन्दाश्रुतिविरोध इत्याह— P. 6-13
नानात्वेति॥ ऐक्यस्योपचारे भेदाभावस्य श्रुत्योक्तौ शून्यताप्रसङ्गाच्च
नोपचार इत्याह—भेददर्शनस्येति॥ 'नानेव' इतीवशब्देन दर्शितो भेदज्ञान- P. 6-14
स्याभाव ऐक्यस्योपचारे[1]न स्यादित्यर्थः। 'अन्नं ब्रह्म' इतिवदेकत्वमुपास-
नार्थमुपचर्यत इति शङ्कामङ्गीकरोति—काममिति॥[1] कुत्र तर्हि विवादः? P. 6-15
अत्राह—न त्विति॥ नानात्वनिवृत्तिप्रतिपादनेनाद्वैतं प्रतिपिपादयि- P. 6-16
षितम्, तद् भेदस्य वस्तुत्वे न स्यादित्यर्थः। अध्यक्षादिविरोधात् मुख्यासम्भवे नानात्वनिवृत्तिरप्युपचर्यत इत्याह—सापीति॥ अपौरु-

अभिप्रायप्रकाशिका

भेददर्शनस्य प्रामाण्यमवष्टभ्यैकत्वश्रुतीनामुपचरितार्थत्वं मन्यसे, तदेवा-सिद्धम्; भेददर्शनस्य मायामयत्वावगमादित्याह—इन्द्र इति॥

भेदनिषेधादपि तद्दर्शनस्याप्रामाण्यं सिध्यतीत्याह—तथेति॥ "मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति" इति निन्द्यमानत्वादपि भेददर्शनस्य भेदविरुद्धेऽभेद एव श्रुतेस्तात्पर्यमित्याह—नानात्वेति॥ "नानेव पश्यति" इतीवशब्देन भेददर्शनस्याभावः प्रकाशितो नोपचरित एकत्वेऽवकल्पते; भेददर्शननिषेधे तद्विरुद्धाभेदस्यैव प्रसक्तेरित्याह—भेद-दर्शनस्येति। तदर्थमिवशब्दार्थमाह—भेददृष्टिरिव भ्रमादिति॥ यदि तात्त्विकं भेददर्शनम्, तदा 'नाना पश्यति' इत्येवोच्येत, न तु "नानेव पश्यति" इति। तेन भ्रमादिव दृष्टिरिति दृष्टिरिवेत्युक्तमिवशब्देनाऽऽभा-सत्ववाचिनेत्यर्थः। एकत्वस्यौपचारिकत्वमङ्गीकृत्यापि दूषयति—काममिति[2]॥ निवृत्तिरुपचारादित्यनुषङ्गः॥

---

1. चारेण B.
2. काममुपचारादिति मुद्रितपाठः, एतद्व्याख्यादृतः पाठस्तु कामम्, अस्त्वेकत्वमिति।

भावशुद्धिः

षेयस्यापि वेदस्याध्ययनविधिनोपपादितफलवत्त्वं न सिध्येदिति
P. 6-18 दूषयति—नेति ॥

मा भूत् प्रयोजनम्, अत्राह—सतीति ॥ 'अग्निर्माणवकः' इत्युपचारनिमित्तं पैङ्गल्यादिगुणयोगः, प्रयोजनं त्वग्निवदेवात्मपवमानोऽयम्, तस्मादस्मै यत्किञ्चिद् देयमस्तीत्यर्थः। निमित्त-प्रयोजन-
P. 6-18 योरभावान्नात्रोपचार इत्याह—न चेति ॥

ऐक्यस्य नौपचारिकत्वम्; प्रयोजना-
भावात्, तद्विरोधित्वाच्च

P. 6-19 असत्त्वाच्च प्रयोजनस्य नोपचार इत्याह—विपर्ययाच्चेति ॥
अभ्युदयाय, निःश्रेयसाय वा तन्निवृत्तिरुपचर्यत इति प्रयोजनाभाव-
P. 6-20 मुपपादयितुं विकल्पयति—अभ्युदयायेति ॥ आद्यं दूषयति—सा
हीति ॥ साध्य-साधनेतिकर्तव्यता-साधयितृविभागान् निवर्तयन्ती साधनानुष्ठानविरोधितयाऽभ्युदयाय परिपन्थिनी स्यात्। न द्वितीय इत्याह—सर्वत्रेति ॥ शब्दादावात्माभिमानमाविर्भावयन्ती निःश्रेयसविरोधिनी
P. 6-21 स्यादित्यर्थः। कस्मात् पुनर्निःश्रेयसविरोधिनीति ? अत्राह—तथा हीति ॥

अभिप्रायप्रकाशिका

नानात्वनिषेधश्रुतिरपि प्रत्यक्षादिविरोधादौपचरिकीति शङ्कते—साऽपीति ॥ परिहरति—न प्रयोजनेति । "आदित्यो यूपः" "सिंहो माणवकः" इत्यादौ निमित्त-प्रयोजनयोः सतोरेवोपचारदर्शनादित्यर्थः। न केवलं प्रयोजनाभावः, तद्विरुद्धता च स्यादित्याह—विपर्ययाच्चेति । तं प्रपञ्चयति—अभ्युदयायेति । अभ्युदयविरोधितामाह—सा हीति । निःश्रेयसविरोधितामाह—सर्वत्रेति ॥

साध्य-साधनेतिकर्तव्यता-साधयितृविभागान् निवर्तयन्ती स्यादभ्युदयपरिपन्थिनी; तद्विभागज्ञानाभावादनुष्ठानाभावेऽभ्युदयानुदयात्, निःश्रेयसविरोधिता तु कथम्' इति, अत आह—तथा हीति । शरीरेन्द्रियाद्यात्माभिमान-

भावशुद्धिः

सर्वतः=शब्दादेर्विषयान्निवृत्तस्य निःश्रेयसमित्यत्र द्वैतिनामप्यविवाद इत्यर्थः ॥

ऐक्यस्याभ्यस्यमानस्यौपचारिकत्वायोगः

एवं द्वैतनिषेधादद्वैतं भाविकमित्युक्त्वा, विधिमुखेनाप्यद्वैतं पारमार्थिकं गम्यत इत्याह—तथेति ॥ निरङ्कुशैकशब्दावगतस्य सजा- P. 6-22
तीय-विजातीय-स्वगतभेदाभावस्याद्वितीयैकशब्दाभ्यामभ्यासादित्यर्थः।
अभ्यासेऽप्युपचार आदरार्थः किं न स्यात्? अत्राह—अभ्यासे हीति ॥ P. 6-24
शब्दशक्त्या प्रतीयमानादधिकरूपमभ्यस्यमाने प्रतीयत इत्यर्थः । निदर्शयति —यथेति ॥

भोगव्यवस्थायाः शरीरोपाधिभेदप्रयुक्तभेदेन कल्पितेनाप्युपपत्त्या नात्मनानात्वम्, सम्मतं चैतच्छरीरपरिमाणात्म- नानात्ववादिनामपि, अन्यथा 'पादे मे वेदना' इत्याद्यनुभवविरोधः

एवं स्वमतमुपपाद्य परोक्तहेतुमाभासयितुमनुभाषते—यत्त्विति ॥ P. 7- 1
भेदमात्रापादनस्येष्टत्वात् भाविकतदापादनासिद्धिः; अन्यथाप्युपपत्ते-
रित्याह—[1]अत्रोच्यत इति ॥ सोदाहरणमन्यथोपपत्तिमाह—तथा हीति ॥ P. 7- 2
आत्मनानात्ववादिनामप्येकस्मिन् देह एक एव भोक्ता, तस्य कल्पित-

अभिप्रायप्रकाशिका

मात्रस्यापि निःश्रेयसविरोधिता यत्र, तत्र किमु वक्तव्यम्? सर्वत्रात्माभिमानस्य तद्विरोधित्वमिति भावः ॥

अभ्यासलिङ्गेन श्रुतेरेकत्वे तात्पर्यावगमाच्च नोपचरितमेकत्वमित्याह—तथैकत्वमिति । एकस्यैवार्थस्य पुनः पुनरभिधाने कोऽतिशय इति? अत्राह—अभ्यासे हीति ॥

एवं श्रुतिबलेन स्वमतमुपपाद्य, परोक्तान् हेतून् दूषयितुमुपक्रमते—यत्त्विति । कल्पितभेदाद् भोगव्यवस्था वादिनामपि ना (सा)प्रसिद्धेत्याह—

---

1. तत्रोच्यत इति मुद्रितपाठः

भावशुद्धिः

भेदाद्भोगव्यवस्था दृश्यते, यथा पादादेरेव वेदना, न तदवच्छिन्नात्म-
P. 7- 4 प्रदेशस्येति, अत्राह—न हीति ॥ जडत्वादित्यर्थः ॥

शरीरपरिमाणस्यात्मनः शरीरवद्भागसम्भव इत्यात्मभागा अक-
P. 7- 5 ल्पिता एव वेदनाभाजो भविष्यन्तीति, अत्राह—शरीरेति ॥ वेदना= ताप: । कुत इति ? अत्राह—आत्मन इति ॥ एकस्येति शेषः । चेतनस्य वेदनाभिसन्धानात् तेषां चेतनत्वे सत्येकस्मिन् देहे चेतनावाननेक इति नैकविधम्, विरुद्धदिक्क्रियं वा शरीरं स्यादित्यचेतनावयवस्यात्मनश्चै-तन्यमास्थेयम्, तत्रैव वेदना, इति नात्मभागास्तया युक्ता इत्यर्थः ॥

ऐकात्म्येऽपि न देहान्तरभोगानुसन्धानम्,
चक्षुषा दृष्टस्य स्पर्शनेनानुभवोऽपि न प्रदेशभेदेन;
उपाधिभेदनिबन्धनस्यौपाधिकभेदस्याविशेषात्

यथा चक्षुषा दृष्टं स्पर्शनेनोपलभ्य यमद्राक्षम्, तमेवैतर्हि स्पृशामीति ज्ञातारं ज्ञेयं चैकमनेकज्ञानसम्बन्धिनं प्रतिसन्धत्ते, तथा
P. 7- 6 देहान्तरेऽपि प्रतिसन्दधीतेति चोदयति—स्यादेतदिति ॥ तदप्यर्थान्तर-
P. 7- 7 निग्रहोपन्यासेन दूषयति—अन्यदिति ॥ प्रकृतभेदसाधनोपयोगि-

अभिप्रायप्रकाशिका

तथा हीति । अवयवानामेव वेदानासम्बन्धः, नात्मन इति मन्वानं प्रत्याह—न हीति ॥

आर्हतमते सावयवत्वादेकात्मनि भोगव्यवस्था तदवयवेषु सम्भवेदिति, अत्राह—शरीरेति । किमवयवानां चैतन्यम्, उतावयविनः ? आद्ये कदाचिद्विरुद्धाशयानेकचेतनाधिष्ठितं शरीरं विरुद्धादिक्क्रियं सदुन्मथ्येत, अक्रियं वा स्यात् । द्वितीये तु सिद्धा काल्पनिकी व्यवस्था । अवयविन एकत्वेन पादादौ वेदनाव्यवस्थावभासस्य काल्पनिकत्वादित्यर्थः ॥

शङ्कते— स्यादेतदिति । एकस्मिन् देहे यथा चक्षुषा दृष्टमर्थं स्पर्शनेनोपलभ्यानुसन्धत्ते, यमहमद्राक्षम्, तमेतर्हि स्पृशामीति, तथा स्याद्देहा-न्तरेऽपीत्यर्थः । वैधर्म्यमात्रमेतदित्याशयेन परिहरति—अन्यदिदानीमिति । अस्तु नाम व्यवस्था, तथाप्यनुसन्धानप्रसङ्गस्य कः परिहार इति ? अत आह

भावशुद्धिः

त्वान्नार्थान्तरत्वमिति, अत्राह—अपि चेति ॥ स्वरूपमात्रस्यानुसन्धानमुच्यते, तत्तदन्तःकरणादिविशिष्टस्य वा? आद्येऽभ्युपगतिरेव, न द्वितीयः; एकस्मिन्नपि देहे पादावच्छिन्नप्रदेशस्य शिरोऽवच्छिन्नात्मप्रदेशसमवेतवेदनानुसन्धानं नास्ति, यस्मादित्यर्थः ॥ उक्तमर्थं विशदयति— P. 7-8-9
तथा इहेति ॥ व्यवस्थायामेव निदर्शनमाह—[1]यथा मणीति ॥ वर्णः=श्यामतादिः । संस्थानम्=दीर्घ-वर्तुलत्वादिः ॥

ऐकात्म्येऽपि मुक्त-संसारिभेदोपपत्तिरुच्यत एव

मुक्त-संसारिविभागव्यवस्थापि शुद्धाशुद्धोपाधिसम्बन्धादुपपन्ना नात्मभेदं साधयतीत्याह—एवं चेति । एतदेव स्फोरयति—तथा हीति ॥ P. 7-10-11
प्रदेशैः=रागादिमदन्तःकरणैः, इतरत्र—यम-नियम-शम-दमादिश्रवण-मनन-ध्यानाभ्याससंस्कृतान्तःकरणैरित्यर्थः । औपाधिकव्यवस्थायां निदर्शनमाह—यथेति ॥ [P. 7-12

कल्पितभेदाद्भोगादिव्यवस्थेत्ययुक्तम्, मिथ्याभेदस्याभिन्नं वस्तु

अभिप्रायप्रकाशिका

—अपि चेति । किमेकदेहविशिष्टस्य देहान्तरेऽनुसन्धानमापाद्यते, किं वाऽखिलदेहानुगतस्य परमात्मनः? नाद्यः; निदर्शनेऽप्यदर्शनात् । स हि न (तर)-प्रदेशावच्छिन्नं स्पर्शमनुसन्धत्ते, स्पर्शावच्छिन्नो वा रूपम् । यदि द्वितीयः, तदिष्टमेव; परमात्मनः सर्वज्ञस्य सर्वानुसन्धातृत्वात् । न चैवमपि चरणतललग्नकण्टकोद्धरणाय पाणितलव्यापारवच्चैत्रगात्रवेदनाहेतुपरिहाराय मैत्रगात्रव्यापृतिप्रसङ्गः; तद्वदिहानुसन्धातुर्भोक्तृत्वात्, तत्कृतत्वाच्च वेदनापरिहारप्रवृत्तेरित्यर्थः । वादिसिद्धनिदर्शनमभिधाय व्यवस्थाया लौकिकनिदर्शनमित्या(मप्या)ह—तथा हि मणीति ॥

यदुक्तम्—मुक्तामुक्तव्यवस्थानुपपन्नेति, तत्राह—एवं चेति । तत्रापि निदर्शनमाह—तथा हि—मलीमस इति ॥ पारमार्थिक्या व्यवस्थायाः पार-

1. तथेति मुद्रितपाठः

भावशुद्धिः

P. 7-13 भेत्तुमसामर्थ्यादिति चोदयति—स्यादेतदिति ॥ प्रतिपत्तुः=जीवस्य, यः प्रत्ययः=बुद्धिस्तद्धर्मः=तत्कारणाविद्याविवर्त इत्यर्थः। जीवकल्पनां
P. 7-14 वस्तून्यनुसरन्ति स्वाभाव्यात्, अत्राह—न खल्विति ॥ न हि शुक्तौ रजतबुद्धौ रजतत्वमेव स्यादित्यर्थः। अन्योन्यं विवेकादन्योन्यता-
P. 7-15 धीरुपचारोऽत्र स्यादिति, अत्राह—न चेति ॥ कल्पना व्यवस्थाकरणा-
P. 7-16 समर्था चेदन्योन्यविवेके सत्यन्योन्यताधीरस्तु; तत्राह—न हीति ॥ यथा तवैकस्मिन् देहे कल्पितात्मभेदाद्भोगव्यवस्था, तथा ममापीत्युक्तमित्याह—उदाहृतेति ॥

कल्पितोऽपि भेदः कार्यकारी मिथ्यासर्पदंश
इवेति न भोगव्यवस्थानुपपत्तिरैकात्म्यवादे

कल्पितभेदाधेयभोगादिव्यवस्था मम सापि कल्पितैवेति शङ्कते
P. 7-16-17 —सत्यमिति ॥ ममापि सा कल्पितैवेत्याह—अत्रापीति ॥ शङ्काविषाद् मिथ्याभूतात् परमार्थमरणदर्शनात् कल्पितभेदात् परमार्थव्यवस्थायामपि न विरोध इत्याह—कल्पितोऽपीति। चशब्देन स्वप्न-

अभिप्रायप्रकाशिका

मार्थिको हेतुर्वक्तव्य इत्याशयेन शङ्कते—स्यादेतदिति ॥ प्रतिपत्तुर्यः प्रत्ययः, तस्य धर्मः कल्पनाऽपि न विपर्यासादिसाधनवस्तुव्यवस्थापिका ; स्थाणुः पुरुष इत्यादावदर्शनादित्यर्थः। ननु नेयं कल्पना, किन्तूपचारः—सिंहो देवदत्त इतिवत् ; ज्ञायमानवस्तुविषयत्वादिति, अत आह—न चेति ॥ आत्मनः काल्पनिकस्यैकस्मिन्नपि काये प्रदेशभेदस्य, मणि-कृपाणादौ च मुखभेद-(स्य च)व्यवस्थाहेतुत्वं दर्शितमेवेत्याशयेन परिहरति—उदाहृता त्विति।

व्यस्थापकभेदवत्तदधीना व्यवस्थापि तत्र कल्पितैवेति शङ्कते पूर्ववादी—सत्यमिति ॥ उभयोरत्रापि कल्पितत्वं समानमित्याह सिद्धान्ती—अत्रापीति ॥ इदानीं कल्पितादपि वस्तुसिद्धौ दृष्टान्तमाह—कल्पितोऽपीति ॥

भावशुद्धिः

कामिनीसम्भोगः परमार्थेन्द्रियविकारहेतुर्गृह्यते। शास्त्राचार्यादिभेदस्य कल्पितत्वे न ततो वस्तुप्रकाशः स्यात्, अत्राह—प्रतिसूर्यकश्चेति ॥ P. 7-18
जलादौ प्रतिबिम्बितसूर्योऽपि स्वसंनिहितप्रकाशाय कल्पत इत्यर्थः ॥

द्रष्टृदृश्यभेदस्याप्यप्रामाणिकत्वम्

चोद्यान्तरमनुवदति—यदपीति ॥ दृश्येन द्रष्टुरनुमैव नास्ति, P. 7-19
प्रमात्रादिसाधकस्य तत्सिद्धेः प्रागेव सिद्धेरुक्तत्वादित्याह—तदप्यसदिति ॥ P. 7-20

"आहुर्विधातृ प्रत्यक्षम्" इत्यादिना दृश्यभेदधीर्न प्रमेति वक्ष्यत इत्याह—दृश्येति ॥ दृक्शक्तेश्चेत्येतदुक्तमन्यथयति—दृक्छक्तेश्चेति ॥ P. 7-22
स्वप्रकाशादात्मनो नान्या दृक्छक्तिरस्ति, यस्यां कार्यैकव्यञ्जनीयतया दर्शनं कार्यं स्वीकार्यमित्यर्थः। स्वदृश्यत्वे स्वात्मकर्मिका वृत्तिः स्वात्मनि विरुध्यत इत्युक्तम्, अत्राह—न चेति ॥ ([1]दृक्शक्तिरात्मा, स च P. 7-22
स्वातिरेकिदर्शननिरपेक्षतया सिद्धः इति न स्ववृत्तिविरोध इत्यर्थः ॥

द्रष्टृ-दृश्यभाव आत्मैक्यस्य साधकः, न तु बाधकः

न केवलं द्रष्टुर्दृश्यभावो न भेदस्य साधकः, प्रत्युताभेदं साधयतीत्याह—अपि चेति ॥) तथा तथा=तेन तेन दृश्येनात्मनेति यावत्। P. 7-23
परिणामापरितोषेणाह—विवर्तनाद्वेति ॥

अभिप्रायप्रकाशिका

न द्रष्टरीति। 'फल-कर्तृवत्'इत्यादिना द्रष्टुः प्रकाशाधीनो दृश्यप्रकाश इति समर्थितत्वात्तस्य न दृश्याधीना सिद्धिः; तथात्वे परस्पराश्रयत्वप्रसङ्गादिति भावः ॥

दृश्यानां परस्परभेदोपलब्धिरस्तीत्युक्तम्, तत्राह—दृश्येति। "आहुर्विधातृ प्रत्यक्षम्"इत्यत्र भेदस्य प्रमाणागम्यत्वं वक्ष्यत इत्यर्थः ॥ यदुक्तम्—दृक्छक्तेश्चार्थवत्त्वमिति, तत्राह—दृक्छक्तेरिति। स्वप्रकाशसंविदात्मन एव दृक्छक्तित्वात्, तस्य च दर्शनाख्यकार्यान्तराभावान्न स्ववृत्तिविरोध इत्यर्थः ॥

1. ( ) अन्तर्गतं A. पुस्तके नास्ति

भावशुद्धिः

अप्रच्युतपूर्वरूपस्य मिथ्यारूपान्तरधीर्विवर्तः, भेदे द्रष्टृ-दृश्ययोः सम्बन्धस्तदात्म्यम्, संयोगः, समवायो वा, न वा सम्बन्ध इति
P. 7-24 विकल्प्याऽऽद्यं प्रत्याह—नानात्वे त्विति ॥ जडाजडत्वेन विविक्तयोः=तादात्म्यहीनयोरित्यर्थः । गुणादेर्निरवयवेनात्मना संयोगायोग्यत्वाद्
P. 8- 1 न द्वितीय इत्याह—असंसृष्टेति ॥ गगनादेरात्मनि समवायानर्हत्वाद् न
P. 8- 2 तृतीयोऽपीत्याह—असम्बद्धयोरिति ॥ नापि तुरीय इत्याह—न हीति ॥ असंसृष्टमिति छेदः । अतिप्रसक्तेरिति हेतुः ॥

चिच्छायापन्नान्तःकरणस्य चेतनत्वमिति साङ्ख्यशङ्का

साङ्ख्यश्चोदयति—एकेति ॥ स्वाकारापत्तिरूपेण हि परिणा[2]मेन यथाक्रममिन्द्रियमनोऽहंकारप्रणाडिकया बुद्धिसत्त्वमुपसङ्क्रामति नीलम्, बोद्धाऽपि प्रत्ययान् पश्यन् प्रत्यासन्नं तदेव बुद्धिसत्त्वमुपसङ्क्रामति, तदनयोर्बोद्धृ-बोद्धव्ययोरेकबुद्धिसत्त्वरूपान्तःकरण-
P. 8- 3 सङ्[1]क्रान्तिलक्षणोऽस्ति सम्बन्ध इत्यर्थः । दूषयति—नेति ॥ बोद्धुः शुद्धत्वाद्धेतोर[2]परिणामः, ततश्चाप्रतिसङ्क्रमत्वम्, तस्मान्नैकान्तःकरणवृत्तेरपि [3](सम्बन्ध इत्यर्थः ।) वृत्ति[त्ते]रपि सम्बन्धस्या(घोऽ) सन्नित्यर्थः ।

अभिप्रायप्रकाशिका

निरवयवस्य कथं परिणाम इति ? अत्राह—विवर्तनाद्वेति । एकत्व एवेत्यत्रैवकारनिवर्त्यमाह—नानात्व इति । तादात्म्य-समवाय-संयोगान् क्रमेण व्यावर्तयति—विविक्तस्वभावयोरित्यादिना ॥

साङ्ख्यः शङ्कते—एकेति ॥ किं वल्ल्यादिवत् सङ्क्रान्तिः, उत देव(ता)वत् ? इति विकल्प्य क्रमेणोभयं शुद्धत्वहेतुना दूषयति—अपरिणामादप्रतिसङ्क्रमाच्चेति ॥

---

1. ( ) अत्रान्तर्गतं A. पुस्तकेनास्ति । 3. ( ) अन्तर्गत A. पुस्तके नास्ति ।
2. परिहारेण B.

भावशुद्धिः

अन्तःकरणस्य चिच्छायापत्तेर्दृश्यमिथ्यात्वं विना दुर्वचत्वम्

मा भूत् परिणामः, अस्तु विवर्त इत्याह—दृश्येति ॥ बुद्धिसत्त्वमेव दृश्याकारेण परिणतं दृश्यमात्राञ्जनं तत्त्वतोऽचेतनमपि चितिसन्निधेरापन्नचैतन्यमिव दृश्यं चेतयत इत्यर्थः ॥ P. 8-4

तदेतद् दूषयतुं पृच्छति–अथेति ॥ चोदक आह–अतदात्मन इति ॥ परिहरति—न तर्हीति ॥ बुद्धेरचेतनत्वात्, आत्मनः परमार्थतो बुद्ध्याद्येन वाऽसम्बन्धाच्चैतन्यारोपस्य बुद्धौ काल्पनिकत्वादित्यर्थः । फलितं निगमयति—परमार्थतश्चेति । संविदा हि संवेद्यं व्यवस्थाप्यते न पुनरसंविदापीत्यर्थः । यथा समवायस्य समवायिभ्यां सम्बन्धुं न सम्बन्धान्तरापेक्षा, अपि तु सम्बन्धिसम्बन्धनपरमार्थत्वात्, एवं दर्शनमपि, इति दृश्यदर्शनं परमार्थं दृश्यतयैव दृश्यं व्यवस्थापयति, न सम्बन्धेन, दर्शनेऽसति हि दृश्यमदृष्टं भवति ॥ P. 8-5

दर्शनविषयत्वमपि दृश्यत्वं पराग्रूपस्य
दृग्विवर्तत्वं विना नोपपद्यते दर्शनविषयत्वमात्रेण

न च दर्शनमात्मनिष्ठम्, 'नीलमिदम्' इति पररूपविषयत्वादिति
शङ्कते—योऽपीति । पराग्रूपविषयम् । व्यवस्थाप्यत इत्यनुषङ्गः । P. 8-6
परिहरति—स वक्तव्य इति ॥ न पुनः परं द्रष्टुमर्हति ; सम्बन्धाभावेना- P. 8-7

अभिप्रायप्रकाशिका

चितेरपरिणामित्वेऽपि बुद्धेः परिणामात् सङ्क्रान्तिः स्यादिति शङ्कते दृश्येति । किं बुद्धेश्चिदाकारपरिणामस्तच्छायता, किं वा तदात्मना वाऽऽभासः ? इति विकल्प्य, आद्ये द्रष्टृद्वयापत्तिः, इति तमवधीर्य, द्वितीयमुत्थापयति—अतदात्मन इति । विषयाकाराया बुद्धेरचेतनत्वाच्चैतन्यस्य च परमार्थतो विषयेण बुद्ध्या वा संसर्गाभावाद् दृश्यप्रतिभासो विभ्रम एव स्यादिति दूषयति—न तर्हीति । ततः प्रकृते किमायातमिति ? तत्राह—परमार्थतश्चेति ॥

यथा समवायसम्बन्धस्यान्तरेणैव सम्बन्धान्तरं स्वसम्बन्धिभ्यां सम्बन्धता; स्वभावभेदात्, एवं दृश्ययोः स्वभावभेदादेव विषय-विषयिभावः, नात्र सम्बन्धान्तरापेक्षेति शङ्कते—योऽपीति ॥

भावशुद्धिः

तिप्रसङ्गादित्यर्थः । कथं तर्हि पराग्रूपविषयदर्शनं स्यात्, अत्राह—
P. 8-8 तत्त्विति ॥ परिणामादित्येकदेशिमतम् । आत्मनो विभक्तमात्मानं
P. 8-9 दर्पणतल इवेत्युक्तं विशदयति—तथा हीति ॥ दृश्यमविद्ययाऽध्यस्तं
P. 8-10 मिथ्यातादात्म्येन पश्यतीत्यनङ्गीकारे बाधकमाह—चितेस्त्विति ॥
दृश्यत्वान्यथानुपपत्त्या यथा दृश्यस्य मिथ्यात्वावगतिः, एवमागमतोऽ-
P. 8-11 पीत्याह—एवं चेति ॥ अन्यथैकविज्ञानेन सर्वविज्ञानानुपपत्तिरित्यर्थः ॥

आत्मनः क्षणिकविज्ञानवादाभिमतात्म-
नैरात्म्यमतेन विज्ञानोपरमस्यैव ब्रह्मस्वरूपत्वशङ्का

P. 8-12 'अमृतमजम्' इति पदद्वयनिरस्यं दर्शयति—क्षणिकेति ॥
द्विविधा वासना—अविद्यावासना, कर्मवासना चेति । क्लेशाः=रागद्वेषा-
दयः । उपक्लेशा अपि मद-मानादयः, तेऽपि क्लेशपक्षे वर्तन्ते । आलय-
विज्ञानप्रवाहस्य विरतिं निर्वाणमाहुरित्यर्थः ॥ स्वराद्धान्ते वैदिकानां
P. 8-14 निश्चयजननाय तदभिमतमागममाह—तथा चेति ॥

विषयनैरात्म्यवादिनां निर्विषयशुद्धालयविज्ञान-
सन्तान एवात्मेति योगाचारामतेनौ-
पनिषदात्मस्वरूपायोगशङ्का

P. 8-14 बाह्यवादिनां मतमुक्त्वा विज्ञानवादिनो मतमाह—अन्ये त्विति ।

अभिप्रायप्रकाशिका

तर्हि दृश्यमपि दृगात्मकमेवास्त्विति, अत्राह—दर्शनं चेति ॥
विषयस्याहमित्यनवभासनादिदमित्येवावभासनादित्यर्थः । परिहरति—स
वक्तव्य इति । उक्तनीत्या सम्बन्धशून्यस्य परमार्थतः प्रतिभासायोगात्
चैतन्यमेव स्वमायावेशवशेन विवर्तमानमवभासत इत्यभ्युपेयमित्यर्थः ॥
स्वतःप्रमाणप्रतीत्यनुसारेण भेद एवाभ्युपगन्तव्य इति, मैवम्; शक्ति-
बाधादित्याह—चितेस्त्विति ॥ एवं युक्त्या व्यवस्थापिते श्रुतिप्रमाणादपि
द्रष्टृव्यतिरिक्तं दृश्यं नास्तीत्याह—एवं चेति ॥

उत्तरपदव्यावर्त्याशङ्कामाह—क्षणिकेति । वासनेह द्विविधा—अविद्या-
वासना, कर्मवासना च । क्लेशाः=राग-द्वेषादयः, उपक्लेशाश्च मद-मानादयो
गृह्यन्ते ॥

---

1, काम

भावशुद्धिः

वासना-क्लेशसमुच्छित्तौ वासना-क्लेशात्मको ज्ञानप्रवाहोऽत्यन्ताय निवर्तते। निराकृतसमस्तविषयाकारमलो विशुद्धविज्ञानप्रवाह उत्तिष्ठति, स मोक्ष इत्यर्थः। ब्रह्मप्राप्तिमाहुरित्यनुषङ्गः ॥

एकमेव ब्रह्माविद्यया संसरति, विद्यया विमुच्यत इति कल्पनीयम्, लाघवात्; न पुनरनेकज्ञानानामात्मत्वादिकल्पना, गौरवादिति, अत्राह—अनादीति ॥ विद्याया उपादानमविद्याया हानमिति P. 8-16
हेयमुपादेयं चास्तीति, अत्राह—तथा हीति ॥ P. 8-17

ब्रह्म विद्यास्वरूपम्, अविद्यारूपं वा, उभयस्वरूपं वा। यद्याद्यः,
तत्राह—विद्येति ॥ द्वितीयमनूद्य दूषयति—अविद्यास्वभावं चेदिति ॥ P. 8-18
तृतीयं प्रत्याह—एवमिति ॥ तस्मात् क्षणवाद एव श्रेयानित्यर्थः। P. 8-20
तन्निरासार्थं पदद्वयमित्याह—तानिति ॥ P. 8-21

मुक्त्यर्थं प्रवृत्तेः, शास्त्रस्य च वैयर्थ्यापत्त्याऽऽत्मनो विद्याऽविद्योभयस्वभावत्वायोगोपपादनम्

शास्त्राद्यानर्थक्यमुद्धरति—न चेति ॥ अनादिरविद्या कथं
निवर्तते? अत्राह—सर्वेति ॥ अविद्याया अनुच्छित्तावनिर्मुक्तेः, सा- P. 8-20
दित्वे मुक्तस्य बन्धप्रसक्तेरनाद्याविद्यानिवृत्तिः सर्वाभिमतोऽर्थः ॥

अनादेरपि निवृत्तिसम्भवाद् विद्यास्वभावात्मविषयानाद्यविद्यास्तमयस्यैव मुक्तित्वात् तदर्थं शास्त्रादिसार्थक्यम्

अनिवृत्तौ नानादित्वं हेतुं ब्रूमः, अपि तु नित्यस्वभावत्वमिति

अभिप्रायप्रकाशिका

योगाचारमतमाह—अन्ये त्विति ॥ ब्रह्मप्राप्तिमाहुरित्यन्वयः। ब्रह्मप्राप्तिशब्देन चात्र मुक्तिर्विवक्ष्यते; एकस्यैव विज्ञानस्यानादिनिधनत्वसम्भवे क्षणिकतयाऽनेकविज्ञानकल्पनायां गौरवमिति, तत्राह—अनादीति ॥

ननु—अविद्याऽपनीयते, विद्या चोपनीयत इत्यस्मिन् मते कथमुपनेयापनेयाभाव इति, तर्हि किं विद्यास्वभाव आत्मा, किं वाऽविद्यास्वभावः, उतोभयस्वभावः? इति विकल्प्य क्रमेण दूषयति—तथा हीति ॥

भावशुद्धिः

P. 9-23 स्वोक्तं स्मारयति—न ब्रूम इति ॥ विद्यास्वभावस्य ब्रह्मणो नाविद्या
P. 9-1 स्वभाव इति शङ्कते—अथेति ॥ दूषयति—अर्थान्तरमिति ॥ तथा चाद्वैतहानिरित्यर्थः ॥

नाविद्या ब्रह्मस्वभावः, नाप्यर्थान्तरमिति, अत्राह—न वेति ॥
P. 9-2 अख्यातिवादिनां मतमुत्थापयति—अथेति ॥ अवस्तुत्वादित्यर्थः। तत
P. 9-3 एव तर्हि न निवृत्तिः स्यात्, अत्राह—न चेति ॥ नात्यन्तिकस्तत्त्व-[1] ग्रहणस्याभावः, येनानिवर्त्यता, अपि त्वस्य प्रागभावः, स च तत्त्वग्रहणेन[2] निवार्यत [3]इत्यर्थः ॥

अविद्याया ब्रह्मस्वभावातिरिक्ताया
अग्रहण-विपर्यय रूपाया एव तत्त्वज्ञाननिवर्त्यतायाः
स्वीकारात् तन्निवृत्तिमात्रेण योगाचाराभिमतशुद्धविज्ञान-
सन्ततिरेव मोक्ष इति शङ्का

P. 9-3 दूषयति—तदपीति ॥ अयुक्तत्वमुपपादयितुं तदुक्तमनुवदति—
P. 9-5 तत्त्वाग्रहणेति ॥ अनिष्टमाह—सा चेति ॥ विद्याया ब्रह्मरूपतया नित्यत्वात् तद्विरुद्धाऽविद्या ब्रह्मणि न कदाचिदपि स्यादित्यर्थः ॥

अभिप्रायप्रकाशिका

पूर्वोक्तं वैयर्थ्यं परिहरति—न च शास्त्रेति। कथमनादेर्निवृत्तिरिति ? अत्राह—सर्वेति ॥

द्वैतप्रसक्तिभयाद् ब्रह्मस्वभावाविद्याया वस्तुत्वानङ्गीकारे शून्यतैव स्यादित्याह न वेति ॥ ननु—नेदमनिष्टम्; अविद्यायाः शून्यत्वेऽपि ब्रह्मणः सत्त्वादिति, अत आह—तत्रेति ॥

द्वैतापत्तिं निवृत्त्यभावं च परिहर्तुं शङ्कते—अथ मतमिति ॥ ग्रहणप्रागभावतया न तावद् द्वैतापत्तिः, नाप्यनिवर्त्यता प्रागभावस्य; सर्वैर्निवृत्त्यङ्गीकारादित्यर्थः। किं तद् ब्रह्माधिकरणम्, उतान्याधिकरणमिति विकल्प्य नाद्यः; तस्य नित्यग्रहणतया ग्रहणप्रागभावलक्षणाग्रहणासम्भवादित्याह —तदपीति।

---

1. A त्र 2. A स्व 3. A र्तं

भावशुद्धिः

ब्रह्मातिरिक्तस्य जीवस्य ब्रह्माग्रहणं ज्ञानेन निवर्त्यत इति, अत्राह—न चेति ॥ एवं तर्हि ग्रहणाग्रहणरूपस्य ब्रह्मणः स्वपेक्षायाऽ- P. 9-5
ग्रहणं निवर्त्यमिति, अत्राह—ब्रह्मणि त्विति ॥ तर्हि तयोरविरोध इति, P. 9-6
अत्राह—अविप्रतिषेधेच इति ॥ P. 9-7

विपर्ययग्रहणमविद्येत्यत्रापि दूषणमाह—यस्येति ॥ एवमख्यातिमतम्, अन्यथाख्यातिमतं वाऽवलम्ब्याद्वैतिनाऽविद्या दुरुप-
पादेत्युक्त्वाऽऽश्रयानिरुक्त्यापि दुरुपपादेत्याह—कस्येति ॥ तत्=अग्र- P. 9-9
हणादि ब्रह्मणोऽन्यस्य, ब्रह्मणो वेत्यर्थः । आद्यमनङ्गीकारेण निरस्य
द्वितीयं शङ्कते—ब्रह्मण इति ॥ तस्य विद्यास्वभावत्वात् परस्याऽविद्या P. 9-9
न युक्तेत्याह—विप्रतिषेध इति ॥ P. 9-10

अविद्या न सती, न वाऽसती, किं त्वनिर्वचनीया,
तन्निवृत्तिरेव मोक्षः, नाग्रहणादिरूपा
योगाचाराद्यभिमता

भेदाभेदाभ्यामनिर्वाच्याऽविद्या, इति न किञ्चिदवद्यमिति
परिहरति—अत्रोच्यत इति ॥ सत्त्वेऽद्वैतपराहतिः, असत्त्वे निवृत्त्यसिद्धिः, P. 9-11
[1]अत्राह—नात्यन्तमिति ॥ उक्तरूपाविद्यायां किं प्रमाणमिति ? [2]अत्राह—एव P. 9-12
मेवेति ॥ अनिर्वा[3]च्यरूपैव ; "अविद्यायामन्तरे वर्तमानाः"—"मायां तु

अभिप्रायप्रकाशिका

नापि द्वितीय इत्याह—न चेति । ब्रह्मणीति विषयसप्तमी ॥ अस्तु तर्हि ब्रह्मैवोभयाधिकरणमिति, तत्राह—ब्रह्मणीति । अग्रहणस्य आगन्तुकग्रहणैकनिवर्त्यत्वाद् नित्यग्रहणेन न विरोध इत्याशङ्क्य, तर्हि ब्रह्मणः कादाचित्कग्रहणविरहान्न तन्निवृत्तिरित्याह—अविप्रतिषेधे चेति ॥

अग्रहणनिराकरणन्यायेन विपर्ययलक्षणामविद्यामपि निराचष्टे—यस्य त्विति ॥

उक्तविकल्पदूषणमनङ्गीकारेणावधीर्यानिर्वचनीयाविद्याभ्युपगमेन सिद्धान्तयति—अत्रोच्यत इत्यादिना । एवमेवेति । प्रतिभासमात्रशरीरतामवल-

1. B त 2. A यमेवेति 3. A च्य

भावशुद्धिः

प्रकृतिं विद्यात्" "तदेवार्थस्वरूपेण भ्रान्तिदर्शनतः स्थितम्" इति श्रुति-स्मृतिषु मायादिशब्दैरुच्यत इत्यर्थः॥ तत्राविद्यास्वरूपं प्रतीयते, न तदनिर्वचनीयत्वम्, इत्याशङ्क्य, तदुपपादयति—स्वभावश्चेदिति॥ परमार्थस्य नाविद्यात्वम्; आत्मवद्विद्यापनोद्यत्वासिद्धेरित्यर्थः। असत-
P. 9-13 स्तर्हि स्यादविद्यात्वम्, अत्राह—अत्यन्तेति॥ अपरोक्षप्रतिभासव्य-
वहारानुपपत्तिरित्यर्थः॥

अविद्यास्वरूपे सर्ववाद्यविवादः, विप्रति-
पत्तिस्तु तदनिर्वचनीयत्वमात्रे

विरुद्धविधिसमुच्चयवन्निषेधसमुच्चयस्यापि विरोधाद् नानिर्वचनी-
P. 9-14 यमस्तीति, अत्राह—सर्वप्रवादिभिश्चेति॥ यथादर्शनं प्रतीयमानरूपे-
णार्थसत्त्वे न शून्यमतसिद्धिरित्यर्थः।

मिथ्यावभास एवाविद्या, सा च सतीति
नानिर्वचनीयत्वमितिशङ्का

P. 9-16 योगाचारमतेऽप्यनिर्वचनीयमापादयति—विज्ञानमात्रेति॥ यथाव-
P. 9-17 भासं ज्ञानसद्भावेऽपि कस्मान्नार्थापह्नव इति? अत्राह—नीलेति॥
बहिष्ट्वस्य यथादर्शनं सतो निषेधासिद्धेरित्यर्थः। तद्बहिष्ट्वमत्यन्तमसदे-
P. 9-18 वेति, अत्राह—अत्यन्तेति॥

सौत्रान्तिक-वैभाषिकनयेऽप्याह—बाह्यार्थेति॥ संसारबीजं खल्वियमविद्याऽनित्याशुचिदुःखानात्मसु यथासङ्ख्यं नित्य-शुचि-सुखात्मख्यातिः। इदानीमविद्यामात्रं सर्ववादिसम्प्रतिपन्नं दर्शयति—
P. 9-19 रजतादीति॥

अभिप्रायप्रकाशिका

म्ब्येत्यर्थः। अग्रहणं व्यावर्तयति—मायेति। मणि-मन्त्रादिविशेषान् व्यावर्तयति—मिथ्येति। पराभिमतमिथ्यात्वं व्यावर्तयति—अवभास इति। पूर्वोक्तविकल्पावधीरणे युक्तीराह—स्वभावश्चेदिति। अग्न्यौष्ण्यादिवद् जातिप्रतिबद्धो धर्मः स्वभाव इत्यङ्गीकृत्याऽऽद्यविकल्पो द्रष्टव्यः॥

परैरपि भ्रान्ति-बाधावभ्युपगच्छद्भिरप्यनिर्वचनीयाविद्याभ्युपेया; सदसत्पक्षयोस्तदयोगादित्यापादयति—सर्वेति॥

भावशुद्धिः

अर्थेनैवावभासस्य विशेषतयाऽर्थस्यैवावभासस्याप्यसत्त्वे-
नोभयानिर्वचनीयत्वम्, इति नाद्वैतहानिः

चोदयति—स्यादेतदिति ॥ कस्यानिर्वाच्यत्वम्? अर्थस्य, ज्ञानस्य P. 9-20
वा? नाद्यः; तस्य सति बाधकेऽसत्त्वात्, नापि द्वितीय इत्याह—अवभा-
सस्त्विति ॥ तस्य स्वकारणाधीनोत्पत्तेः सत्त्वेन निर्वचनीयत्वादित्यर्थः ॥ P. 9-21

दूषयति—नैतदिति ॥ रजताद्यवभासोऽसन्, उतावभासमात्रम्। P. 9-22
नाद्यः; विशेषणमन्तरेण विशिष्टायोगादित्यर्थः। द्वितीये न रजतादि-
भ्रमसत्यत्वसिद्धिरित्याह—अवभासेति ॥ एवं चेत्, कथं तर्हि तदवभास P. 9-23
इति? अत्राह—तदवभास इति ॥ भ्रान्तिरित्यनिर्वचनीयता दर्शिता ॥

अविद्यायाः सदसदादिविलक्षणत्वाच्छास्त्राद्यर्थवत्त्वमित्याह—
तस्मादिति ॥ तदनिर्वाच्यत्वे विद्यया अन्यथा निवृत्त्यनुपपत्तेरित्यर्थापत्ति- P. 9-24
मभिसन्धायाऽऽह—अत एवेति ॥ सतोऽपि घटादेर्निवृत्तिदृष्टेरन्य-
थाप्युपपत्तिः, अत्राह—अन्यथेति ॥ दृष्टान्तोऽप्यसम्मत इत्यर्थः। हेतु- P. 9-25
माह—स्वभावाहानादिति ॥ यथा हि सहस्रेणापि शिल्पिभिर्न शक्या
नीलस्य पीतता, एवमविद्याया अपि सत्याः स्वभावे दृढमवस्थिताया

अभिप्रायप्रकाशिका

अवभासस्यासत्त्वेऽपि तद्विषयावभासस्य स्वरूपेण सतो व्यवहाराङ्गत्व-मविद्यायामसिद्धम्, असद्विषयत्वादिति शङ्कते—स्यादेतदिति। किं विशिष्टा-वभासस्याविद्यात्वम्, उत केवलस्य? नाद्यः; विशेषणासत्त्वे विशिष्टासम्भ-वात्, न द्वितीयः, अवभासमात्रस्याविद्यात्वेऽतिप्रसङ्गादिति दूषयति—नैतदिति। कथं तर्हि तदवभास इत्यवसाय इति? आह—तदवभास इति। अवभासेनासतस्तादात्म्य-तदुत्पत्त्यादिसम्बन्धस्य, प्रत्ययजन्यातिशयाधा-रत्वस्य चासम्भवाद् वैशिष्ट्यव्यवहारोऽनिर्वचनीयविषय इत्यर्थः ॥

निवृत्त्यन्यथानुपपत्त्याप्येवमभ्युपेयमित्याह—अत एवेति। एतदेव व्यतिरेकमुखेनोपपादयति—अन्यथेति। कथमन्यथात्वम्=कथं निवृत्तिरित्यर्थः। स्वभावाहानादिति ॥ अविद्यायाः सत्त्वे तदसत्त्वमापादयितुमशक्यम्; सदस-तोस्तादात्म्यविरोधादिति। स्वयं निवृत्तत्वात्। कथमन्यथात्वमित्यनुषङ्गः ॥

भावशुद्धिः

न शक्यमसत्त्वम्; नील-पीतयोरिव सदसतोस्तादात्म्याभावादित्यर्थः ।
P. 10-1 स्यादत्यन्तासती तर्हीति, अत्राह—शून्यत्व इति ॥ न विद्यया निवृ-
त्तिरिति शेषः । तस्मात् न सदसत्पक्षोक्तदोषोऽस्मत्पक्ष[1] इत्याह—एवं
P. 10-3 चेति ॥ उक्तमनूद्योत्तरमाह—यत्त्विति ॥ कल्पितावच्छेदं ब्रह्मैव जीवो
घटाकाशवद्ब्रह्माभास इति केचित्; तन्मतेनाह–जीवानामिति ॥

अविद्याश्रयो न ब्रह्म, विद्यास्वभावत्वात्,
नापि जीवः; अन्योन्याश्रयादित्यविद्याया आश्रयानुपपत्तिरिति शङ्का

एतदाक्षिपति—नन्विति ॥ जीवः, परस्माद्भिद्यते, तद्विरुद्धधर्म-
P. 10-4 त्वात्; वस्त्वन्तरवदित्याशङ्क्यागमविरोधमाह—एवं हीति ॥ "अनेन
जीवेनात्मनाऽनुप्रविश्य नाम-रूपे व्याकरवाणि" इति देवतया स्वरूप-
वाचकात्मशब्दस्य जीवे प्रयोगात् तयोरैक्यमित्यर्थः । भाविक-
भेदस्य भावः साध्यते, काल्पनिकस्य वा ? आद्येऽनुमतिरित्याह—सत्य-
P. 10-5 मिति ॥ द्वितीयं प्रत्याह—कल्पनयेति ॥ अविद्ययेत्यर्थः । यथाऽऽकाश-
मेव घटाद्युपहितं धूम-तुषाराद्याश्रयः, नाऽऽकाशमात्रम्; तद्वद् जीवाना-
मविद्याश्रयत्वमित्यर्थः ॥ कल्पना निराश्रया न युक्ता, इति तदाश्रयो
वाच्य इत्याह—कस्येति ॥ ब्रह्मणः, जीवस्य वेत्यर्थः ॥ आद्यमपवदति—
नेति ॥ शुद्धबोधस्वभावस्य भानुवत्तमोऽधिक[2]रणत्वविरोधादित्यर्थः ॥
P. 10-6 द्वितीयं दूषयति—नापीति ॥ कल्पनातः प्राग्जीवसद्भावे तदाश्रया
कल्पना स्यात्, सैव चेज्जीवानां हेतुः, तथा सति परस्पराश्रयं स्यादि-
P. 10-7 त्याह—प्राक्कल्पनाया इति । इतरेतराश्रयं विशदयति—कल्पनेति ॥

मायामात्रत्वात् जीवत्व-तदाश्रयत्वयोरुभयोर-
प्यवस्तुत्वाद् नान्योन्याश्रयस्यात्र दोषत्वमित्येकः कल्पः

P. 10-9 एकदेशिनां परिहारमाह—अत्रेति ॥ स्वयमसिद्धमन्यत् साध-

अभिप्रायप्रकाशिका

एवं हीति । ब्रह्मणा जीव आत्मशब्दस्य प्रयुक्तत्वादित्यर्थः ।
किमाश्रया कल्पना भेदिकेति शङ्कते—कस्येति । जीवमाश्रित्य जीवमेव
विभेत्स्यतीति, अत आह—इतरेतरेति ॥

---

1. क्षदोषो B. 2. अधिकतर A.

भावशुद्धिः

यितुमशक्यमिति कल्पनासिद्धौ ब्रह्मविभक्तो जीवः सिध्यति, तत्सिद्धौ तदाश्रयकल्पनेति परस्पराश्रयदोष इत्यर्थः। मिथ्यावस्तुन्यपि सममितरेतराश्रयम्[1], अत्राह—नेति॥ सदसदुभयानुभयविचारासहत्वं हि P. 10-10
मायात्वम्। तदखिलानुपपत्तिभागितां द्रढयति प्रागेव रूपहतिरित्याह —न हीति॥ प्रतीयमानाकारेण विचारसहत्वस्य मायात्वं किं न स्यात्? अत्राह—उपपद्यमानेति॥ प्रतीतरूपाभावात् न मायात्वमात्मवदित्यर्थः॥ P. 10-11

अनादित्वादुत्पत्तौ नान्योन्याश्रयो दोष इति
स्वपक्षेण तत्परिहारः

सिद्धान्तमाह—अन्ये त्विति॥ अनादिर्जीवो ब्रह्मविभक्तोऽनाद्यनिर्वाच्याज्ञानाश्रयः, यथाऽन्येषां मते अनाद्यात्मव्यक्तिरनाद्यात्मत्वजाताविति, अतश्चेतरेतराश्रयताऽनवकाशः स्यादित्यर्थः। मिथ्याज्ञानमविद्या, अतः [2]कथमनादिरित्याशङ्क्यानादिरविद्येत्यत्राप्तवाक्यं कीर्तयति—तथा चेति॥ अविद्यापदस्योपादानपदेन[3] कर्मधारये भेदपदेन P. 10-13
बहुव्रीहौ तं वदितुं शीलमेषामिति द्वितीया[षष्ठी]तत्पुरुषः, अनादित्वसाधनफलमाह—तत्रेति॥ जीवाश्रयत्व इत्यर्थः॥ P. 10-14

अप्रयोजनत्वादनाद्यविद्यावैयर्थ्यमिति शङ्का, ब्रह्मणस्तदुपधानेन
सृष्टौ प्रयोजनाभावः, जीवस्य तु तया दुःखमेव,
इति न प्रयोजनम्

अप्रयोजनत्वविशेषणमकिञ्चित्करं न वक्तव्यम्, अत्राह—अप्रयोजनत्वादिति॥ भिद्यत इति भेदः=प्रपञ्चः, तस्य सर्गे प्रयोजनपर्यनु-

अभिप्रायप्रकाशिका

अत्रैकदेशिनां परिहारं दर्शयति—अत्रेति॥ मायायामनुपपत्त्यभावे मुक्तानामपि बन्धः, ब्रह्मणि चाविद्याभ्युपगमे न दोष इत्यापतेत्, अथ प्रतीत्यभावाद् न तथाभ्युपेयते, तर्हि कल्पना निष्फला, जीवेऽहमज्ञ इति प्रतीतेः॥

अयमपि पक्षो दुःस्थ इति मन्वानः प्रकारान्तरेण परिहरति—अन्ये त्विति। अप्रक्लृप्तिम्=अघटमानताम्। तावता तव किमायातमिति? अत आह—तत्रानादित्वादिति॥

---

1. आश्रयमित्यत्रा B. 2. तत् B. 3. वचनेन B.

भावशुद्धिः

योगस्या[1]नवकाश इत्यर्थः। एवं पर्यनुयोगाभावात् तन्निवृत्त्यर्थं
P. 10-15 विशेषणं व्यर्थम्, अत्राह—यदेक इति॥ निरीश्वरसाङ्ख्याः। ब्रह्म
प्रयोजनोद्देशेन प्रवर्तते, प्रेक्षापूर्वकारित्वात् देवदत्तवत्, विपक्षे
P. 10-16 प्रसिद्धिबाध इत्यत्राह—प्रयोजनमिति॥ नातः प्रयोजनाभावे प्रवृत्तिरुप-
पद्यत इति, (परार्थम्)(र्था) तथापि (न) किमिति, अत्राह—तत्रेति॥ प्रेक्षा-
वत्प्रवृत्तेः[2] प्रयोजननिबन्धनत्वे सतीत्यर्थः।(प्रयोजनं) परानुग्रहः, क्रीडा-
P. 10-17 दिर्वा? नाद्य इत्याह—न तावदिति॥ अनुग्र[3]हः=उपकारः। स च
भोगायतनवतामेव, ते च न पुरा आसन्नित्यर्थः। हेत्वन्तरमाह—
P. 10-18 दुःखेति॥ न हि परानुग्रहाय ग्रामादिकं कुर्वन् कण्टकादि दुःखादि
करोतीत्यर्थः॥ द्वितीयं दूषयति—नात्मार्थेति॥ आदिपदेन भोगसङ्ग्रहः॥

अविद्यानिबन्धने सर्गे प्रयोजनपर्यनु-
योगायोगः, लीलाकैवल्यं वा नः

P. 10-19 पर्यनुयोगं प्रदर्श्य परिहारमाह—तस्येति॥ जीवाश्रयाविद्या-
विषयस्य ब्रह्मणो जगद्भ्रमाधिष्ठानत्वाद् न प्रयोजनापेक्षेत्यर्थः। सर्वज्ञे
ब्रह्मण्यज्ञत्वविरोधाज्जीवाश्रयमज्ञानमज्ञातरज्ज्वादिवद् ब्रह्म विवर्तयति,
तत्र ब्रह्मणो वस्तुतोऽविकृतत्वादविद्यात्मक[4]विवर्ते न तदपेक्षेत्याह—
न हीति॥ प्रवर्तते चेत्, प्रयोजनापेक्षैव साऽपीति, अत्राह—न हि
P. 10-20 गन्धर्वेति॥ शुक्लेभ्यस्तन्तुभ्यः शुक्लपटप्रसवदर्शनादशुद्धं जगद्विशुद्धात्
ब्रह्मणो भवितुं नार्हतीति चोद्यमपि निरस्तमित्याह—तथेति॥ विशुद्धात्
स्वप्नद्रष्टुरशुद्धस्वाप्नप्रपञ्चदर्शनादित्यर्थः। अस्तु वा प्रयोजननिबन्ध-
P. 10-22 नैव प्रवृत्तिः, तथाप्यदोष इत्याह—अपि चेति॥ अविद्याप्रतिबिम्बित-
सर्वज्ञस्याऽऽप्तकामत्वेऽपि लौकिकाप्तकामवत् क्रीडादिरूपा जगत्सर्ग-

अभिप्रायप्रकाशिका

पर्यनुयोगमेव दर्शयति—यदेक इति। ननु, अनादित्वात् सत्त्वे जीवा अनुग्राह्याः, तत्राह—दुःखोत्तरत्वादिति। नायमनुग्रहः अनुग्राह्याभावादित्यर्थः॥ प्रयोजननिबन्धनायामपि प्रवृत्तौ न दोषः, आप्तकामानामपि क्रीडादिप्रवृत्तिदर्शनादित्याह—अपि चेति॥

---

1. त्वा B. 2. त्तिः 3. होऽप A. 4. कं B.

प्रवृत्तिः ; अविशेषादित्यर्थः । परानुग्रह आदिपदार्थः । एवकारार्थमुपपादयति—प्रार्थनेति ॥ इदं कार्यम् , अदः प्राप्यमिति प्रार्थनाखिन्न- P. 10-23
मनसामित्यर्थः ॥

मायाकरस्येव चित्रकराणां बालानामिव क्रीडतामिव वा न
स्रष्टृत्वेऽपीश्वरस्य वैषम्यनैर्घृण्ये । धर्माधर्मापेक्षत्वाद्वा
विचित्रस्य सर्गस्य

([1]परानुग्रहादि)जगत्सृष्टेः प्रेक्षापुरस्सरत्वे परस्य कांश्चिद् दुःखिनः कांश्चित् सुखिनः कुर्वतो रागद्वेषवत्त्वम् , जगत् संहरतो निर्दयत्वं स्यादिति, अत्राह—न चेति ॥ सृष्टेर्मायामयत्वेन तदप्रसक्तिं दृष्टान्तेनाह— P. 10-24
—न हीति ॥ मायानिमित्तस्य प्रतीतिमात्रशरीरस्य व्यावहारिकसत्त्वस्या[2](प्य)भावात्तत्कर्तुरवैषम्योपपत्तिरित्यत्राह—चित्रेति ॥ मृन्मयी P. 11-1
प्र(ति)कृतिः=पुत्तिः । आदिपदेन दारुमयादिसङ्ग्रहः । चित्रादिकृतां प्रवृत्तिः क्रीडातिरिक्ते प्रयोजनवतीति वैषम्यान्तरमाशङ्क्याह—
([3]बालानां चेति ॥) P. 11-2

यदीश्वरक्रीडादिवशादेव जगद्वैचित्र्यं कृतम् , कृतं तर्हि पुण्यापुण्ययोरादान-परिहाराभ्यां प्रेक्षावतामिति, अत्राह—कर्मेति ॥ वैषम्य- P. 11-4

अभिप्रायप्रकाशिका

तथापि कांश्चिदत्यन्तसुखिनः, कांश्चिदत्यन्तदुःखिनः सृजतीति वैषम्यम् , नैर्घृण्यं च ; अपर्यायमेवाखिलजन्तूपसंहारादिति, अत आह—न चेति ॥ मायया प्रदर्शनमात्रम् , न वस्तुसृष्टिरिति, अत आह—चित्रेति । क्रीडारूपायां सृष्टावभिनिवेशाभावादपि न दोष इत्यत्र दृष्टान्तमाह—बालानां चेति ॥

चित्रादिषूपभोगाभावाद् न वैषम्यादिदोषः, इह तु चेतनानां सुखदुःखोपभोगसम्भवात् कथं तत्सृष्टौ न वैषम्यादिदोष इति ? तत्राह—कर्माशयेति ॥ [यद्वा] यदीश्वरक्रीडावशाज्जगद्वैचित्र्यम् ? कृतं तर्हि पुण्यापुण्योपादानपरिहाराभ्यामित्याशङ्क्याह—कर्माशयेति । 'वैषम्यनैर्घृण्ये न सापेक्षत्वा'दिति

1. अन्तर्गतं B. पुस्तके नास्ति । 2. अन्तर्गतं B. पुस्तके नास्ति ।
3. अन्तर्गतं B. पुस्तके नास्ति ।

भावशुद्धिः

नैर्घृण्यदोषापत्तिरिति चेत्, न; सापेक्षत्वादित्याचार्याः। सापेक्षत्वादेव
तर्ह्यस्मदादिवदनीश्वरत्वमिति, अत्राह—न चेति॥ कर्मफलविधाने
P. 11-5 कर्मतन्त्रस्य कथं स्वातन्त्र्यभङ्गो न भवेत्? अत्राह—न हीति॥
प्रभुः=लौकिकेश्वरः॥

शुद्धस्यापि ब्रह्मणस्तद्विलक्षणाशुद्धप्रपञ्चोपादानत्वोपपत्तिः

तदेवं विवर्तं स्वाभिमतमवलम्ब्य समाहितम्, परिणामाभ्युपग-
P. 11-6 मेऽप्यदोष इत्याह—तथेति॥ घटत इति शेषः। परिणामि-परिणा-
मयोरभेदात् कथं शुद्ध्यशुद्धिव्यवस्थेति? अत्राह–न हीति॥ कुत इति,
P. 11-7 अत आह—प्रकृतीति॥ अत्यन्तमभेदे प्रकृतिरेव वा स्यात्, विकृतिरेव
वा? न द्वयम्, विरोधादित्यर्थः। स्वरूपभेदेऽपि कारणगतविशेषगुणस्य
कार्येऽनुवृत्तिः स्यात्, अतश्चे[1]तना(गत)[2]वैलक्षण्यासिद्धिः, अत्राह—
द्रवाणां चेति॥ सांसिद्धिकद्रवत्वमपां विशेषगुणो न तद्घनोपलफेना-
दावनुवर्तत इत्यर्थः। चैतन्यम्, ब्रह्मकार्ये समवेयात्, द्रवत्वान्यत्वे
सति कारणविशेषगुणत्वात्; य एवम्, स एवम्; यथा तन्तु-
P. 11-8 शौक्ल्यादिरिति, अत्राह—तथेति॥ चेतनो [3]देह(क)रूपो वृश्चिकः
परिणामः। आदिपदादात्मनो भोगायतनदेहस्य चेतनस्याचेतनः
केशनखादिविकारो ग्राह्यः॥

जीवस्य ब्रह्माभिन्नस्यापि स्वतः शुद्धत्वेऽपि बिम्बाभिन्ने प्रतिबिम्ब
इवौपाधिकत्वं तत्राशुद्ध्यादीनामित्यविरोधः

एवं प्रासङ्गिकं परिसमाप्य जीवानां परमार्थतो विशुद्धब्रह्मा-

अभिप्रायप्रकाशिका

शारीरके सूत्रकारैर्दर्शितमिति भावः। सृष्टौ कर्मापेक्षायां अस्वातन्त्र्यादनीश्वरत्वमिति, अत्राह—न चेति॥

मायामयीं सृष्टिमवलम्ब्य न दोष इत्याह—तथा शुद्धस्येति। चेतनो वृश्चिक इति भोगायतनं तच्छरीरमुक्तम्। इतरेतराश्रयदोषाभावाद् जीवाना-

---

1. (क) ब्रह्मपरिणामवादो यद्यपि नाद्वैतिनां संमतः, तथापि तद्वादिनामपि दृष्ट्याऽदोषे का कथा विवर्तपक्ष इति योजनाऽनुसन्धेया।

2. (क) अन्तर्गतं B. पुस्तके नास्ति।

3. (क) चेतनाधिष्ठितत्वेनौपचारिकश्चेतनः।

भावशुद्धिः

[1]भेदादविद्याश्रयत्वमनुपपन्नमिति प्रकृतचोद्यमनुवर्तयति—नन्विति ॥ P. 11-10
वास्तवैक्यं कल्पितशुद्धत्वाशुद्धत्वव्यवस्थ[2]या न विरुध्यत इति परिहरति—वार्तमिति ॥ वार्तात आगतम् अप्रामाणिकमित्यर्थः ॥ तदुप- P. 11-11
पादनाय बिम्ब-प्रतिबिम्बयोः स्वरूपाभेदं तावदाह—न चेति ॥ मदीयमिदं मुखमित्यनुभवादित्यर्थः । कल्पितभेदादेव धर्मव्यवस्थापि दृश्यत
इत्याह—अथ चेति ॥ प्रतिबिम्बभेदवत् तद्धर्मस्य कल्पितत्वादविरोध इत्याशङ्कते—विभ्रम इति ॥ समाधिसाम्यमाह—समानमिति ॥ P. 11-12 P. 11-13
एतत्=विभ्रमत्वम् । किमत्र प्रमाणमिति ? तन्निवृत्त्यनुपपत्तिरेवेत्याह–अन्यथेति ॥ "सत्स्वभावे दृढम्" इत्यादिनाऽधस्तादुक्तमित्यर्थः ॥

प्रतिबिम्बे कृपाणादिरिवाविद्यैवानादिजीवोपाधिरिति व्यवस्था ।
सा चानादिरपि पाकजेन वर्णेन परमाणुश्यामतादिवन्निवर्त्या

मुखे[3] भ्रान्तिकारणं पारमार्थिकमस्ति, जीवे कर्तृत्वाद्यशुद्धौ[4]
परमार्थकारणाभावात्तदनुपपत्तिरिति चोदयति—स्यादेतदिति ॥ कर्तृ- P. 11-14
त्वाद्यारोपेऽन्तःकरणमुपाधिः, तदध्यासेऽविद्या निदानम् । अविद्याध्यासस्यानादित्वान्न (क) तत्र कारणमन्वेषणीयमित्याह—अनादाविति । P. 11-15
अविद्याया अनादित्वे सति चोद्यान्तरमपि निरस्तमित्याह—
तथा चेति ॥ तस्य=ब्रह्मणः । ब्रह्मणोऽवि[5]द्यायाः प्रवृत्तिरुत्पत्तिः, किं- P. 11-16

अभिप्रायप्रकाशिका

मविद्याश्रयत्वमुक्तम्, तत्प्रकारान्तरेणाक्षिपति—नन्विति । पारमार्थिकं विशुद्धत्वं प्रातीतिकाविद्याश्रयत्वं न बाधत इति परिहरति—वार्तमिति । विशुद्धिः स्यादित्युक्तमिति ॥ 'स्वस्वभावे दृढं व्यवस्थितायाः कथमन्यथात्व'मित्यत्र दर्शितमिति यावत् ॥

निर्हेतुत्वमुपपादयति—अनादिरिति । तदेव कुत इति ? अत आह—स्वाभाविकीति । ब्रह्मात्मस्वभावसत्तामात्रानुबन्धिनीति यावत् । कथमुच्छिद्येतेति ॥ अयं भावः—सदकारणं नित्यमिति हि स्थितिः, ईदृशी चाविद्या

1. भिन्नानाम B. 2. स्था B. 3. मुखे B. 4. द्धो B. 5. या

भावशुद्धिः

कृता=केन कृता ? न तावदात्मना ; तस्य कौटस्थ्यात्, नाप्यविद्यया ; आत्माश्रयात्, [1]यथा स्वप्नस्य जाग्रत्संस्कारेण प्रवृत्तिरित्यर्थः ॥

अविद्या, न निवर्तते, अनादिभावत्वात् ; आत्मवदिति चोद-
P. 11-17 यति—नन्विति ॥ सदकारणता हि नित्यत्वम्, ईदृशी चाविद्या । तदुपपादनाय स्वाभाविकत्वविशेषणम् । शास्त्रारम्भानुपपत्तिबाधितमनुमानमिति परिहरति—सर्वेति ॥ भवत्वकारणा, न त्वविद्या सत्या ; [2]अनिर्वाच्यत्वादित्यर्थः । भवतु वा सदकारणत्वम् ; तथापि नेदं नित्यत्वम् ;
P. 11-18 नापि तल्लिङ्गम् ; व्यभिचारादित्याह—अपि चेति ॥ पाकेनेति वक्तव्ये पाकजेनेति योगतन्त्रमनाद्रियमाणस्य वचनम् । न चापर्यायेण श्यामतारि(रक्ति)म्नोरुपलम्भप्रसङ्गः ; परमाणुवर्तिनोरुभयोरप्युपलम्भानर्हत्वात् ॥

स्वाभाविकस्यापि विलक्षणकारणोपनिपातप्रयुक्तैव निवृत्तिः ।
न चात्रागन्तुकमविद्यानिवर्तकमनादि ब्रह्मस्वरूपविद्यातिरिक्तं
किञ्चिदस्तीति शङ्का

ननु श्यामतागुणस्यानादेः परमार्थस्यापि विरोधिहेतुसद्भावाद्
P. 11-19 निवृत्तिः स्यादिति चोदयति—नन्विति ॥ विलक्षणप्रत्ययोपनिपातः=विरोधिकारण[3]जन्म । तर्ह्यत्रापि तत एवाविद्या निवर्तताम्, अत्राह—

अभिप्रायप्रकाशिका

इति न निवृत्तिसम्भव इति । परिहरति—सर्वेति । अकारणत्वेऽपि न सत्त्वम्; अनिर्वचनीयत्वादिति भावः । भवतु वा सत्त्वे सत्यकारणत्वमविद्यायाः, तथापि नेदं नित्यत्वम्, नापि तल्लिङ्गम् ; व्यभिचारादित्याह—अपि चेति ॥ पाकेन निवर्त्यत इति वक्तव्ये पाकजेन वर्णेनेति, योगतन्त्रमनाद्रियमाणस्य वचनमिति द्रष्टव्यम् ॥

---

1. तथा च B.

(क) आगन्तुकेऽध्यास एव कारणापेक्षा, नानादाविति तु भावः । एतेन अध्यासे पूर्वपूर्वप्रमाऽऽहितसंस्कारः कारणमिति शङ्काऽपि नावतरति ।

2. र्वचनीय 3. न्मा B.

भावशुद्धिः

ऐकात्म्येति ॥ विरोधिमात्रं निवर्तकम् , न विरोधिजन्म; व्यतिरेका- P. 11-20
भावात्, अस्ति च स्वरूपविद्या विरोधिनीति, अत्राह—न खल्विति ॥ P. 11-21

विद्या चेत्, अविद्याविरोधिन्येवेति, अत्राह—विरोधे वेति ॥ P. 11-22
श्रवणादिजन्यमात्मज्ञानमविद्यानिवर्तकमिति, अत्राह—न चेति ॥ आग- P. 11-23
न्तुकस्यापि तस्य ब्रह्मस्वभावत्वाद् नाद्वैतविरोधः, अत्राह—आगन्तुक- P. 11-24
स्येति ॥ ऐकात्म्यस्याभ्युपायः=अभ्युपगमो येषां तेषाम्; ऐकात्म्याभ्यु-
पगन्तृणामित्यर्थः ॥

भ्रान्ति-संशयाज्ञानज्ञानानामैकाधिकरण्यात् जीवाश्रयमज्ञानं ब्रह्मविषयं श्रवणादिजज्ञानेन निवर्त्यमिति मनसि कृत्वा परिहरति—
अत्रोच्यत इति ॥ अनादौ जीव-ब्रह्मविभागे जीवविभागमेवाविद्या P. 12- 2
कथमाश्रयत इति, अत्राह—तद्धीति ॥ नित्यप्रकाशम्=सदा सर्वज्ञम् ।
कुत इति ? अत्राह—अनागन्तुकेति ॥ अनागन्तुकार्थम्; अनागन्तुक- P. 12- 3
ज्ञानत्वादित्यर्थः । नित्यज्ञानत्वं जीवस्यापि समानमिति, अत्राह—अन्यथेति ॥ अनाद्यविद्याश्रयत्वेन तस्याज्ञत्वानुभवात्, ब्रह्मणश्च सर्वज्ञत्वश्रवणात्, ब्रह्मणश्चाज्ञत्वेऽनिर्मुक्तिप्रसक्तेरित्यर्थः ॥

एकजीववादिनां मतमुत्थापयति—अथेति ॥ न तावद् जीवा P. 12- 4

अभिप्रायप्रकाशिका

अस्त्वनादेरपि निवर्तकहेतूपनिपाते निवृत्तिः । ऐकात्म्ये तदभावान्नाविद्यानिवृत्तिरिति शङ्कते—ननु स्वाभाविकमिति ॥ तदेव प्रपञ्चयति—न खल्विति ॥ इहाप्यन्तःकरणवृत्तिर्ब्रह्माकारा निवर्तिकेत्याशङ्क्य सापि ब्रह्मव्यतिरिक्ता, उताव्यतिरिक्तेति विकल्प्य क्रमेण दूषयति—न च विद्यान्तरमिति । एतद्भट्टवार्तिकेन सङ्गृह्णाति—तदुक्तमिति ॥

विरुद्धहेतूपनिपातं वक्तुमुक्तमनुस्मारयति—उक्तमेतदिति ॥ विशुद्धम्=सुख-दुःख-मोहास्पृष्टम् । अत एवाविद्यान्वयायोग्यम् । अविद्याविरोधित्वादप्यविद्यान्वयायोग्यमित्याह—नित्येति ॥ तत्सद्भावे तन्निवर्तको हेतुरपि दुर्लभः स्यादित्याह—अनागन्तुकार्थमिति ॥ विपक्षे दोषमाह—अन्य-

भावशुद्धिः

ब्रह्मणस्तत्त्वतो भिद्यन्ते, किं तु ब्रह्मणः कल्पनाभिन्नाः, तथा सति
P. 12-5 किमेभिरन्तरागामिभिः? ब्रह्मण एव काल्पनिकौ संसार-मोक्षावित्यर्थः।
दूषयति—एकेति[1] ॥ हेतुमाह—यत इति ॥ अतीतानन्तकल्पेष्वनन्त-
जीवानां मुक्तत्वादिदानीं संसारानुपलम्भोऽनेकजीववादिनामपीति,
P. 12-6 अत्राह—तत्रेति ॥ तस्मिन्=ब्रह्मणीति यावत्। सर्वविभागप्रत्यस्तमये=
अविद्या-तत्कार्यनिवृत्तावित्यर्थः। यथा कल्पानामतीतानामानन्त्येऽपी-
दानीं कल्पोपलम्भः, तथाऽनन्तानां मुक्तत्वेऽपि संसारिणामुपलम्भ
इत्यर्थः। तस्माद् ब्रह्मणो बन्ध-मोक्षासम्भव इत्युपसंहरति—तस्मादिति ॥

जीवस्य जीवान्तरदृश्यत्वं चेत्, तद्दृश्यत्वात् तदविद्याकल्पित-
P. 12-7 त्वम्; रजतवत्, अदृश्यत्वं चेत्, न जीवभेदसिद्धिरिति, अत्राह—तेषां
चेति ॥ तद्दृश्यत्वस्य कल्पितत्वेन व्याप्तिः, न तदविद्याकल्पितत्वेन,
व्यभिचाराभावे विशेषणस्य व्यापकत्वेन कल्पितत्वात्, अन्यथा प्रयो-
जकत्वोपपत्तौ प्रमेयकार्यान्वितत्वमपि प्रयोजकं स्यात्। दृश्यत्वमात्र-
मविद्याकल्पितत्वप्रयोजकम्, यथा बीजमात्रमङ्कुरमात्रप्रयोजकम्;
कलमबीजं कलमाङ्कुरप्रयोजकमिति चेत्, न; तत्र बीजान्तरप्रयुक्ताङ्कुरा-
न्तरस्य व्यावर्तनीयस्य सत्त्वात् अत्रापि जीवान्तरप्रयुक्ताविद्याकल्पित-
व्यवच्छेदाय कल्पितत्वविशेषणे प्रतीतस्य व्यवच्छेद्यविशेषणानर्थक्यात्
जीवान्तराविद्यान्तरासिद्धेः। अन्यथा प्रतीतव्यवच्छेद्यनिवेशना। जीवा-
P. 12-8 नामप्यजडबोधरूपत्वाद्; ब्रह्मणीव नाविद्यासंभव इति, अत्राह—न हीति।

अभिप्रायप्रकाशिका

थेति ॥ अत्रैवाचार्यैकदेशिनां मतमाह—अथेति ॥ जीवभेदकल्पना यत्र, तत्रैवास्त्वविद्याकल्पना, किमन्तराले जीवकल्पनयेत्यर्थः। तद् दूषयति—एकेति ॥ तदा ब्रह्मण एकस्यैव बन्ध-मोक्षौ, इत्येकमुक्तौ सर्वमुक्तिरित्यर्थः ॥ अविद्योपधानकल्पितानां तदंशानां मुक्ति-संसारौ, तद् न सर्वमुक्तिप्रसङ्ग इति चेत्, हन्त! तर्हि ब्रह्मांशानामेव जीवत्वादस्मन्मतमेव स्वीकृतं त्वयापि, ततो न विवाद इत्युपसंहरति—तस्मादिति ॥ यदुक्तम्—विरुद्धहेतूपनिपाताभावादनिवृत्तिरिति, तत्राह—तेषां चेति ॥ विद्याया आगन्तुकत्वं दर्शयति—न हीति ॥

1. (क) एकजीववादो न मण्डनसंमतः

भावशुद्धिः

जीवानामजडबोधाभासत्वात्तेष्वविद्योपपत्तिः, अतो विलक्षणहेतुज्ञानोदयेऽविद्यानिवृत्तिरित्यर्थः । बोधप्रतिविम्बेऽपि नाबोधसंभव इति, अत्राह ---अविद्येति ॥ अवदातमुखप्रतिविम्बे श्यामतेवेत्यर्थः ॥ "बहवो ज्ञान- P. 12-9
तपसा पूता मद्भावमागताः" इति स्मृतेर्विद्योदये तन्निवृत्तिरित्याह—तस्या इति ॥ जीवानां ब्रह्माभेदात् कथं तेष्वविद्येति न वाच्यम्, परिहृतत्वादित्याह—अव्यतिरेकेऽपीति ॥ P. 12-10

आगन्तुकविद्यास्वरूपं पृच्छति—केनेति ॥ श्रवणादिजन्यज्ञाने- P. 12-11
नेत्याह—श्रवणेति ॥ इयं श्रवणादिलक्षणा अविद्या, इति कथमविद्योच्छेदाय प्रभवति ? न हि तदेव तदुच्छेदाय कल्पते । अविद्यान्तरोच्छेदकत्वे वा तदुच्छेदिकायाः कुतः समुच्छेदः ? इत्याशयवान् पृच्छति—
कथमिति ॥ उत्तरमाह—योऽयमिति ॥ आत्मनीति विषयसप्तमी, P. 12-12
"नेति नेति" इति प्रतिषिद्धाखिलभेदप्रपञ्चात्मविषयोऽयं श्रुत्वा ध्यानाभ्यासः, स [1]श्रवणाङ्गतया श्रवणद्वारा साक्षात्कारमुत्पाद्य भेददर्शनं निवर्तयतीत्यर्थः । न चाभ्यास एव साक्षाद्धीसाधनमिति मण्डनमतम्; अखण्डार्थविषयवाक्यस्य तदर्थकत्वात्, अखण्डं प्रत्यगभिन्नं परोक्षमिति विरोधात् । भेददर्शननिवर्तकस्य निवर्तकान्तरमस्ति चेत्,

अभिप्रायप्रकाशिका

इतोऽप्यागन्तुकत्वं विद्याया इत्याह—अविद्यैवेति ॥ अभेदाज्जीव-परयोर्विद्याऽविद्यासाङ्कर्यमाशङ्क्याह—अव्यतिरेकेऽपीति ॥

आगन्तुकविद्यायाः स्वरूपं पृच्छति—केनेति ॥ उत्तरम्—श्रवणेति ॥ श्रवणादेरप्यविद्याकार्यत्वेनाविद्यात्वात् कथं निवर्तकत्वम् ? अविद्यात्वेऽप्यविद्यान्तरनिवर्तकतायां स्वनिवृत्तयेऽप्यविद्यान्तरमन्वेषणीयमित्यनवस्थेत्याशयवानाक्षिपति—कथमिति ॥ समाधत्ते—योऽयमिति ॥ श्रवणादेरविद्यात्मकत्वेऽपि परमार्थवस्तुविषयत्वान्निवर्तकत्वमित्यर्थः ॥

---

1. शाब्दापरोक्षवादो मण्डनसंमतः; श्रवणप्राधान्यात् । अत्र भामती ध्यानप्राधान्यवादं शाब्दपरोक्षवादं चाभिप्रैति, इति सर्वात्मना न मण्डनपक्षपातिता । अधिकं तत्र तत्र ।

भावशुद्धिः

P. 12-14 अनवस्था, न चेत्, तदनिवृत्तावद्वैतव्याहतिरिति, अत्राह—स चेति ॥
P. 12-15 एतदेव स्फोरयति—न हीति ॥ अद्वैतविषयाः श्रवणादयो भेददर्शनविरोधिनो भेददर्शनमात्रं निवर्तयन्तस्तदविशेषाच्छ्रवणादिलक्षणमपि भेददर्शनं निवर्तयन्तीत्यर्थः । भेददर्शनमात्रनिवृत्तौ किं फलतीति ?
P. 12-16 अत्राह— तथा चेति ॥ अस्य=जीवस्य, आत्मा=स्वरूपम्=ब्रह्माविर्भवतीत्यर्थः । यत्तूक्तम्—न हि तदेव तदुच्छेदाय कल्पत इति, तत्राह—
P. 12-17 यथेति ॥ द्रव्यविशेषचूर्णरजः=कतकरजः । दार्ष्टान्तिकं विशदयति
P. 12-19 —एवमिति ॥

विशेषाभावात्=भेददर्शनत्वसामान्यात् । अविद्यानिवृत्तिरेव विद्या-
P. 12-21 फलम्, न जीवस्य ब्रह्मभाव इति, अत्राह—अविद्ययेति ॥ अनादिरपि जीवब्रह्मविभागोऽविद्यातन्त्र इत्यर्थः ॥ अवच्छेदकनिवृत्तावनवच्छिन्नाप्ति-
P. 12-22 मुदाहरति—यथेति ॥ श्रवणादिकृतदर्शनस्य प्रपञ्चान्तर्गतस्य कर्तृत्वादि-
P. 12-23 प्रपञ्चनिवर्तकत्वमयुक्तम्, प्रपञ्चप्रदेशान्तरवदिति चोदयति—स्यादेतदिति ॥ अद्वैतविषयतया द्वैतनिदानाविद्याविरोधित्वात् तन्निवर्तकत्वमित्याह—भेदेति ॥ तज्जातीयस्य कथं तद्विरोधित्वमिति ? अत्राह—
P. 12-24 यथेति ॥ श्रवणादेः कर्तृत्वादेश्चाविद्याकृतत्वे कथं श्रवणादेः कर्तृ-

अभिप्रायप्रकाशिका

यदुक्तम्—स्वनिवृत्तयेऽन्यदन्वेषणीयम्, तथा चानवस्थेति, तत्राह—स चेति ॥ अद्वैतविषयाः श्रवणादयो भेददर्शनविरोधिनो भेदमात्रं निवर्तयन्तः तदविशेषात् श्रवणादिलक्षणमपि भेदं निवर्तयन्ति ; स्व-परविरोधिनां भावानां बहुलमुपलम्भादिति भावः । सामान्येन भेददर्शनप्रविलापकत्वमेवाह—न हीति ॥ तथा च नानवस्थेत्याह—तथा चेति ॥ स्वच्छः=भेदाख्यकार्यहीनः, परिशुद्धः=तत्कारणहीनः। उक्तमर्थं दृष्टान्तपूर्वकमुपपादयति—यथेति ॥ द्रव्यविशेषचूर्णरजः=कतकम्, कलुषमुदकं स्वरूपावस्थानमुपनयतीत्यन्वयः। भवत्वविद्यानिवृत्तिः, तथापि ब्रह्मभावः कथमिति ? अत्राह—अविद्ययैवेति ॥

शङ्कते—स्यादेतदिति ॥ भेदेन=श्रवणादिना । उत्तरम्—भेदेति ॥ अद्वैतविषयतया प्रतिपक्षत्वमुक्तं स्पष्टयति—व्यक्तमिति ॥ एवमुक्तावेव

भावशुद्धिः

त्वादिविरोधित्वम्? न हि तमस्तमसा विरुध्यत इति, अत्राह—व्यक्त-
मिति॥ विषयद्वारा विरोधेऽपि स्वरूपविरोधाभावाद् न कर्तृत्वादिनिवर्तक-
त्वमिति, अत्राह—यथेति॥ पयः=कषायोदकम्। पीयमानपयोगतमौषध- P. 12-25
द्रव्यमेव कुक्षिस्थमुदकं जरयति, न तु तत्पय इत्याशङ्क्योदाहरणान्तर-
माह—यथा चेति॥ विषं=स्थावरजम्, विषान्तराणि=जङ्गमजानीत्यर्थः। P. 13-1
विषस्य विषान्तरनिवर्त्तकत्वं दृष्टत्वादुपपद्यते, न तु[1] श्रवणादेर्भेदमात्र-
निवर्तकत्वम्; मानाभावादिति, अत्राह—यथोक्तमिति॥ P. 13-2

ज्ञानकर्मसमुच्चयज्ञापकोऽयं मन्त्रो न यथोक्तार्थे मानमिति,
अत्राह—एतदुक्तमिति॥ संबन्धमात्रविवक्ष[2]या सहभावः अभिहितः, P. 13-5
उपेयोपायभावश्च संबन्ध इत्यर्थः। तदुपपादयति—नेति॥ श्रवणादि-
लक्षणामविद्यामन्तरेण ब्रह्मस्वरूपविद्योदयो नास्तीत्यर्थः। शङ्कोत्तरत्वेन
तृतीयपादमवतारयति—साध्या तर्हीति॥ उदाहृतमन्त्रवाक्ये प्रति- P. 13-6
बन्धनिवृत्त्यौपचारिकसाध्यत्वमपि न प्रतीयत इति, अत्राह—एषोऽर्थ- P. 13-7
इति॥ मृत्युं तीर्त्वेति मृत्युनिवृत्तिः श्रुतेति, अत्राह—मृत्युरिति॥ P. 13-8

अभिप्रायप्रकाशिका

चोद्यपरिहारावनूद्याविद्याविशेषेणाविद्याविशेषस्य निवृत्तौ प्रमाणमाह—यथोक्त-
मिति॥

ननु—अन्य एवार्थोऽस्मिन् मन्त्रे प्रतीयते, न भवदुक्त इति, अत्राह—
एतदुक्तमिति॥ ब्रह्मस्वभावज्ञानस्यैव विद्याशब्देन त्वया वक्ष्यमाणत्वात् तस्य
चाविद्योपायत्वकथनात् कृतकत्वं प्राप्तमिति शङ्कते—साध्येति॥ एतदुत्तरत्वेनो-
त्तरार्धमवतारयति—अत आहेति॥ प्रतिबन्धनिवर्तकत्वेनाविद्या श्रवणादि-
लक्षणा तद्रूपा, न तु साक्षात्तत्स्वरूपसाधकत्वेनेत्याह—एषोऽर्थ इत्या-
दिना। ननु—अत्र मृत्योरेव निवृत्तिरुच्यते न अविद्याया इति, अत आह—
मृत्युरिति॥ चतुर्थपदस्यार्थमाह—विद्ययेति॥ विद्ययेतीत्थम्भावे तृतीया।
तेन विद्यास्वभावममृतत्वं लभत इत्यर्थः॥

---

1. नात्र A. 2. क्ष A.

भावशुद्धिः

P. 13- 9 (विद्ययाऽमृतमश्नुत इत्येतद् [1]व्याकरोति)—तस्यामिति ॥ विद्ययेति तृतीयाया इत्थंभावोऽर्थ इति, अत्राह [इत्याह]—विद्यारूपेति ॥ देहाभिमाननिबन्धनकर्मणस्तन्निवर्तकज्ञानेन साहित्यायोगात् । अन्तरेण कर्मानुष्ठानं स्वरूपावस्थाने दृष्टान्तमाह—स्फटिकेति ॥ उपाध्याश्रयः=उपाधिर्निबन्धनं कारणं यस्यारोपितलौहित्योपरागस्य, तत्त्यागादित्यर्थः ॥

प्रकाश्य-प्रकाशकत्वेन संबन्धो विद्याविद्ययोस्सहभाव इत्यर्थान्त-
P. 13-11 रमाह—अन्य इति ॥ श्रवणादिलक्षणाविद्यायाः स्वरूपविद्याप्रकाश्यत्वं साधयति—तथा हीति ॥ प्रकाशाभावेऽसिद्धिप्रसङ्गात् । असिद्धौ को दोषः इति ?
P. 13-12 अत्राह-तदभाव इति ॥ भेद-तद्दर्शनयोर्जडयोरजडप्रकाशादेव सिद्धिर्यत इति। फलितमाह—तस्मादिति ॥ सर्वावभासकमात्मचैतन्यमित्यत्र मानमाह—
P. 13-14 यथोक्तमिति ॥ तर्हि भास्य-भासकभावाद्भेदप्रसक्तिः, अत्राह—किन्त्विति ॥ अविद्यानिबन्धनः प्रकाश इति । पूर्वेणान्वयः ॥ [2]नैतदपि स्वोत्प्रेक्षामात्रमित्याह—यथेति ॥ सर्वं दर्शनम्=अद्वैतज्ञानं ब्रह्मरूपम् । अन्यूनम्=अपरिच्छिन्नम्=अविकल्पम्=कर्तृत्वादिविकल्पहीनम्, विकल्पितमिव=विभक्तमिव, आन्तरः पुरुषः=जीवः, अभिमन्यते=यथा पुरुषं स्थाणुत्वेनैवं ब्रह्मापि मन्यत इत्यर्थः ॥ विद्याशब्देन श्रवणादिकमादायार्थान्तर-
P. 13-15, 16 माह—तथेति । हेतुमाह—श्रोतृ-श्रवणेति । अविद्यया मृत्युमित्या-

अभिप्रायप्रकाशिका

ननु—भेददर्शनस्य स्वयमेव प्रकाशरूपत्वाद् न प्रकाशान्तरापेक्षेति, अत आह—तस्याभाव इति ॥ अन्तःकरणवृत्तिरूपस्य जडत्वात् 'नासाक्षिका सत्त्ववृत्तिः' इति न्यायेन चित्प्रकाशापेक्षाऽस्त्येवेत्यर्थः ॥ तर्हि द्वैतापत्तिरिति, तत्राह—तस्मादिति ॥ तर्ह्यलं विद्यया ; तस्य सदा स्वत एव प्रकाशमानत्वादिति, अत आह—किन्त्विति ॥ उक्तार्थेऽभियुक्तवचनमाह—यथोक्तमित्यादिना ॥

प्रकारान्तरेण व्याचष्टे—तथेति ॥ अत्र ब्रह्मविद्या ब्रह्मस्वरूपविषयान्तःकरणवृत्तिः, अविद्या तु श्रवणादिलक्षणा, तया विभागदर्शनं मृत्युं तरति ; तस्या अविद्यात्वेऽपि ब्रह्मविषयतया बलवत्त्वादित्यर्थः ॥ ननु—विद्यैवान्तःकरण-

---

1. अन्तर्गतं B. पुस्तके नास्ति । 2. नापि तदपि.

देरर्थान्तरमाह—तत्रेति ॥ विद्याविद्ययोर्मध्ये । अविद्यया=श्रवणादि- P. 13-17
लक्षणया । विद्याप्रत्यासन्नया=स्वरूपचैतन्यव्यञ्जकवृत्तिजनन्या ।
विभागदर्शनं तन्निदानमविद्यां निरस्य, विद्यया 'सत्यं ज्ञानम्' इति तद्रू-
पतया लक्षित इत्यर्थः । अविद्याकालुष्यनिवृत्तौ स्वरूपावस्थानं निदर्श-
यति–प्रतिबिम्बेति ॥ P. 13-18

श्रवणादेर्विद्योत्पादनद्वाराऽविद्यापनोदित्व[1]मयुक्तम्; वस्तुतोऽर्थ-
क्रियाविरहादिति चोदयति — स्यादेतदिति ॥ पूर्वसंबन्धनियमो
हेतुत्वम्, न सत्यत्वमसत्यत्वं वा (तस्य); व्यतिरेकाभावात्, अत्राह–
असत्याच्चेति ॥ विषयसत्यत्वं ज्ञानप्रामाण्यप्रयोजकम्, न कारणसत्य- P. 13-20
त्वम्, अत्राह—यथेति ॥ अनिर्धारितमिथ्यात्वस्याहेतुत्वेन व्याप्त्य-
सत्त्वात् प्रशिथिलमूलस्तर्क इति परिहरति—उच्यत इति ॥ कुतो P. 13-21
वा [व्या] प्त्यभाव इति ? अत्राह—भवति हीति । हस्त्यश्वादि- P. 13-22
लक्षणप्रीतेः, व्याघ्रादिलक्षणभयस्य । यच्चोक्तमसत्याच्चेति, (तत्)
प्रत्याह—असत्यं चेति ॥ निमित्तमित्यनुषङ्गः । उदाहरति—यथेति ॥ P. 14-1
रेखासन्निवेशविशेषो गवयात्मना मिथ्या सत्यगवयप्रतिपत्तेः, अक्षरा-
त्मना कल्पितः सत्याक्षरप्रतिपत्तेरित्यर्थः ॥

यत् स्वरूपेणासत्यम्, तदकारणमिति व्याप्तेर्न क्वापि भङ्ग
इत्याह—स्यादेतदिति ॥ आपादकासिद्धिरिति, अत्राह—ऐकात्म्येति ॥ P. 14-2
रेखाणामनुपयुक्तेन रूपेण सत्यत्वम्, उपयुक्तेन वा ? । आद्यमङ्गीकरोति

अभिप्रायप्रकाशिका

वृत्तिः भेददर्शननिवर्तिका, न त्वविद्या श्रवणादिलक्षणेति, अत आह–तत्रेति ॥

असत्यात् कार्योत्पत्तिस्सत्यप्रतिपत्तिश्च नास्तीति शङ्कतेऽभिहितमपि
प्रपञ्चयितुम्—स्यादेतदिति ॥

वैषम्यं शङ्कते—स्यादेतदिति ॥ स्वस्वरूपेणेति = गवयात्मना,
वर्णाकारेण च असत्त्वेऽपि स्वरूपेण तत्र रेखा नासत्येत्यर्थः । न रेखामात्रं
गवयादिप्रतिपत्तिहेतुः, किन्तु विशिष्टगवयाद्यात्मकम्, अतोऽयुक्तमुक्तोदाहरण-

1. मुदितत्वमुक्तम् स

भावशुद्धिः

P. 14- 3 —उच्यत इति ॥ द्वितीयं दूषयति—येनेति ॥ स्वरूपेणापि सत्यत्वं दृष्टान्ते, दार्ष्टान्तिके तत्रेति वैषम्यम्, अत आह—कार्येति ॥

P. 14- 4 वैषम्यमूरीकृत्योक्त्वा तदपि नेत्याह—अपि चेति ॥ ब्रह्मणस्स-
P. 14- 5 त्यत्वं श्रवणादेर्विद्योदये न हेतुरिति, अत्राह—तत्रेति ॥ ब्रह्मैवाविद्यया श्रवणाद्यात्मना भासमानमित्यर्थः । अन्यदन्यात्मना भासमानं
P. 14- 6 विद्यमानावेदकमित्यत्रोदाहरति—यथेति ॥ प्रतीतिविरोधानाश्वासकारणाभावेभ्यो मिथ्याज्ञानयोगाद् दृष्टान्ते न साध्यसिद्धिरिति चोद्यमुद्भा-
P. 14- 7 वयति—योऽपीति ॥ रेखागवयस्य सादृश्याद् बोधकत्वं विशदयति—
P. 14- 8 एतत्सदृश इति ॥ [रेखा[1]क्षराणां नित्यसर्वगतवर्णसादृश्या] भावात्
P. 14- 9 कथं बोधकत्वम्? अत्राह—रेखा चेति । समयः=सङ्केतः । अनुभव-
P. 14-10 विरोधेनाक्षिपति—तस्येति ॥ [इदं भाति, न भातीति[2] संविद्विप्रतिपत्तिषु परप्रत्यायने पुंसां शरणं शपथोक्तय इति, अत्राह—तथा हीति ॥
P. 14-11 कुत इति? अत्राह—अभेदेनेति ॥ आख्यातुः=प्रतिपादकस्य, तथापि श्रोता न तथा प्रतिपद्यत इति, अत्राह—प्रतिपत्तुश्चेति ॥ अभेदेन व्यपदेश इत्यनुषङ्गः ॥

असत्यान्न सत्यधीरिति तार्किकैरुच्यते, मीमांसकैर्वा । नाद्य
P. 14-12 इत्याह—तथाऽसत्यादिति ॥ यद्यप्यादर्शोदकप्रतिहतं चाक्षुषं तेजः परा-

अभिप्रायप्रकाशिका

दूषणमिति परिहरति—उच्यत इति ॥ तथापि स्वरूपसत्त्वेन वैषम्यमुक्तमिति, अत आह—कार्येति ॥

अथ स्वरूपसत्त्वेऽभिनिवेशः, तत्राह—अपि चेति ॥ तर्हि द्वैतापत्तिरिति, अत्राह—यत इति ॥ कथं तर्ह्युपायोपेयभाव इति? तत्राह—तत्रेति ॥ कथमविद्यानुबन्धस्य मिथ्याभूतस्योपायत्वमिति? तत्राह—यथेति ॥ सदृशतया सङ्केताच्च रेखाविशेषाणां गवयवर्णादिप्रतिपत्तिहेतुत्वम्, न मिथ्यारूपेणेति शङ्कते—योऽपीति ॥ अनुभवविरोधेन परिहरति—तस्येति ॥

1. एतावत्पर्यन्तभागः कुण्डलितः इति विज्ञायते । 2. संद्वि A.

भावशुद्धिः

वृत्य मुखादिना सम्बध्यमानमन्यथाकारं मुखादि प्रत्यक्षयति; तथाप्य-विपरीतविम्बस्वरूपविषयं 'विमतम् विम्बपुरस्सरम्, विम्बत्वात्; संप्रति-पन्नवत्' इति स्वग्रीवागतमुखादिविम्बानुमानमित्यर्थः। द्वितीयं प्रत्याह—शब्दाचेति ॥ न हि नगशब्दात् तरुं नागशब्दात् कुञ्जरं प्रतिपद्यमाना P. 14-13
भ्रान्ता इत्यर्थः। लौकिकान् प्रत्युदाहरति—तथेति ॥ ततश्च मिथ्याऽ- P. 14-14
हिदंशात् 'अयमहिदंशः मरणमूर्च्छादिहेतुः, अहिदंशत्वात्, देश-काला-न्तरभूताहिदंशवत्' इत्यनुमानमित्यर्थः ॥

एवं स्वमत उपनेयाभावेऽप्यपनेयभावाच्छास्त्राद्यर्थवत्त्वमुक्त्वा,
परमते तदनुपपत्तिमाह—यस्येति ॥ क्षणिकज्ञाननाशाय मुमुक्षुप्रवृत्तिः, P. 14-16
तत्रातिशयाधानाय वा नाद्य इत्याह—[क्षणिकस्येति। नान्त्य P. 14-17
इत्याह]—अनाधेयेति ॥ तत् कुत इति? अत्राह—एकस्मिन्निति ॥ P. 14-18
पूर्वमविशेषवदिदानीं विशेषवदिति[1] विभागाभावे हेतुमाह—क्षणस्येति ॥

अभिप्रायप्रकाशिका

आस्तां वा रेखोदाहरणम्, उदाहरणान्तरं तु सम्प्रतिपन्नमस्तीत्याह—तथेति ॥ विम्ब-प्रतिबिम्बयोरैक्यात् प्रतिबिम्बस्य च दृष्टत्वात् कस्य तत्रानुमानमिति? अत्राह—विशिष्टेति ॥ तत्कालादृष्टतरुशिखरस्थितभागा-देरित्यर्थः ॥ मीमांसकान् प्रत्याह—शब्दाचेति ॥ अस्तु, तथापि कथं सत्यप्रतिपत्तिरिति? तत्राह—ततश्चेति ॥ कथमव्याप्तस्य गमकत्वमिति? तत्राह—कालादीति ॥ गुलिकोदयादिसमये, वल्मीकादिदेशे च दष्टो न जीवतीत्यादि गारुडिकानां सत्याहिदंश इव मिथ्याहिदंशेऽप्यनुमानमपि कथं दुष्टमित्यर्थः ॥

स्वपक्षे परोक्तं दोषं परिहृत्य परपक्षे तमापादयति—यस्यैवेति ॥ उपप्लवनिवृत्तिरपि स्वरसभङ्गुरस्य स्वत एव सिध्यति, इति तदर्थो व्यापारो व्यर्थ इत्यर्थः। यदेव विज्ञानमुपप्लुतम्, तस्यैवोपप्लवनिवृत्तये व्यापारः? उतानुप-प्लुतज्ञानान्तरोदयाय? न तावदाद्य इत्याह—अनाधेयेति ॥ तदेवोपपादयति—एकस्मिन्निति ॥ तत्रैव हेतुः—क्षणस्येति ॥ क्षणमात्रावस्थायिनो

1. विशेषाभावे A.

भावशुद्धिः

पूर्व-परविभागरहितकालकला क्षणः। तस्य क्षणद्वयवर्तिविशेषाविशेषवत्त्व-
संबन्धविरोधादित्यर्थः। सन्ततेः स्थिरत्वादुपनेयादिक्रमस्तीति चोद-
P. 14-19 यति—यदीति॥ यस्य संसारः, तस्य तन्मोक्षः। स च सन्तानिक्षण
इति परिहरति—तदसदिति॥ सन्ततिरपि तथा किं न स्यात्? अत्राह
P. 14-20 —न चेति॥ अर्थक्रियाकारित्वे सत्त्वप्रसक्तेरित्यर्थः। स्यातामवस्तुन
P. 14-21 एव बन्ध-मोक्षाविति, अत्राह—कथं वेति॥

सन्ततेरपरमार्थत्वेऽपि तुच्छविलक्षणत्वाद् बन्ध-मोक्षाविति शङ्कते
P. 14-22 —अथेति॥ अत्रानिष्टं वक्तुं पर्यवसितार्थं दर्शयति—कल्पितस्तर्हीति॥
P. 15- 1 परस्यानिष्टमाह — तदेतदिति॥ भवद्भिः किमभिधीयते इति?
अत्राह—अविद्या उक्तकार्यान्तःकरणगोचरचैतन्याभासाश्रयावित्यर्थः।
किं च मुक्ति-संसारयोर्वास्तवत्वमिच्छता क्षणिकज्ञानमिष्टम्; तच्च सन्त-
P. 15- 2 तेरेव मुक्ति-संसाराविति वदतो निष्फलमित्याह—अपि चेति॥ कुतु

अभिप्रायप्रकाशिका

निरवयवस्योपप्लुतानुपप्लुतत्वविशेषो न कालभेदेन, नापि प्रदेशभेदेन संभवतीत्यर्थः॥

द्वितीयस्तु बन्ध-मोक्षयोर्वैयधिकरण्यप्रसक्तेरेवानुपपन्न इति तमुपेक्ष्य पक्षान्तरमुपपादयति—यदि मतमिति॥ यस्य संसारः, तस्य मुक्तिः, न च सन्ततिः संसारिणी, अवस्तुत्वेनाचेतनत्वादिति दूषयति—तदसदिति॥ मुक्ति-बन्धाश्रयत्वायोग्यत्वादपि नोभयं तत्रेत्याह—कथं वेति॥

भवन्मते सर्वं कल्पितम्, अस्मन्मते सन्ततिरेवेति विशेष इति, अत आह—कल्पितविषयौ चेति॥ ततः समौ पर्यनुयोग-परिहाराविल्याह —तदेतदिति॥ किं तदिति? अत्राह—उक्तमेतदिति॥

न चैवं तुल्यतायामप्यस्मन्मतेन भवन्मतस्योपपन्नता। तथाहि—क्षणिकविज्ञानमभ्युपगच्छताऽपि बन्ध-मोक्षौ स्थायिसन्तानगतावभ्युगतौ चेत् तत्रापि तव तौ न सिद्ध्यत इत्याह—अपि चेति॥ ततः किमिति? तत्राह—

भावशुद्धिः

तथा हीति ॥ सन्ततेरनादित्वाद् नोत्पादनलक्षणो मोक्षः, नापि P. 15- 4
सन्ततिगतसंसारस्योच्छेदलक्षणो मोक्षः पारमार्थिकः। वस्तुनो हि पारमार्थिकनिवृत्तिः। न च सन्तति-संसारौ वस्तुसन्तौ ; सन्ततेरवस्तुत्वादित्यर्थः। विशुद्धचरमक्षणो[1]दयस्तर्हि मोक्षः स्यात्, अत्राह —अन्त्येति ॥ P. 15- 5

वस्तुनो जन्म-नाशोपगमात्कथं न [2]तदुपपत्तिः? इति तत्साधनाय विकल्पयति–स हीति ॥ आद्यं दूषयति–आरम्भ इति ॥ द्वितीयं निराह– P. 15- 6
अनारम्भ इति ॥ तर्हि सन्तत्युच्छित्तिर्मुक्तिरिति, अत्राह—तस्मिन्निति ॥ P. 15- 7
अर्थक्रियाकारित्वलक्षणसत्त्वविरहेणेत्यर्थः ॥

कल्पद्वयोक्तदूषणपरिहारमाशङ्कते—अथेति ॥ कार्यस्य सन्ता- P. 15- 8
नान्तरे जनना[3]च्चरमत्वं सत्त्वं चेत्यर्थः। अगृहीतपराभिसन्धिस्सिद्धान्त्याह—सतीति ॥ हेतु-फलनैरन्तर्यरूपत्वात्सन्ततेरिति हेतुमाह—न P. 15- 9
हेत्विति ॥ परः स्वाभिप्रायं प्रकटयन्नाह–न हेतु-फलेति ॥ चरमक्षणः सार्वज्ञ- P. 15-10
ज्ञानस्योपादानतया हेतुरिति, अत्राह–न चेति ॥ उपादानं हि तदुच्यते, P. 15-11
बहुषु कारणेषु यस्य सन्ताननिवृत्तिलक्षणा विक्रिया कार्यसन्ततिप्रसवः ; तद्यथा मृत्पिण्ड-चक्र-कुलाल-सलिल-सूत्रेषु कारणेषु मृत्पिण्डसन्त-

अभिप्रायप्रकाशिका

तथा हीति ॥ सन्ततेरवस्तुत्वान्नोत्पादः, संसारस्यानादित्वान्नोच्छेदो वास्तवः, अतोऽनुपप्लुतज्ञानसन्तानोदयो मोक्षः सोपप्लवसन्तानविच्छेदो वा मुक्तिरित्ययुक्तमित्यर्थः। उच्छेदाभावे हेत्वन्तरमाह—अन्त्येति ॥ सर्वशक्तिविरहादर्थक्रियाभावात्, तल्लक्षणत्वाच्च सत्त्वस्येत्यर्थः ॥ तदभावे=तेषां सन्तानिनामभाव इति यावत् ॥

दोषद्वयं परिहर्तुं शङ्कते—अथेति ॥ उत्तरम्—सतीति ॥ तदुपपादयति—न हेत्विति ॥ विशेषं शङ्कते—न हेतु-फलेति ॥ अनुपादानं चेत्, कथं हेतुरिति ? अत्राह—आलम्बनेति ॥ रूपादिवद्विषयतयैव कारणम्,

1. रमोदयक्षण-A. 2. तदनुप-B. 3. संपत्तेश्चरमत्वं सत्त्वं चे-B.

भावशुद्धिः

तिनिवृत्तिरूपा विक्रिया। अतो घटसन्तानो मृत्पिण्डोपादानः, न तु
कुलालाद्युपादानः; तत्सन्ततेस्तदा तादवस्थ्यादित्यर्थः। कथं तर्हि तस्य
P. 15-12 हेतुत्वम्? अत्राह—आलम्बनेति॥ सार्वज्ञज्ञानविषयतया हेतुश्चरमक्षण
इत्यर्थः। किं तर्ह्युपादानमिति? तदाह—समनन्तरेति॥ जनकैराधेयातिशय-
भेदस्य कार्यस्य सकलविशेषाधिकरणसमर्थ आत्मा यतो भवति, तदु-
पादानम्, यथा चक्षुरादिभ्यश्चक्षुर्विज्ञानमर्थाभासतास्पष्टाभा[1]सतारूप-
ग्रहणप्रतिनियममुपकारं स्वीकुर्वद् बोधरूपत्वेन समनन्तरप्रत्ययप्राप्तेन
P. 15-13 ज्ञानं भवत् समनन्तरप्रत्ययोपादानमित्यर्थः। चरमक्षणस्यापि सार्वज्ञ-
ज्ञानापेक्षया समनन्तरपूर्वभावोऽस्तीति, अत्राह—स्वसन्ततीति॥ सार्वज्ञ-
ज्ञानानन्तरविक्रियया[2] तदुत्पादादित्यर्थः। तत्किमकारणमेवास्य
P. 15-14 चरमक्षणः? नेत्याह—आलम्बनप्रत्यय इति॥ तदेतद् दूषयति—यदीति॥
बोधरूपप्रतिलम्भो विज्ञानस्य यस्मात् तदुपादानं यदि, सार्वज्ञादि-
विज्ञानाच्चरमचित्तादपि समम्, ज्ञानत्वेनानन्तरत्वाच्चाव्यवहितत्वेने-

अभिप्रायप्रकाशिका

नोपादानतयेत्यर्थः। किं तर्ह्युपादानमिति? तत्राह—समनन्तरेति॥ ननु चरमक्षण एव समनन्तरप्रत्ययः किं न स्यादिति? अत आह—स्वसन्ततीति॥ अव्यवहितपूर्वक्षणवर्तित्वेऽपि भिन्नसन्तानवर्तित्वान्नोपादानत्वमित्यर्थः॥

एवमपि चरमक्षणो नानुपयोगीत्याह—आलम्बनेति॥ चतुर्विधान् हेतून् प्रतीत्य चित्त-चैत्ता उत्पद्यन्त इत्यङ्गीकारादालम्बन-सहकारि-समनन्तरप्रत्ययैरेकैकस्य जन्म-नैकस्मादेव समनन्तरप्रत्ययादित्यर्थः। कार्यस्य कारणेन तादात्म्य-समवाययोः परैरिवानभ्युपगमाच्चरमक्षण-सार्वज्ञप्रत्यययोरनुपप्लुतत्वेन सारूप्यसम्भवाच्चाव्यवहितपूर्वोत्तरभावयोस्तयोः सम्भवत्येवोपादानोपादेयभाव इति मन्वानो दूषयति—यदीति॥ सार्वज्ञ्यासार्वज्ञ्यवैलक्षण्यादुपादानोपादेयभावाभावे नैकसन्तानतेति शङ्कते—योऽपीति॥ परिहरति—

1.-ष्टा-B. 2.-यायाः B.

भावशुद्धिः

त्यर्थः । तद्विक्रियया[1] तदुत्पत्तिस्सर्वज्ञचित्तविक्रिययैव चरमचित्तवि-
क्रियेत्यविशेषो द्रष्टव्यः । विषयाकाररागाद्युपरक्तालयविज्ञानस्य विषया-
कारतया सालक्षण्याद्विशुद्धधीजन्म निर्वाणं विलक्षणधीजननादिति,
अत्राह—कथञ्चिदिति ॥ शुद्धचित्तोदयो लयचित्तस्य न विच्छेदः ; P. 15·16
क्षणिकत्वादिसालक्षण्यादित्यर्थः ॥

विज्ञानपदनिरस्यमतमाह—केचिदिति ॥ समुत्खातास्समुन्मूलि- P. 15·18
तास्सकला विशेषगुणाः—बुद्धि-सुख-दुःखेच्छा-द्वेष-प्रयत्न-धर्माधर्म-भावना
यस्य, तस्मिन् स्थितिं मुक्तिमाहुरित्यर्थः । समुत्खाताखिलविशेषगुणा-
वस्थाया ब्रह्मपदप्रवृत्तिनिमित्ततामाह—सा हीति ॥ गुण-गुणिभेद- P. 15·19
कल्पनागौरवाद् वरं ज्ञानरूपत्वमिति, अत्राह—ज्ञानेति ॥ संनिहितो P. 15·20
विविधो ज्ञेयभेदो यस्य, तस्य विषयसाक्षात्कारकृतः सुख-दुःखादिसम-
वायः संसारो महत्तरः स्यात् । सर्वगतत्वं संनिहितविषयत्वे हेतुः,
नित्यत्वं देहाद्यनपेक्षत्वे हेतुः । स्वरूपज्ञानस्यासङ्गस्य विषयाद्युपरागात्
नोक्तावद्यमित्याह—अथेति ॥ ज्ञायतेऽनेनेति ज्ञानमिति तन्निरुक्तेर- P. 15·2.

अभिप्रायप्रकाशिका

तस्येति ॥ रूपज्ञानप्रबन्धमध्ये रसज्ञानप्रबन्धोदये सन्तत्युच्छेदः प्रसज्ये-
तेत्यर्थः ॥ रूप-रसप्रत्ययसन्तानयोः सोपप्लवत्वसारूप्यादेकसन्तानत्वे च सर्वत्र
किंचित्सारूप्यसम्भवान्न सन्ततिरुच्छेद्येतेत्याह—कथञ्चिदिति ॥

विज्ञानपदव्यावर्त्याशङ्कामाह—केचित्त्विति ॥ ब्रह्मपदव्युत्पत्तिनिमित्तं
दर्शयति—सा हीति ॥ "विज्ञानं ब्रह्म" इति शास्त्राद्विज्ञानस्वरूपं ब्रह्मेति
श्रूयते, तत् कथं तदाऽसौ ज्ञानाभाव इति ? सत्यम्, युक्तिबाधात्तदाश्रयविषयो
ज्ञानशब्द इत्याशयेनाह—ज्ञानेति ॥ सर्वगतस्येति सर्वैः सम्बन्धमाह ।
नैरपेक्ष्यहेतुः—नित्यत्वादिति ॥ संसारः स्यादिति ॥ जीवस्य सुख-दुःख-
साक्षात्कारलक्षणत्वात्संसारस्येत्यर्थः ॥

सर्वगतस्यापि स्वतोऽसङ्गस्यात्मनोऽन्तःकरणाभावेन विषयसम्बन्धा-
भावाद् न विषयविज्ञानं मुक्ताविति शङ्कते—अथेति ॥ परिहरति—न

1. द्वितीयया A.

भावशुद्धिः

विषयस्य ज्ञानत्वं न स्यादित्याह—न तर्हि इति ॥ ज्ञप्तिः[1]=ज्ञानमिति
P. 15-23 भावव्युत्पत्तिर्लघीयसीति, अत्राह—सकर्मको हीति ॥ ज्ञानक्रिया हि सकर्मिका कर्मणा व्याप्ता, सा कर्माभावे न स्यात्; धूम इव धूमध्वजाभाव इत्यर्थः ॥

P. 15-24 आत्मा, न ज्ञानम्, द्रव्यत्वात्, घटवदिति मत्वा चोदयति—कुत इति। आगमविरोधेन प्रत्याह—श्रूयत इति ॥ 'कृत्स्नः प्रज्ञानघनः' इत्या-
P. 15-25 दिश्रुतिरादिपदार्थः । सकर्मको हीत्युक्तं प्रत्याह—न चेति ॥ क्रिया हि कर्मणा व्याप्ता । न च नित्यस्य ब्रह्मणः स्वभावो ज्ञानं क्रियेत्यर्थः । अक्रियात्वेऽपि संनिहितज्ञेयभेदप्रकाशकत्वात् महत्तरसंसारापत्तिरुक्तेति, अत्राह—यथेति ॥ अदाह्यमाकाशादिकं च न दहतीत्यर्थः। स्वरूपज्ञानस्या-संनिहितमयोग्यं च नास्तीति चेत्, तर्हि जीवस्य महत्तरसंसारापत्तिः,
P. 15-26 उत मुक्तस्य, ब्रह्मणो वा? नाद्य इत्याह—यथा चेति ॥ तच्छायापत्त्या=
P. 16- 2 तत्प्रतिबि[1]म्बाकारेणेत्यर्थः । दार्ष्टान्तिकमाह—एवमिति ॥ भुङ्क्ते शब्दादि-जनितसुखदुःखसाक्षात्कारो भोगः । इन्द्रिजन्यवृत्त्यपेक्षत्वे किं स्वरूप-
P. 16- 3 ज्ञानेनेति, अत्राह—तच्छायेति ॥ अर्थाकारधीवृत्तिप्रतिबिम्बकत्वेन नित्यचैतन्याभासोऽपीत्यर्थः । एवं च सर्वगतत्वहेतुरसिद्ध इत्याह—
P. 16- 4 अतश्चेति ॥ द्वितीयकल्पं निराह[2]—न चेति ॥

अभिप्रायप्रकाशिका

तर्हीति ॥ विषयास्फुरणेऽप्यात्मस्वभावो ज्ञानं किं न स्यादिति? अत आह—सकर्मको हीति ॥

बद्धस्य बृहत्तरः संसारः, किं वा मुक्तस्य? नाद्यः; बद्धस्यान्तःकरणाद्यु-पहिततया सर्वविषयसंबन्धासम्भवादिति सदृष्टान्तमाह—यथेति ॥ क्रियायां दृष्टान्तमुक्त्वा प्रकाशने दृष्टान्तमाह—यथा च स्फटिकेति ॥ नापि द्वितीय इत्याह—न च मुक्ताविति ॥ मुक्तौ विषयवेदनहेतोर्मनसोऽभावात्, ब्रह्मणश्च

1. बिम्बस्वी-B. 2. चष्टे-B.

भावशुद्धिः

महत्तरसंसारापादनं परविषयमिति परिशिष्टकल्पमवलम्बते—स्यादेतदिति ॥ परस्य साक्षिणः[1] कर्माभावाद् न तन्निबन्धनो बन्ध इति परिहरति—उच्यत इति ॥ जीवस्याप्यपरिच्छिन्नत्वादुक्तदोष इत्या- P. 16-5
शङ्क्य, सर्वगतत्वं स्वीकृत्यापि परिहरति—यस्यापीति । ज्ञस्याचिद्रूपस्यात्ममनस्संयोगादसमवायिकारणाद् अदृष्टादिनिमित्तादात्मनि समवायिकारणे ज्ञानं जनितमित्यर्थः । तन्मतेऽनिष्टमाह—तस्यापीति ॥ P. 16-6
एतन्मनस्संयोगजो भोगोऽस्य, नान्येषामिति नियमो न स्यात् ; मनस्संयोगस्य साधारण्यादित्यर्थः । मनस्संयोगसाधारण्येऽपि भोगव्यवस्था किं न स्यात् ? अत्राह—मनस्संयोगेति ॥ मनोविषयाणामात्मानं P. 16-7
प्रति विषयत्वे मनस्संयोगो द्वारमित्यर्थः ॥

असाधारणं कर्मात्मनामस्ति, तेन यदात्मकर्मनिमित्तमनस्संयोगाद् भोगः, स तस्याऽऽत्मनः, नान्यस्येत्याशङ्कते—अथेति ॥ अदृष्ट- P. 16-8
स्यापि सर्वात्मसाधारणमनस्संयोगजस्य नासाधारण्यम् । अभ्युपेत्याप्याह—सेति । (अस्तु)व्यवस्थितो भोगः ; तथापि चिद्रूपस्यात्मनो मुक्त-

अभिप्रायप्रकाशिका

सर्वज्ञत्व-सर्वकर्तृत्वादेर्जीवाज्ञानकल्पितत्वेन तदज्ञाननिवृत्तौ निवृत्तेः ब्रह्मरूपेणापि न सर्वविषयभोगप्रसक्तिरित्यर्थः ॥

परिहृतमपि चोद्यं प्रतिबन्दिन्यायेन परिहर्तुमुत्थापयति—स्यादेतदिति ॥ प्रतिबन्दिन्यायमेव दर्शयति—उच्यत इत्यादिना ॥ उक्तं प्रपञ्चयति—मनस्संयोगेति ॥

प्रतिजीवं कर्मभेदात्तज्जन्यजीवोपभोगस्यापि व्यवस्थेति शङ्कते—अथेति ॥ तुल्यमेतदितरेषामपीत्याह—सेति ॥ अद्वैतज्ञानेन विषयाणां प्रविलापनादपि न भोगप्रसक्तिर्मुक्तावित्याह—अपि चेति ॥ यदुक्तम्—ज्ञानातेः कर्मणा व्याप्तत्वात् व्यापकाभावे तद्व्याप्यं ज्ञानमपि न भवेत्—इति, तदसत् ; ज्ञानस्यात्मस्वरूपत्वाङ्गीकारात्, तस्य च तत्तद्विषयान्तःकरणवृत्त्युपधानस्य तत्तद्विषयावच्छिन्नोदय-व्ययोत्कर्षापकर्षवैलक्षण्यानामुपाधिधर्माध्यासेनैव प्रतीत्युप-

1. स्वशासिनः B.

भावशुद्धिः

P. 16-9 स्यापि दृश्योपलब्धिनिबन्धनभोगः स्यात्, अत्राह—अपि चेति ॥
P. 16-11 दर्शनाभावे दृक्स्वभावत्वविरोध इति, अत्राह—दग्धुरिति ॥ प्रकाशस्य
प्रकाश्यप्रकाशकत्वमविनाभूतमिति, अत्राह—प्रकाशस्येति ॥ आत्म-मन-
स्संयोगजन्यज्ञानव्यतिरेकेणात्मनः स्वरूपज्ञाने मानाभावात्, अङ्गीकारे
P. 16-12 ज्ञानाभावरूपस्वापविरोधाच्च न दृक्स्वभावत्वम्, अत्राह—तदुक्तमिति ॥
द्रष्टुः स्वरूपभूतदृष्टेरिति योज्यम्। आगन्तुकज्ञानाभावः, स्वापः न
ज्ञानमात्राभावः; अन्यथा साधकाभावे तदसिद्धेरित्यर्थः। मुक्तौ
P. 16-13 क्रिया-कारकभेदाभावे मानमाह—यत्र त्विति ॥ न केवलमात्मनस्सु-
खसंविद्रूपत्वे श्रुतिरेव मानम्, मुक्तिपुरुषार्थत्वमप्यन्यथाऽनुपपन्नं
P. 16-14 तत्साधकमित्याह—विज्ञानेति ॥ शून्यपक्षे स्वरूपस्यैवासत्त्वम्, अत्र तु
P. 16-15 तत्प्रतीतिमात्रस्येत्यस्ति वैलक्षण्यमिति, अत आह—न हीति ॥ अत्य-
न्तानुपलब्धं सप्तमरसादिवद् न स्यादित्यर्थः। 'न प्रेत्य संज्ञाऽस्ति' इति
प्रमाणप्रतिपन्नत्वादस्त्येवंभावः, अत्राह—कश्चेति ॥

अभिप्रायप्रकाशिका

पत्तेः। न च विषयादिव्यावर्तकभेदः स्वाभाविकभेदमावहतीत्यभिनिवेष्टव्यम्। ईश्वरवादिनामीश्वरज्ञान इव, भाट्टानां गकारव्यक्ताविव, प्राभाकराणां शुक्ल-नीलादि-व्यक्ताविव चोपाधिभेदादेव भेदावभासोपपत्तेरिति भावः। भेदोदयव्ययादि-प्रतिभासस्यौपाधिकानौपाधिकभेदादिसाधारणस्य कथमौपाधिकविषयत्वनिर्णय इति? आगमप्रामाण्यादित्याह—तदुक्तमिति। एवं स्वमतमुपपाद्य परमतं दूषयति—विज्ञानादीति। स्वरूपेण सत्त्वादात्मनः कथं न भिद्यते? अत आह—न हीति। ननु—कथमात्यन्तिकदर्शनाभावः ईश्वरेण योगिभिश्च मुक्तात्मनां प्रत्यक्षीकरणात्, स्वेन च पूर्वं भाविन्या मुक्त्यवस्थायाः प्रमाण-निर्णीतत्वादिति चेत्, सर्वत्र वर्तमानदशायां परोक्षतयाऽपरोक्षतया वा स्वेनानु-भूयमानस्यैव पुरुषार्थत्वाङ्गीकारात्। इह च नवगुणानामत्यन्तोच्छेदे तदसम्भ-वात् मुक्तावस्था नाभावाद्विशिष्यत इति भावः। भवत्वविशेषः, तथापि तथागतानामिव तत्प्रेप्सा किं न स्यादिति, अत आह—कश्चेति ॥

भावशुद्धिः

सर्वं जन्म दुःखानुषक्तमिति पश्यन् दुःखं संजिहासुः जन्मनि दुःखदर्शी [1]विषण्णो विरज्यते, विरक्तो मुच्यत इति शङ्कते—स्यादेतदिति ॥ स्वोच्छेदस्य स्वेनानुभवितुमशक्यत्वात् कथमर्थ्यत्वम् ? अत्राह— P. 16-16
दृश्यन्ते हीति ॥ भृगुपतनादिनेति शेषः । तत्रापि दुःखायतनदेहोच्छेदः P. 16-17
प्रार्थ्यते, नात्मोच्छेद इति परिहरति—सत्यमिति ॥ प्रयतन्त इति शेषः । P. 16-18
जिहासितदेहादात्मनो भेदाग्रहादात्मोच्छेद एव तत्रेष्ट इति, अत्राह—
न त्वेवमिति ॥ विविधानि=नानाविध[2]विषयजन्यानि । विचित्राणि= P. 16-19
[3]दिव्यमानुषादिरूपाणि भजन्त इति, तथोक्ताः ॥

तथापि निखिलदुःखनिवृत्तिरूपत्वात् पुमर्थत्वं मुक्तेरिति, अत्राह—तत्रेति ॥ विविधविषयसुखविच्छेदत्वादपुमर्थत्वं तथापि P. 16-19
तुल्यमिति, अत्राह—यस्येति ॥ निर्मृष्टः=निरस्तः, निखिल-दुःखेनानु- P. 16-20
षङ्गो यस्याः, सा तथा ; मुक्तिरिति शेषः । 'घटमहं जानामि'इति ज्ञातृ-ज्ञान-ज्ञेयानां भेददर्शनाद् न संविद्रूपत्वमिति, अत्राह—इत्यलमिति ॥ P. 16-22
संवेदनादिरूपमुल्लिख्यते, न तद्भेदः, प्रतियोगिधर्मिविशिष्टतदाकारानुल्लेखादित्यर्थः ॥

अक्षरपदतात्पर्यमाह—अक्षरमिति ॥ यस्यानाद्यविद्यावशाद् वर्ण- P. 16-23
पद-वाक्य-प्रकरण-काण्ड-शाखादिरूपानेकविधविवर्तभेदः सामान्यस्यैकस्य चकास्ति, सोऽयं शब्दः, तदात्मतामित्यर्थः । शब्दत्वसामान्यविवर्तवर्णरूपविशेषवचनमक्षरपदं कथमिव शब्दत्वसामान्यमाहेति ? अत्राह—विशेषेणेति ॥ पूर्वापरितोषेण-अपरिणामित्वं वेति ॥ अपरितोष-

अभिप्रायप्रकाशिका

शब्दादिविषयभेदोपभोगजन्यता विविधत्वम्, तत्राप्युत्तरोत्तरोत्कर्षो वैचित्र्यम् ; तथापि दुःखाभावात् पुरुषार्थता किं न स्यादिति, अत आह—तत्र यथेति । भवन्मतेऽपि न मुक्तानां देवाद्यानन्दभोग इति, अत आह—यस्य त्विति । परमानन्दसंवेदनावस्था मुक्तिरित्यध्याहारः ॥

---

1. निर्विण्णो निर्विद्यते, B. 2. नानाजनविषयाणि A. 3. देवादीनामानन्दरूपाणि B.

11

भावशुद्धिः

P. 16-24 कारणमाह—परिणाम इति ॥ शब्दस्य विषयविशेषस्य न विषयिरूपत्वम्, विषयान्तरवदिति शङ्कते—कथमिति ॥ श्रुतिवि(त्यनु)रोधेन प्रत्याह—
P. 17- 1 परं चेति ॥ "ओमितीदं सर्वम्" इत्यादिश्रुतिरादिपदार्थः ॥

अस्यां श्रुतावभिधेयपरापरब्रह्मधर्मः सर्वात्मत्वमोङ्कारेऽप्यध्या-
P. 17- 2 रोप्योच्यते, नोङ्कारः सर्वात्मकं ब्रह्मेति, अत्राह—न चेति ॥ कुत इति, अत्राह—कारप्रत्ययेति ॥ यतः परं कारप्रत्ययः श्रुतः, तस्य शब्दस्य ककार इत्यादौ शब्दरूपपरत्वप्रतीतेरित्यर्थः । "वर्णात्कारः" इति वर्णरूपविशेषपराच्छब्दात् कारप्रत्ययः स्मर्यते । न चेदमोमिति वर्णः, किन्तु वर्णत्रयसमुदायः, न च वर्णत्रयसमुदायः (यो वर्णः ।) न च वर्णशब्दः समुदायवचन इति, अत्राह—अवर्णादपीति ॥ शब्दार्थावगतिमूलकारणवृद्धप्रयोगदर्शननिबन्धना हि कात्यायनस्मृतिर्यथादर्शनमवस्थापनीयेति भावः ॥

एवकार इत्युदाहरणम् । परं चेत्यादिवाक्यस्य नायमर्थः,
P. 17- 4 अन्यथैव तस्य व्याख्यातत्वादिति चोदयति—नन्विति ॥ अन्यथा

अभिप्रायप्रकाशिका

शब्दात्मताम्—शब्दसामान्यात्मताम् । शब्दविशेषेषु वर्णेषु व्युत्पन्नोऽक्षरशब्दः कथमिव शब्दत्वसामान्यमाहेति, अत आह—विशेषेणेति । चिद्रूपस्याचिदात्मत्वमित्ययुक्तमित्यत्र दोषादाह—अपरिणामित्वं चेति । पूर्वावस्थाप्रच्युतिः क्षरणम्, तदभावाभिधायिनाऽक्षरशब्देन कथमपरिणामित्वमुक्तमिति ? अत्राह—परिणामे इति । लक्षणयेत्यर्थः । प्रथमं पक्षमाकाङ्क्षापुरस्सरमुपपादयति—कथमित्यादिना । घट इति घटशब्दाभिधेय इव ओङ्काराभिधेये प्रतिपत्तिः किं न स्यादिति ? अत आह—न चेति । वर्णात्कार इति वर्णमात्रे कारप्रत्ययविधानात् अकारादिवर्णत्रयसमुदाये कथं तत्प्रत्यय इति ? अत आह—अवर्णादिति । वृद्धप्रयोगबलाद् व्याकरणस्य, एवमपि वृद्धप्रयोगदर्शनान्न स दोष इति भावः ॥

मन्दाधिकारिणां प्रतिमायां विष्णुदृष्टिरिव, ओङ्कारे ब्रह्मदृष्टिर्विवक्षिता, न तु वस्तुतस्तदात्मतेति शङ्कते—नन्विति । तमेव स्पष्टयति—अस्मिन्निति ॥

भावशुद्धिः

व्याख्यामाख्याति—सर्वेति ॥ [1]निर्विशेषस्यावाङ्मनोगोचरत्वात्तद्-
दृष्टयवच्छेदकत्वेनोङ्कारोक्तिरित्यर्थः। एतद्विशदयति—अस्मिन्निति ॥ P. 17- 5
अब्रह्मण ओङ्कारस्य ब्रह्मदृष्टयोपास्यत्वे निदर्शनमाह—यथेति ॥ P. 17- 6
अतस्मिन् तद्बुद्धिः किमर्थेति, अत्राह—तथेति ॥ प्रणवं जपता P. 17- 7
[3]वाच्यतया ब्रह्मोपासितव्यमिति मतान्तरमाह—अनेनेति ॥ विधिसं-
निधिसमाम्नातस्य ध्यानाङ्गत्वमङ्गीकृत्य प्रत्याह—उच्यत इति ॥ यत्र न P. 17- 8
तच्छ्रवणम्, तत्र न त्वदुक्तमित्याह—यत्र त्विति ॥ तद्वाक्यमुदा- P. 17-10
हरति—यथेति ॥ "तद्यथा शङ्कुना सर्वाणि पर्णानि सन्तृण्णान्येव-
मोङ्कारेण सर्वा वाक् सन्तृण्णा" इत्यत्राभिधानानामोङ्कारात्मत्वमुक्त्वा,
कथं "मोङ्कार एवेदं सर्वम्" इत्युपसंहारः ? अभिधेयस्य परिशिष्टत्वात्,
अत्राह—अत्र हीति ॥ सर्वासु वाक्ष्वनुगमः=सर्ववागनुगमः, तेन तद्- P. 17-12
त्यागात्=ओङ्कारानुपक्तबुद्धिवो[4]ध्यत्वादोङ्कारात्मत्वं वाचाम्; वाच्य-
प्रपञ्चस्य वाचकमात्रत्वात् "ओङ्कार एवेदं सर्वम्" इत्युपसंहारोपपत्ति-
रित्यर्थः ॥

तादात्म्यपर्यवसितवाक्यबलादोङ्कारस्य सार्वात्म्यमुक्त्वा योगा-
ङ्गताश्रयणेऽपि सर्वात्मत्वं सिध्यतीत्याह—यत्रापीति ॥ "परं P. 17-14

अभिप्रायप्रकाशिका

अन्यस्यान्यबुद्धयोपासने कथं फलं स्यादिति? शास्त्रप्रामाण्यादित्याह—यथेति ॥

"तस्य वाचकः प्रणवः" इति प्रणवस्य ब्रह्मवाचकत्वात् तेन ब्रह्मध्यानं विवक्ष्यत इति पक्षान्तरमाह—अनेन वेति ॥ न वयमोङ्कारस्य ब्रह्मप्रतीकताम्, तद्वाचकतां वा वारयामः, किं तु वाक्यान्तरेषु ब्रह्मरूपता प्रतिपन्नेति ब्रूम इत्याशयेन परिहरति—उच्यत इत्यादिना ॥ सर्वं चोपासनापरं न तादाम्यपरमिति न नियन्तुं शक्यमित्याह—तद्यथेति ॥ अत्राप्योङ्कारस्य सर्वशब्दानुमतिरेवोच्यते, न तु तदात्मतेति, अत्राह—अत्र हीति ॥ भवतु शब्दात्मकता, तथापि कथमर्थात्मकतेति ? अत आह—वाग्रूपेति ॥ उपासनाविधिपरेष्वपि सर्वात्मकत्वं तावदवसीयत एवेति, अत आह—यत्रापीति॥ तत्रान्य-

1. निर्विशपस्य वाङ्मनसयोर A. 2. दृष्टिः A. 3. तद्वा B. 4. वेद्य B.

भावशुद्धिः

चापरं च" इत्यनेन सर्वात्मत्वमोङ्कारस्योक्त्वोत्तरवाक्येन तत्राप्युपासन-
P. 17-15 (मुक्तमित्यर्थः) । औपचारिकं तदध्यक्षादिविरोधात्, अत्राह--न चेति ॥
विरोधाभावं साधयति--सर्वस्येति ॥ आकाशादेरिदं रूपम्=ओङ्कारात्मत्वं
शास्त्रैकगम्यमित्यर्थः । ओङ्कारस्याध्यक्षार्हत्वात् सर्वात्मत्वमस्ति चेद-
P. 17-17 ध्यक्षार्हतैव, अतो(तत्तु)योग्यानुपलब्धिविरोधात् नास्तीति, अत्राह--न हि
प्रमाणेति ॥ योग्यत्वमसिद्धम्; रूपप्रपञ्चस्याश्रावणमि(त्वादि)त्यर्थः ।
"तस्माद्विद्वानेते(के)नैवायतनेनैकतरमन्वेति" इति वाक्येनोङ्कारस्य पूर्व-
वाक्योक्तसर्वात्मत्वविद एव ध्यानविधानाच्च "परं चे"त्यादिपूर्ववाक्य-
P. 17-19 मोङ्कारस्य सर्वात्मत्वपर्यवसितमित्याह--तस्मादिति ॥ वाक्यान्तरसिद्ध-
सर्वात्मत्वविदस्तद्ध्यानविधानम्, न पूर्ववाक्यसिद्धसर्वात्मत्वविद इति,
अत्राह--न चेति ॥ तस्मान्न वाक्यान्तरसिद्धं सर्वात्मत्वमिति फलितमाह--
तस्मादिति ॥

उपासनप्रकरणपठितवाक्यस्योपासनविधिपरस्य न सर्वात्मता-
P. 17-20 परत्वम्; वाक्यभेदापत्तेरिति, अत्राह--अथ वेति । विश्वा=विश्वानि,
जज्ञे=जनितवती । "वाचि सर्वं प्रतिष्ठितम्" इत्यादिरादिपदार्थः । तद-
P. 17-21 प्यौपचारिकं स्तुत्यर्थं किं न स्यात्? अत्राह--तथेति ॥ रुद्रेभिः=

अभिप्रायप्रकाशिका

परत्वात् सर्वात्मत्वोपदेशः स्तुतिरिति शङ्कायामाह--न चेति ॥ प्रत्यक्षादिभिरपि प्रपञ्चस्योंकारात्मकत्वं किमिति तर्हि नावगम्यत इति? अत आह--सर्वस्येति ॥ न च योग्यानुपलब्धिः, अयोग्यत्वादित्यभिप्रेत्याह--न हीति ॥ "एतद्वै सत्यकाम परं चापरं च ब्रह्म यदोङ्कारस्तस्माद्विद्वानेते(के)नैवायतनेनैकतरमन्वेती"त्यत्र सर्वात्मवेदनस्य ध्यानाधिकारिविशेषणत्वश्रवणादपि श्रुतेस्तत्रावान्तरतात्पर्यमवसीयत इत्याह--तस्मादिति ॥ न चानुवादकतयाऽप्यतात्पर्यम्; सर्वात्मत्वस्य मानान्तरासिद्धत्वादित्याह--न च तदिति । अनन्तरमिति । "तस्माद्विद्वा"नित्येतस्मात् पूर्वमित्यर्थः । ध्यानविधिपरेऽपि वाक्ये सर्वात्मकत्वमवसीयत इत्युक्तम्, इदानीं तत्परं वाक्यजातमुदाहरति--अथवेत्यादिना ॥ अस्तु वाग्देव्याः सर्वात्मत्वम्, सर्वेशित्वं च, तावता शब्दब्रह्मणः किमायात-

भावशुद्धिः

"बहुलं छन्दसि" इति। रुद्रैः। वाचा=रुद्रादिरूपेण। आत्मनः सर्वात्मत्वदर्शनं निदर्शनेनाह—यथाऽऽत्मनीति ॥ P. 17-22

एवमागमावष्टम्भादद्वयत्वं शब्दस्योक्त्वा न्यायेनाप्याह—अपि- P. 18- 1
चेति ॥ जगत्, वाचो विकारः, प्रत्येकं तदनुविद्धत्वात्, यदेवं तदेवम्; यथा मृदनुविद्धघटशरावादि तद्विकार इत्यर्थः। वाच्यवाचकयोर्भिन्न-
प्रमाणगम्यत्वादसिद्धो हेतुरिति शङ्कते—कथमिति ॥ परिहरति— P. 18- 3
तदुपरागेति ॥ तत्सामानाधिकरण्येनतदात्मतया ज्ञेयत्वादित्यर्थः ॥

तदुपरागविज्ञानवेदनीयत्वमर्थस्य शब्दोपायतयाप्युपपद्यमानं न शब्दात्मतामवगमयेदिति, अत्राह—तथा हीति ॥ अज्ञातादिति शेषः।
कुत इति? अत्राह—तदसंवेदन इति ॥ शब्दानवगमे (स) विकल्पानुदयात् P. 18- 4
मानान्तरेऽपि किमु शब्दादित्यर्थः। तथापि धूमादिवदर्थादन्यत्वम्,
अत्राह—नापीति ॥ इदं नीलमिति सामानाधिकरण्येन शब्दार्थवेदनं P. 18- 4
सर्वजनीनमित्युपपादयति—तथा हीति ॥ शब्दादभेदेनार्थप्रतिपत्तौ P. 18- 5
हेत्वन्तरमाह—इतश्चेति ॥ नो खलु साक्षात् नीलशब्दं विशेषणमवग- P. 18- 6

अभिप्रायप्रकाशिका

मित्याशङ्क्य, तद्रूपेण तथा सर्वात्मब्रह्मादिप्रतिपादनाददोष इति दृष्टान्तेनाह—यथेति ॥

इदानीमनुमानतः सर्वात्मत्वं शब्दतत्त्वस्योपपादयति—अपिचेति ॥ यथा मृद्विकाराः, चन्द्रभेदा वा तत्सामानाधिकरण्येनावभासमानास्तदात्मकाः, तथा अयं गौरयं घट इति शब्दसामानाधिकरण्येन भासमानं जगदपि तदात्मकमित्यर्थः ॥ तदुपायत्वेनानुगमः किं न स्यादिति शङ्कते—कथमिति ॥ मैवम्; उपायेषु विवक्षितानुमानाभावादिति परिहरति—तदुपरागेति ॥ तदेव स्पष्टयति—तथा हीति ॥ प्रतीयमानाप्रतीयमानोपायेभ्यः समानाधिकृततया प्रतीयमानशब्दस्य विलक्षणत्वान्नोपायतानुगम इति भावः ॥

अर्थगतस्य विशेषण-विशेष्यभावस्य शब्दे प्रतीयमानत्वादप्यर्थात्मकत्वं शब्दस्येत्याह—इतश्चेति ॥ नीलोत्पलपदयोः परस्परं विशेषण-विशेष्यभावहेतोः

भावशुद्धिः

च्छन्ति लौकिकाः; किन्त्वर्थगत एव विशेषण-विशेष्यभावः, तद्द्वारेण
P. 18- 8 शब्दयोरप्यवगम्यत इत्यर्थः। कुत एतत्? अत्राह—अन्यथेति॥
यद्यर्थगतस्तद्द्वारेण शब्दयोर्न प्रतीयते, तदा यथोर्ध्वत्वे काकनिलय-
नात् ततो स्थाणुरिति परस्परविशेषण-विशेष्यभावेन स्थिताभ्यामर्था-
न्तराभ्यामर्थान्तरभूतस्य स्थाणोः तदनालिङ्गितप्रतीतिः, तथा
शब्दाभ्यां वैयधिकरण्येन प्रतीतिः स्यात्। अस्ति तु सामानाधिकरण्येन
प्रतीतिः। तस्मादयं विशेषण-विशेष्यभावोऽर्थगत इत्यर्थः॥

एवं तावद् न शब्दोपायताऽर्थस्य तदुपरागविज्ञानवेदनीयत्व-
हेतुरित्युक्तम्, न चेदमैकान्तिकम्; तदुपायस्यापि तदुपरागविज्ञान-
P. 18- 9 वेदनीयत्वदर्शनादित्याह—अपि चेति॥ शब्दरूपितार्थानुभवो न
P. 18-10 भवेदित्यर्थः। शब्दात्मतयाऽर्थप्रतीतिरेव न भवतीति, अत्राह—न
धूमादिति॥ प्रत्यक्षम्, अनुमानम्, आगमश्चेति त्रयमेव प्रमाणम्,
वैयाकरणानाम्। तत्र धूमात्, चक्षुरादेर्वा वह्निज्ञानं धूमोऽग्निरिति,

अभिप्रायप्रकाशिका

संयोगसमवायादेरनिरूपणादर्थगत एवायं शब्दे प्रतीयत इति वाच्यम्, ततश्च
तयोरभेदः; अन्यगतस्यान्यत्र प्रतीत्ययोगादिति भावः॥ अर्थगतोऽयं विशेषण-
विशेष्यभावः, तद्द्वारा शब्दे प्रतीयत इत्यनभ्युपगमे दोषमाह—अन्यथेति॥
ऊर्ध्वत्व-काकनिलयनाभ्यां सप्तमी-पञ्चमीनिर्दिष्टत्वेनासामानाधिकृताभ्यामर्था-
न्तरस्य स्थाणोः प्रतीतेः, नीलोत्पलपदाभ्यामप्यसमानाधिकृताभ्यामेवार्थगतो
विशेषण-विशेष्यभावः प्रतीयेत, न च तथाऽस्ति। तस्मादर्थगतो विशेषण-
विशेष्यभावः तद्द्वारा शब्दयोः प्रतीयत इत्यभ्युपेयम्। ततः शब्दार्थयोः तादात्म्यं
सिद्धमित्यर्थः॥ परस्परव्यवच्छिन्नाभ्यामिति॥ एकैकस्य व्यभिचारा-
दन्योन्यविशेषितमेव धर्मद्वयं स्थाणोर्गमकमित्यङ्गीकृत्योक्तम्॥

ननु—सोऽयं शान्तिकर्मणि वेतालोदयः; यदर्थयोर्विद्यमानोऽपि विशे-
ष्य-विशेषणभावः शब्दयोः प्रतीयते—इति, मैवम्; यतः शब्दयोर्विशेषण-
विशेष्यभावोऽर्थद्वारक एवेति वयं वदामः, न त्वर्थगतः शब्दे प्रतीयत एवेति।
न च—अस्मादेव वैधर्म्याद्भेद इति, शङ्कनीयम्; घटादिविकारधर्माणां तत्प्रकृतौ-
प्रतिबिम्बधर्माणां च बिम्बे दर्शनाभावेऽप्यभेदाभ्युपगमात्॥

भावशुद्धिः

चक्षुरादिरग्निरिति वा न भवति; प्रमाणान्तरादप्यर्थनिश्चयोऽयमग्निरिति शब्दरूपपरामर्शी[1] भवतीत्यर्थः ॥

शब्दज्ञानानन्तरभावित्वादर्थज्ञानस्य शब्दरूपपरामर्शित्वं शब्दनिबन्धनार्थज्ञानस्य भ्रम एव; शब्दार्थयोर्भेदादिति, अत्राह—तद्दर्शनादिति ॥ P. 18-12

सविकल्पप्रत्ययस्य शब्दरूपितार्थगोचरत्वेऽपि निर्विकल्पकविज्ञानस्य बालमूकस्य (स्थ) स्वप्नज्ञानस्य च तदगोचरत्वात् शब्दार्थभेद इति, अत्राह—बालानामिति ॥ निश्चयाभावे नियतप्रवृत्त्यभावमुपपाद- P. 18-13
यति—नानिश्चित इति ॥ बालादिप्रवृत्तिः, निश्चयपुरस्सरा, नियत- P. 18-14
प्रवृत्तित्वात्, अस्मदादिप्रवृत्तिवदिति । अस्तु, तथापि किमिति ?
अत्राह—[2]निश्चयश्चेति ॥ निश्चयो हि शब्दानुरागेण व्याप्तोऽस्मदादीनाम्, P. 18-15
इति सोऽयं बालादीनामुपलभ्यमानशब्दानुरागं मानसं गमयतीत्यर्थः । प्रत्येकं तदनुविद्धत्वादिति हेत्वसिद्धिमुद्धृत्य प्रकृतानुमानार्थं निगमयति—तथा चेति ॥ P. 18-17

यद्वाच्यम्, न तद्वाचकात् तत्त्वतो भिद्यत इति व्याप्तिमाह—अपि चेति ॥ व्याप्तहेतोः पक्षधर्मतयाऽनुमानमाह—तत्सामान्यादिति ॥ P. 18-19
विमता वाचकाः, तत्त्वतो न भिद्यन्ते, वाच्यत्वात्; विध्यादिवदित्यर्थः ।
उदाहरणं विशदयति—यथेति ॥ साध्यहीनं निदर्शनमिति शङ्कां P. 18-20

अभिप्रायप्रकाशिका

पूर्वोक्तोपायवैलक्षण्यानुवादेन मानान्तरादप्यर्थाधिगतौ शब्दानुगतिदर्शनान्न तदुपायत्वमनुगतौ प्रयोजकमित्याह—अपि चेति ॥

व्युत्पन्नानां शब्दानुपायेऽप्यर्थाधिगमे शब्दानुगमं प्रदर्श्याऽव्युत्पन्नानां ज्ञानेऽपि शब्दानुगमनिश्चयं लिङ्गेन साधयितुं तेषां निश्चयं तावत् साधयति—बालानामिति ॥ प्रवृत्तेर्निश्चयपूर्वकतां व्यतिरेकमुखेन दर्शयति—नानिश्चित इति ॥ निश्चयः, शब्दानुरागपुरस्सरः, निश्चयत्वात्; अस्मदादिनिश्चयव-

---

1. र्शीव B. 2. न च निश्चय इति मूलपाठः ।

भावशुद्धिः

परिहरन् विधि-निषेधार्थयोः कालसम्बन्धोऽस्ति, न वा? आद्ये
P. 18-21 भूतत्वम्, वर्तमानत्वम्, भविष्यत्त्वं वा? नाद्य इत्याह—तत्रेति ॥ न
P. 18-22 द्वितीय इत्याह—नेति ॥ नान्त्य इत्याह—न भविष्यन्त्याविति ॥
क्रमेण हेतुमाह—अपाक्षीदिति ॥ पचेत्, न पचेदित्यनयोरपाक्षीत् ना-
पाक्षीदित्याभ्यामविशेषप्रसङ्गाद्, भविष्यत्वे पक्ष्यति, न पक्ष्यतीत्या-
भ्यामविशेषप्रसङ्गादित्यर्थः। साध्यैकस्वभावो नियोगः प्रत्ययार्थ इति
P. 18-23 शङ्कते—कार्य इति॥ कालातिरिक्तस्य हि सत्त्वं कालसम्भेदेन व्याप्तम्,
सोऽयं तत्सम्भेदोऽकालात्माभ्यां विधि-निषेधाभ्यां निवर्तमानः सत्त्व-
मप्येतयोर्गगनकुसुमवद् निवर्तयतीति परिहरति—नेति॥ य(त)स्माद्
P. 18-24 सत्त्वमित्युपसंहरति–तस्मादिति ॥ प्रवृत्ति-निवृत्त्यनुगुणम्=तज्जनकम्;
"शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः" इति प्रतिभालक्षणत्वात्।
P. 18-25 आश्रयशून्यं निदर्शनम्, अत्राह—न चेति ॥ तर्हि प्रतिभालम्बनमर्थः
P. 18-26 शब्दात्मेति साध्यहीनत्वम्, अत्राह–न च सेति॥ शब्दरूपग्राहिणीत्यर्थः।
निगमयति—तस्मादिति ॥ शब्दविवर्त एवतदालम्बनमित्यर्थः ॥

अभिप्रायप्रकाशिका

दित्यनुमानमाह—न चेति ॥ अनुद्भूतवाग्वृत्तीनामपि निश्चयः कथं शब्दानुरागवानिति? तत्राह—तेषामिति ॥ फलितमाह—तथा चेति ॥

केषांचिदर्थानां शब्दविवर्तात्मत्वेन निरूपणात् तद्दृष्टान्तेनान्येषामपि तथात्वमनुमेयमित्याह—अपि च सन्तीति ॥ शास्त्रप्रमाणकयोर्विधि-निषेधयोः कथमतात्त्विकत्वमित्याशङ्क्य तदुपपादयति—तत्र न तावदिति ॥ कार्यतया प्रतिपन्ने प्रवृत्ति-निवृत्ती विधिनिषेधाविति शङ्कते—कार्य इति ॥ परिहरति—न कालत्रयेति॥ कालातिरिक्तस्य ज्ञेयस्य सत्त्वं कालसम्बन्धेन व्याप्तं तद्व्यावृत्तौ व्यावर्तत इत्यर्थः। कथं तर्हि तयोः शब्दात्मकत्वम्? प्रतिभामात्रत्वादित्याह—न चानालम्बनेति ॥ तथापि कथं शब्दविवर्ततेति, तत्राह—न च सेति॥ तथा तथा=विधिरूपेण, निषेधरूपेण च विवर्तमानं शब्दतत्त्वमेव प्रतिभायामवभासत इत्यर्थः। पदार्थानां संसर्गो वाक्यार्थः, संसृष्टः पदार्थो वा? आद्ये संसर्गस्य पदार्थभेदे तावन्मात्रत्वात्, भेदे च संसर्गान्तरानभ्युपगमेऽनवस्थानात्, तदसंसर्गे वा तेषामेष संसर्ग इत्यनुपपत्तेरवस्तुभूतो वाक्यार्थ इत्याह—

भावशुद्धिः

उक्तयुक्तिमन्यत्र योजयति—एवमिति ॥ पदार्थानां संसर्गो P. 19-1
वाक्यार्थः संसृष्टः, पदार्थो वा ? आद्ये संसर्गः संसर्गिभ्योऽन्यः, अनन्यो वा ? नाद्यः; तस्यार्थान्तरवदन्यत्र स्वातन्त्र्येण प्रतीत्यापत्तेः [1]तस्य [2](संसगि) संसर्गेऽनवस्थानात्, [3](असंसर्गे) संसर्गे तत्संसर्गत्वायोगात् । न द्वितीयः ; पद-वाक्ययोरविशेषप्रसङ्गादित्यर्थः । द्वितीयेऽपि संसृष्टमसंसृष्टादभिन्नं चेत्, पद-वाक्ययोरैकार्थ्यम् । भिन्नं चेत्, अर्थपदार्थस्य
वाक्यार्थत्वं स्यादित्याशङ्क्याह—संसर्गीति ॥ तर्हि वाक्यार्थोऽसन्नेव, P. 19-2
नेत्याह—न विकल्पेति ॥ P. 19-3

समूहः, समूहिभ्योऽन्यः ? अनन्यो वा ? आद्ये तत्संयुक्ततरुषु प्रत्येकं वनबुद्धिप्रसङ्गात्(ङ्गः), नेतरः ; एकस्यानेकात्मत्वविरोधादित्याह
—एवं समूह इति ॥ अलातसमवेततया प्रतीतं चक्रं न ततो भिन्नम् ; P. 19-4
स्वातन्त्र्यात्तद्धर्मत्वा(दि ?)प्रसङ्गात्, नाभिन्नम्, सदाऽलातचक्रप्रतीतौ तत्प्रसक्तेरित्यर्थः ॥

अपि च समुदाचरद्वृत्तिशब्दभावाभावानुविधानाच्चितेः, उत्कर्षापकर्षयोर्वा रूपचिदुपरक्तं जगदिति वा विवर्त इत्याह—अपि
चेति ॥ P. 19-5

अभिप्रायप्रकाशिका

एवमिति ॥ द्वितीयेऽपि संसर्गानिरूपणादेव संसृष्टरूपपदार्थासिद्धेः केवलपदार्थानां चायश्शलाकाकल्पानां वाक्यार्थत्वेऽतिप्रसङ्गान्न वास्तवो वाक्यार्थ इत्याह—न संसर्गीति ॥ संसर्गी-संसर्गविशिष्टः पदार्थः । असंसर्गरूपातिरिक्तः, केवलपदार्थातिरिक्तो न भवतीति यावत् । तथापि कथं शब्दविवर्ततेति ? तत्राह—न ज्ञेयेति ॥ अस्तु, तथापि कथं शब्दविषयतेति ज्ञायेतेति ? तत्राह—न विकल्पेति ॥ 'शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः' इति विषयान्तराभावादुपरक्तः शब्द एव तस्य विषय इत्यर्थः ॥

---

1. ( ) चिह्नान्तर्गतं A. पुस्तके नास्ति ।
2. ( ) चिह्नान्तर्गतं A. पुस्तके नास्ति ।
3. ( ) चिह्नान्तर्गतं A. पुस्तके नास्ति ।

12

भावशुद्धिः

" निषादर्षभ-गान्धार-षड्ज-मध्यम-धै[1]वताः ।
पञ्चमश्चेत्यमी सप्त तन्त्रीकण्ठोत्थिताः स्वराः ॥"

चितेः, प्रकाशमात्ररूपायाः कोऽयं विशेष इति ? अत्राह—
P. 19-6 अविविक्तेति ॥ सजातीयव्यावृत्तवस्तुमात्रगोचरतया निर्विकल्पिका ।
P. 19-7 स्फुटतरेत्येतद् व्याख्यानम्— विवेकवतीति ॥ शब्द-रूपपरामर्शे सत्यव-
चितेरुत्कर्षः, नापरथेत्यत्र लिङ्गमाह—तथा चेति ॥ यथाऽन्वय-व्यति-
रेकानुविधानदर्शनम् , तथेदं च लिङ्गमित्यर्थः । संज्ञाम्=कालाक्षी-
मित्यादिकाम् । शब्दरूपोल्लेखे विकल्पोत्पत्तिरित्येतावता प्रकृते किमा-
P. 19-8 यातम् ? अत्राह—एवं चेति ॥ चितेश्चितित्वं वाग्रूपाधीनमिति
P. 19-9 सम्बन्धः । तत्प्रतिसंहारे=तदुपरमे । व्यतिरेके हेतुमाह—पथीति ॥
पथि पतिततृणादीनां दृष्टानां शब्द-रूपपरामर्शविरहिणामुत्तरकाले
P. 19-10 विवेको न ; अनुसन्धानायोग्यत्वादित्यर्थः[2] । वाग्रूपाधीनमिति ॥ वाग्रूप-
चैतन्ययोर्भेदं प्रत्यपरितुष्यन्नाह—वाग्वृत्तिरेवेति ॥ समुदाचरन्तीनां वाचा-
मुपरमेऽपि तच्छक्तेरनुवृत्तेश्चित्तोपपत्तेरित्याह—तत्प्रतिसंहारेऽपीति ॥
P. 19-11 पक्षद्वयेऽपि विवक्षितांशमाचष्टे—सर्वथेति ॥ विकारे दृष्टान्तो मृद
P. 19-13 इवेति ॥ विवर्तदृष्टान्तः—चन्द्रमस इति ॥

सामान्यतः श्रोत्रग्राह्यस्य शब्दत्वादनेवंरूपत्वाद् ब्रह्मणः शब्दा-
त्मत्वमयुक्तमित्यपरितोषात् पक्षान्तरमाह—अन्ये त्विति ॥ " यथा
सोम्य एकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं स्यादेवं सोम्य स आदेशः"

अभिप्रायप्रकाशिका

शब्दानुवेधाननुवेधाभ्यामर्थे बोधोत्कर्षापकर्षयोर्दर्शनाद् बोधोऽपि शब्दाधीनः, इति तद्विवर्तो जगदित्यनिच्छद्भिरपि शब्दविवर्तत्वमभ्युपेयमित्याह —अपि च यद्यपीति ॥ षड्जेति संज्ञाकरणान्यथानुपपत्तिरपि गवादिषु प्रतिपत्तेः प्रागविविक्ततां पश्चाच्च विविक्ततां गमयतीत्याह—तथापीति ॥

---

1. षड्ज-ऋषभ-गान्धार-मध्यम-धैवत-पञ्चमाः । निषादश्चेत्यती B.

2. वाकुछक्तिरिति मूलपाठः ।

भावशुद्धिः

इति परिणामिमृदादिदृष्टान्तप्रणयनादित्यर्थः। हेतुं पृच्छति—कुत इति ॥ तमाह—ध्रुव इति। P. 19-15

"न जायते म्रियते वा विपश्चिन्नायं कुतश्चिन्न बभूव कश्चित्।
अजो नित्यः शाश्वतोऽयं पुराणो न हन्यते हन्यमाने शरीरे॥"
"एतदप्रमेयं ध्रुवम्" इति च श्रुतेरित्यर्थः॥

परिणामित्वं नानित्यत्वव्याप्तमिति चोदयति—अथेति॥ परिणामि नित्यमिति व्याहतम्, पूर्वरूपत्यागेन रूपान्तरापत्तेस्तत्त्वात्, अत्राह—यथोक्तमिति॥ यस्मिन् हेमादौ विक्रियमाणे कटकादिरूपमा- P. 19-17 पद्यमाने तत्त्वं स्वरूपं न विहन्यते; अवस्थाविशेषेऽपि तदेवेति प्रत्यभिज्ञानादित्यर्थः॥

सावयवस्य पृथिव्यादेस्तदङ्गीकृत्य परिहरति—सत्यमिति॥ तदभावात्=परिणामाभावादक्षरमित्यर्थः। तथा हि—तत् एकदेशेन परिणमते, स्वरूपेण वा? नाद्य इत्याह—सर्वात्मनेति[1]॥ आद्यं दूषयति—एकदेशेति॥ ब्रह्मणोऽनन्तजीवभेदेन कलुषितत्वादेकत्वादिव्याहति- P. 19-18 स्तवापीति, अत्राह—तदेतदिति। निरवयवस्य ब्रह्मणः सर्वात्मना जीव- P. 19-19 भावे ब्रह्माभाव इति, अत्राह—कल्पितावच्छेदमिति। भेदस्य भ्रमत्वा- P. 19-20

अभिप्रायप्रकाशिका

यद्यदधीनम्, तत् ततोऽन्यत् स्यादित्यपरितोषादाह—वाक्छक्तिरिति॥ निर्विकल्पवाक्छक्तेश्चिद्व्यतिरेकमाशङ्क्याह—तत्प्रतिसंहार इति॥

स्वस्तिक-रुचकादिसाधारणस्वर्णवत् चिन्मात्रगात्रस्य ब्रह्मणश्चेतनाचेतनसाधारण्यासम्भवात्, जडाकारेण सर्वात्मना परिणतौ स्वरूपहानिः, एकदेशपरिणतौ च सावयवत्वादिदोष इति परिहरति—सत्यमिति॥ विवर्तपक्षे कथमिति? अत्राह—तदेतदिति॥ न परिणामवाद इव स्वरूपहानिशङ्काऽस्मन्मते; कल्पनादशायामपि स्वरूपानपायादित्याह—कल्पितेति॥

---

1. ( ) चिह्नान्तर्गतं A· पुस्तके नास्ति।

भावशुद्धिः

P. 18-22 दित्यर्थः । भाषितदोषपरम्परापरिहारमाशङ्कते—अथेति ॥ अनुजानाति —स इति ॥

P. 19-24 असर्वपदनिरस्यं दर्शयति—केचिदिति ॥ सर्वकामादिश्रुतिरादि-
P. 19-25 पदार्थः । अनुग्राहकतर्कमाह—एवं चेति ॥ दृश्यरूपेण ब्रह्मणि द्रष्टृ-दृश्यत्वोपपत्तिमाह—प्रकाशस्वभावस्येति ॥ तादात्म्यसम्बन्धादित्यर्थः । अत्यन्तभेदे संयोगादिसंसर्गायोगात्, स्वतः परतो वा न प्रतीतिः स्यादित्याह—अन्यत्व इति ॥

श्रुत्या, प्रत्यक्षादिना च प्रमितमनेकात्मत्वं कथं निरस्यते ?
P. 20-1 इति, अत्राह—अस्थूलमिति ॥ तत्परश्रुतिविरोधे सत्युपास्तिपरसप्रपञ्चश्रुतेरतत्त्वावेदनेनाप्रामाण्यात् प्रत्यक्षादेर्देहात्मप्रत्ययध्य[क्षवद् व्य]वहारमात्रवस्तुगोचरत्वमित्यर्थः । सप्रपञ्चश्रुतिस्तत्परा, निष्प्रपञ्चश्रुतिस्तदुपा-
P. 20-2 स्तिपरेति किं न स्यात् ? अत्राह—[1]अन्यथेति ॥ अनेकस्वभावत्वेऽनिर्मुक्तिं प्रकटयति—न हीति ॥ सुखादिप्रपञ्चस्यात्मस्वभावत्वेऽपि स्यान्निवृत्ति-
P. 20-3 साधनानुष्ठानात्, वह्नेरौष्ण्योपशम इव प्रतिन्धादिति शङ्कते—[2]तथापीति ॥ अनभिव्यक्तस्य पुनरभिव्यक्तिसम्भवादनिर्मुक्तिरेवेत्याह—तथापीति ॥ अशनायादिशक्तिरेवात्मनः स्वभावः, न तत्कार्यमिति, अत्राह—
P. 20-4 सर्वथेति ॥ शक्तिर्वा, तत्कार्यं वा शोक-मोहादिरादिपदार्थः । आम्रादेः

अभिप्रायप्रकाशिका

अस्थूलादितत्परश्रुतिविरोधात् सर्वात्मत्वश्रुतिरारोपितविषयोपासनार्थेति शङ्कां प्रत्याह—एवं चेति ॥ उपपत्तिमेवाह—प्रकाशेति ॥ तथापि तदात्मता कुत इति ? अत आह—अन्यत्व इति ॥ उक्तयुक्त्युपेता सर्वात्मत्वश्रुतिः प्रबलेति भावः ॥ अस्थूलादिश्रुतेरप्युपपादिकां युक्तिमाह—सर्वेति ॥ वीचीतरङ्गाद्यात्मनः सिन्धोस्तत्परित्यागेनावस्थानवदिहापि स्यादित्याशङ्क्य परिहारमाह—तथापीति ॥ प्रबन्धस्य=प्रवाहस्य । सत्यपि भेदप्रपञ्चेऽशनायाद्यभावाद् मुक्तिरिति, तत्राह—सर्वथेति ॥ वरं चैतस्मात् भेदवाद

1. अयं पाठो मूले नास्ति । 2. अथापीति मूलपाठः ।

भावशुद्धिः

श्यामतादिरिव स्वभाविकोऽपि धर्मो निवर्तत इति, अत्राह—[1]तत्प्रतिबन्धस्येति ॥ धर्मान्तरोत्पत्तौ[2] पूर्वधर्मनिवृत्तौ [3]तत्प्रवाहसन्ततिरित्यर्थः । सप्रपञ्चैकात्म्यवादिनोऽनिष्टं फलयति—तत्रेति ॥ इममेवार्थं व्यतिरेक- P. 20. 5
मुखेन स्फोरयति—आत्मभेदेति ॥ असर्वपदव्याख्यामुपसंहरति— P. 20. 6
तस्मादिति ॥ कथं तर्हि जडप्रतीतिः ? अविद्य[4]या ब्रह्मणि तादात्म्येना- P. 0. 7
ध्यासादित्याह—अविद्येति ॥

असर्वपदव्यवच्छेद्यं दर्शयति—यदि तर्हीति ॥ यदि=तथेत्यर्थः । P. 20. 8
त्र्यन्त[5]गोचरो ब्रह्मैव परमार्थः, नान्यदिति, अत्राह—सैवेति ॥ P. 20. 9
निरधिष्ठान(ब्रह्म ?)भ्रमं (मे ?) निरवधिकबाधासम्भवात् कथमेवं भवेत्, अत्राह—तथा चेति ॥

शून्यमेवाधिष्ठानमवधिश्चेत्यर्थः । सर्वत्वं प्रतिषिध्य तदेव विदधतः किं न विरोध इति, अत्राह—[6]तदुक्तमिति ॥ ब्रह्मणः सर्वस्मा- P. 20.11
द्भेदे सर्वस्यापि ततो भेद एवेति, अत्राह—ब्रह्मरूपेणेति ॥ रजतं न

अभिप्रायप्रकाशिका

इत्याशङ्क्याह—तत्रेति ॥ का तर्हि गतिः प्रत्यक्षादिसिद्धप्रपञ्चस्येति? तत्राह—अविद्येति ॥

सर्वपदव्यावर्त्यमाह—यदीति ॥ कथमब्रह्मरूपस्य परमार्थत्वमिति ? अत्राह—सैवेति ॥ श्रुतिमप्यत्रानुकूलयति—तथा चेति ॥

असर्वमित्युक्त्वा सर्वमिति वदतो विप्रतिषेध इति, अत आह—एतदुक्तमिति ॥ ब्रह्मणः प्रपञ्चात्मताभावे तस्य ब्रह्मात्मता कथमिति ? अत आह—ब्रह्मरूपेणेति ॥ ब्रह्मण्यधिष्ठाने तस्य कल्पितत्वात् तद्रूपेणैवास्य सत्त्वं शुक्ति-रजतयोरिवेत्यर्थः ॥

---

1. भेदप्रबन्धेति मूलपाठः ।
2. त्त्या B.
3. न प्रवाहनान्ति । B.
4. द्या B.
5. प्रपञ्च B.
6. एतदुक्तमिति मूलपाठः ।

भावशुद्धिः

शुक्तेर्भिद्यते, (त)दात्मनैव दृष्टेः, रजताच्छुक्तिर्भिद्यते, प्रागूर्ध्वं च दृष्टेरिति यथा, तद्वदेतदपीत्यर्थः। तदुक्तं पराशरेण—

"व्यतिरिक्तं न यस्यास्ति व्यतिरिक्तोऽखिलस्य यः।
नमस्तस्मै नमस्तस्मै नमस्तस्मै महात्मने॥"

P. 20-12 इति। कुत इति अत्राह—नित्यमुक्तीति॥

P. 20-13 अनुशयनिमित्तमुद्घाटयति—नित्यमुक्तत्वेऽपीति॥ शून्यमविद्यया बद्धं विद्यया मुच्यत इति वदतां किमग्रहणमविद्या, मिथ्याग्रहणं वा? आद्यं प्रत्याह—यदीति॥ तस्य तुच्छत्वादित्यर्थः। तुच्छस्यापि कारणत्वे मुक्तावपि बद्धः। स्यात्, तदापि[1] ग्रहणाभावादित्याह—
P. 20-14 मुक्तावपीति॥ सत्यपि ग्रहणाभावे मुक्तौ द्वैतानुपलम्भात्, अबन्ध
P. 20-15 इत्याशङ्का, प्रागपि तथा स्यात्, अविशेषादित्याह—तद्वदिति॥

अभिप्रायप्रकाशिका

शून्यवादी शङ्कते—नित्यमुक्तत्वेऽपीति। अविद्या, अग्रहणरूपा, विपर्यासरूपा वेति विकल्प्य, नाद्य इत्याह—यदीति॥ सर्वशून्यतायां मुक्तावपि ग्रहणाभावात्तु(वत्तु)ल्यत्वादित्युक्तम्—तद्वदेवेति॥ मुक्ताविव ग्रहणस्याभावात् संसारदशायामपि न किंचित् प्रकाशेतेत्यर्थः॥

नापि द्वितीय इत्याह—अथेति॥ अधिष्ठानारोप्य-तत्प्रतिभास-तदाश्रय-तद्धेतूनां भावान्न सर्वशून्यत्वमित्यर्थः। सर्वस्य ब्रह्मरूपेण रूपवत्त्वे प्रमाणमाह—तेनेति॥ प्रपञ्चस्य शून्यकार्यत्वनिषेधादपि न तद्रूपतेत्याह—कथमिति॥

इदानीं शून्ये प्रपञ्चस्य कल्पितत्वमप्ययुक्तम्; युक्तिविरोधादित्याह—भावो हीति॥ भावस्यापि ब्रह्मणोऽधिष्ठानत्वमयुक्तम्; तस्य निर्भागस्य स्वयंप्रकाशस्य सदैव यथावदवभासनात्, तथाभूते च शुक्त्यादौ भ्रमादर्शनादिति, अत आह—यथावदिति॥ न च प्रकाशमानस्य निर्भागस्यापि विशेषतोऽप्रतिभासो विरुध्यते; प्राभाकराणां स्वसंवेदनवत्, भाट्टानां निर्विकल्पकावगतानवगतसामा-

---

1. त्वभावपि A.

भावशुद्धिः

द्वितीयमुत्थापयति—अथेति ॥ परमार्थे सति मिथ्यारूपारोपात् सर्वशून्यताक्षतिरिति, अत्राह—न तर्हीति ॥ ब्रह्मरूपेण रूपवदिति यदुक्तम्, तत्र प्रमाणमाह—तेनेति ॥ इदमिति ॥ श्रुतिमुक्त्वा लिङ्गं P. 20-16
वक्ति—आत्मैवेति ॥ "असदेवेदग्र आसीत्" इति श्रुतं शून्यस्य जगत्कारणत्वम्, अत्राह—कथमिति ॥ अनभिव्यक्तनामरूपम्= P. 20-17
असत्पदेनोपचर्यत इत्यर्थः ॥

परस्मिन् ब्रह्मणि निर्भागे नित्यसंवेदने नागृहीतरूपमस्तीति कथं प्रपञ्चावभासभ्रम इति ? अत्राह–भावो हीति ॥ अनाद्यनिर्वचनीया- P. 20-18
ज्ञानगोचरः प्रपञ्चात्मना भातीत्यभ्युपेयम् ; निरधिष्ठानभ्रमासम्भवादिति भावः । शून्यमेवाधिष्ठानमवधिश्चेत्युक्तम्, अत्राह—शून्ये त्विति ॥ P. 20-19
यदनुवि[1]द्धमारोपितं भाति, तदधिष्ठानम् । न च शून्यानुविद्धं किञ्चिद्भातीत्यर्थः । "नेति नेति" इति निषेधमुखेन ब्रह्मोपदेशपर्यवसानाच्छून्यत्वम(ध्य)वस्याम इति, अत्राह—विज्ञानमिति ॥ P. 20-20

अभयव(प)दप्रक्षेप्यपक्षमुपक्षिपति—केचित्त्विति ॥ परस्परा- P. 20-21
(परस्प[2]रा ?)विनाभाविनी हि कृतकत्वानित्यत्वे इव सुख-दुःखे नान्यतरापाये सम्भव इत्यर्थः । अविनाभावमुपपादयति[3]—न हीति ॥ P. 20-22
शुभाशुभकर्मोपस्थापितसुख-दुःखसामग्रीनैरन्तर्यात् सुख-दुःखयोरन्योन्यानुबन्धोऽनुभूयते, न स्वाभाविक इति, अत्राह—दुःखवत इति ॥ P. 21-1

अभिप्रायप्रकाशिका

न्यविशेषवत्, नैयायिकानां च मानसप्रत्यक्षगृहीतात्मवच्च भासमानस्यापि यथावदप्रतिभासोपपत्तेरिति भावः ॥ "नेति नेति" इति सर्वनिषेधाच्छून्यमेव ब्रह्मेति, अत आह—विज्ञानमिति ॥ ब्रह्मेति वाक्यशेषः । तथापि कथं तत्सर्वमित्युक्तमिति ? तत्राह—अपि त्विति ॥

अभयपदव्यावर्त्यमाह—केचित्त्विति ॥ उक्तमेवानुभवेनोपपादयति —न हीति ॥ तमेवार्थमुपपत्त्योपपादयति—दुःखवत इति ॥

---

1. व B. 2. ( ) अन्तर्गतं B. पुस्तके नास्ति । 3. मापादयन्नाह

भावशुद्धिः

P. 21- 2 कुत इति ? अत्राह—सर्वभयेति ॥ 'न लिप्यते लोकदुःखेन बाह्यः' इति
श्रुतेरित्यर्थः । ब्रह्म दुःखि, द्रष्टृत्वात्; जीववत्, अत्राह—न हीति[1] ॥
P. 21- 3 आगमबाधितविषयत्वादनुमानस्येत्याह—असकृदिति ॥ "अभयं वै
जनक प्राप्तोऽसि" इति श्रुतिरादिपदार्थः । न केवलमागमविरोधः,
P. 21- 4 तर्कविरोधोऽपीत्याह—तथा हीति ॥ कदाचित्कं तर्हि भयं भवेत्,
P. 21- 5 अत्राह—नागन्तुकमिति ॥ अस्य व्याख्या—हेतुमदिति ॥ द्वितीयदर्श-
नस्य भयहेतुत्वं श्रुत्योक्तमित्याह—तदुक्तमिति ॥ दुःखवत एवेत्युक्तं
P. 21- 6 प्रत्याह—[2]अत्रेति ॥ दुःखध्वंसस्य दुः(सु)खत्वे भवदुक्तं भवेत् ।
भावरूपे तु सुखे नैतत्; नियामकाभावादित्यर्थः । भारादिदुःख-
P. 21- 7 निवृत्तौ सुखानुभवात् तद्ध्वंस एव सुखमिति, अत्राह—प्रपञ्चितमिति ॥
एतत्=भावसुखमित्यर्थः ॥

P. 21- 8 अभयपदस्य व्याख्यान्तरमाह—अपर इति ॥ कथमिति ?
तत्प्रकटनाय तन्निरस्यमतमाह—इह केचिदिति ॥ तदुपपादनाय सम्भावि-
P. 21- 9 तविकल्पानाह—विज्ञानेति ॥ यथाहुर्नैयायिकादयः । परिणामिब्रह्म-
वादिमतमाह—अविभक्ता वेति ॥ तन्मते तद्विभागः किन्निबन्धन इति,
अत्राह—स्वत इति ॥ यथाऽपां निम्नदेशगमनं स्वभावः, तथा जीवानां
P. 21-10 ब्रह्मणो विभक्तत्वं स्वाभाविकमित्याह—स्वभावाद्वेति ॥ मीमांसकमतेन

अभिप्रायप्रकाशिका

आगन्तुकत्वेऽपि निर्हेतुत्वासम्भवाद् हेतुमत्त्वमेव परिशिष्यत इत्याह—हेतुमदिति ॥ दुःखवत एवेति यदुक्तम्, तद् दूषयति—न चेति ॥

उक्तमर्थं दर्शयितुं जीवानां सम्भावितप्रकारानाह—इहीति ॥ अवि-भक्तानामपि विभागे हेतूनाह—भोगार्थमिति । एवमेकदेशिनामविभागहेतून-भिधाय, सिद्धान्तिनो विभागहेतुमाह—अविद्येति ॥ साङ्ख्य-मीमांसकयोर्मत-माह—विज्ञानात्मान इति ॥ मीमांसकादीनां संसारहेतुमाह—तेषामिति ॥ साङ्ख्यमतमाह—द्रष्टृ-दृश्ययोरिति ॥

---

1. न चेति मूलपाठः । 2. न चेति मूलपाठः ।

भावशुद्धिः

कल्पा(न्तरमाह[1]—विज्ञानात्मान इति ॥ साङ्ख्यमतमाह—द्रष्टृ—दृश्ययो- P. 21-12
रिति । प्रकृतीनामात्मकार्यप्रवृत्तावपि दृश्यस्वभावा इमा द्रष्टृस्वभावं चैतन्यमनुरुध्यमाना विश्वविनिर्माणे) प्रवर्तन्ते इति द्रष्टृ-दृश्ययोर्योग्यतानिबन्धनः संसारः, न कर्मनिबन्धन इत्यर्थः ॥

तत्रानन्तरमेव तावत्पक्षं दूषयति—तत्र योग्यतेति ॥ प्रकृतेः परिणा- P. 21-13
मिन्याः कूटस्थनित्यायाश्च (चितेर्द्रष्टृ-दृश्य[2]त्वयोग्यतायाः स्वभावभूताया न विनाशः सम्भवति । स्वभावभावने भावनाशादयश्च पुनरावृत्तिरूपं भयमप्रच्युतम् । तदुक्तम्—

चैतन्ययोग्यता पुंसः प्रकृतेस्त)दनात्मता ।
भोक्तृ-भोग्यत्वयोस्ते च न ताभ्यामवपगच्छतः ॥

इति । अत्र कापिलाश्चोदयन्ति—अ(थे)ति । सत्यामपि योग्यतायां P. 21-15
न तन्मात्रादेव सः, अपि तु पुरुषार्थप्रयुक्तः । स च दुःखा[3]द्युपभोगः, सत्त्वपुरुषान्यताख्यातिश्च, तदेतदुभयमभिनि(र्वृ)त्य कश्चित् पुरुषं प्रति कृतकार्या प्रकृतिरुदास्त इत्यर्थः । सकृच्छब्दाद्यनुभवेन कृतकार्यता, सर्वशब्दाद्यनुभवेन वा ? आद्यं दूषयति— सकृदिति । सहसैव संसारो- P. 21-14
च्छित्तिः स्यादित्यर्थः । द्वितीयमुत्थापयति—अथेति ॥ विकृतशब्दा- P. 21-15
दीनां सकृद्भोगेऽप्ययुक्तौ हेतुमाह—अविकृतरूपेति ॥ यतो यद्रूपेण P. 21-16
प्रधानं न परिणतम्, तद्रूपेण पुनः पुनः परिणाम इत्यर्थः । दूषयति—आनन्त्यादिति ॥ विकारानन्त्याद् न कस्यचिदपि क्वचिदपि कदाचिदपि संसारोच्छेद इत्यर्थः । कर्माविद्यानिबन्धनत्व इत्यत्राप्यविद्यापूर्व[4]कर्मेत्यग्रहणमन्यथाग्रहणमविद्या शुभमशुभं च कर्म, तन्निबन्धनत्वेऽपि प्रत्यावृत्तिभयं न व्यावर्तते ।

---

1. ( ) चिह्नान्तातिकि पुस्तके नास्ति ।
2. चिह्नान्तर्गतं A. पुस्तके नास्ति ।
3. स्वर्गा B. था ।
4. कर्मेत्य ग्रहण A.

भावशुद्धिः

अनन्तान्यपि कर्माणि चरम(म्य)स्य शरीर(रिणः) ।
आरभ्य कृतकार्याणि निवर्तन्ते................... ॥

P. 21-19 इति, अत्राह—अनियतविपाकेति ॥ अनियतो विपाके फले कालो येषां तानि तथा, तद्भावस्तत्त्वम्। कस्मादेकैकस्य कर्मणो विरुद्धानेकयोनिप्राप्तिफलवत्त्वाच्च। प्रतिसर्गावस्थायाः=प्रलयावस्थाया इत्यर्थः। अविद्या-
P. 21-20 निबन्धनो वेत्यत्राप्याह—अविद्येति ॥ निर्हेतुत्वात् प्रवृत्तेरिति सम्बन्धः। मुक्तौ ब्रह्मभूयंगतत्वादविद्या न समस्ति; सत्यामपि न बन्धहेतुरिति,
P. 21-21 अत्राह—तथा चेति ॥ स्वाप इव संसृतिहेतुरविद्या मुक्तौ स्यादित्यर्थः ॥

विज्ञानात्मानो ब्रह्मणो विभक्ताः, अविभक्ता वेति पक्षद्वये
P. 21-22 पुनरावृत्तिमाह—स्वतन्त्रे त्विति ॥ ब्रह्मणि देहेन्द्रियोपभोगहेतौ सति न पुनर्देहादिसम्बन्धो नोपपद्येत, अविभक्तानां वा जीवानां भोगक्रीडाविभूतिख्यापनैर्हेतुभिर्विभज्य पुनर्देहादिसम्बन्ध इत्यन्वयः। ब्रह्म जीवस्य देहादिसम्पादनेऽन्यनिरपेक्षम्, कर्मापेक्षं वा? आद्यं प्रत्याह—
P. 21-24 स्वतन्त्रो हीति ॥ ईश्वरविवक्षया पुंल्लिङ्गोक्तिः। द्वितीयमवलम्ब्य

अभिप्रायप्रकाशिका

साङ्ख्यमतं तावद् दूषयति—तत्रेति ॥ शङ्कते—अथेति ॥ दूषयति—सकृदिति ॥ स एव पुनराह—अथेति ॥ दूषयति—आनन्त्यादिति ॥ मीमांसकादिमतं दूषयति—अविद्येति ॥ प्रतिसर्गावस्था=प्रलयदशा। सिद्धान्तिमतं दूषयति—अविद्यानिबन्धनत्व इति ॥ न च ब्रह्म प्राप्तस्य पुनरावृत्तिरनुपपन्नेति वक्तुं युक्तमित्याह—तथाचेति ॥

यत्तु—विकल्पितं विज्ञानात्मानो ब्रह्मणो विभक्ता वा स्युः, अविभक्ता वा; स्वतो ब्रह्मणैव वा विभज्येरन्, भोगार्थं क्रीडार्थम् इत्यादि, तत्र दूषणमाह—स्वतन्त्रे त्विति ॥ विभक्तानां जीवानां देहेन्द्रियोपभोगहेतौ, अविभक्तानां वा भोग-क्रीडादिहेतुभिर्विभज्य देहेन्द्रियोपभोगहेतौ ब्रह्मणि स्वतन्त्र इति पूर्वेणान्वयः ॥ तदेव स्पष्टयति—स्वतन्त्रो हीति ॥ सर्वेषां कर्मणां सम्भूयैवैक-

भावशुद्धिः

दूषयति—तथापीति ॥ कालविप्रकर्ष-कर्मसंस्कारप्रमोषाद् न फलारम्भः, P. 22-2
तत्राह—कल्पशतेति ॥ P. 22-3

"नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि" इति स्मृतेरित्यर्थः । सर्वं कर्म सम्भूयैकं शरीरमारभते । तस्मिंश्च काम्य-प्रतिषिद्धाकरणादुभयविधदोषाप्राप्तेर्नित्य-नैमित्तिककरणादप्रत्यवायात्, भोगेनारब्धफलकर्मक्षयाद् देहपातानन्तरं कैवल्यं स्यादिति, अत्राह—यत इति । निरस्यमतभेदाद् न पुनरुक्तिः । कथं नैकभविकः कर्माशयः ? यतोऽनारब्धफलं सर्वं कर्म प्रथममभिव्यनक्ति, तत्राह—न हीति ॥ मृति- P. 22-4
मात्रेण मुक्तिप्रसङ्गादित्यर्थः ॥

देशादेस्तद्व्यञ्जकत्वलिङ्गमाह—तथाहीति ॥ ऐकभविकत्वाभावे P. 22-5
हेत्वन्तरमाह—विरुद्धेति ॥

श्व-सूकर-खरोष्ट्राश्व-गोऽजावि-मृग-पक्षिणाम् ।
चण्डाल-पुल्कसानां च ब्रह्महा योनिमृच्छति ॥

इति स्मृतेरित्यर्थः ॥

आवाप(ग ?)नम्—फलनिक्षेपायाऽऽगमनम्, बीजभावेनावस्थानं वा । कर्माशयस्यैकभविकत्वेऽनिष्टान्तरमाह—गर्भेति ॥ प्रायणाभिव्यक्त- P. 22-6
पूर्वकार्मभिर्गर्भशरीराम्भात्तदुत्तरशरीरकर्मभावादिति भावः ॥

अभिप्रायप्रकाशिका

शरीरारम्भकत्वात् तेषां चोपभोगेन क्षयात्, चरमशरीरेण वा काम्य-निषिद्धयोरकरणात् तस्मिन्नतीते कथं पुनः शरीरान्तरसम्बन्ध इति, अत्राह—यत इति ॥ तेषां प्रायणस्यैवाभिव्यञ्जकत्वादशेषकर्माभिव्यक्तौ कतिपयानामेव कथमारम्भकत्वमिति, अत्राह—न हीति ॥

तदेव स्पष्टयति—तथाहीति ॥ कर्मफलेषु क्रमदर्शनात्, तद्धेतूनामपि क्रमेणाभिव्यक्तिः, न प्रायण एवेत्यर्थः । इतोऽपि नैकभविकत्वं कर्माशयस्येत्याह—विरुद्धेति ॥ विरुद्धजातिनिमित्तानाम्, विरुद्धभोगनिमित्तानां च सम्भूय नैकशरीरारम्भकत्वसम्भव इत्यर्थः । दोषान्तरमाह—गर्भेति ॥ पूर्वकर्मभिः सम्भूय गर्भशरीरस्यैवारब्धत्वात् गर्भे च कर्मान्तराकरणात्, अकर्मणां

भावशुद्धिः

तस्मात् पक्षचतुष्टयेऽपि पुनरावृत्तिरिति प्राप्तेऽभयपदमवतारयति
P. 22-7 —तत्रोच्यत इति ॥ मतान्तरे पुनरावृत्तिमूरीकृत्याविद्यानिबन्ध[1]नत्वे तद्-
भावं साधयति—परा हीति ॥ "तरति शोकमात्मवित्" "एकया
यात्यनावृत्तिम्" इति श्रूयत इत्यर्थः । विदुषां संसारो भवति वा, नो
P. 22-8 वा ? नाद्य इत्याह—न तावदिति ॥ 'अवश्यमनुभोक्तव्यं कृतं कर्म
शुभाशुभम्' इति ॥

P. 22-9 तत्फलं ध्रौव्यात् तन्निबन्धनं स्यात्, अत्राह—विद्ययेति ॥
दुरितनिवर्हणकामोद्देशेन विधीयमानप्रायश्चित्तस्य तन्निवर्तकत्वेऽपि
न विद्यायास्तन्नि (²वर्तकत्वम्; मानाभावात्, अत्राह—उक्तं हीति ॥
P. 22-10 उक्तस्मृतिमात्रस्थापनाय तन्मूलां श्रुतिमाह—तथेति ॥ "तस्मिन् दृष्टे
परावरे" इति तच्छेषः । ज्ञानस्याज्ञानमात्रनिवर्तकस्य न कर्मनि-
P. 22-11 वर्तकत्वम्), अत्राह—अथवेति ॥

P. 22-12 कल्पा(न?)न्तरं पराकरोति—नापीति ॥ अविद्या नष्टा पुनरुत्पत्तु-
P. 22-13 मर्हति; नष्टत्वात्, कार्यवदिति, अत्राह—अनादिरिति ॥ कार्यनाशस्य
कारणसंसर्गत्वात्, सति कारणे पुनः कार्यं स्यात्, अविद्यायाः, अनादि-
त्वाद् न कारणसंसर्गापेक्षेत्यर्थः । अविद्या, कारणाधीनात्मलाभा,

अभिप्रायप्रकाशिका

संसारहेत्वभावाद् मुक्तिः स्यात्; 'नाभुक्तं क्षीयते कर्म' इति स्मृतेरुपभोगादेव
कर्मक्षय इति, तत्राह—प्रायश्चित्तेनेवेति ॥ विद्यया कर्मक्षये स्मृति-स्मृती
प्रमाणमित्युक्तम्, इदानीं विद्यासामर्थ्यमेते श्रुति-स्मृती अनुवदत इत्याह—
अथवेति ॥ स्वप्नस्फुरणः=जाग्रद्बोधोदय इवेत्यर्थः । निर्हेतुत्वादविद्यायाः
तत्प्रवृत्तौ हेत्वपेक्षा नास्तीत्युक्तमित्याह—अनादिर्हीति ॥

यद्यविद्या हेतुमती स्यात्, तदा निवृत्ताप्यविद्या तत उत्पद्यत इति
शक्यं वक्तुम् । यदा पुनः सा निर्हेतुः, तदा निवृत्तायाः कुतः सम्भव इति

1. ( ) चिह्नान्यन्तर्गतं । A. पुस्तकेनास्ति ।
2. ( ) चिह्नार्गत A. पुस्तकेवादिस्ति ।

भावशुद्धिः

नाशित्वात्; घटवदिति चेत्, न; प्रागभावे व्यभिचारादित्याशयेनाह—प्रागभावे हीति ॥ प्रागभाववतो हेतुमत्त्वमित्यर्थः ॥

अविद्या, निर्हेतुः, अनादित्वात्; आत्मवदिति सत्प्रतिपक्षतामाह—असतीति ॥ कदेत्याक्षेपबीजमाह—न हीति ॥ (अ)ज्ञाननिवृत्तिरेव P. 22-14
(अ)ज्ञानस्य पुनर्भविष्यतः प्रागभावः, इति पुनर्भवेदज्ञानमिति, अत्राह—विद्ययेति ॥ नात्मा, तदुपादानम्, कौटस्थ्यात्, नाप्युपादानमन्यदस्ति। P. 22-15
निर्हेतुकार्यमयुक्तमित्यर्थः ॥

सुषुप्ते ब्रह्मप्राप्तेः प्रत्यहमावृत्तिरिति यदुक्तम्, तत्राह—सुषुप्ते P. 22-16
त्विति ॥ अग्रहणपदेनाच्छादिकानाद्यनिर्वचनीयाज्ञानमुच्यते, विक्षेपसंस्कार(ल)योरपि निवृत्तौ दण्डमाह—अन्यथेति ॥ अहरहर्ब्रह्मलोक- P. 22-17
प्राप्त्यभिधानस्य बीजमाह—विक्षेपेति ॥ यस्मादविद्यानिबन्धने(ना)
पुनरावृत्तिरित्युपसंहरति—तस्मादिति ॥ P. 22-18

"अद्वितीयसच्चिदानन्दरूपं ब्रह्मे"त्याद्यकारिकार्थमाक्षिपति—
केनेति ॥ अधिगमो हि प्रमाणकार्यमसति प्रमाणे न भवति, धूम P. 22-19
इव धूमध्वजाभाव इत्यर्थः। यथासम्भवं प्रमाणान्युपन्यस्य निराकरोति
न तावदिति—हेतुमाह—तस्येति ॥ नीलमिति वा, पीतमिति वा P. 22-20
व्यावृत्तरूपगोचरत्वात्, अन्यथा व्यवहारनियमानुपपत्तेः। उक्तं हि "प्रतिद्रव्यं भिन्नरूपोपलम्भनादि"ति। अनात्मा, तत्त्वतो ब्रह्मणो न

अभिप्रायप्रकाशिका

भावः। उक्तमेव स्पष्टयति—प्रागभावे हीति ॥ उक्तमेव व्यतिरेकमुखेनोपपादयति—न हीति ॥ प्रागभावाभावान्निवृत्ताया न पुनर्भव इत्याह—विद्यया त्विति ॥ यदुक्तम्—सुषुप्ते ब्रह्माप्तेः प्रत्युदाहृतिर्दृष्टेतित्व (तत्राह)—सुषुप्ते त्विति ॥ सुषुप्ता(व)विद्यानिवृत्तौ दोषमाह—अन्यथेति ॥ कथं तर्हि ब्रह्मप्राप्त्यभिधानमिति? अत्राह—विक्षेपेति ॥

उत्तरश्लोकव्यावर्त्याशङ्कामाह—केनेति ॥ तत्र यथासम्भवं प्रमाणान्युपन्यस्य निराकरोति—न प्रत्यक्षेणेत्यादिना ॥ नीलमिति वा, पीतमिति वा प्रत्यक्षं व्यावृत्तमेव वस्तु गमयति; अन्यथा व्यवहारनियमानु

भावशुद्धिः

भिद्यते, मेयत्वात्; ब्रह्मवदित्यनुमानेनेति, अत्राह—नेति ॥ भेदग्रहणनान्तरीयकमनुमानमुपजीव्यविरोधे दुर्बलमित्यर्थः। यथाऽऽकाशं द्रव्यत्वात् परजातीयभेदरहितम्, तथा ब्रह्म सर्वप्रकारभेदरहितमित्युपमानात् तत्सिद्धिं निराह—नोपमानेनेति ॥ भेदग्रहणनान्तरीयकत्वाच्चेति,
P. 22-21 अत्राह—तस्येति ॥ द्वैतदृश्यत्वानुपपत्तिरूपार्थापत्तिरद्वैते मानमित्याह
P. 22-22 —अर्थापत्तिस्त्विति ॥ तुशब्देनोक्तेभ्यः प्रमाणेभ्यो [1]भिनत्ति हेतुम्—
P. 22 23 न भेदमिति ॥ भेदाधिष्ठानविश्वव्यवहारदर्शनान्यथानुपपत्तिप्रभावभेदमन्तरेण व्यवहारानुपपत्ते(त्तिः) साक्षादेव भेदं गोचरयन्ती सुतरामद्वैतविरोधिनीत्यर्थः। आस्तां तावद् व्यवहारमात्रम्, भवदभिमताद्वैतावगमलक्षणोऽपि व्यवहारः प्रमाण-प्रमेय-प्रमातृ-प्रमाविभागमन्तरेण न
P. 22-25 शक्यत इत्याह—अभेदोऽपीति ॥ योग्यानुपलम्भोऽभावप्रमाकरणमिति न शङ्कनीयमित्याह—अभावोऽपीति ॥ द्वैताभावसिद्धावद्वैतं परिशिष्यत इति, अत्राह—नापीति ॥ तदसम्भवात्=अनुपलम्भादित्यर्थः ॥

P. 23- 1 अद्वैते मानमा[2]गमः कृतकः, नित्यो वा? नाद्य इत्याह—आगमो-
P. 23- 2 ऽपीति ॥ हेतुमाह—प्रमाणेति ॥ तस्य पुरुषविवक्षाधीनरचनस्य मानान्तरागोचरे ब्रह्मण्यसम्भवादित्यर्थः। द्वितीयं दूषयति—नापीति ॥ विधीयते, निषिध्यतेऽनेनेति व्युत्पत्त्या साधकतमत्वविवक्षया शब्दोऽपि

अभिप्रायप्रकाशिका

पपत्तेरित्यर्थः। तत्पूर्वकत्वादिति ॥ भेदग्राहिप्रत्यक्षपूर्वकत्वादित्यर्थः। न केवलमननुकूलार्था, अपि तु प्रतिकूलेति तुशब्देनाह—अर्थापत्तिस्त्विति ॥ भेदाधिष्ठानविश्वव्यवहारदर्शनान्यथानुपपत्तिप्रभवा भेदमन्तरेण व्यवहारानुपपत्तेः साक्षादेव भेदं गमयतीत्यर्थः। आस्तामयं भेद(व्यवहारः, अ)भेदव्यवहारोऽपि भवदभिमतो न भेदमन्तरेणेत्याह—अभेदोऽपीति ॥ अभावप्रमाणात् प्रपञ्चाभावे सिद्धे ब्रह्मणः स्वतःसिद्धतया सिद्धिः किं न स्यादिति? अत्राह—नापीति ॥ 'अलम्' इति पूर्वेण सम्बन्धः ॥

1. नेति निर्हेतुमाह—A. B. 2. अद्वैतात्मावगम A.

भावशुद्धिः

विधि-निषेधरूपावित्यस्तु विधिनिषेधरूपत्वम्, किमत इति? अत्राह— तयोश्चेति ॥ कार्यरूपौ हि विधि-निषेधौ; कार्यं च कृत्यवच्छिन्नम्। P. 23-3
कृतिश्च पुंप्रयत्नो विधिषु प्रेरकः, निषेधेष्वनाधेयानागतोत्पाद्यभावगोचरो न सिद्धं गोचरयेदित्यर्थः ॥

विधि-निषेधपरत्वे शब्दानां सिद्धे भवेदेतत्, तदेव त्वसिद्धिम्; सिद्धविषयाणामपि तेषामुपाख्यानादौ विधि-निषेधानपेक्षाणां बहुलमुपलम्भयात्, अत्राह—नापीति ॥ कुत इति? अत्राह—नापीति ॥ भूतार्थस्य मानान्तरयोग्यत्वात् ततोऽनुपलम्भयोग्यानुपलम्भबाधादुपलम्भे सापेक्षत्वम्-अमात्वमित्यर्थः ॥

इतश्चैतदेवमित्याह—लोकाच्चेति ॥ गृहीतसङ्गतिकस्यैव शब्दस्य बोधकत्वात् सङ्गतेश्च वृद्धव्यवहारेषु प्रयोगभेदेष्वावापोद्वापाभ्यामवगम्यत्वादित्यर्थः। सङ्गत्यवगमस्य प्रयोगाधीनत्वेऽपि किं स्यात्, P. 23-5

अभिप्रायप्रकाशिका

विधीयते, निषिध्यते वा अनेनेति करणव्युत्त्या विधि-निषेधरूपत्वमागमस्य विधि-निषेधविषयतया तर्हि ब्रह्म सिध्यतामिति, अत्राह—तयोश्चेति ॥ विधि-निषेधयोः कार्यगोचरत्वात्, कार्यस्य च कृत्यवच्छिन्नत्वेन प्रयत्नरूपाया अनागतोत्पाद्यधात्वर्थगोचरत्वाद् न सिद्धे ब्रह्मणि सम्भव इत्यर्थः। "विज्ञानमानन्दम्" इत्यादिवाक्ये सिद्धवस्तुपरताऽपि दृष्टेति, अत्राह—नापीति ॥ भूतार्थस्य प्रमाणान्तरयोग्यत्वात्, आगमस्य तद्विषयस्य तत्संवादेऽनुवादकत्वात्, विसंवादे च बाधादप्रामाण्यं स्यादित्यर्थः। सम्बन्धाधिगमस्य वृद्धप्रयोगाधीनत्वात्, प्रयोगस्य च श्रोतृप्रयोजनं विनाऽनुपपत्तेः, प्रयोजनस्य च प्रवृत्ति-निवृत्तिसाध्यत्वात्, तयोश्च कार्यावगतिनिबन्धनत्वात् साक्षात्, परम्परया वा कार्यावगतिनिर्वाणा एव सर्वे शब्दा इत्याह—लोकाच्चेति ॥

प्रयोगानुपपत्त्या कार्यपरतां समर्थयित्वा सम्बन्धग्रहणानुपपत्त्याऽपि कार्यपरतां साधयति—अपि चेति ॥ कुत इति? अत आह—प्रवृत्त्या हीति ॥ प्रवर्तकवाक्यश्रवणसमनन्तरं श्रोतुः प्रवृत्तिलिङ्गेन कार्यज्ञानं प्रवर्तक-

भावशुद्धिः

अत्राह—तत्रेति ॥ वृद्धाश्च तत्रैव शब्दान् प्रयुञ्जते, यत् परे बुभुत्सन्त इत्यर्थः । कार्यमेव परे बुभुत्सन्त इति कुतः ? अत्राह—
P. 23- 6 तथेति ॥ कार्यपरत्वेनैवार्थवत्त्वमुपपादयति—न हीति ॥ तदेव फलवत्, यदवगतमीप्सा-जिहासाभ्यां प्रवृत्ति-निवृत्तिगोचरः । प्रवृत्ति-निवृत्ती च कर्तव्यतावगमाधीने, इति कर्तव्यतापरता सर्वशब्दानामित्यर्थः ॥

न केवलं-प्रवृत्ति-निवृत्तिशून्यस्य वचसः प्रयोगानर्हतया सम्बन्धा-
P. 23- 7 ज्ञानम्, किन्तु प्रयोगार्हत्वेऽपि न शक्यसम्बन्धो ज्ञातुमित्याह—अपि
P. 23- 8 चेति ॥ कुत इति ? अत्राह—प्रवृत्त्या हीति ॥ सम्बन्धज्ञानस्य श्रोतृ-बुद्धिभेदानुमानमूलत्वादित्यर्थः । किमतः ? तत्राह—तथाचेति ॥

अप्रवृत्ति-निवृत्तिपरेषु वचस्सु पुरुषसमीहालक्षणस्य लिङ्गस्या-भावेनानुमानानुत्पत्तिरित्यर्थः । प्रवृत्तिदर्शनेन प्रवर्तकान्वितार्थे पदानां
P. 23- 9 सामर्थ्यावगमाद् न सिद्धे मानत्वमित्याह—तथा सतीति ॥

P. 23-10 ब्रह्म, मानान्तरानवगतम्, तदवगतं वा ? आद्यं प्रत्याह—अपि चेति ॥ अनुवादकत्वेन न प्रामाण्यमित्यर्थः । द्वितीयमनूद्यावबोधकत्वेन
P. 23-11 तदाह—अथेति ॥ धीरेव न स्यादिति खल्वर्थः । पदस्य सम्बन्धबुद्ध्य-पेक्षा, न वाक्यस्य ; वाक्यार्थस्तु ब्रह्मेति, अत्राह—अपदार्थस्य इति ॥

अभिप्रायप्रकाशिका

मास्मद्दृष्टान्तेन बालोऽनुमाय, विशेषेण सर्वपदानां तत्रैव सामर्थ्यं प्रतिपद्य, पश्चादावापोद्वापाभ्यां प्रत्येकं कार्यान्वितस्वार्थेषु सामर्थ्यं प्रतिपद्यते, प्रवृत्त्य-भावे तु लिङ्गाभावान्न सङ्गत्यवगतिरित्यर्थः । भवतु कार्ये सङ्गतिग्रहः, तदुत्तर-कालं सिद्धोऽपि बोध्यतामिति, अत आह—**तथा सतीति** ॥

किञ्च ब्रह्म, मानान्तराधिगतम्, अनधिगतं वा ? इति विकल्प्य दूषयति—**अपिच प्रमाणेति** ॥ अनधिगतस्य प्रमेयत्वासम्भवं वदन् वेद्यत्वस्यापि सम्भवो नतरामित्युक्तम् । सम्बन्धग्रहासम्भवाद् मा भूत् पदार्थत्वम् । वाक्यार्थता किं न स्यादिति ? अत आह—**अपदार्थस्य इति** ॥

ब्रह्मसिद्धिः कारिका

आम्नायतः प्रसिद्धिं च कवयोऽस्य प्रचक्षते।
भेदप्रपञ्चविलयद्वारेण च निरूपणम् ॥ २ ॥

भावशुद्धिः

हेतुमाह—पदार्थ इति ॥ कुतोऽयं नियमः? अत्राह—अत्यन्तेति ॥ P. 23-13
गुणत्वेन=विशेषणत्वेन। प्रधानत्वेन=विशेष्यत्वेन। विशिष्टधियो विशेषण-विशेष्यधीकार्यत्वादित्यर्थः ॥

([1]एवं ब्रह्मणि प्रमाणगतमसामर्थ्यमापाद्य, प्रमाकर्मभावमपि प्रति ब्रह्मणोऽयोग्यतां निषेधति—अपि चेति ॥ हेतुमाह—सर्वा हीति ॥ P. 23-14
"एवं नैवम्" इति विधि-निषेधाभ्यां प्रकारभेदाभावे दण्डमाह—अन्यथेति ॥ तदुपपादयति—सर्वेति ॥ प्रलीननिखिलावच्छेदतया P. 23-15
प्रस्तुतत्वं न प्रकारवत्, यतः प्रतीतिगोचरः स्यादित्यर्थः ॥)

एतदाक्षेपपरिहारतया कारिकामवतारयति—अत [2]एवेति ॥ १ ॥

ब्रह्मसिद्धिकारिकाविवरणम्

अस्य = ब्रह्मणो मानान्तरा[3]नधिगतसंबन्धस्य चाऽऽम्नायतः प्रसिद्धिं कथयन्ति; निगम-निरुक्ताद्यनुगृहीतब्रह्मादिपदनिरुक्तिसामर्थ्यात्; तथापि कथं निर्विशेषतत्त्वसिद्धिः? अत्राह—भेदेति ॥ "नेति नेती"ति P. 23-19
विशेषप्रतिषेधमुखेन सर्वविशेषातीतत्त्वावधारणं कथयन्ति; विशेषशब्दानां तु तस्मिन् यथायथं विदितसंगतित्वादित्यर्थः ॥ २ ॥

अभिप्रायप्रकाशिका

प्रमाणस्वभावालोचनया ब्रह्मणि प्रमाणप्रवृत्तिं निरस्य, सम्प्रति ब्रह्मस्वभावालोचनयाऽपि न तत्र प्रमाणप्रवृत्तिरित्याह—अपि चेति ॥ तदुपपादयति—सर्वा हीति ॥ विधि-निषेधरूपा प्रतिपत्तिः प्रकारभेदवन्तमेवार्थमवगमयति, ब्रह्म तु नैवमित्यर्थः। प्रपञ्चनिषेधेन ब्रह्मप्रतिपत्तिः किं न स्यादिति? अत्राह—सर्वेति ॥ विशिष्टाभावप्रतिपत्तिर्न स्यादित्यर्थः ॥

1. ( ) चिह्नान्तर्गतम् A. पुस्तके नास्ति। 2. स्यादिति, अत एवाहेति मूलपाठोऽनुमीयते, मूले तु स्यादिति—अत्राहेति। पाठः। 3. मानान्तराधि B.

भावशुद्धिः

यदुक्तम्—भूतार्थत्वे मानान्तरापेक्षत्वादनुवादकत्वेनामात्वमिति,
P. 23-20 तत्राह—भूतार्थेति ॥ कार्यपरत्वमनपेक्षत्वप्रयोजकं चेत् "चैत्यं वन्देत स्वर्गकामः" इति बुद्धवचोऽप्यनपेक्षं स्यादित्यादिना नियोगकाण्डे वक्ष्यत इत्यर्थः । यच्चोक्तम्—भूतार्थे प्रवृत्तिशून्ये प्रयोगानुपपत्तेर्न संबन्धबोधः—इति, तदयुक्तम्; प्रवृत्ति-निवृत्तिव्यतिरिक्तस्यापि प्रयोजनस्य[1] भावादित्याह—न च कार्येति ॥ पेक्षावतां प्रवृत्ति-निवृत्तिरहि-
P. 23-21 तार्थपरतया प्रयोग एव नास्तीति, अत्राह—तथाहीति ॥ प्रवृत्तिः=अनुष्ठानम्, निवृत्तिः=औदासीन्यम् । निष्प्रयोजनानि तर्हीति, नेत्याह—दृश्यन्ते चेति ॥ अस्ति तत्रापि सुखीभवनरूपप्रवृत्तिरिति, अत्राह—न
P. 23-22 चेति ॥ हेतुमाह—वस्तुसामर्थ्यादिति ॥ अनपेक्षिताभिधायिनां प्रेक्षावत्त्वव्याघातादित्यर्थः ॥

अनुभवबलेन शङ्कते—अथेति ॥ सुखीभवनरूपप्रवृत्तिभेदोऽस्ति; तस्य पुमर्थतया वचसस्तत्पर्यमित्यर्थः । तदुपायपुत्रजन्मादिज्ञापनद्वारा तदुत्पादने तात्पर्यम्, न तु तद्बीजनने; अन्यलभ्यस्याशब्दार्थत्वादित्याह—सत्यमिति ॥ यत्र प्रमाणम्, न तत्र विधिः; तस्य सिद्धत्वात्,

अभिप्रायप्रकाशिका

यदुक्तम्—भूतार्थत्वे मानान्तरसापेक्षत्वमिति, तत्राह—भूतार्थेति ॥ अपौरुषेयत्वादाम्नायस्य पौरुषेयवाक्यवत् पुरुषबुद्धिपूर्वकत्वाभावाद् भूतार्थत्वेऽपि न मानान्तरापेक्षेति वक्ष्यते नियोगकाण्ड इत्यर्थः । यदुक्तम्—प्रयोजनमन्तरेण प्रयोगानुपपत्तेः कार्यपरत्वमिति, तत्राह—न चेति ॥ तत्रापि जातेष्ट्यादिपरता किं न स्यादिति ? अत्राह—न प्रवृत्तय इति ॥ अनभिसंहितकर्तव्यान्तरस्यापि परप्रीत्यर्थमेव प्रयोगदर्शनादित्यर्थः । यदुक्तम्—भूतार्थत्वे निष्प्रयोजनतेति, अत्राह—दृश्यन्ते चेति ॥ तत्रैव तदर्थं प्रवर्त्यतामिति, अत आह—वस्त्विति ॥ ज्ञातादेव पुत्रजन्मनः सुखसिद्धेर्न विध्यपेक्षेत्यर्थः ॥

शङ्कते—अथेति ॥ प्रवृत्तिविशेषः=सुखीभवनरूपः, तस्य च पुरुषार्थत्वात् वचसश्च तात्पर्यं तत्रास्तीत्यर्थः । सुखीभवने तात्पर्यं वचसो न वयं वारयामः, किन्तु तदुत्पादकतया, न तु तज्ज्ञापकतयेति ब्रूम इति परिहरति—सत्यमिति ॥

1. स्या B.

भावशुद्धिः

विधेश्च कर्तव्यतावगाहित्वादित्याह—[1]प्रतिपत्तिर्हीति ॥ अनन्तरं प्रवृत्ति- P. 23-26
दर्शनात् तत्पर्यन्तो व्यापारः शब्दस्यैवेति, अत्राह—न चेति ॥ प्रमाण-
प्रयोजनयोरभावादित्यर्थः ॥

किं चास्याः प्रवृत्तेर्गोचरो न विचारं सहत इति, अत्राह—
अपिचेति ॥ उपेये स्वयमुन्मुखोऽपि चेतन उपायापरिज्ञानादप्रवृत्त इत्यर्थः । P. 24- 1
आद्यं निराह—तत्रेहेति ॥ द्वितीयं दूषयति—नोपेय इति ॥ ([2]उपायज्ञान- P. 24- 3
व्यतिरेकेण सुखार्थव्यापाराभावादिति हेतुमाह—तदर्थेति ॥ यथा महद्भयं P. 24- 4
समुपस्थितं तस्या(स्मा)दि(ति)निमित्तपरिहारोपाया) लुष्ठानम्, इतो
न(नि)वृत्तिं वोपदिशति, तथा प्रियाख्यानमपि तत्परमिति, अत्राह—
तथा दुर्जनेति ॥ अनिष्टार्थज्ञानादेव विपदः सिद्धेस्तस्मिन्निवृत्तीच्छयैव
तदुपायानुष्ठानसिद्धेरुपदेशानपेक्षणादित्यर्थः ॥

दुर्जनवचनमपुमर्थपर्यवसितमप्रमाणम्, प्रमाणभूतं वाक्यं प्रवृत्ति-
पर्यन्तमिति, अत्राह—तथा रज्ज्वति ॥ नायं सर्पो रज्जुरेषा । अतो मा P. 24- 5

अभिप्रायप्रकाशिका

किं तर्हि वचो ज्ञापयतीति ? तत्राह—प्रतिपत्तिर्हीति ॥ परिनिष्पन्नं पुत्र-
जन्मैवेत्यर्थः । अङ्गीकृत्यैतदुक्तम्, सुखीभवनप्रवृत्तेरुत्पादकमपि न वच
इत्याह—न चेति ॥ भूतार्थपर्यवसितस्यापि वाक्यस्य तत्त्वप्रतिपादननान्तरी-
यकतया प्रत्यक्षादिवत् प्रयोजनवत्त्वे सति न प्रवृत्तिपर्यन्तो व्यापारः कल्पनीयः;
अनुपपत्त्यभावादित्यर्थः । प्रवृत्तिविषयानिरूपणादपि न प्रवृत्तिनिष्ठं वाक्य-
मित्याह—अपि चेति ॥ किमुपाये प्रवर्त्यते वचसा पुरुषः, किं चोपाय
प्रज्ञापनद्वारेणोपेय एवेति विकल्पार्थः । नाद्य इत्याह—तत्रेति ॥ न द्वितीय
इत्याह—नोपेय इति ॥

तत्त्वनिष्ठमपि वाक्यं सुखावाप्तिप्रयोजनं दृष्टमित्युक्तम्, इदानीं दुःख-
निवृत्तिप्रयोजनमपि दृश्यत इत्याह—तथा रज्जुवेष्टितेति ॥ तत्त्वान्वा-

---

1. प्रतिपत्तिस्त्वति । मूलपाठः ।
2. ( ) चिह्नान्तर्गतं (क पुस्तके) नास्ति ।

भावशुद्धिः

P. 24-6 भैषीरिति कार्यं प्रतिपाद्यते इति, अत्राह—न त्विति ॥ अत्र नियोगा-
P. 24-7 भावमुपपादयितुं नियोगविषयमाह—तत्र हीति ॥ यत्र धात्वर्थे विषये
नियोगार्थे विषये नियोगार्थं ममात्र नियोग इत्यवगम्य बुद्धिपूर्वं
प्रवर्तककार्यधीपूर्वं नियोगसामर्थ्याद् नैमित्तिकनिषेधक्रत्वऽर्थेषु प्रवृत्तिः,
काम्येषु प्रवृत्तिरिच्छानिबन्धना, तन्नियोगः तत्रोदास्त इति प्राभाकरा
P. 24-9 इत्यर्थः । प्रकृते तद्वैलक्षण्यमाह—इह त्विति ॥ किञ्च भयनिवृत्तौ
P. 24-10 पुमान् प्रवर्तते, तदुपाये वा, नाद्य इत्याह—न चेति ॥ द्वितीयं दूषयति—
P. 24-11 नापीति ॥ हेतुमाह—रज्जुरिति ॥ शब्दस्य कार्यतत्त्वप्रतिपत्त्यर्थो
P. 24-12 व्यापारो नियोगनिबन्धनः स्यात्, अत्राह—शब्दार्थेति ॥

"प्रवृत्तिर्वा निवृत्तिर्वा नित्येन कृतकेन वा ।
पुंसां येनोपदिश्येत तच्छास्त्रमभिधीयते ॥"

इत्याप्तवाक्यबलात् कथञ्चित्कार्यमत्र कल्प्यमित्याशङ्क्याह—
P. 24-13 [1]तथातिदूरेति ॥ गङ्गातीरवासिनः किंवृत्ता इति पृष्टवतां तद्देशवृत्ता-
न्वाख्यानमतिदूरत्वविशेषणमौत्सुक्यप्रतिपत्त्यर्थम्, नैतद्वचनं वैदिक-
मित्यर्थः ॥

इममर्थं पुनर्न्यायेन वक्तुं यत्र शब्दार्थज्ञानानन्तरं प्रवृत्ति-निवृत्ती,
P. 24-15 तत्रापि न तत्परः शब्द इत्याह—अपि चेति ॥ उदाहरति—यथेति ॥
प्रतिरोधकः=चोरः । तत्रापि न प्रवृत्ति-निवृत्त्यर्थता वचस इत्याह—

अभिप्रायप्रकाशिका

ख्यानम्=नायं सर्पो रज्जुरेवेयमिति (ज्ञापनम्) । क्रत्वर्थविषया प्रवृत्ति-निवृत्तयो नियोगसामर्थ्यात्, काम्येषु पुनः करणांशे कामनावशात् प्रवृत्तिरिति प्राभाकरमतमवलम्ब्योक्तम् । नियोगसामर्थ्यादिच्छया वेति ॥

अस्तु तर्हि भयनिवृत्तौ नियोग इति, मैवम्, स्वयमेव प्रवृत्तत्वादित्याह—न चेति ॥ तथापि कथं नियोगानधीनता? इति, तत्राह—शब्दार्थेति ॥

शब्दार्थप्रतिपत्त्युत्तरकाला अपि प्रवृत्ति-निवृत्तयो न नियमेन विध्यधीनाः; अन्यतोऽपि सम्भवात्, अनन्यलभ्यस्य च शब्दार्थत्वादित्याह—अपि च यत्रेति ॥

---

1. तथा दूरेति मूलपाठः ।

भावशुद्धिः

तत्रापीति ॥ कुतस्तर्हि प्रवृत्ति–निवृत्तिलाभः? तत्राह–भूतार्थेति ॥ धनस्य सुखहेतुत्वम्, प्रतिरोधकस्य दुःखहेतुत्वं च पूर्वावगतमनुस्मृत्येदं सुखहेतुः, धनत्वात्; पूर्वदृष्टवदिति पूर्वा[1]नुभूतधनवदिति(वा) सुखहेतुत्वमनुमाये[2]च्छया प्रवर्त्तते, अयम्, दुःखहेतुः, प्रतिरोधकत्वात्, पूर्वदृष्टवदित्यनुमाय द्वेषाद्-निवर्तते। अतोऽनन्यलभ्यत्वाभावाद् न तयोः शब्दार्थतेत्यर्थः ॥

भूतार्थपर्यवसितव्यापारस्य शब्दस्य निष्प्रयोजनतया प्रेक्षावत्प्रवृत्त्यनुपपत्तेः प्रवृत्ति-निवृत्त्यन्यतरविधिरेव व्यापारः कल्पनीय इति चोदयति—नन्विति ॥ वाक्ये तु तत्प्रत्यायकाभावात् कथं तत्पर्यवसानम्? अत्राह—इदं हीति ॥ प्रेक्षावत्प्रयोगोऽन्यथासिद्धो न प्रवृत्ति-निवृत्तिपर्यन्ततां वाचां व्यवहारस्य गमयतीति परिहरति—नैतदिति ॥ प्रत्यक्षादीनामिवेत्युक्तं दृष्टान्तं विशदयति—भूतार्थप्रमेति ॥ प्रत्यक्षादेर्न भूतार्थावगमद्वारा प्रवृत्ति-निवृत्त्यङ्गत्वम्, अत्राह—न चेति ॥ शब्दः, न प्रवृत्तिपर्यन्तव्यापारः, प्रमाणत्वात्, प्रत्यक्षादिवदित्याह—तथेति ॥

P. 24-19
P. 24-23
P. 25- 1

यथा प्रत्यक्षावगतस्य हिताहितहेतुत्वाद् न प्रेक्षावत्प्रयोगानुपपत्त्या प्रवृत्ति-निवृत्त्यर्थतामाचक्ष्महे, किन्तु तदभिसन्धानात्, अभिसंहितप्रवृत्ति-निवृत्तयोर्हि प्रेक्षावन्तः प्रयुञ्जते—निधिमानित्यादि, तदवगच्छामोऽवगच्छन्ति—नूनमेते प्रवृत्ति-निवृत्त्यन्तरपरता वाक्या-

अभिप्रायप्रकाशिका

कस्तर्हि तत्र प्रवृत्तिहेतुरिति? अत आह—भूतार्थेति ॥ तस्य=तज्जातीयस्येति यावत्। संस्मृत्य=तज्जातीयतया शब्दावगतस्यापि तद्धेतुतामनुमायेति शेषः ॥

पूर्वोक्तावेव चोद्य-परिहारौ प्रपञ्चयत्यधिकं वक्तुम्—नन्वित्यादिना ॥ प्रवृत्ति-निवृत्तिपर्यवसितत्वे तत्पर्यन्तं प्रयोगः स्यादिति, अत्राह—इदं हीति ॥ उद्घाटनविवक्षया 'द्वारं द्वारमि'तिवत् प्रसिद्धत्वान्न प्रयुज्यत इत्यर्थः ॥

प्रवृत्ति-निवृत्त्योरन्यथाप्युपपन्नत्वान्नाध्याहर्तव्यमिति परिहरति—नैतदिति ॥ दृष्टान्तं प्रपञ्चयति—भूतार्थेति ॥ न प्रयोगानुपपत्त्या प्रवृत्त्यादि-

1, दृष्टवदित्यनुमानभूत 2, ने वच्छया।

भावशुद्धिः

P. 25- 2 नामिति शङ्कते—प्रयोक्तिरिति ॥ निराकरोति—नेति ॥ सामर्थ्यम्= अनन्यलभ्यविषयत्वमित्यर्थः । विवक्षितस्य शब्दार्थत्वे तत्प्रसङ्गमाह—
P. 25- 3 अन्यथेति ॥

वाक्यम्, न विवक्ष्य प्रयुक्तविषयम्, प्रमाणत्वात्; प्रत्यक्ष-
P. 25- 4 वदित्याह—यदा चेति ॥ निधिमानित्यादिशब्दस्य प्रवृत्त्यर्थत्वाभावे
P. 25- 6 हेत्वन्तरमाह—इतश्चेति ॥ कस्यचित् कामुकस्य निधिसद्भाववेदने(ऽपेक्षा) अन्यस्य विरक्तस्योपेक्षा, एवं प्रतिरोधकवानित्यत्र कस्यचित् निविवृत्सा, कस्य चिज्जिगमिषेत्यर्थः । शब्दस्यानेकार्थत्वात् बुद्धिविकल्पो
P. 25- 7 नेत्याह—शब्दार्थत्वे हीति ॥ अन्याय्यं चानेकार्थत्वमित्यर्थः[1] ॥

यदुक्तम्—न भूतानुवादाद्वचसस्संबन्धावगम इत्यादि, तद्
P.25-9-10 निराचष्टे—न च प्रवर्तकेति ॥ अन्यथा दर्शनं दर्शयति—देवदत्त इति ॥ स्थाल्यादिपदानां कार्यान्विते व्युत्पत्तेः कार्यपरत्वस्य स्वाभाविकत्वात् कथञ्चिल्लक्षणया लोके वर्तमानपरत्वप्रत्ययात्कार्यपरपदकदम्बकमध्ये काष्ठपदशब्दस्यापि तत्परत्वमौत्पत्तिकम्, इति कुतः कार्यान्वयरहित-
P. 25-12 स्वरूपमात्रे सम्बन्धधीरिति, अत्राह—तथा चेति[2] ॥
P. 25-13 व्युत्पत्तिं व्युत्पादयति—यथैवेति ॥ पुंप्रवृत्तिरूपार्थभावना वाक्यार्थ

अभिप्रायप्रकाशिका

परतां ब्रूमः, किन्तु तदभिसन्धानादिति शङ्कते—प्रयोक्तिरिति ॥ निराकरोति—नेति ॥ प्रयुक्तपदानामन्यथानुपपत्तौ हि तत्पर्यन्तता कल्पनीया, न चात्रानुपपत्तिः प्रवृत्तिनिवृत्त्योः, अन्यथाऽप्युपपत्तेर्दर्शितत्वादित्यर्थः । अभिसंहितत्वमात्रेण शब्दार्थत्वे दोषमाह—अन्यथेति ॥

प्रमाणान्तरेष्वदर्शनादपि नाभिसन्धानमात्रेण प्रवृत्ति-निवृत्त्योः प्रमेयतेत्याह—यदा चेति ॥ निशि चोरसद्भावनियमेऽपि प्रवृत्ति-निवृत्त्योरनियमादपि न तत्पर्यन्तता शब्दस्येत्याह—इतश्चेति ॥

प्रसिद्धपदसमभिव्याहारादपि व्युत्पत्तिदर्शनान्न प्रवर्तकवाक्य एव

---

1. अर्थः इति नास्ति B. 1. तथेति मूलपाठः

भावशुद्धिः

इति मतावलम्बनेनाह—विशिष्टप्रवृत्तिप्रत्यय इति ॥ प्रवर्तककार्यमनुमीयत इति कार्यवादिमतमाह—तन्निमित्तेति ॥ इयं प्रवृत्तिः, कार्यधीपूर्विका, स्वतन्त्रप्रवृत्तित्वात्, मदीयप्रवृत्तिवदित्यर्थः । अन्यलभ्यत्वादनुमितकार्यस्याशब्दत्वम्, अत्राह—हेत्वन्तरेति ॥ दार्ष्टान्तिके विवक्षितं P. 25-14
योजयति—तथेति ॥ विकसितवदनत्वादिना हर्षादिकमनुमायायं हर्षादिः, इष्टार्थधीकार्यः, हर्षादित्वात्, मदीयहर्षवदित्यर्थः । तथापि कथं हर्षादिहेतौ सम्बन्धधीः ? अत्राह—शब्देति ॥ P. 25-15

वार्ताहारेण साकं जनकाभ्याशमागतस्य सुतजन्महर्षहेतुरिति निर्णयायोगाद्विशेषसम्बन्धासिद्धिः, अत्राह—प्रमाणेति ॥ अतीतानागत- P. 25-16
हर्षहेत्वानन्त्यात् परिशेषासिद्धिः, अत्राह—अन्यस्य चेति[1] ॥ संनिहित- P. 25-17

अभिप्रायप्रकाशिका

सम्बन्धग्रह इत्याह—न चेति ॥ प्रथमं कार्येभ्यो व्युत्पन्नतरपदार्थस्य तत्साहचर्यात् पदान्तरव्युत्पत्तिसम्भवेऽपि पदान्तराणां प्राथमिककार्यव्युत्पत्त्यनुसारेण काष्ठशब्दस्यापि कार्यपरत्वम्, इति कुतः कार्यान्वयिनि सम्बन्धाग्रह इति ? तत्राह—तथा चेति ॥ इतरत्रातिदेशाय कार्ये व्युत्पत्तिप्रकारमाह—यथैव हीति ॥ प्रवृत्तिप्रत्ययः, तन्निमित्तप्रत्ययो वेति क्रियावाक्यार्थवादिनाम्, कार्यवाक्यार्थवादिनां च मतानुसारेणोक्तम्, इदानीमुक्तन्यायं सिद्धार्थव्युत्पत्तावपि दर्शयति—तथेति ॥

तथापि हर्षहेतूनामानन्त्यात् कथं पारिशेष्यावधारणमिति ? तत्राह—प्रमाणान्तरेणेति ॥ साक्षात्कृतदेवदत्तपुत्रजन्मनो बालस्य तद्वार्ताहारेण समं समागतस्य पुत्रजन्मैव देवदत्तस्य हर्षहेतुरनेन वाक्येनाभिहित इति निर्णयोपपत्तेरित्यर्थः । प्रियायाः सुखप्रसवादेरपि तत्र दृष्टत्वात् कथं पुत्रजन्मैव हर्षहेतुरित्यध्यवसायति, तत्राह—अन्यस्य चेति ॥ 'पुत्रस्ते सुखी' 'पुत्रस्ते निरामयो जातः' इत्यादिप्रयोगान्तरेषु पुत्रादिपदानां तनयाद्यर्थेषु सम्बन्धग्रहणात् प्रागप्ययमेवार्थः पुत्रजन्मवाक्येन प्रतिपादित इति निश्चयोपपत्तेः;

1. तथेति मूलपाठः

भावशुद्धिः

सुतोत्पत्तित्यागेनासंनिहितकल्पनं गरीय इत्यर्थः । न च स्वाधिगत-
तत्प्रिये तद्धीरित्यवधृतिः ; तत्रैवानेकस्य प्रियासुखप्रसवादेः सम्भवा-
P. 25-18 दिति, अत्राह—पुत्रजन्मैवेति ॥ पुत्रजन्मन उपजीव्यतया पुरःस्फूर्ति-
कत्वात् प्रयोगान्तरेषु प्रतिपदमावापोद्धाराभ्यां पश्चाद् निर्णयोपपत्ते-
श्चेत्यर्थः। ([1]तत्सिद्धमेतत्—विवादाध्यासितं वचनम्, औत्पत्तिक्याशक्त्या
कार्यासङ्गतार्थगोचरम्, तत्र प्रमाजनकत्वात्; यद् यत्र प्रमाजनकम्,
P. 25-19 तत् तद्गोचरम्, यथा रूपादिगोचरं चक्षुरादीत्याह—तदेवमिति ॥)

प्रयोग-प्रत्ययाभ्यां चरम-मध्यम-प्रवृद्धसमवायिभ्यामेवम्भूतार्थ-
प्रयोगाच्छक्तिग्रहमुक्त्वा, प्रवर्तकवाक्याच्छक्तिग्रहेऽप्यस्मद्राद्धान्तसिद्धि-
P. 25-21 P. 25-22 रित्याह—भवतु वेति ॥ आद्यं दूषयति—तत्र स्वार्थेति ॥ शब्दस्यान्वित-
धीजननासामर्थ्यादित्यर्थः । न केवलं श्रोतुः प्रत्ययाभावः, प्रयोक्तुः
P. 25-24 प्रयोगानर्थक्यं चेत्याह—प्रयोगेति ॥ तस्मादितरान्वितस्वार्थप्रति-
पादनसामर्थ्यं स्वीकार्यमित्याह—तस्मादिति ॥ शक्तिगोचर इति शेषः ॥
कार्यान्वितस्वार्थ इति वक्तव्ये किमिदमुक्तमन्यार्थव्यतिषङ्ग इति?

अभिप्रायप्रकाशिका

अन्यथा प्रवर्तकवाक्यश्रवणसमनन्तरमपि श्रोतुरनेकविधप्रवृत्तिदर्शनात्, तत्रापि पारिशेष्यावधारणं बालस्य दुर्लभं भवेदित्यर्थः । एवं प्रयोक्तुरभिप्रायं निश्चित्य प्रतिपत्तुरभिप्रायनिश्चयप्रकारमाह—पुत्रजन्मैवेति ॥

प्रवर्तकवाक्य एव सम्बन्धग्रहणमङ्गीकृत्यापि न कार्यस्य शब्दशक्तिप्रतियोगित्वमित्याह—भवत्विति ॥

प्रथमपक्षं दूषयति—तत्रेति ॥ अभिहितानां पदार्थानां संसर्गबोधकत्वात् वाक्यार्थप्रत्ययाभावः कथमिति नाशङ्कनीयम्; पदार्थाख्यप्रमाणान्तराभावात्, वाक्यस्य चाशब्दत्वप्रसङ्गात्, पदानामेव संसर्गबोधकत्वसम्भवे पदार्थानां तद्बोधकत्वकल्पने गौरवाच्चेति भावः । अन्यार्थव्यतिषङ्गः=पदानां शक्तिविशेष इति शेषः ॥

---

1. (...) एतच्चिह्नान्तर्गतम् । A. पुस्तके नास्ति

भावशुद्धिः

तत्राह—तावतेति ॥ संसृष्टप्रत्ययात् संसृष्टव्यवहारसिद्धेरित्यर्थः । अन्वित- P. 26-1
मात्रस्योभयसिद्धत्वात्, लघवाच्च सामर्थ्यगोचरत्वम्, न कार्य-
संसर्गस्य; वैपरीत्यादित्याह—यो हीति ॥ पदार्थसंसर्गस्य कार्याधी-
नत्वात् तत्संसर्गपरत्वमिति, अत्राह—तथा चेति ॥ राज्ञे(ज्ञोऽयं) पुमा- P. 26-2
नित्यादिदर्शनाद् नायं नियम इत्यर्थः । कार्यपरत्वेनैव लोके प्रयोग-
दर्शनात् पदानां कुत(तोऽ)र्थान्तरसंसर्गपरतेति, अत्राह—अवश्यं चेति ॥ P. 26-3
अवश्यशब्दसूचितबाधकमाह—अन्यथेति ॥ अन्वयमात्रात्कार्यस्य शब्द- P. 26-4

अभिप्रायप्रकाशिका

तथापि कार्यव्यतिषङ्गः कथं निरस्त इति ? तत्राह—तावतेति ॥ उभयवादिसम्प्रतिपन्नत्वाच्च तावन्मात्रमेव शब्दशक्तिप्रतियोगीति कल्पनीयम्, लाघवादित्याह—यो हीति ॥ 'गामानय' इत्यादिप्रयोगे कार्यपरत्वस्यैव दर्शनात् कुतोऽर्थान्तरसंसर्गपरतेति ? अत आह—अवश्यं चेति ॥ कार्यपद-स्यासंस्पृष्टस्वार्थाभिधायित्वानुपपत्तेर्धात्वर्थकार्यत्वस्य कार्यान्वयात् प्रागसिद्धेस्तद-न्विताभिधायित्वासिद्धेरन्वितस्वार्थाभिधायित्वमेव वक्तव्यम्। तथा चेतरेषामपि पदानामन्यान्वितस्वार्थाभिधायित्वमेवाङ्गीकर्तव्यमेकप्रयोजकलाभाय । नच—कार्यान्वितस्वार्थाभिधायितायामेकप्रयोजकत्वलाभ इति—शङ्कनीयम्; विकल्पा-सहत्वात् ॥

तथाहि कार्यपरत्वं पदधर्मः किं वा पदार्थधर्म इति। नाद्यः; सर्वपदानां लिङादिपदवत् कार्यपरत्वे पर्यायतापत्तेः। अथ पर्यायतापरिहाराय मुख्य-गौण-साक्षात्परम्परादिभेदेन कार्यपरतां विशिंष्यात्, न तर्ह्येकप्रयोजकलाभः, मुख्यादिविशेषणानां सर्वपदेष्वेकरूपताभावात्। न हि 'सिंहो देवदत्तः' इत्यादौ सिंहादिशब्दानां मुख्य-गौणयोः तत्परत्वमेकरूपम्; तथा सति देवदत्ता-देरपि केसरादिमत्त्वप्रसङ्गात्। नापि द्वितीयः; पदार्थानां कार्यबोधकत्वेन तत्परत्वाभावात्। अथ कार्यशेषत्वं कार्यपरत्वं पदानाम्, तर्हि कार्यशेषत्वं कार्यपदार्थस्य नास्तीति तदन्विताभिधायिकारकपदानां कार्यपदार्थान्विताभि-धायित्वं न स्यात्, इति न किञ्चिदेतदिति भावः। विपक्षे दोषमाह—अन्यथेति ॥ विवक्षापरत्वादित्युपलक्षणम्—भावार्थकार्यपरत्वाल्लोके पदानाम्, वेदे तदतिरिक्तनियोगकार्यपरता न स्यादित्यपि द्रष्टव्यम् ॥

भावशुद्धिः

सामर्थ्यगोचरत्वे प्रमाणान्तरविवक्षयाऽन्वयात् तत्त्वापत्तौ वेदप्रामाण्य-
हानिरित्यर्थः ॥

P. 26- 5 सर्वशब्दानां कार्यान्वितार्थसामर्थ्ये दोषान्तरमाह—अपि चेति ॥
'गामानय दण्डेने'त्यादौ दण्डादीनां प्रत्येकमानयनसंबन्धाद् नामपदा-
र्थानामितरेतरसम्बन्धासिद्धिरित्यर्थः । किमत्रानिष्टम् ? अत्राह—
P. 26- 6 तत्रेति ॥ " अविशिष्टस्तु वाक्यार्थः," इति "सोमेन यजेत"इति विशिष्ट-
P. 26- 7 विषयनियोगसिद्धेरित्यर्थः । तत्सिद्धिं शङ्कते—अथेति ॥ पदार्थानां
क्रिया-कारकसंसर्गो विनियोगः, नियोगसम्बन्धस्तु तद्विषयत्वेन तदव-
P. 26- 9 गतिरित्यर्थः ॥ दूषयति—पूर्वं इति ॥

सोम-यागयोरूपा(ःसा)ध्य-साधनसम्बन्धे सिद्धे तद्विषयनियोग-
सिद्धौ तव को लाभ इति पृच्छति—किमिति ॥ अन्यान्विते शक्ति-
सिद्धिरित्याह—अस्तीति ॥ नियोगविषयत्वप्रयुक्त्या, न स्वातन्त्र्येणेति,
अत्राह—नियोगेति ॥ चकार एवकारार्थः । नामपदार्थानां नामपदार्थ-
P. 26-16 सम्बन्धस्य प्रधाननियोगाकाङ्क्षानिबन्धनत्वम् , अत्राह—न चेति ॥
कथं नु विध्यधीनत्वमित्यादाविति शेषः । ब्रह्मणो मानान्तरागोचरत्वे
सङ्गत्ययोगादमानत्वं वेदान्तानामित्युक्तमिति, अत्राह—अनधिगतमिति ॥
स्वशब्देन=ब्रह्मादिशब्देनानधिगतसम्बन्धं चेत्यर्थः । अनवगतसम्बन्धानां

अभिप्रायप्रकाशिका

सर्वपदार्थानां कार्यान्वयित्वे दोषमाह—अपि चेति ॥ ततः किमिति ? अत आह—अत्रेति ॥ सोम-यागयोः परस्परसंसर्गाभावान्न विशिष्टविषयो विनियोगः स्यादित्यर्थः । विनियोगः=कारकक्रियाभावलक्षणः पदार्थानां परस्परसंसर्गः, तद्विषयत्वेन नियोगस्यावगतेर्न तत्प्रतिकूलो नियोग इति शङ्कते—अथेति ॥ प्रथमतः कार्येणान्वयः, पश्चात्तदपेक्षयेतरेषां पार्ष्ठिकान्वयो भवन्नास्माभिरपि निवार्यत इति, अत्राह—न च नियोगेति ॥

यदुक्तम्—प्रमाणान्तरानधिगतत्वे सम्बन्धाग्रहेण शब्दप्रमाणकत्वं ब्रह्मणो न सम्भवतीति, तच्छ्लोकोत्तरार्धस्य तात्पर्यकथनेन निराकरोति—अनधिगतमपीति ॥ विशेषपदानामप्यगृहीतसङ्गतीनां कथं तद्बोधकत्वमिति ?

भावशुद्धिः

शब्दानां विशेषप्रतिषेधकत्वासिद्धिः, अत्राह—विशेषशब्दानामिति ॥ P. 26-12
न चैतदुत्प्रेक्षामात्रमित्याह—तथा चेति ॥ उक्तार्थं श्लोकार्धेन सङ्गम- P. 26-13
यति—एतत् कथयतीति ॥ विशेषनिषेधमात्रेण कथं ब्रह्मप्रतिपादनम्? P. 26-14
अत्राह—एतच्चेति ॥ सर्वप्रत्यय(वे)द्येत्यत्रेत्यर्थः ॥

चोद्यान्तरनिराकरणत्वेनाप्युत्तरार्धमवतारयति—अन्योऽर्थ इति ॥ P. 26-15
ब्रह्मणो (विशेषण) [1]विशिष्टतयैव दृष्टस्य कथं तद्विघटनेन दृष्टिरिति? अत्राह
—न हि सुवर्णेति ॥ रूचकम्=ग्रीवालङ्करणम् । भेदोपप्लवरहितम्= P. 26-17
[2][विशेषण]सम्बन्धहीनम् । पिण्डादिव्यतिरेकेण नास्ति स्वरूपम्, अत्राह—
न चेति ॥ हेतुमाह—तदिति ॥ [व्यावृत्तेष्वनुवृत्तेरित्यर्थः[3] । ] संस्थानभेदो- P. 26-18
पप्लवरहितं [[4]विशेषण]सम्बन्धहीनं न दृश्यते चेत्, विशेषनिवृत्त्या निरू-
पणेनेदमुदाहरणम्, अत्राह—अथ चेति ॥ अदृष्टः संस्थानभेदोपप्लवः,[5]-
विवेको यस्य, तत्, तथोक्तम् । ब्रह्म, विधिमुखेनैव बोध्यम्, वेदार्थत्वात्,
धर्मवत्, अत्राह—[6]स चेति ॥ उक्तेऽर्थे वृद्धसंवादं दर्शयति[7]—तथेति ॥ P. 26-20
दर्शित इत्यनुषङ्गः । आकृतिसंहारे कर्तृत्वादिसर्वविशेषप्रतिषेधे अन्ते=
बाधानधितया यद् व्यवतिष्ठते, तत् सत्यमित्यर्थः[8] 'प्रक्षालनाद्धि पङ्कस्य
दूरादस्पर्शनं वरम्" इति न्यायाद्विशेषानुक्तिरेव श्रेयसीति, अत्राह—
तथा परैरिति ॥ प्रपञ्चप्रविलयद्वारेण निर्विशेषे ब्रह्मणि शब्दप्रामाण्य- P. 26-22

अभिप्रायप्रकाशिका

तत्राह—विशेषेति ॥ भवदुत्प्रेक्षामात्रमेतत्, न तु श्रुतेर्विवक्षितमिति, अत आह—तथा चेति ॥ उक्तेऽर्थे श्लोकमवतारयति—एतदिति ॥ अदृष्टः संस्थानभेदोपप्लवाद्विवेको यस्येति समासः ॥

भेदप्रपञ्चकविलयद्वारेण ब्रह्मनिरूपकाम्नायविशेषं निर्धारयितुं परैः परि-

1. ( ) अन्तर्गतं B. पुस्तके नास्ति । 2. ( ) अन्तर्गतं B. पुस्तके नास्ति ।
3. ( ) अन्तर्गतं B. पुस्तके नास्ति । 4. ( ) अन्तर्गतं B. पुस्तके नास्ति ।
5. वादभेद A. 6. स चैव इति मूलपाठः 7. माह B. 8. सत्यर्थः A.

भावशुद्धिः

P. 26-23 मुक्तम् । तत्र विशेषानवगमाद्विचारमारभते—इदमिदानीमिति ॥ ब्रह्म
P. 26-24 दृत्त मतमाह—तत्र केचिदिति ॥

P. 27- 1 विधिवाक्ये कथं भेद[[1]निषेधसिद्धिः ? अत्राह—यथेति ॥ एतद्वाक्यम् याग-स्वर्गसंसर्गपरम्, नियोगपरं वा, भावनापरं वा ? न देहनिषेधपरम्,
P. 27- 2 अत्राह—अत्र हीति॥ एतद्वाक्यं देहात्मभावनिषेध] परमेव, नान्यपरम्; अन्यथाऽहम्प्रत्ययविरोधे, देहातिरिक्तात्मासिद्धौ निरधिकारं शास्त्रमप्रमाणं स्यादित्यर्थः । गोदोहनवाक्यं न दोहनविलापकम्; एतद्दोहेन
P. 27- 3 तत्फलाप्तिसम्भवात्, अत्राह—तथेति ॥ गोदोहनेनेति ॥ पशुका[2]मस्य सतो गोदोहनाधिकार उच्यत इति । य एव स्वर्गकामः, स एव पशुकाम इति नाधिकारभेदः। क्वचिदिति ॥ तत्परमित्यर्थः। नित्य-
P. 27- 4 विधिषु निषेधचोदनासु च कथं विशेषनिषेधावगतिः ? अत्राह—तथा विधीति ॥

अभिप्रायप्रकाशिका

कल्पितसम्बन्धनिरासद्वारेण कर्म-ज्ञानकाण्डयोः सम्बन्धं निरूपयति—इदमिदानीमित्यादिना ॥ शरीरस्य प्रविलय इत्यर्थः । ननु—अत्र साध्य-साधनभावो नियोगो वा प्रतीयते, न देहव्यतिरिक्तात्मा, सत्यम्; तथापि देहव्यतिरिक्तस्य स्वर्गोपभोगसमर्थस्यात्मनोऽभावे स्वर्गार्थयागादिसाधने प्रवृत्त्यनुपपत्तेः सोऽप्यर्थात् गम्यत एव । न च—अनुमानसिद्धत्वाच्छ्रुतेस्तत्र व्यापारो नास्तीति—शङ्कनीयम्; देहात्मभावप्रत्यक्षविरोधे तस्यैवानुदयात्। न चानुमानवदबाधितविषयत्वमर्थापत्तेरप्यङ्गम्, येन तुल्यन्यायता स्यादित्यभिसन्धिराह—अत्र हीति ॥

तथा गोदोहनेनेति ॥ दोहनस्य द्रव्यत्वात् क्रियाद्वारमनपेक्ष्य पुरुषार्थत्वानुपपत्तेः क्रियाकाङ्क्षायां प्रकृतक्रत्वर्थप्रणयनाश्रयणात्, क्रतौ च स्वर्गकामोऽधिकृतः, इति तस्यैव पशुकामिता, इति स्वतन्त्राधिकारिभेदप्रविलय इत्यर्थः । तथापि सार्वत्रिकं प्रपञ्चप्रविलयपरत्वं कथमिति ? अत आह—तथाविधीति ॥

1. ( ) एष्विह्नान्तर्गत A. पुस्तके नास्ति. 2. कु A.

भावशुद्धिः

निषेधा[1]नां तन्निवृत्तिपरत्वेऽपि विधीनां न तत्परत्वम् ;
तेभ्यस्तदनवगतेः, तत्राह निषेधेष्विति ॥ प्रवृत्त्यन्तरोपदेशस्य नैसर्गिक- P. 27- 5
प्रवृत्तिवारणतात्पर्यमन्यत्र दृष्टम्, अत्राह—लोकेऽपीति ॥ कर्मविधीना- P. 27- 6
मात्मसंस्कारद्वारा तज्ज्ञानोपयोग इति, अत्राह—एवञ्चेति ॥ दृष्टे सत्यदृष्टं P. 27- 7
न कल्प्यमित्यर्थः । दृष्टद्वारमुपपादयति—तथा हीति ॥ विगलितक्लेश- P. 27- 8
जालः, शान्तः=योगानुष्ठानकुशलः, दान्तः=अभ्यासम्पन्नः, एकाग्रचित्तः
=समाहितः । शमादीनां समाधौ [2]सामर्थ्यमादर्शयति—शक्यश्चेति ॥ P. 27- 9
व्यतिरेकमाह —न हीति ॥ अन्वय-व्यतिरेकसिद्धमर्थं निगमयति— P. 27-10
नैसर्गिकीभ्यस्त्विति ॥ P. 27-11

एकदेश्यन्तरमतमाह—अन्ये त्विति ॥ कथं तर्हि तद्योग्यः स्यात्? P. 27-13
अत्राह—कर्मभिस्त्विति ॥ पशु-पुत्र-स्वर्गादीनां तत्तद्दुःखसहस्रसम्भेदेन P. 27-14
मधु - विष - संयुक्तान्नकल्पानामनर्थतया पुरुषोपकारकत्वाभावेनातत्कामानां तत्साधनकर्मस्वधिकारासम्भवाद् विगलितनिखिलदुःखानुषङ्गपरमानन्दाद्वयब्रह्मज्ञानाधिकारानुप्रवेशित्वं सर्वेषामेव कर्मविधीनां पशु-पुत्र-स्वर्गाद्युपहारसम्पादितकामनिर्बर्हणावान्तरव्यापाराणामित्यर्थः। कामप्रविलयद्वारेण कर्मणां ज्ञानसाधनत्वमिह, पूर्वत्र कर्तृत्वादिभेदनि-

अभिप्रायप्रकाशिका

तदेव विभज्य दर्शयति—निषेधेष्विति ॥ न चेदमलौकिकमित्याह—लोकेऽपीति ॥ न च स्वर्गादिसाधनविधिपरत्वेऽपि पुरुषार्थपर्यवसायितासिद्धेः किमर्थं प्रपञ्चप्रविलयपरता कल्प्यत इति—शङ्कनीयम्; एवं हि ब्रह्मप्राप्त्या निरतिशयपुरुषार्थपर्यवसायितासिद्धेः । न च वाच्यम्—ऋणापाकरण-विविदिषा-संस्कारद्वारेणाप्येतत् सिध्यति—इति ; तस्यादृष्टरूपत्वात्, दृष्टे सम्भवत्यदृष्टकल्पनाया अन्याय्यत्वादित्यभिप्रेत्याह—एवं चेति ॥ उक्तेऽर्थे शास्त्रम्, अन्वय-व्यतिरेकौ च प्रमाणमिति क्रमेणाह—तथा हीति ॥ अन्वयमाह—नैसर्गिकीभ्यस्त्विति ॥

1. धनात्त A. 2. साधर्म्यं B.

भावशुद्धिः

P. 27-15 रासेनेति त्रिभागेऽपि साम्यान्तरमाह—उभयोरपीति ॥ साध्य-साधन-
सम्बन्धपराणां विधीनामर्थाद् ऋणापकरणद्वारेण धीहेतुत्वमतमाह—
P. 27-17 P. 27-18 [1]अन्येऽपीति ॥ [2][ हेतुमाह — अनपाकृतेति ॥ तन्मानमाह—ऋणानीति ॥
ऋषि-देव पितॄणामृणानि । ब्रह्मचर्य-यज्ञ-प्रजाभिः ऋणनिवृत्त्येत्यर्थः ॥

कर्मणां विविदिषाद्वारेण धीसाधनत्वमाह—अन्येत्विति ॥ विनि-
P. 27-19 युक्तविनियोगविरोधं परिहरति—संयोगपृथक्त्वेनेति ॥ यथा "अग्निहोत्रं
जुहुयात् स्वर्गकामः" इति स्वाधिकारवाक्यसन्निधिसमाम्नातं "दध्ना जुहोति" इति वाक्यं प्रकृतहोमानुवादेन दधिगुणं विदधत् क्रत्वर्थतामापादयति, एवम् "दध्नेन्द्रियकामस्य जुहुयात्" इत्येतस्यैव दध्नो होममाश्रितयेन्द्रियफलत्वं विदधत् पुरुषार्थतामापादयति; अधिकृताधिकारप्रतीतेरधिकाराभेदात्, यथा "अग्निहोत्रं जुहुयात् स्वर्गकामः" इत्यत्र संयोगपृथक्त्वमुत्पत्त्यधिकारवाक्ययोरधिकारिभेदाभावात्, तथेहापि दर्श-पूर्णमासादेर्यज्ञस्य स्ववाक्येषु प्रातिस्विकाधिकारिभेदभावो "विविदिषन्ति यज्ञेन" इत्यादिवाक्यापादितात्मज्ञानकार्यस्य सम्भवति; संयोगपृथक्त्वेनोभयार्थतेत्यर्थः । न कस्यचित् प्रकृतिः; नापि कस्यचिद्विकृतिः, ईदृशस्तु होमो दर्विहोम उच्यते ॥

पुरुषसंस्कारतया कल्मषक्षयद्वारेण कर्मणां ज्ञानसाधनत्वमत-
P. 28- 1 माह—अन्ये त्विति ॥ तत्र मानमाह—महायज्ञैश्चेति ॥ ब्राह्मी=ब्रह्म-

अभिप्रायप्रकाशिका

कामप्रविलयपक्षमाह—अन्ये त्विति ॥ सहस्रसंवत्सरपर्यन्तैः कर्मभिरित्यन्वयः । अनयोः पक्षयोर्वक्ष्यमाणपक्षेभ्यो विशेषमाह—उभयोरिति ॥

ऋणापाकरणपक्षमाह—अन्येषामिति ॥ पृथक्कार्याणामप्यन्योपयोगित्वं द्रव्यार्जनविधेरित्यर्थः ॥

विविदिषापक्षमाह—अन्ये त्विति ॥ फलान्तरोद्देशेन विहितस्य कर्मणः पुनः फलान्तरेण संयोगः, संयोगे पृथक्त्वं नाम । इच्छता चेच्छातोऽनिच्छायाम-

1. अन्येषामिति मूल पाठः । 2. ( ) एतच्चिह्नान्तर्गतं पुस्तके नास्ति ।

ज्ञानयोग्येत्यर्थः । अत्रैव गौतमसूत्रमुदाहरति—यस्येति ॥ "स ब्रह्मणः P. 28-2
सायुज्यं सलोकतां च गच्छति" इति सूत्रशेषः । संस्कारा उच्यन्ते—[1][गर्भाधान-पुंसवन-सीमन्तोन्नयन-जातकर्म-नामकरणान्नप्राशन-चौलो-पनयनानि, चत्वारि वेदव्रतानि, स्नानम्, सहधर्मचारिणीसंयोगः, पञ्चानां यज्ञानाम्] अनुष्ठानम्, देव-पितृ-मनुष्य-भूत-ब्रह्मणां (यज्ञाः,) (एतेषाम्) अष्टकाः, पार्वणश्रद्ध-श्रावण्याग्रहायणी चेत्याश्वयुजि सप्तपाक-यज्ञसंस्थाः,[2](ऊर्ध्वमाग्रहायण्यास्त्रयोऽपरपक्षाः, तेषामेकैकस्मिन्नेकैकष्टका) भवति (उपाकरणं श्रावण्याम्, आग्रयणमाग्रहायणी चैत्यंशूलगवः (?) अश्वयुजी[3][न्द्रध्वजहोमः, अग्न्याधेयमग्निहोत्रं दर्शपूर्णमासावाग्रयणं चातु-र्मास्यानि पशुबन्धस्सोत्रामणीति सप्तहविर्यज्ञसंस्थाः । अत्राग्रयणमाग्र-यणेष्टिः,अ]ग्नीषोमोऽत्यग्निष्टोम उक्थ्यः षोडशी वाजपेयोऽतिरात्रोऽप्तोर्याम इति सप्त होमसंस्थाः, अष्टावात्मगुणाः—दया, सर्वभूतेषु क्षान्तिः, अनसूया शौचम्, अनायासो मङ्गलमकार्पण्यमस्पृहेति ॥

आक्रुष्टोऽभिहतो वापि नाक्रोशेन्नैव ताडयेत् ।
अदुष्टो (?) वाऽऽत्मनः कायैः सा तितिक्षा दया स्मृता ॥
यो धर्ममर्थं कामं वा लभते मोक्षमेव वा ।
न द्विष्यात्तं सदा प्राज्ञः, अनसूयेति सा स्मृता ॥
द्रव्यशौचं मनश्शौचं वाक्शौचं कायिकं तथा ।
शौचं चतुर्विधं प्रोक्तमृषिभिस्तत्त्वदर्शिभिः ॥

अभिप्रायप्रकाशिका

साध्यत्वात्, इष्यमाणज्ञानस्य च प्रमाणैकजन्यत्वेन कर्मभिरसाध्यत्वात्, कथं कर्मणां विविदिषासम्बन्धः ? इत्याशङ्क्य, कर्मणां पापक्षपणद्वारेण सम्भवत्येव विदिषोत्पादकत्वमित्यभिप्रेत्याह—येन केन चेति ॥

सिद्धान्तैकदेशिनां मतमाह—अन्ये त्विति,

मीमांसकमतमाह—अन्ये त्वेतदेति ॥

---

1. [ ] एतच्चिह्नान्तर्गतं A. पुस्तके नास्ति ।
2. & 3. [ ] एतच्चिह्नान्तर्गतं A. पुस्तके नास्ति ।

भावशुद्धिः

आत्मवत्सर्वभूतेषु यः शिवाय हिताय च ।
वर्तते सततं हृष्टः कृत्स्ना ह्येषा दया स्मृता ॥

यदारम्भे भवेत् पीडा नित्यमत्यन्तमात्मनः ।
तद्वर्जयेद्धर्म्यमपि वाल्यं तत् परिकीर्तितम् ॥

प्रशस्ताचरणं नित्यमप्रशस्तविवर्जनम् ।
एतद्धि मङ्गलं प्रोक्तमृषिभिस्तत्त्वदर्शिभिः ॥

आपद्यपि च कष्टायां भवेद्दीनो न कस्यचित् ।
संविभागरुचिश्च स्यादकार्पण्यमिहोच्यते ॥

विवर्जयेदसन्तोषं विषयेषु सदा नरः ।
परद्रव्याभिलाषं च तदस्पृहमिति स्मृतम् ॥ इति ॥

विपरीतशेषत्वं विशदयति—आत्मज्ञानमेवेति ॥ असम्बन्धमत-
P. 28- 4 माह—अन्ये त्विति ॥

P. 28- 7 ब्रह्मदत्तमतं निराह—तत्र नेति ॥ हेतुमाह—तर्हीति ॥ कार्यान्तरम्=कैवल्यम् । स्वर्गकामाधिकरणसिद्धान्ताभिप्रायमेतत् । आत्मज्ञानस्य करणस्येतिकर्तव्यतापेक्षस्येतिकर्तव्यतया कर्मणामनु-
P. 28- 8 प्रवेशादेकाधिकारत्वम्, अत्राह—नापीति ॥

P. 28-10 प्रत्ययार्थभावनाभाव्यत्वं प्रकृत्यर्थयागादेः सन्निहितस्य, न स्वर्गादेः, पुरुषविशेषणत्वेनोपसर्जनस्य पदान्तरोपात्तस्येति शङ्कते—

अभिप्रायप्रकाशिका

तत्र किं कर्मविधीनामाकाङ्क्षयैकाधिकारत्वम्? उत ज्ञानविधेः? इति विकल्प्य क्रमेण दूषयति—न हि कर्मादीति ॥ गुणत्वेनाभिसम्बन्धादिति ॥ अयमाशयः—'यजेते'त्यादौ प्रकृत्यर्थयागाद्युपरक्तायाः प्रत्ययार्थरूपभावनायाः प्राधान्येनावगमात्, यागादेरेवैकपदोपादानलक्षणया श्रुत्या भाव्यत्वावगतेः, स्वर्गस्य तु "भूतं भव्यायोपदिश्यते" इति न्यायेन भूतत्वेन भव्ययागार्थत्वेनोपदेशात्, लोके च 'ओदनं पचती'त्यादावीप्सिततमस्याप्योदनादेः कर्मकारकतया क्रियायां गुणत्वेनैवाऽन्वयात्, भावनायाश्च साक्षाद्भाव्यार्थैकविषय-

भावशुद्धिः

अथेति ॥ प्रकृत्यर्थस्यैकपदोपात्तस्यापि क्लेशरूपस्य भाव्यत्वानर्हत्वात् पदान्तरोपात्तपुरुषविशेषणस्यापि तदर्हत्वाद्भाव्यतया सम्बन्ध इति न्यायविरोधेन दूषयति—स्वर्गकामेति ॥ P. 28-12

भूतं भव्यार्थमिति कथं स्वर्गादेर्भाव्यत्वम्? अत्राह—अपि चेति ॥ अपवर्गपर्यवसायित्वे साध्य-साधनसम्बन्धे मानाभावादित्यर्थः। विनिपातः=अनर्थः। मोक्षशेषतया शास्त्रं प्रमाणमेवेति, अत्राह—तथेति ॥ P. 28-14 [1]भाषितपुंदोषपरिजिहीर्षया कामप्रविलयपक्षं पक्षीकरोति—अथेति ॥ उदाहरति—मार्गेति ॥ इतोमुखं ग्रामं गच्छतो(न्तं) मु(मू)कं ततो नगरं P. 28-15 प्राप्स्यसीतिवत् कर्मविधीनां स्वर्गादिद्वारेण ज्ञानकार्यपरत्वान्नोक्तदोष इत्यर्थः। फलवत्सन्निधावफलस्य तदङ्गत्वं युक्तमिति परिहरति—[2]तदपीति ॥ स्वार्थे फलवैकल्यं साधयति—न हीति ॥ साकाङ्क्षत्वात् P. 28-16

अभिप्रायप्रकाशिका

त्वात्, स्वर्गस्य चाताद्रूप्यात्, क्रियायां गुणभूतकर्तृविशेषणस्वर्गादेरपि सुतरां गुणत्वमेवेति स्ववाक्यावगतसाध्यफलशून्याः कर्मविधयो मोक्षफले पर्यवस्यन्तीति॥

स्वर्गकामाधिकरणमिति ॥ अयमर्थः—यागादेर्भावार्थस्यैकपदोपादानलक्षणाया श्रुत्या भाव्यत्वावगतावपि स्वतो दुःस्वरूपतया समीहितोपायतामन्तरेण पुरुषप्रवृत्तिविषयत्वायोगात्, स्वर्गादेश्च कामोपधानात्, समीहितत्वाच्च भूतत्वेऽपि भावनोद्देश्यतालक्षणभाव्यत्वप्रतीतेः, फलार्थप्रवृत्तेर्भावनाभाव्यत्वमात्रलक्षणेन यागादिसाध्यत्वेन फलोद्देशप्रवृत्तभावनाभाव्यत्वलक्षणस्वर्गादिसाध्यत्वस्य स्वप्रधानताभावादेकवाक्यसम्बन्धाविरोधात्, यागादेर्भावनाभाव्यमात्रस्य साध्यत्वाभावेऽपि भावनोद्देश्यतामात्रेण शब्दाद्भाव्यत्वप्रतीत्युपपत्तेः, स्वर्गादेः कर्तृविशेणत्वेऽपि 'दण्डी प्रैषवानन्वाह'इत्यादौ दण्डित्वादिवत् साध्यतोपपत्तेश्च स्वर्गादिसाधने यागादौ स्वर्गकामादेरधिकार इति षष्ठाद्ये चिन्तितमिति ॥

सम्प्रति स एव कर्मविधीनां स्वर्गाद्यवान्तरप्रयोजनद्वारेण ज्ञानाधिकारानुप्रवेशित्वं शङ्कते—अथेति ॥ किं निष्प्रयोजनोपदेशानामुपदेशान्तरानुप्रवेशः? किं वा सप्रयोजनानाम्? इति विकल्प्य नाद्य इत्याह—तदप्यसदिति ॥

1. भावितदोष A. 2. तदसदिति मूलपाठः।

भावशुद्धिः

P. 28-17 फलाकाङ्क्षत्वात्प्रकृते वैलक्षण्यमाह—न त्विति ॥ किमतः? अत्राह—
P. 28-18 तत्रेति ॥ आकाङ्क्षासम्बन्धनिबन्धनं नास्तीत्यर्थः ॥

सफलानां कर्मविधीनां धीकार्यविशेषत्वमविरुद्धमिति शङ्कते—
P. 28-19 अथेति ॥ यथाकश्चित् ईश्वरपुत्रं देशान्तरप्राप्तं स्वगृहप्रापणाय कश्चिद् ब्रूते, 'मया साकममुकं ग्राममागच्छ, तत्र विशिष्टभोजनादि लभ्यते। तं ग्रामं गतं लब्धफलं पुनर्ब्रूते तथैव स्वगृहमानयेति, एवमत्रापि
P. 28-20 युक्तमित्यर्थः। प्रमाणान्तरं स्पष्टयति—प्रमाणेति ॥ तत्पित्रादितः पूजाप्राप्ताविदमस्य विवक्षितमिति गम्यत इत्यर्थः। फलवदुपदेशस्योपदेशान्तरशेषत्वग्राहकप्रमाणान्तरं तत्र स्वार्थपरत्वमौत्सर्गिकं बाधत इति
P. 28-22 परिहरति—तत्रापीति ॥ प्रमाणान्तरं स्पष्टयति—प्रमाणेति ॥ अपौरुषेये
P. 28-24 वेदे न तथाऽपत्रादप्रमाणमस्तीत्याशयेनाह—न तु शब्देति ॥ विवक्षितग्राहकप्रमाणादेवास्यान्योपदेशशेषत्वगतिः कुतः? अत्राह—इतश्चेति ॥ ग्रामगमनमर्थतो नगरगमनोपकारिग्रामस्य नगरेण सामीप्यात्, अत-
P. 29- 3 स्तदुपदेशस्य नगरोपदेशशेषत्वम्, अत्राह—यद्यपीति ॥

P. 29- 4 तदुपकारि न तदङ्गमिति व्याहतम्, अत्राह—द्रव्येति ॥ 'ब्राह्मणः प्रतिग्रहादिना द्रव्यमार्जयेत् राजन्यो युद्धादिना वैश्यो वाणिज्यादिनेति द्रव्यार्जनं विधीयते। तस्य द्रव्यद्वारोत्तरक्रतूपकारेऽपि न तदङ्गत्वम्; विनियोजकाभावात्। आदिपदेनाधानविधिसङ्ग्रहः। मानान्तरा-

अभिप्रायप्रकाशिका

द्वितीयं शङ्कते—अथ मतमिति ॥ दूषयति—युक्तं तत्रेति ॥ प्रमाणान्तरवशात् तत्र तथात्वम्, न तु शब्दप्रवृत्तानुसारेण। वेदोपदेशेषु प्रमाणान्तराभावान्न तथात्वसम्भव इत्यर्थः। लोकेऽप्यसति प्रमाणान्तरे स्वार्थपरत्वमेव, न तूत्तरोपदेशशेषत्वमित्याह—इतश्चेति ॥ वस्तुस्थित्या पूर्वोपदेशार्थानां परोपदेशार्थोपकारित्वे सति कथं न तच्छेषतेति? अत आह—यद्यपीति ॥ असति द्रव्ये द्रव्यसाध्यक्रतोरसम्भवात्, द्रव्यार्जनविधेः क्रतूपकारकत्वे विनियोजकश्रुत्यादिप्रमाणाभावाद्यथा न क्रत्वङ्गता, तथेहापि प्रमाणान्तराभावादुपकारित्वेऽपि न तदङ्गतेत्यर्थः। भवतु प्रमाणान्तरात् प्रकृतेऽप्यन्यशेषत्वमिति, अत्राह—

भावशुद्धिः

देवात्रापि परशेषत्वमस्तु, नेत्याह—शब्दवृत्तेति ॥ वक्तुरभिप्राया- P. 29-5
वगमात् ग्रामोपदेशानां स्वार्थपरत्वं प्रतीतमित्याह—अपि चेति ॥ P. :9-6
अपरथा तत्र नियमेन प्रवृत्त्यनुपपत्तेरित्याह—परदेशेति ॥ हेतुमाह— P. 29-7
मार्गान्तरेणेति ॥

परशेषत्वे स्वार्थनियतफलाप्तिरपि न स्यादित्याह—न चेति ॥ P. 29-8
हेतुः—अन्येति ॥ 'परार्थत्वात् फलश्रुतिरर्थवादः स्यादि'ति न्याया-
दित्यर्थः। कर्मवाक्यानां प्रविलयकार्यपरत्वे स्वर्गादिपरत्वं न स्या-
दिति विगमयति—तदिहेति ॥

"वर्म वा एतद्यज्ञस्य क्रियते यत्प्रयाजानूयाजा इज्यन्ते"
इतिवत् स्वर्गादिफलमविवक्षितमिति, अत्राह—न खल्विति ॥ अभ्यु- P. 29-10
दयस्य प्राप्तिराकस्मिकी स्यादित्युक्तत्वादित्यर्थः ॥

यदुक्तम्—दृष्टेनैव कर्मविधय आत्मज्ञानोपयोगिन इति, तद् दूष-
यति—कथं चेति ॥ स्वाभाविकप्रवृत्तिविरोधेनेत्युक्तम्, अत्राह—P. 29-11

अभिप्रायप्रकाशिका

शब्दप्रवृत्तेति ॥ पूर्वपूर्वोपदेशानां वक्तुरभिप्रायानवगमे स्वनिष्ठत्वमुक्तम्, सम्प्रति तु तदवगमेऽपि पूर्वोपदेशानां स्वनिष्ठतैव ; अन्यथा नियमेन तत्र गमनानुपपत्तेरित्याह—अपि चेति ॥

कर्मविधीनामात्मज्ञानविधिशेषत्वे तत्र तत्र फलश्रुतीनाम् "यस्य पर्णमयी जुहूर्भवति न स पापं श्लोकं शृणोति" इत्यादिवदर्थवादत्वोपपत्तेर्न नियमेनावान्तरफलसाधनत्वमित्याह—न चेति ॥ यथा प्रयाजादयः स्वं स्वमपूर्वं कुर्वन्तोऽपि दर्श-पूर्णमासापूर्वकार्यानुप्रवेशिनः, तथा कर्मविधयः स्वर्गादिकार्या अपि किमिति नात्मज्ञानानुप्रवेशिन इति। अत आह—न खल्विति ॥ प्रयाजादेः प्रकरणावगतदर्श-पूर्णमासाङ्गत्वनिर्वाहायावान्तरापूर्वद्वारेण युक्ता प्रधानापूर्वाङ्गता; अन्यथाऽऽशुतरविनाशितया प्रमिताङ्गित्वस्यैवायोगात्, इह तु कर्मविधीनां श्रूयमाणस्वर्गादिफलवत्तया निराकाङ्क्षाणामसत्यङ्गत्वे नात्मज्ञानकार्यानुप्रवेशित्वमित्यर्थः। यद्वा मा भूवन् स्वर्गादिकार्या इति, अत आह—न खल्विति ॥

भावशुद्धिः

P. 29-12 यदीति ॥ निराकरोति—भवत्विति । कथमित्युक्तानुपपत्तिं प्रथयति
P. 29-13 —न हीति ॥

"तत्र चान्यत्र च प्राप्तौ परिसङ्ख्येति गीयते," [1]इति परिसङ्ख्यालक्षणम् । यथा—"इमामगृभ्णन् रशनामृतस्येत्यश्वाभिधानीमादत्ते" इति । पाक्षिकप्राप्ते नियमः ; यथा "व्रीहीनवहन्ति" इति ।
P. 29-14 हेतुमाह—अत्यन्तमिति ॥

अप्राप्तार्थो नियमादिः किं न स्यात्? अत्राह—प्राप्तार्थो हीति ॥

विधिरित्यन्तमप्राप्ते नियमः पाक्षिके सति ।[2]
तत्रा चान्यत्र च प्राप्तौ परिसङ्ख्येति गीयते[3] ॥

सेवा-साङ्ग्रहिण्योः ग्रामप्राप्तिफलयोरेकतरानुष्ठानेऽन्यतरनिवृत्तिरेव वैदिक-लौकिकप्रवृत्त्योः संसारैकफलत्वाद्वैदिकप्रवृत्त्या लौकिक-
P. 29-15 प्रवृत्तिनिरोधः, अत्राह—न चेति ॥ एकफलत्वासिद्धेरिति हेतुमाह—अनियतेति ॥

दृष्टान्तं विघटयति–न चेति ॥ "साङ्ग्रहण्या यजेत ग्रामकामः"
P. 29-19 इत्यत्र च ग्रामोपायत्वमात्रे मानत्वादित्यर्थः । स्वाभाविकप्रवृत्तीनां सर्वथा

अभिप्रायप्रकाशिका

प्रयाजादिषु "वर्म वा एतद्यज्ञस्य" इत्यादिश्रूयमाणाऽऽर्थवादिकफलवद् न स्वर्गादिफलम्, प्रयाजादिवदग्निष्टोमादीनामात्मज्ञानाङ्गत्वस्याद्याप्यसिद्धेरित्यर्थः ॥

"पञ्च पञ्चनखा भक्ष्याः" "प्राङ्मुखोऽन्नानि भुञ्जीत"इत्यादिवदन्यनिरोधकत्वमस्त्विति, अत आह—न हीति । प्राप्तार्थो हीति ॥ नियततया, पाक्षिकतया वोभयत्र प्राप्तावन्यनिवृत्तिफलत्वमित्यर्थः । दृष्टार्थप्रवृत्तीनां सुखैककार्यत्वादन्यतमानुष्ठाने नान्यतमनिवृत्तिः ; विरोधादिति, अत्राह—न चेति ॥ ऐहिकफलत्वात् स्वाभाविकप्रवृत्तीनाम्, अनियतफलत्वाच्च नैयोगिकप्रवृत्तीनां न तुल्यकार्यतेत्यर्थः ॥

इदानीं तुल्यफलत्वेऽपि न विरोध इत्याह—न च साङ्ग्रहण्या इति ॥

---

1. इति विधित्रयलक्षणात् । 2. विधिः A. 3. कीर्त्यते A.

भावशुद्धिः

निरोधः कर्तुमशक्य इत्याह—अपि चेति ॥ रागादिनिबन्धनप्रवृत्ति- P. 29-19
निरोधार्थत्वं यदुक्तं वैदिकविधीनाम्, तद् दूषयति—अपि च तुल्य इति ॥ P. 29-20
काम्यत इति कामः=इष्टार्थः । तत्साधनत्वं साधयति—तथा हीति ॥ P. 29-21

फलरागात् तत्साधनमात्रे प्रवृत्तस्यानवगतसाधनविशेषे विधिरित्यर्थः । कर्तृत्वाद्यभिमाननिबन्धनत्वस्य समानत्वात्, वैदिकप्रवृत्तिर्न ज्ञाननियोगानुगुणेत्याह—तथा चेति ॥ [दृष्टिप्रतीतिर्मन[1]सो विक्षेप- P. 29-22
कारित्वाद् ज्ञानविरोधिनीति, अत्राह—कामाक्षेपो हीति ॥ वैदिककर्मणां P. 29-24
स्वर्गादिफलाभावाद् न कामाक्षेप इति शङ्कते—अथेति ॥] अभ्युदय-
निःश्रेयसयोर्निर्हेतुत्वमुक्तमनुसन्धेयमित्याह — वर्णितमिति ॥ स्वर्ग- P. 29-25
कामाधिकरणविरोधश्चेत्याह—उक्तश्चेति ॥ षष्ठाद्यराद्धान्तस्यासदनभिमतत्वाद् नायं दोष इति, अत्राह—तुल्यकार्येति ॥ एतद्दोषपरिजिहीर्षया, आधिक्यविवक्षया च कामप्रविलयपक्षमालम्बते—अथेति ॥ भोगात्

अभिप्रायप्रकाशिका

सेवाया अपि ग्रामोपायत्वात् साङ्ग्रहण्या विधानमनर्थकं स्यादिति, अत आह—एतावतीति ॥ "साङ्ग्रहण्या ग्रामोपायत्वपरम् शास्त्रम्, न तूपायान्तरव्यावृत्तिपरम्। अतश्च फलभूमार्थिनो युगपत्, क्रमेण वोभयानुष्ठानसम्भवान्न विरोध इत्यर्थः । अनिष्टापत्तेरपि न सर्वप्रवृत्तिनिरोध इत्याह—अपि च सकलेति ॥ कुत इति? अत आह—अनार्जितेति ॥ सर्वप्रवृत्तिनिरोधे द्रव्यार्जनस्याप्यसम्भवाद् द्रव्यसाध्यक्रत्वनुष्ठानमपि न सम्भवतीत्यर्थः । रागाक्षिप्तत्वमेव दर्शयति—तथा हीति ॥ संसारफलत्वस्य, कर्तृत्वादिप्रपञ्चाभिनिवेशस्य च तुल्यत्वादेका मोक्षदा, तद्विरोधिन्यपरेति न विशेषसिद्धिरित्यर्थः ॥

शास्त्रीयप्रवृत्तीनां फलवत्त्वस्यैवानभ्युपगमान्न भवदुक्तदोष इति शङ्कते—अथेति । वर्णितमाकस्मिकत्वम्, उक्तश्च न्याय इति ॥ जन्तूनामभ्युदयविनिपाता अकर्मनिमित्ता आकस्मिकाः स्युरित्युक्ताकस्मिकत्वप्रसङ्गात् स्वर्गकामाधिकरणन्यायभङ्गप्रसङ्गाच्च कर्मोपायत्वमभ्युपेयमित्यर्थः । निष्फलत्वे दोषान्तरमाह—तुल्येति ॥

1. [ ] एतच्चिह्नान्तर्गतं A. पुस्तके नास्ति ।

भावशुद्धिः

कामक्षये मोक्ष इत्यत्र मानमाह—यथोक्तमिति ॥ असम्भवेन प्रत्याह—
P. 30- 5 तदसदिति ॥

दृष्टानुश्रविकानां सकलविषयेषु तापत्रयपर्यन्तता दोषः, तत्परिभावनया वैराग्यं ततो भवतीति दोषपरिभावनाभूतेन आदरनैरन्तर्यदीर्घकालासेवितादुत्पन्नसमस्तराजस-तामसचित्तवृत्तिनिरोधात्, बुद्धिसत्त्वपरिणतिभेदसर्वचित्तवृत्तिनिरोधलक्षणासम्प्रज्ञातसमाध्याभिमुख्यहेतुः प्रसङ्ख्यानमसम्प्रज्ञातमिति च गीयते योगाचार्यैः। स च विषयदोषपरिभावनालब्धजन्मतया कामान् क्षिणोतीत्यर्थः ॥ व्यतिरेकद्वारोपपा
P. 30- 6 दयति—कल्येति ॥

P. 30- 8 भोगाद् न कामनिवृत्तिरित्यत्र युक्त्यन्तरमाह—अनुपायत्वादिति ॥ स्वर्गादिसाधनत्वेन यागादेरविधौ स्वर्गादिफलाद् निवृत्तिं व्यतिरेक-
P. 30-10 मुखेनाप्याह—तत्प्रविलयेति ॥ [1][कर्मविधीति ॥ ज्ञानेन कर्त्रादिकारकनिवृत्तेस्तदिच्छया नाभिनिविशति, अत्राह—तत्प्रविलयेति ॥]

"एषोऽस्य परम अनन्दः" इति श्रुतमोक्षानन्दश्रद्धया विषयानन्दा-
P. 30-11 भिलाषोच्छित्तिरिति, अत्राह—श्रुतोऽपीति ॥ यस्मात् कामभोगात्
P. 30-12 कामवृद्धिरित्युपसंहरति—तस्मादिति ॥

प्रसङ्गात् कामप्रविलयपक्षं प्रतिक्षिप्य परोक्तमनुवदति—
P. 30-13 यदपीति ॥ यत्परः शब्दः स शब्दार्थः । स्वर्गकामवाक्यं साध्य-साधन-
P. 30-15 सम्बन्धपरमिति परिहरति—तदप्यसदिति ॥

अभिप्रायप्रकाशिका

कामप्रविलयपक्षमनूद्य दूषयति—अथ कामेति ॥ प्रसङ्ख्यानेन=विवेकज्ञानेनेति यावत् । न केवलं कामप्राप्तेः कामनिवर्तकत्वम्, अपि तु तद्विवृद्धिहेतुत्वमपीत्याह—कलयेति ॥ कामप्रविलयस्य ब्रह्मप्राप्त्युपायत्वेन तदुपायानुक्त्याऽपि तत्प्रलयसिद्धेस्तदुपायविधीनामानर्थक्यं प्राप्तमित्याह—अनुपायत्वादिति ॥ निरतिशयं ब्रह्मानन्दं श्रुतवतः कथं तज्ज्ञानादुद्वेग इति ? तत्राह—श्रुतोऽपीति ॥

1. [ ] एतच्चिह्नान्तर्गतं A. पुस्तके नास्ति ।

भावशुद्धिः

व्यतिरिक्तात्मव्यतिरेकेण साध्य-साधनसम्बन्धासिद्धेर्व्यतिरिक्तात्मसिद्धिरिति शङ्कते—अथेति ॥ प्रमितेऽर्थे प्रमित्सानुपपत्तेः प्रमित्साहेतुः P. 30-16
प्रमाणं वर्तत इति परिहरति—तदपीति ॥

देहादिव्यतिरिक्तः कुतः प्रमितः? अत्राह—साक्षाद्धीति ॥ P. 30-17
आर्थिकस्यार्थस्य वैदिकत्वेऽपि प्रसङ्गमाह—अर्थाच्चेति ॥ स्वर्गकाम- P. 30-18
प्राबल्यमन्तरेण कस्यचिदपि न चोदनोपपद्यते, तथा द्वेषस्यापि श्येनविधिवाक्येनार्थाद्गम्यमानस्य तदर्थत्वं स्यादित्यर्थः ॥

प्रपञ्चप्रविलयपक्षप्रतिक्षेपप्रसङ्गात् कामप्रविलयपक्षोऽपि प्रतिक्षिप्त
इत्याह—द्वितीय इति ॥ ऋणापाकरणद्वारा कर्मविधीनां ज्ञानकार्य- P. 30-19
परत्वे, दर्शपूर्णमासप्रयाजादेरेकाधिकारित्वं स्यात्, तदयुक्तम्;
सर्वकर्मणामेकानुष्ठानायोगादित्याह—एकाधिकारित्वे चेति ॥ कर्मणां P. 30-20
विविदिषाद्वारा, आत्मसंस्कारद्वारा वा ज्ञानशेषत्वात् कर्म-ज्ञानकाण्डयोः
सम्बन्धः सिद्धान्त एवेति सम्बन्धान्तरं प्रतिषेधति—येऽपीति ॥ P. 31-1

न तावत् प्रकरणं प्रमाणमात्मज्ञानस्य कर्माङ्गत्व इत्याह— P. 31-2

अभिप्रायप्रकाशिका

अन्वक्षविनाशिनः शरीरस्य कालान्तरोपभोग्यस्वर्गसाधने यागे नियोगानुपपत्तेस्तद्व्यतिरिक्तात्मनि तात्पर्यमिति शङ्कते—अथेति ॥ दूषयति—तदपीति ॥ प्रमितेऽर्थे प्रमित्सोपरमाद् न प्रमाणान्तरप्रवृत्तिरित्यर्थः ॥

अन्यपरादपि वाक्याद् देहादिप्रविलयस्यार्थादवगतिप्रसङ्गमाह—अर्थाच्चेति ॥ 'स्वर्गकामो यजेत'इत्यत्र कामादिग्रन्थेः काठिन्यं साक्षादुपायोपदेशेन वेदेनैवोपपाद्यमानं वैदिकं स्यादित्यर्थः । अथवा—अर्थसिद्धाद्देहादि प्रविलयात् श्रुत्यैवाभिधीयमानं कामादिग्रन्थिकाठिन्यं प्रबलमिति वेदतात्पर्यविषयः स्यादित्यर्थः ॥

एवं प्रपञ्चप्रविलयपक्षं सिंहावलोकनन्यायेन निरस्य, द्वितीयपक्षदूषणमप्युक्तमनुस्मारयति । पक्षद्वयसाधारणकाण्डद्वयस्यैकाधिकारित्वं दूषयितुम्—द्वितीयोऽपीति ॥ समुच्चय इति ॥ दर्श-पूर्णमासवदित्यर्थः ॥

मीमांसकमतमनूद्य निराचष्टे—येऽपीति ॥ न तावत् प्रकरणं प्रमाण

भावशुद्धिः

न तावदिति ॥ व्यतिरेकदृष्टान्तं स्पष्टयति—तत्र हीति ॥ प्रकृतकर्मापूर्वम्, दर्शपूर्णमासनियोगो यस्य व्रीहिसमुदाय[1स्य "चतुरो मुष्टीन् निर्वपति" इत्यत्रोक्तस्य सः, व्रीहिसमुदाय]स्य । प्रकृतकर्मापूर्वम्, तल्लक्षणपरः, तत्र बुद्ध्युत्पादनपरः "व्रीहिन् प्रोक्षति" इत्यत्र व्रीहिशब्दः प्रकृतकर्मापूर्वसम्बन्धं व्रीहिसमुदायस्य बोधयतीत्यर्थः । ज्ञानस्य तर्हि कर्माङ्गत्वे
P. 31- 4 वाक्यं मानम्, अत्राह—नापीति ॥ उदाहरणं विशदयति—तत्रापीति ॥ अव्यभिचरितः क्रतुना सम्बन्धो यस्य, तदव्यभिचारितक्रतुसम्बन्धो जुह्वादिपदार्थः कर्मोपस्थापयति=बुद्ध्यारोपयति, किमतः? अत्राह—
P. 31- 5 तत्रेति ॥ वैदिककर्मणि "पर्णमयी जुहू" रिति पर्णमयीत्वस्य कर्मसम्बन्धो वाक्यादेव स्यादित्यर्थः ॥

P. 31- 6 आद्यप्रतिज्ञायां हेतुमाह—आत्मज्ञानं त्विति ॥ इतरत्रापि तमाह—

अभिप्रायप्रकाशिका

मित्याह—न तावदिति ॥ तत् प्रपञ्चयति—तत्र हीति ॥ प्रकृतं कर्मापूर्वं यस्य व्रीहिसमुदायस्य तल्लक्षणम् । "चतुरो मुष्टीन् निर्वपति' इत्यत्र प्रस्तुतव्रीहिसमुदायस्य प्रकृतेनापूर्वेण सम्बन्धात् तद्बोधयति । आपूर्वीयप्रदेयप्रकृतिद्रव्यं लक्षयतीति यावत्। अन्यथा 'व्रीहिभिर्वा' "यवैर्वे"ति विकल्पेनोपात्तयवेषु प्रोक्षणाभावप्रसङ्गादित्यर्थः ॥

वाक्यमपि न प्रमाणमित्याह—नापीति ॥ अनारभ्याधीतमपि पर्णमयीत्वमव्यभिचरितक्रतुसम्बन्धं जुहूद्रव्योपस्थापितक्रतुसम्बन्धं वाक्येनैव प्रतिपद्यत इत्यर्थः ॥

दार्ष्टान्तिके वैषम्यमाह—आत्मज्ञानं त्विति ॥ न च—आत्मनोऽपि कर्तृत्वात् कर्माव्यभिचार इति— शङ्कनीयम्; लौकिक-वैदिककर्मसाधारणत्वात्। अस्तु तर्हि देहाद्यतिरिक्तात्मज्ञानं कर्मशेष इत्यपि नाशङ्कनीयम्; अशनायाद्यतीतस्य कर्माधिकारविरोधिन एव वेदान्तप्रतिपाद्यत्वादित्यभिप्रेत्योपसंहरति—तेनेति ॥ एवं च सति—

'विज्ञाते चास्य परार्थ्ये याऽपि नाम फलश्रुतिः ।
साऽर्थवादो भवेदेव न स्वर्गादेः फलान्तरम् ॥

---

1. [ ] एतच्चिह्नान्तर्गत A. पुस्तके नास्ति ।

भावशुद्धिः

नापीति ॥ लौकिककर्मण्यपि तस्य कर्तृत्वादित्यर्थः। ज्ञानस्यान्यशेषत्वे तव को लाभः? अत्राह—तथा चेति ॥ P. 31- 7

पृथगधिकारमसहमानश्चोदयति—अथेति ॥ 'अपुनरावृत्तिकामः' P. 31- 8
इति कामोपबन्धाभावात् "प्रतितिष्ठन्ति ह वा य एता रात्रीरुपयन्ति" इत्यत्र प्रतिष्ठाकाम इतिवत् फलविपरिणामं कृत्वा फलं कल्पनीयमस्तु, किमतः? अत्राह—तच्चेति ॥ ज्ञानं फलमाकाङ्क्षत इति, अत्राह—न त्विति ॥ P. 31- 9
दृष्टं फलमात्मज्ञानस्य नास्तीति, अत्राह—अस्ति चेति ॥ दृष्टे सत्याऽऽर्थ- P. 31-10
वादिकफलनैराकाङ्क्ष्यं सोदाहरणमाह—तस्मादिति ॥ P. 31-11

"दृष्टो हि तस्यार्थः कर्मावबोधनमि"ति दृष्टफलोऽध्ययनविधिर्नाऽऽर्थवादिकं घृत-कुल्यादिकं फलमाकाङ्क्षते, यथेत्यर्थः ॥ दूषयति—तदसदिति ॥ औपनिषदात्मज्ञानम्, कर्मप्रवृत्तिहेतुः, आत्मज्ञानत्वात्; P. 31-13
व्यतिरिक्तात्मज्ञानवत्, अत्राह—न चेति ॥ चेतनधियस्तत्त्वे कर्तृ- P. 31-14
विषयत्वमुपाधिः, न चास्य साधनव्याप्तिरित्याह—न हीति ॥ कर्ता, P. 31-15
भोक्ता चात्मा मानान्तरागोचरत्वादौपनिषद इति, अत्राह—यस्त्विति ॥ P. 31-17

अभिप्रायप्रकाशिका

इत्यात्मविज्ञानफलस्यार्थवादत्वं यदाहुः, तदपि निराकृतमित्याह—तथा चेति ॥ कामोपबन्धाभावात् फलं विपरिणमय्य परिकल्पयितव्यम्। तस्मात्=तस्मात् कल्पनात्, कर्मसम्बन्धकल्पनं लघीय इत्याशङ्कते—अथेति ॥ अस्तु को दोषः? इति, तत्राह—तच्चेति ॥ दृष्टे सत्यदृष्टाकाङ्क्षाभावमुपसंहारव्याजेन सदृष्टान्तमाह—तस्मादिति ॥ अर्थवादतः फलं घृतकुल्यादिदेहव्यतिरिक्तात्ममात्रज्ञानस्य कर्माङ्गत्वमुच्यते? किं वौपनिषदात्मज्ञानस्य? आद्यश्चेदङ्गीक्रियते, द्वितीयोऽनुपपन्न इत्याह—तदप्यसदित्यादिना ॥ आत्मज्ञानत्वात् तज्ज्ञानमपि कर्माङ्गमस्त्विति, अत्राह—न च तदिति ॥ तत्र हेतुमाह—न हि तस्येति ॥ कर्तृत्वमप्यनुमीयत इति, मैवम्; श्रुतिविरोधादित्याह—एवं हीति ॥ ननु आत्मनः कर्तृत्वभोक्तृत्वे अपि वेदप्रतिपाद्ये, अन्यथा तस्य कर्मविज्ञानायोगादिति चेत्, मैवम्; लोकसिद्धकर्तृत्वाद्यनुवादेन कर्मविधानोपपत्तेरित्याह—यस्त्विति ॥

. . भावशुद्धिः

एकोऽन्तःकरणविच्छुरितः कश्चिदहं प्रत्ययः (विषयः) प्रत्यक्षम् ब्रह्मणः
औपनिषदत्वे तदनन्यस्य जीवस्यौपनिषदत्वमिति चोदयति—
P. 31-18 नन्विति ॥ वस्तुतोप(नन्य)त्वेऽप्यविद्याकलुषितं रूपं कर्मप्रवृत्तिप्रयोजक-
P. 31-19 मिति परिहरति—सत्यमिति ॥ न तर्हि (तेन) रूपेणौपनिषदत्वम् ? तदाह—
P. 31-20 यत्त्विति ॥ कारकादिभेदापेक्षं कर्म तेन विरुध्यत इत्याह—तच्चेति ॥
P. 31-23 प्रवृत्तिसाध्याभावाच्च न तत्प्रयोजकं तदित्युपपादयति—तथा हीति ॥
P. 31-24 कथमित्युक्तानुपपत्तिमाह—साधनादीति ॥ यद्यपि दृष्टं प्रयोजनमस्य
कर्मणि न प्रतीयते; तथापि चोदनावशात् प्रोक्षणादिवददृष्टं कल्पयिष्यत
इति चोदयति—स्यादेतदिति ॥ विद्ययेति तृतीयाश्रुतिमुक्त्वा लिङ्ग-
P. 32- 1 माह—तथेति ॥ "अन्तवदेवास्य तद्भवति" इति फलस्यान्तवत्त्वोक्त्या-
ऽर्थादक्षरधीपूर्वकर्मणोऽनन्तफलत्वं दर्शितमित्यर्थः। साक्षाद्विद्यायाः कर्मा-
न्वयावगमाच्चाऽऽत्मज्ञानं कर्माङ्गमित्यर्थः। 'यदेव विद्यया' इति वाक्य-
P. 32- 2 मोङ्कारोपासनस्य कर्माङ्गत्वमाहेति परिहरति—[1]अत्रोच्यत इति ॥ उद्गीथः
=सामभक्तिभेदः। प्रकृतहानाप्रकृतप्रक्रियाऽयोगादित्यर्थः। 'यो ह वा
एतम्' इत्यादिवाक्यमक्षरधीस्तुतये कर्म निन्दति, न तद्धियस्तच्छेषत्वम्;
P. 32- 5 अश्रुतत्वादित्याह—परेणापीति ॥ 'विभागः शतवत्' इति सूत्रकारोक्त-
न्यायेन "तं विद्याद्" इत्यादिवाक्यमन्यार्थमित्याह—विद्येति ॥ समन्वा-

अभिप्रायप्रकाशिका

एकत्वे कस्यचित् प्रत्यक्षगम्यत्वम् अन्यस्यागम्यत्वमिति व्यवस्था दुस्थेति शङ्कते—नन्विति ॥ परमार्थत एकत्वे कल्पितभेदाभावान्न दोष इति परिहरति—सत्यमिति ॥ किमर्थं कथं वेत्युभयत्र हेतुमाह—आस्वेति ॥ ज्ञानस्य कर्माङ्गत्वं श्रुतिसिद्धत्वाद् दृष्टोपयोगाभावेऽपि स्वीकार्यं प्रोक्षणादेरिवेति शङ्कते—स्यादेतदिति ॥ इत्युपक्रम्येति ॥ "अन्तवदेवास्य फलं भवति"त्यन्तवत्त्वमभिविधाय—"आत्मानमेव लोकमुपास्ते न हा स्य कर्म क्षीयते" इति ज्ञानाभ्यासलक्षणस्यात्मोपासनस्य कर्मशेषत्वमक्षयफलायोक्तमित्यर्थः ॥ साहित्यं दर्शितमिति ॥ अयमर्थः—ज्ञानस्य सिद्धफलत्वेनासाध्यफलकर्मणा साहित्यासम्भवाद् विध्युद्देशवाक्यप्रमितफलवत् कर्मशेषत्वं विद्याया अर्थलभ्यमित्यर्थः ॥

1. मूलेऽयं पाठ नास्ति।

भावशुद्धिः

रम्भः=अनुगमनम्। यस्मादेकफलत्वे मानं नास्तीति निगमयति—तस्मादिति ॥

कर्म-ज्ञानकाण्डयोरसम्बन्धमनुवदति—येऽपीति ॥ दूषयति— P. 32-8
तेषामिति ॥ हेतुमाह—प्रमाणादीति ॥ प्रमाणम्, प्रमाता, प्रमेयम्, P. 32-9
प्रमेति चतस्रो विधा अद्वैतप्रमितिहेतुत्वेन सिद्धाः, ताभिरियं विरुध्यमाना तदसम्बद्धा न ताभ्यो भवेदित्यर्थः। हेत्वसिद्धिं शङ्कते—अथेति॥ P. 32-10
उपजीव्यतया बलवान् विभागो न विद्याबाध्यः, अत्राह—प्रविलीयत
इति ॥ तर्हि विरोधादनुपायत्वम्, नेत्याह—न चेति ॥ पूर्वकालः, P. 32-11
प्रमात्रादिरहितः, कालत्वात्, विद्योत्तरकालवत्, अत्राह—तदा चेति ॥ P. 32-12
प्रतीतिविरोध इत्यर्थः। विषयद्वारा विरोधाद् न धीर्विभागोपायः,
अत्राह —भेद इति ॥ कर्मणामपि धीशुद्धिद्वारा धीसाधनत्वादविरोध P. 32-12
इति परिहरति—न तर्हीति ॥ P. 32-13

कर्मणां ब्रह्मण्युपायत्वम्? तज्ज्ञानोत्पत्तौ वा? तत्सहकारितया तत्फले वा? इति विकल्प्य, असम्बन्धवादी प्रथमं प्रत्याह—स्यादेतदिति ॥
द्वितीयं दूषयति—न चेति ॥ चरमं निराचष्टे—न च ज्ञानेति ॥ ज्ञानस्य P. 32-15
फलं[1]वैकल्यमिति चेत्, तत् किं ब्रह्मभूयम्? बन्धनिबन्धनध्वंसो वा? नाद्य

अभिप्रायप्रकाशिका

एतद्विघटयति—पूर्वमित्यादिना ॥

विरोधमाह—द्वैतविषयमिति ॥ अयौगपद्यमेवाह—प्रविलीयत एवेति ॥ प्रविलीयते चेत्, कथमविरोधः? विरोधे वा कथमुपायत्वमिति, अत्राह—न चेति ॥ एवं तर्हि कर्मणामप्युपायत्वान्न विरोध इत्याह—न तर्हीति ॥

किं कर्मणां ब्रह्मस्वरूप उपयोगः? तज्ज्ञने? किं वा तत्साध्ये? इति विकल्प्य नाद्य इत्याह पूर्ववादी—स्यादेतदिति ॥ न द्वितीय इत्याह—न चेति ॥ नापि तृतीय इत्याह—न च ज्ञानसहकारिणीति ॥ यद्यपि ज्ञानेन ज्ञेयनिश्चयः साध्यते; तथाप्यसौ स्वोत्पत्तिनान्तरीयक इति साध्यान्तराभावादित्युक्तमिति द्रष्टव्यम्। मोक्षस्य ज्ञानसाध्यत्वात् कथं साध्यान्तराभाव इति? अत्राह—न तस्येति ॥ साध्यान्तरं शङ्कते—बन्धेति ॥ कथं तर्हि

1. वैकल्पं A.

भावशुद्धिः

P. 32-16 इत्याह—तस्य इति ॥ तद्द्वितीयं शङ्कते—अथेति ॥ दूषयति—तस्मि-
P. 32-17 न्निति ॥ तदभावात्=बन्धभावात्। बन्धहेतुः सत्यः? (असात्यो)ऽवा?
P. 32-18 इति पृच्छति—क इति ॥ सिद्धान्त्याह—अनादिरिति[1] ॥ [[2]परं प्रत्याह–न तर्हीति ॥ विद्योदयव्यतिरिक्तामविद्यानिवृत्तिं परिशेषयन् राद्धान्ती
P. 32-19 शङ्कते—स्यादेतदिति ॥ अनभिमतभागमाह—[3]न विद्येति ॥ अविद्या-निवृत्तित्वादग्रहणनिवृत्तिवद्विद्योदयः किं न स्यादिति? अत्राह—न खल्विति ॥ दृश्याभावो धर्मिमात्रं भवति यथा, तथा भावमात्राभावो भावान्तरमिति, अत्राह—न हि परस्परेति ॥ कुत इति? अत्राह—
P. 32-20 अभावत्वेति ॥ प्रतीतावितरेतरापेक्षायामन्योन्याश्रयात्, अनवस्थानाद्वा शून्यतापत्तेरित्यर्थः ॥

P. 32-21 शङ्कते—यदीति ॥ न हि जातु शुक्तिमध्यवस्यतो रजताभासो दृष्ट इत्यर्थः। अग्रहणस्य मिथ्याग्रहणकारणत्व(म)नुपपत्त्या निराह—
P. 32-22 तच्चेति ॥ तत्त्वग्रहणं विपर्यासविरोधि, इति तस्मिन् सति विपर्यासो नोत्पद्यत इत्यर्थः ॥

अग्रहणस्याकारणत्वे कारणान्तरमन्यथाग्रहणस्य वाच्यमिति
P. 33- 1 पृच्छति–किं तर्हीति ॥ उक्तमेव तदित्याह–अनादिरिति ॥] अविद्यायाः
P. 33- 2 किं कारणम्? अत्राह—तत्र चेति ॥ अविद्योपादानम्, निमित्तकारणं मया पृष्टमिति, अत्राह—विपर्यासेति ॥ यतो न विपर्यासनिवृत्ति-

अभिप्रायप्रकाशिका

ज्ञानस्य मोक्षहेतुत्वश्रुतिरिति? अत्राह—तस्मिन्निति ॥ असम्बन्धवादी गूढाभिसन्धिराह—कः पुनरिति ॥ आह पूर्ववादी—अनादिरिति ॥ स्वाभिप्रायमाह स एव सिद्धान्तैकदेशी—न तर्हीति ॥ उक्तेऽर्थे युक्तिमाह—न खल्विति ॥ तदेव कुततिः? अत आह—न हीति ॥ भावानाम-न्योन्याभावरूपत्वे परस्परापेक्षसत्ताप्रतीतिजनकत्वेनान्योन्याश्रय-चक्रकानव-स्थादोषप्रसक्तेर्न कोऽपि भावः सिद्ध्येदित्यर्थः ॥

स्वत एव विद्योदयेऽविद्यानिवृत्तेरङ्गीकारान्निमित्ताभावे विपर्यासोऽपि निवर्तत इति शङ्कते—यदीति न खल्विति ॥ अयमर्थः—विपर्यासस्याग्रहणे-

---

1. अनाद्यविद्येति मूल पाठः। 2. एतच्चिह्नान्तर्गतं A. पुस्तके नास्ति।
3. न चेति मूल पाठः।

भावशुद्धिः

विद्योदय इति फलितमाह—अत इति ॥ विद्ययाऽविविद्यानिवृत्तौ तत्कार्य- P. 33- 3
त्वाद्विपर्यासः स्वयमेव निवर्तत इति दूषयति—एतच्चेति ॥ वार्तम्= P. 33- 4
असारम् । अविद्यानिवृत्तौ विपर्यासनिवर्तकस्यानपेक्षत्वमुपपादयति—
न खल्विति ॥ उभयत्र हेतुमाह— त इति । उत्पाद एवेति ॥ हेतु-हेतु- P. 33- 6
मतोरभेदोपचारः । शून्यत्वे दण्डमाह—अन्यथेति ॥ विरोधि- P. 33- 7
भावान्तरोत्पादस्य पूर्वनिवर्तकत्वे प्रकृते किमायातम्? तत्राह—
विरोधिनी चेति ॥

काम्य-प्रतिषिद्धकर्मनिवृत्तौ ज्ञानस्यानभिसन्धिपूर्वकर्मापेक्षेति
शङ्कते—अथेति ॥ अनारब्धफललक्षणा(ण)कर्मणां ज्ञानादेवाज्ञान- P. 33- 8
निवर्तकाद् निवृत्तिरिति दूषयति—तच्चेति ॥ मात्रग्रहेण न(ता)त्त्विकत्वं P. 33- 9
व्यवच्छिनत्ति । तत्फलमाह—तस्येति ॥ अविद्यारसावसिक्तात्म(त्मानु)- P. 33-10
भूतिः कर्मफलप्रसवाय कल्पते, न पुनस्तत्त्वसम्बोधसम्पादितरूपेणे-
त्यर्थः । ज्ञानात् कर्मनिवृत्तौ प्रमाणमाह—तथा चेति ॥ P. 33-11

अभिप्रायप्रकाशिका

नान्वयव्यतिरेकौ यद्यपि स्तः ; तथापि न तस्य विपर्यासनिमित्तत्वम् ; अभाव-स्यार्थक्रियासु स्वरूपयोग्यताविरहात्, अन्वय-व्यतिरेकयोश्च विपर्यासविरोधि-तत्त्वग्रहणाभावतयोपपत्तेरिति ॥

निमित्तम्=उपादानमिति यावत् । भवत्वविद्योपादानो विपर्यासः, तथाप्यग्रहणं निमित्तकारणमेष्टव्यम् ; केवलोपादानात् कार्यासिद्धेः, ततो विद्योदयादेव तन्निवृत्तौ विपर्यासस्यापि निवृ[त्तिः,]र्न तत्र कर्मणामुपयोग इति मन्वानं प्रति निमित्तान्तरं सम्पादयति—विपर्यासेति ॥ उत्तरविपर्यासे पूर्वविपर्यासः, तत्संस्कारो वा निमित्तम्, नाग्रहणमित्यर्थः । असम्बन्धवादी परिहरति—एतच्चेति ॥ यदुक्तम्—न खलु भावान्तरं भावान्तरव्यावृत्तिरिति, तत्राह—यतो विरोधीति ॥ विपक्षे दोषमाह—अन्यथेति ॥ प्रकृते विरोधित्वमाह—विरोधिनी चेति ॥

कर्मणो बन्धहेतुत्वात् केवलज्ञानान्निवृत्त्ययोगात् तत्सहकारित्वेन नित्य-

भावशुद्धिः

हृदयग्रन्थिः=विपर्यासः। परं हिरण्यगर्भादि, अवरं [1]यस्माद् ब्रह्मणः, तथोक्तम् ॥

विपर्यासादिमलविकलज्ञानस्य कर्मनिवर्तकत्वात्, मलविलयार्थं
P. 33-14 कर्मापेक्षेति[2] [चोदयति—अथेति ॥ असम्भवेन प्रत्याह—साऽपीति ॥
शाब्दज्ञानोत्पत्ति मलनिवृत्त्योः शब्दमात्रायत्तत्वेऽप्यपरोक्षज्ञानोत्पत्तौ
P. 33-15 सहायापेक्षेति] मतान्तरमुत्थापयति—अथ मतमिति ॥ विगलितो
निखिलो विभागो यस्मात्, तद्विगलितनिखिलविभागमखिलमखण्डं
ब्रह्म गृह्णातीति, तथोक्तम्। ग्राह्य-ग्राहकभेदे कथमुक्तरूपत्वम्? अत्राह—
सर्वविकल्पेति ॥ किमर्थस्तस्याभ्युपगमः? अत्राह—तस्येति ॥ शाब्दज्ञानस्य
P. 33-16 ब्रह्मज्ञानगोचरत्वात् किमनेन? अत्राह—न चेति ॥ विभक्तानां
पदार्थानां संसर्गमुद्गृह्णातीति, तथोक्तम्। शब्दस्य परोक्षसंसृष्टधीजनक-
P. 33.17 त्वादित्यर्थः। तथापि कर्मणां क्वोपयोगः? तमाह—तदुत्पत्ताविति ॥
युक्तिरादिपदार्थः। कस्य ब्रह्म गोचरः, न शाब्दस्येत्युक्तेऽपि
P. 33-18 विशेषमिमं निराकरिष्यामीत्याशयेन पृच्छति—कः पुनरिति ॥
शाब्दस्यानुभवानारूढत्वात् प्रत्यक्षस्य तदारूढत्वा(त्)तदर्थ्यत इत्याह
—स्पष्टेति ॥ शाब्दज्ञानेन ज्ञेयस्य निश्चितत्वाद् निष्फलं स्पष्टाभत्व-

अभिप्रायप्रकाशिका

नैमित्तिककर्माण्यपेक्ष्यन्त इति शङ्कते—अथोच्येतेति ॥ कर्मणामविद्याकार्यतया विद्योत्पत्तौ कार्येण सहाविद्यानिवृत्तौ, तन्निवृत्तये न कर्मापेक्षेति परिहरति—तच्च नेति ॥ मात्रमिति ॥ तात्त्विकतां व्यावर्तयति। विद्योदय एवाविद्यावत् कर्मणां प्रक्षये प्रमाणमाह—तथा चेति ॥ हृदयग्रन्थिः=विपर्यासः ॥ परम्=हिरण्यगर्भादि, अवरं यस्मात् ब्रह्मणस्तत्परावरम् ॥ कीदृक् तदिति? अत आह—विगलितेति ॥ विगलितो विभागोद्ग्राहो यस्मिन् विज्ञाने, तत्तथोक्तम्। तदेव कुत इति? अत आह—तत्र चेति ॥ आगमात्, अनुमानाद्वाऽर्थमवगम्य

1, प A. 2. ( ) एतच्चिह्नान्तर्गतं A. पुस्तके नास्ति।

मित्याह—नेति ॥ तदुपपादयति—ज्ञानं हीति ॥ निश्चयफलत्वेऽपि[1] P. 33-19
ज्ञानस्य प्रकृते किमायतम् ? तदाह—शाब्देति॥ सर्वं ज्ञानं स्वगोचरे
स्पष्टमित्यर्थः । अभ्यास[2]जज्ञानप्रयोजनं शङ्कते—प्रमितेरिति ॥ हेतुमाह
—तत्रेति ॥ यथा हि लौकिकाः प्रमातार आगमार्थमवगम्य तमेवानु- P. 33-20
मानात् बुभुत्सन्ते ; अनुमाय प्रत्यक्षतो दिदृ[3]क्षन्ते, तथा साक्षात्कृत्य
निराकाङ्क्षाभवन्तीत्यर्थः । दूषयति—[4]नैतदिति ॥

यत्र मानान्तरगृहीतमपि प्रत्यक्षतो दिदृक्षन्ते, न नूनं तत्र P. 33-21
ते तद्विशेषमज्ञासिषुः[5] ; ज्ञातेऽज्ञाते च जिज्ञासानुप[6]पत्तेरित्यर्थः । पुंसा-
मभिसन्धिवैचित्र्याद् आकाङ्क्षोपपत्तिं शङ्कते—प्रमाणेति ॥, परिहरति P. 33-22
—नेति ॥

प्रमेयसिद्धावपि तस्याशुतरविनाशित्वेन पुनस्सिद्ध्यर्थमि(मि?)ति
इति शङ्कते—पुनरिति ॥[7] परान् प्रत्याह—नेति ॥ इतश्च नापेक्षेत्याह— P. 33-23
सिद्धस्येति ॥ अस्ति हेतुरित्याह—उपायान्तरेति ॥ प्रेक्षावन्त एतस्मि-
न्नप्युपेये उपायोपचय[8]मनुसरन्तीत्यर्थः । प्रमाणान्तरस्यैव ब्रह्मापेक्षा

अभिप्रायप्रकाशिका

तत्प्रत्यक्षतो दिदृक्षते, प्रत्यक्षीकृत्य च निराकाङ्क्षो भवति । अतस्तत्पर्यन्तं न बुभुत्सा निवर्तत इत्यर्थः ॥

दूषयति—नैतदिति ॥ अनुमानादिषु विशेषनिश्चयाभावे तदर्थं भवतु प्रत्यक्षापेक्षा, इह तु शब्दाद्विशेषतो निश्चिते ब्रह्मणि नान्याकाङ्क्षेत्यर्थः । इतर आह—प्रमाणेति ॥ दूषयति—न प्रमेयेति ॥ शङ्कते—पुनरिति ॥ पूर्वमानस्याशुतरविनाशित्वात् पुनः सिद्ध्येऽपेक्षेत्यर्थः । निराकरोति—न पूर्व- स्मादिति ॥ अनायासेन पूर्वमानादेव पुनरपि सिद्ध्युपपत्तेर्बहुतरायाससाध्यसा- क्षात्काराय न यत्नः सम्भवतीत्यर्थः । दोषान्तरमाह—सिद्धस्येति ॥ उपाया- न्तरसत्त्वैव हेतुरिति शङ्कते—उपायेति ॥ उपेयस्यैकत्वेऽपि प्रेक्षावतामुपाय-

1. वि B. 2. जं B. 3. क्ष A. 4. एतदधिगतमिति मूल पाठः
5. षं A. 6. त्प B. 7. परः A. 8. पायोपेयत्मचार ।

भावशुद्धिः

स्वप्रामाण्यसिद्ध्यर्थम्, न ब्रह्मण इति परिहरति—[1]नेति ॥ उपायान्तरं तर्हीति ॥

प्रमितप्रमित्सायां कारणं शङ्कते—प्रीतीति ॥ श्वश्रूरेकेन
P. 33-24 गवाक्षेण वीक्ष्य जामातरमभिनवमन्येन वीक्षमाणा प्रती(प्री)ति-
विशेषादित्यर्थः। तदर्थमपि न मानान्तरमपेक्षत इति दूषयति—
स पूर्वेति ॥ अपि चायमप्रमत्तंमन्यः प्रत्यक्षदृष्टस्य प्रत्यक्षमपीतरैः
P. 34- 1 प्रमाणैर्जिज्ञासेतेत्यपर्यवसानमित्याह—प्रत्यक्षेति ॥ अविशेषे हेतुमाह—
P. 34- 2 निश्चयात्मकत्वमिति[2] ॥

मानान्तरदृष्टस्य प्रत्यक्षेण जिज्ञास्यत्वेऽपि प्रत्यक्षदृष्टस्येतरैर-
P. 34- 3 जिज्ञास्यत्वे हेतुं शङ्कते—हानादीति ॥ प्राप्ताप्राप्तविवेकेनापेक्ष्यं दर्शयन्
P. 34- 4 परिहरति—संनिकर्षेति ॥

ब्रह्मण आत्मत्वेन नित्यसंनिहितत्वाद् न संनिकर्षहेतुरप्यपेक्ष्यत इत्याह—प्रकृते चेति ॥ सङ्गतिसंवेदनापेक्षताया विशेषेषु[3] चानन्त्य-

अभिप्रायप्रकाशिका

प्रचयानुसरणदर्शनादित्यर्थः। तर्हि प्रमेयसिद्ध्यर्थं नाकाङ्क्षेतेत्याह—उपायान्तरं तर्हीति ॥

पुनः सिद्ध्यपेक्षायां हेत्वन्तरमाशङ्कते—प्रीतीति ॥ प्रीतिविशेषान्निरीक्षितमपि पुनर्वीक्षमाणा दृश्यन्त इत्यर्थः। सोऽपि पूर्वमानादेव सुकरः इति मानान्तरे दुष्करे यत्नोऽयुक्त इति परिहरति—स पूर्वेति ॥ अतिप्रसङ्गश्चापद्यत इत्याह—प्रत्यक्षेति ॥ न च—अनिश्चयो विशेष इति—शङ्कनीयम्; प्रमाणत्वादेव तत्साम्यादित्याह—निश्चयेति ॥ विशेषं शङ्कते—हानादीति ॥ प्राप्ताप्राप्तविवेकेन। तर्हि सन्निकर्षहेतुरेवापेक्ष्यः, न प्रमाणान्तरमिति परिहरति—संनिकर्षेति ॥ प्रकृते=ब्रह्मणि, हानादिविशेषोऽप्यसम्भवीत्याह—प्रकृते चेति ॥

1. नेति मूले नास्ति। 2. निश्चायकत्वमिति मूलपाठः 3. ण B.

भावशुद्धिः

व्यभिचाराभ्यां सङ्गतिसंवेदनायोगात् सामान्यविषयाच्छब्दाद् विशेषविषयं प्रत्यक्षमिति प्रत्यर्थनियतानन्तविशेषसिद्ध्यर्थं तदर्थ्यत इति शङ्कते—सामान्येति ॥ सामान्य-विशेषहीनं ब्रह्मशब्दानवगम्यमुक्तं स्या- P. 34- 5
दिति दूषयति—अनधिगत इति ॥ इष्टापत्तिरियमित्याह—बाढमिति ॥ P. 34- 6
दूषयति—यदीति ॥ सामान्यरूपस्यावगतस्योपासनाविशेषरूपस्य सा- P. 34- 7
क्षाद्भाव इति, अत्राह—न चेति ॥ सामान्य-विशेषयोरभेदे सामान्य- P. 34- 8
वद्विशेषस्याशाब्दत्वमिति भावः। लौकिकात्मसाक्षात्काराय यज्ञादिविध्यनुपपत्तेरलौकिकात्मसाक्षात्काराय तद्विधानं वाच्यमित्याशयेनाह
—कस्येति ॥ P. 34- 9

तदलौकिकं रूपं शब्दादवगतम्? अनवगतं वा? इति विकल्प्य,
आद्यमनवद्यमित्याह—शब्देति ॥ शमादिरप्यादिपदार्थः। द्वितीयमप- P. 34-10
वदति—[1]अनवगतेति ॥ अत्यन्ताप्रसिद्धस्य भावनानुद्देश्यतया भावना- P. 34-11
भाव्यत्वानुपपत्तेरित्यर्थः। प्रसिद्धौ नाशब्दम्; मानान्तराभावात्
स्यादित्युपसंहरति—तस्मादिति ॥ शब्दावगते ब्रह्मणि द्वैतस्य निवृत्ते- P. 34-12
रानन्दावाप्तेश्च तज्ज्ञानस्य सम्भावनाद्यभावात् कर्माभ्यासापेक्षा ब्रह्मसाक्षात्काराय न युक्तेत्यर्थः ॥

शब्दावगतब्रह्मात्मभावस्यापि संसारानुवृत्तिदर्शनात् तन्निवृत्तये

अभिप्रायप्रकाशिका

विशेषाणामानन्त्यात्, व्यभिचाराच्च तेषु सम्बन्धासंवेदनात् सामान्यविषयाः शब्दादयः, प्रत्यक्षं तु नेदृगिति विशेषनिर्धारणार्थं तदपेक्षेति शङ्कते—सामान्येति ॥ गूढाभिसन्धिरसम्बन्धवाद्याह—अनधिगत इति ॥ आहेतरः—बाढमिति ॥ स्वाभिप्रायं पूर्ववादी प्रकटयति—यदि तर्हीति ॥ सामान्येनावगते सम्भवत्युपासनेति, अत आह—न चेति ॥ विशेषापरोक्ष्यं न स्यादित्यर्थः। असम्बन्धवादिनाप्येवमभ्युपेयम्, अन्यथा शब्देन निरतिशयानन्दादिरूपब्रह्मानवगमात्तत्साक्षात्कारोद्देशेन यज्ञादिविधानानुपपत्तेरित्याह—कस्य चेति ॥ कथं तर्हि विधिरपि? अत आह—शब्देति ॥

---

1. अविदितेति मूलपाठः

भावशुद्धिः

P. 34-13 तदपेक्षेति चोदयति—नन्विति ॥ एतद्विघटयति—नैतदिति ॥ विषयदोषपरिभावनाहितवैराग्यश्रद्धावान् मोक्षमाणो निर्विचिकित्सप्रमाणात् तत्त्वमादेराम्नायादवगतब्रह्मात्मभावः, अत एव विदितात्मयाथात्म्यो मिथ्यादर्शननिमित्तैर्धर्मैं रागादिभिर्युज्यत इत्यर्थः ॥

P. 34-16 ब्रह्मविदः पूर्ववत् संसाराभावे श्रुतिमुदाहरति—श्रूयते चेति ॥

P. 34-17 अवगतब्रह्मात्मभावस्य रागाद्यसम्भवे हेत्वन्तरमाह—न चेति ॥ तथा श्रूयत इति शेषः ॥

[1]सुखाशयी रागी,(गः,) दुःखानुशयी द्वेषो विदुषो न युक्त

P. 34-18 इत्यत्र श्रुतिमाह—तथा अशरीरमिति ॥ उदाहृतश्रुत्यर्थमाह—[2][मिथ्याभिमानेति ॥ यस्मात्तत्त्वधीमिथ्याधीकार्ययोर्विरोध इत्यसम्बन्धपक्षमुप-

P. 34-20 संहरति]—तस्मादिति ॥

तदेवं वाक्यार्थज्ञानमात्रान्मोक्षमिच्छतां मतमुपन्यस्य, स्वाभिमतं

P. 35- 1 ज्ञान-कर्मसमुच्चयमवतारयितुमाह—अत्रोच्यत इति ॥ हेतुविशेषात्=रागाद्य-

P. 35- 2 विद्यासंस्कारात् । तन्निदर्शनमाह—यथेति ॥ दार्ष्टान्तिकं दर्शयति—तथेति ॥ भवत्वयं परवैराग्यश्रद्धावान्, प्रतिपद्यतां च निर्विचिकि-

अभिप्रायप्रकाशिका

अनुभवविरोधान्नैवमिति शङ्कते—नन्विति ॥ अनुभव एव विदुषामेवंविधोऽसम्भवीत्याह—नैतदिति ॥ अवगतब्रह्मात्मभावः, विदितात्मयाथात्म्य इति चाज्ञान-विपर्यासयोः क्रमेण निवृत्तिरुक्ता । भवतु ब्रह्मभावः, तावता प्रकृते किमागतमिति ? अत्राह—न चेति ॥ किमिच्छन्=आत्मनः किं फलमिच्छन्, कामाय=कस्य वा पुत्रमित्रादेः । कामाय=प्रयोजनाय, अनुसंज्वरेत्=अनुतप्येदिति यावत् । तस्याशरीरस्यैव प्रियाप्रियासम्बन्धः, न जीवत इति मन्वानं प्रति श्रुतेरभिप्रेतमर्थमाह—मिथ्याभिमानेति ॥ ब्रह्मात्मभावः, संसारित्वं चैकस्यानुभूयत इति, अत आह—यस्त्विति ॥

तदेवं वाक्यार्थज्ञानमात्रादेव कृतकृत्यतेति मन्यमानानां मतमुपन्यस्य, स्वाभिमतं ज्ञान-कर्मणोः सम्बन्धमवतारयति—अत्रोच्यत इति ॥ हेतुविशेषात्=निबिडतराविद्यासंस्कारात्, अस्त्वन्यापेक्षा, तावता कथं कर्माद्यपेक्षेति,

1. सत्त्वा A. 2. ( ) एतच्चिह्नान्तगतं A. पुस्तके नास्ति ।

भावशुद्धिः

त्सादाम्नायादात्मतत्त्वम्, तथापि न सांसारिकेभ्यो धर्मेभ्य उपरन्तुमर्हति न यावदनुतिष्ठति यज्ञादिब्रह्मचर्यादिसाधनमित्यर्थः। किं तदपेक्ष्यम्? किंप्रमाणकं च तदिति? अत्राह—तच्चेति॥ रत्नतत्त्वपरी- P. 35- 5
क्षादावभ्यासः प्रमाणसहकारितया साक्षात्कारहेतुः सिद्ध इत्यर्थः॥

अभ्यासः केन द्वारेण श्रवणस्य साक्षात्कारजनने सहकरोतीति? अत्राह—अभ्यासो हीति॥ दृढसंस्कारस्य किं कार्यम्? तदाह— P. 35- 6
पूर्वेति॥ आदरनिरन्तरदीर्घकालसेवितात्मतत्त्वभावनाहितविद्यासंस्कारद्रढिम्नः प्रत्यूढानादिरूढनिबिडाविद्यावसानं श्रुतवाक्यार्थतत्त्वमपरोक्षयतीत्यर्थः॥

अभ्यासेन विपरीतभावनाप्रतिबन्धाद् यज्ञादेरानर्थक्यम्? अत्राह—यज्ञादयश्चेति॥ "सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत्" इति न्या- P. 35- 7
यादित्यर्थः। प्रमाणकार्यं प्रमा नादृष्टकार्यमित्यशङ्क्य, मतान्तरमाह—श्रेयःपरि[1]बन्धीति॥ विद्योत्पत्तिविरोधिदुरितपापनिवृत्त्येत्यर्थः॥

असम्बन्धवादी चोदयति—स्यादेतदिति॥ यत्तु तन्निवृत्तयेऽ- P. 35- 8
स्त्यन्यदिति, तत्प्रत्याह—प्रमाणात्त्विति॥ यथाऽनुवर्तमानेऽपि दुष्ट- P. 35- 9
परदारादिरागादौ निषेधापादितात्यन्तपरोक्षानर्थकारिषु निषिद्धेषु न च प्रवृत्तिर्विवेकिनाम्, तथा निर्विचिकित्साद्वैतावगतौ न संसारिकधर्मेष्विति निगमयति—तस्मादिति॥ P. 35-10

अभिप्रायप्रकाशिका

तत्राह—तच्चेति॥ अभ्यासादेरुपयोगप्रकारमाह—अभ्यासो हीति॥ पूर्वसंस्कारम्=विपर्याससंस्कारम्, स्वकार्यम्=तत्त्वज्ञानसंस्कारम्, सन्तनोति=उपचिनोतीति यावत्। एवं प्रोक्षणादिवददृष्टोपकारकत्वमुक्त्वा, अवघातादिवद् दृष्टोऽपि प्रकारः सम्भवतीत्याह—श्रेय इति॥

तत्र हेतुः—नित्यानामिति॥ मिथ्यावभासानुवृत्तावपि कलञ्जभक्षणादौ रागिणां निषेधनिश्चयवतामिव व्यवहारस्य प्रामाणिकनिश्चयानुसारित्वाद् न तन्निवृत्तयेऽन्यदपेक्षणीयमिति शङ्कते—स्यादेतदिति॥ प्रमाणानुसन्धाने स्वाभाविकसंस्कारबलात् कदाचिदन्यथापि प्रवृत्तिदर्शनाद् मैवमिति परिहरति

1. प्रतिबन्धीति A.

भावशुद्धिः

P. 35-11 परहरति—उच्यत इति ॥ यथा निषिद्धार्थानुसन्धानाभावे स्वरसवाहिनो रागादयोऽप्रतिबद्धाः प्रवृत्तये स्युरित्यर्थः ॥ लौकिकमुदा-
P. 35-13 हरति—यथेति ॥ हेतुमाह—प्रागिवेति ॥ वाक्यकृतपरोक्षज्ञानस्य नापरोक्षभ्रमनिवर्तकत्वम्, आत्मनि तु वाक्यजमपि ज्ञानमपरोक्षमित्या-शङ्क्योदहराणान्तरमाह—तथेति ॥ यस्माद् मनन-निदिध्यासनानपेक्ष-श्रवणाद् मन्द-मध्यमाधिकारिणां न विपरीतभावनानिवृत्तिरित्युपसं-
P. 35-15 हरति—तस्मादिति ॥ यथा मयोक्तम्, तथा श्रुतिरप्यस्तीत्याह—
P. 35-16 तथा चेति ॥ आम्नायाविरोधिना न्यायेन व्यवस्थापना=मननम्, (तद्)व्यवस्थितविषये बुद्धिधाराऽऽधानं ध्यानम् । तत्त्वमा(वा?)दिवा-क्यम्, न स्वकार्ये परापेक्षम्, प्रमाणत्वात्, प्रत्यक्षवत्, अत्राह—
P. 35-18 अन्यथेति ॥ यज्ञादि, ब्रह्मचर्यादि च शब्दान्निर्विचिकित्सात्मज्ञानोत्पत्तौ साधनमिति शङ्कते—स्यादेतदिति ॥ असम्भावना-विपरीतभावनानिरा-
P.35-19 सेनैव मननादेरुपयोगः, न शब्दात् ज्ञानोत्पत्ताविति परिहरति—तद-सदिति ॥ एतत् स्फोरयति—न हीति ॥ अबोधकत्वाभावेऽप्यनिश्चाय-
P. 35-20 कत्वं साधनानपेक्षस्येति, अत्राह—नापीति ॥ अपौरुषेयवचसः स्वश-

अभिप्रायप्रकाशिका

—उच्यत इति ॥ तत्रापि कथमिति? अत आह—प्रागिवेति ॥ शब्द-ज्ञानोत्तरकालं मननादिविधानाच्च न तावन्मात्रेण कृतकृत्यतेत्याह—तथा चेति ॥ शमादिविधानान्यथानुपपत्त्याऽप्येवमवगम्यत इत्याह—शमेति ॥

मननादेः, शमादेश्च शाब्दज्ञानोत्पत्तावेवोपयोग इति शङ्कते—स्यादे-तदिति ॥ धर्म इव ब्रह्मण्यपि शब्दादेव निश्चयोत्पत्त्युपपत्तेर्न शाब्दज्ञानमात्रे शमादेरुपयोग इति परिहरति—तदसदिति ॥ तदेवोपपादयति—[1]न सहीति ॥ अनिश्चायकत्वे दोषमाह—अन्यथेति ॥ प्रमाणानुसन्धाने विपरीतसंस्कारबलान्निश्चयवतामप्यन्यथा व्यवहारो दृष्ट इत्युक्तम् ॥

---

1, न हीति मूलपाठः

भावशुद्धिः

क्त्या प्रमापकत्वाभावे दण्डमाह—अन्यथेति ॥ पूर्वमननुसन्धान उक्तम्, P. 35-21
साम्प्रतमनुसन्धानेऽपि प्रमाणस्यापरोक्षमिथ्यादर्शनाभ्यासबलीयस्त्वे
निदर्शनमाह—अपि चेति ॥ अभिनयेन स्मृतिपदारूढरामादीनां तत्र सुखा- P. 35-22
दिहेतुत्वम्, न भरतादीनामिति, अत्राह—निश्चितेऽपीति ॥ कथमेतत् P. 35-23
त्वयाऽवगतम्? परदुःखस्याप्रत्यक्षत्वात्, अत्राह—अवितथस्येति ॥ तथा- P. 35-24
स्त्येवेति—अवितथस्येव तस्य ॥ यस्मात् पूर्ववत् कर्तृत्वाद्यनुप(?)वृत्तिरि-
त्युपसंहरति—तस्मादिति ॥ मुक्तौ ब्रह्मचर्यादिसाधनापेक्षायामस्याः P. 35-25
कार्यत्वादनित्यत्वमिति, अत्राह—यथैवेति ॥ P. 36- 1

[[1]शब्दज्ञानान्मुक्त्यभावे "ब्रह्म वेद ब्रह्मैव भवति" इत्यादिश्रुति-
विरोधः, अत्राह—श्रुतयस्त्विति ॥ तृतीयज्ञानापेक्षा इत्यर्थः । तस्या- P. 36- 2
भ्यासमात्रापेक्षमनोयोनित्वे स्यादप्रामाण्यं वेदान्तानाम्, अत्राह—
शब्दसाधनेति ॥ हेतुमाह—तद्धेतुत्वादिति ॥ ध्यानादेः प्रमाणाङ्गत्वेन P. 36- 3
तज्जनकत्वादित्यर्थः ॥

ऋणापाकरणपक्षनिराकरणं स्पष्टयितुं तमनुवादयति—यदपीति ॥ P. 36- 4
पृथक्कार्याः स्वर्गादिफला यस्मिन् जन्मनि ज्ञानेऽधिकृतम्, य(त)स्मि-
न्नेव जन्मनि तदपाकरणेन भवितव्यमिति न नियन्तुं शक्यमिति परि-
हरति—[2]तदेतदपीति ॥ गौतमसूत्रं पठति—तस्येति ॥ तन्मूलश्रुतिमुदा- P. 36- 5
हरति—यदि वेति ॥ विद्वत्संन्यासे हेतुमाह—एतद्धस्मेति ॥ तदेतदात्मतत्त्वं P. 36- 7

अभिप्रायप्रकाशिका

इदानीं प्रमाणानुसन्धानेऽप्यपरोक्षावभासात् मिथ्याज्ञानस्य बलीयस्त्वे निदर्शनद्वयमाह—अपि चेति ॥ तत्र प्रमाणमाह—अवितथस्येति ॥

यदुक्तं पुरस्तात्—न तस्य मोक्षः साध्यः; अनित्यत्वप्रसङ्गादिति, तत्राह—यथैव चेति । याश्च "ब्रह्म वेद ब्रह्मैव भवति" "आत्मानं चेद्विजानीयात्" इत्याद्याः श्रुतय उपन्यस्ताः, ता असन्मतेऽप्युपपद्यन्त इत्याह—श्रुतयस्त्विति ॥ शाब्दज्ञानविषयत्वेऽप्यदोषः, तस्य तृतीयज्ञानहेतुत्वेन परम्परया तत्फलत्वादित्याह—शब्दसाधनेति ॥

1. ( ) कुण्डलान्तर्गतं शब्दज्ञानादित्यारभ्य किं तदित्यन्तं B. पुस्तके नास्ति ।
2. तदपीति मूलपाठः ।

### भावशुद्धिः

P. 36- 8 विद्वांस इत्यर्थः । वाक्यान्तरमाह—तथा किमिति ॥ येषां नोऽयमात्माऽयं
लोक इति तदुत्तरार्धम् । का तर्हि मानवस्मरणस्य गतिरिति ? तामाह
P. 36- 9 —प्रतिपन्नेति ॥ स्वाभिमतमुपन्यस्यति—इदं त्विति ॥ "जायमानो वै
ब्राह्मणस्त्रिभि" इति गृहस्थः सम्पद्यमान इति मन्तव्यम् । कर्मणां
फलोपकारतया विद्याङ्गत्वमस्तु, यथाहुः समुच्चयवादिन इति, अत्राह
P. 36-15 —सोऽपीति ॥

संयोगपृथक्त्वेन काम्यकर्मविषयं विविदिषापक्षमुक्त्वा, नित्य-
P. 36-16 नैमित्तिककर्म[[1]विषयसंस्कारपक्षमाह—संस्कारेति ॥ आश्रमकर्मणां सतां
यज्ञादीनां विविदिषाद्वारेण विद्यार्थत्वं सूत्रकारेणाप्युक्तमित्याह—तदुक्त-
मिति ॥ अग्निहोत्रादि]कर्म मुमुक्षुणाऽनुष्ठीयमानं विद्यासाधनम्, आश्र-
मिभिरनुष्ठीयमानमाश्रमकर्मापि यावज्जीवादिश्रुतिविहितत्वादित्यर्थः ॥

### अभिप्रायप्रकाशिका

ऋणापाकरणपक्षमुपन्यस्य दूषयति—यदपीति ॥ न नियोगतः = न नियमेन । तत्र हेतुः—आश्रमेति ॥ तर्हि वचनस्य का गतिरिति? तत्राह—प्रतिपन्नेति ॥

स्वाभिमतं कर्मज्ञानोपयोगमुपन्यस्यति—इदं त्विति ॥ 'यज्ञादिभिर्विविदिषन्ति' इति वाक्यस्यापूर्वार्थत्वेन विधिपरत्वात्, इच्छायाश्च 'अश्वेन जिगमिषति' इत्यादौ 'असाध्यत्वात्, इष्यमाणज्ञानस्य च स्वरूपेण पुरुषासमीहितयागादेरिवैकपदोपात्तत्वेऽपि भाव्यत्वानुपपत्तेः, मोक्षस्यैव भाव्यत्वेन स्वीकार्यत्वाद्, मोक्षफलोद्देशेन प्रवृत्तभावनाभाव्यतया करणत्वेनैवोपयोगात्, परिशेषात् यज्ञादिभिरुपकृत्येति करणोपकारकतया यज्ञादीनां प्रयोजनादिवदुपयोग इति शङ्कायामाह—सोऽपीति ॥ करणस्य ज्ञानस्य वाक्यान्तरसिद्धशमाद्यङ्गनिबन्धनोपकारमपेक्ष्य तद्द्वारेण यज्ञसम्बन्धोपपत्तौ ज्ञानं प्रति सत्त्वशुद्धिद्वारेण करणतयैवान्वयात् । एवं च "यज्ञेन' इति तृतीयाया मुख्यसाधकतमार्थतोपपत्तेरुपकृत्येति व्याख्याने पदाध्याहारयोजनापाताद् न प्रयाजादिवदुपयोग इति भावः ॥

---

1. [ ] एतच्चिह्नान्तर्गतं A. पुस्तके नास्ति ।

भावशुद्धिः

कर्मणामपरोक्षसाधनत्वमाक्षिपति—नन्विति ॥ अन्वय-व्यतिरे- P. 36-17
कसिद्धसाधनत्वं विधूय नादृष्टसाधनत्वमन्वेष्यम्; दृष्टे सति कल्पना-
योगादित्याह—तत्रेति ॥ किं तद् दृष्टम्? इति, तदाह—शमदमादीति ॥
इतिकर्तव्यतोपक्रमाद्विहन्त्रीत्युक्तम् । समाधानस्य दृढमुष्टिवदन्वय-
व्यतिरेकावगमेऽङ्गत्वमित्याह—समाहितेति ॥ यज्ञादीनामपि दृष्टत- P. 36-18
याऽङ्गताङ्गीकारणमिति, नेत्याह—न त्विति ॥ यज्ञादीनां व्यतिरे- P. 36-19
कवैधुर्याङ्गीकारेण परिहरति—सत्यमिति ॥ नायमर्थो व्यतिरेक- P. 36-20
गम्यः, किन्तु धर्मं सुखं च ज्ञानं चेत्यागमगम्य इत्यर्थः । कर्मणां
धीसाधनत्वस्यागमिकत्वे तत्परित्यागासिद्धिः, अत्राह—तथा चेति ॥ P. 36-21
तदपि न नियोगत इत्युक्तप्रकारेणेत्यर्थः । शमाद्यनुगृहीताभ्यस्य-
मानवाक्यादेवापरोक्षधीसिद्धौ गृहिणोऽपि कर्मानर्थक्यम्, अत्राह—
किं त्विति ॥ विशेषमेवाह—साधनेति ॥ शमादिसाधनात् क्षिप्रम्,
कर्मसहितात् तस्मात् क्षिप्रतरम्, इत्येतद्व्यतिरेकमुखेनाह—तदभाव इति ॥ P. 36-22
अयज्ञकर्तृकसंन्यासात् कर्मयोगो विशिष्ट इत्यत्र सूत्रकारसंवादमाह—
तदुक्तमिति ॥ कर्मणां ज्ञानेन सम्बन्धयोग्यत्वाद् न तदिच्छयेत्यत्राश्वो P. 36-24
दृष्टान्त इत्याशङ्क्य सूत्रं व्याकरोति—एष इति ॥ अभ्यासलभ्यायामिति ॥ P. 37- 1
अभ्यस्यत इत्यभ्यासः । वाक्यमभ्याससहकृतम् । अश्वदृष्टान्तं व्याचष्टे P. 37- 2
—यथेति ॥

ब्रह्मस्वरूपसाक्षात्काररूपविद्योदये चेत् कर्मापेक्षा, कृतमत्र कर्म-
भिरिति चोदयति—नन्विति ॥ विद्याया ब्रह्मरूपत्वे किमनिष्टम्? तदाह— P. 37- 3

अभिप्रायप्रकाशिका

दृष्टादेव प्रमाणोपायाद् दृष्टशमादीतिकर्तव्यतापेक्षात् ज्ञानोत्पत्त्युपपत्ते-
रदृष्टद्वारोपकारकयज्ञादिषु नापेक्षेति शङ्कते—नन्विति ॥ अधिकारिभेदे-
नोभयार्थतयाप्युपपत्तेर्न दोष इति परिहरति—सत्यमिति ॥ तर्हि किमर्थं
बहुलायासेषु यज्ञादिषु प्रवृत्तिरिति? अत आह—किन्त्विति ॥

नित्यसाक्षात्काररूपेण ब्रह्मणि तदापरोक्ष्यायान्यापेक्षा युक्तेति शङ्कते
—ननु विद्येति ॥ साक्षादपरोक्षस्यापि ब्रह्मणोऽनाद्यविद्यातिरोहितत्वात्

भावशुद्धिः

P. 37- 5 तच्चेति ॥ संविदभेदापरोक्ष्यमित्येतत् स्वीकृत्य परिहरति—उच्यत इति ॥ दार्ष्टान्तिकमाह—तथेहेति ॥ स्वरूपसंवेदनेऽप्यज्ञानाद्भ्रमे तन्निवर्तक-वृत्तिरूपं ज्ञानं यत्नजन्यमित्यर्थः ॥ स्वच्छधवलस्फटिकमणिक्षणप्रवाहे लाक्षालक्षणद्रव्यान्तरोपधानात् पूर्वनिवृत्त्याऽपारमार्थिकारुणभावा एव
P. 37- 7 स्फटिकमणिक्षणा जायन्ते इति, अत्राह—न हीति ॥ हेतुमाह—न ह्यकस्मादिति ॥ अनेकैर्विसदृशक्षणै रक्तस्फटिक[क्षणै[1]र्व्यवहितस्योपाध्यु-परागात् पूर्वेण शुक्लक्षणेन सभागक्षणस्य सदृशशुक्लक्षणस्य कारणं विनोत्पत्तिर्न भवेत् । न ह्युपाध्यभावः कारणम्; पक्षहानात्, न रक्तादेव स्फटिकाच्छुक्लस्फटिकोत्पत्तिः; उपाधिसंनिधावपि तत्प्रसङ्गात्,
P. 37- 8 व्यवहितत्वाच्चेत्यर्थः । पूर्वसभागक्षणानुत्पादे दृष्टान्तमाह—न ह्यग्नीति ॥
P. 37- 9 यस्मात् प्रत्यभिज्ञानाच्च स्थिररूपः स्फटिक] इत्युपसंहरति – तस्मादिति ॥

P. 37-10 स्फटिकदृष्टान्तं विघटयन्नाशङ्कते—स्यादेतदिति ॥ तत्र=स्फटिक-विषये । विषयसप्तमीयम् । स्फटिकरूपस्योपाध्यपनयापेक्षत्वेऽपि तज्ज्ञा-नस्य तदपेक्षत्वं साधयति—तच्चेति ॥ स्फटिकरूपार्थ्येव पुमानुपाधि-
P. 37-11 मपनयति, अतो न दृष्टान्त-दार्ष्टान्तिकवैषम्यम्, अत्राह—पुरुषेति ॥

अभिप्रायप्रकाशिका

तन्निरासाय ब्रह्माकाराकारिकान्तःकरणवृत्तिर्वेदान्तवाक्यजन्या विद्याऽपेक्षणीयेति निदर्शनपुरस्सरं परिहरति—उच्यत इत्यादिना ॥

ये तु—धवलस्फटिकमणिलक्षणप्रवाहे लाक्षाद्युपधानात् पूर्वरूपनिवृत्त्या परमार्थत एवारुणस्फटिकमणिक्षणा जायन्ते, तदपगमे पुनर्धवलस्फटिक-मणिक्षणप्रवाहा जायन्त इति मन्यन्ते जरन्तो बौद्धाः, तान् निराचष्टे—न हि स्फटिकेति ॥ तदेवोपपादयति—न ह्यकस्मादिति ॥ विसभागक्षणः= विसदृशक्षणः, सभागक्षणः=सदृशक्षणः । उक्तमेव दृष्टान्तेनोपपादयति—न ह्यग्नीति ॥

तत्राप्यागन्तुकस्यैव ज्ञानस्यापेक्षा, न स्थायिनः स्फटिकस्येति शङ्कते—स्यादेतदिति ॥ कार्यस्यैव प्रयत्नसाध्यतोपपत्तेरिति हेतुमाह—पुरुषेति ॥

---

1. [ ] एतच्चिह्नान्तर्गतं B. पुस्तके नास्ति ।

भावशुद्धिः

पुंसोऽप्युपाधिनिरासव्यापारा(न ? )पेक्षत्वप्रतिपादनाय विकल्पयति—किं पुनरिति ॥ आद्यं निराह—न तावदिति ॥ अर्थितम् । पुंसेत्यनुषङ्गः । P. 37-11
हेतुमाह—अर्थेनेति ॥ जानाति, इच्छति, यतते इति ज्ञानस्यैवे[1]च्छो- P. 37-12
पहारेण व्यवहारनिबन्धनत्वम्, अत्राह—[2]न हीति ॥ अर्थानवच्छिन्न- P. 37-13
ज्ञानस्य तद्धेतुत्वेऽनिष्टमाह—मिथ्येति ॥ फलपर्यन्तव्यवहारप्रसङ्गा-
दित्यर्थः । द्वितीयमुत्थापयति—अथेति ॥ तादर्थ्ये चतुर्थी । तत्सिद्ध्यर्थ- P. 37-14
मित्यर्थः । ज्ञानस्यार्थार्थत्वात् ज्ञानार्थो व्यापारोऽर्थेनैवार्थितः स्यात्, न ज्ञानार्थत्वे व्यवहारोऽर्थितः स्यात् पुंसेत्याह—तदर्थ इति ॥ ज्ञानस्यार्थार्थत्वे ज्ञानादर्थे विकारेण भाव्यम्; अन्यथा ज्ञानस्यार्थार्थत्वायोगात्; अतश्च ब्रह्मणः स्वात्मनि स्वरूपसंवेदनेन विकारप्रसङ्गः, अत्राह
—न चेति ॥ कुत इति ? अत्राह—तयोरिति ॥ ज्ञानार्थयोः संयोग-समवाय- P. 37-15
तादात्म्यायोगात्, अन्तरेण संसर्गं विषय-विषयिभावस्यातिप्रसञ्जकत्वादित्यर्थः । ज्ञानस्य योग्यो देशो विषयोऽर्थः, कथं तयोरसम्बन्धः ? तत्राह—योग्येति ॥ [[3]सर्वस्मिन् [4]सदाभावात् रूपादिज्ञाने ज्ञानोत्पत्तेः प्रागूर्ध्वं तत्काले च रूपादि योग्यमेव । अतो न तादृशसम्बन्धादर्थे ज्ञानजन्यो विकार इत्यर्थः । प्रकटः पट इति] सामानाधिकरण्येनार्थे

अभिप्रायप्रकाशिका

एतद्विकल्प्य दूषयति—किं पुनरिति ॥ उत्तरस्मिन् विकल्पे सापेक्षत्वमर्थस्यापि प्राप्तमित्याह—तदर्थ इति ॥ दृष्टान्तस्थले प्राकट्यलक्षणातिशयस्य ज्ञेयगततया ज्ञायमानत्वादपेक्षा स्यात्, ब्रह्मणि तु तथाविधातिशयाभावान्नैवमिति मन्वानं प्रति दृष्टान्तेऽपि न नस्तत् सम्प्रतिपन्नमित्याह—न चेति[5] ॥ न च योग्यदेशावस्थितत्वं सम्बन्धः; योग्यदेशस्थानामपि रूप-रसादीनां घटादीनां च युगपद् ज्ञाततादर्शनादित्याह—योग्येति ॥ ज्ञातताया रेखादिवद् घटाद्याश्रयतयोत्पत्तौ सर्वेषामविशेषेण तत्र विदितमिति व्यवहारश्च स्यादित्याह—

1. स्यैव वाञ्छा (क) 2. नेति मूलपाठः । 3. ( ) एतच्चिह्नान्तर्गतं A. पुस्तके नास्ति । 4. सदान B. 5. नहीति मूलपाठः ।

ब्रह्मसिद्धिकारिका

संहृताखिलभेदोऽतः सामान्यात्मा स वर्णितः ।
हेमेव पारिहार्यादिभेदसंहारसूचितम् ॥ ३ ॥

---

भावशुद्धिः

P. 37-16 प्राकट्यं ज्ञानकृतमनुभूयत इति, अत्राह—सर्वेति ॥ अर्थ[1] प्राकट्यस्य रूपादिवत् सर्वसाधारण्यात्, एकस्य विदितः, सर्वेषां विदितः स्यादित्यर्थः । किं च तत् प्राकट्यमर्थनिष्ठम्? आत्मनिष्ठं वा? नाद्य इत्याह—ध्वस्तेति ॥ अन्यथा वर्तमानधर्माधिकरणत्वेन ध्वस्तानागतयोर्वर्तमानत्वप्रसङ्गात् । न चात्मसमवेतमर्थस्य धर्मः प्राकट्यम्; अन्यसमवेतस्यान्यधर्मत्वेऽतिप्रसङ्गात्, संवेदनानतिरेकाच्चेत्यर्थः । यस्मादर्थस्यैव
P. 37-17 ज्ञानापेक्षा, न पुंस इत्युपसंहरति—तस्मादिति ॥ २ ॥

ब्रह्मसिद्धिकारिकाविवरणम्

[2]भेदप्रपञ्चविलयद्वारेणेत्येतद् वृद्धसम्मत्या सनिदर्शनमुपसंहरति—संहृतेति ॥ यतो विशेषनिषेधेन निरूपणम्, अतः संहृतोऽखिलो भेदो विशेषो यस्मिंस्तथा । पारिहार्यम्=कटकम्, सः=प्रजापतिरित्यर्थः ॥ ३ ॥

ब्रह्मणः सामान्यरूपत्वे निर्विशेषत्वं न स्यात्, सामान्यस्य सवि-
P. 37-21 शेषत्वादित्याशङ्क्य व्याचष्टे—यतश्चेति ॥ ब्रह्मविदां वाक्यमुदाहरति

अभिप्रायप्रकाशिका

सर्वेति ॥ अविद्यमानेषु च विषयेषु न ज्ञाततासम्भवः, आश्रयाभावादित्याह—ध्वस्तेति ॥ अभिव्यक्तिपुष्कलकारणे सत्यपि कुतश्चित् प्रतिबन्धात् तथाव्यवहाराभावादनभिव्यक्तेर्दुर्निरूपतामिवशब्देन सूचयति—तिरोहितमिवेति ॥

अभियुक्तोक्तिनिदर्शनोपदर्शनपुरस्सरमुक्तमर्थमुपसंहाति यतश्चेति ॥

---

1. निष्ठप्राक B. 2. द्वितीयश्लोकोत्तरार्धगतस्य "भेदप्रपञ्चविलयद्वारेण" इत्यस्य विवरणार्था तृतीया कारिका ।

भावशुद्धिः

—स इति ॥ "योऽयं विज्ञानमयः इति वाक्योपक्रमे प्रकृतः" स एषः= P. 37-22
अपरोक्षः। महान्=अपरिच्छिन्नो देशतः, अजः=कालतः। आत्मा=वस्तुतोऽपरिच्छिन्नः। सत्ता=सद्भावो लक्षणं स्वरूपं यस्य, तथा। वाक्यान्तरमुदाहरति=सत्तैवेति। "योनिष्ट इन्द्र निषदे अकारि" इति योनि- P. 37-23
शब्दः स्थानवचनोऽपि दृष्टः, अत उक्तम्—प्रकृतिरिति ॥ अवान्तरप्रकृतिव्यवच्छेदाय—परेति ॥ उत्तरार्धं व्याचष्टे—यथेति ॥

सुवर्णतत्त्वं न रुचकम्, न स्वस्तिकम्, न कटकम्, नाप्यङ्गुलीयकम् इत्येवं सर्वविकारनिराकरणद्वारेण गम्यमानत्वात्तत्सामान्यमित्युपचर्यते; न तु सामान्यमेव; प्रकृतिव्यतिरिक्तविकाराभावात्। एवमशेषविशेषनिषेधेन गम्यमानत्वात् सामान्यमुक्तमित्यर्थः ॥

शङ्कोत्तरत्वेनापि श्लोकमवतारयति—ये [1]त्विति ॥ ब्रह्म न P. 37-24
सामान्यम्, निर्विशेषत्वात्, अन्त्यविशेषवत्, इति साध्यम्, ब्रह्म, असत्, निर्विशेषत्वात्, शशशृङ्गवदिति वेति विकल्प्य आद्यं प्रत्याह—यदीति ॥ P. 38- 2
कथं तर्हि सामान्यात्मा वर्णित इति? अत्राह—सामान्यं त्विति ॥ P. 38- 3
द्वितीयमुत्थापयति—अथेति ॥ दूषयति—विशेषैरिति ॥ ३ ॥ P. 38- 4

॥ इति श्रीमदभयानन्दपूज्यपादशिष्येणानन्दपूर्णमुनीन्द्रेण विरचिते ब्रह्मसिद्धिव्याख्यानरत्ने
(भावशुद्ध्यपरनामनि)
ब्रह्मकाण्डः समाप्तः ॥

अभिप्रायप्रकाशिका

विप्रतिपत्तिविशेषनिरासमुखेन वा श्लोकोऽयमुपसंहारपर इत्याह—ये चेति ॥
तत्र युक्तिमप्याह—विशेषाणामि(मपी)ति ॥ समानानां भावः सामान्यम्, तेषामभावे कथं स्यादित्यर्थः। कथं तर्हि सामान्यात्मेत्युक्तमिति? तत्राह—सामान्यं त्विति ॥ निर्विशेषत्वाद् निरुपाख्यत्वसाधनमपि सव्यभिचारमिति दूषयति—अथेति ॥

इति परमहंसपरिव्राजकाचार्य-ज्ञानोत्तमपूज्यपादशिष्य-चित्सुखमुनिकृतावभिप्रायप्रकाशिकायां ब्रह्मसिद्धिव्याख्यायां
॥ ब्रह्मकाण्डः समाप्तः ॥

---

1. चेति मूलपाठः।



ब्रह्मसिद्धिकारिका

आहुर्विधातृ प्रत्यक्षं न निषेद्धृ विपश्चितः।
नैकत्व आगमस्तेन प्रत्यक्षेण विरुध्यते ॥ ४ ॥

---

भावशुद्धिः

ब्रह्मकाण्डेन ब्रह्मणि प्रदर्शितोपनिषत्समन्व(य)माक्षिपति—नन्विति ॥ एत(क)स्मिन्नद्वये = आत्मा(ना)त्मभेदरहिते । "ग्रावाणः P. 39-1
प्लवन्ते" "अन्धो मणिमविन्दत्" इतिवदित्यर्थः । प्रथमकाण्डप्रदर्शित-समन्वयविषयविरोधाशङ्कापरिहारायोत्तरकाण्डारम्भ इति सम्बन्धम-भिसन्धाय काण्डमवतारयति—उच्यत इति ॥ P. 39-2

ब्रह्मसिद्धिकारिकाविवरणम्

विधातृ=अनवगतगन्तृ, न निषेद्धृ=नायमिति व्यवच्छेदकम्। न कथयन्तीत्यर्थः ॥ ४ ॥

भावशुद्धिः

विरोधपरिहारफलकाण्डारम्भमाक्षिपति—नन्विति ॥ पौरुषेय- P. 39-5
वचनस्योत्पत्तौ, अर्थप्रमितौ च प्रमाणान्तरापेक्षस्य तद्विरोधे युक्तम-प्रामाण्यमित्यर्थः । वाक्यप्रमाणत्वादागमवाक्यमप्येवं किं न भवेत्?
अत्राह—स्वतन्त्रस्येति ॥ स्वातन्त्र्यम्=अपौरुषेयत्वम् । अत एवान- P. 39-6
पेक्षिता प्रमाणान्तरस्य प्रवृत्तिः, येन तस्य द्वैताद्वैतगोचरयोर्द्वयोः

अभिप्रायप्रकाशिका

एवमेकरसे ब्रह्मणि वेदान्तानां प्रामाण्यं प्रतिज्ञाय, तस्य प्रत्यक्षादि-विरोधं द्वितीयकाण्डेन परिजिहीर्षुः प्रथमं तावदाद्यश्लोकव्यावर्त्यशङ्कामाह—नन्विति ॥ आम्नायविरोधात् प्रत्यक्षादेरेवाप्रामाण्यं किं न स्यात्? इति शङ्कायां दृष्टविरोधान्नैवमित्याह—ग्रावेति ॥

इदानीं काण्डारम्भमाक्षिपति—नन्विति ॥ विरुद्धार्थयोर्द्वयोरपि कथं

भावशुद्धिः

प्रामाण्यायोगादाम्नायस्याप्रामाण्यमिति, अत्राह—आम्नायेति ॥ प्रत्यक्षादेः
P. 39-7 स्वतः प्रमाणस्य प्रामाण्यं नागमविरोधाभावापेक्षम्, अत्राह—तुल्य इति ॥
आक्षेपं निगमयति—तत्रेति ॥ अनपेक्षत्वे सतीत्यर्थः ॥

P. 39-10 एकदेशिनां समाधानं दर्शयति—तत्र केचिदिति ॥ सापेक्षनिर-
P. 39-11 पेक्षयोः सापेक्षं दुर्बलमिति सापेक्षत्वं साधयति—तथा हीति ॥ शब्दार्थ-
मुपलभ्य तत्संगतेरनुमेयत्वादित्यर्थः ॥ तदपेक्षत्वे वा किमिति?
P. 39-12 अत्राह—तथा चेति ॥ हेतुमाह—तदिति ॥ आगमस्य प्रामाण्ये,
अप्रामाण्ये च प्रत्यक्षादिप्रामाण्यं दुष्परिहरमित्यर्थः । प्रत्यक्षादेरपि
P. 39-13 सापेक्षत्वं तुल्यमिति, नेत्याह—न त्वेवमिति ॥ हेत्वन्तरमाह—दृष्टेति ॥
यादृशमेव वाक्यमाप्तोक्तमर्थनिश्चायकं तादृशमेवानाप्तोक्तं तदर्थ-
(निश्चायकम् ।) न च वाक्योत्थापनातिरिक्तोऽस्ति कश्चिदुपयोगः पुंसः,
येन तद्रूपाभेदेऽपि कार्यभेदो भवेदित्यर्थः ॥

न केवलं प्रत्यक्षदृष्टस्य बाहुल्येनाव्यभिचारित्वं तत्प्राबल्य-

अभिप्रायप्रकाशिका

प्रामाण्यमिति? अत आह—आम्नायेति ॥ प्रत्यक्षादिविरुद्धम्, अप्रमाणम्; तद्वि-
रुद्धार्थत्वात्, ग्रावप्लवनादिवाक्यवदित्याशङ्क्य, मैवम्, ग्रावादिवाक्यस्य पौरुषे-
यतया प्रत्यक्षादिसापेक्षत्वात्, इह पुनः तदभावादित्याह—तुल्य इति ॥

विरोधाभासोपन्यसमुखेन काण्डारम्भं समर्थयते—तत्र केचिदिति ॥
स्वरूपसिद्ध्यर्थमिति ॥ अर्थनिश्चायकाम्नाय-स्वरूपस्य प्रथमं श्रोतृप्रत्यक्षावगतस्य
सम्बन्धग्रहेऽनुमानार्थापत्त्योरुपयोगादस्ति प्रत्यक्षाद्यपेक्षेत्यर्थः । तथापि
तत्प्रामाण्यस्य किमायातमिति ? अत आह—तथा चेति । दृष्टव्यभिचारा-
दिति ॥ अयमर्थः—"नद्यास्तीरे पञ्च फलानि सन्ति" इत्यनाप्तप्रयोगेऽर्था-
दर्शनाद् दृष्टोऽर्थव्यभिचारः । उपनिषद इति ॥ वेदान्तानां रहस्यतया
प्रणवादिवज्जप्यत्वादित्यर्थः। परम्पराहतिलक्षणं व्याकुलत्वमेव दर्शयति—कर्मेति ॥

प्राबल्ये प्राथम्यलक्षणं हेत्वन्तरमाह—मुख्यत्वाच्चेति ॥ अध्ययन-
विधिपरिगृहीतस्य कथं सर्वात्मना बाध इति ? तत्राह—तदनुसारेण वेति ॥
न केवलं प्राथम्यादेव मुख्यत्वम्, अर्थप्रमितावाम्नायेनोपजीव्यत्वादपीत्याह—

भावशुद्धिः

कारणम्; अनवकाशत्वमपीत्याह—अपि चेति ॥ सामान्य-विशेषशास्त्र- P. 39-14
मत्रोदाहरणम्। प्रकृते तद्दर्शयति—अनवकाशाश्चेति ॥° तेषामर्थान्तरा- P. 39-15
सम्भवात् कोऽत्र मुख्यः? को वा तद्गुणः, येन गौणार्थत्वम्?
अत्राह—तथा हीति ॥ एकं तत्त्वमेकशब्दस्य मुख्योऽर्थः, तद्गुणमभि-
न्नदेशकालत्वं नित्यसर्वगतात्मसु स्वीकृत्य "एकमेवाद्वितीयम्" इत्यादि-
श्रुतय इत्यर्थः। प्रयोजनाभावादुपचारानुपपत्तिरिति, अत्राह—अवि- P. 39-16
वक्षितेति ॥ हेतुमाह—उपनिषद इति ॥ उपांशु वचनानि(नि)षण्या- P. 39-17
(ण्णा)न्युपनिषद इति वर्णितं द्वैतिभिरित्यर्थः ॥

यानि परस्परविरुद्धार्थानि वाक्यानि, न तानि प्रमाणम्; यथो-
न्मत्तवाक्यानि। परस्परविरुद्धार्थानि च वैदिकवाक्यानीत्याह—किं P. 39-18
चेति ॥ [1]अमानत्वमिति। यतो विरुद्धार्थत्वममानत्वकारणं प्रत्यक्षादी-
नामपि नेत्याह—अव्याकुलत्वादिति ॥ मिथो विरुद्धार्थत्वं साधयति—
कर्मविषयो हीति ॥ यस्मिन् मानान्तरविरोधे समन्वयस्यामानत्वशङ्के-
त्युपसंहरति—तस्मादिति ॥ इदं तर्ककाण्डमसञ्जातविरोधितया पूर्वो- P. 39-21
त्पन्नत्वाच्च प्रत्यक्षादीनां प्राबल्यमित्याशङ्काबीजान्तरमाह—मुख्यत्वाच्चेति।
तत्साधयति—मुख्या हीति ॥

प्रत्यक्षादिप्रवृत्त्युत्तरकालत्वादाम्नायस्य मुख्यत्वमित्याह—अपर- P. 39-22
काल इति ॥ प्रमासाधनत्वं प्रामाण्यं न पूर्वत्वम्? अपरत्वं वा? इति,
अत्राह—स तैरिति ॥ कल्पनीयार्थः=मिथ्यार्थः। अध्ययनविध्युपात्त-
वेदान्तानां बाध्यार्थत्वमयुक्तम्, अत्राह—तदनुसारेणेति ॥ न केवलं P. 39-23

अभिप्रायप्रकाशिका

अर्थतोऽपीति ॥

---

1. किंच व्याकुलत्वादाम्नायस्य, अव्याकुलत्वात् प्रत्यक्षादीनामिति मूलपाठः, परन्तु किंचामानत्वं व्याकुलत्वात्, अव्याकुलत्वात् प्रत्यक्षादीनां मानत्वमिति पाठ एव युक्त इति अमानत्वमिति प्रतीकेन ज्ञायते।

भावशुद्धिः

सर्वेषां सह भावित्वेन प्रत्यक्षादीनामागमात् पूर्वत्वम्, अनुपपत्तितोऽपी-
P. 39-24 त्याह—अर्थतोऽपीति ॥ हेतुमाह—पद-पदार्थेति ॥ किमतः ? अत्राह—
P. 39.25 स चेति ॥ आयतने लभ्यते ॥ एकदेशिसमाधानं निगमयति—अत
इति ॥ आम्नायस्योत्पत्तौ प्रत्यक्षाद्यपेक्षायामपि स्वकार्ये प्रमायां तदनपेक्ष-
त्वान्न दौर्बल्यमिति शङ्कामूरीकृत्यापि तर्ककाण्डारम्भमेकदेश्यन्तराभि-
P. 40. 1 मतमाह—अन्य इति ॥ अनारम्भवादिनो मतमाह—अन्यदिति ॥
प्रत्यक्षाद्यपेक्षया आम्नायस्य हीनतुल्यबलत्वयोर(त्वा)भावात् । प्रत्यक्षा-
P. 40. 3 दिरेव बाध्यत इत्यर्थः । कथं बलवत्त्वम् ? अत्राह—पौर्वापर्य इति ॥

"यदि प्रतिहर्ता विच्छिद्येत सर्ववेदसं दक्षिणं दद्यात् । यद्युद्गाता विच्छिद्येत न दक्षिणां दद्यात्" इति ॥ तत्र=युगपदुभयविच्छेदे सर्वस्वदाक्षिण्यादाक्षिण्ययोर्विरुद्धयोः समुच्चयायोगाद्विकल्पः, यत्र तस्यानुपूर्व्येण विच्छेदः ? तत्र किं पूर्वं निमित्तमात्मीयं नैमित्तिकं प्रयोजयति ? आहोस्विदुत्तरम् ? इति सन्देहे प्राप्ते, प्रथमविच्छेदनिमित्तं नैमित्तिकं कार्यम्; तत्प्रयोजकाधिकारशास्त्रस्यानुपजातविरोधित्वात्, पूर्वेणैवोपजात[1]विरोधिना, अधिकारि(रे)णाबाधितविषयमुत्तरमात्मानुअ(न)मेव तावद् नासादयितुमर्हति, प्रागेव पूर्वं निरो(रु ?)द्धुम् । तस्मात् प्रथममेव

अभिप्रायप्रकाशिका

अभ्युपेत्यैतदुच्यते । विचार्यमाणे पुनराम्नाय एव बलवानिति सिद्धान्ती स्वहृदयमाह—अन्यदिति ॥ तत्र सूत्र-वार्तिकोक्तां युक्तिमाह—पौर्वापर्य इति ॥ अत्रोदाहरणम्—ऋत्विग्विच्छेदः । यदि बहिष्पवमानं प्रसर्पतां प्रस्तोता विच्छिद्येत, यज्ञस्य शिरश्छिद्येत, ब्रह्मणो वरं दत्त्वा स एव पुनर्वर्तयितव्यः, यदि प्रतिहर्ता पशुभिर्यजमानो विच्छिद्येत सर्ववेदसं दद्यात्, यद्युद्गाता यज्ञेन यजमानो विच्छिद्येताऽदक्षिणः स यज्ञः संस्थाप्यः। अथान्य आवृत्यस्तत्र तं दद्यात् पूर्वस्मिन् दास्यन् स्यात् यद्युगपदपच्छेद उद्गातुः प्रायश्चित्तम्, प्रतिहर्तुः सर्वप्रायश्चित्तम्, पूर्वापरापच्छेदयोर्जघन्योऽपच्छिद्येत तस्य प्रायश्चित्तमिति । तत्रेदं निरूप्यते—प्रतिहर्तुरुद्गातुश्च क्रमेण विच्छेदे किं पूर्वं स्वकीयं प्रायश्चित्तं प्रयोजयति ?

1. तेन B.

भावशुद्धिः

निमित्तमप्रत्यूहमात्मनो नैमित्तिकं प्रयोजयतीति प्राप्ते, उच्यते—पौर्वापर्य-निमित्तयोः पूर्वस्य दौर्बल्यम्, उत्तरस्य बलवत्त्वम् , पूर्वानुपमर्देनोत्तरमात्मानमलभमानं तद् बाधेत, न तु पूर्वमेव तदुपमर्दनात्मकम् ; जातस्योपमर्दायोगात् , तेनोपजातविरोधिता बाधकत्वे हेतुः, अनुपजातविरोधिता बाध्यत्वे । प्रकृतिवत्=साङ्गसंयुक्तो विधिर्दर्श-पूर्णमासादिकः प्रकृतिः ; विकलाङ्गसंयुक्तसौर्यादिर्विकृतिः । 'प्रकृतिवद्विकृतिः कर्तव्या' इति प्राप्तं प्राकृतं कुशमयं बर्हिर्विकृत(तौ) 'शरमयं बर्हिरि'ति विहितैः शरैः कृतकार्यतालक्षणेन विरोधेन तदुपमर्दिभिर्बाध्यते, यथेत्यर्थः ॥

प्रत्यक्षादेः पूर्वत्वादागमस्योत्तरत्वात्तयोर्विरोध आगमस्यैव बलवत्त्वे हेतुमाह—पूर्वाबाधेनेति ॥ प्रत्यक्षादेः पूर्वत्वं साधयति— P. 40. 4
तथा हीति ॥ आगमस्योत्तरत्वे हेतुमाह—तदपेक्षस्त्विति ॥ [1]अनिसर्गज P. 40. 5
इति च्छेदः । तत्फलमाह—स पूर्वमिति ॥

अभिप्रायप्रकाशिका

आहोस्विदुत्तरम् ? इति । तत्र पूर्वस्यासंजातविरोधित्वादुत्तरस्य च संजातविरोधित्वात् पूर्वमेव प्रयोजयति, नोत्तरमिति प्राप्त उच्यते—"पौर्वापर्ये पूर्वदौर्बल्यं प्रकृतिवत्" इति ॥

अयमर्थः—पौर्वापर्ये सति निमित्तयोः, पूर्वस्य दौर्बल्यम्, उत्तरस्य च प्राबल्यम् । तत्र हि पूर्वस्य बलवत्त्वं भवति, यत्र पूर्वापेक्षयोत्तरं प्रवर्तते, अत्र पुनर्निरपेक्षमुत्तरं प्रवर्तमानं विरोधिनमनुपमृद्य नोदेतुमर्हति, तेनोत्तरमेव प्रबलं स्वात्मीयमेव प्रायश्चित्तं प्रयोजयति । न चैतावता पूर्वनैमित्तिकमनवकाशम् ; तस्य केवलापच्छेदे, युगपदपच्छेदे वा सम्भवात् ॥ प्रकृतिवदिति ॥ यथा प्राकृतं कुशमयं बर्हिः प्राप्तमपि विकृतौ तत्कार्ये "शरमयं बर्हिः" इति विहितैः शरैः कृतकार्यतालक्षणविरोधात् तदुत्तरात्मभिर्बाध्यते, तद्वदिति । दार्ष्टान्तिकेऽपि पौर्वापर्यं दर्शयति—तथा हीति ॥

सम्भवन्ति विचित्रा नानाविधा विषयेन्द्रियप्रमात्राश्रया विभ्रमहेतवो दोषा येषु प्रत्यक्षादिषु, ते तथोक्ताः, तेषाम् । तेऽत्रापि वक्तृदोषसम्भावना-

1. अनिसर्गत् A.

भावशुद्धिः

P. 40- 7 प्रत्यक्षादेर्दुर्बलत्वे हेत्वन्तरमाह—इतश्चेति ॥ दुर्बलत्वमिति शेषः । सम्भवन्ति[1] हि विचित्रा विषयेन्द्रियमनोवर्तिनो दृष्टादृष्टहेतवो व्यवहारविसंवादिविभ्रमनिमित्ता दोषाः प्रत्यक्षादि[2][ष्वित्यर्थः ।
P. 40- 8 आम्नायस्याप्येतत् सममिति, नेत्याह—गलितेति ॥ हेतुमाह—पुरुषेति ॥ अपौरुषेये तु शब्दे स्वभावेन(ना) दुष्टे कुतः पुरुषाश्रयाणां सम्भव इत्यर्थः ।
P. 40- 9 कथं प्र]त्यक्षादेः सम्भवद्विचित्रविभ्रमहेतुत्वम् ? तत्राह—शक्यो हीति ॥ "इन्द्रो मायाभिः पुरुरूप ईयते" इत्यादेरागमादित्यर्थः । अनुग्राहक-
P. 40-10 तर्करहितो नागमो निश्चायकः, अत्राह—निश्चेतृत्वे(तुं चे)ति ॥ विगीतो द्वैतावभासः, मिथ्या, अनात्मावभासत्वात् ; देहादे[3]रात्मावभासवदि-
P. 40-11 त्यर्थः । वेदेऽपि दोषासम्भवोऽसिद्धः, अत्राह—न त्वेवमिति ॥ (अपौरुषेय इति) अपौरुषेयस्य पुरुषाश्रयदोषासम्भवेऽपि स्वाभाविकदोष-
P. 40-12 शङ्के (षो न)कुत इति ? अत्राह—सत्यां वेति ॥

सम्भावितदोषत्वे प्रत्यक्षादेरप्यमानत्वम् , अत्राह—प्रत्यक्षादीनां त्विति ॥ प्राग्बाधकज्ञानाद् यथार्थविज्ञानवद् व्यवहारहेतुत्वं व्यवहारिक-प्रामाण्यं स्यादित्यत्र हेतुमाह—अविद्येति ॥ सति प्रमातरि यत्र व्यव-

अभिप्रायप्रकाशिका

यामाह—पुरुषेति ॥ असति बाधके, सति च संवादे कथं प्रत्यक्षादिषु दोषसम्भावनेति ? अत आह—शक्यो हीति ॥ व्यवहाराविसंवादित्वेऽपि देहात्मप्रत्ययस्येव बलवदाम्नायबाधाद्दोषवत्त्वमवसीयत इत्यर्थः ॥ सम्भावयितुमिति॥ गुडजिह्विकां निश्चेतुमिति परमार्थः । अनेकेषां दोषकल्पनादेकस्यैव दोषकल्पनं लघीय इति, अत आह—न त्वेवमिति ॥

अपौरुषेये पुरुषाश्रयदोषाणामसम्भवेऽपि स्वगत एव दोषो बहूनां प्रमाणानामनुग्रहाय किमिति न कल्प्यत इति ? अत आह—प्रत्यक्षादीनामिति ॥ व्यवहारविपर्ययाभावे हेतुः—अविद्यासंस्कारस्य स्थेम्नेति ॥ तत्त्वदर्शनसंस्कारोदयपर्यन्तं स्थायित्वादित्यर्थः । सत्यपि दोषे प्रत्यक्षादेः प्रमाणत्वे, रजतादिविभ्रमाणामपि प्रमाणत्वं प्रसज्येतेति ? अत आह—

1. ति A. 2. ( ) कुण्डलान्तर्गतं B. पुस्तके नास्ति । 3. हात्म B.

भावशुद्धिः

हारविसंवादः, तत्र का गतिरिति ? अत्राह—यत्रेति ॥ शब्दस्यापि P. 40-13
सम्भावितदोषस्य व्यावहारिकप्रामाण्यं समम्, अत्राह—शब्दे त्विति ॥
हेतुमाह—अदृष्टार्थत्वादिति ॥ शब्दगम्ययागादिफलस्यान्वय-व्यति-
रेकानवसितत्वादित्यर्थः । हेत्वन्तरमाह—दोषेभ्यस्त्विति ॥ दुष्ट- P. 40-14
कारणतो व्यवहारविसंवादिज्ञानदर्शनात् शब्दाद् व्यवहारविसम्वादि-
ज्ञानं भवति, तदविसंवादि वेति संशये, व्यावहारासिद्धेर्न व्यावहारिकमपि
प्रमात्वं स्यादित्यर्थः । प्रत्यक्षादीनामपि समानमेतत्, अत्राह—
प्रत्यक्षेति ॥ सति प्रमातरि बाधाभावादुत्तरकालं तत्कालस्य तत्कल्पक- P. 40-15
त्वात् स्यादेव व्यावहारिकं प्रामाण्यमित्यर्थः । दोषकल्पनाभावे हेतु-
माह—व्यवहारेति ॥ आगमादध्यक्षादिषु को दोषः कल्प्यत इति ? P. 40-16
अत्राह—तत्त्वदर्शनस्येति ॥ अद्वैतागमस्य भाविकद्वैतविरोधात् तेषु P. 40-17
तत्त्वावेदनप्रामाण्यविरोध्येव दोषः कल्प्यत इत्यर्थः । फलितमाह—
तत इति ॥ तत्त्वप्रतिहतिमात्रहेतुरेव कल्प्यते यत इत्यर्थः ॥ P. 40-18

अद्वैतागमेऽपि, व्यावहारिकप्रामाण्यम्, प्रमाणत्वात्;
अध्यक्षादिवत्, अत्राह—शब्दस्त्विति ॥ दुर्लभं प्रामाण्यं यस्य, सः, P. 40-19

अभिप्रायप्रकाशिका

यत्रेति ॥ तर्हि सदोषत्वेऽप्याम्नायस्य प्रत्यक्षादिवत्प्रामाण्यं किं न स्यादिति ? अत आह—शब्दे त्विति ॥ अदृष्टार्थत्वादिति ॥ आगमविषयाद्वैतस्य व्यवहारायोग्यत्वाद् व्यावहारिकप्रामाण्यमपि न सिध्येदित्यर्थः । इतोऽपि व्यावहारिकप्रामाण्यं शब्दस्य सदोषत्वे न निश्चेतुं शक्यमित्याह—दोषेभ्य इति ॥

प्रत्यक्षादिष्वपि कल्प्यमानो दोषः, व्यावहारिकप्रामाण्यविरोधी, दोषत्वात्, रजतादिभ्रमदोषवदिति, अत आह—प्रत्यक्षादीनां त्विति ॥ रजतादिविभ्रमेषु कथमिति ? तत्राह—व्यवहारेति ॥ प्रत्यक्षादिषु तर्हि कीदृशो दोष इति ? अत्राह—तत्त्वदर्शनस्येति ॥ ततस्तत्त्वावेदनलक्षणप्रामाण्याभावेऽपि व्यवहाराङ्गतालक्षणं व्यावहारिकं प्रामाण्यं प्रत्यक्षादेः सिध्यतीत्याह—तत इति ॥

शब्दस्य तु सदोषत्वे नोभय(सिद्ध) प्रामाण्यमिति यदुक्तम्, तत्प्रपञ्चयति—शब्दस्त्विति ॥ व्यावहारिकप्रामाण्याभावे हेतुमाह—दृश्यते

भावशुद्धिः

P. 40-20 तथा । हेतुमाह—(क) दृश्यते हीति ॥ दोषेभ्यस्तिमिरादिभ्यः रूप्यादौ
P. 40-21 तादृशज्ञानोत्पादेऽपि प्रकृते किमायातम्? तदाह—तत्रेति ॥ तत्त्व-
प्रतिघातस्य च शङ्कितत्वादित्यनुषङ्गः । यस्मादागमो निरवकाशः,
P. 40-23 सावकाशोऽध्यक्षादिरित्युपसंहरति—तस्मादिति ॥ एवं वेदशब्दस्य
P. 40-24 प्राबल्यमुक्त्वा, दौर्बल्ये हेतुमुक्तमनुवदति—यत्त्विति ॥ आगमस्य
P. 40-25 स्वकार्ये तदपेक्षा, स्वसिद्धौ वा? नाद्य इत्याह—अत्रोच्यत इति ॥
द्वितीयेऽङ्गीकृतिरित्याह—किन्त्विति ॥ वाक्यप्रमाणत्वादाप्तवाक्यवत्
P. 40-26 स्वकार्येऽपि सापेक्षत्वम्, अत्राह—अन्यथेति ॥ आगमार्थे मानान्तरा-
सम्भवादित्यर्थः । स्वतः प्रामाण्ये फलमाह—तथा चेति ॥ मानत्वेनेति
शेषः । कथमहीनत्वमध्यक्षादीनाम्? स्वसिद्धौ मानान्तरानपेक्षत्वात्,
P. 40-27 आगमस्य तदपेक्षत्वात्, अत्राह—प्रत्यक्षादयोऽपीति ॥ सविकल्पकस्य
निर्विकल्पकापेक्षत्वात्, अनुमानादीनामध्यक्षाद्यपेक्षत्वादित्यर्थः ॥

P. 41- 1 चोद्यान्तरमनुवदति—यत्त्विति ॥ प्रामाण्यमात्रमाद्य(त्रं साध्य)ते?
व्यावहारिकं वा? तत्त्वावेदनं वा? आद्यमनुजानाति—को वेति ॥
P. 41- 2 द्वितीयेऽप्यनुमितिमाह—व्यवहारेति ॥ तृतीयं प्रत्याचष्टे—नेति ॥

अभिप्रायप्रकाशिका

हीति ॥ तत्त्वावेदनाप्रामाण्ये हेतुमाह—तत्त्वप्रतिघातस्य चेति ॥ शङ्कितत्वादित्यन्वयः । परमप्रकृतमुपसंहरति—तस्मादिति ॥ प्रमितावेव किं न स्यादिति? अत आह—अन्यथेति ॥ तेन प्रमितावनन्यापेक्षत्वाद् नेतरप्रमाणेभ्यो दौर्बल्यं शब्दस्येत्याह—तथा चेति ॥ प्रत्यक्षादयस्तु स्वरूप-सिद्धावपि नापेक्षन्ते, शब्दस्तु न तथेति चेत्, मैवम्; अनुमानादेः प्रत्यक्षा-पेक्षत्वात्, प्रत्यक्षस्य च सविकल्पकस्य निर्विकल्पापेक्षत्वादित्याह—प्रत्य-क्षादयोऽपीति ॥ किं तर्हि दौर्बल्ये प्रयोजकमिति? तत्राह—कार्ये हीति ॥

न च प्रामाण्याभ्युपगमे विरोधः; भिन्नविषयत्वादित्याह—व्यवहा-रेति ॥ शब्दस्य प्रत्यक्षादिषु व्यावहारिकप्रामाण्यबाधकत्वे स्वरूपासिद्धि-

(क) सविशेषवाक्यानां निर्विशेषवाक्येन विरोधाद् सम्भावितदोषत्वम्, निर्विशेष-वाक्यबाधकमपरं नास्तीति न तद् सम्भावितदोषम् अतस्तस्यैव तत्त्वावेदकत्वम् ।

भावशुद्धिः

आगमजन्याद्वैतज्ञानविरोधात् कथं व्यावहारिकमपि तदिति, अत्राह— व्यावहारिकेति ॥ आगमस्य स्वोपजीव्याध्यक्षादिबाधकत्वमयुक्तम्; अन्यत्रानुपलम्भात्, अत्राह—दृष्टं चेति ॥ पौरस्त्यहस्तिभ्रमाद् वृक्ष- P. 41- 3
वनस्पतिप्रतिपत्तिःपराचीना तद्बाधिका यथा, तथाऽत्रापीत्यर्थः ॥

हस्तिप्रतिपत्तेर्वनस्पतिप्रतिपत्तिकारणत्वं परिशेषतः साधयितु-
माह—अपेक्षिता हीति ॥ इन्द्रियार्थसन्निकर्ष एव कारणम् । वनस्पति- P. 41- 6
समीपगमनं तर्हि तत्कारणमिति, अत्राह—न चेति ॥ हेतुमाह— P. 41- 8
तद्देशेति ॥ यस्मात् कारणात्, तदेतद् निरपेक्षं न सम्भवतीति
निगमयति—तस्मादिति ॥ प्राच्ये हीति प्राच्यो विपर्यासः प्रागारोपित- P. 41- 9
हस्ति(स्ती) तत्रानुगता हस्तीतिमतिः, तस्याः सन्तति=प्रवाहः, तस्य संस्कारः, तेन सहित इन्द्रियार्थमनस्संयोगः, तेनोत्पादिता वनस्पतिप्रतिपत्तिरिति व्याख्येयम् ॥ हस्तिप्रतिपत्तीनां संस्कारद्वारा कथमत्र हस्ती सम्भवेदित्यालोचनहेतुत्वेन वनस्पतिप्रतिपत्तिहेतुत्वं मन्तव्यम् ॥

हस्तिबुद्धीनां न व्यावहारिकमपि प्रामाण्यमिति युक्तम्; बुद्ध्य-
न्तरेण बाध्यत्वात्, इत्याशङ्क्योदाहरणान्तरमाह—एवमिति ॥ एका- P. 41-10
दिबुद्धिर्विंशत्यादिबुद्धिकारणमपि विंशत्यादिबुद्ध्या बाध्यते, एवमत्रापीत्यर्थः । कल्पितहस्त्यादेस्तत्त्वप्रतिपत्त्युपायत्वे सति चोद्यान्तरमप-

अभिप्रायप्रकाशिका

प्रसङ्गान्न तद्विषये विरोधित्वमित्याह—व्यावहारिकेति ॥ कार्यप्रतिपत्त्या कारणप्रतिपत्तेः क्व विरोधो दृष्ट इति ? तत्राह—दृष्टं चेति ॥ कथं हस्तिप्रतिपत्तेर्वनस्पतिप्रतिपत्तिं प्रति हेतुत्वमिति ? अत आह—अपेक्षिता हीति ॥ तदेव परिशेषन्यायेनोपदिशति—न तस्या इति । तद्देशस्थस्यैवोत्पत्तेरिति ॥ देशविशेषोऽपि न कारणं वनस्पतिप्रतिपत्तेः, यद्देशस्थस्यैव हस्तिप्रतिपत्तिरासीत्तद्देशस्थस्यैव वनस्पतिप्रतिपत्तेः कदाचिदुत्पत्तिदर्शनादित्यर्थः । तथापि कथं हस्तिप्रतिपत्तेस्तद्धेतुत्वमिति ? अत्राह—तस्मादिति ॥

एवमिति ॥ विंशत्यादिबुद्ध्याऽर्वाचीनसङ्ख्याबुद्धीनां निवर्तमानानामपि तद्धेतुत्वं दृश्यत इत्यर्थः । कार्यप्रतिपत्त्या कारणप्रतिपत्तिरिति निरास-

भावशुद्धिः

P. 41-11 हस्तितं स्यादित्याह—एवं चेति ॥ व्याहतिमुपपादयति—नाभेद इति ॥
P. 41-13 हेतुमाह—भेदेति ॥ शास्त्राचार्यादिभेद उपायो यस्याः, सा, तथा,
किमतः? अत्राह—तत्रेति ॥ समाक्षिप्तः=अर्थावगमितो भेदो येन, सः
P. 41-14 तथा। उक्तं हेतुमाह—यत इति ॥ पारमार्थिकत्वानाक्षेपकारणमाह—
P. 41-15 मिथ्येति ॥ नियतप्राक्सत्त्वं कारणत्वं मिथ्यात्वेन व्याहन्यत इति,
अत्राह—व्यावहारिकं चेति ॥ इतिरत्र परिहारसमाप्तौ ॥

P. 41-16 यच्चात्राचि दृष्टव्यभिचारत्वाच्चेति, तत्राह—व्यभिचारेति ॥
अक्षजरूप्यादिप्रतीतेर्दृष्टव्यभिचारत्वादित्यर्थः। अदुष्टेन्द्रियजं ज्ञानमर्थं न
P. 41-17 व्यभिचरतीति, अत्राह—इतरयोरिति ॥ यच्च अनवकाशाश्च प्रत्यक्षा-
दयः—इत्युक्तम्, तत्राह—तथेति ॥ तुल्यमित्यनुषङ्गः। सर्वप्रकारभेद-
रहितात्मतत्त्वमागमात्, किं वा प्रथमत एवोपचारितैक्यम्, उत हुंफ-
डादिवाक्यवद् न किंचित् प्रतीयत इति विकल्प्य आद्यं प्रत्याह—
P. 41-18 यदीति ॥ द्वितीयमुत्थापयति—अथेति ॥ अनुभवविरोधादयमयुक्त इति
P. 41-19 मत्वा अन्यमनुवदति—अविवक्षितेति ॥ दूषयति—तत्रेति ॥ निरुप-

अभिप्रायप्रकाशिका

प्रदर्शनेन पर्यनुयोगान्तरमपि निरस्तमित्याह—एवं चेति ॥ एवं च यदेके वर्णयन्ति, तदपास्तमित्युत्तरेणान्वयः। तामेव व्याहतिं दर्शयति—नाभेद इति ॥ तदेव साधयति—भेदोपाया हीति ॥ कथमपास्तमिति ? अत आह—यत इति ॥ असत्यात् कार्योत्पत्त्यभ्युपगमेऽपि न दोष इत्याह—व्यावहारिकं चेति ॥

यदुक्तं पूर्वपक्षे दृष्टव्यभिचारित्वादिति, तत्राह—व्यभिचारेति ॥ शब्दस्य पुरुषसम्बन्धस्य तद्गततदोषैर्दुष्टता गाङ्गस्येवाम्भसो भाण्डदोषात् साभवतीत्यर्थः ॥ दुष्टमेव प्रत्यक्षं व्यभिचरति, नादुष्टमिति, अत्राह—इतरयोरिति ॥ अनवकाशत्वमपि समानमित्याह—तथेति ॥ मुख्यार्थाभ्युपगमेन सावकाशत्वम्? किं वौपचारिकार्थाभ्युपगमेन? यद्वाऽन्यतः, तत्राह—यदीति ॥ यदि द्वितीयः, तत्राह—अथेति ॥ अभ्युपेत्यैतदुक्तमित्याह—कथं चेति ॥ उपक्रमोपसंहारादिषड्विधतात्पर्यलिङ्गैर्वेदान्तानामद्वैतपरत्वावगमान्नोपचरितार्थत्वमित्यर्थः ॥ न

भावशुद्धिः

चरिताद्वैतप्रतीतौ विरोधाभावाद् बलाबलचिन्तैव न युक्तेत्यर्थः । मुख्यार्थबुद्ध्या तद्गुणयोग्यर्थान्तरं बोद्धव्यम् ॥

मुख्यस्यैवासिद्धौ द्वितीयकल्प एव न सिध्येदित्याह—कथं चेति ॥ द्वितीयपक्षे दोषान्तरमाह—कथं चौत्पत्तिक इति ॥ कथमविवक्षितार्थता चेति सम्बन्धः । आक्षेपबीजमाह—अर्थं प्रतीति ॥ शब्दस्य शेषभावे तद्बीजननसामर्थ्यादौत्पत्तिके सति न प्रमाणान्तरापेक्षः शब्दस्यार्थेन सम्बन्धः, किन्त्वौत्पत्तिक इति । "औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धः" इति सूत्रितम् । भाष्यमुदाहरति—दृष्टः=अन्वयव्यतिरेकसिद्धः । अर्थः-फलम्, तस्य=आम्नायस्य, कर्मावबोधनम्=कर्मज्ञानम्, हि=यस्मात्तस्मान्नाविवक्षितार्थत्वेनादृष्टार्थ इति लोकवेदयोरविशिष्ट एव वाक्यार्थ इति च सूत्रितं यत इत्यर्थः ॥ P. 41-18 P. 41-19

मानान्तरविरोधादुपचरितार्थत्वम्, अविवक्षितार्थत्वं वा कल्प्यमित्याशङ्कते—प्रमाणान्तरेति ॥ प्रमाणानामनधिगतार्थगन्तृणामन्योन्यमनपेक्षाणां स्वगोचरशूरत्वादयुक्तमेतदित्याह—वार्तमिति ॥ वार्तात आगतम्, अप्रामाणिकम् । व्यतिरेकद्वारे(ण) तदुपपादयति—तदपेक्षत्वे हीति ॥ तत्रानपेक्षस्यापि तदनुसारिवृत्तित्वं स्यादिति, नेत्याह—निरपेक्षस्येति ॥ प्रमाणस्यैवाप्तवचसः प्रमाणान्तरानुसारिणी वृत्तिर्दृष्टेति, अत्राह—लौकिकास्त्विति ॥ P. 41-12 P. 41-22 P. 43- 1

वैदिकवचसोऽपौरुषेयस्य कार्ये प्रमितावनपेक्षस्यापि शब्दत्वा-

अभिप्रायप्रकाशिका

चाप्यविवक्षितार्थतया जपोपयोगितेत्याह—कथं चैत्पत्तिक इति ॥ शेषभावं भाष्य-वाक्याभ्यां दर्शयति—दृष्टो हीति ॥ एवं भाष्यवाक्यद्वयेन शेषभावे सति कथमविवक्षितार्थतेत्यन्वयः ॥

मा भूत् तदपेक्षतया प्रामाण्यम्, तदानुगुण्येन वृत्तिः कस्मान्न भवेदिति ? अत आह—तदपेक्षत्वे हीति ॥ लौकिकानां विशेषमाह—लौकिकास्त्विति ॥ विरुद्धार्थयोर्द्वयोः प्रामाण्यायोगात् प्रत्यक्षादिविरोधे शब्दस्य दौर्बल्यमिति,

भावशुद्धिः

P. 43- 2 दितरशब्दवद् मानान्तरानुसारमिति, अत्राह—तुल्ये त्विति ॥ माना-
न्तरमेव निर्विषयमविशेषात् किं न स्यादित्यर्थः। तुल्यबलत्वे न
बाध्य-बाधकता, अत्राह—उभयोर्वेति ॥ प्रतिहेतुद्वयवदित्यर्थः। द्वैताद्वैतगो-
P. 43- 3 चरयोर्द्वयोरमात्वमयुक्तम्; शून्यवादप्रसक्तेः, अत्राह—पौर्वापर्य इति ॥
P. 43- 4 पूर्वविरोधादुत्तरदौर्बल्यं किं न स्यात्? अत्राह—न खल्विति ॥

मानान्तरविरोधेऽपि वेदस्य[1] मुख्यार्थत्वे 'यजमानः प्रस्तरः' इत्यादौ कथं गौणार्थस्वीकारः? इत्याह—कथमिति ॥ अतत्परवाक्यस्य श्रोत्रार्थपरिग्रहे मानान्तरविरोधो गुणवादे प्रयोजक इति परिहरति—
P. 43- 5 तत्रेति ॥ तत्परनिर्दोषवाक्यं मानान्तरविरोधेऽपि न मुख्यार्थाद् निवर्तत
इति, अत्राह—यत्रेति ॥ यथानुमानमबाधितविषयत्वापेक्षमर्थं बोधयति,
P. 43- 8 तथाऽऽगमोऽपीति, नेत्याह—न हीति ॥

अभिप्रायप्रकाशिका

अत आह—तुल्ये त्विति ॥ कस्तर्हि निर्णय इति? तत्राह—पौर्वापर्येति ॥ वाशब्दः पूर्वपक्षव्यावृत्त्यर्थः।

"यजमानः प्रस्तरः" इत्यादौ मानान्तराविरोधाय गुणवादाश्रयणं दृश्यत इति शङ्कते—कथं तर्हीति ॥ तदपि वाक्यार्थप्रमित्यन्यथानुपपत्त्या, न तु मानान्तरविरोधादित्याह—यत्रेति ॥ अयं भावः—यथा "मासमग्निहोत्रं जुहोति" इत्यत्र अग्निहोत्रशब्दः प्रसिद्धाग्निहोत्रे मुख्यवृत्तिरप्युपसदादिधर्मवत्तया विधीयमाने कुण्डपायिनामयनगते कर्मणि मुख्यया वृत्त्या वर्तितुमशक्यात्वात् वाक्यार्थप्रत्ययजननायासमर्थस्तन्निष्पत्तये तत्र गौणीं वृत्तिमवलम्बते; न तु मानान्तरविरोधात् तस्य तदयोग्यत्वात्, तथा "आदित्यो यूपः" "यजमानः प्रस्तरः" इत्यादिष्वपि "यूपे पशुं नियुञ्ज्यात्" "प्रस्तरे जुहूं सादयति" इत्यादिवाक्यार्थप्रमितिनिष्पत्तये गुणवादः, न मानान्तरविरोधादिति द्रष्टव्यमिति। द्वितीया वृत्तिर्गौणी, लाक्षणिकी वा। तथाभूताया द्वितीयस्या अपि वृत्तेर्हेतोः शब्दानामर्थेषु प्रवृत्तिदर्शनादिति योजना। भवतु वाऽन्यपराणां मानान्तरविरोधे गुणवादत्वम्, न तु वेदान्तानाम्; तत्परत्वादित्याह—यत्र त्विति ॥ अपावर्तन्ते मुख्यार्थादित्यध्याहारः। तत्र पूर्वोक्तमेव हेतुं स्मारयति—न हीति ॥

---

1. स्या B.

भावशुद्धिः

मानान्तरागमयोरुभयोरनुग्रहायाद्वैतागमस्य गौणार्थत्वमिति
शङ्कते—अथेति ॥ तदेव व्यनक्ति—एवं हीति ॥ अन्वयमुक्त्वा व्यति- P. 42-9
रेकमाह—अन्यथेति ॥ येन विना यत्प्रमाणमनुपपन्नम्, तत् कल्पकम् । P. 42-10
न चाद्वैतागमस्योभयानुग्रहमन्तरेणानुपपत्तिरिति परिहरति—नैतदिति ॥ P. 42-11
तत्त्वमादेरखण्डार्थत्यागे मानाभावाच्च न युक्तमित्याह—प्रमाणे त्विति ॥
यतः प्रमाणस्य न वृत्त्यन्तरकल्पने मानमित्युपसंहरति—तस्मादिति ॥ P. 42-12
'व्रीहिभिर्वा यवैर्वे'ति तुल्यबलश्रुतिद्वयानुसारेण विकल्पः, "दर्श-पूर्णमा-
साभ्याम्" इति करणार्थद्विवचनान्ततृतीयानुसारेण यागषट्कसमुदायः,
"आहवनीये जुहोति" "पदे जुहोति" इति सामान्य-विशेषभावेन व्यव-
स्थेत्यर्थः । हेतुमाह—नोभयमिति ॥ P. 42-13

अद्वैतवाक्यं मध्यं चादि चोभयानुग्रहे मानमित्याह—ते एवेति ॥ P. 42-14
तर्हि द्वैताद्वैतप्रमाणयोरन्योन्यानुग्राह्यत्वात् स्वतःप्रामाण्यहानिरित्या-
शङ्क्य पूर्वत्राद्यंवाह—यदीति ॥ हेतुमाह—प्रमाणत्वादेवेति ॥ तेन= P. 42-15
प्रमाणेनेत्यर्थः । सिद्धं नः समीहितमिति परिहरति—यथा तर्हीति ॥ कुत P. 42-16

अभिप्रायप्रकाशिका

अनुग्रहमेव दर्शयति—एवं हीति ॥ [1](अत्यन्तमेवेति ॥ प्रत्यक्षादेः सांव्यवहारिकप्रामाण्याभ्युपगमे शब्दस्यापि) गुणवादेन प्रामाण्यं किं न स्यात् ? अथ तत्र तथा [2][त्वे] प्रकारान्तरेणाप्रामाण्यम्, तर्हि प्रत्यक्षादिष्वपि तत्तुल्यमित्यर्थः। दूषयति—नैतदिति ॥ सांव्यवहारिके, तात्त्विके वा प्रामाण्ये प्रत्यक्षादीनां स्वार्थप्रमितिसिद्धप्रमाणाभावाद् न स्वरसभङ्गः, समभिव्याहृतानां [3][तु पदानां पौर्वापर्यालोचनया मुख्यया वृत्त्या वाक्यार्थप्रतीतौ] स्वरससिद्धायां मानान्तरविरोधेन [4][द्वितीयवृत्तिकल्पने तत्प्रामाण्यभङ्गप्रसङ्ग इत्यर्थः। प्रमाणसामर्थ्यानुसारेण प्रमेये काचित् कल्पना स्यादिति यदुक्तम्, तद्दर्शयन्नुपसंहरति—तस्मादिति ॥ "स्व एव'इति यदुक्तम्, तत् प्रपञ्चयति—यदीति ॥ "स्वत एव'इत्युक्तं स्पष्टयति—प्रमाण[त्वादिति ॥ परिहरति—यथेति ॥ ते एव प्रमाणे इत्यस्मिन् पक्षे गौणार्थत्वादि]व्यवस्था प्रमाणशून्या स्यात्; स्वेन तथा-

1, 2, 3 & 4. एतच्चिह्नान्तर्गतं पुस्तके नास्ति ।

भावशुद्धिः

P. 42-17 इति ? अत्राह—एवमिति ॥ तत्र वा को हेतुः ? अत्राह—अन्यथेति ॥
अद्वैतागमस्य गौणार्थत्वं मानविकलत्वाच्च न कल्प्यमित्याह—अप्रामाणि-
P. 42-18 केति ॥ हेतुमाह—तत इति ॥ "एकमेवाद्वितीयम्" इत्यादिवाक्याद्
गौणार्थस्य स्वसामर्थ्येनानवगमादित्यर्थः । आगमस्य गौणार्थत्वं
स्वसामर्थ्यादनवगतमपि मानान्तरादवगम्यत इति, अत्राह—
P. 42-19 अन्यस्येति ॥
अद्वैतागमस्याप्रामाण्यान्यथानुपपत्तिरेव गौणार्थत्वे मानमिति,
P. 42-20 अत्राह—इतरेतराश्रयेति ॥ तमेव विशदयति—प्रामाण्यादिति ॥
सिद्धप्रमाणभावात् प्रमासिद्धिः, प्रमाकरणत्वेन प्रामाण्यस्येतीतरेतरा-
P. 42-22 श्रयस्तत्रापीति, अत्राह—स्वरसेति ॥ तस्मात् गौणार्थत्वं मानाभावा-
P. 42-24 दयुक्तमित्युपसंहरति—तस्मादिति ॥ बाध एवेत्येवकारार्थव्यवच्छेद्य-
माह—नोत्तरस्येति ॥ हेतुमाह—न खल्विति ॥
एवमागमस्याप्यनवकाशत्वं सदृशमित्युक्त्वाऽध्यक्षादेरनवका-
P. 42-25 शत्वमसिद्धमित्याह—न चेति ॥ का तर्हि गतिस्ते[1]षाम् ? तामाह—
या खल्विति ॥ सदृशविषयत्वम्, कल्पितविषयत्वं वा गतिस्तेषामिति,
अत्राह—यदीति ॥ रजतादेरसत्त्वात् तद्भ्रान्तीनामर्थशून्यत्वं गतिः,
P. 42-26 नैवमध्यक्षादीनाम्, द्वैतस्यार्थक्रियासामर्थ्यादिति शङ्के—अथेति ॥

अभिप्रायप्रकाशिका

त्वस्या[विषयीकरणात्, अन्यस्य च तत्र वृत्त्यनङ्गीकारादित्याह—अप्रामाणिका चेति ॥

प्रामाण्याच्चाद्वयविषयत्वं कल्प्यतामिति, अत आह—इतरेतरेति ॥ भवत्पक्षेऽपि तर्हि कथमिति ? अत आह—स्वरसेति ॥ तस्मादसदुक्तैव गतिरित्याह—तस्मादिति ॥ तथाप्रतीतेरित्युक्तं प्रपञ्चयति—न खल्विति ॥

प्रत्यक्षादीनां व्यावहारिकत्वेन सावकाशत्वमुक्तम्, इदानीं प्रकारान्तरेण सावकाशत्वं वक्तुमाह—न चेति ॥ अथासत्त्वादिति ॥ तस्य=रजतादेरसत्त्वात्, ते=विभ्रमाः, अविषयाः=विषयशून्याः अत एव अविषयाः अविद्य-

1. गतिरत्राह B.

भावशुद्धिः

अविषया इत्यस्य विवरणम्—अविद्यमानार्था ॥ इति समः समाधिरित्याह—प्रत्यक्षादयोऽपीति ॥ यस्मात् प्रत्यक्षाद्यागमयोः सावकाशत्वम्, अनवकाशत्वं वा तुल्यमिति निगमयति—तस्मादिति ॥ P. 42-27

दृष्टानुसारेण कल्पनीयत्वाद् वेदान्तानामुपचरितार्थत्वं कल्प्यमिति, अत्राह—एतेनेति ॥ हेतुमाह—प्रत्यक्षादिष्विति ॥ रूप्यादिधीनिदर्शनेन प्रमाणत्वाभिमतप्रत्यक्षादेरुपचरितार्थत्वस्य प्रतिपादितत्वादित्यर्थः ॥ P. 43-1

चोद्यान्तरमनुवदति—यत्त्विति ॥ प्रत्यक्षादेः प्राथम्यादुत्तरत्वाच्चागमस्य तद्बाधकत्वमुक्तमित्याह—अत एवेति ॥ प्रथमभाविप्रत्यक्षाद्यनुरोधेन युक्तमुपासनाद्यर्थपरत्वं बाधकत्वकल्पनादिति, अत्राह— P. 43-5
न चेति ॥ अनपेक्षत्वमसिद्धम्; प्रत्यक्षाद्यधीनात्मलाभत्वात्, अत्राह— P. 43-6
न च तदिति ॥ यथा पक्षधर्मत्वसपक्षसत्त्वादीनां सम्भूयानुमेयबोधकत्वम्, तथा प्रत्यक्षाद्यागमयोरपीति परस्परापेक्षत्वम्, अत्राह—न तैरिति ॥ सम्भूयकारित्वाभावे हेतुमाह—नाम्नायस्येति ॥ किमत्र प्रमाणम्? P. 43-7
तदाह—परस्परेति ॥ P. 43-8

किमतः? अत्राह—तत्रेति ॥ स्वोक्तार्थमाप्तोक्त्या द्रढयति— P. 43-9

अभिप्रायप्रकाशिका

मानार्था इति यावत्। एतेनेति ॥ रजतादिविभ्रमैः प्रत्यक्षादीनां साम्यप्रतिपादनेनेत्यर्थः ॥

न च तदनुसारेणेति ॥ निराकृतस्यापि पुनरुपन्यासो निराकरणहेत्वन्तरप्रदर्शनार्थः। प्रामाण्येऽप्यनपेक्षतामाह—न तदधीनमिति ॥ प्रत्यक्षस्य प्राथम्येन ग्राहकत्वादाम्नायस्य तद्विरोधेन पश्चाद् ग्राहकत्वमिति, अत आह—न तैरिति ॥ तत्र हेतुमाह—नाम्नायस्येति ॥ न हि प्रत्यक्षदृष्टं विष्णुमित्रेण पूरयित्वा यच्छ्रुतौ समायातमिति वचनं प्रयुञ्जाना दुष्यन्त इत्यर्थः। सापेक्षत्वे सति सम्भूयकारित्वमपि स्यात् पदानामिव, तदप्यत्र नास्तीत्याह—परस्परेति ॥ कस्तर्हि प्रथमश्रुतानुसारेण चरमश्रुतं नेतव्यमिति न्यायस्य

भावशुद्धिः

यथेति ॥ तत्र = विषये । अन्योन्यनिरपेक्षाणामिति विशेषणव्यवच्छेद्यमाह
P. 43-12 —यत्र त्विति ॥ 'वाचं धेनुमुपासीत' इत्यादौ बहूनां पदानामानन्तर्येण स्थितानां विरुद्धार्थानां समत्वादुत्तरपदेभ्यः पूर्वपदानां बलवत्त्वम् ; उत्तरपदानां भूयस्त्वेन तेषामेव बलवत्त्वम् ; इतरथा बहुपदभङ्गप्रसङ्गात् । परपदानि प्रथमया वृत्त्या तैः पूर्वपदैरेकवाक्यत्वं प्रतिपत्तुमशन्कुवन्तीत्यन्वयः । अमुख्यवृत्त्याऽर्थसमर्पकत्वे हेतुमाह—एकवाक्यते(तये)ति ॥
P. 43-15 चोद्यान्तरमनुवदति—यस्त्विति ॥ समानविषये विरुद्धार्थोपसंहारिणी प्रमाणे विरुध्येते, बलवदबलवत्त्वनिर्णयाच्च बाध्य-बाधकभावं
P. 43-16 भजेते, इति परिहरति—तत्रेति ॥ भेदप्रतिपत्तिशेषत्वमेव तेषामिति, अत्राह—ते त्विति ॥ भेदस्य लोकसिद्धत्वात्तत्परत्वेऽनुवादकत्वप्रसङ्गादनधिगतसाध्य-साधनसम्बन्धपराणां त एवार्थाः, 'यत्परः शब्दः स शब्दार्थः इति' न्यायात्, अतो न विरोध इत्यर्थः ॥

यागेन प्रयाजाद्यनुगृहीतेन स्वर्गं भावयेदित्यंशत्रयविशिष्टभावनाबोधकत्वमन्तरेण भेदमनुपपन्नम्, इत्यर्थादस्ति विरोध इत्याह—
P. 43-18 स्यादेतदिति ॥ अंशत्रयेण भावना नियतेति परिहरति—उच्यत इति ॥ "श्येनेनाभिचरन् यजेत" "सन्दंशेनाभिचरन् यजेत" "गवा यजेत" इत्यादिषु भाव्यांशाभावेऽपि यथाभावना (बोधनम्)नैवं सर्वत्र विधावंश-
P. 43-19 त्रयाभावेऽपि भावनाबोधनं स्यादित्येतत् प्रकटयति—यथा [1]हीति ॥
P. 43-21 अनर्थस्योदयो यस्याः साऽनर्थोदया । तत्र हेतुः—निषिद्धेति ॥ अंशत्रयाविनाभावं भावनायाः पुरुषभेदेन साधयति—अथेति ॥ हिंसासाध्ये-

अभिप्रायप्रकाशिका

विषयः ? तत्राह—यत्र त्विति ।

कर्मविधिरन्यथानुपपत्त्या भेदं साधयतीति शोधयति—स्यादेतदिति ॥ अर्थापत्तिरप्यागमविरोधे कल्पितविषया कल्पनीयेति परिहरति—उच्यत इत्यादिना ॥ तत्रापि कस्माद्धि सा न साध्येति ? अत आह—तथा हीति ॥ कस्यचिदधिकारिणो हिंसाऽपि भवति साध्येति शङ्कते—अथेति ॥ तुल्यमि-

1. यथा खल्विति मूलपाठः ।

भावशुद्धिः

त्यनुषङ्गः । तीव्रेण क्रोधेनाक्रान्तं स्वान्तमन्तःकरणं यस्य, स तथा । तद्भावस्तत्ता, तया । समुद्भूतेन ध्वान्तेन मिथ्याप्रत्ययेन तिरस्कृतं विवेकविज्ञानं यस्य, तस्य । हेतु-हेतुमद्भावेन पदानामर्थो ज्ञातव्यः ; भिन्नविषयत्वात् । अविरोधोऽस्माकमपि समानमिति समाधत्ते—तथेति ॥ P. 43-21

अविद्योपस्थापितांशत्रयमद्वैततत्त्वप्रतिबुद्धानां यद्यपि नास्ति ; तथापि कर्मविधिसामर्थ्यात् स्यादेव विरोधः, अत्राह—प्रतिबुद्धास्त्विति ॥ P. 43-25
यस्मादविद्यावन्तमाश्रित्य कर्मविधयः प्रवृत्ता इति निगमयति—तदेव- P. 43-25
मिति ॥ तदिति हेतौ । "यत्तद्यतस्ततो हेतौ" इत्यमरसिंहः । प्रामाण्यमिति ॥ स्थितमिति शेषः । अतत्पराणां स्वार्थेष्वप्रामाण्यमुदा- P. 44- 1
हरति—वृत्तान्तेष्विति ॥ कर्मविधीनां सम्बन्धमात्रपराणां भेदप्रामाण्या-
भावे किं स्यात् ? इति, तदाह—तथा चेति ॥ P. 44- 2

आम्नायस्य व्याकुलत्वं परिहृत्य, प्रत्यक्षादिषु तदापादयति— अपि चेति ॥ हेतुमाह—बाध्येति ॥ रजतज्ञानस्य प्रत्यक्षाभासत्वात् P. 44- 3
प्रमाणभूतप्रत्यक्षादिषु न व्याहतिरस्तीति, अत्राह—भेदेति ॥ सर्वत्रैव P. 44- 4
हि सदित्यभेदेन द्रव्य-गुण-कर्म-सामान्यानीति भेदेन प्रतीतिः । न च भेदाभेदात्मकं वस्तु सम्भवति, सोऽयं विरोध इत्यर्थः। [1][उक्तप्रकारेण प्रत्यक्षादिभ्य आम्नायस्य बलवत्त्वात् प्रत्यक्षादिविरोध इत्यर्थः ॥

उक्तप्रकारेण प्रत्यक्षादिभ्य आम्नायस्य बलवत्वात् प्रत्यक्षादिविरोध-

अभिप्रायप्रकाशिका

दमन्यत्रापीति परिहरति—तथा ज्योतिष्टोमादिष्विति ॥ विद्वदधिकारित्वाच्छास्त्रस्य कथमप्रतिबुद्धानामित्युच्यत इति मन्वानं प्रत्यात्मबोधरहिता इह विवक्ष्यन्त इत्याह—प्रतिबुद्धास्त्विति ॥ एवं कर्म-ज्ञानकाण्डयोः परस्परपराहतिं निरस्योपसंहरति—तदेवमिति ॥ आगमे परस्परपराहतिं परास्य सम्प्रति प्रत्यक्षादिषु तामुपपादयति—अपि चेति ॥ न च—प्रत्यक्षाद्याभास एव बाध्यत इति—शङ्कनीयम् ; बाधाधीनत्वादाभासतायाः, बाधस्य च परस्परपराहतेषु शुक्तिरजतादिप्रत्ययेष्वप्यनिरूपणादिति भावः। प्रमाणत्वा-

1. कुण्डलान्तर्गतं B. पुस्तके नास्ति ।

भावशुद्धिः

परिहाराय काण्डारम्भोऽनुपपन्न इति प्राप्तौ तदारम्भं पुरुषभेदेन] समर्थ्यते—तदेवमिति ॥ मध्यमबुद्धिं प्रत्यारम्भार्थवत्त्वमुक्त्वा, मन्दबुद्धिं
P. 44-6 प्रत्यपि तदाह—यो वेति ॥ निरूढनिविडतया=अनादिप्रवृत्तसंस्काराखढतया, दृढत्वेनेत्यर्थः । मन्दाशङ्कानिराकरणाय काण्डारम्भो न
P. 44-8 युक्त इति, अत्राह—न हीति ॥

P. 44-10 अद्वैतागमस्य प्रत्यक्षेण विरोधपरिहाराय विकल्पयति—तत्रेति ॥ प्रत्यक्षं किं वस्तुमात्रं गृह्णाति ? किं वाऽयमयं न भवतीतीतरेतरव्यवच्छेदम् ? उत वस्तुरूपं विधत्ते ? निषेधति चेत्युभयम् ? तत्रान्त्यं त्रेधा
P. 44-11 विकल्पयति—उभयस्मिन्निति ॥ किं युगपदुभयं गृह्णाति ? निषेध(ग्रहण)-पूर्वकं वा वस्तु गृह्णाति ? वस्तुग्रहणपूर्वकं वा निषेधम् ? इत्यर्थः ।
P. 44-13 कस्मिन् कल्पे किमनिष्टम् ? किं वेष्टमिति ? तदाह—तत्रेति ॥ इतरेतराभावत्वात् भेदस्याद्वैतवाक्यस्य प्रत्यक्षादिविरोधः स्यादित्यर्थः ।
P. 44-14 कदा तर्हि न विरोधः ? इति, तदाह—स्वरूपेति ॥ मात्रशब्दार्थमाह—कस्यचिदिति ॥ कस्यचिदपि धर्मिणः कुतश्चिदपि प्रतियोगिनो भेदेन शून्यः; इति अन्योन्याभावातिरिक्तभेदपक्षे विनापि व्यवच्छेदं

अभिप्रायप्रकाशिका

भिमतप्रत्ययेष्वपि परस्परपराहतिमाह—भेदाभेदेति ॥ सत्त्वद्रव्यादिरूपेणाभेदः प्रतीयते, भेदश्च घट-पटाद्यात्मना । न च परस्परविरुद्धभेदाभेदात्मकत्वमेकस्य सम्भवति, तेन तत्र परस्परपराहतिरित्यर्थः । तर्ह्याम्नायस्यैव बलवत्त्वात् प्रत्यक्षादिविरोधपरिहाराय काण्डारम्भो व्यर्थ इति, अत आह—तदेवमिति ॥

पक्षविशेषोत्तरत्वेन—श्लोकं योजयितुं पक्षभेदानाह—तत्र प्रत्यक्ष इति ॥ त्रयः कल्पाः । त्रिविध इत्यर्थः—उभयस्मिन्निति ॥ तत्र कस्मिन् सति किं स्यादिति ? अत आह—तत्र वस्त्वन्तर इति ॥ अस्तु तर्हि व्यवच्छेदेन भेदसिद्धिरित्याशङ्कयोत्तरत्वेन श्लोकं योजयति—विधिमात्रेति ॥ तत्र हेतुत्वेनोत्तरश्लोकमवतारयन्नाह—कथमिति ॥ पक्षत्रयनिरासपरोऽयं श्लोक इत्याह—न तावदिति ॥ संसर्गनिषेधं च साभिनयमुदाहरति—नेदमिहेति ॥ उक्त-

ब्रह्मसिद्धिकारिका

लब्धरूपे क्वचित् किञ्चित् तादृगेव निषिध्यते ।
विधानमन्तरेणातो न निषेधस्य संभवः ॥ ५ ॥ P. 44-16

भावशुद्धिः

भेदसिद्धिः, अत्राह—न हीति ॥ अन्योन्याभावाविनाभूतत्वाद् भेदस्येत्यर्थः ॥ कुतो व्यवच्छेदाभावः ? तत्राह—विधीति ॥ ४ ॥ P. 44-15

नायमयमिति व्यवच्छेदस्यानुभूयमानत्वाद्विधिमात्रव्यापारत्वं प्रत्यक्षस्यायुक्तमिति शङ्कते—कथमिति ॥ विधिमात्रव्यापारत्वसमर्थनार्थं श्लोकमवतारयति—उच्यत इति ॥ P. 44-17

ब्रह्मसिद्धिकारिकाविवरणम्

क्वचित्=भूभागादौ धर्मिणि; लब्धरूपे=प्रतिपन्ने,
किंचित्=घटादि, तादृगेव=लब्धरूपमेव नेति निषिध्यत
इति, धर्मि-प्रतियोगिधीर्निषेधधीकारणम्, यतः; अतो
विधानं(ने)वस्तुबोधं विना न निषेधस्य सम्भव इत्यर्थः॥५

भावशुद्धिः

कल्पत्रयनिराकरणपरत्वेन व्याकरोति—न तावदिति ॥ हेतुत्वेन P. 44-18
पूर्वार्धं व्याचष्टे—यत इति ॥ विषयः=आश्रयः, धर्मि(र्मी)नेदमिहेति P. 44-20
संसर्गनिषेधस्य नायमयमिति तादात्म्यनिषेधस्य चोदाहरणमुक्तं क्रमेण विशदयति—सिद्ध(भूत ?) इति ॥ घटः संसर्गितयेव तदात्मतया निषिध्यत इत्यर्थः ॥ अन्योन्याभावः, धर्मि-प्रतियोग्यधीननिरूपणः, अभावत्वात्; संसर्गाभाववदित्युक्तं भवति । तत्र विपक्षे निषेधासिद्धिरेव P. 44-21
बाधिकेत्याह—नेति ॥ न प्रतिषेधमर्हतीति प्रतिषेध्यः, प्रतियोगी । P. 44-22

अभिप्रायप्रकाशिका

मर्थं व्यतिरेकमुखेनाह—न प्रतिषेध्यादिति ॥ प्रतियोग्यधिकरणसामर्थ्यान्निषेधस्तदुभयमन्तरेण न घटत इत्यर्थः ॥ ४ ॥

उभयव्यभिचारमाशङ्कते—कथं तर्हीति ॥ प्रतियोगिन उपलब्धरूप-

भावशुद्धिः

प्रधानं नास्ति, नास्तिखपुष्पं, नास्ति वन्ध्यासुत इत्यादिनिषेधेषु हेतोरनै-
P. 44-22 कान्तिकत्वं मत्वा चोदयति—कथं तर्हीति ॥ बुद्धेर्नार्थावग्रहे तत्त्वतः कारकत्वम्, किं तु रूपमेवास्यार्थावग्रहोऽभेदेऽपि कथंचित् भेदविवक्ष व्यवहारो राहोः शिर इतिवदित्यर्थः। स्वरूपमस्यां जन्माधीनमिति जन्मैव व्यापर इत्युपचारे किं फलम्? तदाह—सा चेदिति ॥ अन्यत्रोपलब्धस्यान्यत्र निषेधादस्ति धर्म्यादिनिरूप्यत्वं तत्रापीति, तत्राह—न हीति ॥ हेतुमाह—आत्यन्तिकत्वादिति ॥ निषेधस्येति शेषः। एवं धर्म्यधीननिरूपणत्वाभावमुक्त्वा प्रतियोगिज्ञानानपेक्षत्वमाह—नापीति ॥ अन्यथाख्यातिमतेन परिहरति—अत्र केचिदिति ॥ सहकारादिषु सिद्धाः पुष्पादयो गगनादिषु सिद्धेषु निषिध्यन्ते, अतो न व्यभिचार इत्यर्थः। प्रधाननिषेधेऽपि व्यभिचारो नास्तीत्याह—प्रधानमिति ॥ उपादानं तावदादावस्य जगतो भावरूपस्य सतः कार्यत्वेन सिद्धम्, यत् ब्रह्मेति वा, परमाणव इति वा, प्रधानमिति वा वादिभि[1]रूप्यते। सुख-दुःख-मोहात्मकं जगदेवंरूपोपादानाद् न स्यादिति तत्सुख-दुःख-मोहात्मकं न विभक्तम्, भिन्नं कार्यं यस्मात्तदविभक्तकार्यं सुख-दुःख-मोहात्मताविभक्त(म्,) कार्यत्वादेकसादी(इमा)नि च निषिध्यन्ते। सिद्धे जगदुपादाने सिद्धानां सुख-दुःख-मोहानाम्, सिद्धस्य च कार्यस्य तादात्म्यं परैरारोपितं निषिध्यत इति न व्यभिचारः। आदिशब्देन परिणामित्व-

अभिप्रायप्रकाशिका

त्वमपि नास्तीत्याह—नापीति ॥ तद्विधः सिद्ध इति यावत्। गगनसंयुक्तस्यापि कुसुमस्य तत्कार्यता निषिध्यत इत्यर्थः। प्रधानं नास्तीत्यादेरयमर्थः। जगदुपादाने प्रमाणतः सामान्येन सिद्धे सिद्धमेव लौकिकेषु भावेषु सुख-दुःखमोहात्मकत्वं निषिध्यते। अविभक्तं कार्यं यस्मिन् कालत्रयेऽपि तत्कारणमविभक्तकार्यम्। तस्य कारणस्याविभक्तकार्यत्वमादिशब्देन च परिणामित्वं गुणानां सम्भूयकारित्वमित्यादयः। साङ्ख्याभिमताः प्रधानस्य धर्मा गृह्यन्ते। ते च लोकसिद्धा एव सामान्यतोऽनुमानादिसिद्धे जगदुपादाने निषिध्यन्ते, तेन लब्धरूपे

1. वदद्भिः A.

भावशुद्धिः

संभूयकारित्वादयो गृह्यन्ते ॥ आत्मख्यातिमतेनाप्याह—अन्ये त्विति ॥ अनाद्यविद्यासंस्कारात् बुद्धौ लब्धरूपाणां प्रधान-खपुष्पादीनां बाह्यत्वेनावसितानां बहिर्निषेधः क्रियत इत्यर्थः। किमत्र प्रमाणमिति? अत्राह—अन्यथेति ॥ यदि न बुद्धौ लब्धरूपं बाह्यत्वेनावसीयते, ततोऽत्यन्तमप्राप्ते विकल्पो वा, तद्योनिर्वा शब्द इति दैवनिषिद्धम्। तस्मिन् कः प्रतिषेधः? अथ तत्प्राप्तं क्वचित् बाध्येत, ततः कथमस्यात्यन्ताय प्रतिषेधः? नापि ज्ञानाकारतया निषेधः; तस्य तद्रूपतया सत्त्वात्; अन्यथा शब्दविकल्पायोगादित्यर्थः। एवं विधिमन्तरेण निषेधस्याशक्यतामभिधायानिष्टमापादयति—अपि चेति ॥ नापेक्षितौ P. 45. 4 विषय-निषेध्यौ, येन व्यवच्छेदेन, स तथा। हेतुमाह—सर्वस्येति ॥ तदा हि नेत्येव निषेधः स्यात्, अतश्चाविशेषेण सर्वनिषेधाच्छून्यता प्रमाणार्थो भवेदित्यनिष्टम्, अशक्यं चेत्यर्थः ॥

नायमयमिति निषेधो भेदमेवापादयेदिति, अत्राह—यस्त्विति ॥ P. 45. 5 स्यात्, तर्हि धर्मि-प्रतियोगिसिद्धिरपीति, अत्राह—न चेति ॥ विधि-

अभिप्रायप्रकाशिका

क्वचित् किंचिदित्युक्तं न व्यभिचरतीति ॥

विज्ञानवादिनिषेधप्रकारमाह—अन्ये त्विति ॥ कुतश्चिन्निमित्तात् अनाद्यविद्यावासनातः प्रधान-खपुष्पादीनां बाह्यत्वेनाध्यवसितानां बहिर्निषेधः क्रियत इति वर्णयन्तीति योजना। सर्वथाऽलब्धरूपत्वे दोषमाह—अन्यथेति ॥ लब्धरूपत्वाङ्गीकारे च क्वचित् किंचिदेव निषिध्यते, इति नात्यन्तनिषेधसिद्धिरित्याह—प्राप्तरूपं चेति ॥ अशक्यतामभिधायेदानीमनिष्टमापादयति—अपि चेति ॥ सर्वस्य सर्वत्रेति ॥ प्रतियोग्यधिकरणयोरपि यथाप्राप्तरूपेण नेत्येव निषेधादित्यर्थः ॥

व्यवच्छेदपूर्वो विधिरितीमं पक्षं विशेषतो दूषयति—यस्त्विति ॥ नेदमिदमिति व्यवच्छेदस्य भेदप्रतीतिपर्यवसायित्वात् भेदप्रतीतेश्च धर्मिप्रतियो-

ब्रह्मसिद्धिकारिका

क्रमः संगच्छते युक्त्या नैकविज्ञान-कर्मणोः ।
न संनिहितजं तच्च तदन्यामर्शि जायते ॥ ६ ॥

---

भावशुद्धिः

P. 45- 6 रप्यादौ स्वीक्रियतामिति, अत्राह—विधीति ॥ इति प्रकृतमताहानिरिति शेषः ॥ ५ ॥

विधिपूर्वक एव निषेधोऽस्तु, तथापि भेदः सिध्यतीति, अत्राह—
P. 45- 7 नापीति ॥ हेतुतया श्लोकमवतारयति—यत इति ॥

ब्रह्मसिद्धिकारिकाविवरणम्

एकविज्ञान-कर्मणोः=एकज्ञानस्य ॥ विधि-व्यवच्छेदरूपव्यापारयोः ज्ञानस्य क्षणिकत्वात् ॥ किञ्च प्रत्यक्षं संनिहितजम्; इन्द्रियसंनिकृष्टार्थात् जातम्, तदन्यामर्शि न जायते, असंनिहितप्रकाशकं न जायते । असंनिहितमेवादितः संनिहितघटादिभेदस्याप्रत्यक्षत्वात् संनिहतयोरपि भेदोऽप्रत्यक्षः, अनुमेय इत्यर्थः ॥

भावशुद्धिः

P. 45-11 पूर्वापरत्रिभागविकलकालकलास्थायि ज्ञानम्, द्वित्रादि(ल?)क्षणावस्थायि वेति विकल्प्य, प्रथमकल्पदूषणपरतया व्याचष्टे—न खल्विति ॥

अभिप्रायप्रकाशिका

गिसिद्ध्यधीनत्वान्न विधिं विना व्यवच्छेद इत्यर्थः । द्वितीये निषेध्यप्रतीतिश्च नास्माभिः साधनीया; स्वयमेवाङ्गीकारादित्याह—विधिपूर्वक एवेति ॥

अस्तु तथापि भेदः सिध्यतीति, अत आह—नापीति ॥ किमेकं ज्ञानं विधत्ते? ज्ञानान्तरं व्यवच्छिनत्ति? किं वैकमेव ज्ञानं क्रमेणोभयं करोति? नाद्यः; विधि-व्यवच्छेदधियोः परस्परमसङ्घट्टनात् ॥ ५ ॥

नापि द्वितीय इत्याह—क्रम इति ॥ विप्रकृष्टव्यवच्छेदस्य प्रत्यक्षज्ञानेनानवभासनादपि न व्यवच्छेदसिद्धिरित्याह—न संनिहितजमिति ॥ ६ ॥

भावशुद्धिः

कुत इति ? अत्राह—क्रमवतो हीति ॥ विधिलक्षणेन व्यापारेण P. 45-12
प्राग्भावनियतेन निषी(षे)धस्य तदनन्तरं भवतो व्यवधानादित्यर्थः। द्वितीयं कल्पमालम्ब्याह—अपि चेति॥ प्रथमकल्पेऽप्ययं दोषः P. 45-13
संभवतीत्युक्तम्—अपि चेति॥ कारकान्तराणां जन्मातिरिक्तव्यापारदर्शनात् कथं जन्मनो व्यापारत्वम्? अत्राह—अर्थावग्रहेति॥ [[1]बुद्धेर्नार्थावग्रहे तत्त्वतः कारकत्वम्, किन्तु रूपमेवास्या अर्थावग्रहः; अभेदेऽपि कथंचिद् भेदविवक्षया व्यवहारः 'राहोः शिरः' इतिवदित्यर्थः। स्वरूपमस्याजन्माधीनमित्यजन्मैव व्यापारे किं फलम्? तदाह—सा चेदिति॥ विधि-निषेधरूपस्तदुदयो न विधिरूप एवेति, अत्राह—यौगपद्यस्येति॥] स्यात् क्रम इति, अत्राह—उत्पन्नाया इति॥ P. 45-14

यतो धर्मि-प्रतियोगिनोरन्यतरस्याप्रत्यक्षत्वम्, तत्र न भेदस्य प्रत्यक्षत्वमिति सर्वाद्वैतश्रुतेर्न नियतगोचरप्रत्यक्षविरोध इत्यभिसन्धाय न संनिहितजमित्येतद्व्याचष्टे—अपि चेति॥ 'सबन्धं(द्धं) वर्तमानं च P. 45-15
गृह्यते चक्षुरादिने'ति बहिरिन्द्रियाणां प्राप्यकारित्वनियमेऽपि प्रकृते किं स्यात्? अत्राह—न चेति॥ व्यवच्छेदमर्हति व्यवच्छेद्यम्=निषेध्यम्। P. 45-16
अज्ञातमिदं नेति निषेद्धुं नार्हतीत्यर्थः। व्यवच्छेद्यमगृहीत्वा व्यव-

अभिप्रायप्रकाशिका

यतः परं कालविभागो नास्ति, स क्षण इति येषां मतम्, तन्मते विरम्य व्यापारो मा भूत्। येषामाशुतरविनाशित्वं क्षणिकत्वम्, तन्मते न दोष इति, अत आह—अपि चेति॥ ज्ञानस्याकारकत्वात् कारकान्तराणामिव न जन्मातिरिक्तव्यापारः सम्भवति। न च जन्मैव व्यापारः; जातस्याजातस्य च जन्मव्यापाराश्रयत्वायोगादिति, अत आह—अर्थावग्रहेति॥ अर्थावग्रहस्यैव ज्ञानत्वाभ्युपगमात्, कारकत्वस्य वस्तुनोऽङ्गीकाराद् नैष दोष इत्यर्थः। सैव बुद्धिर्विधिरूपेणोत्पन्नाऽपरं विषेधरूपेणोत्पादयतामिति, अत्राह—उत्पन्नाया इति॥

श्लोकोत्तरार्धं व्याचष्टे—अपि चेति॥ ततः किं स्यादिति? अत आह—न चेति॥ तदेवोपपादयति—अनवभासेति॥ तर्हि व्यवच्छेद्यमपि प्रत्यक्षं किं न स्यादिति? अत्राह—न च संनिहितेति॥

1. ( ) एतदन्तर्गतं B. पुस्तके नास्ति।

भावशुद्धिः

च्छेदधीः स्यात्, व्यवच्छेद्यादन्यत्वाद्व्यवच्छेदस्येति, अत्राह—अनवभासमाने हीति ॥ मेरु-घटयोर्नेति व्यवच्छेद्यविशेषविशिष्टधीर्न स्यात्, विशिष्टधियो विशेषण-विशेष्यधीकार्यत्वादित्यर्थः । निष्प्रतियोगिको

P. 45-17 व्यवच्छेदो न युक्तः, अत्राह—सर्वस्येति ॥ तदा शून्यता स्यादित्यर्थः ।

P. 45-18 अतो धर्मि-प्रतियोगिनोरसिद्धेर्न निषेधसिद्धिरित्याह—तस्मादिति ॥ तर्हि मेरुर्न घट इत्यत्र प्रत्यक्षनिषेधेऽसंनिहितोऽपि मेरुर्गृह्यत इति,

P. 45-19 अत्राह—न चेति । विमतम्, न सन्निहितविषयम्, प्रत्यक्षत्वात्; अयं घट इति प्रत्यक्षवत्, अन्यथा "इन्द्रियार्थसंनिकर्षोत्पन्नमव्यभिचार्यव्यपदेश्यं प्रत्यक्षमि"ति सूत्रविरोध इत्यर्थः ॥

P. 45-20 तत्र व्यभिचारं चोदयति—कथमिति ॥ किमत्र कथम्? तत्राह—तत्र हीति ॥ पूर्वं निषेधो नेदं रूप्यमिति, अन्यो विधिः—शुक्तिकेयमिति, असंनिहितरूप्यावभासश्चेत्यर्थः । यस्मादेवं बाधकवृत्तम्, अतो

P. 45-22 व्यभिचार इत्याह—क्रम इति ॥ विधेरेव प्राक् भावः, न निषेधस्य; संनिहितगोचरमेव, नासंनिहितगोचरम्, [1](सकृदेव यावत्कर्तव्यं करोति, न क्रमेणेति न नियम इत्यर्थः । कुत इति? अत्राह—क्रम इति ॥ नेदं रजतम्, शुक्तिरिति पूर्वो निषेध एकज्ञानव्यापारे च क्रम इत्यर्थः ॥

व्यभिचारं) परिहरति—नैतदिति ॥ इदं रजतमिति भ्रान्त्या गृहीतं रूप्यं संनिहितेदमंशे निषिध्यते, अतो न प्राक्तननियमविरोध इत्यर्थः । तथापि विधेः प्रतिषेधात् पूर्वभाव(न?)नियमविरोधः, अत्राह

P. 45-24 —शुक्तिकेति ॥ यदि शुक्तिविधिर्विरोधिनिषेध[पूर्वः, न तर्हि विधिपूर्व

अभिप्रायप्रकाशिका

एकस्य व्यापारद्वयानभ्युपगमे व्यवच्छेदपूर्वकविध्यनङ्गीकारे व्यवच्छेद्यस्य च प्रत्यक्षत्वाभावे च बाधकप्रत्यक्षस्य 'नायं सर्पो रज्जुरेषा' इत्यादेः का गतिरिति? शङ्कते—कथमिदानीमिति । नैष नियम इति ॥ विधिपूर्वक एव व्यवच्छेदः, क्रमकारि च विज्ञानं न भवति, असंनिहितगोचरं च न भवतीति नियन्तुं न शक्यते, बाधके व्यभिचारादित्यर्थः। उक्तमेव स्पष्टयति—यत इति ॥

रजतनिषेधपूर्वके शुक्तिविधौ दृश्यमाने कथं विधिपूर्व एव निषेध इति

1. ( ) एतच्चिह्नान्तर्गतं B. पुस्तके नास्ति ।

भावशुद्धिः

एव निषेधः ; निषेधपूर्वस्यापि विधेर्दर्शनादिति, अत्राह— विधिपूर्वेति ॥ यावान्निषेधः स सर्वोऽपि विधिपूर्वः, विधिस्तु निषेधपूर्वो]ऽतत्पूर्वश्चेत्यर्थः। अभ्युपेत्य क्रमवद्व्यापारतामेकस्य ज्ञानस्येदमुदितम्। वस्तुतस्तु न क्रमवद्व्यापारत्वम् ; उभयरूपस्योपपत्तेरित्याह—न चेति॥ तर्हि पूर्वापर- P. 45-25
विरोधः; न युगपदुभयमित्युक्तत्वात्, अत्राह—पूर्वज्ञानेति॥ इदं रजतमिति ज्ञानेन धर्मि-प्रतियोगिनोः सिद्धत्वादेकस्य ज्ञानस्योभयात्मनोत्पत्तिः स्यादित्यर्थः। यच्चोक्तमसंनिहितनिषेध्यावभासश्चेति, तत् प्रत्याह—पूर्वेति॥ भ्रान्तिमपेक्ष्य बाधस्योत्पत्तेरिति हेतुमाह—पूर्वापेक्ष- P. 46-3
स्येति ॥ विधिपूर्वो निषेधः, कथन्तर (तयोः) सह भावी(वः) इति ? अत्राह—पूर्वेति ॥ किमत्र प्रमाणमिति ? अत्राह—अन्यथेति ॥ P. 46-4

न यावच्छुक्तिज्ञानं रजतं गोचरयति, न तावत् (न तद्) बाधितुमर्हति ; तदप्रथायां हि नेत्येव स्यात्। न च पूर्वज्ञानप्राप्तमुत्तरमाकलयति ; परस्परवार्तानभिज्ञत्वात्तयोः। एवं च संनिहितार्थगोचरत्वं

अभिप्रायप्रकाशिका

नियम्यत इति ? तत्राह—शुक्तिकेति ॥ तथापि व्यभिचारस्तदवस्थ एवेति, अत आह—विधिपूर्वकता चेति ॥ यो यो निषेधः स सर्वो विधिपूर्वः, विधिस्तु निषेधपूर्वः, नतत्पूर्वश्चाभ्युपेयत इत्यर्थः ॥

यदुक्तमेकविज्ञानव्यपारे च क्रम इति, तत्राह—न च तत्रेति ॥ विषयनिषेध्यप्रतिपत्त्यभावे कथं निषेध इति ? अत आह—पूर्वज्ञानेति ॥ यदुक्तम्—प्रत्यक्षे चासंनिहितार्थावभास इति, तत्राह—पूर्वज्ञानावभासित इति ॥ ज्ञानानामन्योन्यानपेक्षित्वात् कथं पूर्वापेक्षस्य तस्योत्पत्तिरिति ? अत्राह—पूर्वापेक्षयैवेति ॥ एतदेव विपक्षबाधेन द्रढयति—अन्यथेति ॥ व्यवच्छेदज्ञानस्य प्रापकज्ञानसापेक्षता प्रसिद्धैवेत्यर्थः ॥

किं शुक्तिज्ञानं स्वप्रसञ्जितं रजतं बाधते ; किं वा भ्रमप्रसञ्जितम्। नाद्यः ; तस्य रजतागोचरत्वात्। नापि द्वितीयः ; पूर्वोत्तरज्ञानयोः परस्परवार्तानभिज्ञत्वात्। अथोभयविषयं ज्ञानान्तरं बाधकमिष्येत, तर्ह्यसंनिहितार्थावभास-

भावशुद्धिः

प्रत्यक्षस्येति, अत्राह— अपि चेति ॥ नेदं रजतमिति सर्वानुभवसिद्धो-
P. 46- 5 ऽभ्युपेय इति चोदयति—सिद्ध इति ॥ नास्ति देहव्यतिरिक्तश्चेतन
P. 46- 6 इतिवत् भ्रान्तोऽयं निषेध इत्याशयवानाह—अयं वेति ॥

एवं तावदेकज्ञानाधिष्ठततया व्यवच्छेदमात्रम्, विधि-व्यवच्छेदौ च क्रमाक्रमाभ्यां निराकृतौ, साम्प्रतमविकल्पप्रत्यक्षस्यैकाकारप्रतिनियम एव विधिव्यवच्छेदरूपविकल्पद्वयप्रभवहेतुरिति मतमुत्थापयति
P. 46- 7 —यत्त्विति ॥ निर्विकल्पके विधि-व्यवच्छेदयोरभावे कथं तत्पृष्ठभाविनः सविकल्पस्य तत्सम्भव इत्याशङ्क्य निर्विकल्पके तयोरुपपत्तिमाह— तथा हीति ॥ तदेकाकारप्रतिनियमात् तद्ग्राहित्वे सति तदन्याग्रहादिति यावत् । निर्विकल्पकस्याभिलापानर्हत्वाद् 'नीलमिदं' 'न पीतमि'ति
P. 46- 9 व्यवहारयोः कुतः सिद्धिरिति ? अत्राह—तत्सामर्थ्येति ॥ नीलविधेः पीत-
P. 46-10 निषेधस्यान्यत्वात् कथमेक विधिरेवान्यनिषेध इति ? अत्राह—न हीति ॥ नीलाकारमालोचने नीलं परिच्छिन्नं नीलाभावं व्यवच्छिनत्ति; स्वाभाव-

अभिप्रायप्रकाशिका

कत्वम्, क्रमकारित्वं चैकस्य प्रसज्यत इति मन्वानं प्रत्याह—अपि चेति ॥ अस्माभिर्व्यावहारिक एव व्यवच्छेदोऽभ्युपेयते, न पारमार्थिक इत्यर्थः ॥ ननु 'नेदं रजतम्' इति व्यवच्छेदस्य प्रसिद्धत्वात्तेन प्रत्यवस्थीयत इति शङ्कते—सिद्ध इति ॥ एवंविधा सिद्धिर्व्यवच्छेदान्तरेऽपि तुल्येति परिहरति—अयं वेति ॥

विधिरेव व्यवच्छेद इति सुगतमतमाशङ्कते—यत्त्विति ॥ दर्शनमिति निर्विकल्पकज्ञानमुच्यते । तावता कथमिदमिति वान्यदिति च व्यवहारद्वयसिद्धिरिति ? अत आह—तत्सामर्थ्येति ॥ तदुक्तविकल्पाभ्यामेवोभयविधव्यवहारसिद्धेः कृतं निर्विकल्पकव्यवच्छेदकत्वेनेति, अत आह— न हीति ॥

नीलाकारप्रतिनियतं विज्ञानं नीलमेवेति परिच्छिन्दन्नीलाभावमिव तदविनाभूतान् पीतादीनपि व्यवच्छिनत्ति, तेन तादृङ्निर्विकल्पकप्रत्ययाभावे विकल्पयोरप्यसम्भवात् तन्मूलभूतं निर्विकल्पकज्ञानमेवैष्टव्यमिति भावः ॥

ब्रह्मसिद्धिकारिका

विधानमेव नैकस्य व्यवच्छेदोऽन्यगोचरः ।
मा स्म भूदविशेषेण मा न भूदेकधीजुषाम् ॥ ७ ॥

भावशुद्धिः

व्यवच्छेदरूपत्वात् भावानां तदभावाविनाभाविनश्च पीतादय इति नीलाकारैकप्रतिनियतं तानपि व्यवच्छिनत्तीत्यर्थः ॥ ६ ॥

निराकरोति—तत्रेति ॥ P. 46-11

ब्रह्मसिद्धिकारिकाविवरणम्

हेतुमाह—मा स्मेति ॥ एकाकारप्रतिनियमस्य P. 46-13
दृश्यादृश्ययोरविशेषादुभयोर्व्यवच्छेदः स्यात्, अतश्च योग्यानुपलब्धिरनर्थिका स्यादित्यविशेषेण तत्प्रसङ्गो मा भूत् । किं चैकनियमादन्यव्यवच्छेदे चित्रादिषु नीलादीनामेकदर्शनभाजां भेदो न सिध्येत्, तच्च मा भूदित्यर्थः ॥ ७ ॥

एकविधेरन्यव्यवच्छेदकत्वे वस्तुन्यवगते, स्थाणुरयं पुरुषो वेति संशयः, पुरुष एवेति विपर्ययश्च न स्यादित्याशयेन व्याकरोति—
नैकेति ॥ हेत्वन्तरमाह—उपलब्धीति ॥ स्वेतरसत्प्रमाकरणपौष्कल्य- P. 46-14
मुपलब्धिलक्षणम्, तेन प्राप्तस्य सत्त्वे दर्शनयोग्यस्य, अयोग्यस्य चेत्यर्थः॥
तदुपपादनाय तत्प्रतिनियमं तदभिमतमाह—तत्प्रतीति ॥ अस्तु, P. 46-15

अभिप्रायप्रकाशिका

एतन्निराकरोति—अत्रोच्यत इति ॥ तदेव स्पष्टयति—नेति ॥ नैकप्रतिनियमो[1] हि ॥ दृग्दृश्ययोः । उपलब्धियोग्यायोग्ययोरिति यावत् । द्विविधो व्यवच्छेदः—तादात्म्यव्यवच्छेदः, संसर्गव्यवच्छेदश्च । तत्र यद्यपि संसर्गव्यवच्छेद उपलब्धियोग्यतामपेक्षते, तथापि तादात्म्यव्यवच्छेदे न तदपेक्षा, ततो नानिष्ट

1. मूले 'हि' पदं नास्ति ।

भावशुद्धिः

प्रस्तुते किं[1]मायातम्? तदाह—तथा चेति ॥ प्रतिनियमस्यैवंरूपत्वे सतीत्यर्थः। अनुपलब्धिलिङ्गकमनुमानमेव न स्यादित्याशयः। तादा-
P. 46-16 त्म्यनिषेधेऽस्माभिरभ्युपेयत एवैतदिति शङ्कते—अथेति ॥ तदुपपादयति—तथा हीति ॥ दृश्यमानस्तम्भतादात्म्येन स्वयमदृश्यानाम्, अदृष्टादीनाम्, दृश्यानां च प्लवङ्गमादीनाविशेषेण निषेध इत्यर्थः। तन्निषेध-
P. 46-17 फलमाह—तथा चेति ॥

तत् किमिदानीमभावव्यवहारसाधने नोपयुज्यते दृश्यत्वविशेषणं क्वचिदपि? तथाच व्यर्थं तदुपादानं प्रामाणिकानामिति, अत्राह—तद्देशेति ॥ तस्य=स्तम्भस्य, देश-कालावेव देशकालौ एषाम्, ते तूपलब्धिलक्षणप्राप्तिविरहिणो भवेयुरित्यर्थः। ते ततो न सन्तीति
P. 46-18 संसर्गनिषेधाय योग्यानुपलब्धिरित्याह—तत्रेति ॥ व्यतिरेकं दर्शयति
P. 46-19 —सम्भवतीति ॥ अनुपलभ्यः=उपलम्भार्हतारहित इत्यर्थः। अनुपलभ्य
P. 46-20 इति विशेषणकृत्यमाह—न त्विति ॥

तुल्यान्यूनानतिरिक्तोपलम्भयोग्यता=प्रमाकारणपौष्कल्यं यस्य पटादेः स्तम्भेन साकं सा तुल्योपलम्भयोग्यता। तत्र हेतुमाह—

अभिप्रायप्रकाशिका

मेतदिति शङ्कते—अथेति ॥ व्यवच्छेद इति शेषः। तदेव दर्शयति—तथा हीति ॥ तथापि योग्यानुपलब्धेर्नानर्थक्यम्, संसर्गव्यवच्छेदे तदुपयोगात्, इत्याह—तद्देशकालास्त्विति ॥ अनुपलभ्यमानानामपि तद्देशकालादीनां रूप-रसादीनामेकत्र सम्भवात्, तत्रान्यतमसंसर्गव्यवच्छेदायोपलब्धिलक्षणप्राप्तस्यानुपलब्धिरपेक्ष्यत इत्यर्थः। उपलब्धिर्लक्षणम्=गमकं यस्य योग्यत्वस्य, तद्रूपेण प्राप्तिरुपलब्धिलक्षणप्राप्तिः। तदेव व्यतिरेकमुखेनाह—संभवतीति ॥ अनुपलभ्यः उप(लम्भायोग्यः) तद्देशकालः=उपलभ्यवस्तुदेशकालः, तस्यानात्मा, तत्संसर्ग्यपीति यावत्। कुतस्तर्हि न सम्भव इति?—अनुपलभ्यमानेति ॥ तत्राह—न त्विति ॥ तुल्या उपलम्भयोग्यता यस्य, स तुल्योपलम्भयोग्यः। कुतोऽसौ न सम्भवतीति? अत आह—

1. किं स्यात्। B

भावशुद्धिः

नियमेनेति ॥ इतरवत्=स्तम्भवत् । कुत एतत् ? अत्राह—अन्यथेति ॥ P. 41-21

भूभागे कुम्भो नास्तीति संसर्गनिषेधः, न वस्तुविधिमात्रात्, किन्तु योग्यानुपलब्धेरित्युक्तमङ्गीकृत्य परिहरति—सत्यमिति ॥ अस्वीकृतांशमाह— न त्विति ॥ नैकाकारप्रतिनियतं ज्ञानमयं न भवतीति P. 46-22
व्यवच्छेदे कारणम्, किन्तु योग्यानुपलब्धिरेवेत्यर्थः । सनिदर्शनमेतदुपपादयति—तथा हीति ॥ तयोरिति ॥ देश-कालयोरिति यावत् । अदृश्य- P. 46-23
(व्यवच्छेद्यदृश्य) व्यवच्छेदोऽपि ततो न स्यादित्याह—तथेति ॥ P. 47- 1
यथैव रूपमात्रप्रतिनियतमपि चाक्षुषं दर्शनं न रसं व्यवच्छिनत्ति, तथा न दृश्यान्तरमपि व्यवच्छिन्द्यादित्यर्थः । कुत इति ? अत्राह—व्यवच्छेदे वेति ॥ रसमपि व्यवच्छिन्द्यात्; तन्मात्रप्रतिनियमस्यो- P. 47- 2
भयत्राविशेषादित्यर्थः । यस्मात् प्रतिनियममात्रस्य नैतत्सामर्थ्यम्, तस्माद् दर्शनप्रतिनियमेऽप्यदृश्यस्याव्यवच्छेदाद् दृश्यत्वे सत्यसति दर्शनप्रतिनियमे दृश्यमानस्याव्यवच्छेदादुभयमेतद् मिलितं मानान्तर-

अभिप्रायप्रकाशिका

नियमेनेति ॥ तस्य नियमेनोपलम्भप्रसङ्गादित्यर्थः ॥ अनुपलम्भे तु तुल्योपलम्भयोग्यताऽपि न भवेदित्याह—अन्यथेति ॥

परिहरति—सत्यमिति ॥ तयोः=देश-कालयोर्न रसं व्यवच्छिनत्तीत्यन्वयः । अदृश्ये प्रतियोगिनि रसादौ व्यवच्छेदाभावेऽपि दृश्ये प्रतियोगिनि तद्देश-कालप्रतिनियमाद् व्यवच्छेदः किं न स्यादिति ? अत्राह—तथेति ॥ केवलभूतलोपलम्भसमये तद्दर्शनस्य भूतलमात्रवति नियमे सत्यपि स्वसत्तातिरिक्तप्रतीतिपुष्कलकारणवत्तया दृश्यस्यापि घटस्य व्यवच्छेदो न दृश्यते; अवधीरितघटाभावस्य केवलभूतलज्ञानस्य कदाचिद् दर्शनात् । अथ जिघृक्षाभावस्तत्राभावग्रहणम्, तर्हि दर्शनप्रतिनियममात्रस्याप्यवच्छेदकत्वं त्वयैवाभ्युपेयमिति भावः । सर्वव्यवच्छेद इति ॥ दर्शनप्रतिनियमस्य सर्वान् प्रत्यविशेषादित्यर्थः । एवं दर्शनप्रतिनियमेऽप्यदृश्यस्याप्यवच्छेदाद् दृश्यत्वे च सत्यपि प्रतिनियमाभावाद्, दृश्यमानस्याव्यवच्छेदादुभयमेतन्मिलितं योग्यानुपलब्धि-

भावशुद्धिः

P. 47-3 त्वमापन्नं व्यवच्छेदकारणमुपादेयमित्युपसंहरति—तस्मादिति ॥ यत्र दर्शनप्रतिनियममात्रमसमर्थं संसर्गव्यवच्छेदे, तत्र हेत्वन्तरम्, तादात्म्य-निषेधे तु तन्मात्रमेव ॥

शङ्खपाणिव्याख्या

*दर्शनप्रतिनियमस्यासामर्थ्यमुपपाद्य 'घटः पटो न भवति'
P. 47-4 इत्यादौ तदात्मव्यवच्छेदेऽपि योजयन्नाह—तथा चेति ॥ तत्र चेद्धेत्व-न्तरमुपास्यम्, इहापि तत एव व्यवच्छेदः सेत्स्यति, न दर्शनप्रतिनिय-मादिति भावः । तत इति ॥ दर्शनप्रतिनियमादित्यर्थः ॥

यदि त्वेकविधिरन्यं व्यवच्छिन्द्यादपि, ततः स्वविधेयाभाव-व्यवच्छेदरूपत्वात् स्वविधेयाभावं व्यवच्छिन्द्यात्, न तु 'नीलं पीतं न भवति' इति नीलात्मनः पीतमात्मान्तरम् यत्तस्य सत्तां व्यवच्छिन्द्या-दित्याह—कामिति ॥ विधिर्नीलादिदर्शनम्; विधेयो नीलादिविषयः । यद्यपि विधिर्विधेयसत्तामवभासयति, न तु विधेयासत्त्वव्यवच्छेदम्; तथापि विधेयमेव व्यवच्छेदमन्तरेण सत्तां नावकल्पत इति नान्तरी-यकत्वाद्विधेयासत्त्वव्यवच्छेदरूपत्वमुक्तम् । भावस्याभावाभावरूप-त्वाद्वा विधेयसेव विधेयासत्त्वव्यवच्छेदः, नान्यो विधेयाकारस्य विधि-
P. 47-6 रिति मन्वानेन तदुक्तमिति द्रष्टव्यम् । अत्र दृष्टान्तमाह—तद्देशेति ॥ यथा नीलदर्शनमनुपलभ्यस्य परमाण्वादेर्नीलस्य देशे काले च न सत्तां व्यवच्छिनत्ति, तद्वदित्यर्थः ॥

अभिप्रायप्रकाशिका

लक्षणान्तरं मानान्तरं व्यवच्छेदकमुपेयम्, तदपि चोपरिष्टान्निराकरिष्यत इत्यभिप्रेत्योपसंहरति—तस्मादिति ॥

अस्तु तर्हि तादात्म्यप्रतिषेधे दर्शनप्रतिनियमः कारणमिति, तत्राह—तथा चात्मान्तरेति ॥ ज्ञानस्य स्वविषयाभावव्यवच्छेदकत्वात्तदभावाविना-भूतपीतादिव्यवच्छेदकत्वं किं न स्यादिति ? अत्राह—काममिति ॥ तत्र दृष्टान्तमाह—तद्देश-कालयोरिति ॥ अदृश्यार्थान्तरसंसर्गव्यवच्छेदे

* इत आरभ्य भावशुद्धेर्ग्रन्थपातः । अतः शङ्खपाणिव्याख्या योजिता ।

शङ्करपाणिव्याख्या

ननु यदि दर्शनं दृश्यासत्त्वं व्यवच्छिनत्ति, प्राप्तं तर्हि दृश्यस्य जगतः सत्त्वम्। अतः प्रत्यक्षे भेदमगृह्णत्यपि भेदमात्रं न स्यात् दृश्यं तु जगत् प्रमाणसिद्धत्वात् केन वार्यते? अतो नाद्वैतसिद्धिः। उच्यते; भेदाभावे जगदेकं तत्त्वं स्यात्, तदपि न दृश्यम्; तस्य जडत्वेन स्वतो भेदाभावेन वाऽन्यतोऽसिद्धेः। अतः स्वतःसिद्ध आत्मा, तदेकं तत्त्वमिति सिद्धमात्माद्वैतम्। अभ्युपगमवादमात्रं वा तत्। न हि विधिर्विधेयासत्त्वं व्यवच्छिनत्ति; असत्यपि विधेये स्रक्सर्पादौ विधेर्दर्शनात्। विभ्रमः स इति चेत्, इदं नाम किम्? यथा चास्य विभ्रमत्वम्, तथोक्तमाम्नायबलतत्त्वप्रदर्शनप्रदेश इत्युपरम्यते॥

अथोच्यते—नैकस्य बहव आत्मानः सम्भवन्ति; अत एकाकारनियमं दर्शनमनेकात्मानं व्यवच्छिनत्तीति, तदाह—नैकस्येति॥ अत्रोत्तरमाह—अन्यत इति॥ एकविधिरेवान्यव्यवच्छेद इति ते पक्षः; स विरोधात् व्यवच्छेदे सति न ते सिध्येदिति भावः॥

ननु चानात्मव्यवच्छेदेन नः कार्यम्, स चेद्विरोधाद्भवति, भवतु; तावता भेदः सिध्यत्येव; किं नो दर्शननियमव्यवच्छेत्तृत्व-

अभिप्रायप्रकाशिका

यथा न स्वरूपं जहाति, तथा भावान्तराव्यवच्छेदेऽपीत्यर्थः। जहात्येवायमन्यान्यच्छेदे स्वभावम्; तेषामेतद्भावाविनाभूतत्वात्, तेषामव्यवच्छेदेऽपि तत्संसर्गिणां गन्धादीनामव्यवच्छेददर्शनात्। अथ तदभावाविनाभावात्तदभाववत्तेषामपि व्यवच्छेदः, तर्ह्यविनाभावाव्यवच्छेदमिच्छता मानान्तरमनुमानमेवाभ्युपेयमिति नानुभवस्य व्यवच्छेदसिद्धिरिति भावः। अस्तु तर्हि, अनुमानादेव व्यवच्छेद इत्याह—नैकस्येति॥ परिहरति—अन्यत इति॥ व्यवच्छेदमनिच्छद्भिर्भेदगर्भस्य बहुत्वस्य विधीयमानभावाविनाभावस्य चानभ्युपगमादनुमैव न प्रवर्तत इत्यर्थः। दोषान्तरमाह—इतरेतराश्रयं वेति॥ संसर्गव्यवच्छेदे भावान्तराणामेतदभावाविनाभावः, तदधीनश्च व्यवच्छेद इति परस्पराश्रय इत्यर्थः॥

शङ्खपाणिव्याख्या

P. 47- 7 ग्रहेणेत्याशङ्क्य विरोधादपि न व्यवच्छेद इत्याह—असतीति ॥ अन्योन्य-
व्यवच्छिन्नानां हि बहुत्वं भवति। व्यवच्छेदश्च विमत्यधिकरणभावापन्नो
नाद्यापि सिध्यति। अतोऽसति व्यवच्छेदे कुतो बहुत्वम्? सत्यपि
बहुत्वे बहुत्वैकत्वयोरसति व्यवच्छेदे द्वितीयस्य विरोधिनोऽभावात्
कुतो विरोधः? अथ व्यवच्छेदात् विरोधो विरोधाच्च व्यवच्छेद इत्युच्यते,
तथा सतीतरेतराश्रयत्वं स्यात्। अतो विरोधादपि व्यवच्छेदो
नास्तीति भावः। अथवा—असति व्यवच्छेदे कुतो बहुत्वम्? तदभावाच्च
कुतो विरोध इति योज्यम्; तदा च वाशब्दश्चार्थे। उपसंहरति—
P. 47- 8 तस्मादिति ॥ इदानीम् 'मा न भूत्' इति श्लोकपादं व्याचष्टे—अपि
P. 47- 9 चेति। एकदर्शनभाजामिति ॥ एकेन चित्रज्ञानेन गृह्यमाणानामित्यर्थः।
P. 47-10 कुत इत्याह—एकेति ॥ नीलादीनामेकत्र चित्रज्ञाने प्रमेयत्वेन सम्बन्धा-
देकत्र नीले, पीते वा चित्रज्ञानस्यानियमात् तन्नियताकारज्ञान-
सामर्थ्यान्न भेदसिद्धिरित्यर्थः। तत्र चेदन्यद् भेदे प्रमाणम्, तदेव
सर्वत्र स्यादित्यकारणं दर्शनप्रतिनियम इति भावः ॥

एवमेकविधिरेवान्यव्यवच्छेद इति मते निरस्ते भावाव्यतिरि-
P. 47-11 क्तभेदवादी चोदयति—नन्विति ॥ प्रकृत्यैवेति; स्वभावेनेत्यर्थः।
तद्विधानिति ॥ भिन्नस्वभावानित्यर्थः। ननु व्यावृत्तिर्व्यावृत्तिमतोऽन्या,
P. 47-12 तेन व्यावृत्तिमद्ग्रहणेऽपि न गृह्यत इत्याशङ्क्याह—न हीति ॥ व्यावृत्ति-
तद्वतोरन्यत्वेऽनवस्था स्यात्। अतो व्यावृत्तिस्वभाव एव भाव इति
भावः। किमेवं सति स्यादिति? अत्राह—तत्रेति ॥ कुत इत्याह—यदिति ॥

अभिप्रायप्रकाशिका

चतुर्थपादं व्याचष्टे—अपि चेति ॥ एकस्य ज्ञानस्यानेकविषयतया तत्रैकविषयप्रतिनियमाभावादिति हेतुमाह—एकत्रेति ॥ इदानीं स्वरूपवादमवलम्ब्य विधिरेव व्यवच्छेद इति शङ्कते—ननु प्रकृत्येति ॥ प्रकृत्या = स्वभावेन। कथं धर्मिग्राहिणो धर्मग्राहकत्वनियम इति? मैवम्; स्वभावत्वेन धर्मत्वानभ्युपगमादित्याह—न हीति ॥ उक्तमर्थमुपपादयति—यत्प्रकृति-

ब्रह्मसिद्धिकारिका

न भेदो वस्तुनो रूपं तदभावप्रसङ्गतः ।
अरूपेण च भिन्नत्वं वस्तुनो नावकल्पते ॥ ८ ॥

---

शङ्खपाणिव्याख्या

व्यतिरेकमाह—अन्यथेति ॥ यो यत्स्वरूपः, स चेत् तेन स्वरूपेण न P. 47-14
प्रतीयते, ततः स्वरूपाप्रतीत्या प्रतीत एव न स्यादित्यर्थः । एवं सामान्येन न्यायं व्युत्पाद्य प्रकृते योजयति—व्यावृत्तेति । यथायथमिति ; P. 47-15
स्वेन स्वेन रूपेणासङ्कीर्णेन दर्शनेषु निर्भासते, यत इत्यर्थः । सिद्धान्ती त्वत्रापि पूर्वोक्तदोपमतिदिशन्नाह—अत्रापीति ॥ पीतादिभिरसंसृष्टस्य नीलस्य निर्भासनात् पीताद्यसंसृष्टस्वभावत्वे नीलस्याभ्युपगम्यमाने, यथा दृश्यैर्घटादिभिरसंसृष्टं भूतलं निर्भाति तथा परमाण्वादिभिरप्यदृश्यैः । अतस्तयोरुभयोरपि व्यवच्छेदः स्यादित्यर्थः ॥ ७ ॥

अत्रैव दूषणान्तरमाह—अपि चेति ॥ भेदो वस्तुनो रूपं स्वरूपं P. 47-17
वस्त्वव्यतिरिक्तं न भवति; कुतः ? वस्तूनां भेदाभावप्रसङ्गात् । अथ व्यतिरिक्तम्, तदा तेनारूपेण वस्तुनोऽस्वरूपेण स्वरूपेण वस्तुनो भिन्नत्वं न घटत इत्यर्थः ॥

अभिप्रायप्रकाशिका

रिति ॥ कुतः पुनः कारणाद्भेदस्वभावता भावानामिति ? तत्राह—व्यावृत्तेति ॥ नीलसत्ताव्यवस्थापकेनानुभवेन तस्यानीलेभ्यः पीतादिभ्यो व्यावृत्तिरपि व्यवस्थापितैव ; अन्यथा असाधारणनीलसत्ताव्यवस्थापकत्वासिद्धेरित्यर्थः ॥ अत्रापि पूर्वोक्तमेव तावद्दोषं दर्शयति—अत्रापीति ॥ न चास्तु दृश्यादृश्ययोरविशेषेण व्यवच्छेद इति युक्तं वक्तुम् ; तथासति सर्वभावानां सर्वतो व्यावृत्तस्वभावतावगमान्न क्वचित् संज्ञयोर्विपर्यासो वेति तन्निवृत्त्यर्थं सर्वशास्त्रारम्भवैयर्थ्यप्रसङ्गादिति भावः ॥ ७ ॥

दूषणान्तरपरतया श्लोकमवतारयति—अपि चेति ॥

दोषविवक्षया भेदस्य स्वरूपं तावन्निरूपयति—सा खल्विति ॥ न वादिनां प्रतिज्ञानमात्रेण सिद्धिरिति, अत आह—प्रज्ञायते चेति ॥ अय-

ब्रह्मसिद्धिकारिकाविवरणम्

P. 47-21 श्लोकं विवृणोति—न व्यावृत्तिरिति ॥ कुत इत्याह—सेति ॥ सा व्यावृत्तिर्यस्य येभ्यस्तदनेकाधिष्ठाना द्वित्वादिवत् प्रतिज्ञायत इत्यर्थः। न केवलं प्रतिज्ञायत एव, प्रतीयतेऽपि तथैवेत्याह—प्रतीयते चेति ॥[1] ततः किमित्याह—तथा चेति ॥ कुत इत्याह—

P. 47-23 नैकस्मादिति ॥ यदेकस्मादभिन्नस्वभावं न तद्भिन्नम्, यथा तदेवैकम्; एका च भेदप्रतियोगिनोर्व्यावृत्तिः। अतस्तदभेदात् तयोरपि भेदो न स्यादित्यर्थः ॥ ८ ॥

शङ्खपाणिव्याख्या

अथ स्वोक्तिविरोधदोषभयात् वस्तुभ्यो व्यतिरिक्तां व्यावृत्तिरिष्यते, ततो व्यावृत्तेरवस्तुस्वरूपत्वात् स्वरूपेण भावानां भेदो न

P. 47-24 स्यात्; अतश्चैकमेव तत्त्वं स्यादित्यभिप्रायेणाह—अथेति ॥

P. 48-25 पूर्वार्धस्य व्याख्यान्तरमाह—अपर इति ॥ नील-पीतयोरितरेतरानात्मत्वादभावस्वरूपो भेदः। स चेद्वस्तुनः स्वभावः, तदा वस्तूनामभावात्मनां प्रतिज्ञानात् भेदस्याभावात्मनः प्रतिज्ञानात् वस्तूनामभावः स्यादित्यर्थः। अत्र व्याख्याने तदभाव इति तच्छब्देन वस्तु परामृश्यते ॥

P. 48- 1 तस्यैव व्याख्यान्तरमाह—अपर इति ॥ तं प्रकारमाह—भेदश्चेदिति ॥ कुत इत्याह—भेदेनेति ॥ भेदो हि द्वैधीभावात्मा; तत्स्वभा-

अभिप्रायप्रकाशिका

मनयोर्भेद इत्येकोऽनेकाधिष्ठानोऽनुभूयते सर्वैरित्यर्थः। अस्तु, को दोषः इति? अत आह—तथा चेति ॥ तत्र हेतुमाह—नैकस्मादिति ॥

एकस्मादभिन्नत्वादेवाभिन्नस्वभावमुत्तरार्धमवतारयितुमाह—अथेति ॥ अरूपत्वादिति ॥ अस्वरूपत्वादिति यावत्। ततश्च स्वरूपविधिरेव भेदग्रह इत्यनुपपन्नमित्यर्थः ॥

---

1. प्रतिज्ञायते इति मूलपाठः।

शङ्खपाणिव्याख्या

वत्वे न वस्तुन एकत्वमित्यर्थः। ननु परमाणुभ्यो भिन्नमभिन्नं वा नैकं वस्तु समस्ति; तेन परमाणव एवाधरोत्तरभावेन संहता वस्तु; तच्च परमाणूनामनेकत्वादनेकात्मकमेवेष्टम्। अतो भेदस्वभावत्वे वस्तुनो नैकत्वस्वभावप्रसङ्गोऽस्माकमनिष्टापत्तिरिति बौद्धमतमाशङ्क्याह—परमाणु- P. 48-2
रिति॥ परमाणुरपि भिन्नत्वाद् भेदेन स्वभावभूतेन द्विधा कृते नैकः स्यादित्यर्थः। ततः किम्? इत्याह—तथा चेति॥ एकाभावे तदभावादेकैकसमुच्चयरूपोऽनेकोऽप्यस्य वस्तुनो नात्मात्मकल्पत इत्यर्थः। न केवलमेकः, न कोऽपीत्यर्थः। तदेवमेकमनेकं च वस्तु न घटते। तृतीयश्च प्रकारो नास्ति। अतो निःस्वभावत्वात् वस्तुनोऽभावप्रसङ्ग इत्यभिप्रायेणाह—तत्रेति॥ P. 48-3

अरूपेणेति श्लोकार्धस्यान्या व्याख्याऽऽरभ्यते—अन्येति॥ P. 48-4
तामाह—व्यतिरेकेति॥ योऽयमनन्तरोक्तो भेदो वस्तुनो व्यतिरिक्तोऽव्यतिरिक्तो वेति विकल्पः, तस्मिन् प्रत्यवतिष्ठन्ते केचिदित्यर्थः। प्रत्यवस्थानमाह—वस्त्विति॥ वस्तुशून्यः प्रत्ययो P. 48-5
विकल्पः, तेन विरचितं शरीरं यस्य स तथोक्तः॥

एतदेव प्रपञ्चयति—तथा हीति॥ तदिति वस्तूच्यते तस्य P. 48-6
भावस्तत्त्वं वस्तुस्वरूपत्वम्। वस्तुनोऽन्यत्वेनानन्यत्वेन वा निश्चित्य वक्तुमशक्यः, तत्त्वान्यत्वाभ्यामनिर्वचनीयः। ननु यदि भेदो वस्तुनो न भिन्नो नाप्यभिन्नः, नास्त्येव तर्हि शशविषाणवत् कथं व्यवहारं प्रवर्तयतीति? अत आह—अनादीति॥ अनादिर्यो भेदविकल्पः, तज्ज्ञा

अभिप्रायप्रकाशिका

भेदस्येतरेतराभावत्वात् तद्रूपत्वे भावानामभावत्वप्रसङ्ग इति व्याख्यानान्तरमाह—अपर इति॥ विभक्तानेकावयवत्वाद् भावानां भेदेऽपि न परमाणोर्भेद इति, अत आह—परमाणुरपीति॥ तस्यापि भेदस्वरूपतयैकत्वेन विरोधादित्यर्थः॥ ततः किं स्यादिति? अत आह—तथा चेति॥ तत्समुच्चयरूपः=एकैकसमुच्चयरूपः, एकैकस्याभावात्तत्समाहाररूपानेकात्मकत्वस्याप्यसम्भवादित्यर्थः। तथापि निःस्वभावता कथमिति? अत्राह—

शङ्खपाणिव्याख्या

वासना उपादानकारणं यस्य विकल्पस्य, तेन विरचितं शरीरं यस्य भेदस्य स तथोक्तः। एतदुक्तं भवति—शशविषाणं न प्रतिभाति ; भेदस्तु तत्त्वतोऽसन्नपि वासानावशात् प्रतिभातीति व्यवहारहेतुः न तु भेदो नाम परमार्थतो वस्त्वस्ति, यस्य तत्त्वमन्यत्वं वा विचार्येत इत्यर्थः ॥

P. 48-9 अत्रोत्तरमाह—तत्रेति ॥ न विद्यते परमार्थतो भिन्नत्वम् द्विचन्द्रस्येव नावकल्पत इत्यर्थः। एतदेव विवृणोति—यदीति ॥ 'अरूपः' इत्यस्य विवरणम्—निःस्वभाव इति ॥ यदि भेदो वस्तुवृत्त्या नास्ति, किं तु कल्पितरूपः, ततः परमार्थतो भेदाभावान्न वस्तुनो भिन्नत्वं परमार्थतः स्यात्। न हि कल्पितेन मिथ्याभूतेन स्वभावेन द्वित्वेनेव चन्द्रमसः पारमार्थिकी तद्वत्ता युज्यते, किं तु कल्पितैव स्यादिति त्वयाऽपीष्टः। तदेतदस्माभिरुच्यमानं किमिति भवान् नानुमन्यते ? वयमप्येतदेव ब्रूमः—न भेदो नाम परमार्थतोऽस्ति ; किं त्वविद्याविलसितमेतद्भिन्नत्वम्-
P. 48-14 मित्यर्थः। भावत इति ॥ सद्रूपतया, परमार्थत इति यावत् ; भावेभ्यो वाऽन्य इत्यन्यार्थयोगे पञ्चमी। सर्व एवायमर्थोऽस्य श्लोकस्य तन्त्रेण ग्रन्थकृतोऽभिमत इति न व्याख्याविकल्पभ्रमः ॥

P. 48-16 पूर्वोक्तमनुभाष्य तत्र किंचिदाशङ्कयति—यदुक्तमिति ॥ भेदात्मत्वे=भेदस्वभावत्वे वस्तुनो भेदेनैकत्वस्य विरोधाद् एकवस्त्वभावः ;

अभिप्रायप्रकाशिका

तृतीयेति ॥ आशङ्कोत्तरत्वादन्यथाव्याख्यानस्य प्रथममाशङ्कामाह—व्यतिरेकेति ॥ विशिष्टव्यवहारहेतोः कथमवस्तुत्वमिति ? तत्राह—तथा हीति ॥ विकल्पजनिता वासना सैवानादिरूपा निदानं यस्योत्तरविकल्पस्य सः, तथोक्तः ; विकल्प-तद्वासनयोरनादित्वं च प्रवाहरूपेणेति द्रष्टव्यम् ॥

तमेवोत्तरार्धं व्याचष्टे—यदि तर्हीति ॥ तदेव स्पष्टयति—न हीति ॥ तथापि भवतां किमायातमिति ? तत्राह—तदेतदिति ॥ कथमयं भवत्सिद्धान्त इति ? तत्राह—वयमपीति ॥ भावतः=परमार्थतः ॥

उक्तानुवादपुरस्सरमुत्तरश्लोकस्य व्यावर्त्यामाशङ्कां दर्शयति—यदुक्तमित्यादिना ॥ यदि स्वरूपापेक्षयाऽभेदः, भेदश्च, तदा विरोधः, यदा पुनः

ब्रह्मसिद्धिकारिका

पौरुषेयीमपेक्षां च न हि वस्त्वनुवर्तते ॥ ८½ ॥

---

शङ्खपाणिव्याख्या

तद्भावाच्चैकैकसमुच्चयरूपस्येतरस्येवानेकात्मकस्यापि वस्तुनोऽभाव इति हेतोरेकत्वानेकत्वयोरनुपपत्तेः तृतीयप्रकाराभावाच्च वस्त्वभाव इति यदुक्तम्, तत्र पर आहुरित्यर्थः। यदाहुस्तदाह—परापेक्षमिति ॥ घटवस्तु परतः पटात् भिन्नम्, न तु स्वतः; स्वयं त्वेकमेव; अतो भेदेन वस्त्वेकत्वस्याविरोधान्नैकत्वस्त्वभावदोष इत्यर्थः ॥ ८ ॥

अत्रोत्तरमाह—तत्रेति ॥ पुरुषस्येयं पौरुषेयी; तामपेक्षां वस्तु यस्मान्नानुवर्तते, नापेक्षानुरूपं वस्त्वित्यर्थः। तस्माद् वस्तुनो भेदस्वभावदोषः पूर्वोक्तयुक्त्या तदवस्थ एवेत्यर्थः ॥ P. 48-14

यद्यपेक्षा वस्तुधर्मः स्यात्, ततस्तद्वशेन वस्तु भिन्नं व्यवस्थाप्येत, न त्वेतदस्तीत्याह—नापेक्षेति ॥ कुत इत्याह—न खल्विति ॥ खलुशब्दः प्रसिद्धिद्योतनार्थः; स्वहेतुभ्य एव यत्स्वभावं वस्तु तत्स्वभावमुत्पद्यते; अन्यथा तद्वस्त्वेव न स्यात्; अतो न स्वभावव्यवस्थितये तस्य वस्त्वन्तरापेक्षा युज्यत इति प्रसिद्धमेतदित्यर्थः। स्वहेतुभिः प्रापित उदयो जन्म येषाम्, तानि तथोक्तानि। तत्रार्थात् पुरुषस्य यः प्रत्ययः, तस्य धर्मोऽयमपेक्षा नाम; पुरुषो हि भिन्नं प्रतियन् प्रतियोगिनमपेक्ष्य प्रत्येति, P. 48-21

अभिप्रायप्रकाशिका

स्वरूपेणाभिन्नम्, परापेक्षयैव च भिन्नम्, तदा न कोऽपि विरोध इति भावः। व्याचष्टे—नापेक्षेति ॥ भेदश्चेद्वस्तुनः स्वाभावः, नान्यापेक्षा युज्यते। तदपेक्षायां तु तन्निरपेक्षस्वभावताव्याघात इत्यभिप्रेत्य भावानामन्यानपेक्षत्वं साधयति—न खल्विति ॥ अपेक्षा वस्तुधर्मो न भवति चेत्, कस्य धर्म इति ? तत्राह—तत्रेति ॥ प्रत्ययः=अन्तःकरणम् ॥

शङ्खपाणिव्याख्या

P. 48-23 तदाह—तत्रेति ॥ ततः किम्? इत्याह—न चेति ॥ कुत इत्याह—
P. 47-24 स्वहेतुभ्य इति ॥ स्वहेत्वधीना वस्तुस्वभावव्यवस्थितिर्यत इत्यर्थः। पुरुषप्रत्ययानुविधायित्वे तु वस्तूनां यथा यथा वस्तुनि पुरुषः प्रत्येति, तथा तथा स्युः। अतः शुक्ती रजततया पुरुषेण प्रतीता रजतमपि स्यात्। अतो न वस्तुस्वरूपं व्यवतिष्ठेत, न चैतदस्ति; अतो न पुरुषप्रत्ययानुरूप्येण वस्तुस्वरूपव्यवस्थेत्याह—अत इति ॥ वस्तुस्वरूपानुरूप्यैव तु पुरुषप्रत्ययस्य व्यवस्थोचिता, वस्तुपूर्व-
P. 48-25 कत्वात्तस्येत्याह—व्यवस्थितेति ॥ एवं भिन्नस्वभावश्चेत्, घटः स्वहेतुभिस्तत्स्वभाव एव जनितः, इति न प्रतियोग्यपेक्षा पौरुषेयीमनुवर्तेत इति प्रकृते योज्यम्। किं च यदि पटापेक्षो घटस्य भेदः, ततः पटस्यापि घटापेक्षो भेद इतीतरेतराश्रयः स्यादित्याह—
P. 48-26 परस्परेति ॥

P. 49-2 इममेव श्लोकार्थं पुनरन्यथा व्याचष्टे—अथवेति ॥ भेदिप्रतियोगिनोरेकश्चेद्भेदस्तदव्यतिरेकी, तत एकस्मात् भेदादव्यतिरेकात् भेदवत्तयोरप्येकत्वात् भेदाभावप्रसङ्गः, इति 'न भेदो वस्तुनो रूपम्' इत्यत्र यदुक्तम्, तत्राहुः परे—स्यादेवं यद्येको भेदोऽनेकाश्रयः स्यात्, स तु नैकः; रूपविरोधात्; भेदो हि प्रतिवस्तु वैविक्त्यमापादयन् प्रतिवस्तु विविक्तस्वरूप एवोचितः; कुतस्तस्यैकत्वम्? यदि चैकः स्यात्,

अभिप्रायप्रकाशिका

तथापि तदनुविधायित्वं वस्तूनां किं न स्यादिति? तत्राह—न चेति ॥ प्रत्युत वैपरीत्यमेव युक्तमित्याह—व्यवस्थितेति ॥ प्रत्ययव्यवस्थापेक्षया वस्तुव्यवस्था, वस्तुव्यवस्थापेक्षया च प्रत्ययव्यवस्थेत्यङ्गीकारे दोषमाह—परस्परेति ॥

यद्वा—वस्तूनामेव परस्परापेक्षायामितरेतराश्रयत्वमुक्तम्। पूर्वं भेदस्यैकत्वात्तदभेदे वस्तूनामप्येकत्वेन भेदाभावः प्रसज्यत इति यदुक्तम्, तदयुक्तम्; भेदानां प्रतिवस्तु भिन्नत्वादिति शङ्कामुत्थापयति तदुत्तरत्वेन श्लोकार्थं

शङ्खपाणिव्याख्या

तत एकधर्मसंयोगात् तन्निमित्तमेकत्वं वस्तूनां स्यात्, न नानात्वम्। अथवा भेदैकत्वे तदव्यतिरेकात् तद्वदेव वस्तूनामेकत्वं स्यात्। तस्मात् प्रतिभावं भेदो भिद्यते। घटस्य पटात्, पटस्य च घटादन्योन्यं भेद इत्यर्थः। अत्र सिद्धान्ती पृच्छति—कथमिति। यद्येकैकाश्रयोऽन्योऽन्यो भेदः, कथं तर्हि भेदस्यानेकाश्रयत्वं प्रसिद्धं सेत्स्यतीत्यर्थः। तत्र पर आहुः—अपेक्षात इति॥ P. 49.4

एकत्र वर्तमानोऽपि द्वितीयमपेक्षत इत्यनेकाश्रयत्वं भेदस्य, न तु नैकत्र वर्तमानत्वादित्यर्थः। एकत्रैव चेद्वर्तते भेदः, कथमन्यमपेक्षते? न हि घटस्थं शौक्ल्यं पटमपेक्षत इत्याशङ्क्याह—तथा हीति॥ भेदो हि कस्यचित् कुतश्चिद्भवति। अतश्च यतो भवति, तं प्रतियोगिनमपेक्ष्य तस्य स्वरूपं व्यवस्थितम्। तेनैकस्थस्यापि युक्तान्यापेक्षेत्यर्थः, ततः किमित्याह—तथा चेति॥ तथा च सति यथायथं स्वीयस्वीयभेदेन प्रतिभावं भिन्नेन प्रतियोग्यपेक्षेणात्मभूतेन भावाव्यतिरेकिणा भिन्नाः सर्वे भावाः; तेन प्रतिभावं भेदान्यत्वात् न तदेकत्वेन भेदव्यतिरेकाद् भेदवद्भेदिनां भेदाभावदोषप्रसङ्ग इति तात्पर्यार्थः॥

अभिप्रायप्रकाशिका

व्याख्यातुम्—अथ वेति॥ रूपविरोधादिति॥ अयमर्थः—भेद इति ह्येकत्वविरोधी कथ्यते, स कथमेकः स्यादिति? ततश्चैकत्वनिमित्तं भवदुक्तदूषणं न प्रसज्यत इत्याह—एकत्वे चेति॥ यद्वा रूपविरोधमेव स्पष्टयति—एकत्वे चेति॥ एकत्वे भेदस्य रूपमेव हीयेतेत्यर्थः॥

प्रतिभावं भेदस्य भेदे कथं तस्यानेकाधिष्ठानत्वानुभव इति शङ्कते—कथमिति॥ उत्तरमाह पूर्ववादी—अपेक्षात इति॥ प्रतियोगिसापेक्षाणामपि भेदानां भावस्वभावताभ्युपगमाद्विधेरेव व्यवच्छेदकत्वमपि लभ्यत इत्यभिप्रेत्योपसंहरति—तथा चेति॥ अपेक्षा नामेच्छाविशेषः, सा चेतनेषु

शङ्खपाणिव्याख्या

P. 49-6 अत्र दूषणमुच्यते—पौरुषेयीमिति ॥ तद्व्याचष्टे—पुरुषो हीति ॥ पुरुषो ह्येकमर्थं मृत्पिण्डं गृहीत्वा परं चक्राद्यपेक्षते, तावता घटादिकार्यसिद्धेः। भावास्तु स्वहेतुभ्यः केनचिद्रूपेण हीनाश्चेदात्मानं लभेरन् , ततस्तद्रूपलाभायान्यदपेक्षेरन्; तेषां तु स्वहेतुभ्यः प्राप्तसम्पूर्णरूपाणां किमर्थोऽन्यापेक्षेत्यर्थः ॥

P. 49-8 अपर आहुः—नन्विति ॥ स्वभाव एष भेदस्य यदेकस्थोऽपि द्वितीयं प्रतियोगिनमपेक्षते, किं कुर्म इत्यर्थः। ननु शौक्ल्यादीनामयं स्वभावो न दृष्ट इत्याशङ्क्याह—नानेति ॥ तत्त्वे=स्वरूप इत्यर्थः। साध्यकोटिनिक्षिप्तो भेदः प्रतियोग्यपेक्षितया सर्वजनसिद्धः, इति तमेवोदाहरति—यथेति ॥

P. 49-10 अत्र सिद्धान्तवाद्याह—न तर्हीति ॥ यदि भेदाख्यो भावस्वभावोऽन्यमपेक्षते, न तर्हि स्वहेतुभ्यः सम्पूर्णस्वभावा भावा जाताः, किंतु भेदाख्येन स्वभावेन विकला इत्यभ्युपेयम्; अन्यथाऽन्यापेक्षानुपपत्तेः; न चैतदिष्टमित्यर्थः। किं च भावस्वभावो भावहेतुभ्य एव भावसमकालमेव जायते, यथाग्नेरौष्ण्यम्; भेदस्तु भावहेतुभ्यो हेत्वन्तरात् प्रतियोगिनो भावे जाते पश्चाज्जायमानो न भावस्वभावः स्यात्;
P. 49-11 अतः स्वभावभूता भेद इतीयं प्रतिज्ञा ते हीयेतेत्याह—हेत्वन्तरादिति ॥

अभिप्रायप्रकाशिका

सम्भवति; चेतनविशेषगुणत्वादित्याह—पुरुषो हीति ॥ यद्यप्यस्य कार्यमेवापेक्षितम्; तथापि तत्सिद्ध्यर्थं तत्साधनमप्यपेक्षते पुरुषः। तत्र घटादिषूपचारात् सापेक्षत्वव्यपदेश इत्यर्थः। प्रकृते तु नोपचरितमपि सापेक्षत्वं सम्भवतीत्याह—स्वहेतुभ्य इति ॥

प्रश्नं मत्वा पूर्ववाद्याह—नन्विति ॥ स एवोत्तरमुपपादयति—नानेति ॥ न चेदमदृष्टपूर्वमित्याह—यथेति ॥ पक्ष एव कथं निदर्शनीक्रियत इति न शङ्कनीयम्; अनुभवस्यैव प्रदर्श्यमानत्वात्, अनुमानस्येहाविवक्षितत्वादिति भावः। परिहरति—न तर्हीति ॥ प्रतियोगिसापेक्षभेदस्वभावात्

शङ्करपाणिव्याख्या

अत्र पुनः प्रत्यवतिष्ठते—स्यादेतदिति ॥ स्यादेतत् त्वदीयं दूषणम्—यदि भेदरूपविकलो भावः स्वहेतुभ्यो जायेत, स तु भेदादिभिः सर्वरूपैरविकलः सम्पूर्ण एव स्वहेतुभ्यो जायते। अयं तु विशेषः—यद्रूपान्तरस्य प्रतियोग्यनपेक्षस्वभावत्वम्, भेदाख्यं तु रूपं प्रतियोगिसापेक्षम्, यतः प्रतियोग्यनपेक्षं कदाचिदपि न दृष्टं भवतीत्यर्थः। इतिहेत्वर्थः। कुत इत्याह—तस्येति ॥ तस्य भेदाख्यस्य रूपस्य। तद्विधत्वात्= प्रतियोगिसापेक्षस्वभावत्वादित्यर्थः। अतस्तेन भेदेन तद्विधेनैव स्वभावेनैव सह भावो जायत इति हेतोर्न भेदेन विकलरूपस्य प्रादुर्भावो जन्म, येन त्वदुक्तो दोषः स्यादित्यर्थः ॥ P. 49-13 P. 49-14

अत्र दूषणमाह—तत्रेति ॥ भवतु तद्विधस्य भेदसहितस्यैव भावस्य प्रादुर्भावः, प्रतियोग्यपेक्षायास्तु अर्थः=प्रयोजनं वक्तव्यम्; न च ते तदस्तीति भावः। कुतः इत्याह—यस्य हीति ॥ यदायत्तं हि यत्र किंचिद्भवति, तत् तदपेक्षम्, अन्यत् तन्निरपेक्षमितीयं सापेक्ष-निरपेक्षयोर्व्यवस्था, नान्येत्यर्थः ॥ P. 49-15

ततः किमित्याह—तत्रेति ॥ न तावद्भेदस्योत्पत्तिः प्रतियोग्यायत्ता, येनास्योत्पत्त्यर्थं भेदस्तमपेक्षत इत्यर्थः। कुत इत्याह—स्वेति ॥ स्वहेतुभ्य एवाविकलस्य भेदसहितस्यैव भावस्य प्रागुत्पत्तेरित्यर्थः। अथोदकाहरणाद्यर्थक्रिया घटादेर्भेदस्य प्रतियोग्यायत्तेत्युच्यते, तदपि P. 49-17 P. 49-18

अभिप्रायप्रकाशिका

प्रागेव वस्तुनः सिद्धत्वान्न भेदात्मकं वस्त्वित्यर्थः। भिन्नसामग्रीकत्वादपि वस्तुस्वभावो भेद इत्याह—हेत्वन्तरादिति ॥

शङ्कते—स्यादेतदिति ॥ भावानां विचित्रस्वभावत्वात् प्रतियोगिसापेक्षस्वभावेन भेदेन सहैव वस्त्वविकलं प्रादुर्भवतीत्यर्थः। एकस्य सापेक्षताऽनपेक्षतालक्षणविरुद्धानेकस्वभावताऽनुपपत्तेः सापेक्षभेदस्वभावतया विकलस्योद्भव एव न सम्भवति; तथाप्यङ्गीकृत्य परिहरति—तत्रोच्यत इति ॥ अपेक्षाभावं दर्शयितुं सापेक्षलक्षणमाह—यस्येति ॥ यस्य सापेक्षस्य यत्रा-

शङ्खपाणिव्याख्या

नेत्याह—नेति ॥ कुत इत्याह—तदिति ॥ पटादिप्रतियोग्यसंनिधानेऽपि घटस्यार्थक्रिया दृश्यते । सा यदि प्रतियोगिसापेक्षा स्यात्, तदसंनिधाने न स्यादिति भावः । भेदप्रतीतिः प्रतियोग्यायत्तेत्याशङ्कयति
P. 49-19 —प्रतीतिरिति ॥ एतदेव द्रढयति—तथा हीति ॥ यस्य यतो भेदः प्रतीयते, तत्प्रतियोगिनमनपेक्ष्य भेदो न प्रतीयते यतः, अतस्तत्प्रतीतिः प्रतियोग्यायत्तेत्यर्थः ॥

P. 49-21 एवमाशङ्क्य दूषयति—नेति ॥ एवं चेत्तर्हि भेदाख्यो भावस्वभावो न प्रतियोग्यपेक्षः, किं तु तस्मिन् भेदे पूर्वमवस्थिते भेदाख्यस्य वस्तुनः स्थितेरुत्तरकाला तत्प्रतीतिः प्रतियोगिसापेक्षेत्यापन्नम् । अतो भेद एव प्रतियोगिसापेक्ष इति प्रतिज्ञातं हीयत इति भावः । न च प्रतीतौ सापेक्षायां तत्प्रमेयं वस्तु सापेक्षं स्यादित्यत्र दृष्टान्तमाह—
P. 49-22 यथेति । व्यवस्थिताश्च ते स्वहेतुभ्यो लब्धात्मानः, अत स्वानपेक्षस्वभावाश्चेति विग्रहः । व्यवस्थितौ अनपेक्षः स्वभावो येषामिति वा ॥

अभिप्रायप्रकाशिका

पेक्षणीये किंचित्कार्यमायतते, तत्र तदायत्तं भवतीत्यस्यायत्तं मम कार्यमिति यावत् । तत्सापेक्षं वस्तु तदपेक्षणीयमपेक्षत इत्यर्थः । भेदस्वभावप्रतीतिः प्रतियोग्यपेक्षेति शङ्कते—प्रतीतिश्चेदिति ॥ प्रतीतिद्वारा प्रत्येतव्यवस्थापेक्षा कस्मान्न स्यादिति ? अत आह—इतरेतरेति ॥ धर्मिणो भेदेनावगतस्य प्रतियोगित्वात् तद्भेदप्रतीतौ धर्मभेदप्रतीतिः, धर्मिभेदप्रतीतौ च तदपेक्षया प्रतियोगिभेदप्रतीतिरिति परस्पराश्रयत्वमित्यर्थः । स्वरूपेण गृह्यमाणं प्रतियोगि, न तु भिन्नतया गृह्यमाणमिति, अत आह—न चेति ॥ न च शङ्कनीयम्—विद्यमाने भेदे स्वरूपग्रहणस्य भेदप्रतीतिहेतुत्वात् कथमेकस्मिन् भेदप्रसङ्गः—इति ? क्षीर-नीरयोर्विदूरशिखरतरुषु च स्वरूपग्रहेऽपि भेदाग्रहाभावादिति भावः । प्रतीत्यर्थक्रिययोर्वस्तुत्वेऽपि सापेक्षत्वमभ्युपगतमिति, तत्राह—न वस्तुस्वभाव इति ॥ व्यवस्थितवस्तुस्वभावत्वे भेदस्य नापेक्षा युक्तेत्यर्थः । तदेवं शङ्कोत्तरतया पूर्ववत् द्विधा व्याख्यायेदानीं युक्त्यन्तरपरतया व्याचष्टे—अन्या व्याख्येति ॥ सापेक्षत्वात् भेदस्य निरपेक्षवस्तुस्वभावतानुपपन्नेत्यर्थः ॥ ८३ ॥

शङ्खपाणिव्याख्या

नन्वस्तु भेदप्रतीतिरेव सापेक्षा, तदर्थमेव स्वतो निरपेक्षोऽपि भेदः प्रतियोगिनमपेक्षिष्यत इत्याशङ्क्याह—इतरेतरेति ॥ यतो भेदेन P. 49-23
प्रतीताद् यस्य भेदः प्रत्येतव्यः, तस्यापि ततस्तथेतीतरेतराश्रयः। अतो भदस्य प्रतीतिरपि परस्परायत्ता इतरेतरसापेक्षा न घटत इत्यर्थः। ननु वस्तुमात्रादगृहीतभेदाद्भेदः प्रत्येष्यते, अतो नेतरेतराश्रय इत्याशङ्क्याह—न चेति। हेतुमाह—एकस्मिन्निति ॥ यद्येवं स्यात्, स्वतोऽपि P. 49-24
स्वस्य भेदः प्रतीयेत; न चैवमस्तीति भावः। प्रकृतमुपसंहरति—तस्मादिति ॥

अस्यैवान्या व्याख्या। तामाह—नेति। हेतुमाह—आपेक्षिक P. 50-1
इति ॥ प्रतियोग्यपेक्षया यतः स भेदः प्रतीयत इत्यर्थः। ततः किमित्याह—न चेति ॥ अपेक्षा हि पुरुषस्य प्रत्ययविशेषः। न च तं वस्त्वनुवर्तते। न च पुरुषप्रत्ययमनु वस्तुव्यवस्थेत्यर्थः। हेतुमाह—व्यवस्थितेति। यथावस्तु हि पुरुषप्रत्ययो युक्तः; अन्यथा निरालम्बनः स्यादिति भावः। इतिः=श्लोकार्थपरिसमाप्तौ ॥ ८३ ॥

ननु यद्यापेक्षिकं न वस्तुनो रूपम्, कथं तर्हि पितृत्वादयो वस्तुनो रूपम्? तेऽपि ह्यापेक्षिका एव। न हि ते पुत्राद्यपेक्षया विना भवन्तीत्यतस्ते यथापेक्षिका अपि वस्तुनो रूपम्, तथा भेदोऽपीत्यभि- P. 50-3
प्रायेण पृच्छति—कथमिति ॥ न च खपुष्पवदसन्तः, न च गन्धर्वनगरादिवदसत्या इत्याह—न चेति। असतां व्यवहार एव नास्ति, असत्येन तु विसंवादी, पितृत्वादयस्तु व्यवहारस्य हेतुत्वेन लोके सिद्धाः, स चाविसंवादीति नासन्तः, नाप्यसत्या इत्यर्थः। अत्रोत्तरमाह—उच्यत इति। P. 50-4
यदि पितृत्वादयोऽप्यापेक्षिकाः, तेऽपि तर्हि भेदवद्वस्तुनो रूपं मा भूवन्, असत्या एव सन्तु, का नो हानिः? न च तेषामविसंवादिव्यवहार-

अभिप्रायप्रकाशिका

वस्तूनां निरपेक्षत्वं पित्रादिवस्तुषु व्यभिचारीति शङ्कते—कथं तर्हीति ॥

ब्रह्मसिद्धिकारिका

पित्रादिविषयेऽपेक्षा जननादिप्रभाविता ॥ ९ ॥

एकक्रियाविशेषेण व्यपेक्षा ह्रस्व-दीर्घयोः ॥ ९½ ॥

---

शङ्खपाणिव्याख्या

हेतुत्वेन सिद्धत्वाद्भेदाद्विशेषः; भेदोऽप्येवमविसंवादिव्यवहारहेतुत्वेन पितृत्वादिवद्वस्तुवद्वा किं न लोके सिद्धः? अपि तु सिद्ध एव; अतो नायमपि विशेष इत्यर्थः ॥

P. 50-6 एवं पितृत्वादिभेदयोरविशेषमुक्त्वा सम्प्रति विशेषमाह—अपि चेति ॥

पित्रादौ विषये पुत्राद्यपेक्षा जननादिना भवति। ह्रस्व-दीर्घयोरप्यन्योन्यापेक्षा एकस्या देशव्याप्तिक्रियाया न्यूनाधिकभावविशेषेण भवति। न च भेदे तादृशोऽपेक्षाहेतुः कश्चिदस्तीति भावः।

P. 50-9 एतद्व्याचष्टे—व्यवस्थिते इति ॥ व्यवस्थिते औत्पत्तिके=अन्योन्यनैरपेक्ष्येण स्थिते, न तु वस्तुस्थित्युत्तरकालमन्यापेक्षाप्रभवे पितृ-पुत्रयोर्जन्य-जनकशक्ती पितृ-पुत्रयोरभिधेये; यथासङ्ख्यमत्राविवक्षितम्।

अभिप्रायप्रकाशिका

तेषां वस्तुत्वमसिद्धमिति, अत आह—न चेति॥ पित्रादेरपि भेदवन्न वस्तुत्वे सम्प्रतिपत्तिरिति परिहरति—उच्यत इति ॥

शक्यप्रतिविधानं चैतदित्याह—अपि चेति ॥ पित्रादीनामपेक्षाकारणसम्भवादस्ति भेदाद् वैलक्षण्यमित्याह—व्यवस्थित इति ॥ अत्र च भूतसूक्ष्मसहितलिङ्गशरीरोपेतस्य शुक्र-शोणितानुयायिनो जीवस्य जन्यशक्तिमत्त्वं षोडशवर्षीयस्थूलशरीरोपेतस्य जीवस्य जनकशक्तिमत्त्वम्, तयोरेव पुत्र-पितृशब्दाभिधेयत्वेऽपि तत्तच्छक्तिव्यतिरेकेण तत्तच्छब्दाप्रवृत्तेरुपचाराच्छक्त्योरभि-

शङ्खपाणिव्याख्या

एतच्च शक्तिः कारकमित्यभिप्रेत्योक्तम् । शक्तिमत्कारकमिति पक्षेऽपि सर्वमूह्यम् । कथं तर्हि तयोरन्योन्यापेक्षित्वम् ? इत्याशङ्क्याह—ते त्विति । जन्य-जनकयोः कर्तृ-कर्मकारकशक्ती समानश्चासौ जननाख्यो व्यापारस्तद्विषये सति ता पितृपुत्रशब्दौ—आस्कन्दतः=विषयीकुरुतः । ते वा शक्ती कर्तृभूते तौ शब्दौ कर्मभूतौ आस्कन्दतः=स्ववाचकत्वेन स्वीकुरुत इत्यर्थः । एतदुक्तं भवति—यदैकस्यां जननक्रियायामेकः पुरुषः कर्ता, अपरः कर्म, तदा तौ पितृ-पुत्रशब्दवाच्यौ भवतः; नान्यथेति । कुतः ? स्वभावभेदात्=ईदृश एव तयोः शब्दयोः स्वभावविशेषः येनेदृश एव विषये वर्तते, नेतरत्रेत्यर्थः । ततः किमित्याह—अत इति ॥ समानत्वं हि क्रियाया द्वयोर्भवति; अतो P. 50-10
यस्य क्रिया येन समाना तस्य तत्रापेक्षा, भवतीत्यर्थः ॥

उक्तमर्थं प्रकृतोपयोगितया स्पष्टयति—एतदिति । पितृ-पुत्रशब्द- P. 50-11
योरर्थस्तत्र पित्रादौ सापेक्षः, न तु जन्य-जनकशक्त्याख्यं वस्तु; तच्च पूर्वं व्यवस्थितमेवेत्युक्तम् । एतदुक्तं भवति—यदा जन्येन समान-

अभिप्रायप्रकाशिका

धेयत्वमुक्तम्, तथापि तयोर्व्यवस्थितत्वात् कथं सापेक्षतेति ? अत आह—ते त्विति ॥ शक्तिं विशिनष्टि—समानेति ॥ समानो जननव्यापारो विषयः साध्यः, ययोस्ते शक्ती, तथाभूते । शक्तौ तौ पुत्र-पितृशब्दावास्कन्दतः=अभिवदत इति यावत् । यद्वा—विषय इति सति सप्तमी । स्वरूपेण निरपेक्षयोरपि शक्त्योर्जननव्यापाराविष्टतया पुत्रादिशब्दवाच्यत्वात् व्यापारस्य चोभयाधीननिरूपणत्वाच्छक्तिप्रतीतेश्च शक्यनिरूपणाधीनतयोत्पत्तेः सापेक्षत्वमित्यर्थः । चैत्र-मैत्रशब्दवन्निरपेक्षवृत्तित्वं वा, वैपरीत्यं वा पितृ-पुत्रशब्दयोः किं न स्यादिति ? अत आह—स्वभावभेदादिति ॥ वृत्तिवैचित्र्यादित्यर्थः । अतो येन समानत्वमिति ॥ येन=जननव्यापारेण, समानत्वम्=सम्बन्धित्वं कर्तृ-कर्मभावेन तत्रान्योन्यापेक्षेत्यर्थः । व्यवस्थितरूपत्वाविशेषान्न वा सापेक्षत्वम्; तयोरर्थयोर्वाऽपेक्षासम्भव इति, अत आह—एतदुक्तमिति ॥ न केवलयोः शब्दोरर्थयोर्वा व्यवस्थितरूपत्वात, किन्तु तत्र जनिक्रियाजन्यजनकाधीननिरूपणा सापेक्षैकैवोपाधिः पितृ-

शङ्खपाणिव्याख्या

जनिक्रियो जनको भवति, तदा पितृशब्दार्थो भवति; नान्यदा। अतश्च येन सा क्रिया समाना, तज्जन्यमपक्ष्य जनकः पितृशब्दार्थो जातः इति शब्दार्थः सापेक्ष इत्युच्यते। अतः शब्दमात्रं त्वत्र सापेक्षम् न वस्त्विति। अपेक्षाहेतुश्च तत्र चित्रादौ साधारणी जनकक्रिया विद्यते, यद्यपि जन्य-जनकशक्त्याख्यवस्तुनी व्यवस्थिते=अन्योन्यनिरपेक्षे इत्यर्थः। न द्वितीयेन विना साधारण्यं भवतीति भावः। भेदे तु
P. 50-12 वैषम्यमाह—भावेति॥ वस्तुतत्त्वगत इति=न शब्दगत इत्यर्थः; तेन वस्त्वेव तत्र सापेक्षमिति भावः। ह्रस्वादावपि यद्वस्तु यावत्परिमाणम्, तत् तावत्परिमाणमन्यनिरपेक्षमेव स्वहेतुभ्यो जातम्। शब्दप्रवृत्ति-मात्रं तु सापेक्षम्; अपेक्षाहेतुश्चैकजातीयाया देशव्याप्तिक्रियाया न्यूना-धिकभावः; यदपेक्षया यस्य देशव्याप्तिक्रियाधिका, तत् ततो दीर्घमि-त्युच्यते; या यस्योना तद्ध्रस्वमिति। या यावद्देशैकस्य व्याप्तिः, अन्यस्य न तावद्देशा तदूनम्; इतरदधिकमिति न्यूनाधिकविवेकः; तेन न्यूनाधिकयोरन्योन्यापेक्षितादोषो नास्ति॥

यदि जननकार्यविशेषात् पित्रादावपेक्षा इष्यते, वस्तुभेदोऽपि,
P. 50-15 तर्हि कार्यस्यैव भेदादिष्यतामिति परः प्रत्यवतिष्ठते—यदीति॥ किं च

अभिप्रायप्रकाशिका

पुत्रशब्दयोः प्रवृत्तौ, इति जनिक्रियाप्रतियोगिनोः पितृ-पुत्रशब्दवाच्याकारयोः सापेक्षत्वमुच्यत इत्यर्थः। भेदेऽप्येवं सापेक्षत्वं किं न स्यादिति ? अत आह—भावेति॥

ह्रस्व-दीर्घयोर्यद्यप्येका क्रिया नास्ति; देशव्याप्तिलक्षणायाः क्रियायाः प्रतिपरिमाणं न्यूनाधिकभावेन भेदात्, वितस्त्यादिपरिमाणे च वस्तुगते यद्यपि व्यवस्थिते एव; तथापि न्यूनाधिकदेशव्याप्तिलक्षणैकजातीया क्रिया तत्रापेक्षाहेतुरस्ति, तेन व्यवस्थितपरिमाणयोरपि देशव्याप्तौ न्यूनाधिकभावाद् ह्रस्व-दीर्घशब्दवाच्यत्वाकारेण सापेक्षत्वं सम्भवतीत्याह—ह्रस्व-दीर्घयोर-पीति॥ यद्येकक्रियानिमित्ता, एकजातीयक्रियानिमित्ता वाऽपेक्षा, तर्हि कार्यभेद एवापेक्षाहेतुः, इति भावानामर्थक्रियालक्षणकार्यभेदात् परस्परापेक्षो भेदः सेत्स्यतीति शङ्कते—यदीति॥ यद्यपि चोक्तलक्षणो भेदो विधिमात्रव्यापा-

ब्रह्मसिद्धिकारिका

अर्थक्रियाकृते भेदे रूपभेदो न लभ्यते ॥ १० ॥
दाहपाकविभागेन कृशानुर्न हि भेदवान् ॥ १०½ ॥

शङ्खपाणिव्याख्या

एव सति यद्यपि प्रत्यक्षं वस्तुविधिमात्रव्यापारं न व्यवच्छिनत्ति, न तद्भेदे प्रमाणम्, तथापि कार्यभेदादनुमास्यामहे; अतो न भेदस्याप्रमाणत्वमपीत्याह—किं चेति ॥ विधिमात्रमन्यव्यवच्छेदरहितं व्यापारो P. 50-16
यस्येति विग्रहः । विपक्षादव्यावृत्तौ हेतुरगमक इति ततो व्यावृत्तिमाह—नैकत्व इति ॥ अन्वयस्त्वद्वैतिनं प्रत्यसिद्धो न च बौद्धैरिष्टः, इति P. 50-17
नोक्त इत्यदोषः । अत्र हेतुमाह—कारणेति ॥ तद्विवृणोति—तदिति ॥ P. 50-18
सिद्धान्ती तु कार्यभेदोऽप्यस्माकमसिद्धः; अतस्तेन न भावभेदानुमानम् । नैकस्यानेके स्वभावाः, तद्भेदे भेदप्रसङ्गादिति भेदात् भेदप्रसाधनमशोभनमित्याह—तदिदमिति ॥ ९½ ॥ P. 50-19

यदप्युक्तं कारणैकत्वे कार्यभेदो नावकल्पत इति, तदप्ययुक्तम्; एकत्वेऽपि तद्दर्शनादित्याह—अपि चेति ॥ दाहादिकार्यभेदात् 'दाहकः' P. 50-20
'पाचकः' इति व्यपदेशात्रं भिद्यते, न तु वस्त्वित्यर्थः । शेषं सुगमम् ॥ P. 50-21

अर्थक्रियाकृते भेदे । अङ्गीक्रियमाण इत्यन्वयः । नन्वत्रापि रूपादिसमुदायमात्रं वह्निः, न त्ववयव्येको भिन्नोऽभिन्नो वा सम्भवति;

अभिप्रायप्रकाशिका

रात् प्रत्यक्षान्न सिध्यति; तथापि कार्यभेदलिङ्गकानुमानात् कारणभेदः सेत्स्यतीत्याह—किं चेति ॥ विपक्षबाधकतर्केण व्यतिरेकव्याप्तिं दर्शयति—नैकत्व इति ॥ ननु—कार्यं कारणस्वभावमपेक्षताम्, किं तद्भेदेनेति? अत आह—तज्जननमिति ॥ दधिजननं चेत् पयसः स्वभावः, न ततः तैलसिद्धिः, तैलजननं चेत्तिलानां स्वभावः, न ततो दधिसिद्धिः । न चैकस्वभावो नानाकार्यजनकः; असति कारणभेदे कार्यभेदानामाकस्मिकत्वप्रसङ्गादित्यर्थः । तदेतदसिद्धेनासिद्धस्य साधनमिति दूषयति—तदिदमिति ॥ ९½ ॥

व्याचष्टे—नार्थक्रियेति ॥ प्रत्यक्षतस्तावन्न भावानामर्थक्रियाभेदः प्रतीयते; एकस्मिन्नप्यनेकार्थक्रियाकारिणि तत्प्रसङ्गात्, नाप्यनुमानतः;

शङ्खपाणिव्याख्या

P. 50-25 अतो रूपादिगुणभेदादेव कार्यभेद इत्याशङ्कयति—अथेति ॥ सिद्धान्ती तु भवत्वेवम्, तथाप्युष्णस्पर्शात्तावदेकस्माद्दाह-पाककार्यभेदोऽस्ति; अतो विपक्षादव्यावृत्तिर्हेतोस्तदवस्थैवेत्याह—काममिति ॥ न च- पाक-
P. 51-1 दाहयोर्भेदोऽसिद्ध इति–वाच्यमित्याह—तौ चेति ॥ यद्यपि वह्निसंयोगविक्रिया पाकोऽपीति तद्विक्रियात्वसामान्यमुभयत्राप्येकमस्ति, तथाप्यवान्तरभेदस्तयोर्लोकप्रसिद्धत्वान्नापलपनीय इत्यर्थः । न केवलं लोकसिद्धमेकस्मात् कार्यभिन्नत्वम्, अपि तु वादिभिरपि सर्वैरिदमिष्ट-
P. 51- 2 मित्याह—कर्मेति ॥ मुक्तस्येषोर्गतिकर्म पूर्वापरदेशाभ्यां विभाग-संयोगयोर्वेगाख्यस्य संस्कारस्य हेतुरसमवायिकारणम्; आत्मा चेच्छा-सुखादीनां हेतुः समवायिकारणमिति कणभुजेष्टम् । तथा सत्त्वादयः प्रत्येकमभेदा अविद्यमानभेदांशा अङ्गलाघवार्थप्रकाशादीनां हेतव इति

अभिप्रायप्रकाशिका

अनैकान्तिकत्वादित्यर्थः । यदि नार्थक्रियाभेदाद्वस्तुभेदः, कथं तर्हि भिन्नप्रवृत्तिनिमित्तः 'पचति' 'दहति' इत्यादिव्यपदेशभेद इति ? अत आह—व्यपदेशेति ॥ एकस्याप्यवस्थाभेदापेक्षो व्यपदेशभेद इत्यर्थः ॥

तत्रापि कारणभेदादेव कार्यभेदः, ततो नानेकान्ततेति शङ्कते—अथेति ॥ रूपादिधर्मवत एकस्यावयविनोऽनङ्गीकाराद्रूपादिपरमाणुपुञ्जमात्रत्वाद्रूपात् प्रकाशः, स्पर्शाद्दाह इति कारणभेदोऽस्तीत्यर्थः । एकस्थूलनीलाभासस्य विकल्पप्रत्ययस्य स्वव्यतिरिक्तरूपविषयनिर्विकल्पप्रत्यक्षस्येव प्रमात्वानुमानसम्भवात् परमाणूनामतीन्द्रियत्वेन तद्विषयत्वायोगात्, तदतिरेके च पुञ्जस्य संज्ञान्तरेणावयविस्वीकारप्रसङ्गादेकस्यैवावयविनो रूपादिधर्मवतोऽनेकार्थक्रियाकारित्वमेष्टव्यम्; तथापि तन्मतमभ्युपगम्य स्पर्शमात्रसाध्यकार्याभ्यां व्यभिचार इत्याह—काममिति ॥ वह्निसंयोगतण्डुलादिद्रव्यस्वरूपादिपरावृत्तिलक्षणविक्रियारूपसाम्याद् दाह-पाकौ न भिन्नाविति, अत आह—तौ चेति ॥ अनुभवविरोधान्नैवमित्यर्थः ॥ वादिसिद्धमुदाहरणान्तरमाह—कर्म चेति ॥ कार्यं भवत्समवायि-

शङ्करपाणिव्याख्या

योज्यम् । क्वचिदभेदादिति पाठः । तत्रायमर्थः—न च ते भिन्ना इति वाच्यम्; कुतः? प्रत्येकं सत्त्वरजस्तमसामभेदात् । अतश्चैकस्मादपि कार्यभेदोऽस्तीति भावः । तत्र सत्त्वं लाघवादीनाम्, रजः प्रवृत्ति-दुःखानां हेतुरिति कपिलस्येष्टम् । तथा रूपादयः प्रत्येकं स्वगोचराणां ज्ञानानां हेतव आलम्बनप्रत्ययाः रूपं रूपक्षणानाम्, रसो रसक्षणानां चोपादानप्रत्यय इति बौद्धमतम् ॥

ननु नार्थक्रियाभेदमात्राद् भावभेदं ब्रूमः, अपि तु यतो यस्य P. 51-4
भेदः, तत्रादृष्टत्वेनासम्भावनी याऽर्थक्रिया, तत इति परश्चोदयति—नन्विति ॥ अत्रैवोदाहरणमाह—यथेति ॥ यथा बधिरे सत्यपि चक्षुषि शब्दबुद्धिरदृष्टत्वेनासम्भावनी, ततश्चक्षुषो भिन्नं श्रोत्रं कल्प्यत इत्यर्थः । नन्वेवमन्यत्र कथं भेदसिद्धिरित्याशङ्क्याह—प्रायेणेति ॥ परस्परासम्भ- P. 51-7
वीनि कार्याणि येषां ते तथोक्ताः, सर्वत्रैव प्रायेणान्यकार्यमन्यत्र न दृश्यते; अतो भेदसिद्धिरित्यर्थः । शरभृङ्गयोर्विशरणैककार्ययोर्निवृत्त्यर्थं प्रायग्रहणम् । कथं तर्हि तयोर्भेद इत्याशङ्क्य विशरणैककार्यत्वेऽपि प्रायेण परस्परासम्भवीनि कार्यान्तराणि तयोरपि सन्तीति प्रायेणेति पुनर्योज्यम् ॥

अभिप्रायप्रकाशिका

कारणस्य भेदो नासमवायिकारणस्येति, अत्राह—आत्मा चेति ॥ साङ्ख्यान् प्रत्याह—सत्त्वादयश्चेति ॥ तत्तल्लाघवं प्रकाशः सुखमिति सत्त्वस्यैकस्य कार्याणि, चलनमुपष्टम्भनं दुःखमिति रजसः, गौरवं मोहः प्रतीघात इति तमसः । बौद्धानामपि संमतं व्यभिचारस्थलमाह—रूपादय इति ॥ असम्भवित्वमेव दर्शयितुं विशिनष्टि—अदृष्टाया इति ॥ बधिरे चक्षुषि सत्यपि तत्र तस्मिन् चक्षुष्मति बधिरेणादृष्टायाः शब्दबुद्धेर्हेतोः श्रोत्राख्येन्द्रियस्य भेदो यथाऽनुभूयत इत्यन्वयः ॥ एतावता कथं सर्वभावानां भेद इति? तत्राह—परस्परेति ॥

शङ्खपाणिव्याख्या

सिद्धान्ती त्वाह—अथेति ॥ अन्यकार्यस्यान्यत्रासम्भवः कथं
P. 51- 8 प्रत्येतव्य इत्यर्थः । पर आह—नन्विति ॥ तद् दूषयति—नेति ॥ अद्वैतिनामेकत्रैव सर्वं कार्यं दृश्यते; अतो नान्यकार्यस्यान्यत्रादर्शनमस्ति । तत्र सति भेदेऽन्यकार्यमन्यत्र न दृश्यत इति वाच्यम् । एवं च भेदे सति कार्यादर्शनम्, अदर्शने सति भेद इतीतरेतराश्रयः स्यात् । अतो न कार्यभेदाद् भावभेदानुमानमित्यर्थः ॥

अथ सत्यपि पटे घटकार्यस्यादृष्टस्य पश्चाद्धेतोर्घटस्य भेदोऽनुमीयते; तयोरभेदे हि पटकार्यवत् घटकार्यमपि पूर्वमेव दृश्येतेति
P. 51-10 परमतमाशङ्कयति—अथेति ॥ तद् दूषयति—तदिति ॥

एकस्यापि पुरुषस्य क्रमेणानेकभोजनाद्यर्थक्रियां कुर्वतः पूर्वमदृष्टा क्रिया पश्चाद् दृश्यते; न च तस्य भेद इत्यर्थः । नन्वत्यन्तमभेदे पुरुषस्य तस्य सर्वार्थक्रियासमर्थत्वात् समर्थस्य च क्षेपायोगात् युगपत् सर्वकार्यदर्शनं स्यात्; अतः कस्यचित् कार्यस्य पूर्वमदर्शनं पश्चाच्च दर्शनं पूर्वावस्थातोऽविशेषान्न स्यात्; अतोऽस्ति पूर्वस्मात् कश्चिद्विशेषः, यदागमे पूर्वमदृष्टं कार्यं पश्चात् दृश्यते; अतो नैकान्तेन भेदः, नाप्य-
P. 51-13 भेदः इत्याशङ्कयति—स्यादिति ॥ अत्रोत्तरमाह—न तर्हीति ॥ यदि विशेषमात्रभेदेऽपि कार्यभेदो घटते, न तर्हि कार्यभेदो वस्त्वभेदं

अभिप्रायप्रकाशिका

सिद्धान्त्याह—अथेति ॥ स्वोक्तं स्मारयति पूर्ववादी—नन्विति ॥ अद्वैतवादिनामदर्शनमसिद्धमिति परिहरति—न तर्हीति ॥ एवं च सति परस्पराश्रयत्वं च स्यादित्याह—तत्रेति ॥

पुनः शङ्कते—अथेति ॥ सत्यपि चक्षुष्यदृष्टस्य शब्दज्ञानकार्यस्य पश्चाद्दर्शनात्तत्कारणश्रोत्रस्य रूपज्ञानकारणात् चक्षुषो भेद इत्यर्थः । एकस्मिन्नपि तरौ कुसुमदशायामदृष्टस्य फलस्य दर्शनेऽपि भेददर्शनान्नैवमिति परिहरति—तदसदिति ॥ कालावस्थादिविशेषविशिष्टतया तत्रापि नात्यन्ताभेद इति शङ्कते—स्यादेतदिति ॥ तर्हि धर्मिभेदकल्पनाद्धर्मकल्पनं लघीय इति न्यायेनैकस्मिन्नपि वस्तुनि कारणे तत्तदवस्थाविशेषादिधर्मभेद एव कल्पनीयः, न वस्तुभेद इति परिहरति—न तर्हीति ॥ एवमपि तर्हि वस्तु-

शङ्खपाणिव्याख्या

बाधते, किं तु कार्यभेदात् वस्त्वभेदानुपमर्देन विशेषमात्रभेदोऽनुमीयेत, अभिन्नेऽपि वस्तुनि तावतैव कार्यभेदोपपत्तेः। अतो यदुक्तं कार्यभेदाद्वस्तुभेद इति, तदेवं सति विघटितमित्यभिप्रायः ॥

ननु विशेषमात्रभेदेऽपि नाद्वैतसिद्धिरित्याशङ्क्याह—तच्चेति ॥ P. 51-14 सत्यम्, विशेषमात्रं भिन्नमिच्छामः, किं तु न तत्सत्यम्; अपि तु काल्पनिकम्; तच्चावस्तुत्वान्न द्वैतमावहतीति भावः। ननु सत्यमेव तत् किं न स्यात्? इत्याशङ्क्याह—यस्त्विति ॥ वस्तुवृत्त्या सतस्तस्य विशेषमात्रस्यायोगादघटमानत्वादित्यर्थः। तत्र हेतुमाह—तत्त्वेति ॥ तद्भावस्तत्त्वम् =अभिन्नत्वम्; वस्तुतो विशेषाणां भिन्नत्वाभिन्नत्वयोरसम्भवादित्यर्थः॥

ते चेद्वस्तुनो न भिन्नाः, ततो वस्त्वेव परम्, न ते पृथक् सन्ति। अथ भिन्नाः, न तर्हि वस्तुनः, असम्बन्धात्। न हि भिन्नयोस्तादात्म्यमर्बुदहैमनयोरिव। नापि समवायः; सोऽपि हि समवायिभ्यां भिन्नोऽभिन्नो वा स्यात्। यद्यभिन्नः, न पृथगस्ति। भिन्नश्चेत्, न तयोः स्यात्, असम्बन्धात्; तस्यापि ताभ्यां समवायान्तरकल्पने चानवस्था। भिन्नोऽपि समवायस्ताभ्यां स्वत एव सम्बन्धश्चेत्, तावेव तथा स्ताम्; किं तेन? असम्बन्धो हि सम्बन्धमपेक्षते, न सम्बन्धः, प्रदीप इव प्रदीपान्तरमिति चेत्, समवायिनोरसौ सम्बन्धो नात्मनः; तेनात्मनः समवायिभ्यां सम्बन्धाय समवायान्तरापेक्षा युक्तेति युक्ताऽनवस्था। प्रदीपोपकृतं चक्षुरितरवत् प्रदीपमप्युपलम्भयतीति युक्ता तत्र प्रदीपान्तरानपेक्षेति। किं च सम्बन्धश्चेत् सम्बन्धान्तरं नापेक्षते, संयोगोऽपि

अभिप्रायप्रकाशिका

भेदः सिद्धः; धर्माणापि वस्तुत्वादिति, अत आह—तच्चेति ॥ कल्पनाविषयत्वम्। कुत इति? अत आह—वस्तुसत इति ॥ विशेषाणां विशेषवतोऽन्यत्वे तत एव कार्योत्पत्तेस्तस्याकिंचित्करत्वेनावस्तुत्वापाताद् अनन्यत्वे चान्यतरमात्रावशेषान्न भेदसिद्धिरिति भावः ॥

नानुगत एको भावः तत्तत्क्रमभाविकार्यानुरूपकालादिसहकारिभेदो हि तत्तद्विशेषयोगीति मन्यामहे, किन्तु प्रतिक्षणं भाव एव स्वरसभङ्गुर-

शङ्खपाणिव्याख्या

नापेक्षेत समवायम्। न चैवं वैषम्यम्। किं च समवायः स्वसम्बन्धिभ्यां समवायेनान्येन सम्बध्यते; सम्बन्धत्वात्, संयोगवत्। एवं सोऽप्यनेनेत्यनवस्था। किं च इह प्रत्ययहेतुः समवायः; न च गोत्वादिष्विहप्रत्ययोऽस्ति। न हि 'इह गवि गौः' इति प्रत्ययः, अपि तु 'गौरयम्' इति सर्वेषाम्। अतः समवायो नास्तीति न सोऽपि वस्तुविशेषयोः सम्बन्धः। नापि संयोगः। सोऽपि हि संयोगिभ्यामभिन्नश्चेन्नास्ति; भिन्नश्चेत्, केन ताभ्यां सम्बध्येत? समवायेनेति चेत्, स निरस्तः। न च स्वतन्त्रः सम्भवति। तस्मात् सोऽपि नास्ति। तेन संयोगोऽपि न वस्तुविशेषयोः सम्बन्धः। अतो वस्तुनो भिन्नोऽपि विशेषो न भवतीति सूक्तम्॥

एवं वस्त्वेकत्वेऽपि काल्पनिकविशेषमात्रभेदात् कार्यभेदं स्थिरवादिनः प्रत्यापाद्य क्षणिकवादिनं प्रति विशेषेण तमाह—यस्त्विति॥ P. 51-15

तुशब्दो विशेषार्थः। यस्तु क्षणिकत्ववादी तत्त्वमेवाभेदमेव सत्त्वाद्यात्मना विशेषस्य न मन्यते—विशेषा एवात्यन्तविलक्षणाः, क्षणिकं वस्तु, न त्वेकजात्यादि स्थायि किंचिदस्तीति मन्वानः—तस्य कारणस्वभावानुवर्ती कार्यस्वभाव इति व्रीहिक्षणानां तत्सामान्यरूपेणासत्यभेदे तेभ्यः कथमेकरूपव्रीह्यङ्कुराख्यकार्योत्पादः? अथात्यन्तभिन्नानामपि तेषां कल्पिताज्जातिरूपेणाभेदात् कार्यतुल्यतोच्यते, एवं तर्हि कारणैकत्वेऽपि कल्पितादेव भेदात् कार्यभेदसिद्धेः कार्यभेदसिद्धये कारणभेदकल्पना गुर्वी। वृथैवेत्यर्थः। निरन्वयो विनाशो येषामिति विग्रहः। क्षणिकवादिनां घटनाशे घटत्वस्य घटान्तरे, मृदश्च स्वकपालादावन्वयो नास्तीति निरन्वय इत्युच्यते॥

अथ भिन्नेभ्योऽपि चक्षुर्विषयसमनन्तरप्रत्ययेभ्य एकज्ञानोत्पत्तेर्न कार्याभेदाय कारणाभेदोऽपेक्ष्यते, तेनात्यन्तभिन्नेभ्योऽपि क्षणेभ्यस्तुल्य-

अभिप्रायप्रकाशिका

स्तद्विशेषात्मा जायते, तेन विशेषो नाम न भावातिरिक्तः कश्चिदिति सुगतमतमाशङ्क्य परिहरति—यस्त्विति॥ कार्येषु दधि-तैल-घटादिषु सत्त्वद्रव्यत्वादिरूपेणाभिन्नस्वभावतादर्शनात् कारणेष्वपि क्षीर-मृद्-तिलादिष्वभिन्नस्व-

शङ्कपाणिव्याख्या

रूपं कार्यमुत्पत्स्यत इत्युच्यते, तथा सति कार्यस्वभावस्य कारणस्वभावानुवर्तित्वव्यभिचाराद् यथा भिन्नादप्येकरूपं कार्यम्, तथैकस्मादपि कार्यभेदोपपत्तेर्न कार्यभेदसिद्धये कारणभेदः कल्प्यः, तदेतदाह—अथेति॥ P. 51-16

यदपि भिन्नानामेककार्यत्वे चक्षुराद्युदाहृतम्, तदपि तस्यैवासिद्धम्। तथा हि—चक्षुषो रूपग्रहणनियमे, समनन्तरज्ञानस्य ज्ञानात्मत्वे, विषयस्य च तदाकारत्वे व्यापार इति वदतश्चक्षुरादिकारणव्यापाराणां भिन्नो विषयस्तेनैवोक्तः। तस्मान्न तत्रापि कार्याभेद इत्याह—अपि P. 26-19 चेति॥ कार्यसाम्यस्य कारणाभेदानपेक्षत्वे दोषान्तरमाह—यदि चेति॥ P. 61-22 तर्हि व्रीह्यङ्कुरान्मृत्प्रच्छन्नस्य व्रीहेरनुमान न स्यादित्यर्थः। कुत इत्याह—भिन्नेति॥ यवक्षणादपि व्रीह्यङ्कुरस्योत्पत्तिसंभवादित्यर्थः। एतदेवोपपादयति—हेत्विति॥ कार्यसाम्ये हेतुसाम्यं चेन्नोपयुज्यते, ततो P. 51-3 यथैकस्माद् व्रीहिक्षणादत्यन्तभिन्नाद् व्रीहिक्षणान्तरात् व्रीह्यङ्कुरो भवति, तथा यवक्षणादपि स्यात्, अभेदकल्पनां विना तयोरविशेषादिति भावः॥

अभिप्रायप्रकाशिका

भावताऽनुमातुं शक्या, इति न कार्यभेदात् कारणभेदानुमानप्रतिपक्षत्वादित्यर्थः। कार्यभेदः काल्पनिककारणभेदात् सम्भवतीति शङ्कते—अथेति॥ तर्हि कारणाभेदेऽपि कल्पितभेदात् कार्यभेदसिद्धेर्न वास्तवः कारणभेदः कल्पनीयः; गौरवादिति परिहरति—हन्तेति॥ भिन्नेभ्योऽपि कारणेभ्य एककार्योदयदर्शनाद् न कार्यभेदः कारणभेदाक्षेपक इति शङ्कते—अथेति॥ यथा कारणेऽविद्यमानोऽप्यभेदः कार्येऽभ्युपेयते, एवं भेदोऽप्यविद्यमानानः कारणे कार्ये कस्मान्नेष्यत इति परिहरति—यथा तर्हीति॥ किञ्चानेकेभ्यः कारणेभ्य एककार्योत्पत्तिस्तव न सिध्यति; कारणव्यापाराणां भिन्नविषयत्वाङ्गीकारात्॥

अथ काल्पनिक एव भेदः कार्ये, तर्हि कारणभेदोऽपि काल्पनिकः किं न स्यात्? इत्याशयवानाह—अपि चेति॥ कार्यभेदेन कारणभेदो नापेक्ष्यत इत्यस्मिन् पक्षे दोषान्तरमाह—यदि चेति॥ न कार्याद् धूमजातीयाद् वह्निजातीयस्य हेतोरनुमानं भवेदित्यर्थः। तदभ्युपगमप्रदर्शनेनासम्भवमेव स्पष्टयति —हेत्वभेदश्चेदिति॥

शङ्खपाणिव्याख्या

तत्रावश्यं कार्यसाम्याय हेत्वभेदकल्पना त्वयाप्यास्थेयेति
P. 51-3 तुल्यत्वमावयोरित्युक्तं प्रतिष्ठापयति—तत्रेति ॥ अत्र परश्चोदयति—स्यादिति ॥ यदर्थक्रियाकारि, तत् सत्; नेतरच्च शशशृङ्गादि। भेदोऽपि चेदर्थक्रियाहेतुः, न तर्हि कल्पितः, किं तु सन्नेवेत्यर्थः।
P. 52-4 सिद्धान्ती त्वाह—तुल्यमिति ॥ अभेदोऽपि तव कार्यतुल्यत्वहेतुर्न कल्पितः स्यादित्यर्थः ॥

अथ मतं नार्थक्रियाभेदमात्राद्वस्तुभेदं ब्रूमः, किं तु विरुद्धार्थ-
P. 52-6 क्रियाभेदात्। न ह्यसावेकत्र सम्भवति, तदाह—योऽपीति ॥ एतदेव प्रपञ्चयति—तथा हीति ॥ तस्योत्तरमाह—तस्यापीति ॥ ननु विरुद्धार्थक्रियाभेदाद्भावभेद उक्तः। न च दाह-पाकौ विरुद्धौ। अतः कथमिदमुत्तरमित्यभिप्रायेण पृच्छति—कथमिति ॥

P. 52-9 सिद्धान्ती त्वस्योत्तरत्वमुपपादयति—इदमिति ॥ यदि तावदेकत्र जनन-मरणादीनामसम्भवो विरोधशब्दस्यार्थः, सोऽद्वैतिनामस्माकमसिद्धः। अस्माकं हि विरुद्धं च सर्वमेकत्रात्मनि समवेतम्। अथ मिथो व्यवच्छिन्नता विरोधः, जनन-मरणादयश्च तथेत्युच्यते, ततोऽन्यतो

अभिप्रायप्रकाशिका

अथैतद्दोषपरिहाराय काल्पनिकाभेदः कारणस्य कल्प्येत, तथा कार्यभेदाय कारणभेदोऽपि काल्पनिक एवाभ्युपेय इत्युपसंहरति—तत्रेति ॥ अर्थक्रियाकारी चेद् भेदस्तत्र, तर्हि तत्र कथं कल्पित इत्याशङ्क्याह—अभेदेऽप्येतत्समानमिति ॥ परिहरति—स्यादेतदित्यादिना ॥

इदानीं विरुद्धधर्मसंसर्गाद् भेदोऽवसीयत इति शङ्कते—तदुत्तरत्वेन पुनः, श्लोकं योजयितुम्—योऽपीति ॥ ननु जननमरणादिवन्न दाह-पाकयोर्विरोध इति शङ्कते—कथमिति ॥ किं सहानवस्थानलक्षणो विरोधः ? किं वाऽन्योन्याभाववत्त्वम् ? उतान्योन्याभावात्मता? किं वा वध्य-घातकभाव इति विकल्प्य क्रमेण दूषयति—को विरोधार्थ इत्यादिना ॥ सोऽसिद्ध इति ॥ अद्वैतवादिभिः सर्वेषां जननादिधर्माणामेकस्मिन् वस्तुनि कल्पितत्वाङ्गीकारादित्यर्थः।

शङ्करपाणिव्याख्या

वस्तुभेदसिद्धिः। एकस्यापि वह्नेर्मिथो व्यवच्छिन्नयोर्दाह-पाकयोर्दर्शनादित्यर्थः। न च तयोर्मिथो व्यवच्छिन्नत्वमसिद्धम्; नानात्वेन तत्सिद्धेः। अतस्तथाभूताच्चेद्वस्तुभेदः, ततोऽनेकरूपरसादिधर्मकपृथिव्याद्यपि नैकं स्यादित्यर्थः। अथ हर्षः शोकाभावात्मकः, शोकश्च हर्षाभावात्मक इत्ययमनयोर्विरोधः, तत्र तौ चेदेकत्र युगपत् स्याताम्, ततः शोकस्य भावः, तदभावात्मकस्य हर्षस्य भावाच्चाभावः। तथा हर्षस्यापि भावः, हर्षाभावात्मकस्य शोकस्य भावाच्चाभावः। न चैकत्रैकस्यैकदा भावाभावौ सम्भवतः। अतस्तयोरीदृशाद्विरोधात् तदाश्रयभूतभावभेदोऽवसीयते। एवं जननादिभ्योऽपीति चेत्, तदसत्; एवं हि परस्पराभावात्मकत्वाद्धर्मावेव भावरूपौ न स्तः; कुतस्तयोर्विरोधाद्भावभेदावगतिः? तथा खपुष्पादिषु हर्ष-शोकयोरभावादन्योन्याभावात्मकयोस्तयोः प्रसङ्गः॥

तदेतत्सर्वमाह—अथेति॥ अथ वध्य-घातकभावोऽनयोर्विरोध P. 52-10

अभिप्रायप्रकाशिका

कथं तत्रान्योन्याभावत्वमिति? तत्राह—न हीति॥ एवं सति न केवलमनैकान्तिकत्वम्, अतिप्रसङ्गश्च स्यादित्याह—ततश्चेदिति॥

तथापि कथं ततो भेदसिद्धिरिति? तत्राह—नैकस्मिन्निति॥ जनन-मरणादेः परस्परभावात्मत्वमेवानुपपन्नम्, प्रतियोगिनिरूपणाधीननिरूपणत्वेन प्रतीतौ परस्पराश्रयत्वप्रसङ्गादिति दूषयति—तदसदिति॥ दोषान्तरमाह—खपुष्पेति॥ उभयाभावात्=जन्म-विनाशयोरभावात्। उभयप्रसङ्गः=उभयोर्जन्म-विनाशयोः प्रसङ्गः। जननाभावो (नाशः,) नाशाभावो जन्मेत्यङ्गीकारादित्यर्थः॥

दूषयति—तत्रापीति॥ न केवलमेककालत्वमेव, अपि त्वेकाश्रयत्वमप्युपेयमित्याह—नान्याधिकरणमिति॥ कथं तर्हि वध्य-घातकभाव इति? तत्राह—तस्मादिति॥ ततः किं फलितमिति? तत्राह—एवं चेति॥

मा भूद्धर्माणां परस्पराभावात्मत्वं विरोधः, तथाप्येको भावः, अन्यस्तदभाव इति विरुद्धधर्माश्रयाद्धर्मिणो भेद इति शङ्कते—अथेति॥ एकस्मि-

शङ्खपाणिव्याख्या

इत्युच्यते, तदपि न; यतो जातो घातको वध्यं हन्ति, न च भिन्नाधिकरणे, इत्यतो भूत्वैव वध्येन चैकाधिकरणे वध्यं घातको हन्यात्। ततश्चैकाधिकरणयोरेव वध्य-घातकभावाद् न ततोऽधिकरण-भेदावगतिः॥

अथापि स्यात्, तथाप्येकाधिकरणत्वदर्शनान्नाधिकरणभेदानु-मानमव्यभिचारम्, एकाधिकरणयोरपि वध्यघातकयोर्दर्शनादित्याह —अथेति॥ न विद्यते व्यभिचारोऽस्येति विग्रहः। अथ भावाभावरूपौ धर्मौ विरोधिनौ; यथा—नित्यत्वानित्यत्वे, मूर्तत्वामूर्तत्वे च; तयोरेकधर्मत्वासम्भवाद्धर्मिभेदोऽवसीयत इत्युच्यते, तदपि न; न हि यो धर्मो यत्र वर्तते, स तमवश्यं व्याप्नोति। न हि रथा रथसंयोगा वा नभो व्याप्नुवन्ति पृथिव्यादींश्च, रथानामवच्छिन्नत्वात् अवच्छिन्न-रथाश्रयत्वेन तत्संयोगानामप्यवच्छिन्नत्वात्। यथा रथादयस्तत्संयो-गाश्च, एवमन्येऽपि येऽवच्छिन्नाः। ये च नित्यानित्यत्वादयो धर्माः, ते नानवच्छिन्नाः। अत एवानन्तात्माख्यमर्थमाश्रयन्तोऽपि न तं व्याप्नुवन्ति। ततश्च तेषां नित्यत्वात्मकभाव-तदभावौ न विरुध्येते। अतो न भावाभावयोर्विरोधात् तद्धर्मिणो भेदावगतिरिति॥

P. 52-13 तत्सर्वमाह—अथेति॥ ननु संयोगादेरव्यापित्वादेकत्र व्योम्नि भावाभावौ युक्तौ, नित्यत्वं त्वात्मनो व्यापि। ततश्च तदभावस्या-नित्यत्वस्य तदेकाश्रयत्वासम्भवादात्मनो भिन्नं क्षित्याद्याश्रयः प्रतीयत

अभिप्रायप्रकाशिका

न्नपि धर्मिणि धर्माणां भाव-तदभावात्मकानामुपलम्भाद् नैवमिति वक्तुं तेषाम-व्याप्यवृत्तितामाह—तदपि नेत्यादिना॥ संयोगानामव्यापकत्वं संयोगि-नामव्यापकत्वेन साधयितुमाह—रथादय इति॥ न केवलं व्यापकवृत्तिषु, अव्यापकवृत्तिष्वप्येतत् समानमित्याह—अन्यान् वेति॥ न च—व्यापकेषु धर्मेषु त्वेतन्न सम्भवतीति—शङ्कनीयम्; व्याप्यवृत्तीनामपि श्यामतादीनामे-कस्मिन्नपि मुखे भावाभावयोर्मणिकृपाणाद्युपाधिभेदेषु चोपलम्भात्॥

शङ्खपाणिव्याख्या

एव, अत्र ब्रूमः—स्यादेवं यद्यनित्यत्वं नाम धर्मस्तत्त्वतोऽस्ति, मायामात्रं तु तत् क्षित्यादिरूपेणात्मनि कल्पितम्। न च मायायां विरोधोऽस्ति; न ह्येकस्य चन्द्रमसो द्वित्वं विरुध्यत इति भावः ॥

मतान्तरमाशङ्कयति—यस्त्विति ॥ व्यतिरेकमाह—एकत्व इति ॥ P. 53-3
अव्यवस्थामाह—तथा चेति ॥ अन्यथेति ॥ यदि तिलात् तैलमेव स्यात्, P. 53-6
न दधि, यदि चैकस्मिन् नश्यतीतरन्न नश्येत्, तदेत्यर्थः। अत्र परवचनं पठति—तदिति ॥ सर्वं सर्वत्रोपयुज्येतेति; सर्वं पयस्तिलादि P. 53-7
सर्वत्रैव तैल, दध्यादिषु हेतुत्वेनोपयुज्यतेत्यर्थः ॥

एवमाशङ्कय दूषयति—तस्यापीति ॥ यदि कार्यनानात्वं व्यवस्था तया तिलानां पयसश्च भेदं प्रतिजानाति, तदेदमेवोत्तरमित्यन्वयः। ननु क्षीराद् दध्नो जन्म नान्यत इतीयं व्यवस्थोक्ता, न कार्यनानात्वमात्रम्; अतः कोऽयमनुक्तोपालम्भः? सत्यमुक्तम्; किं तु तिल-पयसोरन्यत्वे सतीयं व्यवस्था, व्यवस्थया च तयोरन्यत्वसिद्धिरितीतरेतराश्रयग्रस्तत्वादयुक्ता। अतो व्यवस्थां वदता कार्यनानत्वमेव वाच्यमित्यभिप्रेत्येदमुक्तमित्यदोषः ॥

अथ पूर्वोक्तामेव व्यवस्थामाह, तत्रोच्यते—अथेति ॥ व्यवस्था P. 53-9
हि भावानामन्यत्वसाधनम्। सिद्धं च साधनं भवति, नासिद्धम्। तद्यदि पयसो दध्नो जन्म नान्यत इति व्यवस्थाया लक्षणं स्यात्, ततो यदन्यत्वं साध्यत्वेनासिद्धम् तत् साधनभूताया व्यवस्थाया लक्षणमनुप्रविशेत्। न च तद्युक्तम्; साध्यत्वेनासिद्धस्यान्यत्वस्यानुप्रवेशे तस्या

अभिप्रायप्रकाशिका

ब्रह्मण्यपि परमार्थतो भिन्नेऽनाद्यविद्योपाधिकार्थक्रियाव्यवस्थातो भेदं साधयितुं तद्व्यवस्थास्वरूपमाह—यस्तु मन्यत इत्यादिना ॥ तमेव व्यवस्थाया अयोगमाह—तथा चेति ॥ व्यवस्थाङ्गीकारे तु भेद एवापतेदित्याह—अन्यथेति ॥ तदेतद्विकल्प्य दूषयति—यदीति ॥ आद्यः कल्पो दाह-पाकविभागेनेत्यनेनैव दत्तोत्तरम्। यदि भेदं प्रतिपद्येत, तस्यापीदमेवोत्तरमिति ग्रन्थयोजना। द्वितीयविकल्पमुत्थापयति—अथेति ॥ अन्योन्याश्रयेण दूषयति—

व्यवस्थाया एवासिद्धिप्रसङ्गात् । ततश्चेतरेतराश्रयः स्यादिति भावः । तस्माद् दधिजननशक्तिस्तदभावश्च व्यवस्था । ततस्तिल-पयसोर्भेदो गम्यते । न ह्येकत्र विषये दधिन्येकस्य पयसः शक्त्यशक्ती युज्येते । अतः पयसः शक्तिः, तिलानामशक्तिरिति तयोर्भेदसिद्धिरिति वाच्य-
P. 53-11 मित्याह—तस्मादिति ॥ यस्मात् पूर्वोक्ता व्यवस्था दुर्घटा, तस्मादियं वाच्येत्यर्थः ॥

P. 53-12 सिद्धान्ती त्वाह—स चेति ॥ अयं च हेतुरनन्तरमेव । अतो नैकस्य भावाभावविरोध इत्यत्रास्माभिर्निरस्तः । अतो नेदमपि व्यवस्थालक्षणमिति भावः । पूर्वोक्तमेव भावाभावयोरेकत्राविरोधं
P. 53-13 दृष्टान्तेन द्रढयति—यथेति ॥ यथा दीर्घकाला देवदत्तादयः परिमित-कालैर्बाल्य-यौवनादिभिः सम्बध्यमानास्तत्काले तद्धर्माणः पश्चादतद्धर्माणो भवन्ति, न विरोधस्थानत्वं भजन्ते, तथा परिमितदेशैः रथ-तत्संयोगादिभिरिव विपुलदेशाः पृथिव्यादयः, अनन्ताश्चात्मादयोऽ-नित्यत्वादिभिः सम्बध्यमाना न विरोधपदभाज इत्यर्थः ॥

P. 54-14 अत्राशङ्कयति—कथमिति ॥ धर्मस्य धर्मिणोऽव्यतिरेकात्तस्या-प्यनन्तत्वमुचितमिति भावः । अत एवाव्यतिरेकपक्षानभ्युपगमेन ताव-दुत्तरमाह—व्यतिरेक इति ॥ यद्यनन्तादव्यतिरिक्तो धर्मः स्यात्,

अभिप्रायप्रकाशिका

नान्यत्वमिति ॥ तल्लक्षणम्=व्यवस्थालक्षणम् तस्या असिद्धिप्रसङ्गादिति ॥ अन्यत्वस्याद्याप्यसिद्धत्वात्तद्विशेषिता व्यवस्थापि न सिध्येदित्यर्थः । इदानी-मिमां व्यवस्थां दूषयति—स चेति ॥ पूर्वोक्तमेव निरासमुक्तानुक्त-निदर्शनाभ्यां स्पष्टयति—यथेति ॥ दीर्घकालाः=आत्मादयः, मितकालैः= सुख-दुःखादिभिः, परिमितदेशैः=स्पन्दन-तत्संयोगादिभिः, विपुलदेशाः= पृथिव्यादयः, अनन्ताश्च=आकाशादयः ॥

व्योमादौ निरवयवे धर्माणामव्याप्यवृत्तिता न युक्तेति शङ्कते— कथमिति ॥ परिहरति—व्यतिरेक इति ॥ व्योमादेर्व्यापित्वेऽपि धर्माणां ततो व्यतिरिक्तत्वादव्यापित्वेनोपलम्भाच्च न दोष इति भावः । यस्तु व्योम-

शङ्कपाणिव्याख्या

सोऽपि तद्वदेवानन्तः स्यात्। व्यतिरेके तु तस्य मिथ्यात्वे वा अनन्तस्याप्यन्तवद्धर्मासम्भावना नास्तीत्यर्थः। अव्यतिरेकपक्षेऽपि सा नास्तीत्याह—अव्यतिरेकेऽपीति॥ दीर्घकालादव्यतिरिक्ता धर्मास्तद्वदेव दीर्घकाला न, पुनर्मितकाला भवन्ति। अतस्तथैवानन्तस्याप्यन्तवान् P. 53-15 धर्मो भविष्यतीत्यर्थः॥

यस्तु क्षणिकवादी दीर्घकालमर्थं न प्रतिजानाति, तं प्रति दृष्टान्तासिद्धौ तेन दृष्टान्तेन नैकत्र भावाभावयोः समावेशः सिध्यतीत्याशङ्क्य तं प्रत्येकत्र भावाभावयोः समावेशं दर्शयितुं पूर्वोक्तमेव श्लोकार्धं पुनर्योजयति—योऽपीति॥ तद्विवृणोति—एक इति॥ एको वह्निक्षणः P. 53-16

अभिप्रायप्रकाशिका

कार्यादिवदपि प्रतीतिसम्भवान्न प्रतीतिमात्रेण तुष्यति, तं प्रत्याह—अनिर्वचनीयत्वे वेति॥ धर्म-धर्मिणोरभेदेऽपि नित्यत्वानित्यत्वव्यवस्था, तद्व्यापिताव्याप्यत्वव्यवस्थापि तद्दृष्टत्वादेष्टव्येत्याह—अव्यतिरेकेऽपीति॥ न च व्यापित्वेऽपि संयोगादेस्तद्वतां रथादीनां सर्वगतत्वप्रसङ्गः; तेषां सर्वमूर्तद्रव्यसंयोगाभावात्, तल्लक्षणत्वाच्च सर्वगतत्वस्येति द्रष्टव्यम्॥

यस्तु—यत् सत्, तत् क्षणिकम्, यथा प्रदीपादि, सन्तश्चामी भावा इति स्वभावहेतोः क्षणिकत्वं सर्वभावानां मन्यते, न च प्रतिबन्धासिद्धिः। तथा हि—सत्त्वं नाम भावानामर्थक्रियाकारित्वम्; सर्वभावानां सर्वज्ञविज्ञानं प्रत्यालम्बनप्रत्ययतयाऽर्थक्रियाकारित्वात्, अव्यभिचारात्, अन्यथा तस्यासर्वज्ञत्वप्रसङ्गात्। तच्चेदमर्थक्रियाकारित्वं क्रमाक्रमाभ्यां व्याप्तम्; प्रकारान्तरासम्भवात्॥

तत्र न तावत्क्रमेण स्थायिनोऽर्थे क्रियासम्भवः, तत्र सर्वकार्यं प्रति सामर्थ्ये समर्थस्य क्षेपायोगादेकस्मिन्नेव क्षणे सर्वकार्यजननादुत्तरक्षणेऽर्थक्रियासंवादसत्त्वापातात्, असामर्थ्ये तु न काचिदपि किंचिज्जनयेत्॥

स्वरूपेण समर्थोऽपि क्रमवत् सहकारिसापेक्षः क्रमेण कार्याणि करोतीति चेत्, न; विकल्पासहत्वात्। किमस्य सहकारिणः कञ्चिदतिशयमादधाति, न वा। अनाधानेऽकिञ्चित्करत्वान्नापेक्ष्येरन्, आदधानास्तु भिन्नं वाऽतिशयमा-

शङ्खपाणिव्याख्या

किंचिदेव तृण-तण्डुलादि दहति पचति च, न जलादि; तथा च तृणादीन् प्रति दाहकः पाचकश्च, जलादिषु न तथा, न च भिद्यते; तस्मादेकत्रापि शक्त्यशक्त्यादिलक्षणभावाभावधर्मदर्शनान्न ततो भावभेदावगतिरित्यर्थः। अस्मिन् पक्षे क्वचित् दाह-पाकयोर्भावः क्वचिद-

अभिप्रायप्रकाशिका

दधीरन्, भिन्नत्वे भावे सत्वन्यः, जायमानातिशये तु सति जायमानं यत्कार्यं तस्यैवार्थक्रियेति भावः। अर्थक्रियाशून्यत्वेनासन्नेव स्यात्, अभिन्नत्वे तु भाव एव जात इति पूर्वस्य नाशात् क्षणिकस्यैव कार्यत्वं प्राप्तम्। नापि यौगपद्येन; अक्षणिकस्य सर्वार्थक्रियाकारित्वात्। द्वितीयक्षणेऽर्थक्रियाभावेनासत्त्वप्रसङ्गात्। तदेवं क्षणिकात्क्रमाक्रमौ व्यावर्त्यमानौ स्वव्याप्यां सत्तामपि व्यावर्तयतीति व्याप्तिसिद्धिः सत्त्व-क्षणिकत्वयोः॥

स्यादेतत्—क्षणिकोऽपि भावोऽर्थक्रियाजननस्वाभावः, न वा। पूर्वस्मिन् किमस्य सहकारिभिः? उत्तरस्मिन्नेकक्षणेऽपि न तस्य सत्त्वमर्थक्रियाविरहादिति, न; समर्थस्यानपेक्षस्य कारणत्वोपगमात॥

न चैवं कुसूलस्थस्यापि बीजस्याङ्कुरजननप्रसङ्गः; तस्य क्षित्यादिसहभुवो बीजक्षणादङ्कुरजनकादन्यत्वात्। न च—अनपेक्षः क्षित्यादीनन्तरेण तस्मान्नाङ्कुरं करोतीति वाच्यम्; नान्तरेण तदेकसामग्रीनियतस्याभावात्, असतश्चाहेतुत्वात्, समर्थबीजक्षणसामग्रीजन्यानां च समर्थक्षित्यादिक्षणानामङ्कुरप्राग्भावनियतानां परस्परानपेक्षाणामगृह्यमाणविशेषतया सह, कुर्वतामङ्कुरं प्रति सहकारित्वाविरोधात्। न च कृतकत्वम्; सहक्रियायां कृतमित्यभावात्। न हि ते कृतं कुर्वन्ति, किमेकेन क्रियमाणमन्येऽपि कुर्वन्ति? यत्रैकमेव समर्थं परेषाम्, तत्र क उपयोग इति चेत्, सत्यं न ते प्रेक्षापूर्वकारिणः, यदेवं विमृश्याभासन्ते॥

एकं कार्यमेकस्मादुत्पद्यत इति दुर्घटम्; कारणभेदस्य कार्यभेदहेतुत्वादिति चेत्, मैवम्; सामग्रीभेदाद्धि कार्यभेदः, न सहकारिभेदात्। एककार्यकारितैव सहकारिता। तस्माद् न क्षणिकादिवत्क्षणिकाद् व्यावृत्तिः सत्तयाः, इति सत्त्व-हेतोः नासाधारणानैकान्तिकताक्षणिकत्वसाधने, यद्येषां ध्रुवभाविनः तत्र

अभिप्रायप्रकाशिका

तेषां कारणान्तरापेक्षा, यथा शर-कृपाणादीनां लौहमयत्वे, ध्रुवभावी च कृतकानां विनाश इत्यनुमानं हेत्वन्तराधीनतां वारयति। ये हि हेत्वान्तराधीनाः, न ते ध्रुवभाविनः, यथा.... ? हेत्वन्तरापेक्षत्वे तु विनाशस्य हेत्वन्तरस्य प्रतिबन्धवैकल्ययोरसम्भवात् कृतकोऽपि कश्चिन्न नश्येत् ॥

अपिच भावस्याप्यनश्वरस्वभावत्वे विनाशो न शक्यकरणः, कृशानोरिव शीतिमा। विनश्वरस्वभावत्वे च नार्थे हेतुरिति, तं प्रत्याह—योऽपीति ॥ तत्र न तावत् सत्त्वसाधनं क्षणभङ्गसिद्धावङ्गम्, असाधारणत्वात्; सन्दिग्धव्यतिरेकत्वाच्च। तथा हि—यथैवाक्षणिकात् क्रमयौगपद्यव्यावृत्त्या सत्त्वं व्यावृत्तम्, एवं सत्त्वव्यापकनापेक्षत्वापेक्षत्वव्यावृत्त्या सत्त्वं क्षणिकादपि व्यावर्तत एव। न तावत् क्षणिकं सापेक्षतया कारणम्, तस्य क्षणमात्रवर्तिनो भेद्यत्वेनोपकृतत्वानुपकृतत्वयोरसम्भवात्, अनुपकारिणि चापेक्षायोगात्। न चानपेक्षं तत् कारणम्, तथा सत्यन्तरेणापि क्षिति-पवनातेजांसि कुसूलनिहितस्यापि बीजस्याङ्कुरजननप्रसङ्गात्, अर्थात्। एवायमन्योऽङ्कुरजननसमर्थो बीजक्षणः कूसूलनिहितात् बीजक्षणाद्भवतु, स्वसन्तानपतितपूर्वपूर्वबीजक्षणपरम्परया तस्याप्युद्भवसम्भवात् कुसूलनिहितबीज एव कृषीस्यः, इति कृतपरिकर्मितभूमौ बीजावापादिप्रयत्नान्तरेण दुःखकरेण, तदेवं क्षणिकस्यापि सापेक्षानपेक्षस्य वाऽर्थक्रियानुपपत्तेरसाधारणं सत्त्वं न क्षणभङ्गसाधनायालम् ॥

अथ मा भूदसाधारणता सत्त्वस्येति, स्वरूपानुपकारसहकारिषु कार्यकारणतयाऽपेक्षाऽभ्युपेयते, तेषामपि कार्येणान्वयव्यतिरेकवत्ता, तर्ह्यनेन क्रमेण क्षणिकोऽपि भावोऽनुपकारानपि सहकारिणः क्रमवतः क्रमवतैव कार्येणानुविहितान्वयव्यतिरेकं नापेक्षिष्यते, करिष्यते च क्रमवत्सहकारिवशात् क्रमेण कार्याणि; समर्थस्याप्यपेक्षणीयासन्निधेः क्षेप उत्पत्स्यते। न च कारणतैव सत्ता, किं तु स्वरूपं नीलादेरनुभवावसितम्। तद्धि तेनैव रूपेण स्वभावव्यवच्छिन्नसत्तासु स्वार्थक्रियासूपयुज्यते, न पुनरर्थक्रियाकारितैव; स्वरूपपर्यायेणानेकार्थक्रियाकारिणो रूपभेदप्रसङ्गात्। तत्सिद्धमक्षणिकस्यापि क्रमाक्रमाभ्यामर्थक्रियोपपत्तेः सन्दिग्धव्यतिरेकमनैकान्तिकं सत्त्वसाधनमिति ॥

27

शङ्खपाणिव्याख्या

भाव इत्ययं विभागो व्याख्येयः। ननु विषयभेदादत्राविरोधो युक्तः; शक्त्यशक्ती त्वेकविषयेणैकस्य विरुद्धे इत्याशङ्क्य तदेव श्लोकार्धं पुनरन्यथा योजयति—तथेति ॥ एकोऽपि वह्निक्षण एकस्मिन्नेव दाह्ये पाक्ये च किंचित् दाहं पाकं च करोति, तेन दाहकः पाचकश्च; ततोऽन्यन्न करोतीत्यदाहकोऽपाचकश्चेति। 'न च भिद्यते' इत्यनुवर्तते। अयमेव च दाह-पाकविभागो योज्यः। एवं क्षणवादिनमेव प्रति साशङ्कमेकत्र समावेशं दर्शयितुमुदाहरणान्तरमाह—तथेति ॥ बौद्धा अभिमन्यन्ते—बीजमशक्तं चेत् क्षित्यादिसंयोगेऽपि नाङ्कुरं जनयेत्

P. 53-17

अभिप्रायप्रकाशिका

नापि ध्रुवभाविता नाशस्य हेत्वन्तरापेक्षं वारयति; असिद्धत्वात्, अनैकान्तिकत्वाद्वा। तथाहि—घटसन्तानस्य विसभागकपालसन्ततिर्ध्रुवभाविनी, न वा? न चेत्, न विनाशोऽपि घटस्य ध्रुवभाविनी। न खलु विसभागलक्षणोत्पादमन्तरेण घटविनाशमीक्षामहे पिहितचक्षुषः। तथा चासिद्धा ध्रुवभाविता विनाशस्य। अथ ध्रुवभाविनी, तस्यामेव विसभागसन्ततौ ध्रुवभाविन्यामपि मुद्गरादिहेत्वन्तरापेक्षेत्यनैकान्तिकम्।

यत्पुनर्विकल्पितम्—किं विनश्वरस्वभावः, अतत्स्वभावो वेति। तत्र किमिदं विनश्वरस्वभावत्वमभिमतम्, किं विनाशरूपत्वम्, अहोस्विन्नित्येभ्यो व्यावृत्तं विनाशार्हत्वम्? नाद्यः; परस्परपरिहारवतोर्भाव—तन्नाशयोः तादात्म्यानुपपत्तेः। द्वितीयं त्वनुमन्यामहे। न चैवमुदयानन्तरमेव निवृत्तिप्रसङ्गः; योग्यस्यापि सहकारिसमवधानसापेक्षतया क्षेपस्य समर्थितत्वात्। न च सहकारिजन्यातिशयस्य भेदाभेदविकल्पासहत्वादसम्भवः; तस्याविचारितरमणीयस्य लोकप्रसिद्धस्याप्रत्याख्येयत्वात् ॥

तदनेन प्रबन्धेन यद्यपि शक्या क्षपणकाः प्रतिक्षेप्तुम्; तथापि तन्मतमवलम्ब्य जनकत्वाजनकत्वविरोधं प्रतिबन्दिन्यायेन परिहरति—एकोऽपीति ॥ एकस्मिन्नेव विषये सामर्थ्यासामर्थ्यभेदाद्वस्तुभेदं ब्रूमः, न तु भिन्नविषयत्वादिति, अत आह—तथा न दानान्तराणीति ॥ अत्र 'दाह-पाकविभागेन' इति दाह्ययोः, पाक्ययोश्च क्रियमाणयोर्विभागेन कृशानुर्न भेदवानिति श्लोकयोजना द्रष्टव्या ॥

शङ्करपाणिव्याख्या

सिकतावत्; शक्तं चेन्न क्षित्याद्यपेक्षेत। क्षित्याद्याहितविशेषं जनयतीति चेत्, न तर्हि स्वतः शक्तम्; अशक्तं चाहितविशेषमपि न जनयति, दुष्टबीजवत्। अपि च विशेषे सति भावादसति च बीजे सत्यप्यभावात् स हेतुः स्यात्, न बीजम्। न च स भिन्नोऽभिन्नो भिन्नाभिन्नो वा सम्भवति। तस्मात् सदृशक्षणपरंपराप्राप्ताः क्षितिबीजादिक्षणाः प्रत्येकं शक्ता अप्येकमेवाङ्कुरं कुर्वन्ति, न प्रतिस्वमनेकान्।

ननु कृतस्य करणाभावात् यदेकेन कृतम् तस्यान्येन करणं न स्यात्। स्यादेवम्—यदि क्रमः स्यात्; सह क्रियायां तु कृत इत्येव नास्ति। यस्यापि सामग्री जनिका, तस्यापि सा एकमेवाङ्कुरं जनयति, नाङ्कुरान्तराणि। तथा च सत्येकस्यापि जनकत्वमजनकत्वं च। 'न च भिद्यते' इत्यत्राप्यनुवर्तते। इतिरुदाहरणसमाप्तौ। जनकत्वमजनकत्वमिति। जननशक्तिरशक्तिश्चेत्यर्थः॥ P. 53-27

नन्वेकत्रैकस्य शक्त्यशक्ती विरुध्यमाने तिल-पयसोर्भेदं गमयत इत्युक्तम्, तत्रैव व्यभिचारो वाच्यः। न चेह तथा। तथा हि— बीजानामेकत्रैवाङ्कुरे शक्तिः, न च तत्राशक्तिः, अपि त्वन्यत्र; अतो

अभिप्रायप्रकाशिका

उपलक्षणमेतदित्याशयेनोदाहरणान्तरमाह—तथेति॥ सौगतानामन्त्यक्षणप्राप्तः क्षिति-बीजतेजःपवनादयः प्रत्येकमङ्कुरजननसमर्था एकमङ्कुरं जनयन्तोऽपि नाङ्कुरान्तराणि जनयन्तीत्यर्थः। अथ न प्रत्येकं जनकत्वम्, किं तु सामग्र्याः। तथा चोक्तम्—

न किञ्चिदेकमेकस्मात् सामग्र्याः सर्वसम्भवः॥

इति। तत्राह—नापीति॥ तथापि जनकत्वमजनकत्वमित्येकस्यैव जनकत्वमजनकत्वं च दृष्टम्, इति तत्र व्यभिचार इत्यर्थः। शङ्कते—अथेति॥ यत्र शक्तिः, तत्र तदाभावश्चेत्, तदा विरोधः। न चैवमस्तीत्यर्थः। परिहरति—अन्यमिति॥ यद्येकत्वमत्र सङ्ख्यामात्रावच्छिन्नमेकमभिमतम्, तदा प्रध्वस्तोऽनागतो वाप्येक इति, तमपि कुर्यात् स्यादेकस्मिन्नेव शक्तिस्तदभावश्च। न च विरोधः—इत्यर्थः॥

शङ्खपाणिव्याख्या

P. 53-22 वैषम्यान्न बीजादिव्यभिचार इत्याशङ्कयति—अथेति ॥ अन्यत्राशक्तिस्तु भिन्नविषयत्वादेवाविरुद्धेति भावः। सिद्धान्ती तु वाक्छलेन साम्यमाह—अन्यमिति ॥ भवत्वेकत्रैव शक्तिः; तथाप्यतीतमप्येकमनागतं च। अतश्चैकत्रैव शक्तिरेकत्रैवाशक्तिरिति शक्त्यशक्त्योः समानविषयत्वात् साम्यमेवेत्यर्थः। अथ कार्यगम्यत्वाच्छक्तेरनन्तरोत्पन्न एवाङ्कुरे तेषां शक्तिः, नातीतानागतयोरिति न च तत्रैवाशक्तिः, तिल-पयसोस्त्वेकत्रैव दध्नि शक्तिरशक्तिश्च; ततश्च वैषम्याद्बीजादिभिर्न व्यभिचार
P. 53-24 इति पुनराशङ्कयति—अथेति ॥

P. 56-21 तत्रोत्तरमाह—अभेदेऽपीति ॥ एतदुक्तं भवति—यत्तावद्दधि-पयसो जातम्, तदभेदात् तिलेभ्योऽपि जातमेव; अतश्च यथा पयसस्तत्र शक्तिरेव, नाशक्तिरिति न शक्त्यशक्त्योर्विरोधः, तथा तिलानामपि; अतो न ततस्तयोर्भेदावगतिः। अथ च दध्नि चेत्तिलानां शक्तिः, दध्यन्तरमपि जनयेत्। न च तथा; अतोऽशक्तिरप्यस्तीति शक्त्यशक्त्योर्विरोध इत्युच्यते, तन्न; पयोज एव हि दध्नि तिलानां शक्तिर्न दध्यन्तरे, बीजादीनामिवातीतानागतयोः। अतश्च यत्र शक्तिस्तत्रा-

अभिप्रायप्रकाशिका

अथ यमङ्कुरभेदमादधानं दृष्टम्, तत्रैवास्य सामर्थ्यमिति शङ्कते—अथ तत्रैवेति ॥ एवं सति यस्मिन् कार्ये शक्तिः, तत्रैव चेदशक्तिः स्यात्, स्यात्तदा विरोधः, न त्वेतदस्ति, स्थायिनस्तु तत्रैव कार्ये कदाचित् सामर्थ्यादसामर्थ्याच्च भवेद्विरोध इति भावः। तत्रार्थक्रियामकुर्वन्नपि नासमर्थो भावः, सहकारिसमवधानं तु प्रतीक्षमाणः केवलं विलम्बत इति पुरस्तादेवाभिहितम्। न च—जनकत्वमस्य स्वभावः, किन्तु बीजत्वम्, जनकत्वं तु धर्मः, सामर्थ्यं वा सहकारिसमवधानत्वं वा, तेन तदभावेऽपि न भावस्य काचित् क्षतिः।

तदेवमतितुच्छतया क्षणभङ्गमपेक्ष्याऽद्वैतवादिनामीदृशो विरोधो नास्तीत्याह—अभेदेऽपीति ॥ पयःसकाशात्तिलानामभेदे, तदापि तिलेभ्यो दध्नोऽनुत्पत्तौ न विरोध इति योजना। यस्य दध्नः पयसो जन्म, तस्य तिलेभ्योऽनुत्पत्तिविरोधः, किं वा दध्यन्तरस्य। न तावदाद्य इत्याह—तथा हीति ॥ तिलेभ्य-

शङ्खपाणिव्याख्या

शक्तिरेव नास्ति; कथा विरोधः स्यात्? या त्वन्यत्राशक्तिः, सा विभिन्नविषयत्वादविरोधिनी, इति न शक्त्यशक्त्योर्विरोध इति। एकत्र चेच्छक्तिरन्यत्रापि तुल्यजातीये स्यात्; अतस्तदपि तिला जनयेयुरिति चेत्, तन्नेत्याह—न हीति ॥ P. 54- 2

मतान्तरमाशङ्कयति—अथेति ॥ विनियोगभेदमाह—दध्नि हीति ॥ P. 54- 4
तद् दूषयति—तदपीति ॥ अनैकान्तिकत्वमाह—एकत्वेऽपीति ॥ तदेव P. 54- 5
प्रपञ्चयति—तदेवेति ॥ एकमपि वस्तु सहकारिसहितं कार्ये विनियुज्यते, न केवलम्; अतश्चैकत्रापि विनियोगाविनियोगसत्त्वेनानैकान्तिकत्वाद् न वस्तुभेदावगतिहेतुत्वमित्यर्थः ॥

अथ सहकारिसंनिधानोपाधिभेदाद् भिन्नमेव वस्तु केवलात्;
अतो नानैकान्तिकत्वमित्याशङ्कयति—अथेति ॥ सिद्धान्ती त्वाह— P. 54- 7
औपाधिक इति ॥ यदि सहकारिसंनिधानोपाधिभेदाद्भेद औपाधिक- P. 54- 8
स्तर्हि; यश्चौपाधिकः स प्रतीयते परम्, न वस्तु संस्पृशति, बिम्ब-प्रतिबिम्बयोरिव। अतोऽपरमार्थः। अपरमार्थश्च भावानां भेदोऽस्माभिरभ्युपेयते। अतोऽस्मत्पक्षमेवाश्रितोऽसीति भावः। क्षणिकवादिनस्तु केवलात् पयःक्षणात् सहकारिसहितः पयःक्षणोऽत्यन्तभिन्नः; तथा सिकताऽपीति, सापि दध्नि विनियुज्येत। अथादृष्टशक्तित्वात्

अभिप्रायप्रकाशिका

स्तैलमेव जायमानं दृश्यते, न दधि, तत्कथं न विरोधः? इत्याक्षिपति—कुत इति ॥ तिल-पयसोरभेदात् पयसो जायमानं दधि तिलेभ्येऽपि जायत इति परिहरति—तिलानामिति ॥ नापि द्वितीय इत्याह—अथेति ॥ एतत्स्थायिनोऽपि क्रमकारित्वसाधनात् एकदा समर्थस्यान्यत्रासामर्थ्यासम्भवाभिधानेन परिहृतमित्यर्थः। भेदेन विनियोगक्रममेव दर्शयति—दध्नोहीति ॥ एकत्वेऽपीति ॥ दधि-विषादेः शुद्धमन्त्रादिसहितस्य तद्रहितस्य चैकत्वेऽपि भेदे न विनियोगो दृष्ट इत्यर्थः ॥

औपाधिकस्यापि पारमार्थिकतां वारयति—प्रत्ययमात्रनिवेशीति ॥ तथापि भेदोऽस्त्येवेति, अत आह—तथाभूतश्चेति ॥

शङ्खपाणिव्याख्या

सिकता दध्नि न विनियुज्यते, ततो नवोऽपि पयःक्षणः पूर्वमसत्त्वान्न दृष्टशक्तिरिति न विनियुज्येत। न चैकजातिमुखेन स दृष्टशक्तिरिति वाच्यम्; जातेस्तैरनभ्युपगमादिति भावः। अथानादिवासनाकल्पितैकजातिमुखेन दृष्टशक्तेः पयःक्षणाद् नावस्याभेदात्तस्मिन् दृष्टशक्तावयमपि दृष्टशक्तिरित्यस्य विनियोगसिद्धिः। न सिकताया विजातीयक्षणाया इत्युच्यते, ततः परस्याप्यभेदवादिनोऽविद्याकल्पिताद्भेदात् पय-सिकतयोर्विनियोगाविनियोगौ सेत्स्यतः, इति विनियोगाविनियोगव्यवस्थया भावभेदकल्पना व्यर्थैवेति भावः॥

एवं भेदाभेदवादिनं प्रत्याह—योऽपीति॥ यथा भेदाभेदौ विरुद्धौ धर्मावेकत्र भवतः, तथा जनकत्वाद्यपि, इति न ततस्तिल-पयसोर्भेदसिद्धिरित्यर्थः। जनकत्वाजनकत्वाभ्यामित्युपलक्षणम्; शक्त्यशक्त्यादयोऽपि सर्वे द्रष्टव्याः॥ १०१/२॥

P. 54-9 अभिप्रायप्रकाशिका

योऽपीति॥ केवलाद्बीजात् सहकारिसहितस्य बीजस्य क्षणिकत्वेन भेदोऽनुमन्यत इत्यर्थः—तस्यापीति॥ प्रथमं दृष्टधूमस्य वह्निं पश्यतो धूमोपलभ्ये वह्निदर्शनाभावे च धूमदर्शने सति वह्नि-धूमयोः कार्य-कारणभेदानिश्चयो भवति, सुगतपक्षे क्षणमात्रवर्तिनि पुनस्तदसम्भवात् स्वलक्षणमात्रं स्वलक्षणमात्रस्य हेतुरिति परिशिष्यते। तथा चातिप्रसङ्ग इत्यर्थः। कारुपनिकसन्धानोपाधौ सामर्थ्यग्रहः, विनियोगभेदश्च सिध्यतीति शङ्कते—अथेति॥ तर्हि सिद्धान्तिनोऽपि कल्पितभेदाद्विनियोगभेदादिः सिध्यतीत्याह—परस्यापीति॥ भेदाभेदौ द्वावपि परमार्थौ इति यो मन्यते, तं प्रत्याह—योऽपीति॥ १०१,॥

पूर्वोक्तमर्थं सङ्क्षेपेण हेत्वनुवादपूर्वमुपसंहरति—तदेवमिति॥ अर्थक्रियाभेदान्न कारणभेदः; वह्नौ व्यभिचारादित्युक्तं स्मारयति—एकत्रेति॥ कारणस्याद्वितीयत्वात् सर्वत्रैव सम्भवति कार्यमित्युक्तं स्मारयति—असम्भवस्येति॥ पूर्वदृष्टस्य कार्यस्य पश्चाद्दर्शनात् कारणभेद इति शङ्कायामेकस्मादपि क्रमेणानेककार्यदर्शनान्नैवमित्युक्तं स्मारयति—दृष्टेति॥ विशेषस्य परमार्थतया तत एव-

ब्रह्मसिद्धिकारिका

एकस्यैवैष महिमा भेदसंपादनासहः ॥ ११ ॥

वह्नेरिव यदा भावभेदकल्पस्तदा मुधा ॥ ११३ ॥

शङ्खपाणिव्याख्या

इदानीं सर्वं पूर्वोक्तमर्थमुपजीव्य स्वपक्षमुपसंहरति—तदिति ॥ P. 54-15 तस्मादित्यर्थः ।

सहः=क्षम इत्यर्थः । श्लोकार्थं विवृणोति—एकत्रेति ॥ 'अर्थक्रियाकृते भेदे' इत्यत आरभ्य यावदुक्तम्, तत्सर्वम् 'एवम्' इत्युपजीवितम् । तदेव 'एकत्र' इत्यादिना— 'सम्भवात्' —इत्यन्तेन सुखस्मरणायानुकीर्तितम् । 'व्यवस्थायाश्च' इत्यत्र 'अनैकान्तिकत्वात्, असिद्धत्वाद्वा' इत्यनुवर्तनीयम् ॥

इममेव स्वपक्षं श्रुत्या द्रढयति—तदेतदिति ॥ श्रुतिं विवृणोति– P. 55-2 एतदिति ॥ "यद्भूतम्" इत्यत्र 'यदेकोऽपि' इत्यनुवर्तते । "अतो

अभिप्रायप्रकाशिका

कार्यं जनयन्तीति, अत आह—तस्य चेति ॥ काल्पनिकस्य कथं क्रियाहेतुत्वमित्युक्तमनुवदति—अभेदादिवेति ॥ अन्योन्याभाववत्वे, वध्यघातकल-क्षणे, भावाभावरूपे च विरोधेऽनैकान्तिकत्वमुक्तमित्याह—विरोधस्य चेति ॥ सहानवस्थानविरोधेऽभिहितं दोषं स्मारयति—असिद्धत्वाद्वेति ॥ -नान्यत्वं सिद्ध्या व्यवस्थया प्रमित्सितमित्यादिनोक्तदोषं स्मारयति–व्यवस्थायाश्चेति॥ एकत्वेऽपि भेदेन विनियोगदर्शनादित्यादिनाऽभिहितं दोषं स्मारयति— विनियोगभेदस्य चेति ॥ परस्यापि "तादृशाद्भेदादि" त्यनेनोक्तं दोषं स्मारयति—अभेदादिव च कल्पितादिति ॥ तेनैकत्रापि विरुद्धधर्मावेशमित्यादिनोक्तदोषं स्मारयति—भेदाभेदयोश्चेति । इदानीं श्लोकं व्याचष्टे— एकस्यैवेति ॥

एतदुक्तं भवतीत्याह—पूर्वग्रद्धयेति । विरुद्धाः, अभिमता ये धर्म-

शङ्खपाणिव्याख्या

ज्यायान्" इत्याशङ्कितोत्तरं योजयितुमाशङ्कां तावदाह—पूर्वेति ॥ "सहस्र-" इत्यादौ पूर्वस्मिन् ऋग्द्वये निर्दिष्टानां विरुद्धत्वेनाभिमतानां धर्मकार्यव्यवहाराणामेकोऽपि सन् कथमाश्रय इत्यर्थः। तत्रैकस्य सहस्रशीर्षत्वमदृष्टत्वाद्विरुद्धम्, सर्वभूमिव्यापिनस्तु दशाङ्गुलत्वमन्याय्यम्।

P. 55-2 अत्रोत्तरमाह—अत इति ॥ 'अतः' इतीदमा संनिहितमुच्यते। तच्च प्रत्यक्षतः, शब्दतो वा। तत्र प्रत्यक्षमाश्रित्य 'अतः प्रत्यक्षाभिमताद्' इत्युक्तम्। शब्दमाश्रित्य च 'पुरुष एवेदमिति सर्वशब्दनिर्दिष्टात्, उतामृतत्वस्येत्यनेन वा निर्दिष्टात्' इत्युक्तमिति विवेक्तव्यम्। कथमनेन देवादिप्रपञ्चस्य निर्देशः? उच्यते—मर्त्यस्य देवादेरमृतत्वस्येशान इत्यर्थात् देवादिप्रपञ्चस्य निर्देशः। प्रतीकनिर्देशो वाऽयम्—"यदन्नेनातिरोहति" इत्यनेन देवादिप्रपञ्चस्य निर्देशः। यद्धि यस्यादनीयं तत्तस्यान्नम्, देवानां चामृताद्यन्नमिति। ततश्च यदन्नेनातिरो-

P. 55-6 हति, प्रादुर्भवति च तस्य चेशान इति देवादिप्रपञ्चनिर्देशः। भेदेनेति ॥ इत्थंभूतलक्षणे तृतीया। इत्थंभूतादित्यर्थः। सर्वं चेदं प्रपञ्चा"दित्यस्य'

P. 55-7 विशेषणम्। वृद्धतर इति ॥ सर्वथातिशयितः, अनन्त इति यावत्। अनेन ज्यायानिति "वृद्धस्य च" इत्यनेन ज्यादेश इति दर्शयति। तदेवमनन्तेऽस्मिन्नेकस्मिन्नपि पुरुषे परिच्छिन्नानां विरुद्धानामपि नित्यानामपि नित्यानित्यत्वादीनां समावेशो न न युज्यते। अतोऽनन्ततो भावभेदावगतिरित्यभिप्रायेणाह—तेनेति ॥ एतदेवानन्तत्वं श्रुतिः प्रकारान्तरेण

अभिप्रायप्रकाशिका

विषयाः कार्यविषयाश्च व्यवहाराःतदाश्रयः पुरुषः। तस्य विरुद्धानेकप्रपञ्चास्पदत्वं कथम्? इति चोदयत्युत्तरपादमवतारयितुम्—कथमितीति ॥ "अतो ज्यायान्"इत्यत्रातश्शब्दार्थमाह—अत इत्यादिना ॥ अभिमतादिति प्रत्यक्षत्वमवास्तवत्वं प्रपञ्चस्य दर्शयति प्रत्यक्षसिद्धप्रपञ्चस्यातश्शब्देन परामर्शमभिधाय शब्दसन्निधापितस्य वाऽस्य परामर्श इति व्याख्यान्तरमाह—पुरुष एवेदमिति ॥ देवमनुष्यलोकप्रभेदेनोतामृतत्वस्येति मन्त्रेण निर्दिष्टात् प्रपञ्चाद्वेत्यन्वयः। ज्यायनिति पदं व्याचष्टे—वृद्धतर इति ॥ परमो महाननन्त इति

शङ्करपाणिव्याख्या

दर्शयतीत्याह—तदेवेति ॥ तां व्याचष्टे—कृत्स्नोऽपीति ॥ विधा इति ; "शेश्छन्दसि बहुलम्" इति शेर्लोपः । पादः चतुर्थो भागः=कनीयान् अल्प इत्यर्थः । भाग इति ॥ निर्भागस्य तत्त्वतो भागाभावादवच्छिन्नप्रपञ्चोपाधिकल्पितः स इति दर्शयितुमिवशब्दः । कथं प्रपञ्चावच्छिन्नस्य भागस्याल्पत्वम्, पुरुषस्य च ज्यायस्त्वम्? इत्यपेक्षायामुत्तरमृक्पादं योजयति—तथा हीति ॥ पादा भागाः ; त्रयः पादा अस्येति विग्रहः। रूपमन्यपदार्थः। त्रित्वेन च पादानामेकस्मात् पादाद्वैपुल्यतोऽनन्तत्वमभिप्रेतम् । अथवा—अमृतत्वम्=अविनाशित्वम् । तच्चाजत्वादिधर्मोपलक्षणार्थम् । अजस्यैव हि तत्, न जन्मवतः ॥ P. 55-10

तदयमर्थः–अपरिमितम्, अत एवानन्तम्, मरणादयो भूतधर्माः यस्य प्रपञ्चस्य, तेन शून्यम्। अस्य पुरुषस्य रूपं दिवि=प्रद्योतावस्थायाम्=विशुद्धचैतन्यावस्थायाम्, प्रमोदावस्थायाम् = नित्यनिरतिशयानन्दावस्थायां सूर्यमण्डले वा, स्वर्गस्थाने वा वर्तत इति ॥

एतदुक्तं भवति–प्रपञ्चस्यावच्छिन्नत्वात् सप्रपञ्चं ब्रह्मरूपमल्पम्, अप्रपञ्चं त्वपरिमितम्। अतोऽस्य विरुद्धाविरुद्धधर्मकार्यव्यवहाराश्रयत्वमुचितमिति । नन्वनन्तं सर्वत्र वर्तते, तत् कथं सूर्यमण्डले, द्युस्थाने वेत्युक्तम्? इत्याशङ्क्याह—तत्र हीति ॥ तद्विवृणोति–तद्धीति ॥ P. 55-12 उपलब्धिः=उपासनाज्ञानमभिप्रेतम् ॥

'एकस्यैव' इत्यादिश्लोकमन्यथा व्याचष्टे–अपर इति ॥ कल्पः=

अभिप्रायप्रकाशिका

यावत्। एतावता कथं विरोधः परिहृत इति ? अत आह–तेनेति ॥ द्योतनावस्थायाम्=स्वयंप्रकाशस्वभावे, प्रमोदावस्थायाम्=परमानन्दस्वभावे ; दीव्यतिधातोरुभयत्रापि वृत्तिस्मरणात् । अत्र चोभयत्र सप्तमी । "स्वे महिम्नि" इतिवदुपचारात्। कथमनवच्छिन्नस्य तदाधारतेति ? तत्राह—तत्र हीति ॥

इदानीं श्लोकस्य व्याख्यान्तरमाह—अपर इति ॥ कार्यभेदाद्वा, तद्व्यवस्थाया वा कारणभेदे कल्पितेऽपि पयसो भिन्नेभ्यस्तिलेभ्यस्तैलमेव किमिति जायते ? कस्मान्नान्यज्जायत इत्यर्थः । किमिति वा न सङ्कर इति ? अव्यवस्थे-

28

शङ्खपाणिव्याख्या

अर्थः। घटनाकार्यभेदात् पूर्वोक्तया वा व्यवस्थया कल्पितेऽपि त्वया कारणयोस्तिल-पयसोर्भेदे, त्वां पृच्छामः—तिलकार्यात् तैलात् कार्यान्तरं दधि किमिति पयसो (न) भवति? द्वाभ्यां संभूयैकमेव कार्यं किमिति न क्रियते? अथापि तिल-पयसी पृथक् कार्यं कुरुतः, तथाप्येकजातीयं किं न कुरुतः? तदा च कार्यान्तरशब्दो भिन्नजातीये द्रष्टव्यः। किमिति चोभयमुभाभ्यां न क्रियते? सोऽयं सङ्करः। पयसस्तैलं तिलेभ्यो दधीति विपरीता वा व्यवस्था किं न स्यात्? पयसः सकाशात् तिल-सिकतयोर्भेदाविशेषेऽपि किमिति वा तिलेभ्यस्तैलम्, न सिकताभ्य इति? किं च दृष्टत्वादपि भिन्नानामेककार्यत्वमेकजातीयकार्यत्वं वा युक्तम्। दृष्टं हि चक्षुरादीनामेककार्यत्वम्, एकजातीयशरादिकार्यत्वं च शर-शृङ्गादीनाम्। तिल-पयसोर्भेदेऽपि किमिति तिलेभ्यस्तैलम्, पयसो दधि, न तु विपर्ययः? इति विपरीतव्यवस्थाविवरणमात्रम्॥

अथ मतम्—अचिन्त्येभ्यो भावसामर्थ्येभ्यः कार्यभेदः=कार्यव्यवस्था, सत्यां च तस्यां न विपर्ययः सेत्स्यतीति, ततो वरमेकस्यैव सोऽस्तु सामर्थ्यातिशयः, यदेकस्मादप्यनेकं व्यवस्थितमविपरीतं च

अभिप्रायप्रकाशिका

त्यर्थः। विपरीता वा व्यवस्थेति॥ पयसस्तैलम्, तिलेभ्यो दधीत्यर्थः। अव्यवस्थान्तरमाह—भेदेऽपीति। पयस्सकाशात्तिलानामिव सिकतानामपि भिन्नत्वात् सिकताभ्योऽपि तैलं किमिति न भवतीत्यर्थः॥

भेदेऽपीति॥ ननु कथं सङ्करः, कारणभेदे कार्यान्तरमेव युक्तं कारणधर्मानुविधानात् कार्यधर्माणामिति? अत आह—भिन्ना अपीति॥ चक्षुरालोकादीनामेकं कार्यं (रूपादि) ज्ञानम्, शर-शृङ्गयोस्तु प्रत्येकं शरः कार्यम्। आदिशब्देन गोमय-वृश्चिकादयः कथ्यन्ते। 'विपरीता वा व्यवस्था' इति यदुक्तम्, तत् स्पष्टयति—भेदेऽपि चेति॥ किमिति न भवतीति शेषः॥

पदार्थसामर्थ्येन भेदावष्टम्भेन शङ्कते पूर्ववादी—यदि मतमिति॥

शङ्करपाणिव्याख्या

कार्यं भवतीति; एककारणमात्रेण। एकस्य वा सामर्थ्यातिशयमात्रेण कार्य-भेदादिसिद्धेरप्रमाणिका भावानां गुर्वी भेदकल्पनेत्यर्थः। अचिन्त्येभ्य इत्यस्य विवरणम्—अचिन्त्यानीति॥ 'कस्माद्भवन्ति? कथं भवन्ति?' इत्येवमुपपत्तितश्चिन्तयितुं न शक्यन्ते, किं तु कार्यदर्शनैस्तत्सामर्थ्यानां P. 55-19
व्यवस्थोन्नीयते। कार्यं तु तिल-पयसोर्भिन्नं व्यवस्थितमविपरीतं च दृश्यते। अतस्तथैव तानि व्यवस्थितानीति भावः। एतच्चाविद्यात्मिकां शक्तिमभिप्रेत्योक्तम्। न तत्त्वतो भिन्ना अभिन्ना, भिन्नाभिन्ना वा शक्तिरस्ति॥

एकस्मादप्यनेकं कार्यं दृष्टम्; यथा—वह्नेर्दाह-पाकावित्युक्तम्; तत्र चोदयति—स्यादिति॥ तत्र परिहरति—तत्रेति॥ शक्तीनां भेदेऽपि P. 55-23
वह्नेरेकत्वादिति भावः॥ नन्वेकस्मादपि वह्नेः कार्यभेदः शक्तिभेद-निबन्धनः; न चाभेदवादिनां शक्तिभेदोऽस्ति, नैवम्; अस्माकमपि मायात्मकशक्तिभेदस्येष्टत्वादित्यदोषः। अथ सत्यपि वह्नौ मन्त्राद्युपहतायां शक्तौ कार्यादर्शनाच्छक्तीनामेव कारकत्वमभिप्रेतम्, ताश्च भिन्ना; तेन कारणभेदादेव तत्र कार्यभेद इत्याशङ्कयति—अथेति॥ ११. ११½ P. 56-1

अभिप्रायप्रकाशिका

तदेव प्रपञ्चयति—अचिन्त्यानीति॥ यद्यचिन्त्यानि, कथं तर्हि निश्चीयन्त इति? अत आह—कार्येति॥

कारणभेदेऽपि यदि स्वभावावष्टम्भेन व्यवस्था, तदा कारणभेदेऽपि सोपपद्यत इति श्लोकस्य व्याख्यानेनाह—यद्येवमिति॥

इदानीं पूर्ववादी पूर्वोक्तं वह्न्यादावनैकान्तिकत्वममृष्यमाण आह—स्यादेतदिति॥ किं वह्निरपि कारणम्, उत शक्तय एवेति विकल्प्य, यद्याद्यः, तत्राह सिद्धान्ती—तत्रेति॥११, ११½॥

द्वितीयमुपस्थाप्य श्लोकेनैवोत्तरमाह—यथेत्यादिना॥ शक्तिभेदस्वी-कारेणोद्घाटनपुरस्सरं श्लोकं व्याचष्टे—एकस्येति॥ शक्तयः शक्तिमतो भिद्यन्ते, न वा। तत्राभेदपक्षे दोषमाह—अपि चेति॥ भेदपक्षमवलम्बते—अथेति॥

ब्रह्मसिद्धिकारिका

यथैव भिन्नशक्तीनामभिन्नं रूपमाश्रयः ॥ १२ ॥
तथा नानाक्रियाहेतुरूपं किं नाभ्युपेयते ?॥ १२½ ॥

शङ्खपाणिव्याख्या स्वयं कारिका विवरणम्

अत्रोच्यते—यथेति ॥ रूपमिति ; अत्र 'अभिन्नम्' इत्यनुवर्तते ॥

कारिका विवरण ब्रह्मसिद्धिव्याख्या

श्लोकार्थं विवृणोति—एकस्येति ॥ एकस्य वह्नेरनेकदाहादिकार्यसम्बन्धविरोधात् शक्तिभेदः कल्प्यत इत्यर्थः ॥ शेषं सुगमम् ॥

किं च एकस्माद्वह्नेरनेकाः शक्तयश्चेदव्यतिरिक्ताः, ततो वह्निरेकोऽनेकत्रैरूप्यः । तत्र वह्नेरेकत्वं तद्गतेनैवानेकत्वेन चेन्न विरुध्यते, नतरां कार्यगतेन । अतश्चैकस्मादपि कार्यानेकत्वसम्भवाद् न कार्याने-
P. 56-10 कत्वेन कारणभेदसिद्धिरित्यभिप्रायेण सोपहासमाह—अपि चेति ॥

अथैकस्माद्वह्नेर्व्यतिरिक्ताः शक्तयः, कथं तस्य तदाश्रयत्वमिति वाच्यम् । तेन सह तासां संश्लेषस्तदाश्रयत्वमिति चेत्, स किं तादात्म्यलक्षणः ? उत नैरन्तर्यम् ? न तावत्तादात्म्यलक्षणः ; भिन्नानां तदयोगात् । तादात्म्ये हि तयोरेकत्वमेव स्यात्, न भेदः । नैरन्तर्ये च संश्लेष आश्रयत्वे, दाहशक्तिकवह्निसंनिकृष्टस्य काष्ठस्यापि तन्नैरन्तर्यमस्तीति तदाश्रयत्वप्रसङ्गः । न हि यद् द्रव्यस्य संनिकृष्टम्, तत्तच्छक्तेरसंनिकृष्टं भवति ; न हि चक्षुर्द्रव्यस्य संनिकृष्टं तद्रूपस्यासंनिकृष्टं भवति; अन्यथा रूपोपलब्धिरेव न स्यात् । एवं च विभूनां सर्वैः शक्तिमद्भिरर्थैः संनिकर्षात् सर्वशक्तित्वप्रसङ्गः । तस्मात् शक्तीनां कंचिदुपकारं कुर्वतो वह्नेरनेकशक्त्याश्रयत्वं वाच्यम् । स च शक्तीनां भेदात् प्रतिशक्ति भिन्नः । तदेवमेकस्माद्यथानेकोपकारसिद्धिः, तथानेककार्यसिद्धिरपि स्यादिति न कार्यभेदात् कारणभेदसिद्धिरिति । तदेतन्सर्वमाह—
P. 56-12 अथेति ॥ १२, १२½

शङ्करपाणिव्याख्या

इदानीं प्रकरणार्थं संकलय्योक्त्वा मतान्तरमवतारयति दूषयितुम्—एवमिति ॥ यदेव कार्यभेदादिविपक्षव्यावृत्तिमुखेन बौद्धानामनुमानमुक्तम्, तदेवान्येषामन्यथानुपपद्यमानमर्थापत्तिरिति मत्वोक्तम्—अर्थापत्त्या वेति ॥ अन्योन्याभावो हि भेदः। न च सोऽक्षगोचरः; भावमात्रग्रहणयोग्यत्वादिन्द्रियाणाम्। न च लिङ्गगम्यः; प्रमाणान्तरागोचरे संबन्धिन्यभावे लिङ्गिनि तेन सह कस्यचिल्लिङ्गस्यादृष्टसंगतित्वात्। अर्थापत्तिरपि पयसो दध्नो जन्म नान्यत इति व्यवस्थाहेतुका, सा चेतरेतराश्रयत्वदोषग्रस्तत्वान्नान्योन्याभावरूपे भेदे प्रमाणम्। तस्मात् भावोपलम्भहेतुभ्यश्चक्षुरादिभ्यः प्रमाणान्तरं प्रमाणानुत्पादलक्षणम् विधायकाद्वा भावज्ञानात् प्रमाणान्तरं व्यवच्छेदकत्वेन 'नास्ति' इति ज्ञानमन्योन्याभावायाश्रयितव्यम्; तदधीना हि भावानामन्योन्यमसंकीर्णतेति ये मन्यन्ते, तान् प्रत्युच्यते—अन्योन्येति ॥

अभिप्रायप्रकाशिका

निगूढाभिसन्धिर्दूषयति—अथेति ॥ शङ्कते—संश्लेषश्चेदिति ॥ समवायस्याग्रे निराकरिष्यमाणत्वात् तादात्म्यं नैरन्तर्यं वा परिशिष्यते। तत्र न तावत्तादात्म्यमित्याह—न भिन्नत्व इति ॥ तथा सत्यभेदप्रसक्तेरिति हेतुमाह—भेद इति ॥ न द्वितीय इत्याह—न नैरन्तर्यमिति ॥ तत्र हेतुमाह—तच्छक्तीति ॥ यच्छक्तियुक्तं यद् द्रव्यम्, तत्प्रयुक्तम्। द्रव्यान्तरस्यापि शक्त्या नैरन्तर्यमस्तीति तत्त्वप्रसङ्ग इत्यर्थः। नैरन्तर्यमेव दर्शयति—न हीति ॥ निदर्शनमाह—न हि चक्षुर्द्रव्यस्यानन्तरं रूपस्य नान्तरम्। प्रसङ्गान्तरमाह—विभुत्वाच्चेति ॥ अतः प्रतिशक्त्युपकारभेदात्तत्तच्छक्त्याश्रयत्वं वक्तव्यमित्याह—तस्मादिति ॥ उपकारत्वं नामोत्पादनम्, व्यवस्थापनं वा। ततः किं फलितमिति? अत आह—तत्रेति ॥ १२, १२३ ॥

वृत्त-वर्तिष्यमाणयोरसाङ्कर्येण प्रतिपत्तये वृत्तसङ्कीर्तनपूर्वकमुत्तरश्लोकस्य व्यावर्त्यां शङ्कामाह—एवं तावदिति ॥ मतभेदेन विकल्पः। तदेवं हि

ब्रह्मसिद्धिकारिका

अन्योन्यसंश्रयाद् भेदो न प्रमान्तरसाधनः ॥ १२ ॥

कारिकाविवरणम्

प्रमान्तरेति प्रमाशब्दः करणसाधनः, भावसाधनो वा तथा च दर्शितम्—'सदुपलम्भहेतुभ्यः' इत्यादिना। विषयप्रतिषेध्ययोर्भेदाद्विना 'अस्मिन् भूतले नेदं घटादि' 'नायं घटः पटः' इति चोभयविधा निषेधधीर्न भवतीत्यर्थः। नन्वन्योन्याभावो भेद इति परेणोक्तम्। स च तादात्म्याभावो नाधाराधेयाभावः। तत्र 'नायमयम्' इति मात्रं वाच्यम्, न 'नास्मिन्निदम्' इति सत्यम्; न व्यर्थम्; दृष्टान्तार्थं हि तत् ॥

अभिप्रायप्रकाशिका

कार्यभेदव्यवस्थादिना कारणभेदकल्पानायां केचिदनुमानमाहुः, अपरे त्वर्थापत्तिमिति। एवं वृत्तं सङ्कीर्त्य वर्तिष्यमाणश्लोकव्यावर्त्याशङ्कां दर्शयति—ये त्विति ॥ अप्रत्यक्षत्वाभ्युपगमे भाट्टः स्वयमेव हेतुमाह—इतरेतरेति ॥ उक्तेऽर्थे भट्टवार्तिकं हेतुत्वेनोदाहरति—भावांशेनेति ॥

सम्बन्धो हि संयोगः, समवायो वा। उभयविधोऽपि भावधर्मत्वादिन्द्रियस्य नाभावेन सम्भवति। नापि विशेषणविशेष्यभावः; तस्य सम्बन्धान्तरगर्भस्य तदभावेऽभावात्। अथ मन्येत 'अघटं भूतलमि'त्यत्राभावविशिष्टभूतलप्रतिपत्तेः सर्वैरभ्युपेतत्वादन्तरेणापि मूलसम्बन्धं विशेषणविशेष्यभावसम्बन्धः स्वीकर्तव्य इति, सत्यम्; तथापि मूलसम्बन्धान्तररहितश्येन्द्रियजनक(?)ज्ञानहेतुत्वस्यान्यत्रासंप्रतिपन्नत्वात्, अभावप्रतिपत्तेश्च धर्मिप्रतियोगिप्रतीतौ दृश्यानुपलम्भमात्रादेव प्रतिपत्तेः, 'प्रातश्चत्वरे गजो नासीत्' इत्यादौ च स्वरूपमात्रेण परिदृष्टचरस्य पुंसः पश्चादुत्पन्नजिज्ञासोरन्तरेणेन्द्रियसम्बन्धं गजाभावज्ञानदर्शनाच्च नाभावस्य प्रत्यक्षसम्भवः। न च चत्वरे निर्विकल्पकेनानुभूतो गजाभावः स्मर्यते; सम्प्रतीति साम्प्रतं प्रतियोगिस्मरणस्याभावज्ञानकारणत्वात्तद-

कारिकाविवरण ब्रह्मसिद्धिव्याख्या शङ्खपाणिव्याख्या

श्लोकं व्याचष्टे—नेति ॥ खलुशब्दः प्रसिद्धिद्योतनार्थः ॥ कुत P. 57-5
इत्याह—नानपेक्षितेति ॥ न हि यत्र यो निषिध्यते, तावनपेक्ष्य 'नेदमिह' P. 57-6
'नायमयम्' इति निषेधो भवति, भवन् वा 'न' इत्येतावन्मात्रं स्यात्; ततश्चागृह्यमाणविशेषत्वात् सर्वशून्यतामापादयति। न भावविशेषयोरन्योन्याभावरूपं भेदमिति "अपि चानपेक्षितविषयनिषेध्यव्यवच्छेदे शून्यता प्रमाणार्थः" इत्यत्रोक्तम् ॥

एतच्च परेषामपि संमतमिति—गृहीत्वा इत्यादिना दर्शितम्। तदेवं विषयनिषेध्यप्रतीतौ सिद्धायां यदि सा तयोरनवगतभेदयोर्वस्तुमात्रत्वेन स्यात्, तदा 'इदं निषेध्यम्, विषयस्त्वयम्' इति विभागाभावान्निषेध एव न स्यात्। वस्तुमात्रं ह्यनवगतभेदं यदि विषयः, निषेध्यं न स्यात्। अथ निषेध्यः, ततो विषयो न स्यात्। विषयाभावे च 'घटो नास्ति' इति घटस्यात्यन्तिको निषेधः स्यात्, नान्यत्र सिद्धस्य देशविशेषे, न क्वचित्सिद्धस्यात्यन्तिको निषेधो युज्यते, न चात्यन्तमसिद्धस्य; अप्रसक्तेः। एतच्च 'अन्यथा दैवनिषिद्धे कः प्रतिषेधोऽप्राप्तरूपे?' इत्यादिनोक्तम्। व्यवच्छेदावधिः=व्यवच्छिद्यते अस्मिन्निति विषयोऽभिप्रेतः। अथ न वस्तुमात्रस्य विषयनिषेध्यत्वे, किंतु वस्तुविशेषयोरेव ययोः कयोश्चिदित्युच्यते, ततः सर्वस्य सर्वत्र

अभिप्रायप्रकाशिका

भावे तदनुपपत्तेः, अन्यथा युगपदनन्ताभावानुभवाभ्युपगमप्रसङ्गादिति भावः। तथापि कथमभावप्रामाणैकगम्यत्वमिति? परिशेषादित्यभिप्रेत्याह—तथा चेति ॥ भाट्टः स्वमतमुपसंहरति—तस्मादिति ॥ भावोपलम्भसामग्र्यभाव एव भावप्रमितौ कारणमित्यर्थः। संवेदनप्रमाणमङ्गीकृत्याह—विधायकाद्वेति ॥ अस्मिन् पक्षे किं प्रमाणफलमिति? अत आह—तन्निबन्धनेति ॥ असङ्कीर्णस्वभवतेति=तादृग्व्यवहारो लक्ष्यते; वस्तुस्वभावस्य ज्ञाननिबन्धनत्वायोगादिति द्रष्टव्यम् ॥

शङ्खपाणिव्याख्या

निषेधः स्यात्; विशेषानवधारणात्। तस्माद् भिन्नस्वभावेन विशिष्टौ च विषयनिषेध्यौ प्रतिपद्य परेण निषेधः प्रतिपत्तव्यः। एवं हि स संभवेत्; अन्यथा विषयनिषेध्ययोर्विभागाप्रतिपत्तौ न संभवेत्। विशिष्टयोश्च तयोः प्रतीतौ क्वचिदेव निषिध्यत इति नियमः स्यात्; अन्यथा सर्वत्र निषिध्येतेत्युक्तम्। किंच प्रतियोगी निषेध्यः; न चानवगतभेदः स भवति; अन्यथा स्वस्य स्वयं स स्यात्॥

यद्वा अनवगतभेदः सामान्यमात्रेणावगतः प्रतियोगी भवति। ततः स्थाणावविशेषेण प्रतीते पुरुषोऽप्यूर्ध्वतासामान्येन प्रतीतः प्रतियोगी स्यात्। अतस्तस्याभावाप्रतीतिः स्यात्। न चैवम्। अतश्च भिन्नौ निषेध्यविशेषौ बुद्धौ स्वीकृत्याभावः प्रतिपत्तव्य इति सिद्धम्। तथा च लोकेऽपि तत्प्रतीतिस्तथैव प्रत्यात्ममुपलक्ष्यते। तथा च सति विषयनिषेयध्ययोर्भेदज्ञाने सत्यभावप्रतीतिः, तस्यां च सत्यां तयोरन्योन्याभावात्मकभेदप्रतीतिरितीतरेतराश्रयत्वं स्यादित्यर्थः॥

इदानीमितरेतराश्रयत्वमुच्छ्लोकमाह—अपि चेति। नानुपलब्धि-

अभिप्रायप्रकाशिका

उक्तेऽर्थे हेतुमाह—नानपेक्षितेति॥ तैरप्येदभ्युपेतमित्याह—तेषामपीति॥ अस्तु विषयव्यवच्छेद्ययोः प्रतीत्यपेक्षा; तथापि भवतः किमायातमिति? तत्राह—तयोश्चेति॥ तदेवोपपादयति—अर्थमात्रेति॥

भवतु का नो हानिरिति? अत आह—स चेति॥ 'लब्धरूप' इत्यत्र सिद्धे विषये प्रसक्तस्यैव निषेधः, अत्यन्तासतश्च न प्रसक्तिः; दैवनिषिद्धत्वात्, सिद्धत्वे च नात्यन्ताय प्रतिषेध इत्युक्तमित्यर्थः। यद्यगृहीतभेदं किमेतदित्यगृह्यमाणविशेषमवध्यवधिमद्भावेन गृह्येत, तत्रापि कस्यचित्कुतश्चिदिति भावान्तरादिव स्वभावादपि भिद्येतेत्यतिप्रसङ्गार्थः। ततो तदपक्ष एव परिशिष्यत इत्युपसंहारव्याजेनाह—तस्मादिति॥

नियममेव स्पष्टयति—न चेति॥ इतोऽपि विशेषणप्रतिपत्तौ विषयनिषेध्यप्रतिपत्तिः, योग्यानुपलब्धिश्च निमित्तम्। तत्र विषयनिषेध्यप्रतिपत्तावन्योन्याश्रयत्वमुक्तम्, इदानीं योग्यानुपलब्धावन्योन्याश्रयत्वं वक्तुं ज्ञातैव सा, तद्धेतुर्न सत्तामात्रेणेति साधयति—अपि चेति॥ तथाविधोऽपि ना-

मात्रात् वस्त्वभावज्ञानम्; सुषुप्तेऽपि प्रसङ्गात्, किन्तूपलब्धिसाधनसाकल्ये सत्यनुपलब्ध्या। न हि सुषुप्तेऽनुपलब्धिलक्षणः स्वरूपविशेषः कश्चिदस्ति, यस्य सामर्थ्यातिशयात् चक्षुरादेरिव रूपादेरभावस्य बोधकः, किंतु प्रमाणसामग्रीवैकल्येन तत्रानुपलब्धिः। अवैकल्ये तु प्रमेयाज्ञानमन्तरेण तदसम्भवान्नान्तरीयकत्वेन सा वस्त्वभावं गमयति। एवं च धूमादिवत् ज्ञाता सा गमिकेत्यापन्नम्॥

सा च द्विविधेष्टा—प्रतियोग्युपलब्धिरूपेणात्मनोऽपरिणामो वा, ततोऽन्यस्य वा विषयस्य ज्ञानम्। तदुक्तम्—

"साऽत्मनोऽपरिणामो वा विज्ञानं वाऽन्यवस्तुनि"॥

इति। तत्र यद्यन्यवस्तुज्ञानमनुपलब्धिः, ततो नासिद्धे वस्तुभेदे सा सिध्यति। अतस्तज्ज्ञानाय वस्तुभेदो ज्ञातव्यः। न च वाच्यम् —निषेध्यज्ञानादन्यद् ज्ञानमनुपलब्धिः। अतो ज्ञानभेदोऽत्र गम्यते, न वस्तुभेदः, तत्कथमुच्यते—'नासिद्धे वस्तुभेद इति, यतो ज्ञेयानुमेयं तज्ज्ञानम्, अतो भेदोऽपि तस्य ज्ञेयभेदानुमेय इत्यर्थः। ज्ञेयवस्तुभेदो विज्ञातव्यः, ततस्तु भेदं विनाऽन्यत्रासिद्धेर्भेदे ज्ञातेऽनुपलब्धिज्ञानम्, तस्यां च ज्ञातायामन्योन्याभावात्मकभेदज्ञानमितीतरेतराश्रयत्वं स्यात्॥

अथात्मनोऽपरिणामोऽनुपलब्धिः, साऽपि नात्मनः सर्वविज्ञानशून्यतारूपा स्तिमितावस्था; सर्वाप्रतिपत्तौ कस्यचिन्नियतस्य पटादेरभावत्। तस्माद् घटादिभ्यो भिन्ने पटादौ ज्ञानपरिणामे सत्येव तद्भिन्ने घटादौ ज्ञानापरिणामोऽभावज्ञानहेतुरिति वाच्यम्। न चैषोऽनुपलब्धेर्विशेषो घट-पटयोर्भेदज्ञानात् प्राक् सिध्यति। ततश्च पूर्ववदितरेतराश्रयत्वम्॥

ननु प्रत्यक्षेणैव भेदो गृह्यते। तथा हि—निर्विकल्पकप्रत्यक्षस्य सामान्यमात्रविषयतामपाकुर्वता वार्तिककृता "तदयुक्तम्" इत्याद्युक्तम्। ननु "वस्त्वसङ्करसिद्धिश्च तत्प्रामाण्यमुपाश्रिता" इत्यपि तेनोक्तम्, बाढम्; संयोगसमवायात्मकासङ्कराभिप्रायं तु तत्—इति ये त्वाहुः, ते प्रागेव 'आहुर्विधातृ प्रत्यक्षम्" इत्यत्र निरस्ताः॥

शङ्खपाणिव्याख्या

येऽपि काणादा एवमाहुः—भूतलादिवस्तुग्रहणप्रतियोगिस्मरणरूपयेतिकर्तव्यतयाऽनुगृहीतादक्षात् संयुक्तविशेषणसंनिकर्षेण लब्धं जन्म येन, तत् प्रत्यक्षान्तरमभावग्राहकम्। न च वाच्यम्—अक्षजं तच्चेद्विषयज्ञानवत् प्रथममेव स्यात्, न पश्चात्; प्रतियोगिस्मरणव्यवहिते चाक्षव्यापारे जातं कथं तदक्षजमिति? यतो यथा शब्दस्मरणापेक्षित्वात् सविकल्पकं निर्विकल्पकात् पश्चाद्भावि, यथा च शब्दस्मरण-

अभिप्रायप्रकाशिका

विज्ञातो बोधक इत्याह—न चेति॥ नान्तरीयकतामेव स्पष्टयति—नान्तरेणेति॥ स हि त्विति॥ विशेषणस्य प्रयोजनमाह—असत्स्विति॥ अथ प्रकृते किमायातमिति? अत आह—तथा चेति॥

प्रत्यक्षादेरनुत्पत्तिः प्रमाणाभाव इष्यते, साऽऽत्मनोऽपरिणामो वा?, विज्ञानं वाऽन्यवस्तुनि? इत्युक्तम्। तत्र वस्त्वन्तरविज्ञानपक्षमितरेतराश्रयेण दूषयति—स चेति॥ तत्र हेतुमाह—ज्ञेयभेदेति॥ अभावात्=अभावप्रमाणात्॥

अपरिणामपक्षं दूषयति—अथापीति॥ किं सर्वज्ञानपरिणामानामुपसंहारः? किं वा कस्यचित्? नाद्य इत्याह—न स स्तिमितेति॥ ततो द्वितीयः कल्पः परिशिष्यत इत्याह—तस्मादिति॥ तत्र यद्यपि ज्ञानाभावोऽप्यभावरूपत्वादनुपलब्ध्यन्तरगम्यः, तदप्येवमित्यनवस्था जागर्ति; तथापि तावुपेक्ष्य प्रकृतमितरेतराश्रयत्वमेवाह—न चैष इति॥ भट्टमतानुसारिणः केचित्प्रत्यक्षेणैव भेदग्रहमिच्छन्ति, तान् निराकर्तुम्—ये त्विति॥ तत्रैव वृद्धसम्मतिमाह—तथा हीति॥ तर्हि निर्विषयमेवाभावप्रमाणमिति, अत आह—यस्त्विति॥ क्षीर-नीरयोः संयोगात् संकरः, रूप-रूपिणोस्तु समवायात्, तत्रान्यतरोपलम्भेऽप्यन्यतरानुपलब्धिलक्षणाभावाख्यप्रमाणेन सोऽपनीयते; तत्राभावस्य भावातिरिक्तत्वात्, भेदस्तु नैवमित्यर्थः। अत्रोत्तरमाह—ते प्रागेवेति॥ "न भेदो वस्तुनो रूपम्" इत्यत्रोक्तमुत्तरमित्यर्थः॥

नैयायिकादेर्मतमाह—येऽपीति॥ तस्य का सामग्रीति? अत आह—वस्तुग्रहणेति॥ प्रतियोगिस्मरणादिव्यवहितस्य कथमैन्द्रियकत्वमिति?

ब्रह्मसिद्धिकारिका

मीयमानैकरूपेषु न निषेधीऽवकाशवान् ॥ १४ ॥

---

शङ्खपाणिव्याख्या

व्यवधानेऽपि तदनुगृहीतादक्षादुत्पत्तेर्नानक्षजम्, तथा 'नास्ति' इत्यपि ज्ञानं प्रतियोगिस्मरणापेक्षित्वात् पश्चाद्भावि, प्रतियोगिस्मृतिव्यवधानेऽपि च तदनुगृहीतादक्षादुत्पत्तेश्चाक्षजमिति, तान् प्रतीदमेव वक्तव्यम् —अन्योन्यसंश्रयात् इति। प्रमाणन्तरम्; प्रत्यक्षान्तरमित्यर्थः। प्रत्यक्षेणापि विषय-निषेध्यौ भेदेन गृहीत्वा तयोरन्योन्याभावो ग्रहीतव्यः; ततश्चाभावगम्य इव प्रत्यक्षगम्येऽप्यभावे तुल्यमितरेतराश्रयत्वमित्यर्थः ॥१३३॥

तत्त्वशुद्धिः

(कल्पकम् ?) धर्मि, प्रतियोगि, निरपेक्षभेद(दा)विषयम्, प्रत्यक्षत्वात्, सविकल्पकवदित्यर्थः। एवं तावत् प्रत्यक्षानुमानार्थापत्तीनां वस्तुभेदाविषयत्वाद् नाम्नायस्य तैर्विरोध इत्युक्तम्, इदानीं प्रत्यक्षं न केवलं भेदे वर्तते, प्रत्युताभेदगोचरमित्याह—किं चेति ॥ P. 58-18

मीयमानं सदात्मैकं रूपं येषाम् तेष्वित्यर्थः ॥

पूर्वं प्रमानुत्पादं स्वीकृत्य न तस्याभावधीहेतुत्वमित्युक्तम्, इदानीं स एव न सम्भवतीत्याह—अपि चेति ॥ 'सत्' इति सर्ववस्तुषु P. 58 20
वर्तमानं प्रत्यक्षं विश्वं गृह्णन्(द्) कथं नीलग्राही(हि) न पीतं गृह्णीयात्? गृह्ण(?)द्वा नीलात् कथं पीतं व्यवच्छिन्द्यादित्यर्थः ॥ नीलादितरत्वेनाभिमते पीते पीतादितरत्वेनाभिमतनीलगोचरप्रमाणानुत्पादो नास्तीत्यत्र हेतुमाह—तत्स्वभावत्वादिति ॥ सद्रूपत्वाद् नील-पीतयोरि- P. 53-21

अभिप्रायप्रकाशिका

अत आह—यथैवेति ॥ तत्रापि शब्दस्मरणव्यवधानादनैन्द्रियकत्वं किं न स्यादिति? अत आह—न चेति ॥ स्वाङ्गमव्यवधायकमिति न्यायादित्यर्थः ॥ १३३ ॥

एवं प्रत्यक्षादेर्भेदगोचरत्वादद्वैतागमस्य न तद्विरोध इत्युक्तम्, इदानीं प्रत्यक्षं न केवलभेदे प्रवर्तते? प्रत्युताभेदमेव गोचरयति, इत्याह—किं चेति ॥ सन्मात्रप्रमितावपि सद्विशेषा घट-पटादयः किं न प्रतीयन्त इति? अत आह—तत्स्वभावेष्विति ॥ इतरत्वेनाभिमते धर्मिणीतरत्वेनाभिमतप्रतियोगि-

तत्त्वशुद्धिः

त्यर्थः। सद्रूपा(प)प्रतीतिरेव व्यवच्छेदहेतुरिति, नेत्याह—सदिति चेति॥ प्रमाणानुत्पादस्याभाव(वे) प्रमाणस्याभावाच्च न व्यवच्छेदधीरित्याह
P. 58-22 —प्रमाणाभावाच्चेति ॥ चोदयति—नन्विति। भातीति(वि?)शेषः।
P. 58-23 (कुत इति? अत्राह—प्रत्यभिज्ञानाद्धीति ॥ भावानामभिन्नरूपप्रत्यभिज्ञाऽस्तीति, अत्राह—न चेति। त(१)त्रसरेणुं रूपं वा क्षेपणं वा गोत्वं (वा) गृहीतवतामर्थान्तरे हिमवति, गन्धे वा प्रसारणे वा, अश्वत्वे वाऽयमिति विशेषे वा स एवायमिति न प्रत्यभिज्ञानमस्ति
P. 58-24 लौकिकानामित्यर्थः। व्यतिरेकमुदाहरति—यथेति ॥ कालाक्षीमीक्षितवतो गवान्तरे स्वस्तिमत्यां तदेवेदं (गोत्वमि) वस्त्विति प्रत्यभिज्ञा (ना)स्तीत्यर्थः। कथं तर्हि सद् द्रव्यम्, सग(न् गु)णः, सत्
P. 58-25 कर्मेत्यादि बुद्धि-व्यपदेशौ लौकिकानामिति? अत्राह—सच्छब्देति। अयं (याचकोऽयं) (पा)चक इति बुद्धिव्यपदेशानुवृत्तिर्यथा पचिक्रियासम्बन्धनिबन्धना, न तत्र (पा)चकत्वं सामान्यं साधयति, तद्वदत्राप्युपाधिनिबन्धन त्यर्थः। कः पुनरत्रोपाधिः? तमाह—प्रमाणेति। प्रमाणम्=क्रियायोगः, तन्निबन्धनमित्यर्थः॥

P. 59-1 असेदप्रतिपत्त्यभावे निर्विषयत्वेनाप्रामाण्यं प्रमाणानां स्यादिति दूषयति—नैतदिति॥ भेदविषयाणि प्रमाणानि स्युः, अत्राह

अभिप्रायप्रकाशिका

विषयप्रमाणस्यानुत्पादो नास्ति; तयोः सन्मात्ररूपत्वात्, अतिरेके तयोर्निःस्वभावत्वप्रसङ्गादित्यर्थः। सत्स्वभावे तु सदाकारं प्रमाणं सर्वत्राविशिष्टमेवेत्यभिप्रेत्याह—सदिति चेति॥ अतश्चेतरेतराभावग्रहोऽनुपपन्नः; तज्जनकपराभिमतप्रमाणोदयाभावादिति, अत आह—प्रमाणेति॥

सत्तापलापवादी प्राभाकरश्चोदयति—नन्विति॥ कस्मान्नेति? अत आह—प्रत्यभिज्ञानादिति॥ 'तत्सत्' इति प्रत्यभिज्ञा विद्यत इति न; सर्षपमहीधरादौ 'तदेवम्' इति प्रत्यभिज्ञाभावादित्याह—न चेति॥ तत्र वैधर्म्यदृष्टान्तमाह—यथेति॥ कथं तर्हि सन्ति द्रव्य-गुण कर्माणीति बुद्धिव्यपदेशौ लौकिकानामिति? अत आह—सच्छब्देति॥ योगमेवाह—प्रमाणेति।

१. कुण्डलितो भागो (B) पुस्तके नास्ति

तत्त्वशुद्धिः

——यत इति ॥ अन्योन्याभावोऽन्यो वा, भेदो वा नायमिति निषेधमन्तरेण न सिध्यतीत्यर्थः। विधिवद् निषेधेऽपि प्रमाणव्यापारोऽस्त्विति, अत्राह——न व्यवच्छेद इति ॥ निषेधमात्रम्। विधि, निषेधो वा, योगपद्यं वा न युक्तम्, विधिपूर्वत्वाद् निषेधस्य, न विधेः पश्चान्निषेधः; क्षणिकत्वात् प्रमाणस्य विधानमेव, नैकस्य व्यवच्छेदोऽन्यगोचर इति च वर्णितमित्यर्थः।

फलितमाह——तत्रेति ॥ भेदाभेदाभ्यां विषयान्तराभावादित्यर्थः ॥ तत् किं प्रमाणानामस्ति विषय इति पूर्वापरामर्शमन्तरेणैवाभिन्नवस्तुविषयताभ्युपेयतामित्याह—अप्रत्यभिज्ञानं चेति ॥ यथा कालाक्षीमीक्षितवतः स्वस्तिमत्यां गवि गौरित्येकनिर्भासावमर्शः, न तथा तामेव दृष्टवतो गामित्येतावता सत्यपि(विश) सदित्यनुगमे सत्त्वमेवानुभूयेत। ततो देवदत्तगोचरपरामर्शवैलक्षण्यात् गोत्वमेप्येकमपह्नोतव्यं स्यादित्यर्थः। देवदत्तवैलक्षण्यं स्पष्टयति——न हीति ॥ P. 59-4 P. 59-5 P. 59-6

मा भूत्तादृशः, गवान्तरेऽस्ति तावत् पूर्वापरानुसन्धानम्, न तु मात्रयापि सतः सदन्तर इति शङ्कते—अथेति ॥ तदेतद् दूषयितुं साकूतं P. 59-7
किं वृत्तेन परामृशति——किं च भोरिति ॥ किं भोः अनुसन्धाना- P. 59-8
देवैकत्वम्? नाभिन्नसंविदश्चेत्यन्वयः एवमेवैतत्, किमत्राद्भुतमिति?
अत्राह——नेदानीमिति ॥ अनेनैकस्य घटानुसन्धानानुभवस्य पश्चाद् P. 59-9
भवदनुसन्धानमुच्यते, न चैतदभिन्नदेशकालार्थ एस्मिन् अस्ति, अथ

अभिप्रायप्रकाशिका

प्रमाणगम्यत्वं सच्छब्दनिमित्तमित्यर्थः। अभिन्नरूपप्रतिपत्त्यभावे कथं निर्विषयत्वं प्रमाणस्येति? भेदस्य प्रमाणगोचरत्वानुपपत्तेर्दर्शितत्वादित्याह——यत इति ॥ एकमपीति ॥ भेदाभेदयोरन्यतरदित्यर्थः ॥

प्रत्यभिज्ञाभावोऽपि किं निखिलरूपस्यानुगमनाभावादुच्यते, किं वा मात्रयाऽपि? तत्राद्यं दूषयति——अप्रत्यभिज्ञानं चेति ॥

द्वितीयपक्षमुत्थापयति——अथास्तीति ॥ प्रत्यभिज्ञाभावमङ्गीकृत्य (पूर्वमुक्तम्) इदानीं प्रत्यभिज्ञैवैकत्वग्राहिका न भवति; प्रकारान्तरेणापि तत्सिद्धेर्दृष्टेरित्यनियममाह सिद्धान्ती—किं च भोरिति ॥ तदेव स्फुटयति—

तत्त्वशुद्धिः

च सोऽप्येक एवेत्यर्थः। एतदेव स्फुटयति—देशकालेति ॥ न केवलमसाधारण एकस्मिन् सामान्येऽपि क्वचिन्निर्विकल्पकेनानुभूयमान एकत्वे सत्यपि देशभेदे नानुसन्धानम्, सन्धानमात्रमेव तत् स्यादित्या-
P. 59-10 दित्याह—गोमण्डले वेति ॥ गौरित्याकारेणैकार्थप्रतिपत्तिरित्यर्थः ॥

तत्रापि प्रत्यभिज्ञानादेवैकत्वप्रतिपत्तिः, अत्राह—न चेति ॥ निर्विकल्पकस्य वस्तुमात्रग्राहकस्य नानेकेषामेकाकाराग्रहकत्वम्, अत आह यथोक्तमिति ॥ द्व्यात्मकस्य=विशेष-सामान्यरूपस्य, गृहणम्-लक्षणाख्येयम्=वस्तुमात्रस्यालोचनं निर्विकल्पकमिति लक्षणेनाख्येयम्=कथनीयम्; आलोचनीयस्य वस्तुतो द्व्यात्मकत्वात्। कस्तर्हि सविकल्पक-
P. 59-15 निर्विकल्पकयोर्विशेषः? अत्राह—ज्ञात्रेति ॥ शब्दसञ्जल्पाभावात्=ज्ञातुर्वस्तु(स्वरूप)ग्रहणमिमान इति भावः। एवं तावदसत्यप्यनुसन्धानेऽभिन्ननिर्भासादेवानुभवादेवाभिन्नत्वं व्यवस्थापितम्, अस्ति तु सदन्तरे
P. 59-16 मात्रयाऽनुसन्धानमित्युपपादयितुं प्रतिबन्दीं गृह्णाति—न चेति ॥

अभिप्रायप्रकाशिका

अभिन्नदेशकालेति ॥ तदेवमेकदेशकाले वस्तुनि देशादिपरामर्शरूपप्रत्यभिज्ञाभावेऽप्येकत्वं दृष्टमित्यर्थः। न केवलमेकस्यां व्यक्तावेव, सामान्येऽपि कालभेदपरामर्शरूपप्रत्यभिज्ञाभावेऽप्येकत्वमनुभूयत इत्याह—गोमण्डले चेति ॥

उक्तेऽर्थे भट्टवार्तिकमुदाहरति—निर्विकल्पकेति ॥ द्व्यात्मकस्यापि वस्तुनो ग्रहणं भवतीति विशेषः। इयं च लक्षणाख्या प्रमाणस्य लक्षणस्य स्वरूपकथनं दैवगत्या। ज्ञात्रा तु पुनर्वस्तु शुद्धमिदं सामान्यमयं विशेष इति विकल्पशून्यं गृह्यते। यद्वा—लक्षणयाऽऽख्येयं लक्षणकारणभूतयानुपपत्त्येत्यर्थः। ग्रहणमस्तीत्याख्येयम्=कथनीयम्। निर्विकल्पकेन द्व्यात्मकस्य वस्तुनो ग्रहणाभावे तद्वाचकशब्दस्मरणपुरःसरस्य सविकल्पकस्यानुपपत्तेरित्यर्थः। शेषं पूर्ववत् ॥

प्रत्यभिज्ञाभावमङ्गीकृत्य तदेवावोचम्; अस्ति तु प्रत्यभिज्ञेति प्रतिबन्दिन्यायेनाह—न चेति ॥ तर्हि को विशेषो मणिकयोरिति? अत आह—न त्विति ॥ यथा मणिकं दृष्टवतो मणिकान्तरेऽनुसन्धिः; सामान्यानां द्रव्यत्व-पृथिवीत्व-मणिकत्वानां भूयस्त्वादुत्कटम्, तथा मणिकं

ब्रह्मसिद्धिकारिका

भेदाभेदावभासे द्वे विज्ञाने चेत् परीक्ष्यताम् ॥ १४½ ॥

---

तत्त्वशुद्धिः

"अलिञ्जरः स्यान्मणिकः कर्कर्यालुर्गलन्तिके शरावो वर्धमानकः" इति चामरसिंहः। मृन्मणिकं मृच्छराव इति प्रत्यभिज्ञाऽस्तीति शङ्कते—अथेति ॥ तर्हि मणिकत्वम(पि) शरावे स्यात् अत्राह—न त्विति ॥ P. 59-17
मणिकद्वये यथा, न तथाऽत्रेत्यर्थः। हेतुमाह—सामान्यरूपाणामिति ॥ मणिकयोर्मृत्त्व-द्रव्यत्व-मणिकत्वादिसामान्यभूयस्त्वादुत्कटः परामर्शः, मणिक-शरावयोर्मृत्त्वाद्यल्पसामान्ययोगादनुत्कट इत्यर्थः। तदेतत् सदन्तरेऽपि समानमित्याह—सदन्तरेऽपीति। अयमर्थो नियोगकाण्डे सत्तावादे वक्ष्यत इत्याह—विस्तरेणेति ॥ १४ ॥

कारिकाविवरणम्

एवं तावत् कारणतो भेदावगमं परीक्ष्य, विशेषतः परिशिष्यमाणं भेदाभेदवादिनो मतमुत्थापयति—भेदाभेदेति ॥ सर्वजनीनौ तावदिमौ भेदाभेदनिर्भासाप्रत्ययौ—सदिदं द्रव्यम्, न गुण इति, तयोः कारणं कल्प्यम्, न तु तदनुपपत्त्या कार्यं हेयम्, चक्षुराद्यनुपलब्ध्या रूपादिधियामपि तत्प्रसक्तेरित्यर्थः ॥१४½ ॥

धीमात्रं नार्थसाधकम्, देहात्मतादेरप्यादेयत्व-

अभिप्रायप्रकाशिका

दृष्टवतः शरावे नास्त्यनुसन्धिर्मणिकत्वहीनतयाऽल्पसामान्यानुगमादिति योजना। इहापि तर्हि महीधरादीनामसद्विलक्षणेन रूपेणातुल्यत्वप्रतिपादनादस्त्येकरूपानुसन्धिरित्याह सिद्धान्ती—सदन्तरेऽपीति ॥ यत् प्रमाणविषयत्वं सच्छब्दवाच्यप्रवृत्तिनिमित्तमित्युक्तम्, तत्राह—विस्तरेणेति ॥ एवं तावत् भेदज्ञानस्य प्रत्यक्षादिप्रमाणजन्यत्वात् सम्भवोऽभिहितः, सम्प्रति विषयविचारणयापि तस्य दुर्निरूपतां वाद्यभ्युपगमप्रदर्शनपुरस्सरमाह—भेदाभेदेति ॥ १४ ॥

तत्र प्रमाणमाह—न हीति ॥ भवेतां नाम विज्ञाने; तथापि भेदो मा भूदिति, अत आह—न चेति ॥ विपक्षे दोषमाह—तस्येति ॥ युक्त्या विरुध्यते? न वा? इति विषयतो विचारणीयत्वम्, प्रमाणोत्थम्?

तत्त्वशुद्धिः

P. 59-20 प्रसङ्गात्, किन्तु विचारसहं ज्ञानं स्वविषयसाधकमिति विचारं प्रतिजानीते—परीक्ष्यतामिति ॥ १४३ ॥

कारिकाविवरणम्

P. 59-21 सन्नित्यनुवृत्ताकारम्, घट इति व्यावृत्ताकारं ज्ञानमनुभवसिद्धमुपेयमित्याह—यदीति ॥ नानुभवमात्रेण परप्रत्यायनम्; विपरीतो ममानुभाव इति परस्य शक्याभिधानत्वात्, अत्राह—न हीति ॥ ज्ञान-
P. 59-22 प्राप्तस्य भेदस्य न सत्त्वमिति, अत्राह—न चेति ॥ विमतम्, न सदर्थम्, भेदज्ञानत्वात् चन्द्रभेदज्ञानवदिति चेत्, तर्हि विमतमभेदज्ञानम्, न सद्विषयम्, अभेदज्ञानत्वात्, रज्जुपसर्पाभेदज्ञानवदिति प्राप्तस्याभेदस्य न सत्त्वमिति, तत्राह—न चेति ॥ विमतम्, न सदर्थम्;
P. 59-23 भेदैरपि(?)(द)वदिति, अत्राह—तस्येति ॥ दूषयति—नैतदिति ॥ हेतुमाह—न हीति ॥ शरीरात्मतादेरपि सत्त्वप्रसक्तेरित्यर्थः ॥

देहात्मताज्ञानं न्यायविरुद्धत्वाद्भ्रमत्वादसाधकम्, अत्राह—
P. 59-24 तदपीति ॥ अनुवृत्त-व्यावृत्तज्ञानमित्यर्थः। प्रमाणानुग्राहकस्तर्कः प्रमाण-
P. 59-25 ज्ञान-विरोधे स्वयं बाध्यत इति, अत्राह—प्रमाणेति ॥ प्रमाण फलत्वमस्य विचार्य निर्धार्यमित्यर्थः। ज्ञानस्य स्वतःप्रमाणत्वात् कुतो विचारप्राप्तिः? अत्राह—न खल्विति ॥ भेदज्ञानस्य प्रत्यक्षस्य प्रमाणत्वादप्रमाणयुक्त्या बाधे(धो) न युक्त इति शङ्कते—स्यादेतदिति ॥ बाढं प्रत्यक्षमबाध्यम्;
P. 60-1 अस्य तदाभासत्वात् बाध्येतेत्याह—सत्यमिति ॥ कारणतः, विषयतश्च विचारा सहत्वादप्रत्यक्षत्वं कुत्रोक्तम्? तदाह—यथेति ॥ क्षेपीयान्=क्षिप्रतरः, सर्वतः=पार्श्वयोरुपरिष्टादधश्च दिक्संयोगः, तेन कारितस्येति निर्वाच्यम्। उल्मुकस्य चक्राकारज्ञानमपरोक्षमस्ति चेत्, तदपि
P. 60-2 स्वविषयसाधमेवेति, अत्राह—सदपीति ॥ स्वप्नदृश्यालाचक्रज्ञानवद्

अभिप्रायप्रकाशिका

न वा? इति कारणतो विचारणीयत्वं दर्शितम्। ज्ञानमस्ति चेत्, कथं विचारणेति? अत आह—न खल्विति ॥

अपरोक्षतयाऽवभासमानस्य कथमप्रत्यक्षतेति? अत्राह—यथेति ॥ भेदप्रतीतिर्विद्यमानाप्येवमेवेत्याह—तत्सदपीति ॥

तत्त्वशुद्धिः

जाग्रद्दृश्यालातचक्रज्ञानस्यापि नार्थसाधकत्वं, यथा, तदा (था) भेदज्ञानस्याप्यसाधकत्वं पूर्वोक्तन्यायेन, अतो न प्रमाणात् भेदसिद्धिरित्यर्थः ॥

प्रमाणस्य भेदज्ञानं प्रत्यकारणत्वेऽन्यदपि तत् कारणं नास्ति, इति दृश्यमानभेदज्ञानमेव न स्यादिति चोदयति—नन्विति ॥ P. 60-3
अन्योन्याश्रयादेस्तत्रापि तुल्यत्वादित्यर्थः। कुतश्चिदपि पारमर्थिकभेदावगमो नास्त्येवेत्याह—को वेति ॥ व्यतिरेकद्वारोपपादयति— P. 60-4
यदीति ॥ भेदस्य बाधेऽपि तदवगमस्ततोऽन्यः सन् वा, न वा, अत्राह— P. 60-5
अपह्नवे वेति ॥ ज्ञेयमिथ्यात्वे ज्ञानमिथ्यात्वं साधयति—नावगम्यमिति ॥ तदसत्त्वे तद्विशिष्टावगमायोगादवगममात्रस्य भेदसाधकत्वायोगादुभयमप्यसदित्यर्थः ॥

प्रतीतेर्गतिं पृच्छति—किं तर्हीति ॥ अविद्याकृतत्वम्=भ्रमत्वं P. 60-7
गतिरित्याह—अविद्येति ॥ अन्यत्र सत एवान्यत्र भ्रान्त्या भासनात् भेदसत्त्वसिद्धिः, अत्राह—यथावभासं चेति ॥ अन्यत्र सत्त्वे मानाभावादत्र सत्त्वे भ्रमबाधानुपपत्तिरित्यर्थः। तर्हि बाधकप्रत्ययानुरोधादसदेव भ्रान्तिवेद्यम्, अत्राह—असति चेति ॥ अपरोक्षभासनासम्भव इति P. 60-8

अभिप्रायप्रकाशिका

प्रत्यक्षस्वरूपमिव रूपमस्येति ॥ स्वरूपम्=प्रत्यक्षाभासमिति यावत्। किं विधायकम्? उत व्यवच्छेदकम्? उतोभयव्यापारमित्यादिविकल्पानामप्रमाणेऽपि तुल्यत्वात्ततोऽपि भेदप्रतीतिरयुक्तेति शङ्कते—नन्विति ॥ किं परमार्थतोऽनुपपत्तिरुच्यते? किं वा कल्पनयेति? आद्याऽङ्गीक्रियत इत्याह—को वाऽन्यथेति ॥ विषयाभावे विज्ञानं परमार्थतः किं न स्यादिति? अत आह—अपह्नवे वेति ॥ तदेवोपपादयति—नावगम्यमिति ॥

प्रश्नपूर्वं द्वितीयं कल्पमवल[illegible]—किं तर्हीति ॥ तथापि कथं विषयापह्नव इति? तत्राह—यथावभासं चेति ॥ किं तु सम्यग्ज्ञानमेव स्यादित्याह—सम्यग्ज्ञानमिति ॥ तथापि कथमनिर्वचनीयत्वमिति?

तत्त्वशुद्धिः

भावः। यस्मात् सदसतोर्भ्रम-बाधासिद्धिरित्युपसंहरति—तस्मादिति ॥
P. 60-9 कथं तर्हि तन्निबन्धनव्यवहार इति ? अत्राह—लोक इति ॥

P. 60-10 सम्प्रति विषयनिरूपणद्वारा तद्विभ्रमत्वसाधनायोपक्रमते—अपि चेति ॥ ता एव दर्शयति—ज्ञानेति ॥ कस्यायं सिद्धान्त इति ? सामा-
P. 60-11 न्य-विशेषयोस्समवायसम्बन्धवादिनां तार्किकाणामित्याह—यथाहुरिति ॥ सामान्य-विशेषयोर्नात्यन्तिको भेदः, नाप्यभेद इति भेदाभेदवादिनां भाट्टप्रभृतीनां मतमाह—एकं वेति ॥ क्षणभङ्गवादिसिद्धान्तमाह—विशेषा एवेति ॥

भावानां क्षणभङ्गित्वे कथं तद्भावानवगतिरिति ? अत्राह—तेषामिति ॥ आत्यन्तिको भेदः=व्यावृत्तिः=देशतः परमाणुत्वम्। कालतश्च क्षणिकत्वम्। तच्च नार्वाग्दृशां ज्ञानगोचर इति। विशेषोपादान इत्यर्थः। स्वलक्षणगोचरानुभवोपादानत्वात् कल्पनानां न कल्पना-

अभिप्रायप्रकाशिका

तत्राह—असतीति ॥ अप्रतिपन्नं कथं कल्प्यत इति ? अत्राह—लोक इति ॥ सर्वप्रवादेषु=शास्त्रेषु। सिद्धत्वादित्यन्वयः ॥

इदानीं विषयं निरूपयति—अपि चेति ॥ ज्ञानभेदादिति ॥ अनुवृत्त-व्यावृत्तस्वरूपज्ञानसद्भावादित्यर्थः। संसर्गवादिनः = समवायवादिनः। नैयायिकादय इत्यर्थः। अनेकान्तवादिनः=आर्हतादयः। क्षणिकवादिनां मतमाह—विशेषा एवेति ॥ कथं तर्हि एकोऽयं घट इत्याद्यभेदावभास इति ? अत आह—तेषामिति ॥ तेषामात्यन्तिकं भेदः=व्यावृत्तिः, सा देशतः=परमाणुत्वम्; एकस्यानेकदेशवृत्तेरवयविनोऽङ्गीकारात, कालतश्च क्षणिकत्वम्। तच्च नापातदर्शिनां ज्ञानगोचरम्(:)। यद्यप्यभेदो (पादाना) विशेषोपादानकल्पना; ज्ञानमयत्वात; तथापि स्वलक्षणविषयनिर्विकल्पकजन्यकल्पनाविषयत्वादभेदस्य, विषय-विषयिणोश्च भेदाभावान्न निर्विकल्पकरूपानुभवद्वारान्तर्विषयविशेषोपादानत्वमुक्तम्—अविषयत्वमप्यध्यवस्यतः, न तु ग्रहणानाम् सविकल्पकस्य बाह्यानालम्बनस्याप्यगृहीतप्रवर्तनाशक्तेरध्यवसायात्मिकायाः सुगतैः स्वीकृतत्वादिति मन्तव्यम् ॥

ब्रह्मसिद्धिकारिका

न तावद् द्वयमैकात्म्यप्रख्यानानवकल्पनात् ॥ १५ ॥
समवायकृतं तच्चेन्न भेदस्यापरिच्युतेः ॥ १५½ ॥

---

तत्त्वशुद्धिः

विषयो भेदः स्वलक्षणोपादान इति, अत्राह—तद्विषय इति ॥ कल्पनो- P. 60-14
पादानानुभवस्य स्वलक्षणो(णा)भेदात्तदुपादानत्वमित्यर्थः । अत्यन्त-
विलक्षणेषु स्वरूपविरोधादभेदकल्पनाऽनुपपत्तिः, अत्राह—दृष्टा हीति ॥
प्रामाणिकमतमाह—अभेदो वेति ॥ अद्वितीये स्वतोऽपरोक्षे भेदभ्रमो- P. 60-15
ऽपि न सम्भवति; तत्त्वधीविरोधात्, अत्राह—तस्येति ॥ अनवच्छि-
न्नस्य=निरुपाधिकस्य, अनन्तस्य=परिच्छेदत्रयरहितस्याविद्ययाऽऽ-
वृतत्वादित्यर्थः । अविद्याऽप्यद्वितीये हेत्वाभावान्न सम्भवेत्, अत्राह
—अनादित्वाच्चेति ॥ अविद्योपादाना ब्रह्माधिष्ठाना तत्कल्पनेत्यर्थः । P. 60-16
निदर्शनाभावान्नेदं प्रतिपत्तुं शक्नोतीति, अत्राह—दृष्टा हीति ॥ P. 60-17

यतो वादिविप्रतिपत्तौ सत्यां साधक-बाधकयोरभावेऽसन् देहः,
तस्मादपरीक्ष्य न तत्त्वनिर्णय इत्याह—तत्रेति ॥ १४½ ॥

सामान्य-विशेषौ द्वौ पदार्थाविति प्रथमकल्पं निराकरोति—
तत्रेति ॥ P. 60-18

हेतुमाह—ऐकात्म्येति ॥ अभेदज्ञानायोगादित्यर्थः ॥ P. 60-19
भिन्नयोः सामानाधिकरण्येन धीः समवायसंसर्गादिति
शङ्कते—समवायेति ॥ सत्यपि समवाये भेदापरिलोपा- P. 60-20
दभेदधीरयुक्तेत्याह—नेति ॥ लक्षणभेदात् ॥ १५½ ॥ P. 60-21
सामान्य-विशेषौ द्वौ पदार्थाविति, अत्राह—न तावदिति ॥

अभिप्रायप्रकाशिका

स्वमतमाह—अभेदो वेति ॥ कथं तर्हि भेदावभास इति ? अत
आह—तस्येति ॥ अनवच्छिन्नस्य=देशकालाभ्यामपरिच्छिन्नस्य, अन्योन्याभाव-
रहितस्येति यावत् । स्वयंप्रकाशस्य कथमनिश्चय इति ? अत आह—
अनादित्वाच्चेति ॥ १४½ ॥

तत्र न प्रथमः कल्प इत्याह—न तावदिति ॥ तदभेदमाह—

तत्त्वशुद्धिः

प्रख्यययाऽभेदं साधयति—समानाधिकरणत्वेनेति । परापरसामान्याभेदे निदर्शनद्वयं व्याप्तिप्रदर्शनार्थम् । समानम्=अभिन्नमधिकरणं विषयरूपं ययोस्ते, समानाधिकरणे तद्भावः, समानाधिकरणत्वम्, तेनेत्यर्थः ॥

P. 60-22 व्यतिरेकमाह—नेति ॥ नीलं पीतमिति प्रख्ये परस्परसम्बन्धरहितवस्तुद्वयग्राहिण्यौ यथेत्यर्थः । परस्परसम्बन्धव्यधिकरणवस्तुद्वयविषय-
P. 60-23 प्रख्यामुदाहरति—यथा वेति ॥ अथ मा भूतां स्वतन्त्रे व्यधिकरणभावेन, विशेषणभावेन तु सत्ता भिन्नैव सती घटादिभिर्भिन्नैः सम्बध्यत
P. 60-24 इति, अत्राह—नापीति ॥ हेतुमाह—सम्बन्धस्येति ॥ सोऽयं चैत्र इतिवदत्रापि संसर्गो न चकास्तीत्यर्थः ॥

अपि च सम्बन्धादपि दण्ड-दण्डिनोरिव वैयधिकरण्यमेव स्यात्, न तु सामानाधिकरण्यमिति, अत्राह—न चेति ॥ तदेव स्फोरयति—
P. 60-25 सम्बन्धीति ॥ द्वाभ्यामित्यापाततः, परमार्थतस्त्वेकयेति । सामान्यविशेषौ, विशेषण-विशेष्यभावेन प्रतीतिगोचरौ, मित(थः)सम्बन्धित्वात्,

अभिप्रायप्रकाशिका

समानाधिकरणत्वेनेति ॥ परापरसामान्येन निदर्शनद्वयमाह—सन् घट इति ॥ सम्बन्धरहितवस्तुद्वयग्राहिण्यौ 'नीलम् पीतम्' इति प्रसंख्ये । सम्बन्धव्यधिकरणवस्तुद्वयविषया 'देवदत्तो दण्डः' इति प्रख्या भिन्न इति सत्ताविशेषणत्वेन घटादिभिः सम्बध्यत इति, अत आह—नापीति ॥ 'दण्डी देवदत्तः' इति-वत् 'सन् घट' 'इत्यत्र सम्बन्धस्याप्रतीतेरित्यर्थः ॥

अपि च सम्बन्धादपि दण्ड-दण्डिनोरिव वैयधिकरण्यमेव स्यात्, न तु सामानाधिकरण्यमित्याह—न चेति ॥ तदेव स्फुटयति—सम्बन्धीति ॥ द्वाभ्यामिति ॥ 'विशेषणज्ञानं विशेष्यज्ञानहेतुः' इति वैशेषिकादीनां मतमव-

तत्त्वशुद्धिः

दण्डदेवदत्तवत्, अत्राह—परस्परात्मत्वेन चेति ॥ हेत्वन्तरमाह— P. 60-26
विप्रतिपत्तेश्चेति ॥ कापालिककौमारिलादीनामिति शेषः। विशेषण-विशेष्य-
भावेन प्रतीतयोरपि भेदे विप्रतिपत्तिः स्यात्, अत्राह—नान्यथेति ॥ P. 61-1
सामान्यबुद्धौ विशेषास्फुरणाच्च न तयोर्भेद इत्याह—सामान्येति ॥
मुद्ग-माप-तिलादौ विशेषद्रव्ये प्रत्यक्षाभिमानादित्यर्थः। यदि सामान्या-
द्विशेषो भिन्नः, तत्राह—अन्यथेति ॥ सामान्यदर्शनात् तन्नान्तरीयत- P. 61-2
याऽनुमेयः स्यात्, तथा च धूमदृष्टावित्राग्नौ परोक्षाभिमानः स्यात्।
न चैवम्; निर्विशेषसामान्यस्फुरणायोगादित्यर्थः ॥

सम्बन्धाद्धि द्वयं विशेषण-विशेष्यभावेन दृश्यत इति यदुक्तम्,
तत्र चोदयति—स्यादेतदिति ॥ संयोगादिभ्यः समवायस्य कोऽतिशयः? P. 61-3
येन भिन्नयोरभेदधीः, तत्राह—स हीति ॥ स खल्वयुतसिद्धसम्बन्धि-
वर्तितया सम्बन्धान्तरेभ्यो भिद्यते, ततः समवायिनां सामान्य-विशेषा-
दीनां यः संश्लेषः परस्पराविभागः, तदात्मकः। तथा च संबन्धान्तर
एव वैयधिकरण्यम्, न समवायेऽपीत्यर्थः ॥

अभिप्रायप्रकाशिका

लम्ब्योक्तम्—ए(क)या वेति ॥ विशेषण-विशेष्ययोर्युगपद्ग्रहणवादिनां
भाट्टादीनां मतमवलम्ब्योक्तम् ॥

हेत्वन्तरमाह —विप्रतिपत्तेश्चेति ॥ प्रत्यक्षतः सामान्य-विशेषयोर्भेद-
विप्रतिपत्तौ साङ्ख्यादीनां वैशेषिकादिभिः सह न विप्रतिपत्तिः स्यादित्याह
—नान्यथेति ॥ युक्त्यन्तरमाह—सामान्येति ॥ दूरात् मुद्ग-माष-तिलादि-
राशिदर्शने सामान्यं तावत्प्रत्यक्षम्; तथापि भेदानामग्रहणेऽपि तद्विशेषो
दृष्ट इत्यभिमानो दृष्ट इत्यर्थः। निर्विशेषं न सामान्यमिति न्यायेनानुपपत्त्या
विशेषग्रहणं किं न स्यादिति? अत आह—अन्यथेति ॥

श्लोकस्योत्तरार्धं व्याचष्टे—स्यादेतदित्यादिना ॥ भवतु समवायः;
सामानाधिकरण्यं तु कुत इति? अत आह—स हीति ॥ वस्तूनां गुण-
गुण्यादीनां यः संश्लेषः=परस्पराविभागः, तदात्मक इत्यर्थः ॥

तत्त्वशुद्धिः

P. 61- 4 दूषयति—तन्नेति ॥ यथा समवायः सम्बन्धं प्रतिक्षिपति, तथा
समवायिनो भेदमपीति, अत्राह—अन्यथेति ॥ सत्यपि समवाये
P. 61- 6 समवायिनोः स्वभावभेदेऽपि किमनिष्टम्? तदाह—तथा चेति ॥ मा
भूदभेदधीः, अतस्तत्राह—अस्ति चेति ॥ कारिकार्थं निगमयति—
अत इति ॥

सदाकारो घटाकारश्च प्ररूयाभेदो न वस्तुभेदव्यवस्थायै समर्थ
इत्यर्थः। प्ररूयाभेदविरोधात् भेदप्ररूयैव भेदं किं न साधयेदिति?
P. 61- 6 अत्राह—स्वयं चेति ॥ भेदप्ररूयानस्य व्याहतत्वे हेतुमाह—एकेति ॥
न खलु सन्नसन् घट इति प्ररूया, किन्तु सन् घट इत्येवोत्पद्यत इत्यर्थः
॥ १५½ ॥

P. 61- 7 ताभ्यां रूपभेदस्यानपायादित्युक्तमभ्युपगम्य चोदयति—
नन्विति ॥ अनुवृत्ति-व्यावृत्तिरूपविरुद्धधर्मसंसर्गात् तच्छब्दयोरपर्याय-

अभिप्रायप्रकाशिका

चतुर्थपादेनोत्तरमाह—तन्नेति ॥ विपक्षे दोषमाह—अन्यथेति ॥ एकस्मिन् सम्बन्धानुपपत्तेरित्यर्थः। अतस्तथेति ॥ सदाकारो घटाकारश्चेति—प्ररूयाभेदस्तयैकात्मप्ररूयया विरुद्धो न वस्तुभेदव्यवस्थायै प्रभवति=बुद्धिभेदव्यवस्थायै प्रभवति बुद्धिभेदपक्षे। बुद्ध्यभेदपक्षं स्वीकृत्याह—स्वयं चेति ॥ कुत इति? अत आह—ऐकाधिकरण्येनेति ॥ अभेदेनोत्पत्तेरित्यर्थः ॥

उत्तरश्लोकमवतारयति—नन्विति ॥ सामान्य-विशेषयोर्भेदं परिकल्प्य तयोरभेदप्रतिभासः समवायकृत इति कल्पनाद्वरमेकस्मिन्नेकप्रतिपत्तिकल्पनम्; उभयवादिसम्प्रतिपन्नत्वादेकत्वस्येत्याह—समवायेति ॥ १६½ ॥

ब्रह्मसिद्धिकारिका

भेदान्तर्धानसामर्थ्यं तस्य भेदेऽपि चेन्मतम् ॥ १६ ॥

हन्तैकस्यैव तत् किं न यदेवमवभासते ॥ १६½ ॥

दृष्टः संसर्गधर्मोऽयं यद्येकमपि वै तथा ॥ १७ ॥

नानावभासते चित्रं रूपमेकं तथामतिः ॥ १७½ ॥

---

त्वाच्च सामान्य-विशेषयोर्भेदे कथमभेदधीनिदानं (न) समवायः ? अत्राह —तस्य खल्विति ॥ क्षीर-नीरादिषु भेदग्रहानिमित्तत्वं सम्बन्धस्य दृष्टमित्यर्थः । समवायिरूपयोर्विवेकस्फुरणेऽपि कथं सामानाधिकरण्यव्यवहारो लौकिकानाम् ? अत्राह—तथा चेति ॥ एतदुत्तरत्वेन श्लोकमवतारयति—अत्रेति ॥ P. 61- 8

कारिकाविवरणम्

तस्य=समवायस्य सामान्य-विशेषयोर्भेदेऽपि, हन्त तर्हि, यत्=यस्मात्=एवम्, अवभासते,=अभिन्नं चकास्तीत्यर्थः ॥ १६½ ॥

भेदाग्रहमात्रादभेदव्यवहारोपपत्तेर्न समवायाद् भिन्नयोरभेदबुद्ध्यभावात् प्रतिबन्दी युक्तेत्याशङ्क्य व्याचष्टे—समवायेति ॥ संसृष्टव्यवहारस्य संसर्गधीपूर्वकत्वनियमात् समवायनिमित्तो विभ्रम इति वक्तव्यम् । तत्राभेदधीर्विभ्रमः, आहोस्वित् भेदोल्लेख इति । तत्र कल्पनालाघवाद् भेदोल्लेख एवासमीचीन इत्यर्थः । अभिन्ने भेदभ्रमासम्भवात् कल्पनागौरवमभ्युपेयम्, अत्राह—न हीति ॥ १६½ ॥ P. 61-13 P. 61-14

चोदकोऽनुशयनिमित्तमुद्घाटयति—नन्विति ॥ एवंविधभेदान्तर्धानविषयमित्यर्थः । तथापि गौरवतादवस्थ्यम्, अत्राह—तत्रेति ॥ प्रमाणवदृष्टवस्तुकल्पनं न दोषमावहति ; तत्त्वविषयत्वात् प्रमाणस्येति भावः । परिहरति—उच्यत इति ॥

कारिकाविवरणम्

यदेकमपि तथा = नानावभासमानं दृष्टम्, यस्मादेकं चित्रं रूपं नाना भासते, यतश्च साकारज्ञानवादिनां नगरादिमतिरेका; विविधविषयाकारा भासत इत्यर्थः ॥ १७½ ॥

तत्त्वशुद्धिः

P. 69-19 एकमनेकमिति न क्वचिद् दृष्टमित्याशङ्क्य व्याचष्टे—दृष्टमिति ॥ नीलादिभ्यो न भिन्नमस्ति चित्रं नाम; विवेकेनाप्रतिभासनात्,
P. 61-20 अत्राह—तद्धीति ॥ हेतुमाह—तेषामिति ॥ चित्रावयव्यारम्भकावयवसमवाये तदतिरिक्तस्य चित्ररूपस्यैकस्यावयविसमवेतस्यानङ्गीकारे चित्रमिदमित्येकत्वानुभवो न स्यात्; नीलादीनामनेकत्वादित्यर्थः।
P. 61-21 एकश्चित्र इति व्याघातादरूपश्चित्रावयवीति, अत्राह—न चेति ॥ कुत इति? अत्राह—रूपसंस्कारेति ॥ रूपमेव संस्कारः, तेन खल्वयमाकाशादिभ्यो व्यावर्तमानश्चाक्षुषो भवत्यवयवी, तदभावे न स चाक्षुषः स्यादित्यर्थः ॥

P. 61-22 यथा सङ्ख्यादयः स्वयमरूपा अपि रूपिद्रव्यसमवायात् चाक्षुषाः, तथाऽवयव्यपि किं नेष्यते? तत्राह—न च रूपीति ॥ तार्किकस्य स्वीय-
P. 61-23 सूत्रविरोधादित्याह—एवं हीति ॥

अभिप्रायप्रकाशिका

नीलादिरूपसमाहारमात्रत्वात् चित्रस्यैकत्वं न सम्प्रतिपन्नमिति, अत आह—तद्धीति ॥ रूपान्तरानभ्युपगम इति ॥ न हि नीलादय एवाव्याप्यवृत्तयो दृष्टाः, न च सङ्ख्यादिवद(वयव)गतानामाप्यवयविगतत्वसम्भवः; तेषामेकाश्रयत्वनियमात्, अतोऽवयविगतस्य चित्ररूपस्यैकस्याभावे 'अवयविनो न' चाक्षुषत्वं स्यादित्यर्थः ॥

यथा सङ्ख्या-कर्मादयः स्वयमरूपा अपि रूपिद्रव्यसमवायात् चाक्षुषाः, तथाऽवयव्यपि किं न स्यादिति? अत आह—न च रूपीति ॥ कुत इत्याकाङ्क्षायां परमर्षिसूत्रविरोधादित्याह—एवं हीति ॥ महति रूपात्=रूपविशेषादुपलब्धिरित्येकं लक्षणम्, अनेकद्रव्यसमवायात्=अनेकद्रव्येषु=अनेकद्रव्यारब्धेषु द्व्यणुकादिष्विति यावत्, तेषु समवायाद् रूपात्=उद्भूताच्चोपलब्धिरित्यपरं द्रव्यस्य चाक्षुषत्वलक्षणम् ॥

अनेन द्व्यणुकाद्यनेकद्रव्यासमवेतानि परमाणवः, अद्रव्याः, अनेकद्रव्यसमवायिनः, पवनादयोऽरूपा अनुद्भूताश्चक्षुरादयोऽनेकद्रव्यसमवायिनोऽपि व्यावर्तिता भवन्ति। अतः सूत्रविरोधप्रसङ्गादवयविनश्चित्रं रूपमभ्युपेयमिति

तत्त्वशुद्धिः

अनेकद्रव्येषु त्र्यणुकादिषु समवायात् रूपाच्चोद्भवसहितादुपलब्धिरित्येव। चाक्षुषद्रव्यस्य लक्षणेन उद्भूतरूपविशेषणेन पवनादीनामरूपाणाम्, अनुद्भूतरूपचक्षुरादीनां च व्यवच्छेदः। परमाणुद्व्यणुकव्यवच्छेदोऽनेकद्रव्यसमवायादिति। लक्षणान्तरम्—महति रूपविशेषादिति। रूपसमवायाच्चाक्षुषत्वे पटादेरपि नीरूपत्वं स्यात्; स्वारम्भकरूपिद्रव्यसमवायेन चाक्षुषत्वोपपत्तेरित्याह—सर्वश्चेति॥

तदनेन क्रमेण परमाणुषु वर्णाः परिशिष्यन्ते चेत्, तद्वर्ती वर्णो नेन्द्रियगोचरः, इति सर्वाग्रहणप्रसङ्ग इत्याशयः। पटादे रूपवत एव चाक्षुषत्वम्, नारूपस्य; तेनैकमपि नानात्वेनावभासत इति सिद्धमित्याह—तच्चेति॥ ज्ञानातिरिक्तचित्राभावाद् नेदमुदाहरणमित्याशङ्क्य, तान् प्रत्युदाहरणान्तरमाह—तथेति॥ एकैव बुद्धिर्नगरमिति वा, त्रैलोक्यमिति वा नानाकारा प्रतीयत इत्यर्थः। नानात्वैकत्वविरोधात् तदाकारा बुद्धेर्भिद्यन्ते, तत्राह—न चेति॥ बाह्यार्थानिष्टेरित्यर्थः॥ P. 62- 1 P. 62- 3

येष्ववयवेषु नीलादयः समवेताः, तेष्ववयवी समवेतः, अवयविनि चित्रं रूपं समवेतमित्येकार्थसमवेतसमवायात् चित्रमेकमपि नानार्थनीलाद्यात्मना प्रकाशमानं नानेवावभासत इति संसर्गस्यैव सर्वत्र तादात्म्यप्रकाशनसामर्थ्यमिति शङ्कते—स्यादेतदिति॥ P. 62- 5

अभिप्रायप्रकाशिका.

भावः। अवयवगतरूपातिरिक्तस्यावयविगतरूपस्यानभ्युपगमे द्व्यणुकपर्यन्तावयविनामरूपत्वात्, परमाणुस्वरूपस्य चायोग्यत्वात् सर्वमचाक्षुषं स्यादित्याह—सर्वश्चेति॥ प्रतीतिबलादेवाऽन्तरावयविनो रूपमभ्युपेयत इति शङ्कते—अथेति॥ निराकरोति—चित्रोऽपीति॥ तथापि कथमेकस्य नानावभास इति? तत्राह—तच्चेति॥ 'तथामतिः' इति श्लोकभागं व्याचष्टे तथेति॥ आकाराकारिणोरभिन्नत्वादेकस्या बुद्धेरनेकाकारप्रतिभासवदेकस्याप्यनेकरूपप्रतिभासो न विरुध्यत इति सौगतसम्मतमुदाहरणमस्तीत्यर्थः। कथं विषयाकाराणां बुद्धेरभेद इति? अत आह—न चेति॥

शङ्कते—स्यादेतदिति॥ येष्ववयवेषु नीलादयः समवेताः, तेष्ववयवी

ब्रह्मसिद्धिकारिका

व्यवहारे परोपाधौ सर्वा धीर्व्यावहारिकी ।
अयथार्था यदा भावभेदकल्पस्तदा मुधा ॥ १९ ॥

---

तत्त्वशुद्धिः

P. 62-6 तद् दूषयति--तदसदिति ॥ अवयवरूपाण्यवयवगतानि, अवयविरूपमवयविगतमिति व्यवधानतोऽवयवावयविभ्यामित्यर्थः ॥

पारम्पर्यसम्बन्धो व्यवधानेऽपि स्यादित्यत्राह--संश्लेषो हीति ॥ पारम्पर्यसम्बन्ध एव नास्ति; अन्यथा सत्ताद्वारा सर्वस्य सर्वसम्बन्धप्रसङ्गादित्यर्थः ॥ भिन्नयोरभेदधीहेतुरव्यवहितसम्बन्ध एवेत्याह--ततश्चेति ॥ तथाविध एवावयविरूपयोः सम्बन्धः स्यादिति, नेत्याह--
P. 62-9 स चेति ॥ किं पुनर्न्यायेनेदमुपपादयति--एकव्यवधानेऽपीति ॥ अन्यथा द्रव्यस्य गुणत्वसम्बन्धाद् गुणेऽन्तर्गतिः स्यादित्यर्थः । एकस्य नानारूपावभाससम्भवे भावभेदो न कल्प्यः; गौरवादित्युक्तम्, इदानी-
P. 62-11 मफलत्वाच्च न कल्प्य इत्याह--किञ्चेति ॥ १८ ॥

कारिकाविवरणम्

यदा द्रव्यगोचरे व्यवहारे, परा-गुणादिरूपोपाधिरस्येति परोपाधिः; तस्मिन्, व्यावहारिकी शुक्लो गौरित्यादिव्यवहाराङ्गभूताऽन्यत्रान्यबुद्धित्वादयथार्था,

अभिप्रायप्रकाशिका

समवेतः, अवयविनि च चित्रं रूपमित्येकार्थसमवेतसमवायलक्षणसंसर्गादेव चित्रमेकमपि नाना नीलाद्यात्मना प्रकाशते, इति । संसर्गस्यैव सर्वत्र तादात्म्यप्रकाशनसामर्थ्यम्, तेन न क्वचिद्व्यभिचार इत्यर्थः ॥ श्लोकेनैतन्निराचष्टे--तदप्यसदिति ॥ नीलादिरूपाणामवयवगतत्वाच्चित्ररूपस्य चावयविगतत्वात् चित्ररूपस्य नीलादिरूपैर्न साक्षात् संसर्गः, अवयवावयविभ्यां व्यवहितत्वादित्यर्थः । उक्तमर्थं 'किमु वक्तव्य'न्यायेनाह--एकेति ॥ चित्ररूपस्यावयविनैकेन व्यवहितस्यावयवैरपि संसर्गो यदा नास्ति, तदा कथं तद्गतरूपैः संसर्गः स्यादित्यर्थः ॥ १८ ॥

तत्त्वशुद्धिः

तदा तद्वदेव सामान्य-विशेषयोर्व्यवहाराङ्गबुद्ध्युपपत्तेः स्वरूपभेदकल्पना वृथेत्यर्थः ॥ १९ ॥

ब्रह्मसिद्धिविवरणम्

'शुक्लो गौरि'त्यादौ गुणो द्रव्यं समवायश्च प्रतीयते, तस्य त्रयस्य सत्त्वाद्यथार्था धीरित्याशङ्क्य व्याचष्टे——यस्येति ॥ हेतुमाह——जाति-गुण- P. 62-14
द्रव्याणामिति ॥ द्रव्य-गुणादीनां भेदे किमनिष्टम्? तदाह—तथा चेति ॥ P. 62-16
अभेदधीव्यवहारौ=अयथार्थावित्यर्थः । तत्साधयति—बुद्धीति ॥ P. 62-17
तज्ज्ञानाविषयीकृतस्य व्यवहाराहेतुत्वादित्यर्थः । अर्थधीजन्यत्वेऽपि व्यवहारस्य प्रकृते को लाभः? अत्राह——एवं चेति ॥

'शुक्लो गौरि'त्यादौ भेदस्य बुद्ध्याऽनुपदर्शितस्य भेदव्यवहाराहेतुत्वात् बुद्ध्युपदर्शितस्याभेदस्य व्यवहारहेतोस्तथात्वानाङ्गीकारादयथावस्तुव्यवहार इत्यर्थः । भेदः प्रतीयमानो व्यावृत्तव्यवहारहेतुरिति न वैयर्थ्यम्, अत्राह—कल्पितस्यापीति ॥ सामानाधिकरण्येनैव प्रतीतेर्न भेदधीरित्यर्थः । कस्य तर्हि तदुपयोगः? अत्राह—इतरस्येति ॥ P. 62-19
प्रयोजनान्तरं तर्हि किमपि स्यादिति, नेत्याह—यथार्थत्वायेति । अस्तु तथैव, नेत्याह—कल्पितेऽपीति[1] ॥ परत्र परावभासत्वादित्यर्थः ॥१९॥

अभिप्रायप्रकाशिका

व्यावहारिकबुद्धीनां यथार्थत्वाय वस्तुभेदः कल्प्यते, न च कल्पितेऽस्मिन्नमूषां यथार्थत्वं स्यात्; सामानाधिकरण्यस्यैवानुपपत्तेः, अतो व्यर्था वस्तुभेदकल्पनेत्याह—किं चेत्यादिना ॥ तथाभावादिति=व्यवहाराङ्गत्वादित्यर्थः ॥

फलितमाह—एवं चेति ॥ भेदस्य-प्रामाणिकत्वनिरासात् तद्व्यवहारः प्रत्ययमात्रविरचितः; तथा सति भेदस्यैवाभावात्तदपेक्षोऽनुवृत्तव्यवहारोऽपि तादृश एवेति भेदकल्पनं व्यर्थमित्यर्थः । उक्तमेवार्थं संक्षिप्याह—यथार्थत्वायेति ॥ १९ ॥

---

१. चेति मूलपाठः ।

ब्रह्मसिद्धिकारिका

अयथार्थधियो बीजमवश्यं बाह्यमेव न ।
दृष्टस्तिमिर-कामादिरान्तरोऽपि ह्युपप्लवः ॥ २० ॥

---

तत्त्वशुद्धिः

भेदाभेदज्ञानं व्यवहाराङ्गभूतमयथार्थमभ्युपेयता भेदोऽभ्युपेयः;
P. 62-21 तमन्तरेण भ्रमनिबन्धनस्य सादृश्यस्यासम्भवादिति चोदयति—स्यादेत-
P. 62-22 दिति ॥ न हि भ्रान्तेः कारणमस्तीत्याह—न खल्विति ॥ बाह्य-
सादृश्यनिबन्धनत्वादित्यर्थः । सादृश्यस्य विभ्रमहेतुत्वेऽपि न सर्वत्र
P. 62-23 तद्धेतुत्वमनुगतमिति परिहरति—उच्यत इति ॥

कारिकाविवरणम्

हेतुमाह—दृष्ट इति ॥ केशोण्डूक-कामिन्यादिनिर्भा-
से क्वचिद् भ्रमहेतुरान्तरस्तिमिरादिः, कामादिर्दोषो
दृष्टो यत इत्यर्थः ॥

ब्रह्मसिद्धिविवरणम्

तिमिर-कामादिः करणकर्तृदोषः, विषयदोषेण सादृश्यादिना भवितव्यमेवेति, अत्राह—न विषयेति ॥ दूरत्वादिरादिपदार्थः । नियमाभावे हेतुमाह—आध्यात्मिकेभ्योऽपीति ॥ द्वैतभ्रमहेतुरान्तरोऽपि दोषो न सम्भवतीति, अत्राह—तत्रेति ॥ अनाद्यविद्यादोषसद्भावात् बाह्यमेवेत्यवधारणासिद्धेर्न किंचित् प्रयोजनं वस्तुभेदेनेत्यर्थः ॥

P, 63- 4 सम्प्रत्यनेकान्तवादिनमुत्थापयति=अस्तु तर्हीति ॥ नैकान्तिको
भेदः, नाप्यभेद ऐकान्तिकः, किं त्वेकमुभयात्मकमित्यर्थः । किमत्र

अभिप्रायप्रकाशिका

भवतु बुद्धेरयथार्थत्वम्, तथापि भेदोऽवश्यम्भावी; भ्रान्तेः सादृश्यनिबन्धनत्वात्, तस्य च भेदनिबन्धनत्वादिति-शङ्कते—स्यादेतदित्यादिना ॥ सामान्यनिबन्धनत्वात्=सादृश्यनिबन्धनत्वादित्यर्थः । तिमिरकामादेरान्तरादपि दोषात् केशोण्डूक-कामिन्यादिनिर्भासविभ्रमदर्शनान्न बाह्यसादृश्यादेरेव विभ्रम इति परिहरति—उच्यत इत्यादिना ॥

प्रकृते च जीवाधिष्ठानानाद्यविद्यादोषसम्भवाद् नार्थो वस्तुभेदेनेत्याह—तत्रासतीति ॥

सम्प्रति भेदाभेदवादिमतमनुवदति—अस्तु तर्हीति । तत्र युक्ति-

तत्त्वशुद्धिः

प्रमाणम् ? तदाह—एवं हीति। भिन्नयोरभिन्नयोश्च सामानाधिकरण्यासम्भवात् सामान्य-विशेषयोश्च 'सन् घटः' इति प्रख्यैकमुभयात्मकमुल्लिखन्ती प्रत्यात्ममनुभूयत इत्यर्थः। लाभान्तरमाह—वस्त्विति॥ P. 63- 5
वस्तुविपरीतश्च नार्थस्य सामर्थ्यातिशयो भेदान्तर्धानलक्षणः कल्पयितव्य इत्यर्थः॥ व्यवहारे परोपाधावित्याद्युक्तमपि परिहृतं स्यादित्याह—वस्तुनिबन्धन इति॥ अ(?)भेदा-भावाद भेदव्यवहारोऽपि ज्ञान- P. 63- 6
प्रतिभासितवस्तुविषय एव स्यात्; व्यावहारिकज्ञानानां सामानाधिकरण्यनिर्भासानां च नायथार्थवृत्तिरित्यर्थः॥ चोदयति—स्यादेतदिति॥ P. 63- 7
विरोधं साधयति—एकमिति॥ द्वित्वस्य भेदाधिष्ठाननियमेनैकस्मिन्नभिन्नेऽसम्भवाद्विरोध इत्यर्थः। किं च स्वरूपतोऽपि विरोध इत्याह—अपि चेति॥ अनुवृत्त-व्यावृत्तरूपविरोधान्नैकत्वं शक्यावगममित्यर्थः॥ P. 63- 8
परिहरति—नैतदिति॥ अस्माकं विरुद्धमिति ज्ञानं क्व भवति ? किं P. 63- 9

अभिप्रायप्रकाशिका

माह—एवं हीति। केवलभेदे, केवलाभेदे च सामानाधिकरण्यप्रतीत्यनुपपत्तेः 'सन् घटः' इत्यादौ च तद्दर्शनात् सामान्य-विशेष-गुण-गुण्यादिस्थले भेदाभेदावभ्युपेयावित्यर्थः। एवं कल्पनायां पूर्वोक्ता अपि दोषाः परिहृता भवन्तीत्याह—वस्तुविपरीतश्चेति। अर्थस्य=समवायस्य सामर्थ्यातिशयो भेदान्तर्धानविषयो न कल्पनीय इत्यर्थः। ज्ञानप्रतिभासिन एव वस्तुत्वाद्व्यवहारस्य वस्तुविषयत्वमपि सिध्यतीत्याह—वस्त्विति। लाभान्तरमाह—न व्यावहारिकेति॥ आत्यन्तिकभेद इव सामानाधिकरण्यप्रत्ययानां नायथार्थत्वप्रसक्तिरित्यर्थः॥

शङ्कते—स्यादेतदिति॥ द्वित्वस्य भेदाधिष्ठाननियमेनैकस्मिन्नभिन्नेऽसम्भवाद्विरोध इत्यर्थः। अनुवृत्त-व्यावृत्तरूपेण विरोधादनयोरेकत्वप्रतीतिरप्यनुपपन्नेत्याह—अपि चेति। भेदः=विशेषः=व्यक्तिरिति यावत्॥

प्रमाणप्रतिपन्नत्वान्न भेदाभेदावेकस्य विरुद्धौ; प्रमाणरहितार्थस्यैवासिद्धिरिति—नैतदिति। अन्यथाऽतिप्रसङ्ग इत्याह—यस्त्विति। न च सामान्य-

तत्त्वशुद्धिः

प्रमाणप्रतिपन्ने, अन्यत्र वा। न तावत् प्रमाणप्रतिपन्नादन्यत्र ; तदनङ्गी-
करणात्। तस्माद् यत् प्रमाणविपर्ययेण वर्तते प्रमाणप्रतिपन्नं वस्त्व-
न्यथा बोधयति, तत्प्रमाणविरुद्धमिति सम्प्रतिपत्तिरित्यर्थः। अथ
P. 63-10 प्रमाणप्रतिपन्ने विरोधः, तद् न घटत इत्याह—(यत्त्विति)॥ प्रमाण-
विपर्ययाभावेऽपि विरोधाभिधाने सर्वत्रैव विरोधात् क्वेदं भाविकमेक-
त्वमवतिष्ठतामित्यर्थः॥ न च सामान्य-विशेषयोरस्ति प्रमाणविपर्यय
इत्याह—प्रमाणं चेति॥ अस्तु तर्हि तयोरेकत्वमेव; प्रमाणविपर्यया-
P. 63-12 भावात्, कुतस्त्यं द्व्यात्मकत्वम्? अत्राह—व्यावृत्तीति॥ अस्तु तर्हि
P. 63-13 भेद एवेति, अत्राह—सामानाधिकरण्येति॥

P. 63-14 तदेतद् दूषयति—तदिदमिति॥ हेतुमाह—यत इति॥ सत्यम्,
यत् प्रमाणविपर्ययेण वर्तते, तद्विपर्यय एव प्रमाणम्, न स्वरूपतः,
विषयाधीननिरूपणत्वात्, विरुद्धविषयोपस्थापनेन तु स्यात्, अस्ति च
सामान्य-विशेषोद्ग्राहिणोऽपि ज्ञानस्य विरुद्धविषयोपस्थापनमुक्तादेव
क्रमात् संशयज्ञानस्येवेत्यर्थः॥ विप्रतिषिद्धार्थज्ञानानां प्रामाण्येऽनिष्ट-
P. 63-15 माह—अन्यथेति॥ 'स्थाणुः पुरुषो वा' इत्याकारभेदोल्लेखादिति हेतुमाह
—द्व्यावभासत्वादिति[1]॥ तर्हि भेद एव स्यात्, न संशयविषयस्यो-
भयात्मत्वम्, अत्राह—सामानाधिकरण्याच्चेति[2]॥

स्थाणु-पुरुषाकारावभासयोरेकस्मिन् धर्मिण्याकारद्वयस्य तादा-
P. 63-16 त्म्येन समुच्चयानवभासकत्वाद् विरुद्धार्थत्वमिति शङ्कते—अथेति॥
'सन् घटः' इति सामान्येन(न्य) विशेषरूपौ स्वरूपभिन्नावपि तादा-

अभिप्रायप्रकाशिका

विशेषयोः प्रमाणविपर्ययोऽस्तीत्याह—प्रमाणं चेति। अस्तु तर्हि तयोरेकत्वमेव, प्रमाणविपर्ययाभावादिति, अत्राह—व्यावृत्त्यनुवृत्तिभ्यामिति। अस्तु तर्हि भेद एवेति, अत आह—ऐकाधिकरण्येति॥ विरुद्धविषयस्य विज्ञानस्य प्रामाण्यमेव न सिध्यतीत्याशयेन परिहरति—तदिदमिति॥ विप्रतिषिद्धार्थज्ञानानां प्रामाण्ये संशयोऽपि प्रमाणं स्यादित्याह—अन्यथेति॥

तस्य विकल्परूपतया समुच्चयविषयत्वाभावाद् नैवमिति शङ्कते—अथेति॥ यथाज्ञानं विषयस्याभ्युपेयत्वात् विषयोऽपि विकल्पितस्वभावः

१. मूलपाठस्तु द्व्याभासत्वात् स। २. मूलपाठः ऐकाधिकरण्याच्च।

तत्त्वशुद्धिः

त्म्येन, समुच्चयेन विगाहनं विरुद्धार्थमित्यर्थः। हेतुमाह—अयं वेति॥ विकल्पनेन विरुद्धार्थोपसंहारादप्रमाणं संशय इत्यर्थः॥

यथाज्ञानं ज्ञेयसत्त्वस्वीकारे समुच्चितवद् विकल्पितोऽपि विषयोऽभ्युपेयः स्यादिति परिहरति—मा भूदिति। व्यवस्थितस्य वस्तुनो नाना विकल्पानुपपत्तेर्विज्ञानोपदर्शितोऽप्यनुपपन्नो विषय इति शङ्कते—सोऽपीति॥ उत्तरमाह—एकमपीति॥ हेतुमाह—एकस्येति॥ न हि P. 63-19
घटोऽघटः पटश्चेति प्रत्ययः प्रामाणिक इत्यर्थः। प्रकृतदोषमुपसंहरति—तत्रेति॥ ऐकाधिकरण्याद्विरुद्धरूपयोस्तादात्म्येनानवगाहनादित्यर्थः।
संशयस्य विकल्पितरूपावगाहित्वेन विप्रतिषेधादप्रामाण्यमिति शङ्कते— P. 63-20
स्यादेतदिति॥ कुतस्तर्हीति? अत्राह—निर्णयेति॥ सन् 'घटः' इति P. 63-21
धियः सर्वेषां सर्वदोत्पादादसति बाधने नाप्रामाण्यमिति भावः। नालिकेरसलिल प्रवेशकारणस्य सदा विकल्प्यमानत्वात्तद्रूपता स्यादिति परिहरति—यत्रेति॥ विरोधस्याप्रामाण्यप्रयोजकत्वाभावमभ्युपगम्यो- P. 63-22
क्तम्, इदानीं स एव न संभवतीत्याह—अपि चेति॥ 'इदं रजत'मिति ज्ञानस्य 'नेदं रजत'मिति ज्ञानेन विषयवैपरीत्यबोधरूपात् बाधादप्रामाण्यमित्यर्थः। दार्ष्टान्तिकमाह—एवमिति॥ संशयस्य वा, सामान्य- P. 63-23

अभिप्रायप्रकाशिका

स्यादिति परिहरति—मा भूदिति॥ प्रतिभासमानत्वेऽप्यनुपपन्नत्वान्नैवमिति शङ्कते—सोऽपीति॥ प्रकृतेऽपि तत्तुल्यमिति परिहरति—एकमिति॥ प्रकृतदोषमुपसंहरति—तत्रेति॥

'यत्र तर्हि' इति परिहारस्यायमर्थः। चन्द्रपरभागवर्तिहरिणसदसद्भावयोः सदा निर्णयाभावाद्विकल्पात्मतैव स्यात्, इति सामान्य-विशेषावगत्योः परस्परविरुद्धार्थत्वादन्यतरबाधादप्रामाण्यमन्यतरस्य स्यादित्याह—अपि चेति॥

निर्भक्तम्=निर्भेदः=भागः; तद्वदिति यावत्। सामान्यद्वयोरेकस्य वा ज्ञानस्येति॥ सामान्य-विशेषात्मकवस्तुग्राहिज्ञानं द्वयमेकं वेति मतभेदादुक्तम्। तत्रैकज्ञानपक्षे तद्रूपाधिगत्योरित्यंशभेदविवक्षयोक्तमिति द्रष्टव्यम्।

ब्रह्मसिद्धिकारिका

एकत्वमविरोधेन भेदसामान्ययोर्यदि ।
न द्व्यात्मता भवेदेकतरनिर्भक्तभागवत् ॥ २१ ॥

---

तत्त्वशुद्धिः

विशेषग्राहिणो वा ज्ञानस्यैकस्य, भिन्नस्य वा प्रामाण्यम्, अत्र हेतुमाह—
P. 63-24 विरुद्धरूपेति ॥ सामान्य-विशेषज्ञानयोरन्यतरेणान्यतरस्य बाधे बाधि-
तस्य भ्रान्तित्वं गतिरित्याह—तत्रैकतरेति ॥ तुल्यबलत्वेनोभयप्रतिघाते
P. 64-1 किं स्यादिति ? तदाह—परस्परेति ॥ निगमयति—तस्मादिति ॥ स्वप-
क्षोपवर्णनं प्रामाणिकमित्यर्थः ॥ २० ॥

तदेवं ज्ञानविचारद्वाराऽस्य द्व्यात्मकत्वं प्रतिषेध्य, मेयविचार-
P. 64-4 द्वाराऽपि प्रतिषेधति—अपि चेति ॥

कारिकाविवरणम्

अविरोधेन=परस्पराभावस्वरूपविरोधाभावेन, एक-
तरो निर्भक्तः=निर्भेदः भागः सामान्यम्, विशेषश्च । न
हि सामान्यात् सामान्यं भिद्यते, विशेषाद्वा विशेषः,
तद्वत् सामान्य-विशेषौ न मिथो भिन्नौ; परस्पराभावरहि-
तत्वात्, एकतरभागवदित्यर्थः ॥ २१ ॥

P. 64-6 सामान्य-विशेषयोर्भेदस्याभ्युपगमादसिद्धो हेतुरिति, अत्राह—
अवश्यमिति ॥

सामान्यमभिन्नम्, विशेषा भिद्यन्ते, इति पदार्थानां भेदाभेदौ

अभिप्रायप्रकाशिका

तुल्यबलवत्तया परस्परनिराकृतौ संशयात्मतैव स्यादित्याह—परस्परेति ।
तेन भट्टाचार्यैरपि स्वपक्षपातादेवोक्तमित्युपसंहरति—तस्मादिति ॥ २० ॥

एवं ज्ञानविचारानुसारेण वस्तुनो द्व्यात्मकतां प्रतिषिध्य, ज्ञेयविचारे-
णापि प्रतिषेधति—अपि चेति ॥ विशेषयोर्भिन्नाभिन्नतां निराकर्तुं तैरुक्तं
भेदाभेदलक्षणमनुवदति—अवश्यमित्यादिना ॥ अन्योन्याभावाद्भेदः, न

तत्त्वशुद्धिः

व्यवस्थापयता यथा तयोः सिद्धिः, तथा लक्षणं वाच्यम् । त(द) धीनत्वाल्लक्ष्यसिद्धेरित्यर्थः। किं तयोर्लक्षणम् ? तदाह—तत्रेति ॥ रूपविरोध P. 64-6
इत्यस्य विवरणम् —अन्योन्याभाव इति । विपर्ययः=विरोधाभावः, P. 64-8
तादात्म्यमिति यावत् । भेदोदाहरणमाह—विरोधादिति ॥ अभेदोदा- P. 64-9
हरणमाह—भिद्यमानेष्विति ॥

तत्र सामान्य-विशेषयोर्भेदलक्षणमस्ति ? न वा ? यद्यस्ति, तत्राह
—तत्रेति ॥ सामान्यविशेषौ, नाभिन्नौ, परस्पराभाववत्त्वात्, खण्ड- P. 64-1
मुण्डादिवदित्यर्थः । द्वितीयं शङ्कते—अथेति ॥ 'सन् घटः' इत्यै- P. 64-11
काधिकरण्येनेत्यर्थः । सामान्य-विशेषौ, अत्यन्तमभिन्नौ, अन्योन्यभावहीनत्वात्; यदेवम्, तदेवम्, यथैकतरो भाग इति परिहरति—
न तर्हीति ॥ भेदाभावेऽपि द्वित्वसङ्ख्यायोगाद् द्व्यात्मकत्वमिति, अत्राह P. 64-12
—असतीति ॥ भेदैकार्थसमवायादित्यर्थः । भेदाभावे द्वित्वानुपपत्ति- P. 64-13
मुदाहरति—यथेति ॥ दृष्टान्ते साध्यसम्पत्तौ हेतुमाह— तत्रेति ॥ निर्भक्तो P. 64-14
निर्गतभेद इत्यर्थः ॥ प्रथमानुमानार्थं निगमयति—तथेति ॥ हेतु- P. 64-15
त्व(ा)नुवादेन द्वितीयं प्रयोगार्थमुपसंहरति—अथेति ॥ P. 64-17

परस्पराभावविरहाद् न द्व्यात्मकतेत्युक्तममृष्यमाणश्चोदयति— P. 64-18
यदीति ॥ अन्योन्याभाव-तदभावयोर्भेदाभेदलक्षणत्वाभावे किं तयो-

अभिप्रायप्रकाशिका

रूपविरोधादिति, अत आह—रूपेति । विपर्ययादिति ॥ अन्योन्याभावादित्यर्थः ॥

एवं भेदाभेदयोर्लक्षणमभिधाय, सम्प्रति प्रकृते रूपविरोधे, रूपाविरोधे च तयोरैक्यात् द्वित्वाभावमाह—तत्र सामान्येति ॥

चतुर्थपादोक्तं दृष्टान्तं प्रपञ्चयति—यथा न सामान्येति ॥ दार्ष्टान्तिकमाह—तथेति ॥ रूपविरोधाभावमेवाह—न परस्परेति ॥ विरोधे तु दूषणमुक्तमेवेत्याह—अथेति ॥

पूर्वोक्तमसहमानः पूर्ववादी लक्षणान्तराभिधानेन प्रत्यवतिष्ठते—यदीति ॥ उक्तं लक्षणं प्रकृते योजयति—सामान्येति ॥ तथापि सामान्य-

ब्रह्मसिद्धिकारिका

ऐकात्म्यबुद्धेर्भागे चेदेवं वस्तुनि तर्ह्यसौ ।
न चेत् कुतस्त्यमेकत्वमस्ति चेद् द्व्यात्मता कथम् ॥ २२ ॥

---

तत्त्वशुद्धिः

P. 64-19 लक्षणमिति ? अत्राह—किं त्विति ॥ बुद्धेराकारभेदो भेदलक्षणम्, बुद्धेराकाराभेदोऽप्यभेदलक्षणम्, अतस्ताभ्यां भेदाभेदौ व्यवस्थाप्येते; सन्निकृष्टत्वाद्वस्तुव्यवस्थितेरित्यर्थः ॥ अन्योन्याभावस्य भेदलक्षणत्वाभावेऽपि तद्व्यापकत्वादन्योन्याभावाभावे भेदासम्भवात् तदेकार्थसम-
P. 64-20 वेतद्वित्वानुपपत्तिः, अत्राह—सामान्येति ॥ अनुवृत्त-व्यावृत्तनिर्भास-संविदाकारभेदात् सामान्य-विशेषयोर्द्वित्वमित्यर्थः । "एकतरनिर्भक्त-भागवत्" इत्युक्तदृष्टान्तं विघटयति—अंशे त्विति ॥ संविदाकारस्य
P. 64-21 संवेद्याकारव्यवस्थापकत्वात् किं सिध्यति ? तदाह—अत इति ॥२१॥

अत्रापि सामान्य-विशेषयोर्भेद एवात्यन्तिकः स्यात्, अभेदो वा, नोभयमिति परिहरति—तत्रेति ॥

कारिकाविवरणम्

एकस्मिन् भाग ऐकात्म्यबुद्धेः एकाकारबुद्धेः, एवम्= एकत्वं यदि, तर्हि सामान्य-विशेषात्मके वस्तुनि, असौ=
P. 64-22 एकाकारबुद्धिर्नास्ति ? अस्ति वा ? आद्यं प्रत्याह—न
P. 64-23 चेदिति ॥ द्वितीयमनूद्य दूषयति—अस्ति चेदिति ॥२२॥

ब्रह्मसिद्धिविवरणम्

P. 64-24 'ऐकात्म्यबुद्धेः' इत्याद्ययुक्तम्; एकतरभागभेदाभेदयोरप्रस्तुतत्वादित्याशङ्क्य, विचारोपयोगितया तदनुवाद इति व्याचष्टे—यदि

अभिप्रायप्रकाशिका

विशेषयोर्द्वित्वमेवाऽपद्यते, न पुनस्तादात्म्यमिति परिहरति—अत्रोच्यत इत्यादिना । भागे चेदेवमित्यन्वयः ॥ २१ ॥

वस्तुन्यपि तर्ह्यसावैकात्म्यबुद्धिरेवमस्ति, न वेति विकल्पयति द्वितीयपादेन । 'एवं वस्तुनि' इति द्वितीयं कल्पं दूषयति—'अस्ति चेत्' इति ॥

तत्त्वशुद्धिः

तर्हीति ॥ वस्तु विचार्यमित्यनेन तर्हीत्यस्य सम्बन्धः । विचारं स्फोरयति—तत्रेति ॥ किमतः ? अत्राह—तत्र यदीति ॥ एकरूपबुद्ध्यभावे हेतुमाह—सामान्येति ॥ हि=यस्मात्, तस्मादित्यर्थः ॥

निराकरोति—कथमिति ॥ अभेदलक्षणवद् भेदलक्षणस्याप्यभावादभेद इति, अत्राह—रूपभेदस्येति ॥ P. 65-3

कल्पान्तरमालम्बते—अथेति ॥ निराह—नेति ॥ तादात्म्यसमाधिं चोदयति—अथ मतमिति ॥ मिलितं तूभयम् भेदलक्षणमुक्त्वा तदुदाहरणमाह—तत्रेति ॥ गौः, अस्त्यस्तिमिती, भिन्नबुद्धिगोचरत्वात् सामान्य-विशेषावपि भिन्नाविति, नेत्याह—सामान्येति ॥ हेतुमाह —बुद्धिरूपेति ॥ सामानाधिकरण्यप्रतीतेः परस्पराभावविरहिणो न भेदः, तल्लक्षणाभावादित्यर्थः ॥ P. 65-4 P. 65-6 P. 65-7

सिध्यत्वेवमैकात्म्यम्, न तु द्वयात्मकत्वमिति दूषयति—एवमपीति ॥ भेदलक्षणस्य त्वयैव प्रतिक्षिप्तत्वादित्यर्थः ॥ पुनश्चोदयति —यदीति ॥ द्वयोरप्यनपेक्षयोरभेदलक्षणत्वमित्यर्थः । बुद्धिरूपाभेदलक्षणं सोदाहरणं लक्षयन् दर्शयति—तत्रेति ॥ तादात्म्यप्रतिपत्त्या कस्याभिन्नत्वमिति ? सामान्य-विशेषयोरित्याह—उभयोस्त्विति ॥ कुतोऽनयोरभेदलक्षणत्वनिर्णय इत्याशङ्क्य, तयोरभावे खण्ड-मुण्डादिपिण्डानामत्यन्तभेददर्शनादित्याह—विशेषाणान्त्विति ॥ तदेतद् दूषयति P. 65-9 P. 65-10 P. 65-11

अभिप्रायप्रकाशिका

उक्तमेव हेतुकथनेन स्पष्टयति—सामान्येति ॥ दूषयति—कथमिति ॥ चतुर्थपादं व्याचष्टे—अथैकरूपेति ॥

एकत्वं सिसाधयिषुः शङ्कते—अथ मतमिति ॥ मिलितं भेदलक्षणं नैकैकमित्यर्थः । तत्र लक्षणस्याव्यापकतां परिहरति—तत्र गवादय इति ॥ भेदात्=विशेषादिति यावत् । प्रकृते कथमिति ? अत आह—न त्विति ॥

तथापि न द्वित्वसिद्धिरिति दूषयति—एवमपीति ॥ अभेदस्यानपेक्षलक्षणद्वयावलम्बनेन पुनः शङ्कते—यदि मन्येतेति ॥ दूषयति—एवमप्य-

तत्त्वशुद्धिः

P. 65-12 —एवमप्यभेदेति ॥ अन्योन्याभावो बुद्धिरूपाभावः, बुद्धिरूपभेदश्चोभयं मिलितं भेदलक्षणम्, इति तदुभयाभावे भेदलक्षणमविद्यमानमिति भेदासिद्धौ तन्नियतद्वित्वासिद्धिरित्यर्थः । भेदलक्षणमप्यन्योन्यानपेक्षम्; अतः सामान्य-विशेषयोः बुद्धिरूपभेदस्य-भेदलक्षणस्य; परस्परात्मप्रतिपत्तेरभेदलक्षणस्य (च) भावाद् भिन्नाभिन्नत्वम्, अत्राह—

P. 65-13 न चेति ॥ हेतुमाह—लक्षणेति ॥ एवं हि मर्यादा—भिन्नलक्षणलक्षितं भिन्नम्, एकलक्षणलक्षितमभिन्नमिति यस्मादित्यर्थः । एकेन लक्षणेन लक्ष्यसिद्धौ द्वितीयलक्षणवैयर्थ्यदोषः स्पष्टः। दोषान्तरमाह—

P. 65-14 लक्षणभेदेऽपीति ॥

तत्त्वम्=एकत्वम्। तर्हि लक्षणैक्येऽपि लक्ष्यस्य नानात्वं स्यात्, नियामकाभावादित्याह—अन्यत्वं चेति ॥ स्यादेतत्, एवमपि किमनिष्टम्?

P. 65-15 तदाह—यदीति ॥ विजातीयव्यावर्तनासामर्थ्यादित्यर्थः ॥ २२ ॥

'अनुवृत्ताकारवती सामान्यबुद्धिः, व्यावृत्ताकारवती विशेषबुद्धिरिति विलक्षणबुद्धिबोध्यत्वं स्वीकृत्य तयोरभेद इष्यते, तत्र दोषान्त-

P. 65-16 रप्रतिपादकश्लोकापेक्षितं पूरयति—अपि चेति ॥ २२ ॥

अभिप्रायप्रकाशिका

भेदेति ॥ न ह्येकैकादभेदलक्षणविरहाद्भेदः, तथा सत्यंशस्यापि परस्परात्मत्वप्रतीत्यभावात् स्वात्मनोऽपि भेदप्रसङ्गात् । तस्मादुभयविधाभेदलक्षणाभावाद् भेदोऽभ्युपेयः; तथा सति सामान्य-विशेषयोः परस्परात्मत्वप्रतीतेरुभयविधाभेदलक्षणाभावात्मकभेदाभावान्न व्यात्मतेत्यर्थः । दूषणान्तरमत्राभ्युच्चिनोति —न चेति ॥

न च समवायिकारणं द्रव्यम्; गुणवद् द्रव्यमित्यादौ व्यभिचारः; तत्र लक्षणयोः परस्परव्याप्य-व्यापकभावादुपपत्तेः, इह तु न व्याप्य-व्यापकभावः; परस्परात्मप्रतिपत्तावपि बुद्धिरूपभेदाभावात्, क्वचित्तद्भावेऽपि परस्परात्मत्वप्रतिपत्तेरभावादन्यतरलक्षणस्य लक्ष्याव्याप्तिप्रसङ्गादिति भावः ॥ २२ ॥

ब्रह्मसिद्धिकारिका

बुद्ध्यन्तरस्य वैयर्थ्यमेकांश इव चापतेत् ।
नानात्वादर्थवत्ता चेदेकत्वाद्व्यर्थता न किम् ॥ २३ ॥

---

कारिकाविवरणम्

अभेदवद् भेदस्यापि भावादवैयर्थ्यं शङ्कते—नानात्वादिति ॥ अर्थवत्त्वानर्थवत्त्वयोरनिश्चयेन दूषयति —एकत्वादिति ॥ २३ ॥ P. 65-18

ब्रह्मसिद्धिविवरणम्

बुद्धिबोध्ययोर्भेदाद्बोध्याभेदेऽपि बुद्धिभेदो न विरुद्ध इति, अत्राह—बुध्यन्तरेति ॥ हेतुमाह—सा हीति ॥ सामान्य-विशेषयोर्ना- P. 65-19
नात्मत्वे बुध्यन्तरप्रवृत्तिरर्थवती यस्मादित्यर्थः । तत्र हेतुः—अन- P. 65-20
धिगतेति ॥ अनवगताधिगन्तृ प्रमाणमिति लक्षणात्, अनवगमनिवृत्ति-फलाभावाच्चेत्यर्थः ॥ अभेदेऽपि किं विशेषस्य सामान्याभेदः ? सामान्यस्य विशेषाभेदो वा ? यद्याद्यः, तत्राह—एकत्वे त्विति ॥ सामान्यं स्ववेदननिवेदितं न विशेषवेदनमपेक्षते, विशेषो वा स्वाकारवेदननिवेदितो न सामान्यवेदनम्, तथाऽत्रापि विशेषो नानुवृत्तप्रत्यये सति स्वाधिगमाय व्यावृत्तप्रत्ययापेक्षः; सामान्यात्, भेदहीनत्वात्; सामान्यवदित्यर्थः । द्वितीयं प्रत्याह—तथा विशेषेति ॥ P. 5-21

बुद्ध्यन्तरं प्रार्थ्यत इत्यनुषङ्गः । सामान्यम्, विशेषाधिगमेनैवाधिगम्यम्, ततो भेदहीनत्वात्; विशेषवदित्यर्थः । हेतोरसिद्धिम्, अत्यन्ताभिन्नत्वमुपाधिं वा शङ्कते—अथेति ॥ अभेदैकांशेन भेदोपगम P. 65-22
फलमाह—तत्रेति ॥ भेदोऽप्यस्तीति निश्चितेऽप्येकस्मिन्, इतरस्मिन् सन्दिहते, जिज्ञासन्ते च, अतो न बुद्ध्यन्तरवैयर्थ्यमित्यर्थः । अभेदो- P. 65-23
ऽप्यस्तीति कस्माद् न वैयर्थ्यमिति दूषयति—तदसदिति ॥ भेदवद्विशेषाणामिवेत्यर्थः । अंशस्यात्यन्ताभेदाद् बुद्ध्यन्तरवैयर्थ्यमुक्तमिति, अत्राह—तुल्ययोरिति ॥ भेदो वाऽऽत्यन्तिक एव विशेषाणामग्रहण- P. 67-1
प्रयोजकः स्यादित्यर्थः । एवमपि विनिगमनायां को हेतुः ? अत्राह

तत्त्वशुद्धिः

P. 66-2 —औत्सर्गिकश्चेति ॥ उत्सृज्यतेऽपवादेनेत्युत्सर्गः=स्वभावः ; तेन सिद्ध
P. 66-3 औत्सर्गिक इत्यर्थः । कस्तस्यापवादः ? अत्राह—तस्येति ॥ एवमपि
P. 66-4 प्रकृते किमायातम् ? अत्राह—तत्रेति ॥ सत्यपि सामान्यधीहेतौ विशेष-
धीहेतुर्नास्तीति, अत्राह—नैकत्व इति ॥ अपवादरहितेऽपि हि विषय उत्सर्गो निविशते, न तु सत्यपि तस्मिन् तथा । तस्य=अपवादस्य, तदविरोधिनः सत्त्वानुपपत्तेरित्यर्थः । फलभावः=तत्प्रागभावापवादो हेतुसद्भावे भवति । न चेह हेतुभाव ऐकान्तिकः; तदभावस्यापि कथंचित्
P. 66-5 सम्भवेन फलाभावस्यापि सम्भवादित्याह—अथापीति । दूषयति=
तथापीति ॥ कथंचिदस्त्यपीत्यर्थः ॥ तथापि कुतो विनिगमनेति ? अत्राह—तत्रेति ॥ कथंचिद् हेत्वभावात् फलाभावोऽपीत्युक्तम्, अत्राह—
P. 66-6 न त्विति ॥ कारणाभावस्य कार्याभावाहेतुत्वे हेतुमाह—स्वभावेति ॥
कार्यप्रागभावोऽनादिरित्यर्थः । अनादित्वादेव न तस्य निवृत्तिः, तत्राह—तस्येति ॥ भावोऽनादिः=नित्य इत्यर्थः । हेतुरसिद्धः, तत्राह—
P. 66-8 स चेति ॥ उभयत्र=सामान्यग्रहे विशेषग्रहे च । तयोरैकत्वादित्यर्थः ।
हेतोरभावोऽपि तावदस्तीति, अत्राह—असत्त्वं त्विति ॥ कारणाकारण-
P. 66-9 सन्निपाते कारणमर्थक्रियासूपयुज्यते, नाकारणमित्यर्थः ॥ ॥ २३ ॥

अभिप्रायप्रकाशिका

उत्तरश्लोकमवतारयति—अपि चेति ॥ सामान्य-विशेषयोरभेदे सत्यन्यतरस्मिन् सन्देहः, जिज्ञासा वाऽनुपपन्ना लोकानां स्यादिति भावः । एवमपि विनिगमनायां को हेतुरिति ? अत आह—औत्सर्गिकश्चेति ॥

भवतु, प्रकृते किमायातमिति ? अत आह—तत्राभेद इति ॥ हेतुभावमेवाह—नैकत्व इति । भेदस्याभावात् । पक्षे हेत्वभावमङ्गीकृत्यापि दूषयति—अथापीति । तथापि कुतो विनिगम इति ? अत आह—तत्रेति । भेदस्यापि भावात्तद्विषयप्रमाणाभावेन फलाभावः किं न स्यादिति ? अत आह—न त्विति । कुत इत्याकाङ्क्षायां फलप्रागभावस्यानादित्वादित्याह—स्वभावेति । अत्र हेतुभावात् फलसद्भावेन फलाभावो न युक्त इति, अत्राह—तस्येति ॥ हेतोरपि कथं सद्भाव इत्याकाङ्क्षायामुभयाभावादित्यभिप्रेत्याह—स चेति । भेदान्नास्तीति किं न स्यादिति ? अत आह—असत्त्वं त्विति । कारणाकारणसन्निपाते कारणमर्थक्रियासूपयुज्यते, नाकारणम्, अकिञ्चित्करत्वादित्यर्थः ॥ २३ ॥

ब्रह्मसिद्धिकारिका

सामान्यं न हि वस्त्वात्मा न भेदश्चित्र एव सः ।
तस्यानन्वयतो भेदवादः शब्दान्तरादयम् ॥ २४ ॥

तत्त्वशुद्धिः

किं च सामान्य-विशेषयोः प्रत्येकं वस्तुत्वम् ? (विशिष्टस्य, उभयोर्वा? नाद्य इत्याह—अपि चेति ॥ भिन्नत्वेनैकत्वव्याहतेरित्यर्थः ॥ P. 66-10

कारिका विवरणम्

द्वितीयं परिशेषयति—चित्र इति ॥ दूषयति— P. 66-11
तस्येति ॥ विशेषस्य विशेषान्तरेऽन्वयाभावेन विशिष्टस्यानन्वयाच्चित्रं वस्त्विति शब्दान्तरेण भेदवाद आश्रितः स्यादित्यर्थः ॥ २४ ॥

ब्रह्मसिद्धिविवरणम्

सामान्य-विशेषौ द्वौ पदार्थौ प्रसिद्धाविति, अत्राह—यस्येति ॥ P. 66-12
हेतुमाह—तन्मात्रत्व इति ॥ कस्तर्हि वस्तुस्वभावः ? अत्राह—सम्भिन्नेति ॥ P. 66-13
तद्व्याख्या शबल इति ॥ अत्रानिष्टं वक्तुं विशिष्टाननुगममाह—न चेति ॥ P. 66-14
खण्डस्य मुण्डव्यावृत्ततया तद्विशिष्टगोत्वस्य मुण्डाननुगमेऽपि गोत्वमात्रस्यानुगतिरस्तीति, अत्राह—यस्य त्विति ॥ अनिष्टमाह—तथा चेति ॥ P. 66-15
(शब्दान्तरादिति) शब्दात् ल्यब्लोपे पञ्चमीत्युक्त्वा हेतौ वेत्याह—शब्दान्तरेणेति ॥ तत्स्वरूपमाह—द्व्यात्मकमेकमिति ॥ भेदा एवेति कुतः ? P. 66-16
अनुगन्तुः सामान्यांशस्यापि सत्त्वात्, अत्राह—अनुगन्तुरिति ॥ यद्वा सामान्यांशस्यानुगमाद्वस्तुन एवानुगतिरित्याशङ्क्योक्तम्—अनुगन्तुरिति ॥ कल्पनाविषयत्वमसहमानश्चोदयति—स्यादेतदिति ॥ कुत P. 66-17
इति, अत्राह—अन्यथेति ॥ सामान्यं नाम सादृश्यम्, तत्तु भ्रमकारणम् P. 66-18

अभिप्रायप्रकाशिका

द्व्यात्मकं वस्त्विति च प्रतिजानता भेदवाद एव समर्थितः स्यादित्याह—अपि चेति । 'शब्दान्तरादयम्' इति ल्यब्लोपे पञ्चमी, हेतौ वेति दर्शयति—तथा चेति ॥ शब्दान्तरस्वरूपमाह—द्व्यात्मकमिति ॥ सामान्यांशस्यानुगमात् कथं नु वस्तुनोऽनुगम इति ? अत आह—अनुगन्तुरिति ॥

शङ्कते—स्यादेतदिति । अन्यथेति ॥ अनुगतवस्त्वभावे सादृश्याभावाद्रजतादिविभ्रमोऽपि न भवेदित्यर्थः ॥

तत्त्वशुद्धिः

तस्य कल्पितत्वे भ्रमो न भवेत्, भ्रमात् भ्रमासम्भवात्, अनवस्था-नादित्यर्थः ॥

अंशो वस्त्वेव वा, ततोऽन्यः, स्वयं वस्तु वा, न वेति
P. 66-19 विकल्पयति—कः पुनरिति ॥ आद्यमपवदति—नेति ॥ सामान्य-विशेषयोरन्योन्यापेक्षयोर्वस्तुत्वाद् न तदतिरिक्तमसि(स्ति) वस्त्व-
P. 66-20 त्येवकारार्थः । तथा चानिष्टापत्तिरुक्तेत्याह—तन्मात्रेति॥ द्वितीयं दूषयति—
P. 66-21 नापीति॥ हेतुमाह—सामान्येति ॥ तृतीयकल्पमालम्बते—अथेति ॥ न त्वेव, स्वयं च नान्यद्वस्त्वित्यर्थः । घट्टकुट्यां प्रभातमिति परिहरति—परिशेषादिति ॥

भेदाभेदाभ्यामौत्सर्ग्यपदार्थनिरुक्त्यभावेऽप्यंशत्वेन निरुच्यत
P. 66-22 इति चोदयति—नन्विति ॥

P. 66-23 अंशत्वादेव न तुच्छत्वमिति शङ्कनीयमित्याह—नाप्यवस्त्विति ॥ हेतुं साधयति—न हीति ॥ तथा च तदनुगमे सिद्धो वस्त्वनुगम
P. 66-24 इत्याह—तत्रेति ॥ सामान्यांशानुगमेऽपि विशेषांशाननुगमाद्वस्त्वनुग-मायोग इति दूषयति—नैतदिति ॥ अनेकान्तवादिनो निर्णयमुक्त्वा
P. 67-1 ऽनिष्टनिर्णयस्तु स्यादिति —अपि चेति ॥

विशेषाननुगमेऽपि वस्तुनोऽनुगमः किं न स्यात् । अत्राह—

अभिप्रायप्रकाशिका

तदेव विकल्प्य दूषयति—कः पुनरिति ॥ वस्तुनश्चित्ररूपत्वात्तस्मिन् व्यावर्त्यमाने सामान्यरूपांशस्यापि व्यावृत्तिप्रसङ्गादित्यर्थः । द्वितीयं कल्पं दूषयति—नापीति ॥ अनुवृत्त-व्यावृत्तांशयोः, अंशिनश्च वस्तुत्वे वस्तुनस्त्रैविध्यं स्यादित्यर्थः । उक्तप्रसङ्गभिया यदि न वस्तुनो भिन्नमभिन्नं वा सामान्यमिष्येत, एवं सत्यनिर्वचनीयता स्यादित्याह—अथेति ॥

अत एवेति ॥ अनंशत्वप्रसङ्गादित्यर्थः । उक्तमुपपादयति—न हीति ॥ विशेषस्याननुगमात् । अनुगम एव किं न स्यादिति ? (शङ्कां) परिहरति—नैतदिति ॥ कथं तर्हि निर्णय इति ? अत आह—अपि चेति ॥

ब्रह्मसिद्धिकारिका

यदि वाऽखिलभावानामभेदात् तदतत्त्वतः ।
अभेदवादाश्रयणं स्यादन्यविधया गिरा ॥ २६ ॥

---

तत्त्वशुद्धिः

तथाहीति । कस्मिन् पक्षे किमनस्यं(निष्टम्)? तदाह—उभयथेति ॥ P. 67- 3
प्रत्येकमनयोर्वस्तुत्वं किं न विकल्पितम्? अत्राह—प्रत्येकमिति ॥२४॥ P. 67- 4

ब्रह्मसिद्धिकारिकाविवरणम्

तदेवमंशानुगमेऽपि न वस्तुनोऽनुगम इत्युक्तम् । सम्प्रत्यतिप्रसङ्गान्तरमाह—यदि वेति। अखिलभावानाम्=गवादिपदार्थानम्, तदतत्त्वतः=गवादित्वाश्वत्वादिरूपेणाभेदादित्यर्थः ॥ २५ ॥ P. 67- 6

ब्रह्मसिद्धिविवरणम्

सामान्यानुगमाद्वस्त्वनुगमोऽङ्गीकृतश्चेद् भेदाभेदसिद्धिः ; P. 67- 8
विशेषव्यावृत्त्या वस्तुनो व्यावृत्तेरपि भावात्, अत्राह—अंशेति ॥ तमेव स्फोरयति—तथा हीति ॥ गौः स्वतस्तावत् गौरश्ववत् वस्त्वंशभूतसद्द्रव्यादिरूपानुगमात्, गव्यश्ववस्तुनोऽन्वयादश्वस्स एव गौः ; P. 67- 9
तथाप्यश्वत्वव्यावृत्त्या गोर्नाश्वत्वम्, अत्राह—तदेवमिति ॥ अश्वाभिन्नसत्त्वा(न्व)येन(य)गोचर(रश्वा)भेदादश्वत्वं स्यात्, गौः, अश्व-

अभिप्रायप्रकाशिका

उक्तमर्थं प्रपञ्चयति—तथा हीति ॥ २४ ॥

तदेवमंशा(न)नुगमेऽपि न वस्तुनोऽनुगम इत्युक्तम्, सम्प्रत्यभ्युपेत्यातिप्रसङ्गान्तरमाह—यदि वेति ॥ अभेदे हेतुमाह=तदत्तत्त्वत इति ॥ तस्य = गोवस्तुनः तत्त्वादतत्त्वाच्च=गोत्वादश्वत्वाच्चेत्यर्थः । सद्द्रव्यादिरूपानुगमादिति ॥ अश्ववस्तुनोंऽशभूतसद्द्रव्यरूपानुगमादश्वश्च भवति, स एव गौरित्यर्थः । तदेवं गोरश्वत्वमापाद्याश्वस्यापि गोत्वमापादयति—अश्वोऽपीति ॥ तस्माद्गवाऽश्वस्येव रूपस्वरूपाभ्यां सर्वस्य सर्वात्मत्व(पर)त् सिद्धमद्वैतमित्युपसंहरति—तदेवं सर्वेति ॥

तत्त्वशुद्धिः

त्त्वाधिकरणम्, सत्त्वाधिकरणत्वादश्ववदित्यर्थः । तदेवं गोरश्वत्वमा-
पाद्य, अश्वस्यापि गोत्वमापादयति—अश्वोऽपीति ॥ गौः, वस्त्वंश-
भूतसद्द्रव्यादिरूपानुगमादश्वः, गोवस्तुनोऽन्वयात्; गौरिवेत्यर्थः ।
P. 67-10 तुरगस्य गोत्वाधिकरणत्वं पूर्ववदनुमेयमित्याह—तदिति ॥ तदेवम्=
P. 67-11 उक्तप्रकारेण गोर्व(र्वे)स्त्वात्मकसत्त्वाद्यभेदादित्यर्थः । गवाऽश्वस्येव
त्रैलोक्यस्यैक्यं स्वतः परतश्चेत्युपसंहरति— तदेवं सर्वेति ॥ अद्वैतात्मकं
वस्त्विति वचो भङ्ग्यन्तरेण भवतैवोक्तमित्यर्थः ॥ स्वरूप-पररूपाभ्याम-
P. 67-12 भेदो नात्यन्तिकः; अन्यथा तदनुपपत्तेरिति चोदयति—सत्यमिति ॥
P. 67-13 गोरश्वत्वे, अश्वस्य च गोत्वे न तयोर्भेद इति दूषयति—नैतदिति ॥
गौरिति चाश्व इति च व्यपदेशभेद एव गवाऽश्वस्य भेदसाधक इति,
P. 67-14 अत्राह—गौरपीति ॥ अनिबन्धनं भेदसिद्धाविति शेषः । हस्त-पाण्यादि-
व्यपदेशभेदस्य पर्यायस्य (च) भेदासाधकत्वेऽपि गवाश्वादिव्यपदेश-
भेदोऽपर्यायत्वात् साधयेदेव भेदमिति, अत्राह— सिद्धे हीति ॥
वाच्यभेदनिश्चये वाचकस्यापर्यायत्वनिश्चयः, ततश्च वाच्यभेदनिश्चय
इतीतरेतराश्रयः स्यादित्यर्थः ॥ एतदिति ॥ पर्यायत्वमित्येतत् ॥

खण्ड-मुण्डादेः परस्परविभागाद्वस्तुभेदोऽपि सिध्यतीति चोद-
P. 67-15 यति—नन्विति ॥ सामान्यानुगमाभेदवद् विशेषव्यावृत्त्या भेदसिद्धौ
P. 67-16 फलितमाह—तथा चेति ॥ एतन्निराचिकीर्षुर्विकल्पयति—अथेति ॥

अभिप्रायप्रकाशिका

स्वरूप-पररूपाभ्यामभेदाभिधानान्नात्यन्ताभेद इति शङ्कते—सत्यमिति ॥ अद्वैतमापादयता तद्बुद्ध्यवतारोपायत्वात् कल्पनाविषयो भेदोऽभ्युपेयः, न तु वास्तव इति परिहरति—नैतदिति ॥ कथं तर्हि भेदव्यपदेश इति ? अत आह—गौश्चेति ॥ अनिबन्धनत्वमेव साधयति—सिद्धे हीति ॥

वस्त्वंशभूतसामान्यानुगमादभेदो यथा, तथा तदंशभूतविशेषानुगमाद् भेदोऽप्यस्तीति पुनः शङ्कते—नन्विति ॥ तदेतन्निराचिकीर्षुर्विकल्पयति—अथेति ॥ अनुगमाभावमेवाह—अश्ववस्त्विति ॥ अनुगममेवाह—अश्वोऽपीति ॥

तत्त्वशुद्धिः

व्यावृत्तेः कारणादन्यत्वसिद्धिरिति वदतः कोऽभिप्राय इति शेषः। निकल्पयेव विशद्यति—किमिति॥ वस्त्वन्तर उभयरूपाभावादिति P. 68-17
हेतुर्द्रष्टव्यः। अनुगमाभावमेवाह—अश्वेति॥ अनुगमं व्याचष्टे—अश्वोऽ- P. 67-18
पीति॥ पूर्वकल्पे पूर्वश्लोकोक्तदोषप्रसङ्ग इत्याह—तत्रेति॥ द्वितीय- P. 67-19
माशङ्कते—अथेति॥ अनुगतिमाह—भवतीति॥ दूषयति—कुत इति॥
विकल्पद्वयमप्यनङ्गीकारनिरस्तमित्येतच्चोदयति—यदीति॥ अनुगमा- P. 68-20
ननुगमौ विशद्यति—भवतीति॥ गौरश्वो भवति; सामान्यद्वारका-
भेदात्, न भवति च; विशेषांशव्यावृत्तेरित्यर्थः। नन्वेवमपि कोऽस्य
गवा सह विशेष इति? अत्राह—गौस्त्विति॥ अयमश्वोऽपीति कथ- P. 67-21
मन्ययोगव्यवच्छेदः? अत्राह—भवत्येवेति॥ न कदाचिन्न भवतीत्यर्थः।
ततोऽयोगान्ययोगाभ्यां सिद्धो गवाऽश्वस्य भेद इत्याह—तत इति॥
एतद् दूषयितुं विकल्पयति—अथेति॥ अयोगव्यच्छेदेन गोवस्तूपेयते,

अभिप्रायप्रकाशिका

आद्य कल्पं दूषयति—तत्रेति॥ 'अनु(मी?)यत' इति शत्रन्त-पदम्। तेनान्वीयमानसामान्यांशस्यांशद्वयसम्पन्नवस्तु(स्व)रूपत्वाभावाद् भेद इत्युक्तमित्यर्थः। द्वितीयं कल्पं स्मारयति—अथेति॥ निराकरोति—भव-त्यश्व इति॥ अनुगतत्वमेव वा दर्शयतिं—भवत्यश्व इति॥ एवं सति सिद्धमद्वैतमित्याह—कुतोऽन्यत्वसिद्धिरिति॥ चोदयति—यदि मत-मिति॥ सामान्य-विशेषांशानुगमाननुगामाभ्यामनुगताननुगतरूपत्वं वस्तुनो-ऽभ्युपगम्यत इत्यर्थः। तेनात्यन्तायोगव्यवच्छेदात् गौरश्वोऽपि भवतीत्याह—भवति चेति॥ गोवस्तुनस्तर्हि को विशेषोऽ(सा)धारण इति? तत्राह—गौस्त्विति॥ कथमवधारणम्? अश्वत्वस्यापि भावादिति, अत आह—भवत्येव हीति॥ न कदाचिदपि गवि गोवस्तु न भवति, तेनायोगव्यच्छेदो गवि गोत्वस्येत्यर्थः। तेनाश्वे गोवस्तुनोऽत्यन्तायोगव्यवच्छेदादस्मिंश्चायोगव्यव-च्छेदादस्ति तयोर्भेद इत्युपसंहरति—तयोऽन्यत्वसिद्धिरिति॥

तदेतद्विकल्पयति—अथ गोवस्त्विति॥ किं गोत्वस्यायोगव्यव-च्छेदेन गोर्वस्तुत्वम्? किं वाऽत्यन्तायोगव्यवच्छेदेनेति विकल्पार्थः। आद्यं

ब्रह्मसिद्धिकारिका

द्रव्य-पर्यायार्थकानां नय एतेन वारितः।
तेषामपि द्रव्यनयः पर्यायनय एव वा ॥ २७ ॥

---

तत्त्वशुद्धिः

P. 67-22 अत्यन्तायोगव्यवच्छेदेन वेत्यर्थः। आद्यं दूषयति—तत्रेति ॥ अश्वादौ तदयोगव्यवच्छेदायोगाद् नानुगमो गोवस्तुन इत्यत्यन्तभेदवाद इत्यर्थः॥

P. 67-24 द्वितीयमपवदति—द्वितीयस्यामिति ॥ अश्वादावपि नात्यन्तमयोगो-

P. 67-24 गोवस्तुनः, इति तदात्मकत्वं स्यादित्यर्थः। उक्तमर्थं सङ्क्षिपति—सर्वथेति ॥ यदवष्टम्भादश्वादेर्गोवस्त्वन्यदिति व्यवस्थापयति, तेन विशेषेण युक्तस्य गोवस्तुनो वस्त्वन्तराभेदायोगाद् द्वैतवादः, अथ विशेषं नाश्रयति, ततो गोवस्तुनोऽश्वादेरव्यावृत्तत्वादद्वैतवादः, इति न द्वैताद्वैतात्मकवस्तुसिद्धिरित्यर्थः ॥ २५ ॥

कारिकाविवरणम्

P. 68- 1 उक्तं दूषणं दिगम्बरमते योजयति—द्रव्येति ॥ मृत्सुवर्णादि कारणं द्रव्यम्, घट-रुचकादिविकाराः पर्यायाः, तौ मिलितावर्थौ, द्वैताद्वैतात्मकं वस्तु येषाम्, ते द्रव्यपर्यायार्थकाः, तेषां नयः=न्यायः ॥ एतेनेति ॥ परामृष्टं स्पष्टयति—तेषामिति ॥ द्रव्यनयोऽद्वैतसिद्धान्तः,

P. 68- 4 पर्यायनयो भेदवादः, न तु द्रव्य पर्यायसिद्धि-रित्यर्थः ॥ २६ ॥

ब्रह्मसिद्धिविवरणम्

निराकार्यस्वरूपं (राकार्यं) विवृणोति—येऽपीति ॥ कस्य तद् द्रष्टव्यं समवायिकारणम्? अत्राह—तस्येति ॥ रुचकम्=कर्णभूषणम्,

अभिप्रायप्रकाशिका

दूषयति—तत्रेति ॥ अयोगव्यवच्छेदेन यादृशं गवि गोत्वम्, न तादृशमश्वे, इति न गोवस्तुनोरनुगमसिद्धिरित्यर्थः। अत्यन्तायोगव्यवच्छेदपक्षं दूषयति—द्वितीयस्यामिति ॥ उक्तमर्थं संक्षिप्याह—सर्वथेति ॥ २५ ॥

उक्तं दूषणं दिगम्बरमतेऽप्यतिदिशति—द्रव्येति ॥ द्रव्यम्=सामान्यम्, पर्यायः=विशेषः, तावेवार्थौ येषां ते द्रव्य-पर्यायार्थिकाः, तेषाम्; दिग-

तत्त्वशुद्धिः

शब्दान्तरेण तत्स्वरूपं विशदयति—विशेषेति ॥ व्यवस्थितस्वरूपे द्रव्य उपजनापजनवन्तः। चशब्दादनुगतसंज्ञादिभेदं समुच्चिनोति। तर्हि विरुद्धधर्मवत्त्वाद् द्रव्य-पर्यायभेदाद् नैकं द्वयात्मकम्, अत्राह—व्यतिरेका इति ॥ देशतः, कालतः, स्वरूपतश्च व्यतिरेकरहिता इत्यर्थः। P. 68-8
तर्हि कार्य-कारणमात्रत्वादुभयात्मकवस्त्वसिद्धिरिति, अत्राह—न चेति ॥ न द्रव्यादत्यन्तमभिन्ना इत्यर्थः। तत्र हेतुमाह—तस्येति॥ द्रव्यस्योपजनापजनहीनत्वादित्यर्थः। तर्ह्यव्यतिरेकासिद्धिः? अत्राह—न च P. 68-9
तत इति ॥ रुचकादिरूपेण भेदप्रतीतिरस्तीति, अत्राह—द्रव्यस्यैवेति ॥ सुवर्णं रुचकमिति प्रतीतेरित्यर्थः। अतः सिद्धमुभयात्मकं वस्त्वित्याह —एवमिति ॥ यद्यथा प्रतीयते, तत्तथेत्युत्सर्गात् ॥ P. 68-10

द्रव्यमात्रं तर्हि स्यात्, अत्राह—अथ त्विति[1] ॥ वर्धमानकभङ्गेन रुचकक्रियायां सत्यां द्रव्यस्य विद्यमानत्वात्तदात्मकत्वाच्च पर्याययोः शराव-रुचकयोर्न किञ्चिदुत्पन्नम्, नष्टं वेति प्रीति-शोकौ तदर्थिनोर्न स्यातामित्यर्थः। द्रव्यस्य वर्धमानक-रुचकादिकार्यमात्रत्वं स्यात्, तत्र तदर्थिनोः प्रीति-शोकोपपत्तेरिति, अत्राह—अथेति ॥ हेतुमाह—पर्यायमात्रं हीति ॥ नष्टवर्धमानकाभेदमुत्पद्यमानरुचकाभेदादुत्पद्यते

अभिप्रायप्रकाशिका

म्बराणामिति यावत् ॥ विशेषाणां पर्यायपदवाच्यतायां निमित्तमाह—अपायिन इति ॥ तेषां च न स्यादत्यन्तं भेद इत्याह—अव्यतिरेका इति ॥ अत्र च द्रव्य पर्यायशब्दाभ्यां कार्य-कारणगुणगुणि-क्रिया-तद्वत्सामान्य-विशेषाः सर्वे विवक्ष्यन्त इति द्रष्टव्यम्। तर्हि साङ्ख्यानामिव तेषामत्यन्ताव्यतिरेक इति, नेत्याह—न चेति ॥ तर्हि वैशेषिकानामिवात्यन्तं भेद इति, नेत्याह—न च तत इति ॥ कथं तर्हि उपलब्धिरि इति? अत्राह—द्रव्यस्यैवेति ॥

वेदान्तिनामिव द्रव्यमात्रमेव वस्त्वित्यङ्गीकारे दोषमाह—अथेति ॥ पर्यायाणामेव वस्तुत्वमिति बौद्धमतं दूषयति—अथ त्विति ॥ स्वपक्षे पूर्वोक्तव्यवस्थामुपपादयति—तस्मादिति ॥ अस्तु वस्तु द्रव्य-पर्यायरूपम्,

1. अथेति मूलपाठः

तत्त्वशुद्धिः

P. 68-13 हेमेति मध्यस्थता स्यात्, अत्राह—उत्पादे वेति ॥ हृष्येदिति शेषः ॥ यस्मादात्यन्तिके भेदे, अभेदे वाऽनुपपत्तिः, तस्माद्वादोपगमेन सर्वमुपपादनीयमित्याह—तस्मादिति ॥ तन्मतं निराकर्तु-
P. 68-16 मुपक्रमते—तन्नीतिरपीति ॥ दिगम्बरमतेऽपि वस्तुनो वस्त्वन्तरेऽनु-
P. 68-17 गतिरस्ति ? न वा ? यद्याद्यः, तत्राह—तथा हीति ॥ 'भावानामभेदात्तदतत्त्वतः' इत्यत्रोक्तन्यायेनेत्यर्थः । कल्पान्तरमालम्बते—अथेति ॥ कुत इति ? अत्राह—द्रव्य-पर्यायेति ॥ तस्यानन्वयतो भेदवादः शब्दान्त-
P. 68-19 रादयमित्युक्तहेतुना निरस्तमेतदित्याह—अनन्वितानीति ॥ तद्विवरणम् —व्यावृत्तेति ॥ सामान्यांशानुगमाद्वस्त्वनुगतं स्यादिति, अत्राह—यस्येति ॥ पर्यायमात्रं वस्तु स्यादित्यर्थः ॥

P. 68-20 यदुक्तम्—द्रव्यं नित्यमिति, तद् दूषयितुमाह—अवस्थितं हीति ॥ उपजनापजनहीनं कारणं त्वयोच्यत इत्यर्थः । किमतः ? अत्राह—न चेति ॥ न द्रव्य-पर्यायात्मकं वस्तु, पर्यायहानोपादनयोरवस्थितम्; विशेषणाभावे विशिष्टावस्थानायोगादित्यर्थः । विशेष्यां-
P. 68-21 शमात्रमवस्थितमेवेति, अत्राह—वस्तुनस्त्विति ॥ तन्मात्रस्यावस्तुत्वेन कल्पितत्वात् तन्नित्यत्वमपि विकल्पितमित्यर्थः । तन्मात्रस्य वस्तुरूपा-
P. 68-23 दुद्धारे हेतुमाह—वस्तुनश्चित्रत्वादिति ॥ द्रव्य-पर्यायात्मकत्वादित्यर्थः ।
P. 68-24 वस्तुलक्षणं द्रव्यमात्रेऽप्यस्तीति, नेत्याह— तस्येति ॥ अतथाभावादिति ॥ चित्रत्वादित्यर्थः ॥ २६ ॥

अभिप्रायप्रकाशिका

तथापि कथमननुगम इति ? तत्राह—पर्यायान्तर इति ॥ दूषयति—अनन्वितानीति ॥ पर्यायमात्रमिति ॥ व्यावृत्तमात्रं वस्तु स्यादित्यर्थः ॥

उभयात्मकत्वाद् वस्तुनः कथं व्यावृत्तमात्रं वस्त्विति ? अत आह—अवस्थितमिति ॥ ननु—सामान्यादिरूपं वस्त्ववस्थितमस्तीति, तत्राह—वस्तुनस्त्विति ॥ कथमपोद्धृतत्वमिति ? तत्राह—वस्तुन इति ॥ २६ ॥

ब्रह्मसिद्धिकारिका

उत्पाद-स्थिति-भङ्गानामेकत्र समवायतः।
प्रीति-मध्यस्थता-शोकाः स्युर्न स्युरिति दुर्घटम् ॥२७॥

कारिकाविवरणम्

अभेदैकान्तिकासिद्धौ प्रसञ्जितमव्यवस्थानमनैकान्तिकपक्षेऽप्यापादयति—अपि चेति ॥ P. 69- 1

स्याद्वादे व्यवस्थाभावमापादयितुं तत्प्रतिपक्षे व्यवस्थां दर्शयति —यस्येति ॥ अनैकान्तवादे तदनुपपत्तिरित्याह—यस्य त्विति ॥

एकत्र समवाय इति ॥ समवायान्निमित्तादिति निमित्तसप्तमी । एतदेव विशदयति—न हीति ॥ द्रव्यं वर्धमानक-रुचकोपजनापायेऽपि P. 69- 6
ताभ्यां कथञ्चिद् भिन्नतया व्यवस्थितमपि न व्यवतिष्ठते, एवं विनश्यद्वर्धमानकाभेदाद्विनश्यति, प्रागसत्त्वे सत्युत्पद्यमानरुचका- P. 69- 7
भेदादपूर्वभेदमुत्पद्यते चेत्यर्थः । किमतः ? अत्राह—तत्रेति ॥ विद्यार्थिनो दर्शितं दौर्घट्यं वर्धमानकार्थिनोऽप्याह—तथेति ॥ स्थितद्रव्याभेदेन स्थितेः, रुचकाभेदेनापूर्वोदयादित्यर्थः । रुचका- P. 69- 8
र्थिनो यथा प्रीतिव्यवस्था, तथा वर्धमानकार्थिनश्शोकव्यवस्था स्यात्, अत्राह—तथेति ॥ द्रव्य-वर्धमानकाभ्यां कथंचित् भिन्नतया

अभिप्रायप्रकाशिका

अभेदैकान्ते प्रसञ्जितमव्यवस्थानमनेकान्तपक्षेऽप्यापादयति—अपि चेति ॥ स्याद्वादे व्यवस्थाभावमापादयितुं भेदपक्षे व्यवस्थामाह—यस्य खल्विति ॥ अनेकान्तवादे तु न व्यवस्थेत्याह—यस्य त्विति ॥ मध्यस्थताभावमेवाह—प्रीति-शोकाविति ॥ अवस्थितस्यैव द्रव्यत्वात्तस्योत्पत्ति-विनाशाभावे कथं प्रीति-शोकाविति ? तत्राह—न हीति ॥ विनश्यता वर्धमानकेन द्रव्यस्याभेदाद्विनाशः, ततश्च शोक उत्पद्यमाने रुचकेनाभेदादुत्पन्नतया प्रीतिः, सुवर्णात्मना स्थितत्वान्मध्यस्थताऽपि भवेदिति दुर्घटमित्यर्थः । द्रव्यार्थिनं प्रति दुर्घटत्वमापाद्य, वर्धमान-रुचकार्थिनावपि प्रत्यापादयति—तथेति ॥

ब्रह्मसिद्धिकारिकाविवरणम्

नैकान्तः सर्वभावानां यदि सर्वविधानतः ।
अप्रवृत्तिनिवृत्तीदं प्राप्तं सर्वत्र ही ! जगत् ॥ २८ ॥

---

तत्त्वशुद्धिः

पूर्वस्योदयाद् द्रव्याभेदेन वर्धमानकस्यैव स्थितेस्तस्यापि कथंचिद् भिन्नतया नाशे तदभिन्नतया रुचकस्य नाशाच्चेत्यर्थः ॥

P. 59-12 व्यवस्थाहेतोर्भेदस्य सत्त्वान्नायं दोष इत्याशङ्कते—अथेति ॥ अव्यवस्थाहेतुरभेदोऽप्यस्तीति दूषयति—अभेदोऽपीति ॥ द्रव्यस्य रुचक-वर्धमानकाभ्यामभेदेऽप्यात्यन्तिकाभेदाभावाद् न तदुत्पाद-विनाशाभ्यामुत्पाद-विनाशौ, एवं रुचक-वर्धमानकयोरपीत्याशयवानाशङ्कते—अथेति ॥ अभेदमात्रं यथा न व्यवस्थापादकम्, तथा भेदमात्रं
P. 69-13 व्यवस्थापादकं न स्यात्; अविशेषादिति दूषयति—नात्यन्तमिति ॥ किञ्चायमनेकान्तमैकान्तिकमिच्छेत् ? अनैकान्तिकं वा ? आद्ये न स्यात् स्याद्वादः; अन्त्ये अनेकान्तस्यैवानैकान्तिकत्वात् । अन्यस्मिन्न-नैकान्तोऽप्यनैकान्तिकः । तथा च भेदोऽप्यनैकान्तिक इत्याह—न चास्येति ॥ २७ ॥

P. 69-14 सर्वथैवानेकान्तभङ्गभिया क्वचिदप्यैकातत्वानभ्युपगमे भङ्गान्तरमाह— तथा चेति ॥ २७ ॥

कारिकाविवरणम्

(सर्व)भावानाम्=पाथः-पावकादीनाम्; सर्वविधानतः = स्वरूप-पररूप-स्व-परधर्मप्रकारेण प्रवृत्ति-निवृत्ती न स्तो यस्य, तत्तथा। हीति प्लुतिः खेदार्था॥ २८ ॥

ब्रह्मसिद्धिविवरणम्

हित-तत्साधनावगमात् प्रवृत्तिः, अहित-तत्साधनावगमात् निवृत्तिः

अभिप्रायप्रकाशिका

अपि चानैकान्तिकत्वमपि तवैकान्तिकम् ? अनैकान्तिकं वा ? आद्ये स्याद्वादो व्याहन्यते ; क्वचिदनैकान्तिकत्वानभ्युपगमात्। द्वितीयेऽपि भेदोऽप्य-नैकान्तिक इति सङ्करप्रसङ्ग इत्याह—न चास्येति ॥ २७ ॥

तत्त्वशुद्धिः

स्यादिति, अत्राह—यदा हीति ॥ पाथःपिपासानिवृत्तिहेतुत्वं निश्चित्य P. 69-18
न प्रवर्तेत। हेतुमाह—यत इति ॥ पावकाभेदादित्यर्थः ; अतत्साधनत्वनिश्चयात्। तर्हि निवर्त्तेतेति, अत्राह—नापीति ॥ पावकात् कथञ्चित् भेदादपि पिपासाहेतुत्वं यस्मादित्यर्थः। पिपासूनां पावकपरिहारोऽपि दुर्वचस्त्वत्पक्ष इत्याह—तथेति ॥ यस्मात् पावकः पाथोभेदान्न दुःखहेतुरेवेत्यर्थः। मा भूत् तर्हि ततो निवृत्तिः, अत्राह—नापि नेति ॥ पाथसः कथञ्चिदभिन्नत्वाद् दुःखहेतुत्वं न नियतमित्यर्थः। हीति प्लुत्यर्थं दर्शयति—कष्टामिति ॥

शङ्कोत्तरं वाऽयं श्लोक इत्याह—अथवेति ॥ किं ब्रूयुः ? तदाह— P. 69-20
सर्वेति ॥ तदुपपादयति—तथाहीति ॥ सर्वमस्मद्दर्शनेऽनैकान्तिकम्, अतः P. 69-22
प्रीत्यादयोऽपि, इति सन्ति च, न सन्ति च, इति न दुर्घटतेत्यर्थः।
तत्रोत्तरत्वेन श्लोकमवतारयति—तत्रेति ॥ अवतारितं व्याकरोति—यदि P. 70-2
खल्विति ॥ साधनप्रवृत्ति-निवृत्त्योर्नियमानुपपत्तिमुक्त्वा दुःखहेतुहाननियमानुपपत्तिमाह—तथेति ॥ २८ ॥

अस्य=दुःखहेतुसम्पर्कस्येति यावत्। उत्तरकारिकामवतारयितुं
वृत्तं कीर्तयति—एवं तावदिति ॥ सामान्य-विशेषौ न द्वे वस्तुनी, P. 70-5
नाप्येकं द्व्यात्मकमिति निश्चितमित्यर्थः। परिशिष्टांशमाह—तत्रेति ॥ तासु=कल्पनासु। तदुपादाना = क्षणिक-परमार्थभावाधिष्ठाना-मानसीयमभेदकल्पना। यदाहुः—सौगता इत्यर्थः ॥

भेदस्याभेदभ्रमाधिष्ठानत्वम्, तज्ज्ञानस्य तद्बाधकत्वं चानुप-
पन्नमित्यस्मिन्नर्थे श्लोकमवतारयति—तत्रेति ॥ P. 70-8

अभिप्रायप्रकाशिका

उक्तमर्थमुपजीव्य प्रवृत्ति-निवृत्त्योरसम्भवमाह—तथा चेति ॥ आशङ्कोत्तरं वाऽयं श्लोक इत्याह—अथवेति ॥ २८ ॥

वृत्तं सङ्कीर्त्यानन्तरग्रन्थस्य तात्पर्यमाह—एवं तावदिति ॥ मा भूद् भेदग्रहः, काऽनुपपत्तिरभेदकल्पनाया इति ? अत आह—न चागृहीत इति ॥ न निरधिष्ठानकल्पना, न चागृह्यमाणमधिष्ठानं भवतीत्यर्थः ॥

ब्रह्मसिद्धिकारिका

आपेक्षिकत्वाद्भेदो हि भेदग्रहपुरस्सरः ।
नैकज्ञानं समीक्ष्यैकं न भेदं तत्त्वहानतः ॥ २९ ॥

कारिकाविवरणम्

आपेक्षिकत्वात्=धर्मि-प्रतियोगिज्ञानापेक्षत्वात्, भेदग्रहपुरस्सरः = धर्मि-प्रतियोगिभेदसिद्धौ धर्मि-प्रतियोगिभावसिद्धिः, ततश्च तद्भेदसिद्धिः। यथा भेदो भेदग्रहापेक्षः, तथाऽभेदोऽप्यभेदग्रहापेक्ष इति, अत्राह—
P. 70-8 नैकेति ॥ तर्हि भेदग्रहापेक्षम्, अत्राह—न भेदमिति ॥
P. 70-9 तत्त्वहानतः=भेदहानिप्रसङ्गादित्यर्थः ॥ २९ ॥

ब्रह्मसिद्धिविवरणम्

P. 70-10 श्लोकेन हेतुरेवोक्तः, न प्रतिज्ञेति, तामाह—न भेदमिति ॥ दूरस्थतरु-गिर्योरभेदकल्पना भेदोपादाना न दृष्टेति मत्वा पृच्छति—कुत इति ॥ सापेक्षं स्फटिकलौहित्यवत् कल्पितमित्याशयेन हेतुमाह—आपेक्षिको हीति ॥ भेदस्यानवगतस्य सत्त्वयैवाभेदोपादानत्वाद् न
P. 70-11 सापेक्षत्वं दोषगन्धमावहतीति, अत्राह—न चेति ॥ यदनुविद्धमारोपितम्; तस्याधिष्ठानत्वादित्यर्थः ॥ भवतु तर्हि परापेक्षमेव निरूपणं
P. 70-12 भेदस्येति, अत्राह—परापेक्षत्वे चेति ॥ हेतुमाह—यत इति ॥ परः=प्रतियोगी, आत्मा=धर्मी, तौ विभागेन न सिध्यतः । एकस्मिन्नपि
P. 70-13 तत्प्रसङ्गादित्यर्थः । मा भूत्परात्मव्यवस्थेति, अत्राह—न चेति ॥ 'अन्योन्यसंश्रयाद् भेदो न प्रमान्तरसाधन' इत्यत्र प्रपञ्चितमित्यर्थः ॥
P. 70-14 अभेदस्तु निरपेक्ष इत्याह—न चैवमिति ॥ न ह्यस्या द्वैतसिद्धिपूर्विकाऽद्वैतसिद्धि, अपेक्षाभावादित्यर्थः । मा भूदभेदज्ञानापेक्षा, भेदज्ञानापेक्षाऽस्त्येव; श्रुत्यादिविभागव्यतिरेकेण द्वैतासिद्धेरिति, अत्राह—नापीति ॥ भाविकभेदग्रहानपेक्षत्वे हेतुमाह—अभेदहानेति ॥
P. 19-15 तदुपपादयति—न हीति ॥ अभेदोऽप्यगृहीतो नाधिष्ठानम्, गृहीते तु

अभिप्रायप्रकाशिका

अस्तु तर्हि परापेक्षया भेदग्रह इति, तत्राह—अभेदहानेति ॥ तदेव कुत इति? अत आह—न हीति ॥ अभेदस्याप्यगृहीतस्याधिष्ठानत्वाभावाद्, गृहीते च तस्मिन् विरुद्धभेदकल्पनानुपपत्तेस्त्वन्मतमप्यनुपपन्नमिति,

तत्त्वशुद्धिः

तस्मिन् न भेदभ्रमावकाशः; अधिष्ठानतत्त्वधीविरोधादिति, अत्राह—तत्रेति ॥ उपादाय=अधिष्ठानं कृत्वेति यावत् । अभेदाश्रयौ भेदभ्रमवादौ सम्भवत इत्यत्र दृष्टान्तमाह—यथेति ॥ एको घट इत्यवगतैकत्वपूर्वकं मूर्ध-ग्रीवाद्यवयवकल्पनं यथा, तथैकात्मसिद्धिपूर्वको भेदभ्रम इत्यर्थः ॥ P- 70-16

एकनिर्भासेष्वपि घटादिषु मूर्ध-ग्रीवाद्यवयवभेदग्रहणपुरस्सरमवयविज्ञानमिति वैषम्याद् न दृष्टान्त-दार्ष्टान्तिकतेति, तत्राह—न तत्रेति ॥ P. 70-17 हेतुमाह—भेदो हीति ॥ अवयविग्रहणस्यावयवग्रहणाधीनत्वे घटावयवानां मूर्धादीनां सावयवानां ग्रहणमवयवग्रहाधीनम्, एवं तदवयवानामपीति सर्व एव स्वावयवग्रहणाधीननिरूपणाः, अवयवावयविविभागश्च परमाणुपर्यन्तस्तत्रावतिष्ठत इत्यर्थः । भवतु तथैवेति, अत्राह—ते चेति ॥ परमाणवः स्वयमनिरूपिता न सावयविनः—द्व्यणुकस्य, त्र्यणुकस्य वा निरूपणाय भवति(न्ति,) इति । तदनिरूपणे प्रसक्तं सर्वाग्रहणमित्यर्थः ॥ P. 70-18

तद् न भेदग्रहणपूर्वकमभेदग्रहणम्, अपि त्वभेदग्रहणपूर्वकमेव भेदग्रहणमिति स्थिते चोदयति—नन्विति ॥ भिन्नेष्वभिन्ननिर्भासविज्ञानमनुसन्धानम्, किमतः? अत्राह—स चेति ॥ कस्मात्पुनर्न P. 70-19 भेदग्रहणमन्तरेणेतीति, अत्राह—भेदासंस्पर्शे हीति ॥ परिहरति—प्रत्युक्तमिति ॥ नायमभेदग्रहणमात्रस्य धर्मः, यद्भेदग्रहणापेक्षत्वम्, P. 70-20 अभिन्नदेशकालस्यार्थस्य तद्भावप्रसङ्गात्, किन्त्वनुसन्धीयमानस्य ।

अभिप्रायप्रकाशिका

अत आह—तत्राभेदमिति ॥ सामान्येन गृहीतस्य प्रविलीनप्रपञ्चाग्रहणाद् गृहीतभेदाधिष्ठाना भेदकल्पना सम्भवतीत्यर्थः । तत्र दृष्टान्तमाह—यथेति ॥ अवयविनोऽवयवाश्रयत्वात्तत्र भेदाधिष्ठानाऽभेदकल्पनेति, अत आह—न तत्रेति ॥

घटावयवानामपि सावयवेषु कल्पितत्वात् परमाणुपर्यन्ता कल्पनेत्यङ्गीकृत्याह—भेदो हीति ॥

अभेदे भेदकल्पनायामप्यनुपपत्तिमाशङ्कते—ननु चेति ॥ कुत इति? अत आह—भेदेति ॥ विनाप्यनुसन्धानमेकत्वसिद्धेरुक्तत्वान्नैवमिति परिहरति—

ब्रह्मसिद्धिकारिका

आलोच्यते वस्तुमात्रं ज्ञानेनापातजन्मना ।
अचेत्यमानो भेदोऽपि चकास्तीत्यतिसाहसम् ॥ ३० ॥

---

तत्त्वशुद्धिः

तच्च सत्त्वादिना सामान्यभावमात्रस्य, न पुनरैक्यस्य; तत्त्वेकनिर्भासादेव प्रकाशात् सिध्यतीत्यर्थः । एकत्वासिद्धिर्न भेदवादिनामनिष्टेत्ति,
P. 76-21 अत्राह—असति चेति ॥ एकस्मिन् क्षणे, परमाणौ वा भेदवादिनो हि भेदानामेवातद्रूपपरावृत्तिमात्रेणानुसन्धानादेकत्वमास्थिषत, तदेकस्मिन्नसति न स्यादित्यर्थः ॥ २९ ॥

तदेतदुपपत्त्या व्यवस्थाप्य सत्त्वमात्रानुभवेन व्यवस्थापयति—
P. 79-22 अपि चेति ॥

कारिकाविवरणम्

आपातजन्मना प्रथमाक्षसन्निपातजन्येन निर्विकल्पकालोचनेऽपि भिन्नरूपं भातीति, अत्राह—अचेत्यमान इति ॥ ३० ॥

ब्रह्मसिद्धिविवरणम्

विशेष्यपदार्थसन्निकृष्टेन्द्रियजं ज्ञानं कथं वस्तुमात्रगोचरं स्यात् ?
P. 71-1 अत्राह—वस्तुमात्रेति ॥ विशेषण-विशेष्यभावरहितरूपमात्रगोचरमालोचनमविकल्पं प्रसिद्धम्, तत्पूर्वास्तु विकल्पबुद्धयो विशेषण-विशेष्यभावावगाहिन्य उदयन्त इति सर्वजनीनमित्यर्थः ॥

स्वरूपमात्रगोचरत्वमालोचनस्य न सम्प्रतिपन्नमिति चोदयति—
P. 70- 2 स्यादेतदिति ॥ निर्विकल्पकेऽपि भेदो भाति चेत्, भेदोऽयमिति मतिः

अभिप्रायप्रकाशिका

प्रत्युक्तमिति ॥ एकत्वप्रतीतिपुरःसरत्वाच्चानुसन्धानस्य नानुसन्धानादेकत्वावगतिरित्याह—असति चेति ॥ २९ ॥

न केवलमुपपत्त्या, अनुभवेनाप्येकत्वमित्याह—अपि चेति ॥ विकल्पबुद्धय इति ॥ विशेषण-विशेष्यभावविषया धिय इत्यर्थः ॥

उत्तरार्धं शङ्कापूर्वमवतारयति—स्यादेतदित्यादिना ॥ विशिष्टरूपोऽपि

ब्रह्मसिद्धिकारिका

प्रतिष्ठितं च विज्ञानमर्थमात्रावलम्बनम् ।
भेदेषु त्वप्रतिष्ठत्वमस्तीन्द्रियधियामपि ॥ ३१ ॥

---

तत्त्वशुद्धिः

कुतो न प्रकाशते इति ? अत्राह—स त्विति ॥ शब्दपरामर्शविकल्पत्वा- P. 71-3
दित्यर्थः । तत्र=तस्मिन् काल इति यावत् । दूषयति—तदिति ॥ (वि)
प्रतिषेधं साधयति—न चेति ॥ स तु भेदस्तथा नोपलक्ष्यते; विशिष्टरूपोप- P. 71-4
ग्राह्येव प्रत्यक्षमिति भवता विरुद्धमुक्तमित्यर्थः ॥ अतिसाहसमिति पद-
मत्र सङ्गमयति—अत इति ॥ निर्विकल्पकं सविकल्पकं वा प्रत्यक्षं स्वविषयं P. 71-5
विभक्तमेव सर्वतो गमयति, अनुभवोऽपि तथैवेत्याशङ्कते—यस्त्विति ॥
परिहरति—तस्येति ॥ अभेदोपादानो भेद इत्यत्र हेत्वन्तरमाह— P. 71-6
किञ्चेति ॥ ३० ॥ P. 71-8

कारिकाविवरणम्

'प्रतिष्ठितम्'=अर्थाव्यभिचारि; वस्तुमात्राव्यभिचारात् । मनोमात्रजन्यस्वप्नप्रत्ययानां विशेषार्थव्यभिचारः, न भेदप्रत्ययानामिन्द्रियजत्वादिति, अत्राह —भेदेष्विति ॥ ३१ ॥

ब्रह्मसिद्धिविवरणम्

सामान्य-विशेषयोः प्रत्येकं वस्तुत्वाद् भेदज्ञानमभेदज्ञानं च प्रति- P. 71-10
ष्ठितमिति, अत्राह—वस्तुद्वयेति ॥ तार्किकमतस्य, अनेकान्तमतस्य च निर-

अभिप्रायप्रकाशिका

पदार्थः प्रत्यक्षश्चेत्, किमिति तथा नोपलक्ष्यते इति ? अत आह—स त्विति ॥ अनुपलक्ष्यत्वमप्यसिद्धमिति मन्वानं प्रत्याह—यस्त्विति ॥ ३० ॥

सर्वं ज्ञानं धर्मिण्यभ्रान्तम्, प्रकारे तु विपर्यय इति परीक्षकन्यायमवलम्ब्याह—किञ्चेति ॥ न्यायविशेषं परिशेषयति—वस्तुद्वयेति ॥ सामान्यं विशेषश्चेति वस्तुद्वयम्, एकं वा द्व्यात्मकमिति मतं निरस्तं पुरस्तादित्यर्थः ॥

बाधसमयेऽपि वस्तुमात्रस्य प्रतिभासनान्न तावन्मात्रस्य बाध इत्याह—

तत्त्वशुद्धिः

P. 71-11 स्तत्वादित्यर्थः ॥ विशेषधियो भ्रान्तित्वे हेतुमाह—रजतादीति ॥ ज्ञान-
P. 71-12 त्वात् सामान्यमपि व्यभिचारि किं न स्यात्? अत्राह——न त्विति[1] ॥
P. 71-13 कुत इति? अत्राह——न हीति ॥ तत्रापि हेतुमाह——अन्तत इति ॥ स्रजि
दण्ड-सर्प-भूच्छिद्र-बलीवर्दमूत्रितत्वादिभ्रमकाले तेषामेकैकव्यभिचारेण
व्यभिचारेऽप्यवसाने स्रक्त्वोपलब्धेः । एवं वस्तुमात्रस्य सर्वत्राव्य-
भिचारान्न तस्य मिथ्यात्वं कल्प्यमित्यर्थः । इतश्च भेदस्यैव तद् युक्त-
P. 71-15 मित्याह——दृष्टेति ॥ दृष्टस्तद्भावो व्यभिचारित्वं यस्य विशेषस्य;
तस्यैव तत्कल्पना मिथ्यात्वकल्पना=लघ्वी; योग्यतायाः क्लृप्तत्वेना-
P. 71-16 कल्पनीयत्वादित्यर्थः । वस्तुमात्रस्यापि सममेतदिति, अत्राह——
इतरत्र त्विति ॥ वस्तुमात्रस्य क्वचिदपि मिथ्यात्वस्यादृष्टत्वेन योग्यतायाः
कल्प्यत्वात् तां प्रकल्प्य मिथ्यात्वं कल्पनीयमित्यर्थः ॥

मनोरथज्ञानविजृम्भितज्ञानविषयाणामपरमार्थत्वाद् मनोमात्र-
कृतप्रत्ययानां भ्रान्तित्वयोग्यतेति चोदयति——स्यादेतदिति ॥ विशेष-
P. 71-17 बुद्धयस्त्विन्द्रियजाः, तस्माद् न भ्रान्तय इत्याह——इन्द्रियबुद्धीति ॥ दूष-
P. 71-18 यति——एतच्चेति ॥

न खलु पीतशङ्खादिविभ्रमा मनोमात्रयोनयः, दुष्टेन्द्रियव्यति-

अभिप्रायप्रकाशिका

अन्तत इति ॥ भेदबुद्धेर्मिथ्यात्वस्य दृष्टचरत्वात्तस्या एव भ्रान्तित्वं कल्पनीयमित्याह——दृष्टतद्भावस्येति ॥ उत्तरार्धं व्याख्यातुं विशेषमाशङ्कते——स्यादेतदिति ॥ पीतशङ्खादिविभ्रमाणां नैन्द्रियकत्वम्; इन्द्रियाणां पीतादिभिरसन्निकर्षात्, अपि तु मनोमात्रयोनयः; मनसो विषयनियमाभावात् स्वप्नवदिति भावः । दूषयति——एतच्चेति ॥ अन्धस्य पित्ताद्यनुपहतस्य, चक्षुष्मतः पित्ताद्युपहतस्य पीतशङ्खादिविभ्रमदर्शनादिन्द्रियतद्दोषान्वय-व्यतिरेकानुविधायित्वात्तज्जन्यत्वं निश्चीयत इत्यर्थः ॥

अन्योन्याभावासम्भवादपि भेदासम्भवमाह—अपि चेति ॥ व्यावृत्तम्=व्यावृत्तिः, स्वम्=असाधारणम्, लक्षणम्=स्वभावो येषां ते, तथा व्याकरणीयाः । व्याकरणान्तरमाह—तद्विशेषणा वेति ॥ व्यावृत्तः = परस्परायोगः स्यात्, अतस्तद्विशेषणा इत्युक्तम् । उभयविधान्योन्याभावानभ्युपगमे भेदो न सम्भवतीत्याह——नान्यथेति ॥

१. न चेति मूलपाठः ।

ब्रह्मसिद्धिकारिका

अन्योन्याभावरूपत्वं सर्वेषां न प्रकल्पते ।

तत्रोपाधौ प्रतीयन्तां तथा भिन्ना न रूपतः ॥ ३२ ॥

तत्त्वशुद्धिः

करतया तत्कार्यत्वावधारणात्, अतस्तत्र व्यभिचार इत्यर्थः । विशेष-शब्दार्थनिर्वचनसामर्थ्यादपि तन्मिथ्यात्वमाह—अपिचेति ॥ तेन= P. 70-19
बौद्धेन, ते=व्यावृत्तस्वलक्षणाः=व्यावृत्तं स्वलक्षणमसाधारणं रूपं येषाम्, तेऽन्योन्याभावस्वभावाः, एषाम्,इत्यन्योन्याभावस्वभावा व्याकर्तव्याः=व्याख्येयाः, सोऽन्योन्याभावस्वभावो विशेषणं येषाम्, ते, तद्विशेषणाः, P. 71-21
तस्मादेवं व्याख्येयाः, अत्राह—नान्यथेति ॥ तत्रापि हेतुमाह—तस्येति ॥ ३१ ॥

कारिकाविवरणम्

आद्यव्याकरणं दूषयति । तत्र—अन्योन्येति ॥ P. 71-22

अन्यतरस्यान्यतोऽनपेक्षस्याप्रसिद्धेरन्योन्याश्रयप्रसङ्गात् ।

द्वितीयव्याकरणं दूषयति—तत्रेति ॥ तस्मिन्नन्योन्या- P. 71-23
भाव उपाधौ विशेषणे प्रतीयन्तां नाम भावाः ; तथापि

अभिप्रायप्रकाशिका

पूर्वोत्तरार्धाभ्यां श्लोकस्य पक्षद्वयं दूषयति—तत्रेत्यादिना ॥ ३१ ॥ अन्यतरस्यन्यतरनिरपेक्षस्यानङ्गीकारे नान्योन्याभावसिद्धिः ; अन्योन्याश्रयत्व-प्रसङ्गादिति, अत आह—एकस्मिन्निति ॥

उत्तरार्धं व्याचष्टे—अथ विशेषणमिति ॥ अन्योन्याभावोपाधि-निबन्धनत्वाद् भेदस्य न भावानां भेदस्वभावतासिद्धिः । न च—दण्डादि-योगनिबन्धनदण्डित्वादिवत् पारमार्थिकत्वं भेदस्यौपाधिकत्वेऽपि—शङ्कनीयम् । भावाभावयोः संयोग-समवायादिमूलसम्बन्धाभावे विशेषण-विशेष्यभावस्याप्य-सम्भवात् । न च समवायवन्मूलसम्बन्धाभावेऽपि विशेषण-विशेष्यभावसिद्धिः ; अत्राप्यसम्प्रतिपत्तेः, तद्व्यवहारस्य कल्पनयाप्युपपत्तेरिति भावः ॥

किं च भेदः, अभेदाधिष्ठानः, भेदत्वात् ; दर्पणादौ मुखादिवदि-त्यनुमानमाह—अपि चेति ॥ साध्यविकलो दृष्टान्त इति, अत आह—न चेति ॥ अल्पपरिमाणे दर्पणादौ महत्परिमाणस्य पर्वतादेः प्रतिभासनान्न तदवयवारब्धतया तत्कार्यत्वमित्यर्थः ॥

तत्त्वशुद्धिः

रूपतो भिन्ना भवितुं नार्हन्ति ; व्यावृत्तेरवस्तुत्वादित्यर्थः ॥ ३२ ॥

ब्रह्मसिद्धिविवरणम्

द्वये प्रतियोगिनि धर्ममात्रस्याभावव्यवहारालम्बनत्वोपपत्तौ
P. 71-24 नातिरिक्ताभावकल्पना ; गौरवादिति, अत्राह—एकस्मिन्निति ॥ प्रतियोगिनिरूप्यत्वादभावः स्यादित्यर्थः। भावानामितरेतरनिरूप्यत्वे तयोरितरेतराभावनिरूप्यत्वमपि स्यात्, अत्राह—सर्वे त्विति ॥ हेतुमाह—
P. 71-25 परस्परेति ॥ घटसिद्धौ घटनिरूप्यघटाभावरूपपटसिद्धिः, पटसिद्धौ तन्निरूप्यतदभावरूपघटसिद्धिरित्यन्योन्याश्रयात्, अनवस्थानाद्वेत्यर्थः। यथा श्वैत्यानात्मापि तत्समवायात् प्रासादः श्वेतः, तथा व्यावृत्ति-
P. 91-2 6योगाद् भावाः परमार्थतो व्यावृत्ता इति शङ्कते—अथेति ॥ अभावस्य भावेन सम्बन्धान्तरानभ्युपगमाद्विशेषण-विशेष्यभावस्य सम्बन्धान्तरपूर्वकत्वेनोपलब्धेस्तद्व्यासत्वेन तन्निवृत्तौ निवृत्तेर्व्यवहारमात्रस्य
P. 71-27 कल्पनयाऽप्युपपत्तिरिति परिहरति—काममिति ॥ भाविकभेदो न भवेदित्यर्थः ॥

P. 72-2 सर्वोपाख्याविरहस्वभावमभावं मन्यमानश्चोदयति—नन्विति ॥ एवं वदता ह्यस्मद्राद्धान्त एव समर्थितः स्यादित्याह—अर्थसिद्धिरिति ॥ अभिप्रेतसिद्धिरेवैपेत्यर्थः। अर्थसिद्धिमेव साधयति—न चेदिति ॥

P. 72-4 इतश्चाभेदोपादाना भेदकल्पनेत्याह—अपिचेति ॥ व्याप्तिमाह—दृष्टो हीति ॥ विवादाध्यासितो भेदः, कल्पनामात्रनिर्मितः, भेदत्वात्, भेदः सर्व ईदृशः; यथा बिम्बाभेदोपादानः प्रतिबिम्बानां भेद इत्यर्थः। मुखान्तरं तत्र मुखनिमित्तमुत्पन्नं मुद्रानिमित्तप्रतिमुद्रावत्, अतो
P. 72- 5 नैकमुखोपादानत्वमादर्शादिगतमुखभेदस्येति, अत्राह—न चेति ॥

न तावद् दर्पणद्रव्यं मुखसन्निधौ तथा परिणतम् ; बिम्बासन्निधावपि तदनुवृत्तिप्रसङ्गात्, अपि तु मुखस्यैवं परिणामोऽल्पत्वादित्यर्थः ॥

अभिप्रायप्रकाशिका

अभेदस्यैव भेदोपादानकत्वानुमानान्न तस्याभेदोपादानत्वमिति शङ्कते—स्यादेतदिति ॥ भेदाभावप्रसङ्गं दर्शयितुमभेदाभावं तावदाह—एवं हीति ॥

ब्रह्मसिद्धिकारिका

दर्पणादौ मुखस्येव भेदोऽभेदावलम्बनः ।
भेदावलम्बनोऽभेदो न तथा तदभावतः ॥ ३२ ॥

---

भावशुद्धिः

सत्प्रतिपक्षतामुत्थापयति—स्यादेतदिति ॥ विमतमद्वैतम्, विशेषे कल्पितम्, अभेदत्वात्; वदनवदित्यर्थः । दूषयति—नेति ॥ नैतदनुमानं पूर्वानुमानस्य प्रतिकूलतामाचरति, तदुपपादयति—एवं हीति ॥ अभिन्न इति छेदः । परमाणोरपि पारमार्थिकाभेदाभावे हेतुमाह—तदभेदोऽपीति ॥ अभेदत्वादिति ॥ हेत्वर्थो हिशब्दः । न कश्चिदभिन्न इत्ययुक्तम्; परमाण्वंशस्याभिन्नत्वात्, अत्राह—तथेति ॥ अनवस्थायामभेदस्य स्थित्यभाव इत्यर्थः । परमाणोर्विभागानर्हत्वात्तत्राभेदः पर्यवस्यतीति शङ्कते—अथेति ॥ तर्ह्यभेदस्य भेदोपादानत्वानुमानं सव्यभिचारमित्याह—तदभेद इति ॥ ३२ ॥

P. 72-6 P. 72-7 P. 72-9 P. 72-10 P. 72-11

उपवर्णितेऽर्थे श्लोकमवतारयति—तदिदमिति ॥

कारिकाविवरणम्

तदभावतः=भेदाभावप्रसङ्गादित्यर्थः ॥ विद्यमानैकैकविषयतन्त्रतया विषयभेदो व्याप्तस्तद्विरुद्धोपलब्ध्या विपक्षादभेदोपादनत्वाभावाद् व्यावर्तमानोऽभेदो भेदोपादानवत्वान्न व्यावर्तते, इति न सिद्धो व्यतिरेक इति द्रष्टव्यम् ॥ ३२ ॥

अभिप्रायप्रकाशिका

तथापि परमाणूनां कारणानामभेदः स्यादिति, अत आह—परमाणुरपीति ॥ नाभिन्न इत्यनुषङ्गः । परमाणोरंशाभ्युपगमेऽपि दोषमाह—तथेति ॥ तथापि कथं भेदाभावप्रसङ्ग इति? अत आह—एकस्येति ॥ एतद्दोषपरिहारायाभेदस्यैकत्वस्य क्वचित् स्वतः सिद्धत्वमिति शङ्कते—अथेति ॥ तर्हि तत्रानैकान्तिकत्वमिति परिहरति—तदभेद इति ॥ ३२ ॥

उक्तेऽर्थे श्लोकमवतारयति—तदिदमिति ॥ अनुमानान्तरमाह—अपि चेति ॥ साधनवैकल्यं परिहरति—तत्र हीति ॥ हेतोः पक्षधर्मता-

ब्रह्मसिद्धिकारिका

प्रत्येकमनुविद्धत्वादभेदेन मृषा मतः ।
भेदो यथा तरङ्गाणां भेदाद्भेदः कलावतः ॥ ३४ ॥

कारिकाविवरणम्

P. 72-13 अपरमपि भेदस्य काल्पनिकत्वेऽनुमानमुपन्य-
P. 72-16 स्यति—अपि चेति ॥ कलावतः=चन्द्रमस इत्यर्थः ॥३४॥
प्रयोगशरीरं दर्शयति—अभेदेनेति ॥

भावशुद्धिः

विमतो भेदः, मिथ्या, प्रत्येकमभेददर्शनानुविद्धत्वात् ; यो य ई-
दृशः, स स भेदो मिथ्या, यथा जलतरङ्ग-चन्द्रप्रतिबिम्बभेदाः प्रत्येकमेक-
P. 72-17 चन्द्रमोबिम्बानुविद्धा इत्यर्थः । दृष्टान्ते साधनवैकल्यं परिहरति—तत्र
हीति ॥ हेतोरपक्षधर्मत्वेनासिद्धिमाशङ्क्य परिहरति—तथेति ॥ इदम्, तत्
इत्यादिरूपेणाभेदानुगमो भेदेष्वनुभूयत इत्यर्थः ॥ प्रत्येकमिति हेतु-
P. 72-18 विशेषणस्य व्यवच्छेद्यमाह—तरुभेदस्त्विति ॥ ननु(तु) प्रत्येकं विना-
P. 72-19 ऽनुबद्ध इत्यर्थः । प्रमाणाभावादिति हेतुमाह—न हीति ॥ इयम्=व्यभि-
P. 72-20 चारनिवृत्तिः केन लभ्यते ? तदाह—एतदर्थं चेति ॥ प्रत्येकमभेददर्शनानु-
बन्धो हि स्वसाध्यविरुद्धतायाः सत्यताया विरुद्धोपलब्ध्या व्यावर्त-
मानस्तन्मिथ्यात्वेन व्यावर्तते, इति न सन्दिग्धो व्यभिचार इति च-
शब्दार्थः ॥ ३४ ॥

विरोधादेकस्याताात्त्विकत्वे कल्पनालाघवादभेदस्यैव तात्त्विकत्वं
P. 72-21 युक्तम्, न तु भेदस्य ; गौरवप्रसङ्गादित्याह—अपि चेति ॥

अभिप्रायप्रकाशिका

माह—तथेति ॥ प्रत्येकमिति विशेषणस्य व्यवच्छेदमाह—तरुभेदस्त्विति ॥
॥ ३३-३४ ॥

कल्पनालाघवन्यायादप्यभेदोपादनकत्वमेव भेदस्य युक्तमित्याह—
अपि चेति ॥ भूयःसाधारणधर्मयोगो हि सादृश्यम्, तदत्यन्तमनन्वितेषु

ब्रह्मसिद्धिकारिका

एकस्यैवास्तु महिमा यन्नानेव चकासति ।
लाघवान्न तु भिन्नानां यच्चकासत्यभिन्नवत् ॥ ३५ ॥

कारिकाविवरणम्

न तु भिन्नानां महिमा, यत्=यस्मान्महिम्नः, चकासति=प्रकाशत इत्यर्थः। लाघवात्=अभेदेऽत्यन्त-लाघवादिति ॥ ३५ ॥ P. 72-24

ब्रह्मसिद्धिविवरणम्

शून्यमेव स्यादिति, अत्राह—इदं तावदिति॥ 'गौर्गौः' इत्यैक्यधीव्यवहारौ किं सादृश्यात्? भेदाग्रहाद्वा? निर्विकल्पकयोः स्वरूपविशेषानवधारणाद्वा? एकार्थ(त्रि?)क्रियाकारित्वाद्वा? अनादिवासनासामर्थ्याद्वा इत्यर्थः ॥ आद्यमनुवदति—यदीति ॥ दृष्टौ हि सादृश्यनिबन्धना- P. 72-25
वभेदबुद्धि-व्यवहारौ। बिभर्ति हि वायसी स्वसुतसारूप्यमुग्धबुद्धिः स्नेहार्द्रहृदया सदैव कोकिलापत्यानीत्यर्थः। दूषयति—तदत्यन्तमिति ॥ भूयः सामान्ययोगो हि सादृश्यम्। तन्मात्रयाप्यनुवृत्तिरहितेषु स्वलक्षणेष्वयुक्तमित्यर्थः ॥ द्वितीयं कल्पं शङ्कते—अथेति ॥ व्यावृत्तानां व्यावृ-
(त्तेर[1]ग्रह एव) कुतस्त्यः? अत्राह—को हीति ॥ प्रवालः=पल्लवः ॥ P. 72-26
निराकरोति—तदसदिति ॥ व्यावृत्तेरस्वभावत्वे तत्त्वतो भावा न व्या- P. 73-1
वृत्ताः स्युः, इति स्वाभाविकी व्यावृत्तिरेषितव्या ॥

तथा च व्यावृत्तेरग्रहे वस्तुग्रहणं न स्यादित्यर्थः। तृतीयमुत्थापयति—अथेति ॥ निश्चयः=विकल्पः, प्रत्यक्षम्, अविकल्पं वा

अभिप्रायप्रकाशिका

मात्रयाऽप्यनुवृत्तिरहितेष्वनुपपन्नमिति परिहरति—तदत्यन्तमिति ॥

भेदाग्रहादुपपन्नमिति शङ्कते—अथेति ॥ स एवाह—को हीति ॥ मन्मते भेदस्य वस्तुस्वभावत्वाद् धर्मपक्ष इव वस्तुभेदाग्रहोऽनुपपन्न इति परिहरति— तदसदिति ॥

शङ्कते—अथेति ॥ निश्चयशब्देन सविकल्पकमुच्यते, प्रत्यक्षशब्देन

1. ( ) कुण्डलितो भागो (B) पुस्तके नास्ति ।

भावशुद्धिः

परमार्थगोचरम् प्रत्यक्षवर्तिनी यद्यप्ययुक्ते ग्रहणाग्रहणे; तथाप्यनादिवासनासध्रीचीनानुभवभुवस्तु विकल्पा निर्भागमपि सभागमिव कल्पयन्त एकैकभागावगाहिनस्तदात्मानुभवमध्यवस्यन्तः तमेव क्वचित् केनचिद् भागेनावगाहन्ते, नावगाहन्ते च केनचित्, इति संभवत एकस्यैवावसायानवसायौ कल्पितभागभेदगोचरौ। तदिह प्रत्यक्षेण व्यावृत्तस्वभावेष्वपि गृहीतेषु नामीषामवसीयते व्यावृत्तिर्विकल्पेन, इति भेदानवसायादभेदावभासः, तद्व्यवहारश्चेत्यर्थः। दूषयति

P. 73-3 —तदसदिति ॥ उक्तमुपपादयति— तथाहीति ॥ वत्सो मातरमन्विच्छन् महिष्यादिगणमपहाय गोगणं गतस्तत्रापि गवान्तरं परिहाय स्वमातरमुपसर्पति, यस्मादित्यर्थः। दृश्यताम्, किमेतावतेति? अत्राह—न

P. 73-4 हि गवान्तरेति ॥

तुरीयकल्पमुत्थापयति—अथेति ॥ निश्चयेऽपि परस्परव्यावृत्तेः स्वलक्षणसन्तानानामेकार्थक्रियाकारित्वम्; अतत्क्रियाकारिव्यावृत्तेस्तुल्यत्वात्। सामान्यनिरन्धनश्च व्यवहारः, गवान्तरव्यावृत्तश्चेत्यर्थः। दूषयति—

अभिप्रायप्रकाशिका

निर्विकल्पकम्। तत्र निर्विकल्पकेन भेदाग्रहेऽपीतरेणाग्रहणात् सादृश्यम्, अनुवृत्तव्यवहारश्च सम्भवतीत्यर्थः। अनुवृत्तव्यवहारवद् व्यावृत्तव्यवहारस्यापि दर्शनात् सविकल्पकेन व्यावृत्तेरग्रहोऽप्यनुपपन्न इति दूषयति—तदसदिति ॥ तदेव प्रपञ्चयति—तथा हीति ॥ दृश्यताम्, ततः किमिति? आह—न चेति ॥

सविकल्पकेन व्यावृत्तेरग्रहेऽपि तथाऽध्यवसायात् तद्व्यवहार इति चेत्, तर्हि विकल्पाकारस्य कोऽयं तथाऽध्यवसायो नाम—किं तदात्मताकरणयोगः? उतारोपः। न च योजनम्; अन्तर्बहिर्भावेन योजयितुमशक्यत्वात्, युक्त इति च प्रत्ययाभावात्। नाप्यारोपः; गृह्यमाणागृह्यमाणयोस्तदयोगात्। तथाहि—व्यावृत्तेर्निर्विकल्पकेनागृहीतत्वेऽपि सविकल्पकेन गृहीतत्वात् तत्र विकल्पः साकारमारोपयितुमर्हति। आरोप्यमाणानुभवपूर्वश्चारोपः। न च विकल्पः प्राक् स्वाकारमनुभूय पश्चादारोपयति; क्षणिकत्वात्। तस्मात् विकल्पस्य द्विविधो विषयः—ग्राह्यः, अध्यवसेयश्च। ग्राह्यस्तु स्वयमेवाध्यवसेयो बाह्य इत्ययुक्तं सौगतानां मतमिति भावः ॥

भावशुद्धिः

तदपीति ॥ कुत इति ? अत्राह—नैकेति ॥ न खलु चित्रगवि साध्यो P. 73- 6
दोहः कपिलासाध्यो भवति, येनातत्कारिव्यवच्छेदेन व्यक्तीनामैक्य-
कल्पनेत्यर्थः। व्यावृत्तिश्च वस्तुनः स्वभावो (वा ? अस्वभावो वा ? ) आद्यं
प्रत्याह—वस्तुस्वभावश्चेदिति ॥ अतत्कारिव्यावृत्तिर्न तुल्या स्यादित्यर्थः। P. 73- 7
द्वितीयं दूषयितुमनुवदति—अथेति ॥ दूषयति—तेषामिति ॥ व्या-
वृत्तेर्वस्तुसंवन्धासिद्धेरित्यर्थः ॥

चरमकल्पमालम्बते—अथेति ॥ अनुवृत्तप्रतिभासः, तत्पूर्वको P. 73- 8
व्यवहारश्चेत्यर्थः। निराकरोति—तदिति ॥ अनियममेवाह—क्वचि- P. 73- 9
चिदिति ॥ कालाक्षी-स्वास्तिमत्यादिषु गौरित्यवभासो नियतो वास-
नेति, अत्राह—सवासनेति ॥ वासनायाः सांवृतत्वेन सर्वान् प्रत्य- P. 73-10
विशेषादित्यर्थः। यस्मात् प्रयोजकान्तरं न सम्भवति, अत इत्युपसंहरति
—तस्मादिति ॥ स्वभावः=पदार्थानां भेदः, तद्विरुद्धाभेदप्रकाशक
इत्यर्थः ॥

एवं पीठबन्धं विधाय तत्र कारिकामारोपयति—तथा सतीति ॥ P. 73-12
माहात्म्यम्=अविद्यालक्षणम्, यत्=यस्मादिति यावत्। उभयोरपि।

अभिप्रायप्रकाशिका

व्यावृत्तस्वभावानामपि भावानामेकरूपार्थक्रियाकारकत्वादतदर्थक्रिया-
कारिव्यावृत्तस्तुल्यत्वादभेद इति व्यावहार इति शङ्कते—अथेति ॥ परिहरति—
तदपीति, ॥ अर्थक्रियाणां भेदमेवाह—नैकेति ॥ अयमाशयः—'अतत्क्रिया-
व्यावृत्तिरित्यत्र तच्छब्देन किमेकैव क्रिया प्रतियोगित्वेन परामृश्यते, किं
वैकजातीया। नाद्यः; क्रियायां प्रतिवस्तु भेदात् तत्कारिताया एकरूपत्वाभावे
तद्व्यावृत्तेरपि तुल्यरूपत्वाभावात्। न द्वितीयः; जातिस्वीकारे वस्तुष्वपि
तन्निबन्धनतयाऽभेदव्यवहारस्य सम्भवादन्यापोहस्वीकारस्य वैयर्थ्यमिति। किञ्चा-
तद्व्यावृत्तिः पदार्थस्वभावः, भिन्ना वा। आद्ये पक्षे दोषमाह—वस्तुस्वभाव-
श्चेदिति। द्वितीये पदार्थानामेव सत्यत्वाद् व्यावृत्तेस्तदतिरेकिण्यतुच्छत्वे
प्राप्ते न तया वस्तुवृत्तिव्यहार इत्यर्थः ॥

पक्षयोः साम्यात् तावन्मात्रेणैव कार्योपपत्तौ न भेदा भाविकाः
P. 73-13 कल्पनीयाः; गौरवप्रसङ्गादित्याह—न तु भिन्नानामिति ॥ भावानां तत्सामर्थ्यानां च बहूनां कल्पनीयत्वादेकस्य शक्तिमात्रस्य च सम्प्रतिपन्नत्वादित्याशयः ॥

अस्ति तावद् व्यावृत्तिनिबन्धनो व्यवहारः। न च काल्पनिकत्वे
P. 73-15 युक्तः। न जातु कल्पितवह्निभावः खद्योतो दहति, पचति चेति, अत्राह—भेदव्यवहारश्चेति ॥ न हि सर्वो व्यवहारो यथावस्तु, इत्यैकान्तिकम्, अयथावस्त्वपि, यथावभासं व्यवहारसिद्धेरवश्याभ्यु-
P. 73-16 पेयत्वात् सर्वत्र वादिभिरित्युपपादयति—तथा हीति ॥ सौगतान्
P. 73-17 प्रत्युक्त्वा तार्किकान् प्रत्याह—संसर्गेति ॥ शुक्लो गौरित्याद्यभेदव्यवहारो न यथावस्तु; सामान्यादेर्द्रव्यादितोऽन्यत्वादित्यर्थः। सामान्य-विशेषयोस्तदात्म्यपक्षे व्यवहारस्य यथावस्तुत्वसिद्धिरिति, अत्राह—येऽपीति॥ ३५ ॥

अभिप्रायप्रकाशिका

अभेदावभासस्य गत्यन्तरमाशङ्कते—अथेति ॥ दूषयति—तदप्ययुक्तमिति ॥ नियममेवाह—कासुचिदिति ॥ शाबलेय-बाहुलेयादिष्वेव गौर्गौरित्यभेदावभासः, न त्वश्व-मातङ्गयोः सोऽयं नियम इत्यर्थः। अनपेक्षवासनामात्रोपादानत्वं न युज्यते; तन्मात्रस्य सर्वत्राविशेषात्। अर्थसापेक्षत्वे च वासनायाः प्राप्तमर्थस्यैवाभेदावभासयोग्यत्वमित्यर्थः। उपसंहारव्याजेन श्लोकं व्याचष्टे—तस्मादिति ॥ व्यावृत्तानां भेदव्यवहारजननसामर्थ्यमेव युक्तं कल्पयितुम्, नाभेदव्यवहारजननसामर्थ्यमिति स्वभावविपरीता सामर्थ्यकल्पना न युक्तेत्यर्थः ॥

भेदानां कल्पितत्वे कथं तेषां स्वोचितार्थक्रियाकारित्वमिति मन्वानं प्रत्युत्तरश्लोकार्थकथनेनोत्तरमाह—भेदेति ॥ उक्तमेवार्थं प्रपञ्चयति—तथा हीति ॥ अभेदव्यवहारहेतोः समवायादेरप्यनङ्गीकारात्। अत्र चात्यन्तिकभेदवादिनो बौद्धाः, संसर्गवादिनो नैयायिकादयः, अनर्थान्तरवादिनस्तु भाट्टादयः। भाट्टादीनां कथमभेदव्यवहारस्यावास्तवत्वमिति? अत आह—

ब्रह्मसिद्धिकारिका

यथानुवृत्तव्यवहारसिद्धिं यथावभासं कथयन्ति बाह्याः ।
तथैव भेदव्यवहारयोगं वदन्ति वेदान्तविवेकभाजः ॥ ३६ ॥

कारिकाविवरणम्

व्याख्यातकाण्डसमाप्तिं सूचयन्तीं कारिकां पठति—यथानुवृत्तेति । यथावभासम्=प्रसिद्धमनतिक्रम्य, भ्रान्तिमूलं कथयन्ति यथेत्यर्थः । वेदान्तविवेकभाजः= वेदान्तविज्ञानसुनिश्चितार्था इत्यर्थः ॥ ३६ ॥ P. 73-20

इति श्रीमदभयानन्दपूज्यपादशिष्येणानन्दपूर्णमुनीन्द्रेण विरचिते ब्रह्मसिद्धिव्याख्यानरत्ने (भावशुद्धौ) तर्ककाण्डं सम्पूर्णम् ॥

अभिप्रायप्रकाशिका

तेषामपीति ॥ तेषामभेदव्यवहारो मा भूत्, को दोष इति भावः । अभेदव्यवहारहेतोः समवायादेरप्यनङ्गीकाराद् बाह्या इति प्राधान्येनोक्तम् ॥ ३५॥३६ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यज्ञानोत्तमपूज्यपादशिष्यचित्सुखमुनिविरचितायां ब्रह्मसिद्ध्यभिप्रायप्रकाशिकायां तर्ककाण्डं समाप्तम् ॥



# नियोगकाण्डम्

भावशुद्धिः

नियोगकाण्डमारिप्सुर्द्वितीयविप्रतिपत्तिनिरासे तात्पर्यं विवेक्तो(चयिष्यन्) (भी ?) तृतीयविप्रतिपत्तिनिराकरणं(णे) तर्ककाण्डतात्पर्यं स्मारयति—एवमिति ॥ निरसनीयां विप्रतिपत्तिमाह—सम्प्रति P. 74-2
त्विति ॥ प्रतिबोधनाय प्रयत्यत इत्युपरि सम्बन्धः। भूतरूपे ब्रह्मादौ
प्रामाण्याभावे हेतुं दर्शयति—एवं हीति ॥ P. 74-3

ननु—अनेन प्रथमसूत्रोपात्तस्य धर्मस्य को धर्मः ? किंलक्षणक
इति पृष्टस्य स्वरूपम्, प्रमाणं च श्रुत्यर्थाभ्यां प्रदर्श्यते, न तु कार्येऽर्थे P. 74-4
वेदस्य प्रामाण्यमुच्यत इत्याशङ्क्य व्याचष्टे—चोदनाप्रमाणक इति ॥

सकलस्यैव हि स्वाध्यायस्याचार्यकरणविधिप्रयुक्ततयाऽविव-

अभिप्रायप्रकाशिका

इदानीं वृत्त-वर्तिष्यमाणयोः काण्डयोः सङ्गत्यवगतये तयोः सङ्क्षेपतोऽर्थं दर्शयति—एवमिति ॥ न भूतरूप इति ये मन्यन्ते, तत्प्रतिबोधनाय प्रयत्यत इत्युत्तरेणान्वयः। किमत्र प्रमाणमिति ? अत आह—एवं ह्युक्तमिति ॥ "धर्मजिज्ञासा" इति धर्मस्यैव जिज्ञास्यत्वं प्रतिज्ञाय को धर्मः ? किंलक्षणः ? इत्याकाङ्क्षायां चोदनासूत्रस्य प्रवर्तकत्वाद्धर्मस्यैव चोदनागम्यत्वं गम्यते, न तु ब्रह्मण इति, अत आह—चोदनाप्रमाणक इति ॥ अथातःशब्दाभ्यां स्वाध्यायाध्ययनस्य पूर्वं निमित्ततया विवक्षितार्थत्वाभिधानात् कृत्स्न एव स्वाध्यायः स्वार्थविचारहेतुः, अन्यथाऽतश्शब्दविरोधादित्यर्थः।

भावशुद्धिः

क्षितार्थत्वमाशङ्क्य, तत्प्रयुक्तपुरुषापेक्षितानन्तरं दृश्यमानार्थावबोधन-प्रयोजनवत्त्वं विवक्षितार्थत्वम् "अथातो धर्मजिज्ञासा" इति प्रतिपाद्यते। तस्माद् वेदार्थ एवात्र साकल्येन धर्मशब्देन विवक्षित इत्यर्थः। भवतु, किमेतावताऽपि कार्यार्थता वेदस्य सिध्यति? अत्राह—चोदना चेति॥ प्रवर्तकत्वानुपपत्तिसिद्धं कार्यार्थत्वं वेदस्येत्यर्थः। तत् सिद्धमेतत्—कार्येऽर्थे वेदस्य प्रामाण्यम्, न तु भूतादिक इत्युपसंहरति—तस्मादिति॥

आगमविरुद्धेयं प्रतिज्ञा। प्रतीयते हि भूतरूपं ब्रह्म वेदान्तेभ्य इति,
P. 74-5 अत्राह—वेदान्तानामिति॥ ज्ञाननियोगपराणां तत्प्रतिपत्तिकर्तव्यतामुखेन प्रतिपत्तिविषयकार्यान्वितभूतात्मतत्त्वबोधकत्वमित्यर्थः। कार्यपरतयैव
P. 74-7 भूताभिधानत्वं वेदान्तानामित्यत्र भाष्यलिङ्गमाह—तथा चेति॥ "चोदना हि भूतं भवन्तं भविष्यन्तं सूक्ष्मं व्यवहितं विप्रकृष्टमित्येवंजातीयकमप्यर्थं शक्नोत्यवगमयितुम्" इति शाबरं भाष्यम्। एतदपि भाष्यं भूतादिकमप्यर्थमवगमयति चोदनेति ब्रूते, न कार्यमेवेति,
P. 74-9 अत्राह—एतदुक्तमिति॥ ततश्च कार्यान्वयिरूपेण भूतादीनामपि मानान्तरागोचरतया सिध्यत्यनपेक्षं प्रमाणं चोदनेत्यर्थः॥

अभिप्रायप्रकाशिका

तर्हि चोदनाशब्देन कृत्स्न एव वेदोऽभिलप्यताम्, तथा च ब्रह्मणो न तदर्थताव्याहतिरिति, अत आह—चोदनेति चेति॥ प्रवर्तकमित्युपलक्षणम्, निवर्तकं चेति द्रष्टव्यम्॥

यद् यतोऽवगम्यते, तत् तस्य प्रमेयम्, वेदान्तेभ्यश्च ब्रह्मैवावगम्यते, न तु कार्यमिति, अत आह—वेदान्तानामिति॥ कथं तर्हि ब्रह्मणि प्रामाण्यमिति? अत आह—तन्मुखेनेति॥ कार्यशेषभूतवस्तुनि वेदान्तवाक्यानां प्रामाण्यमित्यत्र किं प्रमाणमित्याशङ्क्य, चोदनाभाष्यस्यै(मे?)वम्परत्वेन प्रामाण्यप्रतिपादनाय प्रवृत्तमित्यर्थः॥

ननु—एतद् भाष्यं भूतादिकमर्थमवगमयति चोदनेति ब्रूते, तत् कथं कार्यशेषभूतवस्तुनि प्रामाण्यमुक्तमिति? अत आह—एतदुक्तमिति॥ ततश्च कार्यान्वयिना रूपेण भूतादीनामपि मानान्तरागोचरतया तेष्वनपेक्षं चोदनायाः प्रामाण्यं सिध्यतीति भावः।

ब्रह्मसिद्धिकारिका

शब्दाद् यदात्मविज्ञानं तन्न तावद्विधीयते ।
भवत्यधीतवेदस्य तद्धि कर्मावबोधवत् ॥ ३७ ॥

---

भावशुद्धिः

तदिह प्रतिपत्तिकर्तव्यतायां प्रामाण्यं मन्यन्ते ये वेदान्तानाम्, तत्प्रतिबोधनाय प्रयत्यत इत्याह—ये मन्यन्त इति ॥ मानान्तरा- P. 74-10 विरोधेन सिद्धमानभावानां वेदान्तानां कार्यशेषतया मानत्वम्, स्वातन्त्र्येण वेति विचारोत्थापनात् काण्डसङ्गतिः। आत्मा प्रतिपत्तव्य इति प्रतिपत्तिर्विधीयत इत्यस्य पक्षस्य विभागेन दोषं वक्तुमुपक्रमते—तिस्रश्चेति ॥ संभवन्तीति शेषः। ता एव विशदयति—प्रथमेति ॥ द्वितीया- P. 74-12 माह—अन्येति ॥ 'उपासनादी' त्यादिपदेन क्रत्वादिसङ्ग्रहः। तृतीयामाह —अन्या त्विति ॥ ततः सन्तानवत्याः प्रतीतेरादर-नैरन्तर्य-दीर्घकालासेव- P. 74-13 नलब्धपरिपाकायाः श्रवणद्वारा लब्धनिष्पत्तिर्विगलितनिखिलविकल्प-विशेषण-विशेष्यभावनिर्भासावच्छिन्नविषयप्रत्ययो विकल्पस्तद्रहि-तेत्यर्थः। प्रयोजक(प्रथम)ज्ञानविधिनिराकरणायाऽनन्तरकारिकेत्याह— P. 74-14 तत्रेति ॥

कारिकाविवरणम्

शब्दात्=पदसामर्थ्यात्, अधीतवेदस्य=साङ्गाध्ययनं कृतवतः कार्यं विनाऽपि गृह्यमाणशब्दादेव भवति। हि यस्मात्, कर्मविधिवाक्यार्थो ज्ञानवदित्यर्थः ॥३७॥

अभिप्रायप्रकाशिका

इदानीं वर्तिष्यमाणकाण्डस्य तात्पर्यमाह—तत्प्रतिबोधनायेति ॥ तदनेन सिद्धे वेदान्तानां प्रामाण्ये, तत् किं कार्ये, किं भूत इति विचारप्रवृत्तेः पूर्वोत्तरकाण्डयोर्हेतु-हेतुमल्लक्षणः सम्बन्धो दर्शितो भवति ॥

विधिपरत्वं वेदान्तानां निराचिकीर्षुर्विधेयभेदं तावदाह—तिस्रश्चेति ॥ विकल्पो नाम वैशिष्ट्यनिर्भासः, तद्रहिता। तत्राद्यपक्षनिराकरणायोत्तरग्रन्थ इत्याह—तत्रेति ॥ शाब्द्यां प्रतिपत्तौ विधिं कल्पयता किं तदुत्पत्त्यर्थं स कल्प्यते? उतोत्पन्नाया निश्चयार्थम्? अथवा तात्पर्यार्थम्? उत पुरुषार्थार्थम्? अथवा ब्रह्मणः प्रमाणान्तरयोग्यत्वसिद्ध्यर्थम्? किं वा पदार्थसंसर्गार्थम्? इत्येते

भावशुद्धिः

ब्रह्मसिद्धिविवरणम्

प्रथमा बाह्येन्द्रियनिमित्ताऽपि किं नेत्याह—ब्रह्मणोऽहीति ॥ किमेतावताऽपीति ? अत्राह—तत्रेति ॥ विषयसप्तमी । ब्रह्मविषयमित्यर्थः । प्रतिपत्तित्रयस्य मध्य इत्यर्थः । हेतुमाह—विधिमिति ॥ अत्यन्ताप्राप्तविषये विधिरन्यतः प्राप्ते न युक्त इत्यर्थः । दृष्टान्तं स्फुटयति—यथैवेति ॥ वाक्यार्थबोधः=यागकर्तव्यताधीः, साध्य-साधन-सम्बन्धधीर्वेत्यर्थः । दार्ष्टान्तिकमाह—तथेति ॥ आत्मज्ञानम्, विधेयम्; वैदिकसाधनत्वात्, कर्मवदिति, अत्राह—सतीति ॥ प्रमाणज्ञानस्य प्रत्यक्षादिज्ञानवदविधेयत्वादित्यर्थः । नावश्यं कारणानि कार्यवन्ति भवन्ति; व्यभिचारस्यापि दर्शनात्, अत्राह—न खल्विति ॥ सोपकरणे सेतिकर्तव्ये समग्रे गृह्यमाणविशेषणतया साधकान्तरसहिते साधकतमे सतीत्यर्थः । कुत एवम्? अत्राह—अनिष्टानामिति ॥ दुर्जनवचनश्रवणसमनन्तरमनिष्टानामवबोधात् प्रागेव दूरोत्सारित एवेत्यर्थः ॥

कर्मावबोधवदित्यनेनोत्तरश्लोकः पुनरुक्त स इति, अत्राह—तामेवेति ॥ प्रपञ्चनार्थ इत्यर्थः ॥ ३७ ॥

अभिप्रायप्रकाशिका

षट् पक्षाः क्रमेण निरस्यन्ते । तत्रोत्पत्तौ तावन्न विध्यपेक्षेत्याह—शब्दादिति ॥ प्रत्यक्षादिप्रतिपत्तिपरिहारेण शाब्द्यामेव प्रतिपत्तौ किमिति विधिसम्बन्धाशङ्का निरस्यत इति ? अत आह—ब्रह्मणो हीति ॥

शब्दादिगम्यस्वभावविषयं ज्ञानमिति प्रतिपत्तित्रयस्याविशेषेण विधिसम्बन्धसम्भावना दर्शिता । सम्प्रति शाब्दज्ञानस्य विधिसम्बन्धं निराचष्टे—तत्र यदीति ॥

सत्यपि प्रमाकरणे कदाचिद् ज्ञानोत्पत्त्यदर्शनाद्विध्यपेक्षेति, तत्राह—न खल्विति ॥ कारणपौष्कल्ये कार्यमुत्पद्यत एवेत्यर्थः ॥ प्रागेव विधिरिति ॥ यत्रेच्छापि नापेक्ष्यते, तत्र कथमिष्यमाणसाधनतालक्षणविध्यपेक्षेत्यर्थः ॥३७॥

ब्रह्मसिद्धिकारिका

"स्वर्गकामो यजेते"ति बोधेऽस्मिन्न व्यपेक्ष्यते ।
विधिरन्योऽनवस्थानान्नायं कर्मव्यवस्थितेः ॥ ३८ ॥

भावशुद्धिः

ब्रह्मसिद्धिविवरणम्

कर्मविधिवाक्यस्य विध्यपेक्षितस्यैव कर्मानुष्ठापकत्वाद् विध्यनपेक्षत्वमसिद्धमिति, अत्राह—न कर्मविधीति ॥ विध्यन्तरानपेक्षत्वे हेतु- P. 75-7
माह—अन्यस्मिन्निति ॥ अनवस्थां स्पष्टयति—तदर्थेति । तद्गतानपेक्षत्वे P. 75-8
हेतुमाह—तद्गतस्येति ॥ तद्बोधम्=कर्मबोधमिति यावत् ॥

"अन्यस्मिन्ननवस्थादोषात्" इत्येतदमृष्यमाणश्चोदयति—
नन्विति ॥ कर्मविधिवाक्याध्ययनस्यापि तेनैव विधानाद् । न चात्मा- P. 75-10
श्रयत्वम्; शब्दशब्दवत् सामान्य-विशेषोपाधिभेदादित्यर्थः । तथा
तदर्थबोधे विध्यन्तरोपगमे नानवस्थेति, अत्राह—तद्वदिति ॥ तथा P. 75-11
तत्र विधिरेव न श्रूयत इति, अत्राह—अस्ति चेति ॥ अधिगन्तव्यः=अर्थतोऽवगन्तव्य इति । विधिर्वाक्यान्तरार्थज्ञानम्, स्वार्थज्ञानं च विधत्त इत्यर्थः ॥

अभिप्रायप्रकाशिका

किं धर्मविधिवाक्यार्थज्ञाने या प्रवृत्तिः, तत्रान्यो विधिरपेक्ष्यते, किं वा तद्वाक्यार्थगत एवेति विकल्प्य क्रमेण दूषयति—न कर्मेत्यादिना ॥ अनवस्थानमेवाह—तदर्थेति ॥ तद्गतस्य चेति ॥ कर्मविधिवाक्यगतस्य विधेः कर्मविषयतया कर्मण्येव व्यवस्थितत्वाद् नायं कर्मज्ञानं विधत्त इत्यर्थः ॥

कर्मविधीनां ग्रहणं स्वाध्यायविधेः, तस्य च स्वेन, इति यथाऽनवस्थाभावः, तद्वदिहापि स्यादिति चोदयति—नन्विति ॥ अध्ययनविधिर्हि स्वाध्यायाध्ययनं विदधत् स्ववाक्याध्ययनमपि विधत्ते; स्वस्यापि स्वाध्यायान्तर्गतत्वादित्यर्थः ॥ इह तादृशो विधिरेव नोपपद्यत इति, अत्राह—अस्ति चेति ॥

अध्ययनविधेरतीतस्य प्रवर्तकत्वेऽनवस्थादिदोषः स्यात्, न त्वेतदस्ति,

भावशुद्धिः

P. 75-12 परिहरति—विषम इति ॥ उपन्यस्यत इत्युपन्यासः=दृष्टान्तः । वैषम्यं स्पष्टयति—अप्रवृत्तो हीति ॥ न च तदध्ययननिमित्तम्, नापि वाक्यान्तराध्ययननिमित्तम्, येनात्माश्रयानवस्थे स्याताम्, किन्तु पुरुषान्तराधीतादेव स्वाध्यायाध्ययनविधेस्तस्यान्येषां च वाक्याना-
P. 75-14 मध्ययनमित्यर्थः । उदाहरति—शाखान्तरीयेति ॥ यथा शाखान्तरीय-मङ्गमनधीततद्वाक्यस्त्रैवर्णिकः पुरुषान्तराधीतवाक्यश्रवणमात्रेणावगम्या-नुतिष्ठतीत्यर्थः । स्वाधीतमेव वाक्यं स्वस्य ज्ञानजनकम्, नान्याधीत-
P. 75-15 मिति, अत्राह—न खल्विति ॥ स्वाध्यायविधिवाक्यात् तदर्थज्ञानम्, ततश्च तदध्ययनमितीतरेतराश्रयादित्यर्थः, पुरुषान्तरस्य तदध्ययननिमित्तं
P. 75-16 तदध्ययनमिति स्यादात्माश्रयः ; अत्राह—यथैक इति ॥ प्राप्ता तर्ह्यनवस्थेति, अत्राह—अनादित्वादिति ॥ वेदवत् तदध्ययनाध्येतृपरम्पराया अप्यनादित्वाद् नानवस्थेत्यर्थः । यथा ह्यनधीतवाक्यं पुरुषान्त-रस्थमध्ययनप्रवृत्तिहेतुरस्यान्येषां च वाक्यानाम्, तथा "वेदः कृत्स्नोऽधिगन्तव्यः" इति विधिरवगतार्थः स्व-परार्थवाक्यबोधप्रवृत्तिहेतुरिति, अत्राह—अनवबुद्धार्थस्त्विति ॥ न हि परज्ञाते परः प्रवर्तत इत्यर्थः ।
P. 7-518 अवबुद्धस्तर्ह्यवबोधे प्रवर्तयेदिति, अत्राह—तदर्थबोधश्चेदिति ॥ तस्य विध्यनपेक्षत्वे तथैव वाक्यान्तरार्थावबोधोऽपि स्यात् ; अविशेषा-दित्यर्थः । तदर्थबोधार्थं प्रयतमानस्य तदर्थबोधः स्यादित्यसिद्धमनव-

अभिप्रायप्रकाशिका

इह तु प्रतिपन्नस्यैवावबोधविधेः प्रवर्तकत्वाद् भवत्येवानवस्थादोष इति परिहरति—विषम इति । तत इति ॥ अध्ययनविधिवाक्यादित्यर्थः । अनधीतस्य कथं स्वार्थे प्रवर्तकत्वमिति ? अत आह—शाखान्तरीयेति ॥ लोके गवानयनादि-वाक्यानामनधीतानामपि प्रवर्तकत्वदर्शनादधीतस्यैव प्रवर्तकत्वं न नियन्तुं शक्यमित्याह—न खल्विति ॥ यस्मात् पुरुषाच्छ्रुत्वा यः प्रवर्तते, तस्य कथमध्ययनमिति ? तत्राह—यथैक इति ॥ दार्ष्टान्तिके वैषम्यमाह—अनवबुद्धेति ॥ तर्ह्यवबुद्धार्थः प्रवर्तयति, अत आह—तदर्थबोधश्चेदिति ॥

भावशुद्धिः

बुद्धार्थत्वमिति, अत्राह—इतरेतराश्रयमिति ॥ प्रवृत्ति-तज्ज्ञानयोरितरेतराधीनसिद्धित्वादित्यर्थः। यस्माद् न तत्र स एव प्रवर्तयतीति। उपसंहरति—तस्मादिति ॥ [का] तर्हि "वेदः कृत्स्नोऽधिगन्तव्यः" इत्यस्य विधेर्गतिरिति? अत्राह—न चेति ॥ किं तर्ह्यनेन क्रियत P. 75-19
इति? अत्राह—दृष्टो हीति ॥ अध्ययननियोगस्यार्थधीपर्यन्तत्वात्, P. 75-20
अधीतवेदस्य प्रत्यक्षेऽर्थज्ञानफले सति घृतकुल्यादिफलमशक्यकल्पनम्; 'दृष्टे सत्यदृष्टकल्पनायोगात्' इति न्यायसिद्धार्थप्रदर्शनमित्यर्थः। यदुक्तम्—न्यायप्राप्तोऽर्थः प्रदर्श्यत इति, तदेव व्यतिरेकमुखेन P. 75-21
द्रढयति—अथापीति ॥ विधित्वेऽपि स्वाध्यायाध्ययनविधिनाऽर्थाक्षिप्तमर्थज्ञानम्, उच्यते=अनूद्यते, इत्यनिच्छताऽप्यभ्युपेयम्, अनभ्युपगमे हीतरवेदवाक्यवद् "वेदः कृत्स्नोऽधिगन्तव्यः" इत्येतदप्यविवक्षितार्थम्, तथा तदधीनमर्थावधारणं वेदराशेरप्रमाणकं स्यादिति बलात्—"दृष्टो हि तस्यार्थः कर्मावबोधनम्" इति न्याय एव प्रमाणमास्थातव्यम्। तथा सति तत्सिद्ध एवार्थः; "वेदः कृत्स्नोऽधिगन्तव्यः" इत्यस्य वाक्यस्य सामर्थ्यादित्यर्थः ॥

केचित्तु पठन्ति—तत्रायमर्थः। अर्थज्ञानं नानूद्यते, "वेदः कृत्स्नोऽधिगन्तव्यः" इत्ययं विधिरेव, इति—न्यायप्राप्तार्थप्रदर्शनपरत्वे (ना) विधित्वेऽपि 'सदेव सोम्य' इत्यादिवाक्यार्थज्ञानेनापरो विधिरेष्टव्य

अभिप्रायप्रकाशिका

स एव विधिरवबुद्धार्थः प्रवर्तयत्विति, अत आह—इतरेतराश्रयमिति ॥ विध्यन्तरापेक्षया च तदर्थप्रतिपत्तावनवस्थेत्याह—तस्मादिति ॥

श्रूयमाणस्य विधेः कथं तर्केण निराकरणमिति? अत आह—न च वेद इति ॥ साङ्गाध्ययनान्वय-व्यतिरेकानुविधायित्वमर्थज्ञानस्य प्राप्तमनेनानूद्यत इत्यर्थः। विधित्वमङ्गीकृत्य परिहरति—अथापीति ॥ कथं विधित्वमध्ययनविधिसिद्धार्थानुवादिन इति मन्वानं प्रत्याह—स्वाध्यायेति ॥ अध्ययनविधिरध्ययनफलवत्त्वसिद्धयेऽर्थज्ञानमाक्षिपति, न तु विधत्ते, अधिगन्तव्यविधिस्तु साक्षादर्थज्ञानं विधत्ते, ततो नानुवाद इत्यर्थः। शाब्दज्ञाने किमधिगन्तव्यविधिरपेक्ष्यते, किं वा विध्यन्तरमिति विकल्प्याद्यपक्षे न विरोध

ब्रह्मसिद्धिकारिका

फलं विधेयावगमात् प्रवृत्तिश्चोत्तरा विधेः ।
अन्योन्यसंश्रयान्नैष शाब्दो बोधः स नो परः ॥ ३९ ॥

---

भावशुद्धिः

P. 75-23 इत्याह—तथापीति ॥ सामान्यविधिरे(नै)व सिद्धत्वात् । अत्र दृष्टान्त-
P. 75-24 माह—कर्मेति ॥ दृष्टान्तं स्पष्टयति—यथैवेति ॥ न हि "वेदः कृत्स्नो-
ऽधिगन्तव्यः" इति विहिते, कर्म ज्ञातव्यमिति विध्यन्तरमपेक्ष्यत
इत्यर्थः । हेतुमाह—अनवस्थानादिति ॥ विहितस्य विध्यन्तरापेक्षायामन-
P. 75-25 वस्थां स्पष्टयति —सत्यपीति ॥ विध्यन्तरविहितस्यापि ज्ञानस्य विध्य-
न्तरापेक्षणादित्यर्थः । "स्वर्गकामो यजेत" इत्ययमेव विधिरेतदर्थज्ञाने,
इति ज्ञा(ना)नवस्थेति, अत्राह—न चेति ॥ यथा सामान्यविधिनैव विहिते
P. 76- 1 कर्मज्ञाने विध्यन्तरानपेक्षा, एवं ब्रह्मज्ञानेऽपीत्याह—एवमिति ॥ ३८ ॥
"आत्मा ज्ञातव्यः" इत्यनेन शाब्दज्ञानस्याविधेयत्वे हेत्वन्तर-
P. 76-3 माह—इतश्चेति ॥

कारिकाविवरणम्

विधेयावगमाद्=विधिविषययाग-दानादिज्ञानात् ।
तत्र यागादौ या प्रवृत्तिः, सा यागादिनियोगफलम् ।
विधेयावगमादुत्तरा प्रवृत्तिर्विधेः फलमित्यन्वयः। किमतः?
P. 6- 5 अत्राह—अन्योन्येति ॥ शाब्दो बोधः=शब्दसामर्थ्य-

अभिप्रायप्रकाशिका

इत्याह—तथापीति ॥ सामान्यविधिना=अधिगन्तव्यविधिनेति यावत् । कर्मवाक्यार्थज्ञाने सत्यप्यधिगमने विधौ विध्यन्तरापेक्षायामनवस्थामाह—अनवस्थानादिति ॥ तामेवानवस्थामाह—सत्यपीति ॥ दार्ष्टान्तिकमाह—एवमिति ॥ स्वर्गकामादिवाक्यबोधे नाधिगमनविधेरन्यो विधिरपेक्ष्यते ; अनवस्थानात् , नापि यागविधिः ; कर्मविषयत्वात् । एवं तत्त्वप्रतिपत्तावपि न विधिरपेक्षणीय इति श्लोकयोजना चात्र द्रष्टव्या ॥ ३८ ॥

इतरेतराश्रयाच्च न शब्दज्ञानं विधेयमित्याह—इतश्चेति ॥ उपलक्षणं चैतदित्याह—शब्दार्थेति ॥

तत्त्वशुद्धिः

कारिकाविवरणम्

प्रभवात्मज्ञानं न विधिफलम्; वाक्यादवबोधे जाते प्रवृत्तिः, प्रवृत्तस्य च बोध इत्यन्योन्याश्रयात्। किञ्च स बोधो विधेयावगमाद् नो खलु परः, किन्तु स एव। अतोऽपि न विधिफलमित्यर्थः ॥ ३९ ॥

ब्रह्मसिद्धिविवरणम्

प्रवृत्तिर्विधेः फलमित्ययुक्तम्; स्वर्गादेस्तद्ध(त्फ)लत्वादित्या P. 76-6
शङ्क्य व्याचष्टे—शब्दादिति ॥ अनुष्ठानं विधिफलम्=स्वर्गादिरनुष्ठानफलमित्यर्थः। यागः कार्यं इति विधेयावगम एव तत्फलमस्तु; संनिधानादिति, अत्राह—न त्विति॥ अन्योन्याश्रयं विशदयति—अवगत इति ॥ ज्ञानस्य विधिबलात् प्रवृत्तस्य शब्दादुत्पत्तेः शब्दसामर्थ्यमात्रकृतत्वे विधिफलत्वासिद्धेरित्यर्थः। शाब्दज्ञानस्य विधेयत्वे स्वाश्रयत्वं स्यादित्याह—शब्दार्थेति ॥ विधिबलाच्चेच्छब्दात् स्वार्थबोधः, शब्दात् P. 76-8
स्वार्थबोधे जाते विधिना स एव बोधः कार्यत इत्यात्माश्रय इत्यर्थः। तर्हीतरेतराश्रयः कथमुक्तः? अत्राह—अन्योन्यसंश्रय इति। शब्दादर्थज्ञानं विना न प्रवृत्तिः, प्रवृत्तिं विना न शब्दादर्थज्ञानमपि; तुल्यानुपपत्तित्वादित्यर्थः। तत्त्वमादिवाक्यादुपजायमानबोधस्य शाब्दमानबोधत्वादुत्तरकालत्वान्नेतरेतराश्रय इति, तत्राह—यस्त्विति। तस्मादि- P. 76-9
तरेतरात्माश्रयौ स्यातामेवेत्यर्थः ॥ ३९ ॥

वेदान्तशब्दसामार्थ्यादुत्पन्ने ज्ञाने विधिना पुमान् प्रवर्तते, अनुत्पन्ने वा। नाद्य इत्याह—अपि चेति ॥ P. 76-11

अभिप्रायप्रकाशिका

चतुर्थपादं व्याचष्टे—यस्त्विति ॥ शब्दार्थबोधोत्तरकालीनस्य विधेयत्वात तत्त्वावबोधकवाक्यादुत्पादनस्य तदुत्तरकालीनस्याभावाद् न विधेयत्वमित्यर्थः ॥ ३९ ॥

ज्ञाने जाते, अजाते च विधिकृत्याभावान्न विधिरित्याह—अपि चेति ॥ सुतरामिति ॥ सत्यपि शब्दादवबोधे यत्र न प्रवृत्तिः, तत्र तस्याभावे कारणस्यैवाभावात् प्रवृत्तिर्न भवेदिति किं वक्तव्यमित्यर्थः ॥

ब्रह्मसिद्धिकारिका

जाते बोधे न प्रवर्त्यो नतरां खल्वबोधके ।
शब्देन निश्चये तस्मादन्यस्मादन्यवाञ्छनम् ॥ ४० ॥

तत्त्वशुद्धिः

कारिकाविवरणम्

द्वितीयं दूषयति—नतरामिति । शब्दसामर्थ्यकृतज्ञानस्य निश्चयफलत्वात्(तद)र्थः प्रवर्तत इत्याह—शब्देनेति ॥ तत एव निश्चयसिद्धेर्विधिवैयर्थ्यमिति शेषः । मानान्तरात् तन्निश्चयेऽप्याह—अन्यस्मादिति ॥ अन्यवाञ्छनम्=कार्यम् । न विधिरेष्टव्य इत्यर्थः ॥ ४० ॥

ब्रह्मसिद्धिविवरणम्

विधितः प्रवृत्तस्य ज्ञानोत्पादाद् जाते बोध इत्याद्ययुक्तमित्या-
P. 76-14 शङ्क्याह—उदपादि चेदिति ॥ हेतुमाह—पदानामिति ॥ लोके शब्दा-
P. 76-15 नामन्वितमात्रधीजनने सामर्थ्यनिश्चयादित्यर्थः । दूषयति—किम-
P. 76-16 न्यदिति ॥ वैयर्थ्यं विशदयति—न प्रवृत्त इति ॥ प्रागेव विधेः शब्दसाम-
र्थ्यादेव ज्ञाने प्रवृत्तः पुमानित्यर्थः । पुर(न)ः स्वाशयमाविष्करोति—
P. 76-17 अथवेति ॥ पदार्थसमन्वयः=पदानां पदार्थसमन्वयः, तन्मात्रादित्यर्थः ।
दूषयति—सुतरामिति ॥ तत्रार्थमाह—शाब्दस्येति ॥ पूर्वत्र विधिवैयर्थ्यमा-
त्रम्, अत्र तु शाब्दधियोऽसम्भव एव; शब्दस्य तदसामर्थ्यादित्यर्थः ॥
शब्दसामर्थ्यमात्रजनितज्ञानस्य निश्चयफलत्वान्निश्चयफलार्थं
P. 76-18 तस्य विधेयत्वमित्याशङ्कते—स्यादेतदिति ॥ निश्चयमभिनयति—एव-
P. 76-19 मिति ॥ दूषयति—तन्नेति ॥ निश्चयोऽपि ज्ञानद्वारकः शब्दादेव स्यात्,
P. 76-20 मानान्तराद्वा । आद्यं प्रत्याह—यदीति ॥ द्वितीयं शङ्कते—अथेति ॥
उत्तरमाह—अन्यवाञ्छनमिति ॥ तद् विवृणोति—प्रमाणान्तरेऽपीति ॥ तथापि
विधिर्व्यर्थः; मानान्तरादेव निश्चयोत्पत्तेरित्यर्थः । दोषान्तरमाह—
P. 76-21 तत्रेति ॥ शब्दस्य सापेक्षत्वात् स्वतः प्रामाण्यहानिरित्यर्थः । फलितं
निगमयति—एवं तावदिति ॥ ४० ॥

अभिप्रायप्रकाशिका

तर्हि मा भूदुत्पत्त्यर्थम्, उत्पन्नस्य ज्ञानस्य विनिश्चयार्थो विधिरिति शङ्कते—स्यादेतदिति ॥ निश्चयमभिनयेनाह—एवमेवेदमिति ॥ यस्मात् शब्दात् ज्ञानं जायते, तस्मादेव निश्चयः, किमन्यस्मादिति विकल्प्य, क्रमेण दूषयति—तन्नेति ॥ अन्यवाञ्छनमित्येतद् व्याचष्टे—प्रमाणान्तरेति ॥ तत्र दोषमाह—तत्रेति ॥ सापेक्षत्वलक्षण(म)प्रामाण्यं स्यादित्यर्थः ॥ ४० ॥

ब्रह्मसिद्धिकारिका

अथाविवक्षितार्थत्वनिवृत्त्यै प्रार्थ्यते विधिः ।
अर्थो ज्ञातव्य इत्युक्ते ज्ञेयः स्यान्नाविवक्षितः ॥४१॥

तत्त्वशुद्धिः

कारिकाविवरणम्

भूतार्थवाक्यस्य वैयर्थ्याद् वेदान्तानां वैयर्थ्यपरिहाराय विधिपरत्वमिति शङ्कते—अथेति ॥ ज्ञाननियो- P. 76-22
गेऽपि तुल्यं वैयर्थ्यमित्याह—अर्थ इति ॥ ४१ ॥ P. 76-23

ब्रह्मसिद्धिविवरणम्

ज्ञानस्योत्पत्त्यर्थम्, निश्चयार्थं वा मा भूद् विधिः, शब्दस्यार्थ-
परत्वार्थं विधिरेष्टव्य इति शङ्कामनुवदति—यदपीति ॥ उपप्लवः=अप्रा- P. 77- 1
माण्यज्ञानम् । अत्र हेतुमाह—भूतार्थेति ॥ वाचकः शब्दो न वाच्य- P. 77- 2
मन्तरेणेति वैयर्थ्यानुपपत्तिः, अत्राह—सांशयिकत्वं वेति ॥ तत्रापि हेतुमाह—अतात्पर्यस्यापीति ॥ अविद्यमानार्थतात्पर्यस्यापि दर्शनाद् जपमन्त्रेषु । स्वरूपपराः खल्वमी बहुलमुपलभ्यन्ते जपमन्त्रा इति मन्त्राधिकरणपूर्वपक्षाभिप्रायः; तत्र—'उरु प्रथस्व' इत्यादिमन्त्राणामुच्चारणमात्रोपयोग इत्युक्तत्वात् । ननु—वेदान्तेषु स्वरूपपरत्वम्, उत स्वार्थपरत्वमिति विशये स्वरूपपरत्वमेव; प्राथम्यात्, न पुनर्ज-
घन्यार्थपरत्वमपीति शङ्का विधावपि तुल्येति, अत्राह—विधौ त्विति ॥ P. 77- 4
पूर्वपक्षं निगमयति—तस्मादिति ॥ ४१ ॥

कारिकाविवरणम्

निराकरोति—तद्वार्तमिति ॥ अर्थपरतौत्सर्गिकी; यत P. 77- 5
इत्यन्वयः । मन्त्राधिकरणसिद्धान्तन्यायेनेत्याह—अविशिष्टस्त्विति ॥ अविशिष्टस्तु=लोके प्रयुज्यमानानां

अभिप्रायप्रकाशिका

अर्थोपप्लवे=अर्थसंस्पर्शे, अर्थज्ञान इति यावत् । भूतार्थेति ॥ अङ्गुल्यग्रादिवाक्यानां वैयर्थ्यदर्शनादित्यर्थः । 'पुत्रस्ते जातः' इत्यादौ सार्थकत्वमपि दृश्यत इति, अत आह—सांशयिकत्वं वेति ॥ अत्र हेतुः—अतात्पर्यस्येति । -फडादिशब्दानां जपे विनियुक्तानामर्थान्त(रप)रत्वादर्शनादित्यर्थः ॥ ४१ ॥

ब्रह्मसिद्धिकारिका

तद्वार्तमर्थपरता शब्दानां लोक-वेदयोः ।
"अविशिष्टस्तु वाक्यार्थः" इत्युत्सर्गवती यतः ॥ ४२ ॥

---

तत्त्वशुद्धिः

कारिकाविवरणम्

वेदे च पदानामर्थः-यथैव लोके विवक्षितः, तथैव वेदे भवितुमर्हतीत्यर्थः ॥ ४२ ॥

शब्दानामर्थपरतौत्सर्गिकीत्युक्त(मयु)क्तम्; जरद्गवादिवाक्यस्याविवक्षितार्थस्य, हुं-फडादिपदस्य स्वरूपप्रधानस्य च दर्शनादित्याशङ्क्य व्याकरोति—औत्सर्गिक इति ॥ अर्थप्रतिपादनपरत्वं स्वाभाविकम्, न विधिकृतम्; लोके श्रुतार्थप्रतिपादनपरत्वाभावः प्रत्यक्षादिविरोधनिबन्धन इत्यर्थः । दार्ष्टान्तिकमाह—तथेति ॥ वेदान्तेष्वप्यसत्यपवादे नार्थपरतौत्सर्गिकी प्राथम्यमात्रेणाक्षराणां शक्याऽपवदितुमित्यर्थः । लोके शब्दानामर्थशेषत्वे, वैदिकशब्दानां तथात्वं कुतस्त्यमिति ? अत्राह—लोकावगम्यत्वादिति ॥ शब्दशक्तेर्वृद्धव्यवहारावसेयत्वादित्यर्थः । अत्र जैमिनिवचनं प्रमाणयति—तदुक्तमिति ॥ ४२ ॥

P. 77- 7 / P. 77- 8

कारिकाविवरणम्

वेदान्तानामर्थपरत्वं न प्रतिपत्तिकार्यकृतमित्यत्र हेत्वन्तरमाह—दृष्टार्थतेति ॥ अत्र ब्रह्मकाण्डे(ण्डं)कर्मकाण्डे(ण्डं) च न भिद्यते, अतोऽध्ययनविधिनाऽधीयमानवाक्यार्थज्ञानफलेन वेदान्तानामप्यर्थपरत्वमापादितम् । तर्ह्य-

अभिप्रायप्रकाशिका

दूषयति—तद्वार्तमिति ॥ क्वचिद्वैयर्थ्यमपि दृश्यते, सत्यम्, असावपवाद इत्याह—निमित्तान्तरादिति ॥ स्वरूपप्रधानत्वमेव दर्शयति —अविवक्षितार्थत्वमिति ॥ ४२ ॥

ब्रह्मसिद्धिकारिका

दृष्टार्थता च स्वाध्यायविधेरत्र न भिद्यते ।
भवेदितरथा कृत्स्नः स विध्यर्थोऽविवक्षितः ॥ ४३ ॥

तत्त्वशुद्धिः

ध्ययनविधिनियोगाधीनं वैदिकशब्दानामर्थशेषत्वम्, न त्वौत्सर्गिकमिति, अत्राह—इतरथेति ॥ अध्ययनविधेरर्थधीफलत्वम(त्वा)ङ्गीकारमात्रम्, स्वाभाविकमेव शब्दस्य(स्या)र्थशेषत्वम्; इतरथा कृत्स्नः, सविध्यर्थोऽध्ययनविध्यर्थसहितोऽविवक्षितो भवेत्, विध्यन्तराभावेन विधेरविवक्षितार्थत्वम्=तदधीनार्थतात्पर्याणामविवक्षितार्थत्वं स्यात् । अतोऽर्थपरत्वं नौत्सर्गिकमित्यर्थः ॥ ४३ ॥

ब्रह्मसिद्धिविवरणम्

वेदान्ताः, श्रुतार्थशेषाः, अध्ययनविधिप्रयुक्ताध्ययनत्वात्; P. 77-12
कर्मविधिवाक्यवदित्यभिप्रेत्याह—यथैवेति ॥ कर्मविधीनामध्ययनात् फलान्तरकल्पना कर्मावबोधातिरिक्तघृतकुल्यादिफलकल्पना नास्ति । तस्य=आम्नायस्य, अर्थः=फलम्; कर्मावबोधनम्—दृष्टो हि यस्मादिति न्यायेन स्वार्थधीफलानामित्यर्थः ॥

अविवक्षितार्थानामिति फलान्तरकल्पनं विनाऽनुवादस्तदसिद्धिप्रदर्शनार्थः, तद्वद्वेदान्तानां विधिं विनैव स्वार्थपरत्वमित्याह
—तथेति ॥ सिद्धवस्तुज्ञाने प्रयोजनाभावाद् न कर्मविधिवाक्यतुल्यत्वं P. 77-13
वेदान्तानामिति, अत्राह—न चेति ॥ प्रतिपत्तिविधौ तुल्यम् । "यदि P. 77-14
सैव प्रयोजनमि"त्यत्र वक्ष्यत इत्यर्थः ॥

अभिप्रायप्रकाशिका

अध्ययनविधेर्दृष्टार्थत्वस्य कर्म-ब्रह्मकाण्डयोस्तुल्यत्वाद् न विध्यन्तरबलादिह विवक्षितार्थतेत्याह—दृष्टार्थतेति ॥ विध्यन्तरापेक्षया विवक्षितार्थत्वे दोषमाह—भवेदिति ॥ यथैवेति ॥ अध्ययनविधेः कर्मवाक्येषु दृष्टार्थतया विवक्षि-

तत्त्वशुद्धिः

कारिकाविवरणम्

P. 77-19 इदानीं ज्ञानस्य पुरुषार्थसाधनत्वसिद्ध्यर्थं विधिरेष्टव्य इति शङ्कते—ज्ञानस्येति ॥ हेतुमाह—

वेदस्य स्वाभाविकमर्थपरत्वमुक्तं साधयति—अवश्यं चेति ॥ 'अवश्यं'

P. 77-15 शब्दसूचितव्यतिरेके दण्डमाह—अन्यथेति ॥ विधायकेन 'स्वाध्यायोऽध्येतव्यः' 'इत्यनेन,' वेदः कृत्स्नोऽधिगन्तव्यः' इत्यनेन वा सहेत्यर्थः ।

P. 77-16 हेतुमाह—यत इति ॥ एतावताऽपि किमिति ? अत्राह—विधायकस्येति ॥ न विध्यन्तरनिबन्धनं विवक्षितार्थत्वम् ; अनवस्थानादित्यर्थः ।

P. 77-17 विधायकत्वा(स्या)विवक्षितार्थत्वे फलितमाह—एवं चेति ॥ विधायकाधीनत्वात् तदर्थविवक्षाया इत्यर्थः । विधायकस्य स्वत एवार्थपरत्वाद् न

P. 77-18 कश्चिद् दोष इत्याशङ्कते—अथेति ॥ दृष्टार्थत्वेन, प्रत्यक्षसिद्धार्थज्ञानफलत्वेन वेत्यर्थः । तर्हि वाक्यान्तराणामपि स्वत एवार्थपरत्वम् ; अविशेषादित्याह—इतरेऽपीति ॥ शब्दा इति शेषः ॥ ४३ ॥

अभिप्रायप्रकाशिका

तार्थत्ववद् वेदान्तानामप्यर्थज्ञानस्य विद्यमानतया विवक्षितार्थत्वं तुल्यमित्यर्थः ॥

कर्मविधीनामपि विवक्षितार्थानामध्ययनाद् यथा न फलान्तरकल्पना, "दृष्टो हि तस्यार्थः कर्मावबोधनम्" इति न्यायेन विवक्षितार्थत्वादेव तेषाम्, तथा वेदान्तानामध्ययनाद् न फलान्तरकल्पना ; आत्मतत्त्वावबोधस्य दृष्टप्रयोजनरूपस्य विद्यमानत्वादिति योजना । अनुष्ठेयार्थज्ञानस्य पुरुषार्थोपयोगितायां तत्रोपपद्यते विवक्षितार्थत्वम्, इह तु न तथेति, अत आह—न चेति ॥ प्रतिपत्तिविधौ चेति ॥ तुल्यम्='यदि तस्यैव प्रयोजनम्' इत्यत्र प्रतिपत्तिविधौ च तुल्यं वैयर्थ्यं वक्ष्यत इत्यन्वयः । किं प्रयोजनसिद्धये वेदान्तानां प्रतिपत्तिपरत्वम्, उत प्रवृत्तिसाध्यप्रयोजनार्थम् । तत्राद्ये विधिर्व्यर्थः ; तमन्तरेणापि प्रयोजनसम्भवात् । नापि द्वितीयः; प्रतिपत्तिविधिस्वीकारेऽपि प्रवृत्तेरसम्भवात् साध्यप्रयोजनाभावसाम्यादित्यर्थः ॥

उत्तरार्धं व्याचष्टे—अवश्यं चैतदिति ॥ कृत्स्नवेदस्येति शेषः । तत्र हेतुमाह—यत इति ॥ फलितमाह—एवं चेति ॥ प्रकृत्या=स्वभावेन; विध्यन्तरं विनेति यावत् । अर्थज्ञानजनकत्वस्यान्वय-व्यतिरेकसिद्धत्वाच्चेत्याह—दृष्टार्थत्वेन चेति ॥ ४३ ॥

ब्रह्मसिद्धिकारिका

**ज्ञानस्य पुरुषार्थत्वसिद्धये विधिरिष्यते ।**
**सर्वत्र पुरुषार्थत्वं विधेरित्यप्यपेशलम् ॥ ४४ ॥**

---

तत्त्वशुद्धिः

वेदार्थ(स्ये)इति शेषः । निराकरोति—इत्यपीति ॥ ४४ ॥

ब्रह्मसिद्धिविवरणम्

साध्यनिष्पादनसामर्थ्यं स्वाभाविकं साधनस्य, न विध्यधीनमिति, P. 77-20
अत्राह—विध्यधीन इति ॥ विधेरपेक्षितोपायतारूपत्वात् तदुपगृहीतसीम्न एव पुरुषार्थसाधनताधीरित्यर्थः । प्रदर्शितन्यायस्य प्रकृतोपयोगमाह—तच्छब्दत इति ॥ तच्छब्दस्तस्मादर्थे । यदि खल्वात्मज्ञानं न विधीयेत, वेदान्तैरुपजनितमपि पुरुषार्थसाधनमिति नावगम्येत, विधौ तु P. 77-21
तद्धीरित्यर्थः ॥ ४४ ॥

दूषयति—एतदपीति ॥ हेतुमाह—ज्ञेयेति ॥ ज्ञानस्य विधेयत्व-
वादिना कर्मवत् कालान्तरफलत्वमिष्टमिति, अत्राह—ज्ञानस्य हीति ॥ P. 78- 1
ज्ञानस्य ह्यात्मव्यापारस्य फलं प्राकट्यमर्थस्य । तच्च वेदान्तलब्धजन्मनो ज्ञानादेव सिध्यति, इति किमत्र विधिनेत्यर्थः । प्राकट्यमर्थजन्म(धर्म)श्चेत्, सर्वत्र प्रतिपत्तॄणां साधारणः स्यात् शौक्ल्यादिवदिति, अत्राह—ज्ञातारं प्रतीति ॥ यदि ज्ञानक्रियया योऽर्थो व्याप्यते, तं प्रत्येवासौ प्रकटः, नान्यं प्रति, यथा यदपेक्षाबुद्धिजन्यं यद्वित्वं (द्वित्वम्,) तत्तस्यैव प्रत्यक्षमित्यर्थः ॥

फलस्येष्टलक्षणत्वान्निरतिशयसुखरूपो मोक्षो ज्ञानस्य फलम्,
अतस्तत्साधनत्वसिद्धये ज्ञाने विधिरिति चोदयति—स्यादेतदिति ॥ P. 78- 2
दूषयति—तन्नेति ॥ कुतोऽसाध्यत्वम् ? अत्राह—न हेत्विति ॥ वन्ध्या- P. 78- 3

अभिप्रायप्रकाशिका

पुमर्थसाधनत्वस्य विध्यधीनत्वात् तदर्थो विधिरिति शङ्कामुत्थाप्य परिहरति—ज्ञानस्येति ॥ ४४ ॥

ज्ञानस्य ज्ञेयनिश्चयफलत्वात्, निश्चयस्य च ज्ञानोत्पत्तिमात्रत्वात् सिद्धेर्न विध्यपेक्षेत्याह—ज्ञेयाभिव्याप्तित इति ॥ अभिव्याप्तिमेवाह—ज्ञातारमिति ॥

तत्त्वशुद्धिः

त्व-जननीत्वयोरिव मोक्षत्व-कार्यत्वयोर्विरोध इति, अत्राह—
P. 78- 4 कार्यत्व इति ॥ तथापि को विरोध इति? अत आह—आत्यन्तिकीति ॥

विनाशे साध्ये कार्यत्वमनैकान्तिकम्; कार्यस्यापि प्रध्वंसस्य
P. 78- 5 नित्यत्वादिति चोदयति—नन्विति ॥ भावत्वेन विशेषणाद् न
P. 78- 6 व्यभिचार इत्याह—सत्यमिति ॥ अभावरूपमेव मोक्षमास्थिषत पैठरकाः।
P. 78- 7 यथाहुः—"तदत्यन्तविमोक्षोऽपवर्गः" इति, अत्राह—आगामीति ॥

देहादिवियोगमात्रस्यापवर्गत्वे सर्वेषामेवोपात्तदेहादिं त्यजतां तत्प्रसङ्गादात्यन्तिकस्तद्वियोगः सः, इदं च तदात्यन्तिकत्वं यद् देहादीनामागामिनामप्रादुर्भावः, सर्वेषां प्रागभावो न कार्यः, तत् कुतोऽनैयोगिकत्वमित्यर्थः। बु(ब)न्धहेतुनिवृत्तिरेव मोक्षः; मुचेर्बन्धनविमोक्षार्थत्वात्। न चास्य कार्यत्वेऽविनाशः; भावरूपत्वाभावात्। न च स वासनाविद्यामूलघातं निहत(ना)भवितुमर्हति; हेत्वभावादित्या-
P. 78- 8 शङ्क्याह—बन्धहेत्विति ॥ अयं बन्धहेतुः-शब्दे तत्त्वज्ञानेऽनुवर्तमानस्त-

अभिप्रायप्रकाशिका

यस्यापेक्षाबुद्ध्या द्वित्वं घटादौ जायते, तत् तस्यैव यथा प्रकाशते, नान्यस्य; तथा यज्ज्ञानक्रियया योऽर्थोऽभिव्याप्यते, तं प्रत्येवासौ प्रकटो भवति, न पुनरन्यमपि प्रतीति भावः ॥

तत्त्वच्युतेरिति ॥ मोक्षस्य तत्स्वभावताहानिप्रसङ्गादित्यर्थः। तथापि कथं स्वभावहानिरिति? अत आह—आत्यन्तिकीति ॥

एकदेशिनां मुक्तिमाह—निरतिशयैश्वर्येति ॥ 'आत्यन्तिकी च संसारनिवृत्तिः' इति ॥ कथं तर्ह्यभावरूपमुक्तमिति न शङ्कनीयम्; भावरूपेऽपि मोक्षेऽप्यात्यन्तिकसंसारनिवृत्तेर्भावात्। तत्रापि मोक्षत्वोपचारान्न पूर्वापरविरोध इति भावः। यद्यात्यन्तिकसंसारनिवृत्तिर्भावरूपेऽपि मोक्षेऽस्ति, सैव तर्हि ज्ञानसाध्याऽस्त्विति चेत्, मैवम्; वर्तमानशरीरेन्द्रियादिसम्बन्धनिवृत्तेः सर्वप्राणिनामवश्यम्भावितया प्रयत्नसाध्यत्वाभावात् ॥

अथाऽऽगामिशरीरेन्द्रियादिसम्बन्धनिवृत्तिः, तद्धेतुनिवृत्तिर्वा मुक्तिः, तत्रापि न तावदाद्यः साध्य इत्याह—आगामीति ॥ द्वितीयं दूषयति—

ब्रह्मसिद्धिकारिका

ज्ञेयाभिव्यासितो यस्मान्न विज्ञानात् फलान्तरम् ।
इष्यते मोक्ष इति चेत् साध्यस्तत्त्वच्युतेर्न सः ॥ ४५॥

भावशुद्धिः

त्वतोऽपि सांसारिकधर्म(ब)न्धदर्शनात् कथं स्वोच्छेदात्मकत्वं तत्त्वज्ञानस्यावहतीति ? अत्राह—अविद्या हीति ॥ असन्दिग्धापरोक्षे(क्ष)फल- P. 78-10
तत्त्वज्ञानोदयमात्रसाध्या सैवेत्युपचर्यते ; कार्यत्वे सति नाशप्रसङ्गात् । मोक्षच्युतेर्न मोक्षः फलमिति व्याख्यातम् ॥

सम्प्रति तत्त्वच्युतेरित्यन्यथा व्याचष्टे—अथवेति ॥ उपसम्पद्य=आ- P. 78-12
त्मत्वेन निश्चित्येति यावत् । आत्मनो निर्विशेष-निरतिशयानन्दाद्वयरूपेणावस्थानेऽपि मुक्तौ कार्यत्वं किं न स्यादिति ? अत्राह—साध्यत्वे चेति ॥ P. 78-13
स्वरूपस्यासाध्यत्वादित्यर्थः । अतः = अस्मात् = स्वरूपावस्थानादिति यावत् । मोक्षः, विनाशी, भावकार्यत्वात्, कुम्भवदित्याशङ्क्याऽऽगम-
विरुद्धकालात्ययापदिष्टत्वमित्याह—यत्त्विति ॥ P. 78-14

अनन्यथासिद्धं हि मानान्तरमनुमानं बाधते, न पुनरन्यथा-
सिद्धमपि; इतरथा ज्वालादेरपि स्थैर्यप्रसङ्गादिति निराह—दृष्टविपरीत- P. 78-15
मिति ॥ अपुनरावृत्तिरन्यथाऽसिद्धैवेति, अत्राह—यदा त्विति ॥ अर्थ- P. 78-16
वादत्वेन ज्ञानस्तुतिपरत्वात्, अन्यपरस्यापि वाक्यस्य मानान्तर- P. 78-18
विरोधे स्वार्थे प्रामाण्यानुपपत्तिरित्यर्थः ॥

अन्यपरत्वं साधयति—तथाहीति । सिद्धव्यपदेशादपि स्वर्गा-

अभिप्रायप्रकाशिका

बन्धेति ॥ अपृथक्त्वमेव साधयति—अविद्या हीति ॥ 'तत्त्वच्युतेरि'त्यस्य व्याख्यान्तरमाह—अथवेति ॥ 'कार्यत्वादि'त्याद्यनुमानं श्रुतिविरुद्धतया कालात्ययापदिष्टमिति शङ्कामुत्थाप्य दूषयति—यत्त्वित्यादिना ॥ प्रमाणान्तराविरोधेन श्रुतेरर्थवत्त्वोपपत्तौ न तद्विरोधेनार्थः कल्पनीय इति भावः । न चानन्यगतित्वम्; अर्थवादत्वोपपत्तेरित्याह—यदा त्विति ॥ विदितात्मतत्त्वस्येति ॥ श्रवण-मननवशात् ॥ पश्यत इति ॥ साक्षात्कारवतः । अनवयवेन = निरवशेषेणेति यावत् ॥

अर्थवादत्वमेव साधयति—तथाहीति ॥ स्वर्गादिफलवैलक्षण्यमाह—

ब्रह्मसिद्धिकारिका

विधेर्विना कार्यशून्यं भूतार्थमनुवादकम् ।
वचः स्यादनुवादश्च प्रमाणान्तरगोचरे ॥ ४६ ॥

---

भावशुद्धिः

दे(दि)वत् साध्यत्वं गम्यत इति, अत्राह—न चेति ॥ अपुनरावृत्तिकाम इति ॥ 'पशुकामः' 'स्वर्गकाम' इतिवत् कामोपबन्धाभावात् । वाक्यस्यापुन-
P. 78-19 रावृत्तिपरत्वाभावे फलितमाह—तस्मादिति ॥ कामोपबन्धाभावे फलित-माह—तस्मादिति ॥ कामोपबन्धाभावेऽपि यथा वर्तमानापदेशादेव "प्रतितिष्ठन्ति" इति रात्रिसत्रे प्रतिष्ठाफलकल्पना, तथाऽत्रापि स्यादिति, अत्राह—अर्थवादादिति ॥ यथा हि पुरुषापेक्षितदृष्टफलनिराकाङ्क्षेऽध्ययने नाऽऽर्थवादिकफलकल्पना, एवमत्रापि, सत्रे पुनरलब्धपुरुषसमीहितस्य विधेरस्त्याकाङ्क्षाऽपि । न हि पिण्डपितृयज्ञादिवत् स्वर्गफलकल्पना ; तथा सत्यर्थवादस्यात्यन्तपरोक्षवृत्तितापादादित्यर्थः । सिद्धवस्तुधीरपु-
P. 78-21 मर्थ इति पुमर्थत्वाद् नियोगाङ्गीकार इति, अत्राह—पुरुषार्थतेति ॥४५॥

वाक्यजनितज्ञानप्रामाण्याय विधिराश्रयितव्य इति मतान्तर-
P. 78-22 माह—अन्य इति ॥

कारिकाविवरणम्

विधेर्विना = विधायकलिङादिप्रत्ययमन्तरेण, कार्यशून्यम्=नियोगधीरहितम् ॥ लोके भूतार्थवचसा-मनुवादत्वदर्शनाद् वैदिकमपि वचस्तथाऽस्त्विति, अत्राह—अनुवादश्चेति ॥ पुरोवादापेक्षत्वादनुवादस्येत्यर्थः ॥४६॥

अभिप्रायप्रकाशिका

न चेति ॥ भवत्वर्थवादत्वम्, तथापि 'प्रतितिष्ठन्ति ह वा य एता रात्री-रुपयन्ति" इत्यत्र प्रतिष्ठायाः सत्रफलत्वकल्पनावदपुनरावृत्तेर्ज्ञानफलत्वमपि कल्प्य-तामिति, अत आह—अर्थवादादिति ॥ दृष्टफलम्=अन्वय-व्यतिरेकसिद्ध-फलम् । फलत्वमेव, तत्त्वावभासस्यासिद्धमिति, अत आह—पुरुषार्थता चेति ॥ ४५ ॥

कारिकाविवरणम्

नियोगस्य प्रमाणान्तरागोचरत्वात् तत्संसृष्टतया सिद्धस्यापि

ब्रह्मसिद्धिकारिका

तत् प्रमाणान्तरापेक्षं प्रामाण्यमतिवर्तते ।
मानान्तरस्याविषये विध्यर्थे तु प्रतिष्ठितम् ॥ ४७ ॥
अनपेक्षं प्रमाणत्वमश्नुते कर्मवाक्यवत् ।
परप्रवृत्त्यभावेऽपि प्रामाण्यायैव तद्विधिः ॥ ४८ ॥

कारिकाविवरणम्

तथापि किमनिष्टमिति ? अत्राह—तत्प्रमाणेति ॥ तद्वचो मानान्तरापेक्षमर्थमवगमयदमानं स्यादित्यर्थः ॥ विधिपरत्वेऽपि तुल्यमेतत् ; विधेरपि वस्तुत्वादिति, अत्राह—मानान्तरस्येति ॥ कार्यरूपस्य मानान्तरापूर्वस्याभिधायकं वचनमनधिगतमर्थमवबोधयदनपेक्षतया प्रामाण्यमश्नुत इत्यर्थः । शाब्दज्ञानात् पराचीनप्रवृत्तेर्विधिफलस्याभावे कथं विधिः ? तत्राह—परप्रवृत्तीति ॥ ४६, ४७, ४८ ॥ P. 79- 4

ब्रह्मसिद्धिविवरणम्

वचसः कार्यपरत्वमात्रेणानुवादत्वपरिहारात् किं विधिप्रत्ययो-(प)गमेन ? इत्याशङ्क्य—व्याचष्टे—विधिमन्तरेणेति ॥ लिङादिशब्द- P. 79- 5
मन्तरेण कर्तव्यार्थपरत्वं वाक्यस्य न सिध्यतीत्यर्थः । तद्भावे वाक्यं किं कुर्यात् ? अत्राह—यथावस्थितमिति ॥ बोधयेदिति शेषः । ततो वा किमिति ? अत्राह—तद्विधस्येति ॥ सिद्धवस्तुगोचरसरित्तीरादिवाक्यस्यानुवादत्वदर्शनादित्यर्थः । अनुवादेऽपि स्वार्थे निरपेक्षत्वात् प्रमाणमिति ? अत्राह—अनुवादश्चेति ॥ भूतार्थेन वचसेति शेषः । P. 79- 6

अभिप्रायप्रकाशिका

दध्यादिवद् ब्रह्मणोऽपि प्रमाणान्तरागोचरत्वेन तद्विषयवेदान्तवचसामपि प्रामाण्यसिद्धये ज्ञाने विधिरभ्युपगन्तव्य इति शङ्कते—विधिं विनेति[1] ॥ विधिपदं विनेत्यर्थः । ततः किमिति ? तत आह—अनुवादश्चेति ॥ भवतु, को दोष इति ? अत्राह—तत्प्रमाणेति ॥ विध्युपगमे तु नायं दोष इत्याह—मानान्तरेति ॥ ज्ञानोत्तरकालीनायाः प्रवृत्तेरभावान्न विधिरित्युक्तमिति, अत आह—परप्रवृत्तीति ॥ ४६, ४७, ४८ ॥

1. विधेर्विनेति मूलपाठः ।

ब्रह्मसिद्धिकारिका

प्रमाणान्तरयातार्थभावः किमनुवादता ।
उत भूतार्थता, तत्र सिद्धार्थमपि यद्वचः ॥ ४९ ॥
न मानान्तरलब्धार्थतया तस्यावबोधकम् ।
न तत् सापेक्षमेषा चेदभिप्रेतानुवादता ॥ ५० ॥

---

भावशुद्धिः

P. 79- 7 प्रतिपत्तिनियोगाङ्गीकारे णा(ना)यं दोष इत्याह—विध्यर्थस्येति ॥ दृष्टान्त-
P. 79- 8 माह—कर्मेति ॥ 'यजेत' इत्यादिकर्मविधायकवाक्यवदित्यर्थः । नियोगः, मानान्तरगोचरः, वाच्यत्वात्; अर्थान्तरवदिति, अत्राह—प्रमाणान्तरेति ॥ सिद्धत्वमुपाधिरित्यर्थः । प्रतिकूलतर्कमाह—न हीति ॥

त्रैकाल्यसम्भेदयोग्यार्थविषयाणि मानान्तराणि न च कुर्वन्ती-(न्त्य?)त्यर्थः । त(य)था न खल्वयं वर्तमानः; 'करोति' इत्यविशेषप्रसङ्गात्, नातीतः; 'कार्षीः' इति; नानागतः; 'करिष्यसि' इति । न च घटादिशब्दार्थस्तु(तु)ल्यः; तस्य शब्दात् त्रैकाल्यसम्भेदानवगमेऽपि अस्ति, अभूत्, भविष्यति, इत्यादिपदान्तरसमभिव्याहारा(रे सति) तत्सम्भिन्नस्य प्रतीतेरित्यर्थः । नियोगस्य मानान्तरपूर्वकतया तद्विशिष्ट-
P. 79- 9 वचसोऽनपेक्षत्वसिद्धौ फलितमाह—एवं चेति ॥ ४६, ४७, ४८ ॥

P. 79-10 एतद् दूषयितुमनुवादतां विकल्पयति—अत्रेति ॥

कारिकाविवरणम्

प्रमाणान्तरेण यातः—अवगतोऽर्थो यस्य, तद्भावः; प्रमाणान्तरयातार्थभावः । मानान्तरेणावगतोऽयमिति प्रतिपादनम्, भूतार्थतामात्रं वा । आद्यं
P. 79-12 प्रत्याह—तत्रेति । तस्य=सिद्धार्थस्येत्यर्थः ॥ ४९, ५० ॥

अभिप्रायप्रकाशिका

किं तर्हि प्रतीयत इति? अत आह—यथावस्थितमिति ॥ भूतमित्यर्थः । अनुवादे को दोष इति? अत आह—अनुवादश्चेति ॥ तत्र हेतुमाह—न हीति ॥ परप्रवृत्त्यभावेऽपीति व्याचष्टे—एवं च सतीति ॥ ४६, ४७, ४८ ॥

'प्रमाणान्तरयाते' त्यस्यार्थमाह—अधिगमान्तरेति ॥ तदेवाभिनयेन दर्शयति—मानान्तरेणेति ॥ न तदनुवादकम्; अत एव न सापेक्षमित्यर्थः ॥ ४९, ५० ॥

ब्रह्मसिद्धिकारिका

सापेक्षतायाः को हेतुः शुद्धा सिद्धार्थता यदि ।
प्रमाणान्तरसंभेदस्तद्ध्यपेक्षणकारणम् ॥ ५१ ॥
अनृधीप्रभवे नास्ति भूतार्थेऽपि स वैदिके ॥ ५१½ ॥

भावशुद्धिः

सिद्धवस्तुनि मानान्तरानुप्रवेशादनुवादकत्वस्योक्तत्वादयं विकल्पोऽनुपपन्न इति, अत्राह—कः पुनरितिं ॥ धर्मिण्यनुमानस्यापि P. 79-15 प्रत्यक्षाधिगमसम्भिन्नविषयत्वमस्ति, इति, तदपि प्रत्यक्षापेक्षतया न प्रमाणं स्यादित्याशङ्क्याधिगमान्तरसम्भिन्नार्थत्वं प्रथयति—मानान्तरेणेति ॥ सिद्धे वा, कार्ये वा मानान्तरानुप्रवेश एवानुवादकत्वप्रयोजक इति प्रकटनार्थं त्रिकल्प इत्यर्थः । प्रथमकल्पोऽस्माभिरभ्युपगत इत्याह —तत्रेति ॥ तर्हि वेदान्तानामात्मन्यनुवादकत्वमनिष्टं स्यादिति, अत्राह P. 79-16 —यत्त्विति ॥ हेतुमाह—पूर्वेति ॥ ५० ॥ P. 79-17

कारिकाविवरणम्

अथापरः कल्पः, तत्राह—सापेक्षताया इति ॥ को हेतुरित्याक्षेपबीजमाह—प्रमाणान्तरेति ॥ तद्ध्यपेक्षणम्= मानान्तरापेक्षणम्, तच्चमादेर्मानान्तरसम्भिन्नार्थत्वं भूतार्थवाक्यत्वादनुमेयमिति, अत्राह—अनृधीति ॥ ५१½ ॥

ब्रह्मसिद्धिविवरणम्

को हेतुरिति नाक्षेपो युक्तः; अनुवादत्वस्यैव तद्धेतुत्वादिति, अत्राह—भूतार्थेति ॥ भूतार्थतैव तत्प्रयोजिकेति, अत्राह—न भूतेति ॥

अभिप्रायप्रकाशिका

द्वितीयं कल्पमुत्थाप्य दूषयति=अथापर इति ॥ प्रश्नं मत्वाऽऽह पूर्ववादी—शुद्धेति ॥ भूतार्थस्य नदीतीरे फलसत्तादिवाक्यस्य सापेक्षत्वदर्शनादिहापि सापेक्षताऽनुमीयत इत्यर्थः । अप्रयोजकमेतदनुवादकत्वे सिद्धार्थत्वमिति दूषयति—प्रमाणान्तरेति ॥ भूतार्थवाक्यत्वात् सोऽप्यनुमीयतामिति, अत आह—अनृधीप्रभव इति ॥ ५१, ५१½ ॥

कथमिति? अत आह—न भूतार्थेति॥ परिशेषादिदमेव सापेक्षत्व-

भावशुद्धिः

हेतुं सव्यभिचारत्वेन दूषयति—भूतार्थयोरिति ॥ किं तर्हि वचसो मानान्तरापेक्षाप्रयोजकम् ? तदाह—तस्मादिति ॥ कुत एतत् ? अत्राह—स्मृताविति ॥ 'अष्टकाः कार्या इत्यादिमन्वादिस्मृतौ तद्दर्शनात् । तत्साधयति—सा हीति ॥ अन्यथा तद्वाक्यं निरपेक्षममानं स्यात्, न तथेष्यत इत्यर्थः । अस्तु मानान्तरसंस्पर्शः सापेक्षत्वप्रयोजकः, किम-
P. 80- 1 तत्त्व सिद्धमिति ? अत्राह—एवं चेति ॥ पुंवचस्सापेक्षं सिद्धार्थम्, बाध्यार्थं वा, न वैदिकमित्यर्थः । पौरुषेयवाक्यत्वस्य तत्प्रयोजकत्व-
P. 80- 2 मुपपादयति—ततो हीति ॥ 'नदीतीरे फलानि' इति सिद्धार्थाद् 'जीर्णे भुञ्जीत आरोग्यकामः' इति कार्यार्थाद्वा मानान्तरसम्भिन्नार्थे धीर्भवति नापेक्षितः पूर्वाधिगमो यस्मिन् प्रत्यये स तथा, न त्वियं विधा भूतार्थस्याप्यपौरुषेयवचसोऽस्तीत्यर्थः । पुंवाक्यस्य मानान्तरसम्भिन्न-
P. 80- 3 गोचरत्वे शाबरभाष्यमुदाहरति—यथोक्तमिति ॥ पुंवचस्सापेक्षत्वे हेत्व-न्तरोक्तिस्तत्र—अपि चेति ॥ अयम्=पुरुषो वक्ता, एवं वेद=नदीतीरफल-सत्तां जानातीति वक्तृसमवायिज्ञानगोचरप्रत्ययो भवति, एवमर्थे नदी-तीरादिरूपे प्रत्ययो न भवतीत्यर्थः ॥ वेदोऽपि पौरुषेय इति, अत्राह—
P. 80- 4 अपुरुषबुद्धीति ॥ कर्तुरस्मरणादिभिरपौरुषेयत्वस्य स्थितत्वादित्यर्थः ।
P. 80- 5 लोक-वेदसाधारणभूतार्थत्वमेव सापेक्षत्वहेतुरिति, अत्राह—पुरुषसम्बन्धेति ॥ वाक्यार्थ इति शेषः ॥ सिद्धे=शुद्धे शब्दसम्बन्धस्याध्यवसितत्वादिति भावः ॥

अभिप्रायप्रकाशिका

प्रयोजकमित्याह—तस्मादिति ॥ स्मृतौ दर्शनादिति ॥ हुं-फडित्यादिस्मृतौ, मन्वादिवचनेषु वा दर्शनादित्यर्थः ॥ तस्मात्=यस्मादुक्तं पुरुषबुद्धिप्रभवत्वमेव सापेक्षत्वप्रयोजकमित्याह—एवं चेति । स्वातन्त्र्येणार्थे ॥ प्रत्यय इति शेषः । उक्तेऽर्थे शाबरं भाष्यमाह—यथोक्तमिति ॥ 'अनृधीप्रभवे' इति श्लोकभागं व्याचष्टे—अपुरुषबुद्धीति ॥ ५१ ॥

भूतार्थानाम्="वायुर्वै क्षेपिष्ठा" इत्यादिवाक्यानां प्रमाणान्तरयोग्यार्थत्व-दर्शनादिहापि भूतार्थपरत्वात् प्रमाणान्तरयोग्यविषयत्वम्, यथा वा—चाक्षुषप्रत्य-

न च संभवमात्रेण तदपेक्षाऽवकल्पते ।
विशेषो न हि गम्येत सापेक्षत्वे तदा तयोः ॥ ५२½ ॥

भावशुद्धिः

भूतार्थपरत्वे हि शब्दस्य मानान्तरगोचरत्वेन मानान्तरापेक्षा स्यादिति शङ्कते—स्यादेतदिति । एतद् व्यनक्ति—तथाहीति ॥ माना- P. 80- 7
न्तरसमान(?)विषयतया तद्विसंवादाशङ्का स्यात्, यस्मादाशङ्कानिरा-
करणाय संवादकं मानान्तरमपेक्षणीयमित्याह-तस्मादिति ॥ आशङ्कित- P. 80- 9
विसंवादितस्यानिश्चायकत्वादित्यर्थः ॥ मानान्तरानर्हकार्यपरत्वस्वीकारे निरपेक्षप्रामाण्यसिद्धिरित्याह—असम्भवतीति ॥ ५१½ ॥

एतदुत्तरत्वेन श्लोकमवतारयति—अत्रोच्यत इति ॥ P. 80-10

कारिकाविवरणम्

तदपेक्षा=मानान्तरापेक्षा । विपक्षे दोषमाह— P. 80-11

विशेष इति । तयोः=शब्द-मानान्तरयोरित्यर्थः ॥ ५२½ ॥ P. 80-12

ब्रह्मसिद्धिविवरणम्

'तदपेक्षा नावकल्पते' इत्युक्तम्; आगमान्तरसंस्पर्शस्य तद्धेतुत्वे-
नोक्तत्वादिति, अत्राह—द्वयोरिति ॥ परिक्रीयानुशयनिबन्धनमनुवदति— P. 80 13
तदिति ॥ स एव सापेक्ष इति शेषः ॥—यथालोकदर्शनं चेत् शब्दानां गतिः, (तर्हि) लोके भूतार्थं सापेक्षं च वचो दृष्टम्, इति वैदिकमपि तथा स्यादिति । मानान्तरानर्हकार्यार्थम्, निरपेक्षं च न स्यादिति दूषयति—
प्रमाणान्तरस्येति ॥ (उक्त)मर्थं स्पष्टयति—प्रमाणान्तरेति ॥ तत्=प्रामाण्य- P. 80-15
मिति यावत् । लौकिकवचसां सापेक्षता पौरुषेयत्वकारिता, न स्वसामर्थ्य-कारिता, येन मानान्तरानभिगतकार्यप्रतिपादकं वाक्यं न स्यादिति

अभिप्रायप्रकाशिका

क्षस्य स्पार्शनप्रत्यक्षयोग्यविषयत्वम्, तद्वदिहापि स्यादिति प्रकारान्तरेण शङ्कते —स्यादेतदिति ॥ भवतु प्रमाणान्तरसम्भवः, तथापि किमिति तदपेक्षेति ? अत आह—तथाहीति ॥ चित्रनिम्नोन्नतादिज्ञानस्य चाक्षुषस्य स्पार्शनज्ञानसंवादे द्रष्टव्यं प्रामाण्यम्, दृष्टं च तत्संवादेऽन्यत्र प्रामाण्यम्, तद्वदिहापि स्यादित्यर्थः । कार्यनिष्ठत्वे कथमिदं परिह्रियत इति ? अत आह—असम्भवति त्विति ॥ ५१½ ॥

विशेषमाशङ्कते—यदीति ॥ परिहरति—प्रमाणान्तरस्येति ॥ लोक-

भावशुद्धिः

चोदयति—अथेति ॥ स एव लौकिकग्रन्थेनाह—शब्दस्येति ॥
P. 80-17 स्वभावत इति शेषः। दूषयति—न, तर्हीति ॥ अर्थमात्रे शब्दसा-
P. 80-19 मर्थ्यम्, न मानान्तरसम्भिन्न इति स्वीकारे मानान्तर-शब्दयोरेक-
विषयत्वे शब्द एव मानान्तरापेक्षः, न मानान्तरमपि शब्दापेक्षं
P. 80-20 स्यादित्यर्थः। तथापि शब्दस्य सापेक्षत्वं तदवस्थमेवेत्याशयेन
पृच्छति—किमत इति ॥ इदं ततो भवतीत्याह—तस्येति ॥ प्रमाणं
ह्यपेक्षते, नाप्रमाणम्; "अर्थ(अन्ध)स्येवान्धलग्नस्य विनिपातः पदे
P. 80-21 पदे" इति न्यायादित्याह—सति हीति ॥

ब्रह्मणि सम्भावितमानान्तरस्य सिद्धमप्रामाण्यमिति शङ्कते—
अथेति ॥ शब्दस्याप्रामाण्यमसिद्धमिति परिहरति—शब्दस्येति ॥ कथम-
P. 80-23 सिद्धम्; प्रमाणान्तरापेक्षत्वाच्छब्दस्येति चोदयति—प्रमाणान्तरेति ॥
शब्दस्य तदपेक्षतया प्रामाण्ये सिद्धे प्रमाणान्तरस्य निरपेक्षत्वेन
प्रामाण्यम्, प्रामाण्ये च प्रमाणान्तरस्य शब्दस्य तदपेक्षतया प्रामाण्य-
मितीतरेतराश्रयं स्यादिति दूषयति—तस्य चेति ॥ कथमितरेतराश्रयता
P. 80-24 प्रमाणान्तरस्य? स्वत एव निरपेक्षतया प्रमाणत्वादिति? अत्राह—
प्रमाणे हीति ॥

अभिप्रायप्रकाशिका

दृष्टानुसारेण प्रामाण्यस्य स्वीकार्यत्वात्, कार्ये शब्दस्याप्रामाण्यमेव स्यादित्यर्थः। 'नतराम्' इत्युक्तमतिशयं दर्शयति—प्रमाणान्तरेति ॥ प्रमाणान्तरागोचरार्थस्याप्तवाक्यवत् प्रामाण्यं युज्यते, कार्यवाक्यस्य तु तद्वदपि प्रामाण्यमनुपपन्नमित्यर्थः ॥

शङ्कते—अथेति ॥ कुत्र तर्हि शब्दसामर्थ्यमिति? अत्राह—शब्दस्येति ॥ एतदुत्तरत्वेनोत्तरार्धं व्याचष्टे—न तर्हीति ॥ तथापि कथं शब्दस्य प्रामाण्यसिद्धिरित्याह—किमत इति ॥ प्रमाणान्तरस्यैव शब्दसापेक्षत्वेनाप्रामाण्याद् शब्दस्याप्रमाणे तस्मिन्नपेक्षेत्याह—तस्येति ॥ तदेवोपपादयति—सति हीति ॥ वैपरीत्यं शङ्कते—अथेति ॥ एतदितरेतराश्रयेण दूषयति—शब्दस्येति ॥ पूर्वोक्तमेव प्रपञ्चयति—प्रमाणे हीति ॥

ब्रह्मसिद्धिकारिका

प्रत्यक्षानुमयोरेवं वृत्तेरन्योन्यगोचरे ॥ ५३ ॥

परस्परव्यपेक्षत्वमविशेषं प्रसज्यते।

स्याददक्षमपि सापेक्षं यदक्षान्तरगोचरे ॥ ५४ ॥

---

भावशुद्धिः

द्वयोरेकविषयानुप्रवेशे त(य)था शब्दस्य मानान्तरापेक्षत्वम्, P. 81-1
एवं मानान्तरस्य शब्दापेक्षत्वं स्यात्; अविशेषादित्यर्थः। शब्द-सम्भवेऽपि न मानान्तरस्य तदपेक्षत्वमनधिगताधिगन्तृस्वभावत्वादिति चोदयति—अथेति ॥ समः समाधिरिति, अत्राह—तत्सम्भवेऽपीति ॥ ५२½ ॥

मानान्तरसंवादासम्भवात् सापेक्षत्वेनाप्रामाण्यमिच्छतोऽतिप्रसङ्गमाह—अपि चेति ॥ P. 81-3

कारिकाविवरणम्

न केवलमात्मादौ प्रमेये प्रत्यक्षानुमानयोः, प्रत्यक्षभेदानामपि च केषाञ्चिद्रीत्येत्याह—स्यादक्षमिति ॥ P. 81-6 अक्षान्तरगोचरे वर्तत इति शेषः। घटादेरनेकेन्द्रियग्राह्यत्वादित्यर्थः ॥ ५३, ५४ ॥

ब्रह्मसिद्धिविवरणम्

आत्मनि मानसप्रत्यक्षसिद्धे नानुमाऽस्ति; लिङ्गाभावात्, वैयर्थ्याच्चेति, अत्राह—सम्भवमात्रेणेति ॥ इच्छादिः, क्वचिदाश्रितः, P. 81-7
गुणत्वात्, रूपादिवदिति परिशेषानुमानमात्मनीष्यत इत्यर्थः। 'स्यादक्षम्' इत्येतद् व्याचष्टे—तथेति ॥ P. 81-8

अभिप्रायप्रकाशिका

प्रमाणानां स्वविषयशूरत्वान्नान्योन्यापेक्षेति चोदयति—अथेति ॥ तुल्यमेतदस्मन्मतेऽपीति परिहरति—तत्सम्भवेऽपीति ॥ ५२, ५२½ ॥

अतिप्रसङ्गश्च स्यादित्याह—अपि चेति ॥ अतिप्रसङ्गान्तरमाह—

भावशुद्धिः

शब्दत्वस्य सापेक्षत्वप्रयोजकत्वान्नायं प्रसङ्ग इति चोदयति—
P. 81- 9 अथेति ॥ मानान्तरत्वमेव तत्प्रयोजकमित्यपि सुवचमिति परिहरति—
P. 81-10 विशेषेति ॥ नतरां प्रामाण्यमित्येतत्प्रपञ्चनार्थमधिकं च किञ्चिद् वक्तुं पुनराशङ्कते—प्रमाणान्तरेति ॥ उक्तमुत्तरं स्मारयति—उक्तमत्रेति ॥ शब्दमात्रस्य चेदयं स्वभावः, तदा विधिविषये कार्ये मानान्तरासम्भवान्न तत्र वेदस्य प्रमात्वं स्यादिति पूर्वमुक्तमित्यर्थः । अर्थान्तर-
P. 81-12 मप्युक्तं स्मारयति—सम्भवे त्विति ॥ परिनिष्पन्ने वस्तुनि कथञ्चिद् वेदस्य प्रामाण्यं स्यादाप्तवाक्यवत्; तत्र प्रमाणान्तरसम्भवादित्यर्थः । अत्र
P. 81-13 शाबरभाष्यं प्रमाणयति—यथोक्तमिति ॥ यद् लौकिकवचनम्, तच्चेत् प्रत्ययेनेतः=प्रत्ययितः=आप्तः, तस्माद् भवति, इन्द्रियस्य विषय एव विषयो यस्य, तत् इन्द्रियविषयं वा, अवितथं प्रामाण्यमित्यर्थः ॥

शब्दमात्रस्य नायं स्वभावः, किन्तु पुरुषप्रणीतस्येति चोदयति—
P. 81-14 अथेति ॥ मानान्तरावगतविषयत्वं पौरुषेयवचसश्चेत् स्वभावः, तर्ह्यपौरुषेयस्य न सापेक्षत्वेनाप्रामाण्यम्; तद्विषये प्रमान्तरं सम्भवतीत्यपीति
P. 81-15 परिहरति—नेति ॥ अधिकं चाह—अपि चेति ॥ प्रत्यक्षयोग्यार्थानु-

अभिप्रायप्रकाशिका

स्यादक्षमिति ॥ स्यादक्षमिति भागं व्याचष्टे—तथा सत्येति ॥

पूर्वोक्तमेव प्रपञ्चयितुं चोदयति—अथ शब्दस्यैवेति ॥ पूर्वोक्तपरिहारमेवानुस्मारयति—उक्तमत्रेति ॥ लोके यथा दृष्टम्, तथाऽभ्युपगम्यते चेत्, कार्यनिष्ठानां प्रमाणान्तराभावाद् बौद्धादिवाक्यवदप्रामाण्यं प्रसज्येत, भूतार्थनिष्ठानां त्वाप्तवाक्यवत् प्रमाणान्तरसम्भवात् कथंचित् प्रामाण्यं युज्यत इत्यर्थः ॥

कार्यवाक्यस्याप्रामाण्यपरिहाराय शङ्कते—अथेति ॥ तर्ह्यस्मदिष्टमेव चेष्टितमित्याह सिद्धान्ती—न, सम्भवदिति ॥ युक्तं चैतत्; अन्यत्रापि तथा दृष्टत्वादित्याह—अपि चेति ॥ सामान्यतो दृष्टस्य=स्वरूपतो विप्र-

ब्रह्मसिद्धिकारिका

असंभवादौषधादिनियोगस्यानपेक्षता ।
लौकिकस्य प्रसज्येत नरप्रत्ययपूर्वकः ॥ ५५ ॥
विनियोगस्तत्र तेन व्यपेक्षा, वैदिके पुनः ।
अबुद्धिपूर्वकः सोऽपीत्यनपेक्षत्वमुच्यते ॥ ५६ ॥

---

भावशुद्धिः

मापकं दृष्टं धूमाधि(दि)लिङ्गमिति सामान्यतो दृष्टस्य रूपादिदर्शनस्य चक्षुषा(रा)द्यनुमापकस्य न प्रत्यक्ष(क्षा)योग्यविषयत्वमित्यर्थः । अनुमानादन्यत्रेयं स्थितिरिति चेत्, अत्राह—यथा चेति ॥ प्रत्यक्षं च P. 81-16
षड्जादिसप्तस्वरविषयं किञ्चिदागमपूर्वकम्, इति किं न घटादिप्रत्यक्षमपि तथेष्यत इत्यर्थः । दृष्टान्ते प्रदर्शितार्थं दार्ष्टान्तिके योजयति—एवमिति ॥ पौरुषेयत्वं वचसः सापेक्षत्वप्रयोजकमित्य- P. 81-17
नङ्गीकारे बाधमभिधत्ते—अन्यथेति ॥ P. 81-19

ब्रह्मसिद्धिविवरणम्

भूतार्थत्वं न प्रयोजकं सापेक्षत्वस्येत्युक्तम् । कार्यार्थत्वमपि न निरपेक्षत्वप्रयोजकम्; अतिप्रसङ्गादित्याह—अपि चेति ॥ P. 81-20

कारिकाविवरणम्

लौकिकस्य=सत्यस्य, असत्यस्य वेति शेषः ।
शङ्कते—नरप्रत्ययेति ॥ विनियोगः=साध्य-साधनभावः, P. 81-22
विषय-नियोज्य-नियोगानामन्वयो वाऽभिधीयते। ततो P. 81-23
वैलक्षण्यं वैदिकविधौ दर्शयति—वैदिके पुनरिति ॥
५५ ५६ ॥

अभिप्रायप्रकाशिका

दृष्टार्थविषयस्य=इन्द्रियाविषयानुमानस्येति यावत् । विपक्षे दोषमाह—अन्यथेति ॥ ५३, ५४ ॥

एवं तावद् भूतार्थत्वं सापेक्षत्वप्रयोजकं न भवतीत्युक्तम्, इदानीं

ब्रह्मसिद्धिकारिका

नृबुद्धिपूर्वतैवेत्थं हन्तापेक्षानिबन्धनम् ।
मानान्तरासंभवेऽपि ततः सापेक्षता यतः ॥ ५७ ॥

---

भावशुद्धिः

कार्यमात्रपरत्वं निरपेक्षत्वप्रयोजकम्, वैदिककार्यपरत्वं वा,
P. 81-26 इति विकल्प्याऽऽद्यं प्रत्याह—यदि हीति ॥ नियोगार्थे नियुक्त इति ॥
नियोगः=विधिः, तदर्थ इति यावत् । द्वितीयकल्पाभिप्रायेण चोद-
P. 82-1 यति—अथेति ॥ वैदिकस्यापि तस्य तुल्यमेतत्, अत्राह—वेदे त्विति ॥

लौकिकनियोगान्वयस्याविवक्षापूर्वकत्वात् तन्निष्ठं वाक्यमनपेक्षं
P. 82-3 स्यादिति, अत्राह—यो वेति ॥ सोऽपीत्यपिशब्दार्थं दर्शयति—वेदे तु
P. 82-7 नेति ॥ ५६ ॥

कारिकाविवरणम्

एतन्निराकरोति—नृबुद्धीति ॥ ततः = नृबुद्धिपूर्वरचितत्वादित्यर्थः ॥ ५७ ॥

अभिप्रायप्रकाशिका

कार्यार्थत्वमपि निरपेक्षत्वप्रयोजकं न भवेत्, इति तथा सत्यतिप्रसङ्गः स्यादित्याह—अपि चेति ॥

शङ्कते पूर्ववादी—नरप्रत्ययेति ॥ विनियोगः=साध्यसाधनसम्बन्धः, तन्निष्ठत्वाद्वाक्यस्य, तस्य च प्रमाणान्तरगम्यत्वात् सापेक्षत्वमित्यर्थः ॥५६॥

विनियोगशब्दस्यार्थान्तरं स्वीकृत्य व्याचष्टे—यो वेति ॥ नियोज्यनियोगयोः प्रवर्त्य-प्रवर्तकभावः सम्बन्धः, विषय-नियोगयोरवच्छेद्यावच्छेदकभावः सम्बन्धः। तर्हि कार्यनिष्ठं निरपेक्षम्, सिद्धनिष्ठं सापेक्षमिति पक्षो हतः; पुंबुद्धिपूर्वकस्यैव सापेक्षत्वप्रयोजकत्वादित्याशयेन दूषयति—पुरुषबुद्धीति ॥ उत्तरार्धं व्याचष्टे—न विषय इति ॥ ५७ ॥

ब्रह्मसिद्धिकारिका

वेदे नियोगनिष्ठत्वं विनियोगप्रधानता ।
लोके वेदे न व्यपेक्षा तद् लोके च व्यपेक्षणम् ॥ ५८ ॥

---

ब्रह्मसिद्धिविवरणम्

पुंबुद्धिप्रभवत्वस्य सापेक्षत्वप्रयोजकत्वे किं प्रमाणमुक्तमत्रेति ? अत आह—असम्भवदिति ॥ न सम्भवति प्रमाणान्तरम्; हरीतकी- P. 82-4
भक्षणकार्येऽस्मिन् तदसम्भवात् । प्रमाणान्तरकार्यम्, तन्निष्ठे हरीतकीं भक्षयेदिति वाक्यादि(क्य इ)त्यर्थः । अन्वय-व्यतिरेकौ स्पष्टयति—तद्भाव इति ॥ प्रमाणान्तरसम्भेदस्यापि तत्प्रयोजकत्वसम्भवे कुतोऽन्यतरप्रयोजकत्वनिर्णय इति ? अत्राह—न विषय इति ॥ ५७ ॥ P. 82-10

चोदयति—अथ मतमिति ॥ P. 82-11

कारिकाविवरणम्

नियोग-विनियोगनिष्ठत्वविभागफलमाह—वेदे न P. 82-13
व्यपेक्षेति ॥ वैदिकवचसो मानान्तरापूर्वनियोगरूपकार्याभिधायकत्वादनपेक्षेत्यर्थः ॥ लौकिकवचसोऽप्येवंरूपता किं न स्यात ? अत्राह—तल्लोके चेति ॥ तस्माद्विनियोगपरत्वादित्यर्थः ॥ ५८ ॥

ब्रह्मसिद्धिविवरणम्

वैदिकलिङादिः, न नियोगनिष्ठः; लिङादित्वात्; लौकिकलिङादिवदिति, अत्राह—नियोगेति ॥ नियोगनिष्ठत्वाभावे तत्प्रामाण्यं P. 82-15

अभिप्रायप्रकाशिका

पौरुषेयवाक्येषु लिङादिपदस्य साध्य-साधनसम्बन्ध एवार्थः, न नियोगः, वेदे तु नियोग एव, अतः सिद्धवस्तुनिष्ठत्वमेव सापेक्षत्वप्रयोजकं लोकवेदयोरिति शङ्कते—अथेति ॥ ५८ ॥

ब्रह्मसिद्धिकारिका

न शब्दमात्रसामर्थ्यप्रविभागोऽयमीदृशः ।
लोकावगतसामर्थ्यः शब्दो वेदेऽपि बोधकः ॥ ५९ ॥

---

भावशुद्धिः

न स्यादित्यर्थापत्तिबाधितमनुमानमित्यर्थः । किमतः ? अत्राह—स चेति ॥ लोके पुनरपूर्वकार्यासम्भवाद् विनियोगप्रधानतेत्याह—साध्येति ॥ विषयवैलक्षण्येऽप्यनपेक्षत्वं तुल्यं स्यादिति, अत्राह—स च प्रमाणेति ॥ लौकिकं वचः क्वचिद् यथा प्रमाणं प्रवर्तते—यथा 'ज्वरवियोगकाम इदमौषधं पिबेत्' इति, क्वचित्पुनः प्रमितसाध्य-साधनभावं प्रवर्तते, यथा 'स्वर्गकामस्सिकतां भक्षयेत्' इति । तस्मात् सकलमेव लौकिकं वचो विनियोगनिष्ठम्, तथा नासम्भवत्प्रमाणान्तरगोचरमिति युज्यते सापेक्ष-
P. 82-18 त्वमित्यर्थः ॥

कारिकाविवरणम्

परिहरति—न शब्देति ॥ अनपेक्षितपुरुषसम्बन्धस्य शब्दमात्रस्य यत् सामर्थ्यम्, तस्य प्रविभाग ईदृशः —क्वचिन्नियोगनिष्ठम्, क्वचिद्विनियोगनिष्ठमित्येवंरूपो न सम्भवति । हेतुमाह—लोकेति ॥ ५९ ॥

ब्रह्मसिद्धिविवरणम्

लोके वृद्धव्यवहारेऽवगतं सामर्थ्यं यस्य स तथा, केवलशब्द-स्यायं शक्तिविभागः ? किं वा पौरुषेयत्वविशिष्टस्य ? नाद्य इत्याह—
P. 82-20 न तावदिति ॥ मात्रशब्दस्यार्थमाह—अनपेक्षितेति ॥ स्वतः शक्तिविभागे

अभिप्रायप्रकाशिका

विभाग एवायमनुपपन्नः ; 'य एव लौकिकास्त एव वैदिकाः' इति न्यायादित्यभिप्रेत्य परिहरति—शब्दमात्रेति ॥ मात्रशब्दार्थमाह—अनपेक्षितेति ॥ वैधर्म्यदृष्टान्तमाह—यथेति ॥ तत्र युक्तिमाह—यत इति ॥५९॥

ब्रह्मसिद्धिकारिका

अथ मानान्तराद् ज्ञात्वा प्रयुङ्क्ते पुरुषो वचः ।
अर्थे तत् तेन तन्निष्ठमितरत्त्वन्यथा स्थितम् ॥ ६० ॥

---

भावशुद्धिः

व्यतिरेकदृष्टान्तमाह—यथेति ॥ हेतुमाह—यत इति ॥ य एव लौकिकाः P. 82-21
शब्दाः, त एव वैदिकाः, त एव चैषामर्थाः ; लोकाधीनावधारणत्वात्
तेषामर्थसम्बन्धस्येत्यर्थः । फलितमाह—लोके चेदिति ॥ विनियोगनिष्ठा- P. 82-22
श्चेद् लौकिकाः शब्दाः, नूनं वैदिकैरपि तथैव भवितुं युक्तम्, इति न मानान्तरागोचरार्थत्वं वैदिकवचस इत्यर्थः ॥

कारिकाविवरणम्

द्वितीयकल्पमुत्थापयति—अथेति ॥ तत्=पुरुषवचः, तेन=पौरुषेयत्वेन, तन्निष्ठम्=विनियोगपरम् । इतरत्=वैदिकम्, अन्यथा स्थितम्=नियोगपरमित्यर्थः ॥

ब्रह्मसिद्धिविवरणम्

यदुक्तं न शब्दमात्रेत्यादि, तदिष्टमित्याह—नैवेति॥ क तर्हि तस्य सामर्थ्यमिति ? अत्राह—शब्दस्य हीति ॥ कार्यस्वरूपपर्यालोचनया

अभिप्रायप्रकाशिका

लोक-वेदयोः शब्दसामर्थ्यप्रविभागे कारणमाशङ्कते—अथेति ॥ पूर्वं विनियोगनिष्ठत्वमुक्तम्, इदानीं कथं कार्यनिष्ठत्वमुच्यत इति ? अत आह—तथाहीति ॥ "अरुणयैकहायन्या" इत्यादिष्वन्यार्थनिष्ठत्वमपि दृश्यत इति, अत आह—कार्यायेति ॥

तर्हि पुरुषवचनेष्वपि कार्यनिष्ठत्वं किं न भवेदिति ? अत आह—

ब्रह्मसिद्धिकारिका

मानान्तरव्यपेक्षत्वात् संभव्यन्यप्रमाणकः ।
हन्ताऽस्य गोचरो नास्मादपेक्षाऽस्य प्रमान्तरे ॥ ६१ ॥

---

P. 83- 2 तदुपपादयति—तथाहीति ॥ सर्वेषां शब्दानां कार्यपरत्वे कथं कारकपदार्थसंसर्गसिद्धिः ? अत्राह—कार्ययेति ॥ 'भूतं भव्यायोपदिश्यते' इति न्यायादित्यर्थः । लिङर्थोऽपि नाम पदार्थैः संबध्यत इति, अत्राह—
P. 83- 3 न तु कार्यस्येति ॥ स्वसिध्यर्थमेव संबन्धः, न प्रयोजनान्तरायेत्यर्थः । तस्माद् नियोगस्य साध्यत्वाच्छेषित्वमिति फलितमुपसंहरति— तस्मादिति ॥

पुरुषोऽपि यथासामर्थ्यं शब्दं प्रयोक्तुमर्हति, इति तद्वचो नियोग-
P. 83- 4 परमिति, अत्राह—पुरुषस्त्विति ॥ मानान्तरेणैवोपलभ्य विवक्षित्वा परप्रतिपत्त्यर्थं प्रयुञ्जानोऽपि नियोगविवक्षयैव किं न प्रयुङ्क्त इति ?
P. 83- 5 अत्राह—न चेति ॥ मा भून्नियोगो मानान्तरगोचरः, ततः किमिति ? अत्राह—तस्मादिति ॥ साध्य-साधनसंबन्धोऽपि तथैवेति, नेत्याह—विनियोगस्येति ॥ तथाभावात्=मानान्तरगोचरत्वादित्यर्थः । शब्दस्य स्वाभाविककार्यगोचरत्वस्यापवादकः पुरुषसंबन्धो यत इति निगमयति
P. 83- 6 —तस्मादिति ॥ शब्दार्थस्यैकरूप्यसिध्यर्थं वैदिकमपि विनियोगार्थ-
P. 83- 7 मिति, अत्राह—वैदिकं त्विति । कार्यत्वात्=साध्यत्वादिति यावत् ।
P. 83- 8 अपवादादन्यत्रोत्सर्गप्रवृत्तेरित्यर्थः ॥ ६० ॥ परिहरति — तत्रोच्यत इति ॥

कारिकाविवरणम्

'ज्वरवियोगकाम औषधं पिबेदि'त्यादेर्विवक्षापूर्वकत्वाद्विनियोगपरत्वं यदि, हन्त तर्हि मानान्तरव्यपेक्ष-

अभिप्रायप्रकाशिका

पुरुषस्त्विति ॥ एतावता कथं नियोगनिष्ठत्वाभाव इति ? अत आह—न चेति ॥ ६० ॥

प्रमाणान्तरसापेक्षत्वात् तर्हि सम्भवत्प्रमाणकत्वम्, न तु सम्भवत्प्रमाण-

ब्रह्मसिद्धिकारिका

तस्मान्मानान्तराद् गत्वा परस्य प्रतिपत्तये ।
वचः प्रयुङ्क्ते पुरुषो नाकस्मात् तेन तद्गिरि ॥ ६२ ॥
प्रमाणान्तरसंभेदो व्यपेक्षाऽतो न संभवात् ॥ ६२½ ॥

---

भावशुद्धिः

वात्, अस्य गोचरः, संभाव्यान्यप्रमाणकः, नास्मात्= संभाव्यान्यप्रमाणकत्वात् प्रमाणान्तरापेक्षेत्यर्थः ॥६१॥

शब्दमात्रस्य नियोगपरतौत्सर्गिकी चेत्, कुतः पुंवाक्यस्य विनियोगपरतेति ? अत्राह—यदीति ॥ संभवति प्रमाणान्तरं यत्र, स P. 83-11
संभवत्प्रमाणन्तरः । विनियोगस्य संभवत्प्रमाणान्तरत्वात् तद्विषयत्वं वचस्सापेक्षमित्युक्तं न सिध्येदित्याह—प्रमाणेति ॥ हेतुमाह—सापेक्षत्वेति ॥ P. 83-12
वचसः सापेक्षत्वाहेतुत्वाद्विषयताद्वैविध्यस्य सम्भवत्प्रमाणान्तरत्वस्येत्यर्थः ॥ ६१ ॥

कारिकाविवरणम्

यदि मानान्तरमपेक्ष्य पुंवचोऽर्थस्य निश्चायकम्, कृतं तर्हि वचसा ; मानान्तरादेव तन्निश्चयादिति शङ्कामुपसंहरन् परिहरति—तस्मान्मानान्तरादिति ॥ नाकस्मात्= P. 83-14
अनिमित्तम् । तेन तद्गिरि=पौरुषेये वचसि, प्रमाणान्तरसम्भेदस्तद्विषये । अतः सम्भवात्=प्रमाणान्तरसम्भेदात्, P. 83-15
न व्यपेक्षा=विशये मानान्तरसम्भवो न वचसः सापेक्षत्वप्रयोजक इत्यर्थः ॥ ६२, ६२½ ॥

अभिप्रायप्रकाशिका

त्वाद् मानान्तरापेक्षेति प्रयोजकवैपरीत्यमिति परिहरति—अत्रोच्यत इत्यादिना ॥

कारिकाविवरणम्

तस्मादिति॥ सम्भवत्प्रमाणकत्वादित्यर्थः । सम्भवत्प्रमाणकत्वादपि सापेक्षं चेत्, इतरेतराश्रयप्रसङ्गः स्यादिति भावः॥६१॥

अर्थसिद्धिः प्रमाणान्तराधीना चेत्, किं वाक्येन ? इत्याशङ्कां परिहरन्नुपसंहरति—तस्मादिति ॥ गत्वा=ज्ञात्वा, नाकस्मात= प्रमाणं विनेत्यर्थः । गिरि=वाक्ये, अतः=सम्भवाद् न व्यपेक्षेत्यन्वयः ॥ ६२, ६२½ ॥

भावशुद्धिः

ब्रह्मसिद्धिविवरणम्

ज्ञात्वा प्रयुङ्क्त इत्येव, न तु मानान्तरात्; अनाप्तवचसोऽपि
P. 83-15 दर्शनादित्याशङ्क्य व्याकरोति—स्वोपलब्धीति ॥ किमेतावता ? अत्राह—
तत इति । तस्यां तद्विषय इति यावत् । कस्तर्हि पुरुषवचसोऽर्थः ?
P. 83-16 तत्राह—मयेति ॥ यस्माद् वक्तृसमवेतज्ञानमर्थविषयं पुरुषवचसोऽर्थः,
तस्मादिदं सिद्धमित्याह—तेनेति ॥

द्विविधं लौकिकं वचः—संभवत्प्रमाणान्तरम्, तद्विपरीतं च ।
P. 83-17 तत्राद्यमाप्तस्येत्याह—यत्रेति । निश्चयमेव दर्शयति-न चेति। आप्तत्वादित्यर्थः।
तदपि द्वयं दृष्टार्थम्, अदृष्टार्थं च—यथा–'जीर्णे भुञ्जीतारोग्यकामः'
'अष्टकाः कर्तव्याः' इति। तत्प्रमाणान्तरोपस्थापकतया प्रमाणमित्याशये-
P. 83-18. नाह–यथेति ॥ असम्भवत्प्रमाणान्तरं वचो नाप्तस्येत्याह—यत्र त्विति ॥
तत्राप्रामाण्यमिति सम्बन्धः । उदाहरति–यथेति ॥ 'चैत्यं वन्देत स्वर्ग-
P. 80-19 कामः' इत्यादावित्यर्थः । अनुपलब्धे प्रयोगायोगः; उपलब्धिकार्यत्वात्
P. 83-20 तस्येति, अत्राह–यत्र चेति । प्रमाणेनेति शेषः । प्रयोगो विप्रलिप्सादि-
मूल इत्याशयः । यत्तु सम्भवत्प्रमाणान्तरमप्यनाप्तप्रणीतम्, यथा—
'नद्यास्तीरे तरवः' इति परोक्षार्थं श्रोतुः, तत् सन्दिग्धार्थमनिश्चयात्म-
कत्वादप्रमाणम्। अतः पुरुषवचो मानान्तरोपस्था(न?) पनेन प्रमाणमिति
स्थिते फलितं निगमयति—न तु प्रमाणान्तरेति ॥ ६२, ६२½ ॥

अभिप्रायप्रकाशिका

सम्भेदमेवाह—मयेति ॥ सम्भवासम्भवाभ्यां किं न स्यादिति ?
अत्राह–यत्रेति ॥ निश्चयमेव दर्शयति—सम्भवतीति ॥ अनेन मूलप्रमाण-
वत्त्वमुक्तम्। न चानुपलभ्यायमित्यनेनाविप्रलम्भकत्वं दर्शितम् ॥

प्रामाण्यं तर्हि कुत्रेति ? अत आह—यत्र त्विति ॥ अनेन मूल-
प्रमाणाभावो दर्शितः। क्वचित्सम्भवप्रमाणेऽपि विप्रलम्भादप्रामाण्यमित्याह—
यत्र चेति ॥ प्रमाणेनावगम्य वाक्यप्रयोगात् प्रमाणापेक्षा, न सम्भवा-
दित्यर्थः ॥ ६२, ६२½ ॥

ब्रह्मसिद्धिकारिका

अपौरुषेयता तेन पौरुषेयत्वमेव च ॥ ६३ ॥
अनपेक्ष-व्यपेक्षत्वे निमित्ते वर्णिते बुधैः ।
भूतार्थमपि सापेक्षं नातोऽपुरुषबुद्धिजम् ॥ ६४ ॥

कारिकाविवरणम्

अत्रैवार्थे वृद्धानुमतिमादर्शयति—अपौरुषेयतेति ॥ P. 83-24.
पौरुषेयत्वस्य सापेक्षत्वप्रयोजकत्वे सिद्धं वेदान्ता-
नामकार्यपराणामनपेक्षत्वमित्याह—भूतार्थमिति ॥ ६३, P. 83-26.
६४ ॥

ब्रह्मसिद्धिविवरणम्

पौरुषेयत्वं सापेक्षत्वे, अपौरुषेयत्वमनपेक्षत्वे प्रयोजन(क)मिति वचनव्यक्तिर्जैमिनिप्रभृतेर्न दृश्यत इति, अत्राह—अत एवेति ॥ यतो P. 84-1 ज्ञातेऽर्थे वचनप्रयोगोपपत्तिरित्यर्थः ॥ "औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धस्तस्य ज्ञानमुपदेशोऽव्यतिरेकश्चार्थेऽनुपलब्धे तत् प्रमाणं बादरायणस्यानपेक्षत्वात्" इति पूर्णं सूत्रम् । तुशब्दः पौरुषेयत्वशङ्कां व्यावर्तयति । अपौरुषेयः शब्दस्यार्थेन सम्बन्धस्तस्य ज्ञानम्, यदा चोदनालक्षणः सम्यक्प्रत्ययः । पौरुषेये हि सति सम्बन्धे यः प्रत्ययः, तस्य मिथ्याभाव आशङ्क्येत, परप्रत्यया(यो)हि तदा स्यात्, अव्यतिरेकश्च=यथाऽस्मिन् देशे सास्नादिमति गोशब्दप्रयोगः एवं सर्वेषु देशेष्वपि । सम्बन्धारः कथं सङ्गंस्यन्ते ? एको न शक्नुयादेव, अतो नास्तै(स्ति) सम्बन्धः । अनुपलब्धे च देवतादावर्थेऽनर्थकं सम्बन्धकरणम्, अशक्यं च । तस्मादपौरुषेयः शब्दस्यार्थेन सम्बन्धः । अतश्च प्रमाणम्; अनपेक्षत्वादित्यर्थः । औत्पत्तिकसूत्रे शब्दार्थसम्बन्धस्यापौरुषेयत्वमुक्तम्, न त्वपौरुषेयत्वस्यानपेक्षत्वप्रयोजकत्वमित्याशङ्क्य तदाशयं विशदयति—औत्पत्तिके हीति ॥

कारिकाविवरणम्

अभियुक्तसम्मतत्वादपि सापेक्षत्वानपेक्षत्वयोरस्मदुक्तवाक्यमेव प्रयोजकमित्याह—अपौरुषेयतेति ॥ भवतु प्रकृते किमायातमिति ? अत आह— भूतार्थे(र्थमि)ति ॥ ६३ ॥

भावशुद्धिः

P. 84-3 वेदार्थे मानान्तरसम्भवनिराकरणप्रयत्नानुपपत्त्या तत्सम्भवस्य सापेक्षत्वप्रयोजकत्वमिष्टं जैमिनेरिति गम्यत इति चोदयति—नन्विति ॥

P. 84-5. "सत्सम्प्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म तत् प्रत्यक्षमनिमित्तं विद्यमानोपलम्भनत्वात्" "प्रत्यक्षं तावदनिमित्तं धर्मेण(न) प्रमाणम्, एवंलक्षणं हि तत्—सत्सम्प्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म प्रत्यक्षम्, सतीन्द्रियार्थसम्बन्धे पुरुषस्य या बुद्धिर्जायते, तत् प्रत्यक्षम्। भविष्यंश्चैषोऽर्थे(र्थो) न ज्ञानकालेऽस्ति। सतश्चैतदुपलम्भनम्, नासतः; अतः प्रत्यक्षमनिमित्तम्" इत्यर्थः। (प्रमाणान्तरासम्भवे यत्नकरणमङ्गीकृत्य

P. 84-6. परिहरति—सत्यमिति ॥ वेदस्य सापेक्षत्वेनाप्रामाण्याशङ्कानिराकरणाय नासौ यत्नः, किन्तु चोदनैव धर्मे प्रमाणम्, नान्यदित्यन्ययोगव्यवच्छेदार्थमित्यर्थः। प्रमाणान्तरसम्भवस्य सापेक्षत्वेनाप्रामाण्यप्रयोजकत्वाभावे वेदार्थे प्रमाणान्तरसम्भवेऽपि वेदस्य निरपेक्षं प्रामाण्यं

P. 84-8. सिध्यति, इति व्यर्थोऽन्ययोगव्यवच्छेद[1])इति चोदयति—अथेति ॥

अभिप्रायप्रकाशिका

ब्रह्मसिद्धिविवरणम्

पौरुषेयत्वनिराकरणं कुत्रेति? अत आह—औत्पत्ति[2]कस्त्विति ॥ शब्दार्थसम्बन्धस्य नित्यत्वादर्थाववोधने शब्दस्य न पुरुषापेक्षा। यद्यपि लोके वाक्यप्रयोगाय पुरुषापेक्षा; तथापि न वाक्यस्याववोधने तदपेक्षेत्यर्थः ॥

पौरुषेयत्वनिराकरणात् सापेक्षत्वे पौरुषेयत्वं चेत् कारणमुच्यते, तर्हि प्रमाणान्तरसम्भेदोऽपि सापेक्षत्वे कारणं किं न स्यात्? तस्यापि निराकृतत्वादिति शङ्कते—नन्विति ॥ "तत् प्रत्यक्षमनिमित्तं विद्यमानोपलम्भनत्वात्" इत्यत्र प्रत्यक्षस्य, तत्पूर्वकानुमानादेश्चानिमित्तत्वं प्रामाण्ये धर्मे दर्शितमित्यर्थः। प्रमाणान्तरसम्भवे चोदनैव प्रमाणमित्यन्ययोगव्यवच्छेदायोगात् तत्सिद्धये तत्प्रतिपादनम्, न तु सापेक्षत्वनिराकरणायेति परिहरति—सत्यमिति ॥ 'चोदना प्रमाणमे'वेत्ययोगव्यवच्छेदाय प्रमाणान्तरनिराकरणं न भवतीत्याह—न त्विति ॥

सापेक्षत्वेऽपि चोदनायाः प्रामाण्यं न व्याहन्येत चेत्, किं प्रमाणान्तरनिरासेन? चोदनैव प्रमाणमिति वाऽवधारणेनेति शङ्कते—अथेति ॥ उत्तर-

1, प्रमाणान्तरसम्भवे इत्यारभ्य....... व्यवच्छेदः इत्यन्तो भागः B. पुस्तके नास्ति।
2. औत्पत्तिके ह्मीति मूलपाठः।

भावशुद्धिः

राद्धान्त्याह—धर्मेति ॥ अर्थ इत्यनुषङ्गः। तदाभासवि(वि)क्तं हि P. 84-9.
स्वरूपं तत्त्वम्, तस्य ज्ञानम्=विनिश्चयः, स चैष प्रमाणान्तरनिराकरण आयात इत्यर्थः। अन्यथा चैत्यवन्दनादेरपि धर्मत्वप्रसक्तावाभासविवेके-नाग्निहोत्रादिरेव धर्म इति निश्चयो न स्यादित्याह—प्रामाणान्तरेति ॥ मा भूत् तदवधारणेति, अत्राह—तदवधारणेति ॥ मीमांसारम्भप्रयास P. 84-10.
इत्यर्थः। चोदनाप्रामाण्यार्थो जैमिनेः प्रयत्नः, न धर्मावधारणार्थमिति, अत्राह—चोदनेति ॥

चोदनाप्रामाण्ये तदर्थोऽग्निहोत्रादिः श्रेयस्साधनमिति निर्णयः स्यात्; प्रमाणस्य निर्णयफलत्वादिति, अत्राह—अथवेति ॥ चोदनार्था- P. 84-11
नुष्ठाने हि बुद्धादिभिर्दोषो दर्शित इति सर्वज्ञप्रत्यक्षविरोधश्चोदनायाम्। न च प्रत्यक्षविरोधे शब्दः प्रामाण्यमश्नुत इत्यर्थः। यदि द्वयोः स्वगोचरे वर्तमानयोः प्रथमस्य (द्वितीयस्य) चाप्रमाणभूतरजतादि-ज्ञानवर्जितत्वेन व्यभिचाराद् न गृह्यते विशेषः, तत्राऽऽह—संशयो वेति ॥ तुल्यबलप्रमाणद्वयविप्रतिपत्तौ साधक-बाधकान्तराभावे बुद्धा- P. 84-12.
द्युपदिष्टचैत्यवन्दनादिर्धर्मः, किं वा चोदनालक्षणोऽग्निहोत्रादिरिति संशयः स्यादित्यर्थः। तस्मात् चोदनार्थे मानान्तर(ा)सम्भवाद् मा भूद-प्रमाणं चोदनेत्येतदर्थोऽत्य(न्य)योगव्यवच्छेदप्रयत्नः, न तु मानान्तर-सम्भवात् सापेक्षता मा प्रसाङ्क्षीदित्येतदर्थ इत्याह—तेनेति ॥

अभिप्रायप्रकाशिका

माह—धर्मेति ॥ धर्मतत्त्वज्ञानं प्रयोजनमिति यदुक्तम्, तत् प्रपञ्चयति—प्रमाणान्तरेति ॥ अग्निहोत्रादिलक्षण एव धर्मः, न चैत्यवन्दनादिलक्षण इत्यवधारणार्थमित्यर्थः। किं तदवधारणेनेति? अत आह—तदवधारणार्थ इति ॥ अयं प्रयत्न इति ॥ धर्ममीमांसारम्भ इत्यर्थः ॥

इतोऽपि धर्मतत्त्वावधारणमेव प्रयोजनमित्याह—चोदनेति ॥ एत-दुपयोगित्वे दृष्टं प्रयोजनम्। चोदनाप्रामाण्यस्योपसर्जनत्वात् प्रमाणान्तरनिरासः प्रधानेनैव सम्बध्यते, नोपसर्जनेनेत्युक्तम्। इदानीमुपसर्जनेन सम्बन्धाङ्गी-कारेऽपि न दोष इत्याह—अथवेति ॥ धर्मस्य प्रत्यक्षादिप्रमाणान्तरगोचर-

भावशुद्धिः

एवमपि प्रमाणसम्भवापेक्षत्वात् चोदनाया नानपेक्षतया प्रामा-
P. 84-13. ण्यम् ? तदनपेक्षत्वे वा वृथा तत्साधनमिति चोदयति—नन्विति ॥
तदभावोऽपेक्ष्यतामित्याह—काममिति ॥ कथं तर्हि प्रामाण्यम् ? अन-
P. 84-14. पेक्षत्वादित्याह—न त्विति । हेतुमाह—यत इति ॥

यत्=प्रत्यक्षादि विषयप्रतिपादनक्षमम्, न तदपेक्षते । तदभाव-
P. 84-16. रूपं न प्रमितिजनकमित्यर्थः । कुत इति ? अत्राह—न हीति ॥ भूतार्थ-
त्वेन=वेदान्तानां मानान्तरगोचरार्थत्वेन तत्सम्भवात् तद्विसंवाद-
शङ्कायामप्रामाण्यप्रसङ्गः, इति कार्यनिष्ठता प्रयत्नेन प्रतिपाद्यत
इत्याशङ्क्याह—विरोधीति ॥ भूतार्थतामात्रेण विरोधिप्रमाणोत्प्रेक्षायाः
प्रत्यक्षादिष्वपि साम्यादित्यर्थः ॥

P.84-17. प्रसङ्गान्तरमाह—अपि चेति ॥ प्रतिपत्तिकर्तव्यतापरत्वेऽप्यपरि-
हार्यमित्यर्थः । मानान्तरागोचरनियोगपरत्वे कुतो(न्य ?)विरोधिमाना-
न्तरासम्भव इति ? अत्राह—कर्तव्यतेति ॥ ब्रह्मरूपप्रतिपत्तेरिष्टत्वा-
दित्यर्थः । तथापि किमिति? अत्राह—तत्रेति ॥ भूते=ब्रह्मणीत्यर्थः ।
कुत एवम् ? अत्राह—भूतार्थस्येति ॥ तेन भूतार्थपरत्वेन सापेक्ष-

अभिप्रायप्रकाशिका

त्वेऽपि तेषां प्राबल्ये तद्विरोधाच्चोदनायाः कदाचिद्बाधः, तुल्यबलत्वे वा संशयः स्यात्, तेनोभयपरिहाराय प्रमाणान्तरनिरासः सापेक्षत्वेनाप्रामाण्यप्रसक्तिपरिहाराय; अर्थात्तु सापेक्षत्वमपि निराकृतं भवतीति भावः ॥

कथमर्थादपि सापेक्षत्वनिरासः ? प्रमाणान्तरापेक्षाभावेऽपि तदभावस्यापेक्ष्यमाणत्वादिति शङ्कते—नन्विति ॥ प्रमाणाभावस्याप्रमाणत्वात् तदपेक्षायामपि न दोष इति परिहरति—काममिति ॥ प्रमाणस्यैवार्थसाधकत्वात्, तस्य चानपेक्ष्यमाणत्वात्, अपेक्ष्यमाणस्य चाभावस्यार्थासाधकत्वादित्यर्थः । उक्तमेवोपपादयति—न हीति ॥ भूतार्थे प्रमाणान्तरासम्भवे तद्विसंवादादप्रामाण्यप्रसङ्ग इति, अत आह—विरोधीति ॥

कार्योपसृष्टभूतार्थप्रतिपत्ताविति यावत् । अतो भूतार्थनिष्ठत्वं परिहृत्य वेदस्य कार्यैकनिष्ठत्ववर्णनं मीमांसकेन व्यर्थमेव क्रियते; भूतार्थनिष्ठत्वेऽपि सापेक्षतायाः प्रसञ्जितत्वादित्युक्तमेवार्थं स्पष्टीकुर्वन्नुपसंहरति—भूतार्थस्येति ॥

ब्रह्मसिद्धिकारिका

अथ संसर्गभाजो नो पदार्थाः क्रियया विना ।
किमायातं विधेः साऽपि त्वस्त्यादिः सुलभा क न ॥६५॥

भावशुद्धिः

त्वेनाप्रामाण्यप्रसङ्गेन कार्यनिष्ठता व(र्ण)र्ण्यत इत्यर्थः । तमेवानेन P. 84-18
हेतुनाऽप्रामाण्यप्रसङ्गाभासं परोक्तं स्मारयति–प्रमाणान्तरेति ॥ आभास- P-84-19.
तामेव किलशब्देन सूचितामस्य प्रसङ्गस्य दर्शयति—उक्तेनेति ॥ P. 84-22.

कारिकाविवरणम्

मा नाम भूत् प्रामाण्याय विध्यपेक्षा, पदार्थसंसर्गाय तु विधिरपेक्ष्यत इति चोदयति—अथेति ॥ P. 84-24.
क्रियाधीनत्वं पदार्थसंसर्गस्य स्वीकृत्य परिहरति—किमायातमिति ॥ हेतुमाह—साऽपीति ॥ ६५ ॥ P.84-25.

ब्रह्मसिद्धिविवरणम्

पदार्थत्वाना(द् ना)मपदार्थानामपि संसर्गप्रयोजकत्वं किं न स्यादिति ? अत्राह—यदि मतमिति ॥ न खलु नामपदार्थानां सिद्ध- P. 85-1.
रूपाणां गुण-प्रधानभावमनापन्नानामन्योन्यनिराकाङ्क्षाणामस्ति समन्वय इत्यर्थः । कुतस्तर्हि पदार्थसंसर्गावगतिः ? अत्राह—क्रिया हीति ॥ P. 85-2.
आख्यातार्थे हि साध्यरूपे सिद्धार्थानां 'भूतं भव्यायोपदिश्यते' इति समन्वये परस्परमपि नामपदार्थानां स कल्पत इत्यर्थः । तत्रापि हेतुमाह–तदभाव इति ॥ मृदं घटमित्यादिषु संसर्गमनवगच्छन्तो न निराकाङ्क्षाः प्रतिपत्तारः । निराकाङ्क्षास्तु कुर्विति प्रयोग इत्यर्थः । क्रिया च विधिविषयत्वाद्विधिनिमित्तेति संसर्गसिद्धये विधिरुपेय इत्याह—अत इति ॥ मा भूत् पदार्थसंसर्गसिद्धिः, किं नश्छिन्नम् ? अस्ति हि

अभिप्रायप्रकाशिका

अप्रामाण्यप्रसङ्गप्रकारं परोक्तं स्मारयति—प्रमाणान्तरेति ॥ इदानीं किलशब्देन सूचितां प्रसङ्गस्याऽऽभासतां दर्शयति—उक्तेनेति ॥ ६३, ६४ ॥

कारिकाविवरणम्

पदार्थानां संसर्गाय विध्यपेक्षेति पक्षमुत्थाप्य दूषयति—अथेत्यादिना ॥ क्रियाऽङ्गीकारेऽपि न विधिर्वाक्यार्थ इत्याह—किमायातमिति ॥ ६५ ॥

भावशुद्धिः

ब्रह्मादिपदेभ्यो ब्रह्मप्रतीतिः, तया च प्रयोजनमिति, अत्राह—
P. 85-3 पदस्येति ॥ अस्तु तर्हि वाक्यस्य गोचर इति, अत्राह—न वाक्येति ॥
P. 85-4 हेतुमाह—तस्येति ॥ स्यात् तर्हि संसर्गात्मकमेकं ब्रह्मैव नित्यान-
न्दादिगुणे(णं) ब्रह्म, न ततोऽन्य इति, अत्राह—क्रियारहितानां चेति ॥
परिहरति—एवमपीति ॥ एतावताऽपि क्रियासिद्धेर्न पुनरस्यापि विषयो
P. 85-6 विधिरित्यर्थः ॥ तस्या विधिमन्तरेण वर्तमानापदेशादावपि भावादिति ।
हेतुमाह—साऽपीति ॥

"अयमात्मा ब्रह्म" इत्यादौ क्रिया न श्रूयते, तत्र कथं
पदार्थसंसर्गः ? तत्राह—अश्रूयमाणाऽपीति ॥ भवती(न्ती)ति लटः संज्ञा
प्राचामाचार्याणाम् । अस्ति धातुर्लट्परः प्रथमपुरुषे निष्पन्नोऽप्रयुज्य-
मानोऽपि गम्यते ; गौरित्येतन्मात्रप्रयोगेऽप्यस्तीति गम्यत इत्यर्थः ॥
P. 85-7 कात्यायनमतेन वेदान्तेऽस्तिक्रियासौलभ्ये प्रकृते किमायातम् ?
तदाह—तत्रेति ॥ एवमपि ब्रह्मास्तिम(त्वं)सिध्येत् ; तद्बोधकत्वाद् वा-
P. 85-8 क्यस्य, न ब्रह्मेति, अत्राह—सत्तायाश्चेति ॥ 'अस्तीत्येवोपलब्धव्यः
इत्यादावस्तिशब्देन सत्सामान्यमुच्यते । तच्च सत् प्रधानं सद्विशेषात्मकं
स्वभावत एव । अतः सत्सामान्यद्वारेण सच्चिदानन्दलक्षणं प्रत्यग्भूतं
ब्रह्म वाक्यात् सिध्यति, किमत्र विधिनेत्यर्थः ॥

प्रमाणविषयत्वमस्तित्वम्, एवं च ब्रह्माऽस्तीति किमुक्तं भवति ?
प्रमाणगोचर इति । तत्र चेद् न ब्रह्मणि प्रमाणमस्ति, मिथ्यात्वापातः ।
अथाऽस्ति मानान्तरापेक्षत्वमित्युभयथाऽप्यप्रामाण्यप्रसङ्गपरिहाराय
P. 85-10 विधिरर्थनीय इति चोदयति—अत्राहुरिति ॥ द्रव्य-गुण-कर्मणां परं सामान्यं
सत्तेति, अत्राह—तथाहीति ॥ [स[1]द्बुद्धि-व्यवहारयोर्मानसम्बन्धनिबन्ध-
नत्वेनान्यथासिद्धत्वाद् न सामान्यसत्तायामस्ति मानमित्यर्थः।] उभ-
P. 85-12 यसिद्धमानसम्बन्धादेव सद्बुद्धि-व्यवहारसिद्धौ नातिरिक्तं सत्त्वं कल्पनी-

अभिप्रायप्रकाशिका

ब्रह्मसिद्धिविवरणम्

प्रवृत्तिफलसिद्धये साध्यक्रियाऽध्याहर्तव्या, ततः स एव विधिरायात
इत्याशङ्क्य मैवम्; अध्याहाराभावादित्याह—साऽपीति ॥ ६५॥

1. कुण्डलितो भागो B. पुस्तके नास्ति ।

भावशुद्धिः

यम्, गौरवादित्याह—न खल्विति ॥

अर्थक्रियाकारित्वमेव सत्त्वमिति सौगतश्चोदयति—अर्थक्रियेति ॥ कार्यास्तित्व - नास्तित्वयोर्मानगम्यत्वागम्यत्वव्यतिरेकेन(णा)सत्त्वाद् नैवमित्याह—नेति । अर्थक्रियायामस्तीतिधीव्यवहारश्च कार्यान्तरनिबन्धनः? मानान्तरसम्बन्धनिबन्धनो वा? नाद्य इत्याह—तथाहीति ॥ P. 85-13
अतो द्वितीयकल्पोऽङ्गीकार्य इत्याह—तस्मादिति ॥ अर्थक्रियायां सद्बुद्धि- P. 85-14
व्यपदेशयोर्मानसम्बन्धनिबन्धनत्वे सर्वत्रैव तथाऽस्तु, लाघवादित्याह—
एवं चेति ॥ न चैवमनवस्था; त(स)द्रूपस्य स्वयंप्रकाशस्य मानान्तरान- P. 85-15
पेक्षत्वादित्याशयः । अस्त्यर्थनिष्ठत्वे वचसः सापेक्षत्वेनाप्रामाण्यं स्या-
दिति निगमयति—तथाचेति ॥ तदेतद् दूषयति—अत्रोच्यत इति ॥ ६५ ॥ P. 85-16

अभिप्रायप्रकाशिका

ब्रह्मादिरित्यादिशब्देन स्वर्ग-देवतादयो गृह्यन्ते । शब्दगोचरत्वे किं पदविषयत्वम्? उत वाक्यविषयत्वम्? इति विकल्प्य क्रमेण दूषयति—पदस्येत्यादिना ॥

उत्तरार्धं व्याचष्टे—एवमपीति ॥ पदार्थसिद्धिः=संसृष्टपदार्थानां सिद्धिरिति यावत् । प्रसिद्धफलसिद्धये साध्यैव क्रियाऽभ्युपेया, ततश्च विध्यनुप्रवेश इति, अत आह—सा चेति ॥

तत्र न्यायप्रदर्शकं सूत्रमाह—अस्तिरिति ॥ का तर्हि ब्रह्मवाक्येषु क्रियेति? अत आह—तत्रेति ॥ तर्हि कथं विवक्षितवस्तुसिद्धिः; अस्तिक्रियानिष्ठत्वाद्वाक्यस्येति? अत आह—सत्तायाश्चेति ॥ भावस्वभावताया एव भवितृनिष्ठत्वात् तत्प्रतिपादने तत्सामर्थ्यादेव तद्विशिष्टं वस्तु सिध्यत्येवेत्यर्थः ॥

सत्तापलापवादिनां प्राभाकराणां मतमुत्थापयति—अत्राहुरिति ॥ सामान्य-तदभावौ तद्व्यवहारहेतू किं न स्यातामिति? अत आह—न खल्विति ॥ तदभावेऽपि समवायादिषु तद्व्यवहारदर्शनान्नैवमिति भावः ॥

अत्र शाक्यः शङ्कते—अर्थक्रियेति ॥ सत्तालक्षणस्यार्थक्रियारूपस्यार्थक्रियान्तरासम्भवात्, प्रमाणगम्यत्वमेव सत्त्वमास्थेयम्, एवं च सर्वत्र तदेवास्तु सत्त्वमित्याशयेन परिहरति—न तयोरपीति ॥ तथापि प्रस्तुते भूतार्थनिष्ठस्य वचसः प्रमाणान्तरसापेक्षत्वे किमायातमिति? अत आह—तथाचेति ॥६५॥

ब्रह्मसिद्धिकारिका

न च मानावगम्यत्वमस्तीतिविषयो मतः ।
मानादेव यतो बुद्धिरभूदस्ति भविष्यति ॥ ६६ ॥
धूमादिना मिते हि स्याद् वह्न्यादावियमन्यथा ।
भिद्येतोत्तरकाले वा भवन्ती न खलु त्रिधा ॥ ६७ ॥

---

कारिकाविवरणम्

प्राक्प्रवृत्तमानावगम्यत्वमस्त्यर्थः ? वर्तमानमा-
P. 85-17 नावगम्यत्वं वा ? नाद्य इत्याह—न चेति ॥ न
प्राक्सिद्धप्रमाणगम्यत्वमस्तीतिबुद्धि-व्यपदेशयोर्विषय
P. 85-18 इत्यर्थः । हेतुमाह—मानादेवेति ॥ व्यतिरेके दण्डमाह—
P. 85-19 धूमादिनेति ॥ निर्विकल्पकेन वस्तुन्यालोचिते तत्पृष्ठभावी
'सदि'तिविकल्पोऽनन्तरोत्पन्ननिर्विकल्पकप्रमासम्बन्धम-
स्य गोचरयेत्, कथं न प्रमासम्बन्ध इति ? अत्राह—
P. 85-20 भिद्येतेति ॥ मानसम्बन्धस्याभेदादित्यर्थः ॥ ६६, ६७ ॥

ब्रह्मसिद्धिविवरणम्

प्रमित एव सद्बुद्धिव्यवहारनियमात् कथं प्राक्प्रवृत्तमानाव-
P. 85-21 गम्यत्वमस्त्यर्थो न भवतीत्याशङ्क्य व्याकरोति—न प्रमाणेति ॥

अभिप्रायप्रकाशिका

कारिकाविवरणम्

अस्तीतिविषय इति=अस्तीतिबुद्धेर्विषय इत्यर्थः । प्रमाण-सम्बन्धः किमतिवृत्तोऽस्त्यर्थः, किं वा वर्तमानः ? न तावदाद्य इत्याह—मानादेवेति ॥ वृत्तप्रमाणसम्बन्धमनपेक्ष्य वस्तुनि प्रथमवृत्तेनैव मानेन कालत्रयसम्बन्धिनोऽस्तित्वस्यावगमादित्यर्थः। एतदेव व्यतिरेकमुखेन स्पष्टयति—धूमादिनेति ॥ अन्यथा प्रमाणसम्बन्धो निवृत्तश्चेदस्तित्वम्, तर्हि धूमादिनाऽनुमिते वह्न्यादौ पश्चान्मानान्तरेणास्तीति बुद्धिः स्यात्; अननुसंहितोपाधेरुपहितप्रत्ययायोगादित्यर्थः। अङ्गीकृत्यापि दूषयति—भिद्येतेति ॥ प्रमाणसम्बन्धस्यैकरूपत्वात् तस्यैवास्त्यर्थत्वे त्रैविध्यमनुपपन्नमित्यर्थः ॥ ६६. ६७ ॥

ब्रह्मसिद्धिकारिका

स्वसंबन्धितया मानमथ वस्त्वधिगच्छति।

तथापि नैव भिद्येत नेत्थं चान्यव्यपेक्षता ॥ ६८ ॥

भावशुद्धिः

तदेव स्फुटयति—नास्तीति ॥ कुत इति ? अत्राह—यत इति ॥ प्रागप्रमिते च वस्तुनि त्रिविधलिङ्गदर्शना(त्)त्रिकालसम्बन्धिसत्तारूपिता बुद्धिः—वृष्टिरासीत् वृष्टिर्भविष्यति, पर्वतेऽग्निरस्तीति भवतीत्यर्थः। मानादेव तथा भवन्ती सत्ताधीर्मानसम्बन्धविषयेति, अत्राह—तत्रेति ॥ P. 86-1
प्रमाणफलत्वात्। तस्मादेव कुतो न स्यादिति ? अत्राह—न हीति ॥ P. 86-2
सम्बन्ध्यधीनत्वात् सम्बन्धस्येत्यर्थः। मा भूद् मानसम्बन्धः, भविष्यति सत्ताधीरिति, अत्राह—प्रमाणेति ॥ गोचरमन्तरेण भवन्ती भ्रान्तिर्भवेदिति भावः। धूमादिलिङ्गेनाग्न्यादौ मिते पश्चाद् धूमादिलिङ्गादग्न्यादावस्त्यादिधीर्भवति, विषयं विना ज्ञानायोगादिति शङ्कते—अथेति ॥ वैयात्याद्= P. 86-3
धाष्टर्यादित्यर्थः। एवमपि नाभिमतसिद्धिः; त्रैविध्यानुपपत्तेरिति दूषयति—त्रैविध्यमिति ॥ मेयार्थानां भिन्नकालत्वात् तत्सत्त्वबुद्धिस्त्रि- P. 86-4
विधेति, अत्राह—प्रमाणेति ॥ ६६, ६७ ॥

कारिकाविवरणम्

वर्तमानावगम्यत्वमस्त्यर्थ इति द्वितीयकल्पमुत्थापयति—स्वसम्बन्धितयेति ॥ तथापीति ॥ अस्तीत्येकरूपैव P. 86-5
स्यादित्यर्थः। प्रमाणेनात्मसम्बन्धोऽर्थोऽस्तीति प्रतीयत

अभिप्रायप्रकाशिका

ब्रह्मसिद्धिविवरणम्

अस्त्यर्थ इत्येतद्व्याचष्टे—नास्तीति ॥ अस्तीतिबुद्धेर्न विषय इत्यर्थः।

द्वितीयश्लोकं व्याचष्टे—तत्र यदीति ॥ न प्रमाणादेवेति ॥ प्रथमवृत्तादिति शेषः। तत्र हेतुमाह—न हीति ॥ पूर्वमस्तीति बुद्धिनिमित्तस्योपाधेरभावादित्यर्थः ॥

सदिति सविकल्पकप्रत्ययस्य पूर्ववृत्तनिर्विकल्पकप्रत्यक्षसम्बन्धोत्तरकालीनत्वादस्त्येव पूर्वप्रवृत्तमानमित्याशङ्क्य, मैवम्; निर्विकल्पकस्यापि स्वाभावव्यावृत्तसद्वस्तुविषयत्वादित्यभिप्रायेणोत्तरार्धं व्याचष्टे—अथेति ॥ प्रमाणसम्बन्धस्याभेदात्=एकरूपत्वादिति यावत् ॥ ६७ ॥

ब्रह्मसिद्धिकारिका

अन्यमानावगम्यत्वमथ लिङ्गात् त्रिधेक्ष्यते ।
स्याद् लिङ्गमपि सापेक्षं तत्सिद्धेस्तत एव चेत् ॥६९॥
नैरपेक्ष्यं यदि न तद्भेदे दण्डैर्निवार्यते ॥ ६९½ ॥

भावशुद्धिः

P. 86- 6 इति स्वीकारे, अस्त्यर्थनिष्ठे वचसि न मानान्तरापेक्षा स्यादित्याह—नेत्थं चेति ॥ ६८ ॥

ब्रह्मसिद्धिविवरणम्

P. 86- 7 'धूमादिना मिते हि' इति यदुक्तम्, तत्परिहारं चोदयति—अथेति ॥
P. 86- 8 हेतुमाह—प्रमाणसम्बन्धेति ॥ दूषयति—एवमपीति ॥ तत्रापि हेतुमाह—
P. 86- 9 सर्वस्येति ॥ अस्त्यर्थनिष्ठवाक्यस्य सापेक्षत्वपरिहाराय विधिरङ्गीकार्य
P. 86-11 इति यदुच्यते, तदप्येवं सति न स्यादित्याह—न चेत्थमिति ॥ कुत
P. 86-12 इति ? अत्राह—तदिति ॥ ६८ ॥

कारिकाविवरणम्

लिङ्गादन्यमानम्=प्रत्यक्षम्, तद्विषयत्वं सत्त्वं
P. 86-13 लिङ्गगम्यमिति चोदयति—अन्यमानेति ॥ दूषयति—
P. 86-14 स्याद् लिङ्गमिति ॥ तदपि हि 'गिरिर्वह्निमान्' इति वर्तमानमग्निसत्ताविशिष्टगिरिगोचरम्, सत्ता च प्रत्यक्षविषयतया, इति सापेक्षतया स्यादप्रमाणमित्यर्थः । चोदक आह—तत्सिद्धेरिति ॥ तत एव=लिङ्गादेव, प्रत्यक्षसिद्धेर्नैरपेक्ष्यं लिङ्गस्य । 'चेदि' ति निश्चयेऽपि प्रयुञ्जते वृद्धाः ॥

"ईजाना बहुभिर्यज्ञैर्ब्राह्मणा वेदपारगाः ।

अभिप्रायप्रकाशिका

कारिकाविवरणम्

द्वितीयं कल्पमुत्थाप्य दूषयति—स्वसम्बन्धितयेति ॥ अस्मिन् पक्षे पूर्वोक्तोऽपि दोषो न भवेदित्याह—नेत्थमिति॥६८॥

ब्रह्मसिद्धिविवरणम्

तृतीयपादं व्याचष्टे—एवमपीति ॥ मानप्रवृत्तौ सत्यां तत्सम्बन्धस्य सर्वत्र वर्तमानत्वात्, 'अभूत्, अस्ति, भविष्यति' इति भेदो न भवेदित्यर्थः । चतुर्थपादं व्याचष्टे—न चेत्थमिति ॥ ६८ ॥

भावशुद्धिः

शास्त्राणि चेत् प्रमाणं स्युर्यातास्ते परमां गतिम् ॥"

इति । परिहरति—न तदिति ॥ ६९, ६९½ ॥ P. 86-17

ब्रह्मसिद्धिविवरणम्

अस्त्यर्थनिष्ठवाक्यस्य निरपेक्षत्वस्थितौ कथमेतत्कारिकोत्थानम् ? इत्याशङ्क्य व्याचष्टे—अथ मतमिति ॥ अनुमानबुद्ध्युत्तरकालीनाऽनुमानबुद्धिर्न भवति, किन्त्वन्यमानापेक्षयैव = उत्तरकालैवेत्यर्थः । न त्रैविध्यमित्येतदपि परिहृतमित्याह—तच्चेति ॥ P. 86-18 P. 86-19

गूढाशयः सिद्धान्ती पृच्छति—किं पुनरिति ॥ पर आह—प्रत्यक्षमिति ॥ अनुमेयप्रत्यक्षस्वीकारे स्यादनुमानवैयर्थ्यमिति, अत्राह—तथाहीति ॥ एवमप्यर्थे लिङ्गस्य निरपेक्षतया प्रामाण्यं न स्यादिति दूषयति—एतच्चेति ॥ दोषान्तरमाह—नित्यानुमेय इति ॥ स्वभावविप्रकर्षवतीन्द्रियादौ तस्य=प्रत्यक्षस्याभावात् सद्बुद्धिर्न स्यादित्यर्थः ॥ P. 86-21

तदपि कस्यचिदपि प्रत्यक्षम्, प्रमेयत्वात्; घटवदिति, अत्राह—अपि चेति ॥ प्रत्यक्षता ह्यस्मदादीन्द्रियग्रहणार्हतया स्वयमप्रकाशमानस्य व्याप्त्या, सा च स्वभावविप्रकर्षिणो निवर्तमाना तावपि निवर्तयति अङ्गीकृत्यापि दूषणान्तरमिति द्रष्टव्यम् ॥

लिङ्गस्य सापेक्षत्वपरिहारं शङ्कते—अथेति ॥ निरपेक्षत्वं लिङ्गस्येति शेषः । लिङ्गं वृष्ट्यादौ मानम्, न प्रमाणान्तर इति, अत्राह—तथाहीति ॥ किमेतावतापीति ? अत्राह—न चेति ॥ कथं तर्ह्यनुमानानन्तर- P. 86-22 P. 86-24

अभिप्रायप्रकाशिका

कारिकाविवरणम्

स्वस्यैव=प्रमाणस्यातिवृत्तः सम्बन्धः सत्त्वमित्यङ्गीकृत्य दूषणमुक्तम्, इदानीमन्यप्रमाणसम्बन्धोऽस्तित्वमिति पक्षान्तरमुत्थाप्य दूषयति—अन्यमानेति ॥ सापेक्षत्वं परिहरन् शङ्कते—तत्सिद्धेरिति ॥ 'शास्त्राणि चेत् प्रमाणं स्युः' इत्यादौ चेदिति पाठे तु न पौनरुक्त्यशङ्काऽपि । परिहरति—न तदिति ॥ ६९, ६९½ ॥

ब्रह्मसिद्धिविवरणम्

किं पुनस्तत् ? इति सिद्धान्ती पृच्छति—किमिति ॥ उत्तरमाहेतरः—प्रत्यक्षमिति ॥ श्लोकाद्बहिरेव परिहारमाह—नित्येति ॥

प्रमाणसद्भावस्य प्रमेयत्वाच्चात्र नान्यापेक्षेति शङ्कते—अथेति ॥

ब्रह्मसिद्धिकारिका

तत्संभवो लैङ्गिकेऽर्थे बुद्धवाक्यार्थवन्न तु ॥ ७० ॥
अत्रेति साक्षात्करणाभ्युपायादसमञ्जसम् ॥ ७०½ ॥

---

भावशुद्धिः

मर्थे व्यवहार इति ? अत्राह—प्रमाणेति ॥ मानसम्बन्धस्यातीन्द्रियत्वाद्
P. 87-1 न तेन व्याप्तलिङ्गग्रहणमस्ति । स्वीकृत्यापि परिहारमाह—नायमिति ॥
तदेव स्फोरयति—वैदिकमपीति ॥ सत्य-ज्ञानादिरूपं ब्रह्म तर्हि न सिध्येत् ;
P. 87-2 वाक्यस्यातद्गोचरत्वादिति, अत्राह—तत्प्रमाणेति ॥ ६९, ६९½ ॥

कारिकाविवरणम्

P. 87-5 लिङ्गसाम्यं वेदान्तानामसहमानश्चोदयति—
तत्सम्भव इति ॥ अत्र=ब्रह्मणि तु न प्रमाणान्तरसम्भवः, यथा बुद्धवाक्यार्थ इति चोद्यमसञ्जसम् । साक्षात्करणाभ्युपायात्=स्वरूपानुभवस्य मानान्तरस्य स्वीकारादित्यर्थः ॥ ७०, ७०½ ॥

ब्रह्मसिद्धिविवरणम्

लिङ्गम्, साक्षादर्थे प्रमाणम्, प्रमाणत्वात्; अध्यक्षवदित्या-
P. 87-7 शङ्क्य पूर्वपक्षभागं व्याचष्टे—स्यान्मतमिति ॥ मानान्तरद्वारेणार्थे प्रामाण्यमिति यावत् । प्रदर्शितप्रयोगे वि(प)क्षा(क्षे)बाधकाभाव इति भावः । कुत इति ? अत आह—तस्येति ॥

सम्भवं स्पष्टयति—सम्भवतीति ॥ ब्रह्म, कस्यचित् प्रत्यक्षम्, वस्तुत्वात्, घटवदिति, अत्राह—न तु सर्वेति ॥ ब्रह्मालौकिकतया प्रमाणा-

अभिप्रायप्रकाशिका

कारिकाविवरणम्

प्रमाणान्तरसद्भावे चेल्लिङ्गं प्रमाणम्, कथं तर्हि प्रमेयसिद्धिरिति ? अत आह—प्रमाणेति ॥ ६९, ६९½ ॥

वेदान्तवाक्यानां ब्रह्मणि प्रमाणान्तरसद्भावे प्रामाण्यं न सम्भवति, इति तत्र प्रमाणान्तरस्याभावादिति शङ्कामुत्थाप्य, तत्रापि तत्साक्षात्कारणं प्रमाणं सम्भवतीति परिहरति-तत्सम्भव इति । अभ्युपायात्=अभ्युपगमादिति यावत् ॥ ७०, ७०½ ॥

भावशुद्धिः

न्तरगोचरः, इति तदस्तितानिष्ठा वेदान्ता न प्रमाणं स्युः, मानान्तरगोचरत्वे वा ब्रह्मणो नाऽऽम्नायैकनिबन्धनत्वमित्यर्थः ॥

"वृद्धवाक्यार्थवदि"ति दृष्टान्तं विवृणोति—तत्र यथेति ॥ यथा खल्वलौकिकार्थे वृद्धवाक्यं वृद्धप्रत्ययानुमानद्वारेणापि नार्थस्य निश्चायकम् । अशक्यं ह्यलौकिकं वृद्धेन ज्ञातुम्; ऋते प्रमाणान्तरात् । न च तत् प्रमाणान्तरगोचर इत्यर्थः । व्यतिरेकद्वारेण तदुपपादयति—अतीन्द्रियार्थेति ॥ तथापि वक्तृप्रत्ययानुमानद्वारेणापि स्यात् । न चातीन्द्रियार्थदर्शिनः सन्ति; व्याघातादित्यर्थः । लिङ्गस्य मानान्तरविषयत्वे सापेक्षत्वेऽर्थे स्यादमात्वमिति, अत्राह—संभवत्प्रमाणेति ॥ P. 87 8 P. 87-9

दूषयति—तदसदिति ॥ अविद्यानिवृत्तौ स्वतोऽपरोक्षं ब्रह्मेत्यर्थः । शाब्दज्ञानव्यतिरेकेण स्वरूपज्ञाना(त्?)सिद्ध्यभ्युपगमे वेदैकगम्यत्वं ब्रह्मणो न सिध्येत्, अत्राह—अविद्यावतां त्विति ॥ ७०, ७०½ ॥ P. 87-12

किंच मीयमानतायां सत्तायां प्रत्यक्षमपि लिङ्गेन मीयमानं वर्तमानमेवेति तद्द्वाण(रेण)नार्थस्य त्रैविध्यम्; वर्तमानतैव स्यादित्याह—अपिचेति ॥ P. 87-14

त्रिविधलिङ्गदर्शनात् त्रिविधं प्रत्यक्षं गम्यत इत्युक्तं दूषयितुमनुवदति—यदि चेति ॥ दूषयति—तत्रेति ॥ सदपि प्रमाणं कालत्रयावच्छेदात् त्रिविधमिति, अत्राह—सच्चेति ॥ प्रमाणत्रैविध्यं निराकृत्य तदधीनमेव त्रैविध्यं निराकरोति—तत्रेति ॥ तत्रार्थ इत्यन्वयः । उक्तमेव हेतुं संक्षिप्याऽऽह—मीयमानस्येति ॥ P. 87-15 P. 87-16 P. 87-17

मानयोगः सत्त्वम्, इति प्रकृते वर्तमानप्रमायोग इति कथमुक्तकारिकया तद्विशेषानुवाद इत्याशङ्क्य विकल्पपुरस्सरतामवतारयितुमाह—अपि चेति ॥ मात्रशब्दार्थं विशदयति—अनाश्रितकालेति ॥ P. 87-18

अभिप्रायप्रकाशिका

ब्रह्मसिद्धिविवरणम्

कथं तर्हि लिङ्गस्य प्रामाण्यमिति? तत्राह—ब्रह्मणीति॥ कथं तर्हि आम्नायैकसमधिगम्यत्वमिति? तत्राह—अविद्यावतां त्विति ॥ ७०, ७०½॥

ब्रह्मसिद्धिकारिका

मेयत्वमेव सत्ता चेन्माने त्रिविधता कुतः ॥ ७१ ॥
तत्संबन्धादतो नार्थे त्रैविध्यमवकल्पते ॥ ७१½ ॥
वर्तमानप्रमायोगः सत्त्वऽसत्ता विपर्ययः ॥ ७२ ॥
मते यदि ततः प्राप्तमसत्त्वं स्मृतिगोचरे ॥ ७२½ ॥

भावशुद्धिः

आद्यमनुवदति—तत्रेति ॥ विपर्ययः=मानयोगाभावः=असत्त्वेत्यर्थः ॥ ७१, ७१½ ॥

P. 88-1 प्रमितस्यैव स्मर्यमाणत्वात् कथं सत्त्वमिति ? अत्राह—नः[1]हीति ॥ स्मृतेरप्रमाणत्वेन तद्गोचरो न वर्तमानप्रमाणगोचरः, अपितु निवृत्तप्रमाणगोचर इत्यर्थः ॥

स्मर्यमाणस्य सत्त्वप्रसञ्जनमिष्टापादनमिति चोदयति—
P. 88-2 नन्विति ॥ अनष्टस्यापि स्मृतिरस्ति, न तु नष्टस्यैवेत्याह—सत्यमिति ॥ क्वचित्सदपि स्मर्यताम्, किं नश्छिन्नमिति ? अत्राह—यदीति ॥ तर्हि त्वन्मते स्मर्यमाणे न नास्तीत्येव व्यवहारः स्यात्, न च तथाऽस्तीत्यर्थः। यस्मादव्याप्तिः ; अतः वर्तमानप्रमाणसंबन्धासम्बन्धा-
P. 88 3 भ्यामन्ये सदसत्त्वे स्यातामित्याह—तस्मादिति ॥ ७२, ७२½ ॥

अभिप्रायप्रकाशिका

मानमेव लिङ्गेन प्रमेयमित्यस्मिन् पक्षे मानस्य भूतादिरूपेण त्रैविध्यासम्भवाद् मेयेऽपि त्रैविध्यमनुपपन्नमित्याह—अपि चेति ॥ भवतु सत्यम्, तथापि कथं त्रैविध्याभाव इति ? तत्राह—सच्चेति ॥ ७१, ७१½ ॥

उत्तरश्लोकं विकल्पोत्तरत्वेनावतारयितुं विकल्पयति—अपि चेदमिति ॥ योगपदं व्याचष्टे—प्रमाणसम्बन्ध इति ॥ स्मर्यमाणस्य कथमसत्त्वप्राप्तिः ? इति, अत आह—न स्मर्यमाणस्येति ॥

अस्तित्वमपि स्मर्यमाणस्य न नियतमिति शङ्कते—नन्विति ॥ तथापि स्मर्यमाणस्य क्वचिदप्यस्तित्वं न स्यादिति दूषयति—सत्यमिति ॥ तथापि कथमनिष्टम् ? इति, अत आह—यदीति ॥ कथम् 'अस्ति' 'नास्ति'इति व्यवहार

1. नेति मूलपाठः

ब्रह्मसिद्धिकारिका

प्रमाणयोगमात्रं चेत् सत्ताऽसत्ता विपर्ययः ॥ ७३ ॥
प्राप्ता प्रमितनष्टेन घटेन मधुधारणा ।
प्रमिते च न जिज्ञासा पुनः स्यात् सदसत्त्वयोः ॥७४॥

---

भावशुद्धिः

कारिकाविवरणम्

द्वितीयकल्पमनुवदति—प्रमाणेति ॥ अतिव्याप्त्या दूषयति—प्राप्तेति ॥ बाधकान्तरम्—प्रमिते चेति । कदाचित् प्रमितं कालान्तरेऽस्ति, न वेति न जिज्ञासेरन्नित्यर्थः ॥ ॥ ७३, ७४ ॥

ब्रह्मसिद्धिविवरणम्

नष्टेन मधुधारणेति कथमुक्तम् ? असतोऽर्थक्रियासामर्थ्यविरहा-
दिति, अत्राह—अनाश्रितकालेति ॥ अविशेषादित्यसिद्धो हेतुरित्याह— P. 88-8
नष्टानष्टयोरिति ॥ सत्तासंबन्ध-तदभावलक्षणविशेषादित्यर्थः । P. 88-9

तर्ह्यर्थस्वभावः सत्ता सद्बुद्धिव्यवहारहेतुः, तदभावोऽसद्व्यवहार-
निबन्धनः, इत्यस्मदिष्टसिद्धिरित्याह—स एवेति ॥ उदाहरति— P. 88-10
कार्येति ॥ नष्टानष्टयोरर्थक्रिया-तदभावव्यवस्थाहेतुत्वं यथेत्यर्थः ।
सदसद्व्यवहारव्यवस्था सत्तासंबन्धासंबन्धनिबन्धना, दृश्यते चेत्याह—
तदनुसारिणीति ॥ हेतुमाह—न खल्विति ॥ उपचारः=शब्दप्रयोगः । P. 88-11
जिज्ञासोत्तरकालं यत्र सत्त्वनिश्चयः, तत्र प्रमाणसंबन्धः सद्व्यवहार- P. 88-12
हेतुरिति, अत्राह—किं चेति ॥ ७३, ७४ ॥

अभिप्रायप्रकाशिका

सारित्वादप्युक्तविशेषणस्यैव सदसद्व्यवहारव्यवस्थापकत्वमभ्युपेयमित्याह—
तदनुसारिणीति ॥ तदुपपादयति—न खल्विति ॥ ७३, ७४ ॥

ब्रह्मसिद्धिकारिका

अथ प्रमाणयोग्यत्वं सत्त्वं नष्टाच्च तच्च्युतम् ।
स्मर्यमाणे प्रचलितं क्वचिदित्यप्यसुन्दरम् ॥ ७५ ॥

---

कारिकाविवरणम्

P. 88-14 परश्चोदयति—अथेति ॥ न चैवं सति प्रमित-नष्ट-
घटेन मधुधारणाप्रसक्तिरित्याह—नष्टाचेति ॥ धर्मिण्य-
सति धर्मासंभवात् । नापि स्मर्यमाणस्य ; अभाव-
P. 88-15 निश्चयाद्, न सन्देह इत्याह—स्मर्यमाण इति ॥
प्रचलितम्=व्यभिचारः, ततः संशयो युक्त इत्यर्थः ।
P. 88-16 दूषयति—इत्यपीति ॥ ७५ ॥

ब्रह्मसिद्धिविवरणम्

मानयोग्यतायां योग्यतान्तरस्वीकारेऽनवस्था, तदस्वीकारे
P. 88-17 योग्यतैव न स्यादित्याशङ्क्य व्याचष्टे—अथ मतमिति ॥ स्व-परनिर्वा-
P. 88-20 हिका योग्यतेत्याशयः ॥ दूषयति—एतदपीति ॥

सिद्धान्तहानिं साधयति—तथाहीति ॥ कथं तद्वर्णनमिति? अत्राह—प्रमाणयोग्य इति ॥ न तावद्योग्यतामात्रं सत्त्वम् ; तदतीन्द्रियत्वाद-परोक्षव्यवहारविरोधात्, किंतु यस्य योग्यता, अर्थस्वभावः

अभिप्रायप्रकाशिका

कारिकाविवरणम्

उक्तदोषपरिजिहीर्षया लक्षणान्तरमाशङ्क्य निराक-रोति—अथ प्रमाणेति ॥ ७५ ॥

ब्रह्मसिद्धिविवरणम्

नष्टस्य नार्थक्रियाकारित्वप्रसक्तिरित्याह—सा चेति ॥ स्मर्यमाणस्य न नियमेनासत्त्वप्रसक्तिरपीत्याह—स्मर्यमाणाचेति ॥ अभ्युपगतहाना-दिति ॥ प्रमाणोपाधिकः सच्छब्द इति सिद्धान्तः, स भज्येत ; योग्यत्वस्या-र्थस्वभावत्वादित्यर्थः ॥

भवत्वर्थस्वभाव एव सत्ता, सद्व्यवहारस्तु प्रमाण-तदभावोपाधिकः किं न स्यादिति? अत आह—अर्थस्वभावेति ॥ प्रमाणसम्बन्धे सत्येव सदिति व्यपदेशात् प्रमाणोपाधिकमेव सत्त्वमिति, अत्राह—तस्य त्विति ॥ प्रमाण-संस्पर्शः । सत्तेति शेषः ॥

यद्वा—प्रमाणयोग्यत्वं सत्त्वमिति ॥ प्रमाणेन विशेषणेन योगः=

भावशुद्धिः

सत्तेत्यर्थः। कुतस्तर्हि प्रमाणयोग्यतोपन्यास इति ? अत्राह—तस्य P. 88-22
त्विति ॥ न प्रमाणसंस्पर्शन एव सत्तेत्यर्थः। अत्रैव निदर्शनमाह—यथेति ॥
तथाच प्रमाणस्या(पि ?) निवेशान्न सापेक्षता ब्रह्मस्वभावसत्तानिष्ठा- P. 88-24
नामपि वेदान्तानामित्याह—तथाचेति ॥

अर्थस्वभावत्वेऽपि नैका सत्ता सिध्यति; भिन्नानामपि तत्स्व-
भावानां खण्ड-मुण्डादीनामुपलम्भादिति चोदयति—स्यादेतदिति ॥ P. 89- 2

परिहरति—मा भूदिति ॥ किं तर्हि भवतां साध्यमिति ? P. 89- 3
तदाह—सर्वथेति ॥ अर्थस्वभाव एको वाऽस्तु, नाना वा, सर्वथा
मितशब्दो न मानयोगनिमित्त इत्येतावन्मात्रं साध्यमित्युक्तम्। अत्र
हेतुमाह—प्रमाणेति ॥ अस्त्यर्थनिष्ठवाक्यानामिति शेषः। एकत्वस्या- P. 89- 4
साध्यत्वे हेतुमाह—अनेकतेति ॥ P. 89- 5

अर्थस्वभावसत्त्वस्यानेकत्वं न शब्दस्य सापेक्षत्वेनाप्रामाण्यं
प्रापयतीत्यर्थः ॥ प्रकृतार्थविरोधाभावेऽपि स्वसिद्धान्तविरोधो वेदान्त-
वादिनोऽर्थस्वभावभेद इत्याशङ्क्य, स एव न सिध्यति; व्यपदेशानु-
गमायोगादित्याह—अपिचेति ॥ उक्तमुपपादयितुं विकल्पयति—
तथाहीति ॥ आकाश-कालादिशब्दैः साक्षान्नियतव्यक्तिनिवेशिभिः P. 89-6

अभिप्रायप्रकाशिका

प्रमाणसम्बन्धः परित्यक्त इति, तत्राह—तस्येति ॥ प्रमाणयोग्यतेत्यस्य प्रमाणं (नस्य) शाखाग्रे चन्द्र इतिवदुपलक्षणत्वान्न सत्तास्वरूपान्तर्भाव इति भावः। अतदुपाधिकस्यापि शब्दस्य तत्कथनोपायतायां दृष्टान्तमाह—यथेति ॥ तथापि प्रकृते किमायातमिति ? अत आह—तथाचेति ॥

तथापि न क्वचिदभिमतसत्ता सिध्यतीति शङ्कते—स्यादेतदिति ॥ भिन्नत्वेऽपि प्रकृतं सापेक्षत्वं परिहृतमित्यभिप्रेत्य परिहरति—मा भूदिति ॥ किं तर्हि साध्यमिति ? अत आह—सर्वथेति ॥ किमर्थं तत् साध्यत इति ? अत आह—प्रमाणसंस्पर्शे हीति ॥

प्रकृतदोषाप्रसंजकत्वेऽप्यद्वितीयकत्वव्याघातकत्वान्निराकार्यमेवानेकत्व-मिति, अत आह—अपि चेति ॥ काऽनुपपत्तिरिति ? अत आह—तथाहीति ॥ अत्र विशेषणं नामायुतसिद्धं गोत्वादि, उपलक्षणं तु दण्ड-कुण्डलादि विवक्षितम्,

भावशुद्धिः

सच्छब्दस्य नैमित्तिकप्रवृत्तेरसाधर्म्यमिति नैमित्तिकप्रवृत्तीरेव तेन सह
P. 89- 7 (धर्मिणो[1] विचारयति—भिन्नेष्विति ॥ विशेषणं गोत्वादि तत्स्वरूप-
निवेशेन व्यक्तिमनुरञ्जयति। अयुतसिद्धं हि तत्, उपलक्षणं तु दण्ड-
कुण्डलादि कुण्डलिनः कण्ठादेः पृथगाश्रयत्वेन पृथक् इति सत्त्वेन,
असत्त्वेन वा युतसिद्धं न कण्ठादीनात्मनिवेशेनानुरञ्जयति, किन्तूपल-
क्षयति; एतद्बाह्यो व्यवच्छेदादिति। भिन्नानि निमित्तानि) यस्य सा
(सः,)भिन्ननिमित्तः। उदाहरति—अक्षेति ॥ यथाऽक्ष(य?)शब्दो पि
(वि)देत्वेवे(वने)न्द्रियत्व विभीतकत्व-निमित्तो विदेवनेन्द्रिय-विभीत-
कानां साधारण इत्यर्थः। आदिपदेन गवादिपदावरोधः। साधारण-
P. 89-8 शब्दतां दूषयति—तत्रेति ॥ तत्पदस्य साधारणत्वासिद्धौ हेतुमाह—
P. 89- 9 संबन्धग्रहणेति ॥ दृष्टान्तं विघटयति—परिमितेति ॥ विभीतकत्व-विदेव-
नत्वेन्द्रियत्वरूपजातित्रयस्य शक्यग्रहत्वात् तद्विषयाः, तदुपलक्षित-
विशेषविषया वा स्युरित्यर्थः ॥

द्रव्यत्व-गुणत्व-कर्मत्व-सामान्यत्रयोपलक्षिता यथायथं सच्छब्दा-
स्पदं पृथिव्यादयो भविष्यन्ति, किमेकसत्त्वसामान्यस्वीकारेणेति
P. 89-10 चोदयति—स्यादेतदिति ॥

P. 94-11 दूषयति—तन्नेति ॥ विशदतरपूर्वावमर्शाभावेन खल्वयं सत्ता-
सामान्यमपह्नुवानो द्रव्यत्वादिसामान्यमपि न रोचत एव। तत्र हेतुमाह—
P. 89-12 नेति ॥ विशदपूर्वावमर्शाभावाविशेषादित्यर्थः। सामान्यत्रयोपलक्षितानां

अभिप्रायप्रकाशिका

त्रिधा निमित्ताभावात् सामान्यमेव निमित्तमिति दर्शयितुं प्रथमं साधारण-
शब्दतां निराकरोति—न तावदिति ॥ यथा शकटाक्षविभीतकादिव्यक्ती-
नामानन्त्येऽप्यक्षादिशब्दाः, तथेहापि किं न स्यादिति ? अत आह—
परिमितेति ॥ अस्तु तथा जातेः शब्दार्थत्वपक्षे व्यक्तिशब्दार्थवादिनां यादृशी
गतिः, तादृशी भविष्यतीति, अत आह—परिमितोपलक्षणेति ॥

अत्रापि परिमितोपलक्षणमस्तीति शङ्कते—स्यादेतदिति ॥ परिहरति
—तन्न; यो हीति ॥ वह्निमुपलभ्य जलमुपलभमानस्य तदेतदिति प्रत्यया-
भावस्य सत्तापलापहेतोः द्रव्यत्वादिष्वपि तुल्यत्वादित्यर्थः। इतोऽपि न
सच्छब्दः साधारणार्थः; त्वदुक्तोपलक्षणाभावेऽपि सच्छब्दस्य प्रयोगदृष्टे-

1. ( ) कुण्डलितो भागः A पुस्तके नास्ति.

भावशुद्धिः

सच्छब्दः साधारण इति वदतः सामान्यादौ सच्छब्दप्रयोगो लौकिको न स्यादित्याह—अपिचेति ॥ सामान्यादेः सत्तयैकार्थसमवायात् तत्र सच्छब्द औपचारिक इति, अत्राह—न तेष्विति ॥ औपचारिकत्वेऽपि प्रयोग- P. 89-13
प्राचुर्यात् प्रत्ययावैलक्षण्यमुपपद्यते, इति योगः परिशु(शि)ष्यति, तं प्रति हेत्वन्तरमाह—न च सामान्यादिति ॥ सादृश्यं वा, सहचरणादि P. 89-14
वोपचार [1](निबन्धनम् ; असति तस्मिन्नुपचारो गौणी, लाक्षणिकी वा वृत्तिः सच्छब्दश्च(स्य)न भवेदित्यर्थः। स्वीक्रियतां तर्हि पूर्वत्रिकोणो- त्तरस्य उत्तरत्रिकस्य) सादृश्यमिति, अत्राह—सति वेति ॥ लाघवात्, अनुगत- प्रत्ययाच्चेत्यर्थः। सत्ता सच्छब्दार्थः, न सादृश्यमिति, अत्राह—तदेव सचेति॥ P. 89-15

अनन्तार्थेषु संबन्धग्रहणसामर्थ्याभावादिति यदुक्तम्, तत्र चोद- यति—अथेति ॥ परिमितैः किल रूप(त्व?)विज्ञानादिभिः पञ्चस्कन्धा

अभिप्रायप्रकाशिका

रित्याह—अपि चेति ॥ न मुख्यसच्छब्दवाच्यत्वं सामान्यादाविति, अत आह—न तेष्विति ॥ अग्नि-माणवकयोरग्निप्रत्ययस्येव सामान्यादिषु न सदिति प्रत्ययस्य वैलक्षण्यमित्यर्थः। उपचाराङ्गीकारेऽपि न सामान्यापलापः; तेन विनोपचारस्यासम्भवादित्याह—न चेति ॥

न च—विनाऽपि सामान्यममात्यादौ राजोपचारो दृश्यत इति —शङ्कनीयम्; सिंह-देवदत्तयोः क्रौर्य-शौर्यादिसाधारणगुणसम्बन्धवत् तत्राप्यै- श्वर्यादिसाधारणगुणसम्बन्धात्। अथेहापि सत्तासम्बन्धात् व्यक्तिसम्बन्धित्वमुप- चारे निमित्तम्, नैवम्; सम्बन्धस्यानिरूपणात्। न तावद्व्यक्तिसमवायः सम्बन्धः; समवाये समवायान्तराभावेनोपचाराभावप्रसङ्गात्। नापि विशेषण-विशेष्यभावः; अभावेऽपि सद्व्यवहारोप(राप)त्तेः। अत उपचारमिच्छतां षण्णां पदार्थानां स्वरूपसत्त्वमङ्गीकुर्वतां तेषामनुगतं न सत्तासामान्यमपलपनीयमित्यर्थः ॥

सामान्याभावेऽपि सर्वपदानां सङ्ग्राहकधर्मसम्भवात् सच्छब्दस्तदुप- लक्षितानां साधारण इति शङ्कते—अथेति ॥ रूपविज्ञानादिभिः पञ्चस्कन्धाः, चैतन्यदृश्यत्वादिभिः प्रकृतिपुरुषौ वा, द्रव्य-गुणत्वादिभिः षट्पदार्था वा परैरुपसङ्गृहीताः, तदुपलक्षितेषु विनाप्येकं निमित्तं सच्छब्दः साधारणः किं न स्यादिति भावः ॥

1. ( ) कुण्डलितो भागः A पुस्तके नास्ति.

भावशुद्धिः

द्रष्टृत्व–दृश्यत्वाभ्यामात्मानात्मानौ वा, द्रव्यत्वादिभिः षट्पदार्था वोपसंगृहीताः। तेन तत्संगृहीतास्ते न तत्संग्रहोपलक्षितानामप्यनन्ता-
P. 89-17 नामर्थानां सदिति साधारणः शब्द इत्यर्थः। दूषयति—तदयुक्तमिति॥ हेतुमाह—संग्रहो हीति। यथा नरत्वेनैकेनोपसंगृहीताश्चत्वारो वर्णा ब्राह्मणत्वादिधर्मभाजः, तद्वदेते पञ्चस्कन्धादयः पदार्थाः, येनैकेनोप-संगृहीताः प्रवादेषु, तदेकं वक्तव्यमित्यर्थः। सच्छब्दवाच्यत्वमुपसं-
P. 89-18 ग्राहकम्, किमपरेणेति? अत्राह—तत्र यदीति। ततोऽर्थान्तरस्य सप्तम-
P. 89-19 प्रभृतेनि(र्नि)वृत्तिर्न स्यात्। तत्रानिष्टमाह—तत्रेति॥ उदाहरणेनै-तदुपपादयति—यथेति॥

"गोशब्दः पशु-भूम्यंशुर्वा दिगर्थः प्रयुज्यते।
स्वर्ग-लोचन-वाणाम्बु-कुलिशार्थोऽपि दृश्यते॥"

P. 89-20 इति प्रतापः॥

मा भूद् निवृत्तिः, किमत इति? अत्राह—तत्र नेति॥ अनन्तार्थ-स्वभावेषु नैकं सत्त्वमस्ति, इत्येतच्च साध्यम्, न तु परस्परविरुद्ध-

अभिप्रायप्रकाशिका

अनन्तपदार्थभेदेष्वभिन्नं निमित्तमन्तरेण पञ्च षडित्यवान्तरसङ्ख्यानुप्रवेशो न सम्भवतीति परिहरति—तदयुक्तमिति॥ यथा नरत्वेनैकेनोप-सङ्गृहीताश्चत्वारो वर्णा ब्राह्मणादयः, रसत्वेन वा सङ्गृहीता नव शृङ्गार-हास्यादयः, तथाऽत्रापि पञ्च-द्वित्वादिसङ्ख्यानिवेशायैकं निमित्तं वक्तव्यमिति भावः। तदनङ्गीकारे दोषमाह—तत्र यदीति॥ सच्छब्दतायामिति॥ सच्छब्दवाच्यतायामित्यर्थः। उक्तमेवार्थं दृष्टान्तेन स्फुटयति—यथेति॥ नवविधस्य गोशब्दार्थत्वेऽपि यथाऽन्येषां नाभावः, तथा षट्-पञ्चादिप्रविभाग-परिमितानां सच्छब्दवाच्यत्वेऽपि नान्येषामभावः स्यात्; द्रव्य-गुण-कर्मणां सच्छब्दवाच्यत्वपरिभाषायामपि वैशेषिकसमये यथा सामान्यादिपदार्थानां नाभावः, यथा वा वेदान्तिनां ब्रह्मणः सच्छब्दवाच्यत्वाभावेऽपि नाभावः, तद्वदिति भावः। एवं च सति तत्तत्सिद्धान्तसिद्धपदार्थव्यवस्था भज्येतेत्याह—तत्रेति॥ ततश्च शास्त्रारम्भो निष्फलः स्यादित्यर्थः॥

प्रवादानामर्थवत्त्वं न प्रकृतोपयोगीति शङ्कते—नन्विति॥ सिद्धमेव

भावशुद्धिः

सिद्धान्तानां तत्त्वधीफलत्वमिति चोदयति—नन्विति ॥ प्रवादानामर्थ- P. 89-21
वत्ता साध्यत्वायेत्यस्माभिरपि नोच्यत इत्याह—न ब्रूम इति ॥ किमुच्यते
तर्हीति? अत्राह—किन्त्विति ॥ यदधिष्ठानः प्रवादः, स खल्वेकोऽर्थः P. 89-22
सर्वतन्त्रसिद्धान्तोऽभ्युपगन्तव्य इत्यर्थः। कुत इति? अत आह—यत इति॥ P. 89-23
एतावन्त एव प्रमाणभूमौ पदार्था इत्यवधारणार्थमवान्तरसंख्यानिवेशः
सामान्यमन्तरेण न युज्यते, यथा नव द्रव्याणि, एकादशेन्द्रियाणीति
वेत्यर्थः ॥

मा भूत् सत्त्वमेकं सामान्यम्, प्रमाणयोग्यत्वम्, अर्थक्रिया-
कारित्वं वैकमुपसंग्राहकं भविष्यतीति चोदयति—अथेति ॥ परिहरति— P. 89-24
ताभ्यामिति ॥ परिमितधर्मेषु पञ्चसु, षट्सु वा सदिति साधारणः P. 89-25
शब्द इति व्यर्थम्; अर्थक्रियाकारित्वस्य, मानयोग्यत्वस्य वा साधा-
रणस्यैव प्रवृत्तिनिमित्तस्या(स्य)भावादित्यर्थः। प्रमाणयोग्यत्वम्,
अर्थक्रियासमर्थत्वं वा सर्वत्रानुगतमनुगतव्यवहारकारणमस्तु, तथापि
सत्तानिराकरणसिद्धिरिति, अत्राह—तत्रेति ॥ गोशब्दवत् सामान्य- P. 89-26
शब्दता स्यात्। एवं च कः प्रद्वेषो भवतां सत्तासामान्य इत्यर्थः। किंचा-
क्षादिशब्दवत् सच्छब्दस्य साधारणत्वे, 'अक्षमानये'त्युक्ते विभीतका-
दिषु संशयवत् 'सन् घटः' इत्युक्तेऽपि विदितसङ्गतिकस्य द्रव्य-गुणादिषु
संशयः स्यादित्याह—भिन्नेति॥ भवत्येव संशय इति, अत्राह—न हीति॥ P. 90-1

अभिप्रायप्रकाशिका

प्रवादानामर्थवत्त्वम्, तत्तु नैकमुपसङ्ग्राहकमन्तरेणेत्येतावदेव वयं वदामः, अन्यथा यदधिष्ठानाः प्रवादाः, स एवैकोऽर्थो नाभ्युपेयेत; तदेकाधिकरण-परस्परविरुद्धधर्मद्वयप्रतिपत्तिलक्षणाया विप्रतिपत्तेरभावात् प्रवादानामनुत्थानमेव स्यादित्यभिप्रेत्य परिहरति—न ब्रूम इति ॥ कथं तेषां प्रतिपत्तिर्निश्चीयत इति? अत आह—यत इति ॥

अभिन्ननिमित्तमाशङ्कते—अथैतावानिति ॥ आह सिद्धान्ती—ताभ्यामिति॥ अस्तु, तथापि तव किमायातमिति? अत आह—तत्रेति ॥ मानयोग्यत्वस्य, अर्थक्रियाकारित्वस्य वा प्रतिवस्तु विलक्षणतया साधारणस्यासम्भवात् साधारणतया सत्त्वमेव परिशिष्यत इत्यर्थः ॥

निराकाङ्क्षसत्ताविशिष्टघटप्रतीति(ते)रित्यर्थः। दृष्टान्तेनैतत् स्पष्टयति—

P. 90- 2 यथेति ॥

'सन् घटः' इत्युक्तेऽपि तात्रा[1][विदितसङ्गतिकस्य द्रव्यादिषु] संशयोऽस्ति ; द्रव्यं घट इति तार्किकाः ; रूपादि परमाणुपुञ्जत्वात् गुण इति सौत्रान्तिकाः, परिणामत्वात् कर्मेति परिणामब्रह्मवादिनः ; रूप्यत इति रूपं वाच्यमिति नाम-रूपप्रपञ्चवादिनः, विज्ञानमिति योगाचाराः

P. 90- 3 सङ्गिरन्ते यत इति, अत्राह—यस्त्विति ॥ शब्दार्थविदां कीदृशी प्रति-

P. 90- 4 पत्तिरिति ? अत्राह—लौकिकास्त्विति ॥ 'सन् घटः' इत्यादिप्रयोगे सत्त्वमभिन्नं सच्छब्दार्थं प्रतिपद्यन्त इत्यर्थः । वादिद्वारकोऽयं संशयः, न शब्दद्वारक इत्युक्तम्, इदानीं शब्दप्रतीतार्थकृतत्वाच्च न शब्द-

P. 90-5 सामर्थ्यकृत इत्याह—अर्थचेति ॥ कथमेतदवगम्यतेऽर्थकृतः, यद् न शब्दकृत इति पृच्छति—कुत इति ॥ 'सन् घटः' इत्युक्ते द्रव्यादि-विशेषावगतिमन्तरेणापि श्रोतुर्निराकाङ्क्षज्ञानोदयादवगम्यत इत्याह—

P. 90-6 विशेषेति ॥ एतमेवार्थं समर्थयते—यत्र हीति ॥ उदाहरति—यथेति ॥ प्रतीतश्चेद(न?)वगमसामर्थ्याद् न तत्सामर्थ्येन्ध(साध)नेषु संशय इत्यर्थः। परशुः=टङ्कः। परश्वाद्यन्यतमविशेषावगमं विनापि तत्संशयनिवृत्तौ

P. 90- 7 हेतुमाह—यस्य कस्यचिदिति॥ विशेष(षा)निर्णयादेव तदुपादानमपीति,

P. 90- 8 अत्राह—अन्यथेति ॥ कुठाराद्यन्यतरनिर्धारणव्यतिरेकेणार्थिकसंशय-

अभिप्रायप्रकाशिका

किंच सच्छब्दस्य साधारणत्वेऽप्युपपदाद्यभावे संशयः स्यात्, न चास्ति संशयः ; ततो न सच्छब्दः साधारण इत्याह—भिन्ननिमित्त-त्वेति ॥ संशयाभावमेवाह—न हीति ॥ सच्छब्दस्य द्रव्य-गुणत्वादिसाधारणत्वे सन्निति घटस्य द्रव्यत्वमुच्यते ? किं वा गुणत्वम् ? उत कर्मत्वम् ? इति संशयः स्यादित्यर्थः ॥

अस्ति तादृशोऽपि संशय इत्याशङ्क्य वादिनामेवासौ संशयः, न लौकिकानामित्याह—यस्त्विति॥ 'द्रव्यं घटः' इति वैशेषिकादयः, 'रूपादि-परमाणुसमूहतया घटो गुणात्मकः' इति सौत्रान्तिकादयः, 'घट चेष्टायाम्' इति धातुवाच्यत्वात् 'घटः कर्मे'ति वैयाकरणाः, "नाम-रूपाभ्यां व्याक्रियते"ति श्रुते रूपमिति वेदान्तिनः, विज्ञानमिति योगाचाराः । किंचायमर्थनिबन्धनः संशयः, न सच्छब्दनिबन्धन इत्याह—अर्थाच्चेति ॥

1. ( ) कुण्डलितो भागः A पुस्तके नास्ति.

भावशुद्धिः

विषये निराकाङ्क्षज्ञानानुदयश्चेदन्यतरविशेषनिर्धारणेऽपि न प्रतिपत्ति-नैराकाङ्क्ष्यम्—कुतोऽसौ परशुः? किम्परिमाणः? केन कृतः? किमु-पादानः, किं सारलोहोपादानः? अथवेतरलोहोपादान इत्यादिसंशया-दनवस्थानादित्यर्थः ॥ 'अक्षमानये'त्यादौ, यत्र शब्दसामर्थ्य-कृतस(संश)यः, तत्र विभीतकाद्यन्यतमविशेषा(न?) वगमं विना न निरा-काङ्क्षप्रतिपत्तिरित्याह—यत्र त्विति ॥ यस्मात् 'सन् घटः' इत्युक्तौ P. 90-8
विशेषप्रतीतिमन्तरेणापि नैराकाङ्क्ष्यमित्युपसंहरति—तदेवमिति ॥ भिन्ने- P. 90-9
ष्वभिन्नं विशेषणम्, उपलक्षणं वाऽऽश्रित्यैकः शब्दो वर्तत इत्यस्मिन् कल्पेऽपि सच्छब्द इत्यध्याहार्यम्, न प्रमाणं विशेषणं सदर्थस्येत्याह— P. 90-11
विशेषणमिति ॥ स्यात्=संभाव्येतेत्यर्थः । आपाततस्तावत् पूर्वपक्ष-निराकरणं स्मारयति—तच्चेति । प्रागपि=प्रमाणावगमात् पुरस्तादपि । ततः=प्रमाणादित्यर्थः । निराकरणान्तरमाह—अपिचेति ॥ P. 90-12

संवेदनरूपं हि प्रमाणं ज्ञेयाभिव्याप्तिलक्षणफलप्रसवोन्नेयं तत्पूर्व-कालमनुमीयते, न तु फलानन्तरम्; तस्य तदुत्पादानुपयोगात्, फलोत्पा-दानुपयोगिनश्च कल्पने गौरवादित्यर्थः । अतिवृत्तमनुमीयताम्, किमे-तावतेति? अत्राह—न खल्विति ॥ असन्निहितं प्रमाणं विशेषणं यस्य, P. 90-13
तादृक्; कुण्डलविगमेऽपि कुण्डलित्वप्रसङ्गादित्यर्थः । भङ्गान्तरमाह—न P. 90-14
च निश्चित इति ॥ विशेषण(।)भावनिश्चयस्य विशिष्टसंशयनिवर्तकत्वा-

अभिप्रायप्रकाशिका

तदेवोदाहरणनिष्ठतया प्रपञ्चयति—यत्र हीति ॥ तत्रापि विशेष-प्रतिपत्त्या संशयनिवृत्तिः किं न स्यात्? इति, अत आह—अन्यथेति ॥ कुठारादिष्वपि प्रत्येकं किमिदं कार्ष्णायसम्? उतायोमयम्? इत्यादि विशेषान्तर-जिज्ञासासम्भवादिति भावः । शाब्दे तु संशये नैवमित्याह—यत्र त्विति ॥

इदानीं विशेषणपक्षं निराकरोति—विशेषणमपीति ॥ मान-सम्बन्धावगतेः प्राक् प्रथमादेव मानात् सदिति व्यवहारदर्शनान्न तद्विशिष्टे सदिति बुद्धिरित्युक्तमित्यर्थः । ज्ञाततानुमेयत्वाच्च मानस्य नार्थप्रकाशनसमये वर्तमानता, ततो न तद्विशिष्टे सदिति व्यवहार इत्याह—अपि चेति ॥ अतीतमपि विशेषणं किं न स्यात्? इति, अत आह—न खल्विति ॥

भावशुद्धिः

P. 90-15 दुदाहरणमाह—दण्डाभावेति ॥ प्रमाणाभावनिश्चये तद्विशिष्टसच्छब्दार्थ-
संशयोऽपि नास्तीति, अत्राह—भवति चेति ॥ यस्माद् मानाभावनिश्च-
P. 90-17 येऽपि संशय इति निगमयति—तस्मादिति ॥ अस्तु तर्हि प्रमाणमुपलक्ष-
णम्—कदाचिद् ज्ञानसंबन्धस्य स्वयमसतोऽपि कुरुक्षेत्रं—गुरुटीके
P. 90-18 त्यादावुपलक्षणत्वादिति, अत्राह—नापीति ॥ हेतुमाह—प्रमितेति ॥
उपलक्षणस्यापि सतः सच्छब्दप्रवृत्तिनिमित्तत्वे पूर्वोक्तदोषादतिवृत्तस्य
तच्छब्दस्य प्रवृत्तिनिमित्तत्वं वाच्यम् । तथाच प्रमितनष्टेऽप्यपि तत्प्रसङ्ग
इत्यर्थः । हेत्वन्तरमाह—स्मर्यमाणे चेति ॥ स्मृतिगोचरेऽपि सत्त्वसंशयो
P. 90-19 न स्यादित्यर्थः । प्रसङ्गद्वयेऽपि हेतुमाह—प्रमाणेति ॥

स्यात् तर्ह्यर्थक्रिया सच्छब्दार्थस्य विशेषणम्, उपलक्षणं वेति,
P. 90-20 अत्राह—योऽपीति । प्रागङ्कुरादिदर्शनात् बीजादौ सद्बुद्धिर्न स्यादि-
त्यर्थः । स्वविषयज्ञानमेव भावानामर्थक्रिया, तेषां कर्मतया तज्जनकत्वा-
P. 90-21 दिति, अत्राह—अथेति ॥ प्राक्तनमेव निरासं स्मारयति—प्रमाणादेवेति ॥
नागृहीतविशेषणा विशेष्य(शिष्ट) बुद्धिरिति न्यायादित्यर्थः । निर्वि-

अभिप्रायप्रकाशिका

प्रमाणाभावे निश्चितेऽपि प्रमेयसत्तापदं संशयो दृश्यते, तदनुपपन्नम्, प्रमाण-विशिष्टस्य सच्छब्दार्थत्व इत्याह—न चेति ॥

उपलक्षणपक्षं निराकरोति—नापीति ॥ उभयानुपपत्तिमेवोपलक्षणपक्षे दर्शयति—वृत्तप्रमाणेति ॥ वृत्तः प्रमाणेन सम्बन्धो यस्य वस्तुनस्तस्य; प्रमाणेनोपलक्षितस्य तल्लक्षणत्वात् सत्त्वस्य सत्त्वमेव स्यात्, नासत्त्वम्, ततः सच्छब्दप्रयोगोऽपि भवेत् । न च संशयः; सत्त्वस्यैव निश्चितत्वादित्यर्थः ॥

पक्षान्तरमाशङ्क्य निराकरोति—योऽपीति ॥ क्षीरादीनां दध्यादि-कार्योत्पत्तेः प्राक् सत्त्वाभावाच्छब्दप्रयोगोऽपि न सम्भवेदित्यर्थः ॥

दध्यादिजननमेवार्थक्रिया न भवति, किंतु स्वविषयज्ञानमपि, तेन सदैव सत्त्वं सम्भवतीति शङ्कते—अथ प्रमाणेति ॥ परिहरति—प्रमाणादेवेति ॥ प्रमाणस्य विशेषणत्वात्तस्मिन्नुत्पन्ने तद्विशिष्टे पश्चादेवास्तिबुद्धिः स्यादित्यर्थः ॥

भावशुद्धिः

कल्पकप्रत्यक्षात् घटादाववगते पश्चाद् 'अस्ती'तिविकल्पधीरिति चोदयति—अथेति ॥ दूषयति—लिङ्गादिति ॥ धूमादेर्लिङ्गादग्न्यादाव- P. 90-22
स्तिधीर्न स्यात्; अनुमानादेरनिर्विकल्पकपूर्वकत्वादित्यर्थः ॥ प्रमाणजननमेव न सर्वत्रार्थक्रिया, किन्त्वन्यदपि, तेन यद्यप्यानुमानिकस्याग्नेस्तन्नास्ति; समस्तधूमजननमर्थक्रिया, सा चास्य तत्र तत्रावधारिता, तदुत्पत्त्यैव हि धूमो लिङ्गम्, इति धूमकारणस्याग्नेरस्तीत्यनुमानमित्या(ति, अत्रा)ह—अथ निर्ज्ञातेति ॥ P. 90-23

निर्ज्ञातः कार्येण संबन्धो यस्य, स तथा । दूषयति—एवं तर्हीति ॥ P. 90-24
अनुमेयाभावं साधयति—तथाहीति ॥ किमतः? तत्राह—सा चेति ॥ P. 90-25
आत्माश्रयप्रसङ्गश्चेत्याह—कार्यवत्तयैवेति ॥ धूमजनकत्वेन हि वह्निरस्तीत्यवगन्तव्यः । अस्तितावा(चा)स्य तज्जनकत्वमिति । तदेव तेन गम्यत इत्यात्माश्रय इति, अत्राह—कार्येति ॥ क्षणिकवादिनां कार्य- P. 90-26
कारणयोरेककालानवस्थानादित्यर्थः ॥

अर्थक्रियोपलक्षितः सच्छब्दार्थ इति शङ्कते—अथेति ॥ प्रमाण-

अभिप्रायप्रकाशिका

निर्विकल्पके प्रत्यक्षे समुत्पन्ने तद्विशिष्टे सविकल्पकस्य प्रवृत्तेर्न विरोध इति शङ्कते—अथेति ॥ भवतु प्रत्यक्षे निर्विकल्पकस्य भावात्, अनुमाने तु सविकल्पकमेव तत्, नानुमानादस्तीति बुद्धिः स्यादिति दूषयति—लिङ्गादिति ॥

अविनाभावग्रहणसमये धूमस्य कार्यत्वावगमात्तत्कार्यजनकस्य वह्नेः सत्त्वमवगम्यत इति शङ्कते—अथ निर्ज्ञातेति ॥ दूषयति—एवं तर्हीति ॥

न च—व्याप्तिग्रहणमन्यस्य, अन्यस्य चानुमेयत्वमित्यनधिगतत्वसम्भव इति—शङ्कनीयम्; व्याप्तिग्रहणाभावात्तस्याननुमेयत्वप्रसक्तेरिति भावः । आत्माश्रयश्च स्यादित्याह—कार्येति ॥ सम्प्रत्यसाधारणं दूषणं विशेषणपक्षे दर्शयति—कार्यकारणयोरिति ॥

प्रसङ्गादुपलक्षणपक्षेऽप्युक्तं दूषणमनुसारयति—अथेति ॥ अतः परि-

भावशुद्धिः

स्योपलक्षणत्वे यदुक्तम्, तदत्राप्यनुसन्धेयमित्याह—अतीतस्येति ॥ प्रमिति(त)ध्वस्तेष्वित्यादावुक्तमित्यर्थः ॥

यस्मात् कार्य-प्रमाणयोर्विशेषणत्वोपलक्षणत्वानुपपत्तिरिति
P. 91- 1 फलितं निगमयति—तस्मादिति ॥ हेतुमाह—अनवस्थानादिति ॥ कार्ये कार्यान्तरस्य, प्रमाणे प्रमाणान्तरस्य प्रसङ्गादित्यर्थः। सच्छब्दार्थस्य
P. 91- 3 प्रमाणानपेक्षत्वे प्राप्तं प्रमाणानर्थक्यम्, अत्राह—स्वरूपेति ॥ दार्ष्टान्तिकं
P. 91- 4 दर्शयति—तथेति ॥ अनवस्थानादित्युक्तं विशदयति—कार्यप्रमाणेति ॥ तस्य=सदसद्व्यवहारस्य। विभागस्याप्रवृत्तिरेव कुत इति? अत्राह—
P. 91- 5 कार्येति ॥ न च स्वसंवेदनसिद्धावपि मानसमेयता संभव(वि)नी, येन, मेयतायां सत्तायां नानवस्था स्यादित्याशयः। प्रकाशमानतायां तु सत्ता-
P. 91- 6 यामुक्तानि दूषणान्यूहनीयानीत्यभिसन्धायोपसंहरति—तस्मादिति ॥७५॥

यदुक्तं पुरस्तात्—प्रमाणयोग्योऽर्थस्वभावः सत्ता इति, तत्र चोदयति=अथेति ॥ सहकारिसमवधानलक्षणत्वादागन्तुकयोग्यताया इति
P. 91- 7 हेतुमाह—प्रमाणेति ॥ प्रमितिसामग्रीरूपयोग्यत्वस्य सच्छब्दार्थत्वेऽसत्तायामपि सत्त्वप्रसङ्ग इति, अत्राह—न चेति ॥ येषु हि सत्सु कार्यं भवत्येव, त एव हेतवः। न चासतां तादृशाः प्रमाणहेतवः सन्ति; तद्भावे प्रमितिभावेन प्रमेयसद्भावः स्यादित्यर्थः ॥ अव्याप्त्या दूषयति —तदयुक्तमिति ॥

अभिप्रायप्रकाशिका

शेषादसदुक्तमेव युक्तमित्युपसंहरति—तस्मादिति ॥ 'न कार्यलक्ष्य' इत्यत्र तद्विशिष्टपक्षोऽपि सङ्गृहीत इति द्रष्टव्यम्। तत्र हेतुमाह—अनवस्थानादिति ॥ क्रियाप्रमाणयोरपि सत्त्वसिद्धये क्रियाप्रमाणान्तराभ्युपगमप्रसङ्गादित्यर्थः। स्वरूपे व्यवस्था=व्यवस्थानं यस्य स तथोक्तः। दृष्टान्ते दर्शितामनवस्थां दार्ष्टान्तिकेऽपि प्रपञ्चयति—कार्यप्रमाणेति ॥ ७५ ॥

ब्रह्मसिद्धिकारिका

भूमौ निखातं निर्लिङ्गमवेद्यानुपपत्तिकम्।
नष्टद्रष्टृकमत्येति यत्सर्वमितियोग्यताम् ॥ ७६ ॥

कारिकाविवरणम्

हेतुमाह—भूमाविति ॥ न विद्यते वेद्यानुपप- P. 91- 7
त्तिर्यस्य, तदवेद्यानुपपत्तिकम्। सर्वमिति योग्यतामत्ये- P. 91- 8
तीति ॥ असदित्येव निश्चयः स्यादित्यर्थः ॥ ७६ ॥ P. 91- 9

ब्रह्मसिद्धिविवरणम्

यदस्ति, तद् मीयत इति नियमादध्यक्षाद्यन्यतमप्रमाणं स्यादित्याशङ्क्य व्याकरोति—भूमौ निखातमिति ॥ अदृश्यमानाविनाभूतं लिङ्गमस्येति तादृक्=असंवेद्यमानम्, अन्यथा=निखातवस्तुव्यतिरेकेणा- P. 91-11 नवकल्पमानमनुपपद्यमानं यस्य तत्, तथा नास्त्येव। तर्हि त(स)दिति, अत्राह—न चेति॥ बाधकवत् साधकस्याप्यभावात् सत्त्वनिश्चयोऽप्ययुक्त P. 91-14 इति चोदयति—नन्विति ॥ परिहरति—एवमपीति ॥ स्यात् तर्हि, तत्सदसत्त्वसंशय इति, अत्राह—तत्रेति। चोदयति—अथेति ॥ यः खलु सत्स्वन्येषूपल- P. 91-15 ब्धिकारणेषु सन्नुपलभ्यत एव, स स्वभावविशेषश्चिरनिखातनि(षे ?) धिषु वाऽस्ति; तेषामपि (न?) खननादिना प्रतीतेः। अतो मान- P. 91-17 हेत्वभावनिश्चयेनि(ऽपि)युक्तः संशय इत्यर्थः। दूषयति—प्रकृतहानादिति ॥ प्राप्ताप्राप्तविवेकेनार्थस्वभावः सत्ता सद्व्यवहारहेतुः स्यात्, न प्रमाणयोग इति प्रकृतहानिरित्यर्थः ॥

अभिप्रायप्रकाशिका

प्रमाणयोग्यत्वमर्थस्वभावो न भवति, किं तु प्रमाणकारणवत्त्वमिति शङ्कते—अथ मतमिति ॥ लक्षणस्यातिव्याप्तकतां परिहरति—न चेति ॥ असत्सु संयोगादिप्रमाणसामग्र्यभावादेवासद्व्यवहार इत्यर्थः। प्रमाणहेत्वभावनिश्चयेऽपि सत्त्वाशङ्कादर्शनान्नैवमित्याह—तदयुक्तमिति ॥ 'नष्टद्रष्टृकम्' इत्यनेन पौरुषेयागमाभावः प्रदर्श्यते, ततः किम्? इति, अत आह—तत्रेति ॥

गत्यन्तराभावादर्थप्रमाणयोग्यता सत्ता, न पुनरागन्तुकी प्रमाणहेतुमत्तालक्षणा योग्यता सत्तेत्याशङ्क्य परिहरति—अथ स्वभावेति ॥

ब्रह्मसिद्धिकारिका

असत् प्रमेयं च तथा यथैव स्थापयत्ययम् ।
अमितं हि तथा कस्मात्तथा न पुनरन्यथा ॥ ७७ ॥

---

भावशुद्धिः

तदेवं शंकोत्तरतया व्याख्यायोत्तरकारिकायामुक्तस्य चार्थस्येयं
P. 91-17 कारिकेत्याह=अथवेति ॥ निराकरणप्रकारमाह—न(नि)श्चित इति ॥७६॥
प्रमाणयोग्यत्वं सत्त्वमिति लक्षणं प्रकृतविरोधेनातिव्यापक-
P. 91-20 त्वेनापि परास्यति—अपिचेति । भावव्यतिरिक्ताभावस्य भावात् कथम-
P. 91-21 तिव्याप्तिरि(ति ? अ)त्राह—तथाहीति । यथा=येन रूपेण, प्रमितम् तथैव
व्यवह्रियत इत्यर्थः ॥

सौगत-प्राभाकराभ्यामसतोऽनिष्टत्वात्तन्न व्यवस्थाप्यत, इति,
P. 91-24 अत्राह—अवश्यमिति ॥ इदं तदसत्, यत् सतो व्यावर्तत इति व्यवस्था-
P. 91-25 प्यमित्यर्थः । व्यतिरेके दण्डमाह—अन्यथेति ॥ पक्ष-प्रतिपक्षौ वा,
स्थापना वा न सिध्येदित्यर्थः ॥ सर्वप्रमाणस्याविषयं तद्विषयाद्व्या-
वृत्तमसद् व्यवस्थापयति प्रभाकरः; सर्वशक्तिविरहमर्थक्रियाशक्ताद्व्या-
P. 92- 1 वर्तमानमसद् व्यवस्थापयति सौगत इति, अत्राह—तत्र यदीति ॥
दूषयति—सर्वथाऽपीति ॥ तथात्वेन प्रमेयत्वं कुतः स्वीकार्यमिति,
अत्राह—अपरिच्छिन्नं हीति ॥ असद्व्यवहारगोचररूपस्याप्रमेयत्वे व्यव-
P. 92- 2 स्थापकाभावाद् नैकपक्षानुरागोऽपि स्यादित्याह—न चेदिति ॥ ७७ ॥

अभिप्रायप्रकाशिका

यद्वा, विशेषणपक्षनिरासाय युक्त्यन्तरोपन्यासपरोऽयं श्लोक इत्याह—
अथ वेति ॥ कथं निराकरणम् ? इति, तत्राह—न निश्चित इति ॥ ७६ ॥

अतिव्यापकं चेदं लक्षणमित्याह—अपि चेति ॥ युक्त्यैवायं वादी स्थापयति, न तु प्रमाणेनेति, अत आह—अमितं हीति ॥ तेन प्रकारेणामितं चेत्, तत्प्रकारमेव तदिति कथं निश्चीयते ? न पुनरन्यथेत्यर्थः ॥

प्रमाणस्याविषय इति प्राभाकराभिप्रायेणोक्तम्, 'सर्वशक्तिविरहः' इति सुगतमतेन उत्तरार्धं व्याचष्टे—अपरिच्छिन्नं हीति ॥ उक्तमुपपादयति—न चेदिति ॥ ७७ ॥

ब्रह्मसिद्धिकारिका

अमित्वा कण्टकाभावं चरणं न्यस्यते कथम्।

नान्यग्रहात्तस्य भावे पुरस्ताच्च प्रसङ्गतः ॥ ७८ ॥

जिज्ञासा न प्रवर्तेत यदि संवित्त्यभावतः ।

---

कारिकाविवरणम्

न च प्रमाणाविषयत्वमात्रमसद्व्यवहारं प्रवर्तयितुमर्हति प्रमेयाभावानभ्युपगम इत्याह--अमित्वेति ॥ P. 92- 4
अर्थान्तरपरिच्छेदाच्चरणन्यास इति, अत्राह--अन्येति ॥ P. 92- 5
हेतुमाह—तस्येति ॥ कण्टकस्य सत्त्वे भूभागग्रहात्, पुरस्ताच्च तत्प्रसङ्गतः कण्टकाद्यग्रहाच्चरणन्यास इति, अत्राह—जिज्ञासेति ॥ विचार्यज्ञेयाभावादित्यर्थः ॥ ७८ ७८½ ॥

ब्रह्मसिद्धिविवरणम्

अभावस्य मेयत्वानङ्गीकारे शास्त्रप्रामाण्यमपि न स्यादिति प्रतिपादयन् व्याकरोति—

दृष्टिपूतं न्यसेत्पादं वस्त्रपूतं जलं पिबेत् । P. 92- 8

सत्यपूतां वदेद्वाणीं मनःपूतं समाचरेत् ॥

इति । कथमित्युक्तविकल्पं स्फुटयति—तथाहीति ॥ P. 92- 9

प्रथमं प्रत्याह–तत्रेति ॥ हेतुमाह–कीटकण्टकादीति ॥ तदुपपाद- P. 92-10
यति—तत्रापीति ॥ पुरस्ताच्च प्रसङ्गत इति व्याचष्टे--प्रागपीति ॥ P. 92-12
हेतुमाह--यस्येति ॥ जाग्रतो यस्य कस्यचित् परिच्छित्तेर्विद्यमान- P. 92-13
त्वादित्यर्थः ॥

अभिप्रायप्रकाशिका

अभावस्याप्रमेयत्वे लौकिकोऽपि व्यवहारोऽनुपपन्न इत्याह—अपि चेति ॥ कण्टकादन्यस्य भूतलस्य वाऽन्यस्य ग्रहणं चेत् सकण्टकेऽपि स्यादित्याह —नान्येति ॥ भूतलपरिज्ञानात् प्रागपि प्रवर्तेतेत्याह—पुरस्ताच्चेति ॥ कण्टकाद्यपरिच्छेदात् प्रवृत्तिरितीमं पक्षं निराचष्टे–जिज्ञासेति ॥ ७८, ७८½ ॥

भावशुद्धिः

P. 92-14 द्वितीयकल्पमुद्भावयति—अथेति ॥ दूषयति—न तदिति ॥ कथ-
P. 92-15 मिति? अत्राह—जिज्ञासापूर्वकादिति ॥ अस्तु तदेव प्राप्यमिति?
P. 92-16 अत्राह—तच्चेति ॥ अभावस्यापि सर्वोपाख्यारहितत्वाद् न जिज्ञासा-
प्राप्यत्वमिति, अत्राह—अभावे त्विति ॥ न च तुच्छोऽसावित्यर्थः ।
P. 92-17 अपरिच्छेद एव कस्माद् न जिज्ञासागोचर इति? अत्राह—न चेति ॥
प्रागभावतया तस्यानादित्वादित्यर्थः । जिज्ञासाया निवर्तकत्वाच्चेति
P. 92-18 हेत्वन्तरमाह—परिच्छेदेनेति ॥ अपरिच्छेदस्यानादेरकार्यत्वेऽपि ज्ञेयत्वं
P. 92-19 स्यादिति, अत्राह—अप्रमेयत्वाच्चेति ॥ कुत इति? अत्राह—सोऽपीति ॥
निरुपाख्यत्वादित्यर्थः ॥ ७८, ७८½ ॥

P. 92-20 प्रतीतिकारणचक्षुरादिपरिपूर्तविकदर्शनयोग्यस्यापरिच्छेदाच्चरण-
P. 92-21 न्यासादिप्रवृत्तिरिति शङ्कते—अथेति ॥ दूषयति—तदसदिति ॥

अभिप्रायप्रकाशिका

शास्त्रीयव्यवहारोऽप्यभावस्य प्रमेयत्वं सूचयतीत्याह —दृष्टेति ॥ तत्र पक्षत्रयं दर्शयति—तथा हीति ॥

आद्यविकल्पोत्तरत्वेन द्वितीयार्धं व्याचष्टे—न तावदिति ॥ 'पुरस्ताच्च' इत्युक्तदोषाद्दोषान्तरमाह—प्रागपि चेति ॥

द्वितीयविकल्पोत्तरत्वेन जिज्ञासा न प्रवर्तेतेत्येतद्व्याचष्टे—अथ कीटेति ॥ कुत इत्याकाङ्क्षायामाह—जिज्ञासापूर्वेति ॥ मात्रशब्देना-भावस्य प्रमेयत्वं व्यावर्तयति ॥

अभावाङ्गीकारपक्षे तु, कथम्? इति, अत आह—अभावे त्विति ॥ अस्तु तर्ह्यपरिच्छेद एव जिज्ञास्य इति, अत आह—न चेति ॥ किं तन्निष्पत्ति-र्जिज्ञासायाः प्रयोजनम्? किं वा प्रतीतिः? नाद्यः; तस्यानादित्वादित्यर्थः । नापि तन्निवृत्तये; निवृत्तेरन्यतः सिद्धत्वादित्याह—परिच्छेदेन हीति ॥

यद्वा, स्वरसतः सिद्धत्वेऽपि निवृत्तोऽनिवृत्तो वेति सन्देहापोहाय जिज्ञासा युज्येतेति, अत आह—परिच्छेदेन हीति ॥ द्वितीयविकल्पं दूषयति—अप्रमेयत्वादिति ॥ तदेवाह—सोऽपीति ॥ ७८, ७८½ ॥

ब्रह्मसिद्धिकारिका

प्रमाणविषयत्वस्य नोपयोगोऽत्र दृश्यते ॥ ७९ ॥

असद्बोधेऽनन्यहेतुभानेन ह्युपयुज्यते ॥ ७९½ ॥

भावशुद्धिः

कारिकाविवरणम्

प्रमाणविषयत्वस्य=तदितरप्रमाकरणपौष्कल्यलक्षण-
दृश्यत्वस्य। अत्र=अपरिच्छेदे ; निर्विशेषत्वादपरि- P. 92-22
च्छेदस्य। क्व तर्हि तस्योपयोगः? अत्राह—असद्बोध P. 92-23
इति ॥ ७९, ७९½ ॥

ब्रह्मसिद्धिविवरणम्

दृश्यापरिच्छेदात् प्रवृत्तिरिति विशेषणात् कथमनुपयोग इति?
अत्राह—अपरिच्छेदाच्चेति ॥ हेतुमाह—इतरत्रेति ॥ निरुपाख्योऽपरि- P. 92-24
च्छेदो न विशेषणवान्; निरुपाख्यत्वविरोधादित्यर्थः। ततश्चेति= P. 92-25
अपरिच्छेदमात्रादिति यावत्। त्वन्मतेऽपि दृश्याभावज्ञानवददृश्याभाव-
ज्ञानादपि प्रवृत्तेरनुपयोगस्तुल्य इति, अत्राह—यस्येति ॥ अभावपरि- P. 92-26
च्छेदस्यानन्यहेतुकत्वमुपपादयति—नायमिति ॥ यस्मात् प्रमाणकारण- P. 93- 1
पौष्कल्ये सत्येवायमपरिच्छेदः, तस्मात् प्रमेयाभावादेवेति कारणान्तर-
निराकरणे नोपयोग इत्याह—तस्मादिति ॥ ७९, ७९½ ॥ P. 93- 2

अभिप्रायप्रकाशिका

प्रमाणसामग्र्यां सत्यां विषयानुपलम्भादेव प्रवृत्तिसिद्धेर्नाभावस्य प्रमेयत्वमभ्युपेयमित्याशङ्क्य दूषयति—अथ मतमिति ॥ अत्र च प्रमाणविषयत्वशब्देन प्रमाणकारणवत्त्वं विवक्ष्यते, कथमनुपयोग इति चेत्, तर्हि वक्तव्यम्—किं परिच्छेदार्थं तत्? किं वा प्रवृत्त्यर्थम्? नाद्यः; प्रमाणसामग्रीविकलानामप्यपरिच्छेदभावादित्याह—इतरत्रेति ॥ द्वितीयं दूषयति—ततश्चेति ॥

अभाववादिनामुपयोगप्रकारमुत्तरार्धव्याख्यानेनाह—यस्य त्विति ॥ अनन्यनिमित्तत्वेनेति ॥ अनन्यथासिद्धत्वेनेत्यर्थः। तदेव विवृणोति—नायमिति ॥ ७९, ७९½ ॥

44

ब्रह्मसिद्धिकारिका

अथ यत्र प्रवृत्तिः स्यात्तत्र केवलसंविदः ॥ ८० ॥
जिज्ञासेत न सूक्ष्मार्थं कैवल्यं संविदो यदि ।
केवलो विषयो नेष्टो रूपोन्मिश्रेऽपि तद् यतः ॥ ८१ ॥
विशिष्टस्य च नास्त्यन्यदन्याभावाद्विशेषणम् ॥८१½ ॥

---

भावशुद्धिः

कारिकाविवरणम्

केवलभूतलज्ञानाच्चरणन्यासादिप्रवृत्तिरिति शङ्कते—
P. 93- 3 अथ यत्रेति ॥ कैवल्यं संविदो विशेषणम्, संवेद्यस्य वा ?
P. 93- 4 यद्याद्यः, तत्राह—जिज्ञासेतेति ॥ विषयान्तरासंसर्ग-
रूपकैवल्यस्य सिद्धत्वादित्यर्थः । संवेद्यस्यापि स्वरूपेण
P. 93- 5 कैवल्यम्, विशेषणयोगेन वा ? नाद्य इत्याह—केवल
इति ॥ रूपोन्मिश्रे = कण्टकादिमति । तत्—कैवल्यमित्यर्थः ।
P. 93- 6 द्वितीयं दूषयति—विशिष्टस्येति ॥ अन्याभावात् = कण्ट-
कादेरभावादित्यर्थः ॥ ८०, ८१, ८१½ ॥

ब्रह्मसिद्धिविवरणम्

अर्थान्तरग्रहापरिच्छेदयोः प्रवृत्तिहेतुत्वे निरस्ते, कथं पुनश्चोद्य-
P. 93- 7 स्योत्थानमित्याशङ्क्य व्याकुरुते—यदीति ॥ एतद् दूषयितुं विकल्प-
P. 93- 8 यति—तत्रापीति ॥ कैवल्यमेवाह—एकविषयेति ॥
P. 93- 9 प्रतिनियमार्थमाह—विषयान्तरासंसर्ग इति ॥ आद्यमनुवदति—
P. 93-10 यदीति ॥ दूषयति—प्रमितेऽपीति ॥ अवग्रह(ात् =)ज्ञानात् । तदवभासक-
P. 93-11 ज्ञानादित्यर्थः । द्वितीयमनूद्य विकल्पयति—अथेति ॥ आद्यं निराह—
P. 93-12 तत्रेति ॥ मिश्रेऽपि = कण्टकादिसहितेऽपीत्यर्थः । द्वितीयेऽसमदिष्टसिद्धि-
P. 93-13 रित्याह—विशेषणेति ॥ हेतुमाह—यत इति ॥ ८०, ८१, ८१½ ॥

अभिप्रायप्रकाशिका

कारिकाविवरणम्

अर्थान्तरपरिच्छेदात् अपरिच्छेदाद्वा प्रवृत्तिरिति पक्षद्वये दूषणं परिहरन्नाशङ्कते—अथ यत्रेति ॥ अपरिच्छेदपक्षं व्यावर्तयति—संविद इति ॥ सकण्टकेऽपि प्रवृत्तिः स्यादित्युक्तामतिप्रसक्तिं वारयति-केवलसंविद इति॥ किं संविदः कैवल्यम्? उत विषयस्य? इति विकल्प्य क्रमेण दूषयति—जिज्ञासेतेति॥८०,८१,८१½॥

ब्रह्मसिद्धिकारिका

नास्तीतिधी-व्यवहृती विषयं कमुपाश्रिते ॥ ८२ ॥

मानाभावं यदि क्षुण्णं मेयाभावस्य तत्र किम् ॥८२$\frac{1}{2}$॥

भावशुद्धिः

एवं तावदभावज्ञानमन्तरेण चरणन्यासादिप्रवृत्तिरयुक्तेत्युक्तम् । संप्रति नास्तीतिबुद्धिव्यपदेशावपि न तदन्तरेण स्यातामित्याह —[1]अपिचेति ॥

कारिकाविवरणम् P. 93-14

कण्टकादिज्ञानाभावं तावालम्बेते इति, अत्राह—मानेति ॥

दूषयति—क्षुण्णमिति ॥ ८२, ८२$\frac{1}{2}$ ॥ P. 93-15

ब्रह्मसिद्धिविवरणम्

नास्तीतिशब्दप्रयोगो व्यवहृतिरित्यभिप्रेत्य व्याचष्टे—अपि चाने- P. 93-16
नेति । भूतलस्वरूपमेव तद्विषय इति, अत्राह—सन्ने(ने)ति ॥ P. 93-17
केवलं भूतलं तद्गोचरोऽस्तु, नेत्याह—न केवलमिति ॥ अभा- P. 93-18
वापह्नववादी चोदयति—नन्विति ॥ नीलमस्तीति तत्प्रतीतिवद् ना- P. 93-19
स्तीति तदभावप्रतीतिः किं न स्यात्? अत्राह—न पुनरिति ॥ सजातीय-विजातीयव्यवच्छिन्नरूपादिप्रतीतिवदभावस्य प्रतीतौविरोधादित्याह—विरुद्धमिति ॥ परिहरति—यद्येवमिति ॥ किं चातः? तत्राह— P. 93-20
तत्रेति ॥ प्रमेयाभावं तुच्छत्वादतिलङ्घयाम इति, अत्राह—न हीति P. 94-1
॥ ८२, ८२$\frac{1}{2}$ ॥

अभिप्रायप्रकाशिका

ब्रह्मसिद्धिविवरणम्

कैवल्यं दर्शयति—एकविषय इति ॥ प्रतिनियममेवाह—विषयान्तरेति ॥

आद्यं दूषयति—यदीति ॥ द्वितीयविकल्पं विकल्प्य दूषयति—अथेति । नन्वन्यान्यपि विषयस्य विशेषणानि सन्ति, सत्यम्, न तानि कैवल्योपयुक्तानीत्याह—यद्विशेषणमिति ॥ अभावानभ्युपगमे नास्तीति ज्ञान-व्यवहारयोर्निरालम्बनत्वं स्यादित्याह—अपि चेति ॥ शङ्कते—मानाभावं यदीति ॥ परिहरति—क्षुण्णमिति ॥ ८२, ८२$\frac{1}{2}$

---

1. अपिचेति मूले पाठो नास्ति ।

ब्रह्मसिद्धिकारिका

अग्रहेऽसद्ग्रहभ्रान्तिरभावव्यवहृद् भ्रमः ॥ ८३ ॥
अभावे च व्यवहृतेरदृष्टौ ध्वान्तदृष्टिवत् ॥ ८३½ ॥

---

भावशुद्धिः

असद्व्यवहारकारणे निराकृते परः परिचोदयति—अथ मतमिति ॥

कारिकाविवरणम्

अग्रहे=भावादृष्टौ, असद्ग्रहः=अभावधीः। हेतुमाह —अभावे चेति ॥ ८३, ८३½ ॥

P. 94- 5

अभिप्रायप्रकाशिका

स्वरूपेण, अन्यविशिष्टत्वेन वेति विकल्प्य, क्रमेण दूषयति—स न वस्त्विति ॥

ननु—कथमभावानङ्गीकारे कैवल्याभावः ? भावाभावोदासीनभूतलस्यैव केवलशब्दार्थत्वात्। न च वाच्यम्—सघटाघटभूतलविलक्षणमुदासीनं नाम भूतलं न पश्यामः—इति ; तदनङ्गीकृतावभावाश्रयस्यैव दुर्निरूपतापत्तेः। न हि सघटस्तदाश्रयः ; भावाभावयोरविरोधापातात्। नापि तदभाववत् ; आत्माश्रयात्। नाप्यभावान्तरवत् ; अन्योन्याश्रयात्, अनवस्थानाद्वा। तस्मादनिच्छताऽप्यनेन विषयस्य कैवल्यं नाम किञ्चिदभ्युपेयम्। तावता चाभावबुद्धि-व्यवहारयोरुपपत्तावलमतिरिक्ताभावस्वीकारेणेति चेत्, नैवम् ; विचारासहत्वात्। किमेतत् प्रतिकूलतर्कमात्रम्—यद्यौदासीन्यं न स्यात्, अभावो निराश्रयः स्यादिति। यद्वा-विपर्यये पर्यवसानात् कैवल्यसाधकम्—साश्रयश्चाभावस्तस्मादस्ति कैवल्यमिति। नाद्यः ; मूलप्रमाणविरहिणस्तस्याकिञ्चित्करत्वात्। नेतरः ; साश्रयश्चाभाव इत्येवंलक्षणस्य विपर्ययस्याभावमनिच्छतोऽसिद्धेः, किञ्चित्केवलभूतलवलावलम्बनेनाभावापलापे तदालम्बनतयैव घटादिभावव्यवहारस्याप्युपपत्तौ घटादेरप्यपलापप्रसङ्गात्। किं घटवति घटः ? किं वा घटान्तरवति ? उत घटाभाववति ? नाद्यौ; आत्माश्रयत्वादिदोषात्। न तृतीयः ; भावाभावयोरविरोधापत्तेः। केवले चेत्, तावतैव सघटं भूतलमिति व्यवहारोपपत्तौ किमतिरिक्तघटस्वीकारेणेत्यपि पर्यनुयोगोप(गा)पत्तेः। तस्मात् 'इहेदं नास्ती'ति ज्ञानम्, एतद्धिज्ञानमात्रावलम्बनभावातिरिक्तावलम्बनम्, एतद्भावमात्रावलम्बननिर्विकल्पकेतरज्ञानत्वात्।

भावशुद्धिः

भावज्ञानाभावे नास्तीतिज्ञानव्यवहारात् सद्व्यवहाराभावे चास-द्व्यवहारादित्यर्थः । 'नास्ती'ति बुद्धि-शब्दयोरभावाद् न तयोर्विषयोऽन्य इष्यत इति चोदयति—नैव स्तामिति ॥ लोकसिद्धत्वात्तयोः स्वरूपनिग P. 94-6 करणमयुक्तमिति चोदयति—कथमिति ॥ तदुत्तरेण श्लोकमवतार्य व्याकरोति—उच्यत इति ॥ तद्विपर्यय(:?) परिच्छेद इति=अभावज्ञानमिति P. 94- 7 यावत् । अदृष्टौ ध्वान्तदृष्टिवदिति दृष्टान्तं व्याचष्टे—यथेति ॥ तमो P. 94 -8 दशमद्रव्यं दृश्यत इति, अत्राह—न हीति ॥ ८३, ८३½ ॥

ब्रह्मसिद्धिविवरणम्

दूषयति—नैतदिति ॥

अभिप्रायप्रकाशिका

सम्प्रतिपन्नसविकल्पकवदित्यनुमानात्, उक्तयुक्तेश्चाभावोऽभ्युपेय इति भावः ॥

'मानाभावं यदि' इत्येतच्चोद्यभागं व्याचष्टे—नन्विति ॥ कुत इत्याकाङ्क्षायां स एवाह—विरुद्धमिति ॥ 'एतदुत्तरत्वेन'क्षुण्णम्' इत्यादि-भागं व्याचष्टे—यद्येवमिति ॥ नेदं प्रमीयत इति न तावत् कण्टका-न्यस्य भूतलादेः केवलस्य परिच्छेदो वक्तुमुचितः; संविद्गतस्य, संवेद्यगतस्य च कैवल्यस्य पूर्वमेव निरस्तत्वात् । तस्मात् प्रमाणाभावः परिशिष्यत इत्यभिप्रेत्याह —न हीति ॥ ८२, ८२½ ॥ शङ्कते—अथेति ॥

कारिकाविवरणम्

कण्टकाद्यग्रहेऽसद्ग्रहोऽभावग्रह इति भ्रान्तिः । व्यवहृतेः कण्टकादिविषयाया अभावे चकण्टकाद्यभावव्यवहार-भ्रमः—यथाऽऽलोकदर्शनाभावे तमः पश्यामीति भ्रम इति श्लोकयोजना ॥ ८३, ८३½ ॥

ब्रह्मसिद्धिविवरणम्

सिद्धान्तमाह—कथमिमाविति ॥ आहेतरः—उच्यत इति ॥ रूप-वत्तया प्रतीयमानं तमः कथमभाव इति ? अत आह—न हि तमो नामेति ॥ रूपवत्त्वे निमीलितनयनस्य न तमोबुद्धिः स्यादित्यर्थः ॥ ८३, ८३½ ॥

परिहरति—नैतदिति ॥

कारिकाविवरणम्

भवतां हि विवेकाग्रहणाद् भ्रमः । स च प्रतीयमान-योरेव सम्भवति । न चेह कण्टकदर्शनाभाव-कण्टकाभावदर्शन-योस्तद्व्यवहाराभावाभावव्यवहारयोश्च ग्रहणं सम्भवति; विशेषण-

ब्रह्मसिद्धिकारिका

इत्थं भवेत् सुषुप्तादौ त्रैलोक्याभावदृग्भ्रमः ॥ ८४ ॥
अपरिच्छिन्दतः किंचिद्विभ्रमश्च न युज्यते ।
आरोपविषयारोप्ये नाजानन् रजतभ्रमी ॥ ८५ ॥
नाभावभिन्ना व्यवहृत्तदभावश्च धीपदे ।
तमोदृष्टिस्तु भूच्छायामालोकाभावमेव वा ॥ ८६ ॥
आलम्बते न त्वदृष्टाविष्टो दर्शनविभ्रमः ॥ ८६१/२ ॥

---

भावशुद्धिः

कारिकाविवरणम्

इत्थं=भावाग्रहे तदभावग्रहो भ्रम इत्यङ्गीकारे पक्षश्चायमयुक्त इत्याह—अपरिच्छिन्दत इति ॥ किंचिद् अधिष्ठानमारोप्यं च । हेतुमाह—आरोपेति ॥ अस्तु तर्हि
P. 94-14 भावज्ञानाभावे ज्ञाते तद्विपर्ययज्ञानारोपः, सद्व्यवहाराभावे चावगतसद्व्यवहारभ्रम इति, अत्राह—नाभावेति ॥ अभावभिन्ना व्यवहृत्-अभावविशिष्टस्य व्यवहारः । धीपदे=ज्ञानगोचरे । परोक्तदृष्टान्तं विघटयति—तमोदृष्टिस्त्विति ॥ ८४, ८५, ८६, ८६१/२ ॥

अभिप्रायप्रकाशिका

कारिकाविवरणम्

विशेष्यभूतयोरभावयोरग्रहणात् । ततश्चाप्रतीयमानयोरेव विभ्रमः स्वीकृतः स्यात् । अतः सुषुप्त्यादौ भ्रमप्रसङ्ग इत्याह—इत्थं भवेदिति ॥ अप्रतीयमानस्य च विभ्रमहेतुत्वं न युक्तमित्याह—अपरिच्छिन्दत इति ॥ तदेव दृष्टान्तेन स्फुटयति—आरोपविषयेति ॥ अस्तु तर्हि प्रतीतिरिति, अत आह—नाभावेति ॥ अभावविशेषितो व्यवहारः, व्यवहाराभावश्चाभावविशिष्टा बुद्धिः, बुद्धिविशिष्टाभावश्च त्वन्मते न बुद्धेरालम्बनमित्यर्थः । यत्पुनः 'ध्वान्तदृष्टिवत्' इत्युक्तम्, तद्विघटयति—तमोदृष्टिरिति ॥ ८४, ८५, ८६, ८६१/२ ॥

भावशुद्धिः

ब्रह्मसिद्धिविवरणम्

अभावस्य बुद्धिशब्दगोचरासाधारणकार(णा)भावेऽभावत्वमेव भज्येत, अतो भ्रान्तौ त(द्धी) व्यवहारावित्याशङ्क्य व्याख्याति—यदि P. 94-16
खल्विति ॥ दूषयति—सुषुप्तादीति ॥ सुषुप्ति-मूर्च्छा-प्रलयादिषु सर्वसद्बुद्धयनुदयात् सर्वाभावमनुभवामीति भ्रमो भवेदित्यर्थः । उदाहरति—
आलोकेति ॥ आलोकादर्शने तमोदर्शनभ्रमवदित्यर्थः ॥ P. 94-17

सद्बुद्धि-व्यवहारयोरभावेऽनवगते सत्यसद्बुद्धिव्यवहारयोरारोपः, उतावगत इति विकल्प्याऽऽद्यं दूषयति—न चेति ॥ कुत इति?
अत्राह—तथाहीति ॥ सत्तयैवाधिष्ठानत्वमारोप्यं च किं न स्यादिति ? P. 94-18
अन्यथेति ॥ द्वयोरसिद्धावप्रतिपत्तिः स्यात्, रजतांशसिद्धौ स्मृतिः, P. 94-19
इदमंशसिद्धौ सामान्यप्रतिपत्तिः स्यात्, न विभ्रम इति भावः ॥

द्वितीयं दूषयति—न चेति ॥ न केवलमधिष्ठानग्रहणम्, P. 94-20
आरोप्यग्रहणं च तत्र नास्तीत्याह—नाभावेति ॥ ज्ञानस्य विषयाविति
शेषः । हेतुमाह—विशेषणस्येति ॥ अधिष्ठानसामान्याग्रहणस्य, आरोप्य- P. 94-21
स्मरणस्य च भ्रमप्रयोजकस्याभावे न भ्रमः स्यादित्याह—तत्रेति ॥ P. 94-22
८४, ८५, ८६, ८६½ ॥

तदेवमभावज्ञानस्यावश्याभ्युपेयत्वाद् न मानयोग्यत्वं सत्ताल-

अभिप्रायप्रकाशिका

ब्रह्मसिद्धिविवरणम्

विपक्षे दूषणमाह—अन्यथेति ॥ तत्रोभयाप्रतिपत्तौ दूषणमुक्तम्—अप्रतिपत्तिरिति ॥ आरोप्यमात्रप्रतिपत्तौ दूषणम्—स्मृतिरिति ॥ अधिष्ठानमात्रप्रतिपत्तौ दूषणम्—सामान्यमात्रप्रतिपत्तिर्वेति ॥ सर्वथाऽपि न भ्रमः स्यादित्याशयः ॥

उभयप्रतीतिरिहापि भवत्विति, तत्राह—न चेति ॥ दर्शनाभावस्य, व्यवहाराभावस्य च प्रतीत्यसम्भवादधिष्ठानत्वं न सम्भवतीत्यर्थः । आरोप्ययोरपि प्रतीत्यभावं दर्शयति—नाभावेति ॥ सर्वत्र हेतुमाह—विशेषणस्येति ॥
८४, ८५ ८६, ८६½ ॥

ब्रह्मसिद्धिकारिका

अस्तु वा मानयोग्यत्वं सत्त्वं तच्च प्रमीयताम् ॥ ८७ ॥
तस्मिन् मिते वस्तुसत्त्वं भवत्यागमगोचरः ।
न च सापेक्षता नास्मिन्नन्तरार्थविभिन्नताम् ॥ ८८ ॥
प्रचक्षते येऽपि सत्तामन्यां न प्रतिजानते ॥ ८८ ॥

---

भावशुद्धिः

क्षणम्; अभावेऽतिव्याप्तेरित्युक्तम्, इदानीं तदभ्युपगमेऽपि न सापेक्षतादोष इत्याह—अभ्युपगम्येति ॥

कारिकाविवरणम्

तत्=सत्त्वं चशब्देन प्रमीयतामस्त्यर्थनिष्ठेन । नन्वेवं प्रमाणयोग्यतायां वचःपर्यवसितावपि वस्तुसत्त्वा-
P. 95-2 वधारणाय मानान्तरं मृग्यमिति, अत्राह—तस्मिन् मित इति ॥ वस्तुनः सत्त्वम्=सत्ता चेदस्त्यर्थनिष्ठस्य वचसो गोचर एवं रूपभेदश्चेत् मानेन सोऽपि विषयीकार्यः; शक्तेः शक्त-शक्याधीननिरूपणत्वादित्यर्थः । प्रवर्ततां नाम वस्तुरूपेऽप्यागमः, तत्पुनर्माय(न)योग्यमित्येवं
F.-95 3 गृह्यते, इति मानान्तरस्यापि निवेशात् सापेक्षतेति, अत्राह—न चेति ॥ मानयोग्यमेतदिति हि शब्दः प्रवर्तते, न तु प्रमितमिति । न चैतावताऽन्तरार्थ-विभिन्नता, मानान्तरसंभेदः, नापि सापेक्षतेत्यर्थः । एतच्च परेषामपि समानमित्याह—प्रचक्षत इति ॥ सत्तां

अभिप्रायप्रकाशिका

प्रसङ्गागतमुपसंहृत्य, 'प्रमाणयोग्यत्वं सत्त्वम्' इत्यङ्गीकारेऽपि न सापेक्षत्वदोषो वेदान्तानामित्याह—अभ्युपगम्येति ॥

कारिकाविवरणम्

तच्च प्रमीयतां वेदान्तैरिति शेषः । तर्हि ब्रह्मपरत्वं कथमिति? अत्राह—तस्मिन्निति ॥ कुतः इति? अत आह—नास्मिन्निति ॥ अस्मिन् – मानयोग्यत्वे सत्त्वे

भावशुद्धिः

कारिकाविवरणम्

प्रमाणयोग्यतामन्यां न प्रतिपद्यन्ते, किन्तु प्रमाणग्राह्यतामेव। तेऽपि मानान्तरेणार्थविभिन्नतां मानान्तरार्थसंस्पर्शं मानान्तरप्रवृत्तिं तस्मिन् न प्रतिजानते, नाभ्युपगच्छन्तीत्यर्थः॥ ८७, ८८, ८८$\frac{1}{2}$॥

ब्रह्मसिद्धिविवरणम्

मानयोग्यत्वं सत्त्वमित्यङ्गीकारे मानस्य योग्यतायाः, तद्विषयस्य च सच्छब्दार्थत्वेन गौरवं स्यादित्याशङ्क्य दुर्बलं वादिनं दृष्ट्वा प्रौढवादः प्रवर्तत इत्यभिसन्धायाह—भवतु वेति॥ तर्हि न सिध्येद्वस्तु; P. 95- 5
मानाभावादिति, अत्राह—तत् प्रमेयमिति॥ यस्य मानस्य योग्यं ब्रह्म मीयते, तन्मानसापेक्षं वचः स्यादिति, अत्राह—न चेति॥ P. 95- 6
हेतुमाह—प्रमाणेति॥ ब्रह्मात्मनि मानान्तरस्याप्रविष्टत्वादित्यर्थः॥ किं तर्हि प्रमीयत इति? अत्राह—प्रमाणयोग्य इति॥ ब्रह्मात्मा, माना(?)- P. 95- 7
योग्य इत्येतावन्मात्रस्य वेदान्तेभ्योऽवगमादित्यर्थः॥

पराभ्युपगमरीत्या तदुपपादयति—तथाहीति॥ अन्तरार्थसंस्पर्शमन्तरा शब्दस्यार्थे प्रमाणान्तरसम्भेदः तत्संस्पर्श इत्यर्थः। किमतः? तत्राह—तत्संस्पर्शे हीति॥ यदि प्रमाणान्तरसंबन्धो ब्रह्मणः, तदा

अभिप्रायप्रकाशिका

कारिकाविवरणम्

मानान्तरयोग्यत्वमित्यन्तरेति विशेषणम्। नाचक्षते येऽपि=मानयोग्यत्वादन्यां सत्तां न प्रतिजानते, तेऽपीत्यन्वयः। अन्तरमेवार्थोऽन्तरार्थः, तेन विभिन्नताम्=विशेषितताम्। प्रमाणान्तरयोग्यतारूपा सत्तेत्येवंरूपामिति यावत्॥ ८७, ८८, ८८$\frac{1}{2}$॥

भावशुद्धिः

P. 95-9 तदन्वेष्यमित्यर्थः । मानयोग्यतामात्ररूपास्त्यर्थनिष्ठवचसः सापेक्षत्वं
दुष्परिहरमिति शङ्कते—कथमिति ॥ किमत्र कथमिति ? अत्राह—
यदा वच इति ॥ मानयोग्यं ब्रह्मेति वचः पर्यवसितम्, न तदस्तीति ।
तथाच (यस्य [1]मानस्य तत् ब्रह्म योग्यं ब्रह्मेति वचः पर्यवसितम्, न तु तद-
स्तीति । तथा च) यस्य मानस्य तद् ब्रह्म योग्यम्, तदन्वेष्यम्; तद-
धीनत्वाद्वस्तुसिद्धेरित्यर्थः ॥

यस्य यत्र किञ्चिदायतते, तत् तदपेक्षते । न च माननिमित्तो-
P. 95-11 पकारोऽपेक्षाहेतुरस्तीति सिद्धान्ती पृच्छति—किमर्थमिति ॥ अस्त्यपेक्षा-
P. 95-12 हेतुरुपकार इति पर आह—विशिष्टेति ॥ गूढाभिसन्धिः सिद्धान्त्याह—
किं पुनरिति । अगृहीताभिसन्धिः पर आह—प्रमाणेति ॥ सिद्धान्ती
P. 95-13 स्वाभिसन्धिमुद्घाटयति—अधिगतमेवेति ॥ ८७, ८८, ८८½ ॥

अभिप्रायप्रकाशिका

तदेव स्पष्टीकर्तुं चोदयति—कथमिति ॥ न विशिष्टार्थम्—ज्ञाना-नन्दादिलक्षणमित्यर्थः ॥

एवं सति तत्सिद्ध्यर्थं प्रमाणान्तरमपेक्षणीयमित्याह—तत्र यस्येति ॥ निगूढाभिसन्धिरुत्तरमाह—किमर्थमिति ॥ पृष्टं मत्वाऽऽहेतरः—विशिष्टेति ॥ सिद्धान्त्याह—किं पुनरिति ॥ पुनः पूर्ववाद्याह—प्रमाणेति ॥ सिद्धान्ती स्वाभिप्रायमाह—अधिगतमिति ॥ ८७, ८८, ८८½ ॥

कारिकाविवरणम्

'प्रमाणयोग्यतामात्रं सत्त्वमित्यङ्गीकारान्न प्रमाणा-न्तरापेक्षेत्युक्तम् । इदानीं 'प्रमाणान्तरयोग्यत्वं सत्त्वम्'

1. कुण्डलितभागो B. पुस्तके नास्ति ।

ब्रह्मसिद्धिकारिका

प्रमाणान्तरभिन्नार्थमपि मानं न नो वचः ॥ ८९ ॥
निरपेक्षमिहार्थे तु प्रमितं वस्त्विदं मया ।
अर्थमात्रे च सापेक्षमन्यापेक्षार्थबोधनात् ॥ ९० ॥
अबाधितमपि त्वर्थे प्रमाणांशेऽपबाधनात् ।
तत्राप्रमाणतामेति बुद्धानाप्तवचो यथा ॥ ९१ ॥
आप्तवाक्यं पुनर्नार्थे न मानांशेऽपबाधितम् ।
निरपेक्षं प्रमाणांशे व्यवहारोऽन्यथा कथम् ॥ ९२ ॥
मयेति वक्त्रभावेन संभेदरहितं ततः ।
प्रलीनज्ञानविज्ञेयविभागं स्वात्मवेदनम् ॥ ९३ ॥
प्रवेदयन्तु वेदान्ता मानान्तरमलौकिकम् ।
तत्सिद्धिसिद्धताऽर्थस्य पुंवचोवद् भविष्यति ॥ ९४ ॥

---

अभिप्रायप्रकाशिका

इत्यङ्गीकारेऽपि न सापेक्षत्वमित्याह—प्रमाणान्तरेति ॥ मानं न भवतीति नो, किन्तु मानमेवेति यावत् । सापेक्षतया प्रामाण्यं स्यादिति, अत आह—निरपेक्षमिति ॥ 'इदं वस्तु मया प्रमितम्' इत्यस्मिन्नर्थे निरपेक्षत्वमित्यर्थः । कथं तर्हि सापेक्षत्वप्रसिद्धिराप्तवचसः इति? अत आह— अर्थमात्र इति ॥ सापेक्षस्यापि प्रामाण्ये बुद्धादिवाक्यानां सापेक्षतया कथमप्रामाण्यम्? न च तत्र बाधः; चैत्यवन्द-नादिवाक्यार्थस्य रजतादिवद् बाधादर्शनादिति, अत आह— अबाधितमपीति ॥ आप्तवाक्यं पुनर्नैवमित्याह—आप्तवा-क्यमिति ॥ प्रमाणांशेऽपि प्रमाणान्तरापेक्षा किं न स्यात्? मैवम्; अनवस्थानाद् व्यवहाराभावप्रसङ्गादित्याह—व्यव-

भावशुद्धिः

कारिकाविवरणम्

तदेवं प्रमाणयोग्यतायामपि सत्तायामस्त्यर्थनिष्ठस्य वचसो मानान्तरा(रसं)भिन्नावगाहिनो न सापेक्षतेत्युक्तम्, संप्रति मानान्तरसंभेदाभ्युपगमेऽपि न दोष
P. 95-15 इत्युत्तरतात्पर्यमाह—प्रमाणान्तरेति ॥ न मानं नो,
P. 95-16 किन्तु मानमेव । ननु मानान्तर(सं)भिन्नार्थगोचरं वचः
P. 95-17 सापेक्षं कथं मानमिति ? अत्राह—निरपेक्षमिहेति ॥ तत्
P. 95-18 किं सर्वत्रैवानपेक्षम् ? नेत्याह—अर्थमात्रे चेति ॥ हेतुमाह—अन्यापेक्षेति ॥ सापेक्षमपि चेत् प्रमाणम्, कथं तर्हि चैत्यवन्दनादिवाक्यमबाधितार्थमपि सापेक्षत्वेनाप्रमाणमिति ? अत्राह—अबाधितमपीति ॥ अत्रोदाहरणमाह—बुद्धेति ॥ 'चैत्यवन्दनात् स्वर्गः' इत्यादिबुद्धवचः, 'नद्यास्तीरे फलानि सन्ती'ति लौकिकानाप्तवचनमवधृतयथार्थादृष्टवादित्वाद् विप्रलम्भकस्य पुंस इत्यर्थः;
P. 95-21 न पुनरेवंविधाऽऽप्तवाक्यस्येत्याह—आप्तवाक्यमिति ॥ संभवत्प्रमाणगोचरं निरपेक्षं प्रमाणांशे, प्रमेयांशे तु प्रमाणसापेक्षम्; तथापि नाप्रमाणम्; प्रमाणोपस्थापनद्वारे-
P. 95-22 णार्थनिश्चायकत्वादित्यर्थः । कुत एतत् ? अत्राह—व्यवहारोऽन्यथेति ॥ आप्तवाक्यस्य सापेक्षत्वेनाप्रमाणत्वे सर्व एव शब्दनिबन्धनो व्यवहारः समुच्छिद्येतेत्यर्थः ॥ एवं च वेदान्तानामपौरुषेयाणामस्त्यर्थनिष्ठानामाप्तवचनवत्

अभिप्रायप्रकाशिका

कारिकाविवरणम्

हारोऽन्यथेति ॥ दार्ष्टान्तिकमाह—मयेति ॥ तस्मान्मयेति वक्तृसम्भेदरहितमलौकिकं मानं वेदान्ताः प्रवेदयन्तु काममित्यन्वयः । किं तर्हि वस्तुसिद्धिरिति ? अत आह—

भावशुद्धिः

कारिकाविवरणम्

प्रमाणान्तरसम्भिन्नार्थानामपि मयेति संभेदमात्ररहितानां सिद्धं प्रामाण्यमित्याह—मयेतीति ॥ वेदान्ता P. 95-23
मानान्तरं प्रतिपादयन्ति चेत्, ब्रह्मणो मेयत्वेन जडत्वप्रसक्तिः, अत्राह—प्रलीनेति ॥ ब्रह्मगोचरं साक्षात्कारि P. 95-24
विज्ञानं प्रत्यक्षमलौकिकम्। न ततोऽन्यद् ब्रह्मेत्यर्थः ॥
अत एव स्वात्मवेदनम्=स्वप्रकाशम्। वेदान्तानामलौकिकमानपरत्वे कथं ब्रह्मसिद्धिः? अत्राह—तत्सिद्धि- P. 96- 2
सिद्धतेति ॥ प्रमाणे निरपेक्षा वेदान्तास्तदभिन्ने प्रमेयेऽप्यनपेक्षा इत्यर्थः ॥ ८९,९०,९१,९२,९३,९४ ॥

ब्रह्मसिद्धिविवरणम्

मानान्तरसंभिन्नार्थत्वे वेदान्तानां स्मृतिवदप्रामाण्यं दुष्परिहरमिति, अत्राह—न खल्विति ॥ क्वैतदुपलब्धम्? तदाह—एव हीति ॥ P. 96- 3
मानान्तरनिरपेक्षत्वं स्वतः प्रामाण्यं सापेक्षत्वेन विरुद्धमिति चोदयति—कथं पुनरिति ॥ प्रमाणमिति शेषः। वक्तृज्ञानेंऽशे निरपेक्षमिति परिहरति— P. 96- 4
उच्यत इति ॥ कस्मिन् विषये तर्हि पुंवचसः सापेक्षत्वमिति? अत्राह—केवले हीति ॥ अर्थे पुरुषज्ञानापेक्षमिति संबन्धः। पुरुषवचसो वक्तृज्ञाने P. 96- 5
निरपेक्षत्वे किं फलितमिति? तदाह—तत्रेति ॥ कुतस्तर्ह्यर्थः सिध्यतीति? P. 96- 6
अत्राह—तत्सिद्धीति ॥ P. 96- 7

यदि सापेक्षमपि पुरुषवचः प्रमाणम्, किं तर्हि बुद्धादिवाक्यं सापेक्षत्वेनाप्रमाणमुच्यत इति चोदयति—कथं तर्हीति। चैत्यवन्दनात् P. 96- 8

अभिप्रायप्रकाशिका

तत्सिद्धीति ॥ प्रमाणापृथक्त्वेन प्रमेयसिद्धिर्दृष्टान्ते, दार्ष्टान्तिके तु स्वयंप्रकाशकत्वाद्वस्तुनस्तदभिन्नतया सिद्धत्वव्यवहार इत्यर्थः ॥ ८९, ९०, ९१, ९२, ९३, ९४ ॥

सापेक्षं कथं पुनः प्रमाणमित्यन्वयः। कस्मिन्नंशे पुनः सापेक्षत्वमिति? अत आह—केवले हीति ॥ तत्र हेतुः—'एवमयम्'इति ॥ केवलेऽर्थे पुरुषज्ञानापेक्षत्वमित्यन्वयः। ततः किमिति? अत आह—तत्रोपलब्धाविति ॥

भावशुद्धिः

स्वर्गो न भवतीति बाधानुदयादबाधितार्थमित्यर्थः । सापेक्षत्वेन, बाधितत्वेन वा यद्यपि पुरुषवचसो नाप्रामाण्यम्, तदा(था)प्यपेक्ष(क्ष्य)माण-
P. 96- 9 स्यासम्भवादप्रामाण्यमिति परिहरति— उच्यत इति ॥ 'यदपेक्षमि'त्येतत्
स्पष्टयति—यत्सिद्धिमुखेनेति ॥ वक्तृज्ञानांशे बाधितत्वादप्रमाणमर्थ इति
P. 96-10 व्यधिकरणासिद्धमिति, अत्राह—तस्यासिद्धेरिति ॥ तदुदाहरति—
P. 96-11 यथेति ॥ अबाधितार्थस्य प्रामाण्यमौत्सर्गिकमपेक्ष(क्ष्य)माणदर्शनासंभवे-
P. 96-12 नापोद्यत इत्यत्र वृद्धसंवादमाह—यथोक्तमिति ॥ नदीतीरफलादिवाक्य-
मनाप्तप्रणीतमप्यत्रोदाहरणमित्याह—यथाचेति ॥

P. 96-13 तत्र हेतुमाह—अयथादृष्टेति ॥ अपेक्ष्यमाणदर्शनासंभवादप्रामा-
ण्यमाप्तवाक्येऽपि स्यादिति, अत्राह—आप्तवच इति ॥ एवमपवादाया-
P. 96-14 (भाव)मुक्त्वा(क्त्वा)उत्सर्गप्रवृत्तिमाह—प्रमाणं चे (णांश)ति ॥ विपक्षे
P. 96-15 दण्डमाह—अन्यथेति ॥ आप्तवाक्यप्रामाण्येऽपि किमायातं वेदान्ताना-
P. 96-16 मिति ? अत्राह—एवं चेति ॥ स्वप्रकाशे ब्रह्मणि मानान्तरासंभवाद्
P. 96-17 वेदान्तानां मानांशे बाध इति, अत्राह—तथाहीति ॥

P. 96-18 मानान्तरसिद्धावपि ब्रह्मणोऽसिद्धिरिति, अत्राह—तद्द्वारेति ॥ ब्रह्मस्वरूपत्वात्तस्येत्यर्थः । वक्ता हि मयाऽवगतोऽयमर्थ इति परप्रतिपत्तये वाक्यं प्रयुङ्क्ते, वेदान्तानामपौरुषेयाणां तथा प्रयोगायोगात्
P. 96-19 कथमाप्तवाक्यसाम्यमिति, अत्राह—इयांस्त्विति ॥ मानयोग्यत्वम्,
तद्विषयत्वं च सत्त्वमिति स्वीकृत्यास्त्यर्थनिष्ठवाक्यस्य नाप्रामाण्यमि-
P. 96-21 त्युक्त्वा प्रकृतमुपसंहरतीत्याह—अभ्युपगमेति ॥ ८९, ९०, ९१, ९२,
९३, ९४ ॥

अभिप्रायप्रकाशिका

उक्तमेवार्थं स्पष्टयति—यत्सिद्धीति ॥ उक्तेऽर्थे भट्टवार्तिकमुदाहरति—यथोक्तमिति ॥

'अनाप्तवचो यथा' इति भागं व्याचष्टे—यथा चेति ॥ सुतरामिति ॥ प्रमाणांशे निरपेक्षत्वात्, मानमूलत्वाच्चातिशयेन मानमित्यर्थः ॥ ८९, ९०, ९१, ९२, ९३, ९५, ९५½ ॥

ब्रह्मसिद्धिकारिका

एवं न मेयता सत्ता ॥ ९४$^{१}_{४}$ ॥

नन्वन्याऽपि न युज्यते ॥ ९४$^{१}_{२}$ ॥

न हि पूर्वावमर्शेन विना सामान्यकल्पना ॥ ९५ ॥

गामेकामीक्षितवतो जायतेऽन्यत्र यादृशः ।

अवमर्शो दृष्टसतस्तथा न हि सदन्तरे ॥ ९६ ॥

एकशब्दप्रवृत्तिस्तु दण्ड्यादिवदुपेयताम् ॥ ९६$^{१}_{२}$ ॥

---

भावशुद्धिः

कारिकाविवरणम्

अर्थस्वभावोऽपि सत्ता न युक्तेति चोदयतीत्याह—
परः पुनरिति ॥ व्यावृत्तेष्वनुवृत्तप्रतिसन्धानं सामान्यकल्प- P. 96-23
नानिदानम्;तदभावो(वेऽ)श्व-महिषादावेकजातिकल्पनाऽ- P. 97- 1
भावादिति हेतुमाह—न हीति ॥ द्रव्य-गुण-कर्मस्वनुवृत्त-
प्रत्यय एव सत्ताजातिकल्पकोऽस्तीत्याह—गामेका-
मिति ॥ दृष्टं सद् येन, तस्य दृष्टसतः । परमाणुं दृष्टवतो मेरौ
तद्रूपप्रत्ययो नास्तीत्यर्थः । 'द्रव्यं सत्' 'गुणः सन्' इति
कथं सच्छब्दप्रयोग इति? अत्राह—एकशब्देति ॥ P. 97- 4
प्रमाणयोगोपाधिकीत्यर्थः ॥ ९४$^{१}_{४}$ ९४$^{१}_{२}$ ९५, ९६, ९६$^{१}_{२}$ ॥

अभिप्रायप्रकाशिका

कारिकाविवरणम्

प्रमाणप्रमेयत्वादन्याधीना न सम्भवतीति शङ्कते—नन्विति ॥ तत्कल्पकाभावादिति हेतुमाह—न हीति ॥ पूर्वावमर्शाभावमेव दर्शयति—गामेकामिति ॥ एकशब्दप्रवृत्तावुपलक्षणाद्यभावात्सत्त्वमङ्गीकर्तव्यमिति न मन्तव्यम्; अप्रतिपन्नसत्ताकल्पनात् प्रतिपन्नप्रमाणयोग्यत्वस्यैव कारणत्वोपपत्तेरित्याह—एकशब्देति ॥ ९४$^{१}_{४}$, ९५, ९६, ९६$^{१}_{२}$ ॥

ब्रह्मसिद्धिकारिका

को नु पूर्वावमर्शोऽयं पूर्वरूपान्वयो धियः ॥ ९७ ॥
सदन्तरेऽपि सोऽस्त्येव कयाचित् खलु मात्रया ।
सर्वात्मना त्वनुगमो न दृष्टः खण्ड-मुण्डयोः ॥ ९८ ॥

भावशुद्धिः

सत्ता, जातिः, अबाधिका(त)विषयत्वे सत्यनुवृत्तप्रत्ययवेद्य-
P. 97-5 त्वात्; गोत्ववदित्याशङ्क्य व्याकरोति—दृष्टरूपेति ॥ प्रत्यभिज्ञानात्
सामान्यकल्पनमुदाहरति—यथेति ॥ 'स एवायं गौरि'ति गवाकारेणानु-
P. 97-6 सन्धानमित्यर्थः । प्रकृतप्रयोगे हेतुरसिद्ध इत्याह—न किञ्चिदिति ॥
मेरु-सर्षपयोरनुसन्धानाभावादित्यर्थः । 'सन् घटः' 'सन् पटः' इत्यनुगत-
P. 97-7 शाब्दव्यवहार एव सत्तां कल्पयतीति, अत्राह—एकशब्दप्रवृत्तिरिति ॥
उदाहरति—दण्डीति ॥ दण्डित्वादिजात्यभावेऽपि दण्डादिविशेषण-
योगाद् 'दण्डी' 'पाचकः' 'लावकः' इत्यादिशब्दप्रवृत्तिर्यथेत्यर्थः ॥
९५, ९६, ९६१/२ ॥

पूर्वदृष्टवस्त्वंशस्य कस्यचिदुत्तरदृष्टिविषयेऽन्वयः प्रकाशः=पूर्वावमर्शः, किं वा तदेवेति प्रत्यभिज्ञानमिति विकल्पयन् परिहरति—अत्रोच्यत इति ॥

कारिकाविवरणम्

P. 97- 7 आद्यमनुवदति—पूर्वरूपेति ॥ यदीत्युपस्कर्तव्यम् ।
P. 97-10 सिद्धा तर्हि सत्ताजातिरिति, अत्राह—सदन्तरेऽपीति ॥
मात्रया=लेशेन, भात्वेनेत्यर्थः । द्वितीयमव्याप्त्या
दूषयति—सर्वात्मनेति ॥ यादृशः खण्डादिषु, तादृशो न
P. 97-12 सदन्तरेऽस्तीति शंकते—न तादृशश्चेदिति ॥ परि-
हरति—[1]नो भेदेति ॥ वैलक्षण्यमात्रेण प्रतीयमाननिरा-

अभिप्रायप्रकाशिका

कारिकाविवरणम्

किं बुद्धेः पूर्वरूपावभासः पूर्वावमर्शः, किं वा स एवायमिति पूर्वापरानुसन्धानम् । आद्यपक्षेऽप्येकदेशस्यान्वयः ? किं वा सर्वस्येति विकल्प्य क्रमेण दूषयति—को नु पूर्वेत्यादिना ॥ तथापि खण्डादिष्विव पूर्वावमर्शो नास्तीत्याशङ्क्याऽकिञ्चित्करमेतदिति परिहरति—न तादृश इत्यादिना ॥

1. न भेदेति मूलपाठः ।

ब्रह्मसिद्धिकारिका

न तादृशश्चेन्नो भेदमात्राद्द्वेधः स्वपह्नवः ।
न भेदमात्रान्मृज्जातिहीनं मणिक-मल्लकम् ॥ ९९ ॥
रूपान्वयः प्रत्ययस्य मणिकेषु हि यादृशः ।
न दृष्टमल्लकस्यास्ति मणिके खलु तादृशः ॥ १०० ॥

---

भावशुद्धिः

कारिकाविवरणम्

सासंभवं साधयति—न भेदमात्रादिति ॥ मणिक-शराव- P. 97-13
योर्मृज्जातीययोरपि प्रत्ययवैलक्षण्यं स्पष्टयति—रूपान्वय P. 97-14
इति ॥ दृष्टमणिकस्य मणिकेऽन्यस्मिन् यादृशो रूपान्वयः, न तादृशो दृष्टमल्लकस्य दृष्टशरावस्यास्तीत्यर्थः ॥ ९७, ९८, ९९, १०० ॥

ब्रह्मसिद्धिविवरणम्

सामान्याभिहितेऽर्थे विकल्प्य, विशेषनिरासे छलप्रसङ्ग इत्य-
भिप्रेत्य विकल्पयति—कः पुनरिति ॥ कस्मिन् सति किं स्यात् ? अत्राह P. 97-16
—तत्रेति ॥ सत्तासामान्यसिद्धेः प्राक् मात्रयाऽपि नास्त्यनुगतिः,
अत्राह—तथाहीति ॥ व्यतिरेकद्वाराप्याह—अन्यथेति ॥ निरुपा- P. 97-17
ख्यवत्=शशशृङ्गवत् । यथा शशो विलक्षणश्चकास्तीत्यर्थः ॥

पूर्वदृश्यस्वरूपस्य सर्वस्योत्तरबुद्धिविषयेऽन्वयः पूर्वरूपावमर्श
इति शङ्कते—अथेति ॥ दूषयति—स इति ॥ अव्याप्तिमुपपादयति— P. 97-18
न हीति ॥ उत्कटः परामर्शो मुण्डादिषु 'स एवायं गौरि'ति, मैवं मेरु- P. 97-19
सर्षपादावित्याह—अथेति ॥ दूषयति—तदसदिति ॥ गोत्वादेः प्रत्या- P. 97-22
ख्यानप्रसङ्गं स्फोरयति—न हीति ॥ उक्ता(क्ता)रिकं हेतुमुक्त्वा कारि- P. 97-23
कागतं तमाह—सामान्यगोचरेऽपीति ॥ कुत इति ? अत्राह—नानाम- P. 98-1
णिकेति ॥ नास्त्येव तयोरेका जातिरिति, अत्राह—न चेति ॥ हेतुमाह— P. 98-2
किञ्चिदिति ॥ मृन्मणिको मृन्मल्लकमिति प्रतीतेरित्यर्थः ॥ ९७, ९८, ९९, १०० ॥

अभिप्रायप्रकाशिका

कारिकाविवरणम्

तत्र दृष्टान्तमाह—न भेदेति ॥ मणिक-मल्लकयो रूपान्वयमभेदमेवाह—रूपान्वय इति ॥ ९७, ९८, ९९, १०० ॥

 

ब्रह्मसिद्धिकारिका

पूर्वावमर्शः स इति प्रख्येत्यपि न शोभते ॥
मणिकं वीक्षितवतः सोऽपि नोदेति मल्लके ॥ १०१ ॥

---

भावशुद्धिः

P. 98- 3 द्वितीयकल्पानुवादेनोत्तरकारिकामवतारयति—अथेति ॥

कारिकाविवरणम्

द्रागित्येव 'स इति प्रख्या' पूर्वावमर्श इति न
P. 98- 5 शोभते, हेतुमाह—मणिकमिति ॥ १०१ ॥

ब्रह्मसिद्धिविवरणम्

'सः' इति प्रख्या सामान्यकल्पनामूलं चेत्, स्मृतेरपि तत्कल्पना-
P. 98- 6 हेतुत्वप्रसक्तिरित्याशङ्क्य व्याचष्टे—पूर्वापरेति ॥ किमयमभेदमात्रे मानम्,
P. 98- 7 उत भिन्नयोः सामान्यरूपाभेदे। नाद्य इत्याह—एतदपीति ॥ हेतुमाह—
यत इति ॥ अन्ययोगव्यवच्छेदं दूष(य)ता मानान्तरं सूचितम्। किं
P. 98- 8 तदिति? तदाह—अभिन्नरूपेति ॥ कुत इति? अत्राह—अन्यथेति ॥
P. 98- 9 अस्ति तत्राप्यनुसन्धानमिति, अत्राह—न हीति ॥
द्वितीयं दूषयति—अपि चेति ॥ द्रागित्येव=झटित्येव ॥ मणिक-
P. 98-10 मल्लकयोर्मणिकत्वजातिर्नास्तीत्याह—न चेति ॥ विचारयतस्तत्र
P. 98-11 भवति मृत्त्वेनानुसन्धानमिति, अत्राह—विमृशतस्त्विति ॥ १०१ ॥

अभिप्रायप्रकाशिका

इदानीं 'स एवायमि'ति पूर्वापरानुसन्धानमवमर्श इति द्वितीयं कल्प-मुत्थाप्य दूषयति—अथेति ॥

कारिकाविवरणम्

तदभावेऽपि जातेरङ्गीकारादिति हेतुमाह—मणिक-मिति ॥ १०१ ॥

ब्रह्मसिद्धिविवरणम्

तत्राप्यनुसन्धानादेवैकत्वं किं न स्यादिति? अत आह—न हीति। इदानीं श्लोकोक्तं परिहारमाह—अपि चेति ॥ विमर्शवतामनुसन्धानं तु दार्ष्टान्तिकेऽपि तुल्यमित्याह—विमृशतस्त्विति ॥ १०१ ॥

ब्रह्मसिद्धिकारिका

सामान्यरूपभूयस्त्वे तस्मात् तत्त्वं प्रकाशते ।
विलक्षणत्वमल्पत्वे चकास्ति तदनुद्भवात् ॥ १०२ ॥
यस्मात् सत्यपि सामान्ययोगे मणि-शरावयोः ॥ १०२½ ॥

भावशुद्धिः

मणिकयोरिव मणिक-शरावयोरप्येकजातियोगश्चेत्, कुतस्तर्हि मणिकं दृष्टवतो मणिकान्तरदर्शने 'स एवेदमि'त्यनुसन्धानं भवति, शरावदर्शने न भवतीति पृच्छति—तुल्ये तर्हीति ॥ एतत्परिहारत्वेन श्लोकमवतारयति—उच्यत इति ॥ P. 98-13

कारिकाविवरणम्

श्लोकगतं तस्माच्छब्दपरामृष्टहेतुं स्पष्टयति— P. 98-18
यस्मादिति ॥ उद्भवः=अनुसन्धानयोग्यत्वम् ; ॥१०२, १०२½॥

ब्रह्मसिद्धिविवरणम्

भूयो निरस्ताविं(ऽपि)प्रमाणग्राह्यता सत्ता निराकरणान्तराभिधित्सया पुनर्निरस्यते—न च दण्ड्यादिवदिति ॥ यदि(दी)न्द्रियादि प्रमाणम्, यदि वा संवेदनमात्मव्यापारः, उभयमप्यत्यन्तपरोक्षतया ज्ञेयाभिव्याप्तिलक्षणफलप्रसवोन्नेयमिति प्रागेव तद्ग्रहा'दस्ती'तिधीर्जायते, अत इत्यर्थः ॥ P. 98-22

अभिप्रायप्रकाशिका

उत्तरश्लोकमवतारयितुमाकाङ्क्षामुत्थापयति—तुल्ये[1]ऽपीति ॥

कारिकाविवरणम्

तत्त्वम्=तज्जातीयत्वम् ॥ १०२, १०२½ ॥

ब्रह्मसिद्धिविवरणम्

"प्रमाणं कार्यविज्ञेयम्"इति प्रमितिकार्योन्नेयत्वात् प्रमाणस्य, तस्या'स्ती'तिबुद्ध्युत्तरकालीनप्रतीतित्वात् प्रमाणविशिष्टे न सदिति बुद्धिः ; नागृहीतविशेषणा विशिष्टबुद्धिरिति न्यायादित्यर्थः ॥ १०२, १०२½ ॥

न चेति ॥ विशेषणज्ञानजन्या विशिष्टबुद्धिरिति वैशेषिकाभिप्रायेण प्रागित्युक्तम्, विशेषण-विशेष्ययोरेकज्ञानग्राह्यत्वमिति नैयायिकमतावलम्बनेन तत्कालं वेत्युक्तम् ॥

1. तुल्ये तर्हीति मूलपाठः ।

ब्रह्मसिद्धिकारिका

प्रमाणं कार्यविज्ञेयमसंयोज्याऽस्तिधीर्यतः ॥ १०३ ॥
प्रथमं जायते तस्मान्न दण्ड्यादिसमानता ॥ १०३½ ॥

---

भावशुद्धिः

विशेषण-विशेष्ययोरेकधीविषयत्वनियमः, न तु विशेषणबुद्धेः
P. 99- 1 प्राग्भावनियम इति, अत्राह—नागृहीतेति ॥ परस्येष्ट(:)स नियम
इत्यर्थः ॥ किमेतावताऽपीति? अत्राह—न चेति ॥ (कुत [1]इति ? अत्राह—
P. 99- 2 तथाहीति ॥ सा=सद्बुद्धिरित्यर्थः । तर्हि प्रमाणस्य तत्कारणत्वात् सिद्धः
प्राग्भाव इति, अत्राह—प्रमाणं चेति ॥ यस्मादन्तरेण प्रमाणप्रतीतिं
P. 99- 3 सद्बुद्धिरित्युपसंहरति—तस्मादिति ॥) अस्त्यर्थस्य सामान्यरूपत्वे वर्त-
मान एव रूपे समवायात् प्रमाणयोगकालानुविधायिनी कालप्रवृत्ति-
P. 99- 4 स्तत्र न स्यादिति चोदयति—यदि तर्हीति ॥ प्रमाणयोग्यस्य त्रैकाल्य-
संभवादुपपद्यते (तत्प्र[2]वृत्तिः । तस्मात् प्रमाणयोग एव सत्तेत्यर्थः । परि-
P. 99- 6 हरति—तदुपाधीति ॥ तस्य प्रमाणस्योपाधिस्तदुपाधिः=प्रमाणविषय-
कालत्रयम्, तेनोपाधिना) त्रै(त्रि)काल्या अपि सत्ताया भेदः कल्पितः,
P. 99- 7 तेन 'अयं कूपोऽस्ती'त्यादिव्यपदेशभेद इत्यर्थः । उदाहरति—देवदत्तेति ॥
वदन्ति वृद्धाः—'इह भूत्वा देवदत्तः पाटलीपुत्रे भवती'ति, तत् वर्तमानमेव
देवदत्तं तत्तद्देशसंयोगभेदोपधानकल्पितभेदं पश्यन्ति । न चैतावता
तस्य तत्तद्देशसंयोग एव सत्तेत्यर्थः । तस्मात् भिन्नेषु द्रव्य-गुण-कर्मस्वन-
न्यथासिद्धसदित्यभिन्नबुद्धि-व्यपदेशनिबन्धनमस्तित्वसामान्यं सिद्धम् ॥
॥ १०३, १०३½ ॥

P. 99- 8 क्रियासंसर्गमङ्गीकृत्य विधूय, अधुना क्रियापेक्षाऽपि वेदार्थ-
संबन्धे नास्तीत्यस्मिन्नर्थे श्लोकमवतारयति—न च क्रियामिति ॥

अभिप्रायप्रकाशिका

तत्कालानुविधायिनी=प्रमाणकालानुविधायिनी । उत्तरमाह-तदुपाधीति॥
'देवदत्तः सुघ्नेऽभूत्', 'पाटलीपुत्रे वर्तते', 'मधुरायां भविष्यती'त्यस्त्यर्थ-
बाह्यत्वेऽपि मानसम्बन्धात् तत्कालानुविधायिनी बुद्धिरित्यर्थः ॥१०३,१०३½॥

---

1. कुण्डलितो भागो B पुस्तके नास्ति ।
2. कुण्डलितो भागो A पुस्तके नास्ति

ब्रह्मसिद्धिकारिका

संबन्धमात्रावसितमपि चान्ये विपश्चितः ॥ १०४ ॥

आहुर्वचोऽक्रियमयं राज्ञो ना फलिनो द्रुमाः ॥ १०४½ ॥

भावशुद्धिः

कारिकाविवरणम्

क्रिया न विद्यते यत्र, तदक्रियम् । ना=पुरुष इत्यर्थः ॥ १०४½ ॥

ब्रह्मसिद्धिविवरणम्

नामपदार्थानामेवान्योन्यसंसर्गे किं प्रमाणम् ? अनुभव इत्याह—राज्ञोऽयमिति ॥ अस्तिर्भवनी(न्ती)पर इत्यादिस्मरणाद् अस्ति तत्राप्यस्ति- P. 99-11
क्रियेति, अत्राह—न चेति ॥ हेतुमाह—यत इति ॥ (अ)निर्ज्ञातो राज्ञा P. 99-12
संबन्धो यस्य तस्येति विग्रहः । तदुपपादयति—न हीति ॥ 'पुरुषोऽस्ति', P. 99-13
'वनस्पतयः सन्ती'ति सद्भावस्य प्रत्यक्षसिद्धस्य प्रतिपादनाय वाक्या- P. 99-13
पेक्षणादित्यर्थः । क्व तर्हि वाक्यतात्पर्यमिति? अत्राह—किन्त्विति । P. 99-15
यदा हि निर्ज्ञातपुरुष-वनस्पतिमद्भावः पुरुषः पृच्छति—कस्यैष पुरुषः, कियन्तश्चैते वनस्पतय इति? तस्योत्तरम्—'राज्ञः' 'फलिता द्रुमाः' इति॥ तस्मात् सम्बन्धे पर्यवसानम्; तत्प्रश्नोत्तरत्वादित्यर्थः । सत्ताया अदृष्टत्वान्न तत्पर्यवसानमित्याह—नेति ॥ राज्ञः पुरुषोऽयम्, वन- P. 99-16
स्पतयः फलिता इत्यवधार्यम्, इत्यस्त्येव तत्रापि क्रियासम्बन्ध इति, अत्राह—यदपीति ॥ तद् दूषयति—शब्दाद् यदात्मविज्ञानम्, तद् न P. 99-17
तावद्विधीयत इति प्रागेवोक्तन्यायेन निरस्तमित्यर्थः ॥ १०४½ ॥

तदेवं क्रियारहितं वाक्यम्, अस्तिक्रियानिष्ठस्य निरपेक्षत्वं च प्रतिपादितम् । इदानीं क्रियारहितवाक्य(ा)भावम्, अस्तिक्रियानिष्ठस्य सापेक्षत्वं चाभ्युपगम्य वेदान्तानामनन्यत्वमुपपादयति—अथापीति ॥

अभिप्रायप्रकाशिका

क्रियाभ्युपगमेन परिहारमुक्त्वा, इदानीमन्तरेणापि क्रियामस्ति पदार्थानां संसर्ग इत्याह—न चेति ॥ क्रियान्तराभावेऽपि—"अस्तिर्भवन्तीपरः प्रथमपुरुषे प्रयुज्यमानो गम्यते" इति न्यायादस्त्येवास्तिक्रियेति, तत्राह—न चेहापीति ॥ अस्तित्वस्यावगनतत्रेनानपेक्षितत्वाद् न प्रतिपाद्यत्वमित्यर्थः । उक्तेऽर्थे वाक्ययोर्वृत्तिप्रकारं दर्शयति—योऽयमिति ॥ १०४, १०४½ ॥

क्रियानिष्ठत्वमङ्गीकृत्यापि दूषयति—अथापीति ॥

ब्रह्मसिद्धिकारिका

जनिक्रियावसानाच्च विशिष्टं शक्यबोधनम् ॥ १०५ ॥

कारणं जायत इदमीदृक्षात् कारणादिति ॥ १०५½ ॥

---

भावशुद्धिः

कारिकाविवरणम्

विशिष्टम्=सत्यज्ञानानन्तप्रत्यग्विजातीयमित्यर्थः ॥ यत्परः शब्दः, स शब्दार्थ इति स्थिते वाक्यं जनिक्रियापरं चेत्, न तेन विशिष्टवस्तुसिद्धिरिति, अत्राह—ईदृक्षादिति ॥ आरोपदशासिद्धक्रियायामवान्तरतात्पर्यम्, परमतात्पर्यं न विशिष्टवस्तुनीत्याशयः ॥ १०५, १०५½ ॥

ब्रह्मसिद्धिविवरणम्

P. 100-2 उदाहरति—यथेति ॥ निरन्तरनिबिडशाष(ख)स्थूलस्कन्धबन्धमूलात् तरोरित्यर्थः ॥

विशेषनिषेधेनोपनिषदो ब्रह्म प्रतिपादयन्ति, न तु जगत्कारण-
P. 100-3 त्वेनेति, अत्राह—तथाचेति ॥ सर्वाणि=ब्रह्मादिस्थावरान्तानि, आकाशादेव परमात्मन एव ॥

इदानीं विशिष्टरूपेण जीवानां कार्यत्वात् तत्कारणत्वेन ब्रह्म-
P. 100-4 प्रतिपादकश्रुतिमुदाहरति—यथाऽग्नेरिति ॥ क्षुद्राः=क्षुल्लकाः, विस्फुलिङ्गाः=स्फुटकानि, उच्चरन्ति=विविधा उद्गच्छन्ति, एवमेवैतस्मादात्मनः सर्वे प्राणाः यथायतनं विप्रतिष्ठन्ते, प्राणेभ्यो देवा देवेभ्यो लोका इति बृहदारण्यके श्रूयत इत्यर्थः । चेतनस्य ब्रह्मणोऽचेतनजगदुपादानत्वे ब्रह्मचैतन्यस्य कार्यप्रपञ्चे समवायप्रसङ्ग इत्याशङ्क्य तद्व्य-
P. 100-7 भिचारप्रदर्शनाय श्रुत्यन्तरमुदाहरति—यथोर्णनाभिरिति ॥ न केवलं जन्मकारणत्वम्, लयकारणत्वमपि ब्रह्मण एवेति प्रतिपादनाय श्रुत्य-
P.100-11 न्तरमाह—तदेतदिति ॥ अपियन्ति=लीयन्ते ॥

अभिप्रायप्रकाशिका

कारिकाविवरणम्

विशिष्टकारणबोधनप्रकारमेव दर्शयति—जायत इदमिति ॥ १०५, १०५½ ॥

ब्रह्मसिद्धिविवरणम्

श्रुत्यनुकूलं चेदमित्याह—तथा चेति ॥ वक्ष्यमाणग्रन्थसन्दर्भस्य तात्पर्यमाह—इदानीमिति ॥ १०५, १०५½ ॥

ब्रह्मसिद्धिकारिका

ननु प्रमान्तराधीनसंसर्गाः पुरुषोक्तिषु ॥ १०६ ॥
पदार्था विध्यधीनात्मसंश्लेषा इतरत्र तु ।
पदानां रचना तत्र विवक्षापरिपूर्तये ॥ १०७ ॥

---

भावशुद्धिः

ब्रह्मसिद्धिविवरणम्

जगदुपादानत्वे ब्रह्मणस्तदभेदे जडत्वादिप्रसक्तिः, भेदेऽद्वैत- P.100-17
व्याहतिरित्याशङ्क्य तन्निरासाय श्रुत्यन्तरमाह--दिव्यो हीति ॥ अप्राकृतः=दिव्यः, पूर्णत्वात् पुरुषः, बाह्येन=पृथिव्यादिना, अभ्यन्तरेण=देहादिना च सह वर्तत इति सबाह्याभ्यन्तरं वस्तु, तद्भेदरहित इत्यर्थः । अप्राणोऽमना इति लिङ्गदेहस्य निषेधः । शुभ्र इति स्थूलदेहस्य, परतोऽक्षरात् पर इति वस्तुतोऽविद्यासंबन्धनिषेधः । विधिनिरपेक्षं पदार्थसंसर्गस्य प्रतिपादितत्वाद् उत्तरग्रन्थो न संगच्छत इत्याशङ्क्य तमवतारयति--इदानीमिति ॥ संसर्गप्रयोजकनिरूपणेन P.100-22
वेदान्ते विधिप्रतिपादनायोत्तरग्रन्थ इत्यर्थः ॥ १०५, १०५½ ॥

कारिकाविवरणम्

लौकिकपदार्थसंसर्गस्य मानान्तरं प्रयोजक-
मुक्त्वा वेदे विधिस्तत्प्रयोजक इत्याह—विध्यधीनेति ॥ P. 101-2
विधेरधीन आत्मनां संश्लेषः=संसर्गो येषां पदार्थानाम्, ते विध्यधीनात्मसंश्लेषाः । लौकिक-वैदिकसंसर्गप्रयोजकमेकरूपवस्तु; लाघवात्, किं तद्वैरूप्यगौरवेणेति ? अत्राह—पदानामिति ॥ रचना=प्रयोगः । तत्र=लोके

अभिप्रायप्रकाशिका

कारिकाविवरणम्

तदर्थं संसर्गनिमित्तं द्वैविध्यमाह--नन्विति ॥ इतरत्र= अपौरुषेयोक्ताविति यावत् । पूर्वश्लोकोक्तमेवोपपादयति—पदानामिति ॥ विवक्षापरिपूर्तय इति । विवक्षितार्थस्य कार्त्स्न्येनाधिगमायेत्यर्थः । तर्हि विवक्षैव संसर्गनिमित्तं प्रमाणान्तर-

ब्रह्मसिद्धिकारिका

प्रमाणान्तरगम्येऽर्थे विवक्षा च व्यवस्थिता ।
विध्यर्थसिद्धये वेदे तदभावे त्वसंगतेः ॥ १०८ ॥
विशिष्टार्थगतिर्भ्रान्तिरग्रहे ग्रहविभ्रमः ॥ १०८½ ॥

---

भावशुद्धिः

कारिकाविवरणम्

विवक्षापरिपूर्तये=विवक्षितार्थाधिगमाय। किमतोऽपीति?
P. 101-4 अत्राह—प्रमाणान्तरेति ॥ प्रमाणान्तरेणोपलभ्य विवक्षित्वा तत्प्रयोगाद् प्रमाणान्तरं लोके संसर्गप्रयोजकमित्यर्थः। वैदिकसंसर्गः, मानान्तराधीनः, संसर्गत्वात्,
P.101-5 लौकिकसंसर्गवदिति, अत्राह—विध्यर्थेति॥ वेदे पदानां रचना विधिप्रत्ययार्थनियोगसिद्धये । कुतः ? अ(तद)-भावे=अपौरुषेये वेदे मानान्तरासंभवाद्विध्यर्थाभावे पदार्थानामसंसर्गात् "सत्यं ज्ञानमि"त्यादेर्वचसः पदार्थसंसर्गावगमात् किमत्र विधिनेति, अत्राह— विशिष्टेति ॥
P. 101-6 असंसृष्टानां संसृष्टत्वज्ञानेष्टौ स्यादन्यथाख्यातिः, अत्राह—अग्रह इति ॥ असंसर्गाग्रहे संसृष्टव्यवहार इत्यर्थः ॥ १०६, १०७, १०८, १०८½ ॥

ब्रह्मसिद्धिविवरणम्

आकाङ्क्षादित्रयं संसर्गप्रयोजकम्, न मानान्तरम्, विधिर्वेत्याशङ्क्य
P. 101-7 व्याचष्टे—विवक्षितेति ॥ निष्पत्तये=प्रतिपत्तये। तथापि किमर्थः

अभिप्रायप्रकाशिका

कारिकाविवरणम्

मिति, अत आह—प्रमाणान्तरेति ॥ विवक्षाया अपि वक्तृप्रमाणाधीनत्वात् तन्निबन्धनः संसर्ग इत्यर्थः। वेदे तु नियोगः पदार्थसंसर्गमाक्षिपति ; तदभावेऽस्य निष्पत्त्यभावादित्याह—विध्यर्थेति ॥ विध्यभावेऽपि 'सत्य-ज्ञाना'दिवाक्ये संसर्गोऽनुभूयत इति, अत आह—तदभाव इति ॥ भ्रान्तिमेव विशिनष्टि—अग्रह इति ॥ असंसर्गाग्रहे संसर्गभ्रम इत्यर्थः ॥ १०६, १०७, १०८, १०८½ ॥

भावशुद्धिः

पदानां सहपाठ इति ? अत्राह—नैकेति ॥ साध्यः=गम्यः । तर्हि विव- P. 101-8
क्षैव प्रयोजिका, न मानान्तरमिति, अत्राह—प्रमाणान्तरेति ॥ फलितमाह— P. 101-9
तेनेति ॥ व्यतिरेकं दर्शयति—तथाचेति ॥ तद्विरोधे = मानान्तरविरोधे ॥

"जरद्गवः पादुक-कम्बलाभ्यां द्वारि स्थितो गायति मद्रकाणि ।
तं ब्राह्मणी पृच्छति पुत्रकामा राजन् रुमायां लशुनस्य कोऽर्घः"॥

इति । वैदिकपदानि, विधिनिरपेक्षं संसर्गबोधकानि, आकाङ्क्षा-
दिमत्पदकदम्बकत्वात् ; लौकिकपदकदम्बकवदिति, अत्राह—वेदे त्विति॥ P. 101-10
प्रदर्शितप्रयोगस्य संसर्गसिद्ध्यनुपपत्तिबाधमाह—तदभावे त्विति ॥
विध्यर्थाभावे संसर्गाभाव इति व्यतिरेकोऽसिद्धः ; "सत्यं ज्ञानमि"
त्यादौ पदान्वयमात्रात् संसर्गावगमादिति, अत्राह—येयमिति ॥ भ्रान्ति- P. 101-11
कारणमाह—समभिव्याहारादिति ॥ पदार्थसंसर्गप्रतिपादकेन वाक्येन
समभिव्याहारमात्रसाम्यात् ततो विवेकाग्रहादसंसर्गाग्रहे संसर्गग्रहारोप-
स्तद्व्यवहार इत्यर्थः ॥

विधिः,मानान्तरं वा संसर्गप्रतीतिकारणम्, तदभावे सा कथं भवे-
दित्येतदाक्षिपति—अत्रेदमिति ॥ संभावितप्रकारानुपन्यस्य निराकरोति— P. 101-12
यदीति ॥ तदसत्त्वे हेतुमाह—[1]पूर्वस्येति ॥ प्रमाणान्तरपूर्वस्यापि श्रोतु- P. 101-14
स्तस्य संसर्गस्य प्रतीतेरित्यर्थः । कुत एवम् ? तत्राह—अन्यथेति ॥
नदीतीर-फलसंसर्गस्य मानान्तरावगतस्य प्रतीतिर्वचनप्रयोजनं किं
न स्यात् ? अत्राह—अनधिगतं हीति ॥ अबुभुत्सितमर्थं प्रतिपादयतोऽनव-
धेयवचनत्वप्रसङ्गादित्यर्थः ॥

अभिप्रायप्रकाशिका

विवक्षितार्थसिद्ध्येऽनेकपदसमभिव्याहारः किमर्थ इति ? अत आह—
नैकेति ॥ साध्यः=प्रतिपाद्य इति यावत् । न केवलं सति प्रमाणे दर्शनात्
संसर्गस्य तन्निमित्तत्वम्, तद्विरोधे तस्यादर्शनाच्चेत्याह—तथा चेति ॥ भ्रान्ते-
र्निमित्तमाह—समभिव्याहारादिति ॥ विधिवाक्येष्विवेहापि समभिव्या-
हारदर्शनात् पदार्थानां भेदाग्रहे तत्संसर्गोऽगृहीतः, इति भ्रमो भवतीत्यर्थः ॥

1. अपूर्वस्येति मूलपाठः, स तु न साधुः ।

भावशुद्धिः

पदार्थानां संसर्गं प्रति योग्यतायाः प्रमाणान्तराधीनत्वादिति
P.101-15 शङ्कते—अथेति ॥ एतत् समानं लोक-वेदयोरित्याह—समानमिति ॥ एतदेव व्यनक्ति—तथाहीति ॥ न कारकमक्रियात्मनाऽगुणेन संसर्गयोग्यम्, अपि तु क्रिययैव। क्रियाऽपि न गुणेन, किन्तु कारकेणेत्यर्थः। व्यवस्थाप्यत
P.101-17 इति संबन्धः। उदाहरणान्तरमाह—तथेति ॥ भव्यस्य हि भावार्थस्य कार्योद्देशप्रवृत्तकृतिव्याप्यता, तेन कृतिप्रणाडिकया नियोगविषयत्वे-(त्वं) युक्तम्। यद् द्रव्य-गुणौ भूतौ तदर्थौ भवतः, तयोस्तु परश्वादिवत् कृतिव्याप्यतया नियोगविषयत्वे भव्यो भावोऽर्थो भूताभ्यां द्रव्य-गुणाभ्यामुपदिश्येत, न चैतद् युक्तम्, इति संसर्गयोग्यताग्राहि प्रमाणा-
P.101-18 न्तरमेवेत्यर्थः ॥ चोदयति—अथेति ॥ हेतुमाह—तदर्थमात्रेति ॥ पदार्थ-मात्रस्य श्रोतुरबुभुत्सितत्वादित्यर्थः। यस्मात् पदार्थमात्रं निष्प्रयो-
P.101-19 जनम्, अतः फलवत्पदार्थसंसर्गविवक्षारूपो विधिरित्याह—तस्मादिति ॥
P.101-20 फलवदर्थं व्य(व)क्ता विवक्षतु, प्रकृते किमायातम्? अत्राह—तयेति ॥

अभिप्रायप्रकाशिका

आस्तां तावद्वेदे संसर्गहेतुः, लोके संसर्गनिमित्तं प्रमाणान्तरमित्येतद् विचारासहमित्याह—अत्रेदमिति ॥ आह पूर्ववादी—यदीति ॥ तत्र वक्तव्यम्—श्रोतृप्रमाणाधीनः संसर्गावगमः, किं वा वक्तृप्रमाणाधीन इति। न तावदाद्य इत्याह—तदसदिति ॥ अनधिगतमेव श्रोता संसर्गं बुध्यत इत्यर्थः। विपक्षे दोषकथनेनैतदुपपादयति—अन्यथेति ॥ तदुपपादयति—अनधिगतं हीति ॥

संसर्गस्य पूर्वमनधिगतत्वेऽपि क्रिया-कारकादीनां संसर्गयोग्यतावगमस्य प्रमाणान्तराधीनत्वात्, तन्निमित्तः संसर्ग इति शङ्कते—अथेति ॥ परिहरति—समानमेतदिति ॥ कारकं क्रिययैव संसर्गयोग्यम्, क्रिया च कारकेणैव संसर्गयोग्या, न गुणादिभिः, तथा भावार्थोऽपि भाव्यः कार्योद्देशप्रवृत्तकृति-व्याप्यत्वात् नियोगविषयः, न साक्षाद् द्रव्य-गुणादिः, इति वेदेऽपि प्रमाणान्त-राधिगतयोग्यताधीनत्वात् संसर्गस्य प्रमाणान्तरनिमित्तः संसर्गः प्रसज्येतेत्यर्थः ॥

भावशुद्धिः

विवक्षागोचरप्रतिपादनाय पदानि प्रयुज्यन्ते, सेयं पदरचना संसर्ग-विवक्षाप्रयुक्ता संसर्गं गमयतीत्यर्थः ॥ एवमपि प्रमाणस्य संसर्गप्रयो-जकत्वे किमायातम्? अत्राह—सा चेति ॥ विवक्षा मानान्तरपूर्वा, P.101-21
इति मानान्तराधीनैव पदार्थसंसर्गसिद्धिरित्यर्थः ॥

परिहरति—एवमिति ॥ तदनन्तरभावात्, तदन्वय-व्यतिरेकानु-विधानाच्चेत्यर्थः। हेतुमाह—यत इति ॥ तत्प्रमाणान्तरं तस्य श्रोतुर्न ([1]प्रतिपादकम्; वक्तृस्थत्वात्, न प्रयोजकम्; विवक्षाप्रयुक्तत्वात्
प्रयोगस्येत्यर्थः। परोक्तमनुवदति—यत्त्विति ॥ परिहरति—भवत्विति ॥) P.102- 1
गमकमाह—तथाचेति ॥ मानान्तरस्य संसर्गं प्रति प्रयोजकत्वे P.102- 2
सति मानेनानुपलब्धार्थप्रतिपादनाय प्रयुक्तविप्रलम्भकवाक्यादपि संसर्गधीः स्यादित्यर्थः। सत्यामपि विवक्षायां मानान्तरविरोधिजरद्ग-वादिवाक्यात् संसर्गानवगमाद् मानान्तरमनुविधत्ते संसर्गावगम इति शङ्कते—यत्त्विति ॥

अभिप्रायप्रकाशिका

अथ वक्ता प्रमाणान्तरेणार्थमवगम्य श्रोतुः प्रयोजनपर्यन्तमर्थं विवक्षित्वा तत् प्रयुङ्क्ते, ततो वक्तृप्रमाणनिबन्धनः संसर्ग इति। द्वितीयं कल्पमुत्थापयति—अथ न विवक्षेति ॥ एवं तर्हि विवक्षैव प्रयोजिका स्यात्, न प्रमाणमिति, अत आह—सा चेति ॥

परिहरति—एवमपीति ॥ ननूक्तम्—विवक्षायाः प्रमाणपूर्वकत्वात् तन्निबन्धनः संसर्गः—इति, मैवम्; तस्य प्रतिपादकत्व-प्रयोजकत्वयोरन्यतरा-भावादित्याह—यत इति ॥ वक्तृस्थत्वात् प्रमाणस्य न श्रोतारं प्रति प्रति-पादकत्वम्। नापि प्रयोजकता; विवक्षाया एव संसर्गप्रयोजकत्वाङ्गीकारा-दित्यर्थः ॥

कथमप्रयोजकत्वं प्रमाणसिद्धे संसर्गदर्शनादित्युक्तमनुवदति—यत्त्विति ॥ प्रयोजकीभूतविवक्षानिमित्तत्वेनान्यथासिद्धत्वाद् न तस्य प्रयोजक-त्वमिति दूषयति—भवत्विति ॥ विप्रलम्भकवाक्यादौ प्रमाणाभावेऽपि संसर्गप्रतीतेर्न तस्य प्रयोजकत्वमित्याह—तथा चेति ॥

यत्तूक्तम्—जरद्गवादिवाक्ये प्रमाणविरोधे संसर्गो न दृश्यत इति,

1. कुण्डलितो भागो B. पुस्तके नास्ति।

भावशुद्धिः

तद्विरोधे संसर्गावगमो भवतु, न त्वेतावता ततो मानान्तरात्
संसर्गावगम इत्यर्थः। संसर्गप्रतीत्यभावमभ्युपगम्यैतदुक्तम्, परमार्थ-
P.102- 3 तस्तु सोऽपि नास्तीत्याह—विरोधेऽपि त्विति ॥ चैत्यवन्दनादिवाक्येभ्यो
P.102- 4 विज्ञानं सर्वजनीनमशक्यापह्नवमित्यर्थः। तर्ह्यनधिगताधिगन्तृत्वाद्
चैत्यवन्दनादिवाक्यं प्रमाणमेव स्यादिति, अत्राह—प्रतीतोऽपीति ॥ तत्र
जरद्गवादिवाक्येष्वाशुतरो बाधः, चैत्यवन्दनाद्युपदेशेषु विचारात्तु
पण्डितरूपाणामित्यर्थः। अत एव त्रैविध्यमित्याह—एवं चेति ॥
अनर्थकान्यपि हि बालानां वचांसि दृश्यन्ते, यथा—'दश दाडि-
मानि', 'षडपूपा भवन्ती'ति। यद्यप्येतदपि मिथ्यैव; तथाऽप्याशुतरबा-
धादनर्थकमुक्तम्। प्रमाणान्तरस्य संसर्गप्रयोजकत्वे सर्वं वाक्यं सत्यार्थ-
P.102- 5 मेव स्यादित्याह—अन्यथेति ॥ चोदयति—अथेति ॥ 'ममास्मिन्नर्थे
ज्ञानमस्ती'ति स्वज्ञानप्रकटीकरणाय परस्मै प्रयुङ्क्ते वचनं यत्, अतः
P.102- 7 पौरुषेयवचसोऽयमर्थ इत्याह—तेनेति ॥ चैत्यवन्दनादिवचनस्या-
P.102- 8 नृतस्य नेयं गतिरस्तीत्याह—सैवेति ॥ अनृतवचनानामप्यस्ति मानान्त-
रापेक्षा, न खलु (बुद्धो)बुद्धावनालिख्यार्थं विवक्षति। न चादृष्टपूर्वोऽर्थ-
स्तत्त्वेन वा समारोपेण वा शक्यो बुद्धावालिखितुम्। न चान्यप्रमाणान्त-

अभिप्रायप्रकाशिका

तत्राह—यत्त्विति ॥ तथापि न व्यतिरेकनियमसिद्धिः; विप्रलम्भकवाक्येऽपि प्रामाण्याभावेऽपि संसर्गज्ञानस्य दर्शितत्वादिति भावः ॥ प्रमाणविरोधे संसर्गो नास्तीत्येतदभ्युपगम्योक्तमित्याह—विरोधेऽपीति ॥ संसर्गः प्रतीतश्चेत्, तत्प्रयुक्तव्यवहारः स्यादित्याह—प्रतीतोऽपीति ॥ अयं भावः—संसर्गो हि द्विविधः—वैभक्तिकः, पदार्थानां संसर्गयोग्यतानिबन्धनश्च। तत्र श्रवणमात्राद् वैभक्तिकः संसर्गः प्रतीयते। स च योग्यतादिपर्यालोचनसहकृतात् शब्दप्रमाणादुत्पद्यमानेन प्रतीत्यन्तरेण बाध्यते; तस्य बलवत्त्वादिति ॥ अनृताऽनर्थकवचनयोर्विभागानुपपत्तिश्च प्रमाणविरोधेऽपि संसर्गप्रतीतिं गमयति; उभयत्रापि संसर्गाप्रतीतावनर्थकादनृतवचनस्य विशेषाभावप्रसक्तेरित्याह—एवं चेति ॥

पूर्वं विवक्षायाः प्रमाणाधीनत्वात् तन्निबन्धनः संसर्ग इत्युक्तम्, इदानीं पौरुषेयवचसः प्रमाणान्तरोपलब्धविषयत्वात् तन्निबन्धनः संसर्ग इति शङ्कते—

भावशुद्धिः

राद्दते तद्दर्शनम् ॥ तस्मात् चैत्यवन्दनादिष्वपि साध्य-साधनसंबधं पाकौ-
दनादिषु दृष्टमारोप्य वचनरचना, इति न क्वचिद् व्यभिचार इत्यर्थः ॥
वेदे तदभावाद्विधेः संसर्गप्रयोजकत्वानङ्गीकरणे संसर्ग एव सिध्ये-
दित्याह— तस्या इति ॥ आकाङ्क्षादित्रयविशिष्टः पदार्थ एव वेदे P.102- 9
संसर्गप्रयोजकः, किं विधिनेति परिहरति—मा भूदिति ॥ न खलु P.102- 9
वास्तवः पदार्थसंसर्गः प्रयोजको लोके दृष्टः, किन्तु विवक्षाविषयीकृतः,
तत् कथं विवक्षाऽभावे पदार्थसंसर्गप्रतीतिर्वेद इति चोदयति—अथेति ॥ P.102- 9
दूषयति— विधिमत्त्वेऽपीति ॥ तदाप्यपौरुषेयसंसर्गविवक्षा तत्प्रयोजि- P.102-11
का न संभवतीत्यर्थः । स्वाशयं दर्शयन्नाशङ्कते—अथेति ॥ पदानां संसर्ग- P.102-12
मात्रपरत्वेऽर्थापत्तिः, न तद्विशेषे विवक्षाविषयत्वलक्षण इत्यर्थः । तत्रा-
र्थापत्तेः क्षीणतामादर्शयति—तन्मात्रेणेति ॥ वृद्धप्रयुक्तवाक्यश्रवणसमनन्तरं P.102-13
वृद्धान्तरस्य प्रवृत्तिदर्शनात् तद्धेतुप्रत्ययोऽनुमीयते । स चानधिगतपदार्थ-
संसर्गभेदमात्रगोचरत्वेन तद्धेतुः, इति तन्मात्रपरतामेव समभिव्या-
हारस्यावहति, न तु विवक्षापरतामपि ; तन्मात्रेणैव प्रयोग-प्रत्य-
ययोरुपपत्तौ तत्परत्वकल्पनानुपपत्तेरित्यर्थः ॥ परिहरति— विनापीति ॥
विधिमत इव वाक्यादविधिमतोऽप्यपौरुषेयाद् विनापि मानान्तरो-

अभिप्रायप्रकाशिका

अथ प्रमाणान्तरेति ॥ तथापि प्रकृते किमायातमिति ? अत आह—तस्या
इति ॥ अतः संसर्गहेतुर्विधिरभ्युपगन्तव्य इति भावः । परिहरति—मा भूदिति ॥
आकाङ्क्षा-संनिधि-योग्यताविशिष्टपदार्थानामेव संसर्गाक्षेपकत्वोपपत्तौ न प्रमा-
णापेक्षा, नापि विध्यपेक्षेति भावः । लोके प्रमाणान्तरस्यैव संसर्गप्रयोजक-
त्वावधारणाद् न तदन्तरेण वेदेऽपि संसर्ग इति शङ्कते— अथ लोकेति ॥
तर्हि सत्यपि विधौ त्वदुक्तप्रयोजकाभावात् संसर्गासिद्धिरिति परिहरति—विधि-
मत्त्वेऽपीति ॥ प्रयोग-प्रत्यययोः पदार्थमात्रपरत्वानुपपत्तेः पदार्थमात्रस्य मानान्तर-
सिद्धतयाऽनधिगतत्वाभावात् श्रोतुरनधिगतविषयलाभाय संसर्गमात्रविषयत्वमेव
पदानां लोकेऽपि प्रयोग-प्रत्ययान्यथानुपपत्त्या कल्पनीयं संसर्गविशेषस्य, न
मानान्तरविषयत्वमिति शङ्कते — अथ लोके संसर्गेति ॥ आह सिद्धान्ती—
विनाऽपीति ॥ लोकेऽपि प्रमाणान्तरस्य संसर्गप्रयोजकत्वमुक्तरीत्या त्वयैवा-

भावशुद्धिः

पलब्ध्या, अतिरक्षया च विशिष्टार्थगतिसिद्धिनियमस्य त्वयैव निराकृतत्वादित्यर्थः ॥

मा भूदियं संसर्गप्रतीतिः प्रमाणान्तराधीना, तत्सत्यता तदधी-
P.102-14 नेति चोदयति—अथेति ॥ मानान्तरा(द)पूर्वस्य श्रोतुरनवगमात् कथं
तत्सत्यत्वं तदधीनमिति ? अत्राह—अपूर्वोऽपीति ॥ अयम्, दृष्टमेव
P.102-15 वदति, आप्तत्वात्; संमतवदित्यनुमानद्वारेत्यर्थः । हेतुमाह—तदसंभव
इति ॥ तस्मात् सत्यता तदधीनेति । संसर्गोऽपि तदधीन इत्याह—
P.102-16 तेनेति ॥ परिहरति—भवत्विति ॥ विधिमत्त्वेऽपि तुल्यत्वादित्यर्थः ।
वेदे पुनरपौरुषेये स्वतःसिद्धप्रमाणभाव औत्पत्तिकसंबन्धेनार्थावबोधके नेयं विधेत्याह—वेदे त्विति ॥ तस्माद् नेह सत्यतायामप्यस्ति प्रमाणान्तरापेक्षेति सिद्धम् ॥ १०६, १०७, १०८, १०८½ ॥

तदिदमुत्कारिकमुक्त्वा कारिकया परिहारान्तरं वक्तुमुपक्रमते—
P.102-17 तदास्तामिति ॥ यथा संसर्गप्रत्यायकत्वमित्यर्थः ॥

अभिप्रायप्रकाशिका

पाकृतमित्यर्थः । मध्यमवृद्धप्रवृत्तिलिङ्गेन संसर्गमात्रे सम्बन्धग्रहणेऽपि स्वयं मध्यमवृद्धतया व्यवहारसमये क्वचिद् व्यवहारादर्शनात् शङ्काकुण्ठितशक्तित्वेन वेदान्तानां न तेभ्यः संसर्गसत्यतासिद्धिः, किन्तु प्रमाणान्तरात्, अतस्तस्यैव संसर्गप्रमितिनिमित्तत्वमिति शङ्कते—अथ प्रमाणान्तरादिति ॥ तदेवोपपादयति—अपूर्वो [1]हीति ॥ संसर्गसम्बन्धग्रहणेऽपि पुरुषसम्बन्धकृतशङ्कानिवृत्तये भवतु तत्र प्रमाणापेक्षा, अपौरुषेये तु नैवमित्याह—उच्यते, भवत्विति ॥ १०६, १०७, १०८, १०८½ ॥

उपसंहरति—तदास्तामेतदिति ॥ यत्किंचिदस्ति लोके प्रयोजकम्, वेदे तु कथं विधेः संसर्गस्य प्रयोजकत्वमित्याह—भवतु यथेति ॥

---

1. अपूर्वोऽपि हीति मूलपाठः;

ब्रह्मसिद्धिकारिका

कथं नु विध्यधीनत्वं यदि स्यादन्यथा वृथा ॥ १०९॥
विधिर्निर्विषयस्तुल्यमिदमन्यपदोदिते ।
विशिष्टार्थावगत्याऽन्यपदार्थोऽपि प्रयुज्यते॥ ११० ॥
अर्थवत्त्वे प्रमाभावादस्त्वसौ चेदनर्थकः ।
विधिर्नैवं कस्य हेतोरथ स्यादपरं पदम् ॥ १११ ॥
प्रमाणान्तरसिद्धार्थे प्रयोगि न विधायकम् ।
तदर्थोऽनन्यगम्यो हि मीयमानः समाक्षिपेत् ॥ ११२ ॥
विषयं न यथासिद्धपदार्थस्त्वनुवादभाक् ।
अव्युत्पन्नप्रवृत्तिः स्यात् संबन्धज्ञाननिह्नवे ॥ ११३ ॥
पदं स्वधर्मं व्युत्क्रामेदन्यसिद्धार्थताऽन्यथा ॥ ११३½ ॥

भावशुद्धिः
कारिकाविवरणम्

कथं नु विध्यधीनत्वं पदार्थसंसर्गप्रतीतेरिति शङ्कते—कथमिति। यदि स्यादिति। अन्यथा वृथा विधिः, कस्मात्, यतो निर्विषयः। अयमस्मिन्नियुज्यत इति हि स प्रतीयते, सोऽयं विषय-नियोज्यसंगतिमनभिदधदविषयः सन्ननर्थकः स्यात्। उत्तरं तुल्यम्, अन्यपदोदितेऽपि ॥ तदुपपादयति—विशिष्टार्थेति ॥ शङ्कते—अर्थवत्त्व इति ॥ वेदे पदार्थस्यार्थवत्त्वे मानाभावादित्यर्थः। सिद्धान्त्याह—विधिर्नैवमिति ॥ वैदिकनियोगस्याप्यर्थवत्त्वे मानाभावाद् न तस्यापि विषय-नियोज्यसंबन्धाक्षेपकत्वमित्यर्थः। चोदयति—अथेति ॥ कः पुनर्विधायकस्य पदस्य पदान्तरेभ्यो विशेष इति? अत्राह—

P.102-19
P.102-21
P.102-22
P.102-23
P.102-24
P.103- 1

अभिप्रायप्रकाशिका
कारिकाविवरणम्

पूर्ववाद्याह—यदि स्यादिति ॥ विधेर्विषय-नियोज्यसंसर्गाभावे निर्विषयतयाऽऽनर्थक्यं स्यादित्यर्थः। सिद्धान्त्याह

भावशुद्धिः

कारिकाविवरणम्

तदर्थं इति ॥ न ह्ययं शब्दात् स्वरूपेणैव प्रथमं प्रतीयते, किन्तु प्रतीयमानावस्थ एवासौ विषय-नियोज्यसंसर्गमन्तरेण प्रत्ययागोचरत्वादाक्षिप्ततत्संसर्गः प्रतीयत इत्यर्थः। पदार्थान्तरं तु पदार्थान्तरसंस्पृष्टमात्मानमन्तरेण निरूपितम्, इति न तद् वेदे प्रतीतमर्थान्तरसंसर्ग-
P.103- 2 माक्षेप्तुमर्हति, किन्तु तत्पदं यथावगतमनुवदेदित्याह—न यथासिद्धेति ॥ दूषयति—अव्युत्पन्नेति ॥ लिङादेस्तादृशः सामर्थ्यातिशयः, यः स्वयमगृहीतसङ्गतिकोऽपि गृहीतसङ्गतिकपदान्तरसहपठितोऽर्थं प्रत्या-
P.103- 4 ययेत्, अत्राह–पदमिति ॥ सङ्गतिग्रहापेक्षं बोधकत्वं पदधर्मो विना कारणं त्यक्तः स्यादित्यर्थः। यदि पदधर्मातिक्रमभयाद् व्युत्पत्तिरास्थीयते, तत्राह–अन्यसिद्धार्थतेति ॥ तथा चेतरपदार्थवद् विधेरपि तुल्योऽनुयोग इत्याशयः ॥ १०९, ११०, १११, ११२, ११३, ११३½ ॥

अभिप्रायप्रकाशिका

कारिकाविवरणम्

—तुल्यमिति ॥ तदेवोपपादयति—विशिष्टार्थेति ॥ विशिष्टार्थावगमप्रयोजनभूततया पदार्थान्तरस्यापि प्रयोगात् तदपि संसर्गाक्षेपकं स्यादित्यर्थः। लोके बुद्धिपूर्वप्रयुक्तानां संसर्गाक्षेपकत्वं पदार्थानां दृष्टम्, वेदे तु बुद्धिपूर्वकत्वाभावाद् विधिं विना पदार्थान्तरस्यानर्थक्यम्; संसर्गानाक्षेपकत्वादिति शङ्कते–अर्थवत्त्व इति ॥ सिद्धान्त्याह—विधिनैवमिति ॥ विध्यभावावगमेऽपि बुद्धिपूर्वप्रयुक्तत्वाभावात् तस्यापि संसर्गानाक्षेपकत्वम्, आनर्थक्यं च न स्यादित्यर्थः। वैषम्यं शङ्कते—अथ स्यादिति॥ पदार्थान्तरवद् नियोगस्य प्रमाणान्तरासिद्धत्वाद्विधायकपदेनैव प्रतीयमानोऽसौ संसर्गमाक्षिपति, न पदार्थान्तरम्; अनूद्यत्वादित्यर्थः। तर्हि विधायकपदस्य सम्बन्धग्रहणमभ्युपेयते, न वेति विकल्प्य द्वितीयपक्षदूषणमाह—अव्युत्पन्नेति ॥

भावशुद्धिः

ब्रह्मसिद्धिविवरणम्

नियोगस्य साक्षात् संसर्गगमकत्वम् , अर्थाद्वा । नाद्य इत्याह—
न तावदिति॥ संसर्गसामान्यं दृष्टान्तत्वेनोक्तम्, तद्विशेषं विषय-नियोज्य- P.103- 5
संसर्गमित्यर्थः । द्वितीयं शङ्कते—अथेति । आक्षेपमेवाह—अन्यथेति ॥
प्रतिबन्द्या प्रत्याह—पदार्थान्तरेष्विति ॥ एतत्संसर्गान्तराक्षेप- P.103- 6
कत्वमुक्तम् , तद्विशेषं विषय-नियोज्यसंसर्गमित्यर्थः कयाऽनुपपत्त्या ?
तामाह—तेऽपि हीति ॥ पदार्थमात्रपरतया पदानां प्रयोगात् संसर्ग- P.103- 7
प्रतीतिमन्तरेण नास्त्यनुपपत्तिरिति, अत्राह—न चेति ॥ किमुद्दिश्य P.103- 8
तर्हि तत्प्रयोगः ? तत्राह—किन्त्विति ॥ कुतोऽयं विनिगम इति ? अत्राह— P.103- 9
तथेति ॥ विशिष्टप्रत्यये सति विशिष्टव्यवहारोपपत्तेः प्रयोगार्थवत्त्व-
सिद्धेरित्यर्थः । संसृष्टप्रत्ययपरैः पदैः पदार्थप्रतिपादनमवान्तरव्या-
पारः क्रियत इति । अत्र फलितमाह—तथाचेति । अभिहितान्वयपक्षमा-
श्रित्यैतदुक्तमिति द्रष्टव्यम् ॥

अभिप्रायप्रकाशिका

कारिकाविवरणम्

गृहीतसम्बन्धस्य पदस्य स्वार्थप्रतिपादकत्वं पदधर्मः, सोऽपि तमन्तरेण न स्यादित्याह—पदमिति ॥ सङ्गतिग्रहणपक्षे प्रमाणान्तरसिद्धत्वं नियोगस्य बलादापतेदित्याह—अन्य-सिद्धार्थतेति ॥ १०९, ११०, १११, ११२, ११३, ११३½ ॥

ब्रह्मसिद्धिविवरणम्

'कथं नु विध्यनधीनत्वमि'त्यस्य तात्पर्यमाह—न तावदिति ॥ यदि स्यादित्यादेरर्थमाह—अथाक्षिपतीति ॥ तुल्यतामेव प्रपञ्चयति—तेऽपि हीति ॥ संसर्गप्रतिपत्तये पदार्थान्तराणामपि संसर्गाक्षेपकत्वमङ्गीकार्यमित्याह—न चेति ॥ तत्र हेतुमाह—तथेति ॥ गवानयनादिविशिष्टकार्ये श्रोतुः प्रवृत्त्युपपत्तेरित्यर्थः । फलितमाह—तथाचेति ॥

'अर्थवत्त्वे प्रमाणाभावादि'त्येतद् व्याचष्टे—स्यादेतदिति ॥ किमसमर्थानां बुद्धिपूर्वप्रयुक्तत्वान्यथानुपपत्त्या संसर्गाक्षेपकत्वम् , उत समर्थानाम् ।

भावशुद्धिः

मानान्तरेणोपलभ्य फलोद्देशेन प्रयुक्तानामानर्थक्यविरोधात्
P.103-10 संसर्गाक्षेपकत्वमयुक्तमिति चोदयति—स्यादेतदिति ॥ लौकिकपदार्था-
P.103-11 नामुक्ता गतिर्वैदिकानामपि; अविशिष्टत्वादिति, अत्राह—वेदे त्विति ॥
P.103-12 दूषयति—नैतदिति ॥ बुद्धिपूर्वकारिप्रयोगोऽन्यथाऽनर्थक इति। लोके
पदार्थानां संसर्गाक्षेपकत्वं न शक्यं वक्तुम्; पदार्थानां संसर्गधीजनने
स्वतोऽसामर्थ्ये कथमन्यस्यानर्थक्यभिया न संसर्गाक्षेपकत्वमित्यर्थः।
विपक्षे दण्डमाह—यस्य कस्यचिदिति॥ 'गामानये'त्युक्ते यस्मात् प्रयोगानर्थ-
P.103-13 क्यभिया न संसर्गाक्षेपकत्वमिति। फलितमाह—तस्मादिति ॥ योग्येत-
रान्वितत्वेन वृद्धव्यवहारे पदेभ्योऽवगताः पदार्थाः स्वसामर्थ्यादेव संसर्गं
गमयन्ति। संसर्गविषया प्रयुक्ताः स्वार्थाः संसर्गप्रयुक्ताः स्वार्थास्त-
दवबोधका इत्यर्थः। अतश्च वेदे विनियोगमन्तरेण पदार्थानां संसर्गसि-
P.103-14 द्धिरित्याह—[1]अत इति ॥ अर्थवत्त्वानर्थवत्त्वविभागमभ्युपगम्योक्त्वा
P.103-15 सोऽपि न संभवतीत्याह—यदि चेति ॥

अपूर्वसंसर्गावगतिरत्र प्रयोजनमिष्यते, न तदर्थान्तराणां युक्त-
P.103-16 मिति चोदयति—अथेति ॥ तत्र प्रयुज्यमानान्यपूर्वार्थपराणीति,
P.103-17 नेत्याह—तानीति ॥ कुत एतत्? अत्राह—तथाहीति ॥ विपरीतानुवादे
(धीकारानुवादे च ?) मानान्तरविरोधादनुवादत्वविरोधाच्चेत्यर्थः ॥
P.103-18 लिङादेरपि तुल्यमेतत्; पदार्थाविशेषादिति, अत्राह—विधायकस्त्विति ॥

अभिप्रायप्रकाशिका

तत्राद्योऽनुपपन्न इत्याह—नैतत् सारमिति॥किञ्चानुपपत्त्याऽऽक्षेपकत्वे संसर्गनियमोऽपि न भवेदित्याह—यस्य कस्यचिदिति ॥ अत उत्तरपक्ष एव परिशिष्यत इत्याह—तस्मादिति ॥ श्रोतृव्यवहारात् संसर्गज्ञानाय स्वार्थावबोधसामर्थ्यं पदानां व्युत्पित्सुनाऽवगम्यत इत्यर्थः। तावता तव किमायातमिति? तत्राह—तत इति ॥ इदानीं श्लोकोक्तं दूषणमाह—यदि चेति ॥ 'अथ स्यादि'त्यादि श्लोकभागं व्याचष्टे—अथ मतमित्यादिना ॥

1. मूले तत इति पाठः

ब्रह्मसिद्धिकारिका

शब्दादेव मिते योऽपि मन्यते संगतिग्रहम् ॥ ११४ ॥

नान्योन्यसंश्रयावद्यं न स्वयं प्रमिते हि सः ।

परेण शब्दावगते तत्प्रवृत्त्या च सूचिते ॥ ११५ ॥

पदार्थान्तरवत् तत्र सुकरः संगतिग्रहः ॥ ११५½ ॥

---

भावशुद्धिः

अर्थापूर्वतामात्रेण कथं संसर्गसिद्धिः ? तत्राह—तदर्थ इति ॥ साध्यरूपो P.103-18 नियोगः साध्यत्वानुपपत्त्या करणेतिकर्तव्यताधिकारि-फलानां संसर्गं गमयतीत्यर्थः । निगमयति—तस्मादिति ॥ P.103-19

दूषयति—तदयुक्तमिति ॥ लिङादिपदार्थस्य मानान्तराविषयत्वे P.103-20 तत्र संगतिग्रहायोगादबोधकत्वं स्यात्, अगृहीतसंबन्धस्य बोधकत्वे वा पृथग्जनोऽपि शब्दश्रवणानन्तरं प्रवर्तेतेति, अत्राह—तथाचेति ॥ P.103-21 दोषान्तरमाह—संबन्धापेक्षतेति[1] ॥ संबन्धज्ञानापेक्षया बोधकत्वं P.103-22 पदधर्मः, तदनपेक्षया बोधकत्वं वाक्यधर्म इत्यर्थः । लिङादिपदस्यापि वृद्धव्यवहारे संगतिर्गृह्यत इति चोदयति—अथेति । परिहरति— P.103-23 बलादिति ॥ ततश्च न पदार्थान्तरात् तस्य विशेष इत्याह—तथाचेति ॥ P.103-24 १०९, ११०, १११, ११२, ११३, ११३½ ॥

कारिकाविवरणम्

शब्दात्सिद्धे नियोगसंबन्धग्रहणाद् नान्यसिद्धार्थत्वमिति शङ्कते—शब्दादेवेति । लिङाद्यर्थे बुद्धे संबन्धज्ञा- P.104- 1

अभिप्रायप्रकाशिका

"अव्युत्पन्नप्रवृत्तिरि"ति सिद्धान्तश्लोकं व्याचष्टे—तदयुक्तमिति ॥ तथाच न विशेषो नियोगस्य पदार्थान्तरेभ्य इति शेषः ॥ १०९, ११०, १११, ११२, ११३, ११३½ ॥

कारिकाविवरणम्

शब्दादवगते सङ्गतिग्रहः ; सति च तस्मिन् शब्दादवगतिरिति परस्पराश्रयमाशङ्क्याह—नान्योन्येति ॥ तत्र

---

1. सम्बन्धज्ञानापेक्षतेति मूलपाठः

भावशुद्धिः

कारिकाविवरणम्

नमु, ज्ञानान्तरसवन्धाद् लिङादिशब्दात् तदर्थधीरित्य-
P.104- 2 न्योन्याश्रयदोष इति, अत्राह—नान्योन्येति ॥ कुत इति?
अत्राह—न स्वयमिति ॥ सः=सङ्गतिग्रहः, किन्तु परेण
विदितसंगतिना शब्दादवगतेऽर्थे तदवगतिः, इत्यत्यन्त-
परोक्षा कथं व्युत्पित्सुनाऽवगतेति? अत्राह—तत्प्रवृत्त्येति ॥
P.104- 3 ११४, ११५, ११५½ ॥

ब्रह्मसिद्धिविवरणम्

नियोगः, मानान्तरगम्यः, वाच्यत्वात्; घटवत्, विपक्षे संवन्धा-
P.104- 5 सिद्धिरित्याशङ्क्य व्याचष्टे—योऽपीति ॥ संवन्धिसिध्यधीनत्वात् संवन्ध-
P.104- 6 सिद्धेरित्यन्योन्याश्रय इति, अत्राह—न चेति ॥ मध्यमवृद्धावगते कथं
P.104- 8 वालः संवन्धं बुध्यत इति? अत्राह=तदवगमाच्चेति ॥ अनुमानमाह=
P.104- 9 नूनमिति ॥ इयं प्रवृत्तिः, प्रवर्तकधीपूर्विका, स्वतन्त्रप्रवृत्तित्वात्;
मदीयप्रवृत्तिवत्। सा च धीः शब्दान्वय-व्यतिरेकाभ्यां तत्कार्येति
P.104-10 निश्चीयत इत्यर्थः। पदार्थान्तरवदित्येतद्विवृणोति—यथेति ॥ ११४,
११५, ११५½ ॥

अभिप्रायप्रकाशिका

कारिकाविवरणम्

हेतुमाह—न स्वयमिति ॥ किं तर्हीति? अत आह—परेणेति ॥ कथमन्यावगतेऽन्यस्य सङ्गतिग्रह इति? अत आह—तत्प्रवृत्त्येति ॥ स्वयमपि तत्प्रवृत्तिलिङ्गेन विध्यर्थ-मधिगम्य तत्र पदं संगृह्णातीत्यर्थः ॥११४, ११५, ११५½ ॥

ब्रह्मसिद्धिविवरणम्

अन्योन्याश्रयमेव दर्शयति—शब्दात् सिद्ध इति ॥ अनुमानप्रकार-मेवाह—नूनमनेनेति ॥ पदार्थान्तरवदित्येतद्व्याचष्टे—यथेति ॥ ११४, ११५, ११५½ ॥

कारिकाविवरणम्

सिद्धान्त्याह—तस्यैवमिति ॥ शङ्कते—तस्यापीति ॥ अनुमानस्यापि वेदपूर्वकत्वात् शब्दैकगम्यत्वं स्यादिति शङ्कार्थः ॥

ब्रह्मसिद्धिकारिका

तस्यैवमनुमेयत्वे कथं शब्दैकगोचरः ॥ ११६ ॥
तस्यापि शब्दपूर्वत्वादनुमानैकगोचरः ।
कस्माद् न शब्दबोधोऽपि ह्यनुमानपुरःसरः ॥ ११७ ॥
नेदम्प्रथमता लभ्या बीजाङ्कुरवदेतयोः ।
शब्दाद् बोद्धुश्चानुमानं सर्वस्यैव पुरः स्थितम् ॥११८॥
पदार्थान्तरवत् तेन तस्य शब्दोऽनुवादकः ।
अनुमानाद् बुध्यमानः शब्दाद् बुद्धं न बुध्यते ॥११९॥
प्रतिपत्त्रन्तरे बोधो नान्यबोधानुवादकृत् ।
प्रवृत्तिहेतुमात्रं च शब्दार्थः स्यादलौकिकः ॥ १२० ॥
न स कल्पयितुं शक्यः तत्सिद्धेर्लौकिकादपि ॥ १२०½ ॥

भावशुद्धिः

कारिकाविवरणम्

अत्रोत्तरमाह—तस्येति ॥ प्रवृत्तिहेतोरनुमेयत्वे पर P.104-12
आह—तस्यापीति ॥ तस्यापि—अनुमानस्य परप्रवृत्तिलिङ्ग- P.104-13
कस्य, शब्दपूर्वत्वात्; शब्दावगतिपूर्विकैव हि प्रवृत्तिः परस्येति । उत्तरम्—अनुमानैकगोचर इति ॥ कुत इति ?
अत्राह—[1]शब्दबोधोऽपीति ॥ वृद्धस्य शब्दबोधोऽपि । स P.104-14
खलु वृद्धतरस्य प्रवृत्त्या लिङ्गेनानुमाय तद्धेतुप्रत्ययं तत्र लिङ्गादेव संबन्धमग्रहीत्, तस्मादसावर्थं स्मरन् अनुभवपुरस्सरमेव स्मरेत्, अनुभवश्चास्यानुमानमित्यनुमानपुरस्सरमज्ञासीत्, एवं वृद्धतरो वृद्धतमादित्याह—नेदम्प्र- P.104-15
थमतेति ॥ शब्दानुमानयोरन्योन्यकार्य-कारणभावेनाव-

अभिप्रायप्रकाशिका

कारिकाविवरणम्

आह सिद्धान्ती—अनुमानैकगोचरः कस्मान्नेति ॥ स एव स्वोक्तमुपपादयति—शब्दबोधोऽपीति ॥ तस्यापि शब्दपूर्वकता किं न स्यादिति ? अत आह—नेदम्प्रथमतेति ॥

1. मूले शब्दबोध इति पाठः ।

भावशुद्धिः

कारिकाविवरणम्

स्थितयोरस्मादगृह्यमाणविशेषत्वे शब्दैकगोचरत्वासिद्धिः,
P.104-16 विपरीतो वा विशेषो गृह्यत इत्याह—शब्दादिति ॥ शब्देन
P.104-18 बुद्धमेवानुमानात् बुध्यत इति, अत्राह—अनुमानादिति ॥
व्युत्पित्सुः=शब्दात् बुद्धो वृद्धेनायमित्यनुमिमानः ॥
P.104-19 कस्माद् बुद्धो न बुध्यत इति? अत्राह—प्रतिपत्त्रन्तर इति ॥
शाब्दो बोधो नान्यस्य व्युत्पित्सोर्बोधस्यानुवादकः;
गृहीतग्राहितामात्रेण भाक्तमनुवादत्वमनुमानस्य मन्तव्यम् ॥ अपि च प्रवृत्त्या कार्येण प्रवृत्तिहेतुमात्रमनु-
P.104-20 मीयमानं शब्दार्थः स्यादित्याह—प्रवृत्तीति ॥ न
तन्मात्रप्रवृत्तिः प्रवृत्तये कल्पते। न हि सर्वं सर्वस्य
प्रवर्तकम्। अत एव लौकिकानां विशेषकल्पनं कार्य-
मवगम्य नियोज्यः प्रवर्तत एवेति चेत्, तत्राह—अलौ-
P.104-21 किक इति ॥ हेतुमाह—तत्सिद्धेरिति ॥ कर्तव्यैकार्थसम-
वायिसमीहितसाधनत्वबोधादपि प्रवृत्तेः सिद्धेरित्यर्थः ॥
११६, ११७, ११८, ११९, १२०, १२०½ ॥

अभिप्रायप्रकाशिका

कारिकाविवरणम्

बालस्यानुमानपूर्वकत्वेऽपि मध्यमवृद्धस्य शब्दपूर्वकत्वं वक्तुमयुक्तम्; तस्याप्यनुमानपुरस्सरत्वात् प्रतिपत्तेरिति बीजाङ्कुरवदनादित्वमुक्तम्, सम्प्रति सर्वस्याप्यनुमानपुरस्सरैव प्रतिपत्तिरित्याह—शब्दाद् बोद्धुरिति ॥ यथाऽनुमानावगतं शब्देन बुध्यते, तथा शब्देनावगतमनुमानेन बुध्यतामिति, अत आह—अनुमानादिति ॥ ननु मध्यमवृद्धेन शब्दादवगत एव बालेनानुमीयत इति, अत आह—प्रतिपत्त्रन्तर इति ॥

यदुक्तम्—कार्यस्य प्रवृत्त्या सूचितत्वात् तत्र सङ्गतिग्रह इति, तदप्ययुक्तम्; प्रवृत्त्याऽप्यलौकिकार्थस्यासूचितत्वादित्याह—प्रवृत्तिहेतुमात्रं चेति ॥ अलौकिकः कल्पयितुं न शक्यः; प्रवृत्तेर्लौकिकादपि तत्सिद्धेरिति योजना ॥ ११६, ११७, ११८, ११९, १२०, १२०½ ॥

भावशुद्धिः

ब्रह्मसिद्धिविवरणम्

कार्यस्य मानान्तरापूर्वत्वात् शब्दैकगोचरत्वमिति ? अत्राह—यदीति ॥ चोदयति—अथेति ॥ प्रत्याह—शाब्दोऽपीति ॥ पौर्वापर्या- P.105- 3
विशेषादित्यर्थः । तदुपपादयति—न खल्विति ॥ अनुमानैकगोचर- P.105- 4
त्वमेवेत्यवधारणमुपपद्यत इत्याह—अपिचेति ॥ वृद्धव्यवहारस्यानिद- P.105- 6
म्प्रथमत्वे कथमिदमवधारणमिति ? अत्राह—तथाहीति ॥ P.105- 7

अवधारणमाक्षिपति – नन्विति ॥ समाधत्ते—सत्यमिति ॥ विष- P.105- 8
याभेदात् मध्यमवृद्धबुध्या व्युत्पित्सोरनुमानमनुवाद इति, अत्राह—
न चेति ॥ नियोगस्यापूर्वत्वभङ्गेऽपि स एव लिङादिप्रत्ययार्थ इति, P.105- 9
अत्राह–प्रवृत्तीति ॥ निर्विशेषं न सामान्यमिति प्रवृत्तिहेतुविशेषो नियोगः P.105-10
कल्प्यत इति, अत्राह—न चेति ॥ हेतुमाह—लौकिकादपीति ॥ दृष्टे P.105-11
सत्यदृष्टकल्पनाऽयोगादित्यर्थः ॥

अभिसन्धिमबुध्यमानश्चोदयति–स्यादेतदिति ॥ अभिप्रायभेदाः P.105-12
खल्वाज्ञादयो लोके प्रवृत्तिहेतवो दृष्टाः । न चापौरुषेये वेदे तेषामस्ति
संभवः, इति तदतिरिक्तहेतुकल्पनमित्यर्थः । दूषयति—नैतदिति ॥ वेदे P.105-13
पृथक् संबन्धग्रहणाभावादित्यर्थः । किमतः ? अत्राह—तत्रेति ॥ यो
हि यत्र विदितसामर्थ्यः शब्दः, सोऽन्यत्रापि श्रूयमाणः तमेवार्थं प्रति-
पादयतीत्यर्थः । न चेन्मानान्तरेण बाध्यते, अत्राह—असंभवे वेति ॥ P.105-14

अभिप्रायप्रकाशिका

ब्रह्मसिद्धिविवरणम्

'तस्यैवमनुमेयत्वे' इति श्लोकगतैवंशब्दस्यार्थमाह—यदीति ॥ 'तस्यापि शब्दपूर्वकत्वादि'ति भागं व्याचष्टे—अथानुमानमिति ॥ अनुमानैकगोचर इत्यादेः सिद्धान्तभागस्यार्थमाह—[1]शाब्दोऽपीति॥ 'नेदम्प्रथमे' त्येतद् व्याचष्टे–न खल्विति ॥ तत्र हेतुमाह–शब्दादवगतस्येति ॥ मध्यमवृद्धेनोत्तमवृद्धप्रयुक्तशब्दादवगतस्य बालेनानुमानात्, एवमनुमितस्य विदितसङ्गतेः पश्चाद् व्युत्पन्नदशायां शब्देन स्वयं पुनरवगमादिति योजना ॥

'शब्दाद् बोद्धुरि'त्येतद् व्याचष्टे—अपि चेति ॥ लौकिकादपि प्रवृत्तिसिद्धेरिति ॥ लौकिकस्य शब्दस्यालौकिकार्थकल्पना नोपपद्यत इत्यर्थः ॥

1. शब्दोऽपीति मूलपाठः

भावशुद्धिः

P.105-16 शङ्कते—अथेति ॥ बहुविधाः प्रवृत्तिहेतवो दृश्यन्ते, (तत्र) न प्रैषणं लिङोऽर्थः ; संप्रत्यामन्त्रणेऽपि तस्याप्रयोगाद् नामन्त्रणम् , आज्ञायामपि प्रयोगादिति व्यभिचार इत्यर्थः । तस्मात् सर्वसाधारणमव्यभिचारात् प्रवर्तनामात्रं लिङर्थ इत्याह—प्रवृत्तीति ॥ सामान्याक्षिप्तो
P.105-17 विशेषो वेदेऽपि स्यादाज्ञादीनामन्यतम इति, अत्राह—तत्रेति ॥

P.105-18 दूषयति—एवमपीति ॥ विशेषाणां व्यभिचारात् प्रवर्तनासामान्यं शब्दार्थः । तच्च प्रमाणान्तरसिद्धमित्यनुवादप्रसङ्ग इत्यर्थः । यद्यपि प्रवर्तनासामान्यं लिङर्थः ; तथापि वेदे तस्य लौकिकस्य विशेषस्यासंभवादलौकिकविशेषपरा चोदना ; स(य)त्परश्च शब्दः, स शब्दार्थः, इति स एव चोदनार्थः ; तस्य प्रमाणान्तरागोचरत्वाद् नानुवाद इति,
P.105-19 अत्राह—योऽपीति ॥ प्रसक्तस्याऽऽज्ञादेर्निषेधेऽन्यत्र मोहादा(?)वप्रसङ्गात् शिष्यमाणमलौकिकं परिशेषानुमानगोचर इति तदवस्थ एवानुवाद इत्यर्थः॥ अभ्युपेत्यैतदुक्तम् , परमार्थतस्तु न परिशेषानुमानमपीत्याह—
P.105-20 न चेति ॥

अभिप्रायप्रकाशिका

न च—यूपाहवनीयादिवत् तत्सिद्धिः किं न स्यादिति—शङ्कनीयम् ; तक्षण-पशुबन्धादियोग्यस्य बिल्व-पलाशादिप्रकृतिकस्याष्टाश्रादिविशिष्टस्य संज्ञानस्य दारुविशेषस्य तक्षणादिपदसमभिव्याहारान्यथानुपपत्त्या सिद्धेः केवलशब्दगम्यत्वाभावादिति च द्रष्टव्यम् ॥ लौकिके विदितसम्बन्ध इति ॥ लौकिके प्रवर्तके विदितसम्बन्धे शब्द इत्यर्थः । वैदिकप्रवृत्तिषु लौकिकप्रवर्तकासम्भवादलौकिकं प्रवर्तकमिति, अत्राह—असम्भव इति ॥

व्यभिचारिणामाज्ञाऽध्येषणादीनां लिङादिशब्दार्थत्वस्य सम्भवात् सर्वविशेषान्वयिनः प्रवर्तनासामान्यस्यैव शब्दार्थत्वम् ; एकस्मिन् वाच्ये सम्भवत्यनेकशक्तिकल्पनाया अयुक्तत्वादिति शङ्कते—अथ बहुविधेति ॥ तथापि कथमलौकिकनियोगसिद्धिरिति ? अत आह—तत्रेति ॥ प्रवर्तनासामान्यस्य विशेषपर्यवसायित्वात् , अपौरुषेये वेदे पुरुषाश्रयाणां प्रैषणादीनामसम्भवादलौकिकनियोगपर्यवसायित्वं सिध्यतीत्यर्थः ॥

भावशुद्धिः

नियोगस्याप्राप्तत्वप्रतिपादनाय शङ्कते—अथेति ॥ यो यत्र व्यवहरति, स तत्र लोको(के)'दर्श-पूर्णमासाभ्यां यजेते'ति वाक्यार्थं परामृश्य दर्श-पूर्णमासादिषु प्रवर्तमाना(नो) दृश्यन्ते(ते), तदेते नूनमेतद्विषयं प्रवृत्तिहेतुमितोऽवगम्य प्रवर्तन्त इति निश्चिनोति व्युत्पित्सुरित्यर्थः ॥ P.107-21
तथापि कथं लोकोत्तरप्रवृत्तिहेतुसिद्धिः? अत्राह—तत्रेति ॥ तर्हि परिशेषानुमानगोचरत्वम्, अत्राह—न चेति ॥ हेतुमाह—तत्प्रत्ययस्येति ॥ P.105-22 P.106-1
वैदिक्या प्रवृत्त्येत्यर्थः ॥ तस्यास्तु कुतः सिद्धिरिति? अत्राह—तत्सिद्धिस्त्विति ॥ तद्विषयप्रत्ययस्य प्रमाणान्तरायत्तत्वाच्छब्दोऽनुवादक इति, P.106-2
अत्राह—स चेति॥ ननूक्तं तत्सिद्ध्येदलौकिकादपीति, अत्राह—न चेति ॥ P.106-3
कुत इति? अत्राह—लौकिकी हीति ॥ किमतः? अत्राह—तत्रेति ॥ लोके P.106-4
मानान्तरगम्या श्रेयस्साधनता लिङाद्यर्थ इत्यर्थः । तथापि किमिति? P.106-5
अत्राह—तदनुसारेणेति ॥ वेदेऽपि सा(ता)दृशी स्यात्, न चेह न मानान्तरमस्ति, इति तद्व्याप्त्या, तन्निवृत्त्या साऽपि निवर्तत इत्यलौकिकप्रवृत्तिहेतुप्रत्ययानुमानमित्यर्थः ॥

परिहरति—अत्रोच्यत इति ॥ कथं प्रतिज्ञामात्रेण तत्सिद्धिः? P.106-7
अत्राह—तथाहीति ॥ प्रमितं प्रत्याह—प्रमितश्चेदिति ॥ द्वितीयमनूद्य P.106-8
दूषयति—अथेति ॥ तदप्रमायामपि संबन्धः प्रतीयेत, ततोऽन्यत्वा- P.106-11
दत्राह—न हीति ॥

अभिप्रायप्रकाशिका

तथापि प्रवर्तनासामान्यस्य न शब्दैकगोचरत्वम्; अनुमानैकगम्यत्वादिति परिहरति—एवमपीति ॥ तथापि नियोगाख्यो विशेषः शब्दैकसमधिगम्यः स्यादिति, अत आह—योऽपीति ॥ परिशेषानुमानगम्यत्वमङ्गीकृत्योक्तम्, तदपि न सम्भवति; कृतियोग्येष्टसाधनतायाः सम्भवादित्याह—न चेति ॥

वैदिकानां लिङादीनां वेद एव सम्बन्धग्रहणाद् नोक्तदोष इति शङ्कते—अथ मतमिति ॥ न च 'लोकावगतसामर्थ्यः शब्दो वेदेऽपि बोधकः' इति न्यायविरोधः; लौकिकव्यवहारवद् वैदिकव्यवहारस्यापि प्रवाहरूपेणानादित्वात् तत्रैव सम्बन्धग्रहोपपत्तेरित्यर्थः । तस्यापि परिशेषानुमानगम्यत्वमुक्तमिति, अत

भावशुद्धिः

P.106-13 शब्दस्य नार्थेन संबन्धः, किंतु ज्ञानेनेति शङ्कते—योऽपीति ॥ शक्तिलक्षणोऽपि संबन्धोऽर्थेन किं न स्यात्, अत्राह—सा चेति ॥ P.106-14 अर्थस्याकार्यत्वादित्यर्थः । प्रत्ययेऽपि तुल्यमिदमिति, नेत्याह—प्रत्ययस्त्विति ॥ तस्याप्यप्रमितत्वादशक्यः सङ्गतिग्रहः, अत्राह—स चेति ॥ प्रत्ययविषयेऽपि संगतिग्रहात् तस्य भानान्तरमितत्वमित्यनुवादः शब्द इति, अत्राह—तत्रैवेति ॥ लाघवादित्यर्थः ॥

P.106 15 परिहरति—स इदमिति ॥ आद्यमनूद्य दूषयति—यदीति ॥ वैदिकलिङादिपदाद्या(दा)ज्ञादीनां यत्किंचित् प्रतीयेतेत्यर्थः । द्वितीयP.106-17 मनुवदति–अथेति ॥ वैशिष्ट्यं स्पष्टयति–लौकिकव्यतिरिक्तेति ॥ दूषयति–P.106-18 प्रवृत्तीति ॥ प्रवृत्त्यनुमानेन, परिशेषानुमानेन च मितत्वात् प्रत्ययविशेषणत्वेन मानान्तरगोचरत्वं नियोगस्यायातमित्यर्थः ॥

अभिप्रायप्रकाशिका

आह—न चेति ॥ प्रवर्तकविषयप्रत्ययमात्रं चेदनुमेयम्, कथं तर्हि प्रवर्तकसिद्धिरिति ? अत आह—तत्सिद्धिस्त्विति ॥ कथं तर्हि शब्दैकगम्यत्वमिति ? शब्दोत्थप्रत्ययगम्यत्वादित्याह—स चेति ॥

तथापि हितसाधनतैव लिङादिपदैरवगम्यत इत्युक्तमिति, अत आह—न च लौकिकेति ॥ श्रेयःसाधनत्वस्य प्रमाणान्तरगम्यत्वात्, तत्परत्वे वैदिकशब्दानामनुवादकता स्यादित्यर्थः । तदनुसारेणेति ॥ प्रमाणान्तरानुसारेणेति यावत् ॥

वेदव्यवहाराच्छब्दार्थसङ्गतिग्रहो नास्ति, भवतु, तथाप्यङ्गीकृत्य परिहरति—भवतु नामेति ॥ नियोगस्य वैदिकव्यवहारात् सम्बन्धग्रहणसमये लिङादिभ्योऽनवगतसंबन्धेभ्यस्तदैव प्रमित्यनुपपत्तेः प्रमाणान्तरगम्यत्वं प्राप्नोति ; अप्रमितत्वे न च सम्बन्धग्रह इत्यर्थः ॥

शब्दार्थसम्बन्धस्य शक्तिलक्षणत्वात्, शक्तेश्च शक्यविषयत्वात्, अर्थस्य चाशक्यत्वात्, ज्ञानस्यैव शक्यत्वात् ज्ञानेनैव सम्बन्धग्रहः, नार्थेन ; ततो न तस्य प्रमाणान्तरगम्यतेति शङ्कते—योऽपीति ॥ तदेतद् विकल्प्य दूषयति—स इदमिति ॥ प्रवृत्ति-परिशेषाभ्यामिति ॥ प्रवृत्त्या, परिशेषानुमानेन चेत्यर्थः ॥

भावशुद्धिः

तदुपपादयितुं विशेषणं विभज्यते—द्वयी हीति ॥ गम्यत इति P.106-19
गतिः=स्वरूपम् । स्मर्यमाणतया, गृह्यमाणतया वा विशिष्टधीहेतुत्व-
मिति तद्द्वैविध्यमाह—स्मार्तेति ॥ स्मृतिरेव स्मार्तम्, तदाकृष्टं स्मर्य- P.106 20
माणमित्यर्थः । आद्यमुदाहरति–यथेति ॥ "अग्निमान् पर्वतः" इत्यत्राग्निः
स्मर्यमाणतया पर्वतविशेषणम्; अग्नेर्व्याप्तिग्रहकाले सिद्धत्वादित्यर्थः ।
द्वितीयं सोदाहरणमाह—विशिष्टेति ॥ शुक्लगुणो विशिष्टग्राहिप्रत्यक्षेण P.106-21
गृह्यमाणो गोविशेषणमित्यर्थः । नियोगस्य स्मर्यमाणतया, गृह्यमाण-
तया वा प्रत्ययविशेषणत्वे साधारणदूषणमाह—उभयथा चेति ॥ हेतु- P.106-22
माह—शब्दस्येति ॥ प्रतिज्ञातं विभागेनोपपादयति–स्मार्तेति ॥ स्मृते- P.106-23
रनुभूतगोचरत्वादित्यर्थः । गृह्यमाणतया विशेषणत्वेऽप्याह—द्वितीय P.106 24
इति ॥ शब्दशक्तेरिदानीं गृह्यमाणतया शब्दस्याबोधकत्वात् । प्रवर्तक-
प्रत्ययानुमानमितत्वादित्यर्थः ॥

चोदयति—अथेति ॥ अगृहीतविशेषणविशेष्यबुद्धिरयुक्तेति,
अत्राह—प्रतीतिमात्रमिति ॥ तत्र=अनुमान इत्यर्थः । अप्रमितं विशेषणं P.107- 1
न स्याद्, अत्राह–तावतेति ॥ प्रमितं विशेषणम्, न पुनरप्रमितमित्यर्थः ।
कुतो नियोगप्रमितिः ? अत्राह—विशेषणेति ॥ अनुमानादति(पि)- P.107- 2
सिध्यन् क्व नामोपलभ्यत इति ? अत्राह—यथेति ॥ विमति-

अभिप्रायप्रकाशिका

प्रत्ययविशेषणभूतस्य प्रवर्तकस्य कथं प्रमाणगम्यत्वमिति ? अत आह—
द्वयी हीति॥ विशिष्टप्रत्यये क्वचित् स्मृत्युपनीततया विशेषणमन्तर्भवति, क्वचि-
द्विशिष्टग्राहिप्रमाणेन, तदेव गृह्यमाणतयेति विशेषणस्य द्वैविध्यम्; उभयथाऽपि
प्रमाणान्तरविषयत्वं प्रत्ययविशेषणीभूतस्य प्रवर्तकस्य बलादापततीत्यर्थः । तदेव
प्रपञ्चयति—शब्दस्येति ॥ तेन शब्दादनुभूतं स्मर्यत इति न मन्तव्यमित्यर्थः ।
द्वितीयेऽपीति ॥ प्रवृत्तिलिङ्गेन प्रत्ययानुमानसमये प्रवर्तकस्यापि तद्विशेषणस्य
तेनैवानुमानेन प्रमितत्वात् प्रमाणान्तरमेष्टव्यमित्यर्थः ॥

प्रतीतिमात्रेण विशेषणत्वोपपत्तौ प्रमितत्वमनुपयोगीति शङ्कते—अथा-
नुमानस्येति ॥ कथं तर्हि तस्य प्रमितत्वमिति ? तत्राह—विशेषणेति ॥
दृष्टान्तेनोक्तमर्थमुपपादयति—यथेति ॥

भावशुद्धिः

पदानि, स्वार्थ(?)स्मारितस्वार्थरूपाणि, आकाङ्क्षा-सन्निधि-योग्यतावत्पदकदम्बत्वात्; गामानयेत्यादिपदकदम्बवदिति पौरुषेयवचनादर्थावच्छिन्नज्ञानमनुमीयते। अनुमितज्ञानादर्थसिद्धिरित्यर्थः। शब्दा-
P.107- 3 दर्थावगमे नाप्रतीतोऽर्थः प्रत्ययविशेषणमिति, अत्राह— तत्र हीति॥
उत्प्रेक्षाधिगत इत्यर्थः॥
P.107- 4 दूषयति—तदेतदिति॥ अनन्तर्भावं साधयति—तत्रेति॥ नियोगो
P.107- 6 वाऽन्यो वेति वाकारानिर्देशान्न संशय इत्याह— नेति॥ शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः, सोऽपि नेत्याह—न विकल्प इति॥ हेतुमाह—
P.107- 7 प्रवृत्तीति॥ प्रयोज्यवृद्धगतस्यापि विकल्पत्वप्रसङ्गादित्यर्थः। यथैव न विकल्पः, तथा न विपर्यासः; व्यवहाराविसंवादादित्याह— तथा नेति॥ वृद्धस्य प्रवृत्तिहेतुप्रत्ययो यथार्थ एव; विदितसंबन्धशब्दप्रभवत्वात्, न तु व्युत्पित्सोः; कारणाभावादिति, अत्राह—कथं हीति॥

प्रतीतिः। व्युत्पित्सोरिति शेषः। वृद्धप्रत्ययानुमानात् प्राग्विशेषणस्य प्रतीतिमात्रम्, पश्चादर्थप्रत्ययादनुमिताद् व्युत्पित्सोरर्थप्रमितिः,
P.107- 9 प्रमितार्थविषय एव सङ्गतिग्रह इति न दोषः शब्दस्ये(ति चे)त्; अत्राह—परज्ञानेनेति॥ ज्ञानं स्वाश्रये ज्ञेयाभिव्याप्तिहेतुः, नान्यत्र; अतिप्रसङ्गादित्यर्थः। विरोधपरिहारं शङ्कते—अथेति॥ परज्ञानसामर्थ्यात्= प्रयोज्यनरसमवेततयाऽनुमितप्रत्ययसामार्थ्यादुत्पन्नस्वज्ञानेनेत्यर्थः।

अभिप्रायप्रकाशिका

यद्यप्यख्यातिपक्षे स्मृति-प्रमाणा(ण)द्वैराग्य(द्वय)मेव प्रत्ययस्य; तथापि सर्ववादिनां मतमनुसरन्नाह—स्मृतिप्रमाणेति॥ अन्तर्गमात्=अन्तर्भावादित्यर्थः। तत्र प्रमितेः स्मृत्यादिष्वनन्तर्भावप्रदर्शनेन प्रमाणान्तर्भावं साधयति—तत्रेति॥

प्रवृत्तिहेतुप्रत्ययस्यापीति॥ अयमर्थः—शब्दज्ञानानुपाती वस्तुशून्यो हि विकल्पः। तत्र यदि बालकस्य विकल्पेन विषयीक्रियते प्रवर्तकः, तर्हि मध्यमवृद्धनिष्ठतयाऽनुमीयमानप्रवर्तकप्रत्ययस्यापि निर्विषयत्वं प्रसज्येत, इति मध्यमवृद्धप्रत्ययस्य प्रवर्तकविषये प्रमाणत्वे तद्विषयस्य बालकप्रत्ययस्य कथं विपर्यस्तता(त्रा)ऽपीत्याह—कथं हीति॥ यदुक्तम्—'विशेषणप्रमितिस्त्वनुमितात् प्रत्ययादि'ति, तत् सोपहासं दूषयति—परज्ञानेनेति॥

भावशुद्धिः

दूषयितुं पृच्छति—अथ तस्येति ॥ दूषयति—न तावदिति ॥ तदुपपादनाय शब्दप्रमाणलक्षणमाह—शब्दविज्ञानादिति ॥ लक्षणमेतदस्यास्तीति, नेत्याह—न चेति ॥ पृच्छति—कुतस्तर्हीति ॥ उत्तरमाह—शब्दार्थे[1]ति ॥ यद्यप्यनुमितप्रत्ययस्य प्रमाणत्वे सति तत्सामर्थ्यात् प्रत्ययविशेषणं प्रवर्तकमस्य सिध्यति, नान्यथा; अर्थशून्यत्वादित्यर्थः। तर्हि तत्प्रत्ययप्रामाण्याधीना तत्सिद्धिर्न शब्दनिबन्धनेति, अत्राह—प्रामाण्यं चेति ॥ फलितमाह—तेनेति ॥ तदधीनः=शब्दाधीनः, तत्प्रवर्तक इत्यर्थः ॥ P.107-10 P.107-11 P.107-13 P.107-14

दूषयति—तदपीति ॥ तस्य च लक्षणस्यात्राभावादित्यर्थः। P.107-15
दृष्टान्तः साध्यविकल इत्याह—पुरुषवचनमिति ॥ प्रवर्तकम्=प्रतीतिमात्रेण विशेषणम्। प्रमितिस्त्वनुमितप्रत्ययात्, इत्यत्र पुंवचनं नोदाहरणम्; अस्यार्थेऽपि मानत्वादित्यर्थः। किमिति तर्हि वक्तृप्रमाणमपेक्षत इति? अत्राह—किन्त्विति ॥ यस्माद्विशेष्यं वक्तृज्ञानं P.107-16

अभिप्रायप्रकाशिका

तर्हि परज्ञानानुमानं व्यर्थमिति, अत आह—परज्ञानसामर्थ्यादिति ॥ न चेह तल्लक्षणमित्याह—न च तदिति ॥ शङ्कते—कुत इति ॥ अत उत्तरमाह—शब्दः, अर्थज्ञानादिति ॥

परमताङ्गीकारेणेदमुत्तरं द्रष्टव्यम्। बालकज्ञानस्य शाब्दत्वमुपपादयति पूर्ववादी—अथ तस्येति। तस्येति ॥ मध्यमज्ञानस्येत्यर्थः। प्रवृत्तिसद्भावसिद्धिर्बालकानुमानेनेति शेषः ॥

भवतु प्रामाण्यं मध्यमवृद्धज्ञानस्य, तथापि शाब्दत्वं कथमिति? अत आह—प्रामाण्यं चेति ॥ तथापि प्रवर्तकविषयबालकज्ञानस्य कथं शब्दप्रमाणजन्यत्वमिति? अत आह—तेन शब्दस्येति ॥ तत्र हेतुमाह—तदधीन इति ॥ शब्दप्रमाणाधीनस्तत्र प्रवर्तके बालस्य निश्चयो यस्मादित्यर्थः ॥

बालकस्याविदितसङ्गतिकतया शब्दादर्थप्रतिपत्त्यभावादशाब्दत्वं तत्प्रत्ययस्येति परिहरति—तदपीति ॥ पुरुषवचनस्यापि स्वत एवार्थे प्रामाण्यमिति साधयन् दृष्टान्तं विघटयति—पुरुषवचनमपीति ॥ प्रमाणं चेत्,

1. शब्दोत्थ—इति मूलपाठः।

भावशुद्धिः

स्वकारणमपेक्षत इत्यर्थः। आस्तां तर्हि विशेष्यमात्र एव पुरुषवचः प्रमाणम्? किमस्य विशेषणप्रमाणत्वेनेति? अत्राह—द्वयी चेति ॥ तर्हि
P.107-17 स्मर्यमाणतया विशेषणमस्त्विति, अत्राह—तत्रेति ॥ विशिष्टस्यार्थस्य
P.107-18 वक्तृज्ञानलक्षणस्य प्रमित्यङ्गत्वमित्यर्थः। व्यतिरेके दण्डमाह—अन्यथेति ॥ स्मर्यमाणतयाऽऽप्तवाक्यार्थस्य वक्तृज्ञानविशेषणत्वे श्रोतुराप्तवाक्यार्थे मानान्तरमपेक्ष(क्ष्य)मित्यर्थः। वक्तृज्ञानमेव श्रोतुरर्थे मानम्,
P.107-19 किं मानान्तरेण? अत्राह—न चेति ॥ कुत इति? अत्राह—न पर इति ॥ यदि पौरुषेयवाक्यमर्थे प्रमाणम्, श्रोतुर्न वक्तृज्ञानम्, कथं तर्हि श्रोतुर्वक्तृज्ञानाधीनाप्तवाक्यार्थसिद्धिरित्यभियुक्तैर्निरुच्यत इति? अत्राह—
P.108- 1 यत्त्विति ॥ तदभिप्रायं कथयति—[1]तत्रेति ॥ वक्तृज्ञानस्य मिथ्यात्वे=यथा "आरोग्यकामो भूत्वा निशि सलिलं पिबेदि"ति, तदसंभवे वा यथा "चैत्यं वन्देत स्वर्गकामः" इति, प्रमाणप्रतीतिबाधने=वक्तुः प्रमाणाभासजनितप्रतीतिबाधने, श्रोतुरर्थप्रतीतेरपि बाधनात्, तदबाधे च=यथाऽऽरोग्यकामस्त्रिवृतं पिबेदिति श्रोतुः प्रतीतेरबाधनात्तदधीनार्थसिद्धिरित्युक्तम्। न तु वचसोऽर्थः=पुरुषवचनस्यार्थो विषय

अभिप्रायप्रकाशिका

सापेक्षत्वप्रसिद्धिः कथमिति? अत आह—किंतु ज्ञानेति ॥ विशिष्टार्थस्य प्रमेयत्वात् प्रमेयान्तर्गतत्वाद् वक्तृप्रमाणेऽपेक्षा, न तु पुरुषवचसः प्रामाण्यसिद्ध्यर्थमित्यर्थः। न च शङ्कनीयम्—विशेषणीभूतज्ञान एव प्रामाण्यमस्तु—इति; ज्ञानमात्रप्रतिपत्त्ययोगात्, अर्थविशिष्टज्ञानप्रतिपत्तौ वाऽर्थस्यान्यतः प्रतिपत्त्ययोगादर्थविशिष्टेऽर्थे वचसः प्रामाण्यमित्याह—द्वयी चेति ॥ अर्थविशिष्टे ज्ञाने वचसः प्रामाण्यानङ्गीकारे दोषमाह—अन्यथेति ॥ अस्य वक्तृज्ञानमेव तत्र प्रमाणमिति, अत्राह—न चेति ॥ तत्र हेतुः—परज्ञानेनेति ॥

का तर्हि 'एवमयं पुरुषो वेदे'ति भवति प्रत्ययः, न त्वित्थमर्थ इति भाष्यस्य गतिरिति? तत्राह—यत्तूच्य[2]त इति ॥ विप्रलम्भकवाक्ये प्रमाणस्य मिथ्यात्वे बुद्धादिवाक्ये च प्रमाणासम्भवे ज्ञानस्य प्रमाणप्रतीतिरूपं बाध्यते।

1. तत् इति मूलपाठः। 2. यत्तूक्तमिति मूलपाठः।

भावशुद्धिः

इत्यर्थः । पुरुषवचनस्यार्थविषयत्वाभावे बाधमाह—अन्यथेति ॥ P.108- 3
सापेक्षत्वं तदविषयत्वादेवेति, अत्राह—न हीति ॥ अर्थविषयस्यापि P.108- 4
पुरुषवचसोऽर्थे प्रामाण्यं न संभवति ; सापेक्षत्वात् ; स्मृतिवत्, अत्राह—
तथाचेति ॥ स्थाप्यते चेत् प्रामाण्यम्, मत्वेन(अन्येन) तर्हि ता(स्था)-
प्य(ते),न स्वत इति, अत्राह—स्थापनमिति ॥ किंचिद्बाधदर्शनाच्छ- P.108- 5
स्य(ङ्कय)मानायथार्थत्वनिराकरणे वक्तृज्ञानकारणोपयोग इत्यर्थः ।
शङ्कापनयनार्थमपेक्षितादेव वक्तृज्ञानात् तद्धेतोर्वाक्यार्थसिद्धेः शब्दो नार्थे
मानमिति, अत्राह—तच्चेति ॥ वक्तृधिय एव तद्धेतोर्वा नार्थसिद्धि- P-108- 6
रित्यर्थः ॥

अभिप्रायप्रकाशिका

तथाच सति श्रोतुरर्थप्रतीतिरस्याभासीभवति, वक्तृप्रमाणसद्भावे च श्रोतुरर्थ-प्रतीतेरप्य बाधाद्वचसः प्रमाणापेक्षया न प्रामाण्यसिद्धय इत्यर्थः । पौरुषेय-वाक्यात् प्रमाणविशिष्टेऽर्थे बाधे विशेष्यार्थप्रतीतिरपि मध्यमवृद्धस्य बाध्यत इति वाऽर्थः । अर्थाविषयत्वे वचसस्तत्र सापेक्षत्वादिवर्णनमपि न युज्येतेत्याह—**अन्यथा प्रमाणान्तरेति** ॥ उक्तमेवोपपादयति—**न हीति** ॥ उक्तेऽर्थेऽभि-युक्तवाक्यं दर्शयति—**तथाचेति** ॥ एतावता कथं तव विवक्षितार्थसिद्धि-रिति ? अत आह—**स्थापनमिति** ॥ क्वचिद्वचसो बाधितार्थत्वदर्शनाच्छङ्का-कुण्ठिततया न प्रवृत्त्यङ्गत्वमिति, तर्हि शङ्कापनोदाय मूलप्रमाणानुसरणम्, न तु प्रामाण्यसिद्धये ; तस्यौत्सर्गिकत्वादित्यर्थः ॥

वक्तृधीहेतुभावे तद्धिय एवार्थे प्रामाण्यम्, न वाक्यस्येति, अत आह—**तच्चेति** ॥ वक्तृधियः, तद्धेतोर्वा पुरुषान्तरस्थतया तच्चक्षुर्वक्तृज्ञानजन्यज्ञानवच्च पुरुषान्तरं प्रत्यर्थप्रत्यायकत्वासम्भवात् तद्वाक्यप्रामाण्यशङ्कापनोदन एव केवल-मुपयोग इत्यर्थः । ननु—न शब्दस्यार्थेन सम्बन्धः ; अनाप्तवाक्येऽर्थव्यभि-चारात्, वक्तृज्ञानकार्यत्वात्तु तेनैव सम्बन्धः, तेन तद्गमकत्वमेव ; तथाचोक्तं धर्मकीर्तिना—

> "नान्तरीयकताभावाच्छब्दानां वस्तुभिः सह ।
> नार्थसिद्धिस्ततस्ते हि वक्त्रभिप्रायसूचकाः ॥"

इति, तत्राह—**शब्दस्य चेति** ॥

भावशुद्धिः

शब्दस्य प्रवर्तकविषयज्ञानेन संबन्धमङ्गीकृत्य प्रवर्तकस्य प्रमाणान्तरविषयत्वमुक्तम्, इदानीमर्थेनैव शब्दस्य संबन्धः, न ज्ञाने-
P.108- 7 नेत्याह—शब्दस्य चार्थेनेति ॥ अत्र वृद्धसंवादं दर्शयति— एवं हीति ॥
P.108- 8 संबन्धस्यापौरुषेयत्वमात्रपरं तत्सूत्रमिति, अत्राह—अर्थग्रहणं हीति ॥ पुंवाक्यधीमा(त्रा)नुमाने विशिष्टव्यवहारासिद्धिः, अर्थविशेषावच्छिन्नज्ञानानुमाने लाघवादुभयसिद्धत्वाच्चार्थ एव शब्दात् गम्यतामित्यर्थः ।
P.108- 9 उपसंहरन् पूर्वोक्तमर्थं योजयति—तस्मादिति ॥ प्रवर्तकार्थो मानान्तर-
P.108-10 सिद्धः, न वेति विकल्प्याऽऽद्यं प्रत्याह––न चेति ॥ द्वितीयमपवदति—प्रमित इति ॥ प्रमाणाप्रमाणसाधारणज्ञानसिद्धेः प्रवर्तके संगतिग्रह इति, अत्राह—न चेति ॥ प्रतीतिर्यथार्था, न वेति विकल्प्याऽऽद्यं प्रत्याह—
P-108-11 अर्थवत्त्वा इति ॥ उभयथापि मानान्तरासिद्धत्वं नियोगस्येत्यर्थः । द्वितीयं दूषयति—आनर्थक्य इति ॥ संबन्ध्यभावादित्यर्थः । निर्विषय-

अभिप्रायप्रकाशिका

अयमभिसन्धिः—किं ज्ञानमात्रकार्यः शब्दः, किं वाऽर्थविशेषितज्ञानकार्यः ? नाद्यः; तन्निबन्धनव्यवहारस्य विषयविशेषप्रतिनियमाभावप्रसङ्गात् । अथ द्वितीयः; तर्ह्यर्थविशेषविशेषितज्ञानेन सम्बन्धे तद्विशेषणीभूतार्थविशेषेणापि सम्बन्धोऽभ्युपेयः । न हि विशेषणेनासम्बद्धं तद्विशिष्टेन सम्बद्धं भवति । किञ्च ज्ञानमात्रानुमाने प्रवृत्त्यनुपयोगादर्थविशेषितं ज्ञानमनुमातव्यम्, न चार्थाप्रतीतौ तद्विशिष्टज्ञानानुमानसिद्धिः, इति ज्ञानविशेषणीभूतार्थप्रतीतिरेष्टव्या । सा च नेन्द्रियजा; व्यवहितविषयत्वात्, नाप्यानुमानिकी; तत्प्रतिबद्धलिङ्गासिद्धेः । तस्मादकामेनाप्यवधीर्य प्रमाणान्तरं शब्दादेवार्थप्रतीतिरेष्टव्येत्यादित एवार्थप्रमितिसिद्धेः कृतं वक्तृज्ञानानुमानदुर्व्यसनेन ? न च वक्त्रभिप्रायसूचकत्वनियमः शब्दानाम्; विप्रलम्भ-विभ्रमादिसम्भवेषु वचनेषु व्यभिचारात्, विप्रलम्भकादीनामन्यविवक्षूणामप्यन्यथा प्रयोगदर्शनात् ॥

अथाऽऽप्तवाक्येष्वयं नियमः, तर्ह्यसाकमपि तेष्वेवार्थाव्यभिचार इति तुल्यम्; अन्यत्राभिनिवेशादिति ॥ तत्राभियुक्तवाक्यं प्रमाणयति—एवं हीति ॥ कस्तर्हि शब्दार्थयोः सम्बन्ध इति ? तमाह—तस्मादिति ॥

भावशुद्धिः

बुध्यन्तरगोचरत्वे बाधकान्तरमाह—यदि चेति ॥ कारणान्तरा- P.1(8-12
जन्मना प्रत्ययेनाप्रमाणेन यदि शब्दविषयो गोचरीक्रियते, कुतः प्रमाणान्तरजन्मनाऽपि न विषयीक्रियत इति शङ्का(म)पनेतुमशक्येत्यर्थः ॥

यदीष्टसाधनत्वं लिङाद्यर्थः, तदा प्रमाणान्तरगम्यमपि शब्दार्थः स्यादित्युक्तचोद्यनिराकरणायाऽऽह—न चेति ॥ हेतुमाह —यत इति ॥ P.108-14
केन तर्हीति ? अत्राह—सति हीति ॥ युक्तं दृतिहरिशब्दप्रयोगस्य P.108-16
केवलं दृतिहर्तृत्वम् ; तदभावे पशुमात्रे प्रयोगादर्शनात्, प्रयोजकमपि पशुत्वं सत्यपि दृतिहर्तृत्वे कर्मकारादावप्रयोगादिति निदर्शनमाह—
यथेति ॥ सत्सु वह्न्यादिषु यस्यार्द्रेन्धनसंयोगस्याभावे धूमादिकार्यं न P.108-17
भवति, स संयोगः वह्न्यादेरपीत्यर्थः ॥

अस्तु तर्हीहापि श्रेयस्साधनतावत् प्रमाणान्तरगम्यत्वमपि लिङः
प्रयोजकम्, अत्राह—इह चेति ॥ मानान्तरगम्य(त्व)स्यान्वय-व्यति- P.108-18

अभिप्रायप्रकाशिका

कथमेतावता नियोगस्यालौकिकस्यासिद्धिरिति ? अत आह—न चाप्रमित इति ॥ प्रतीतिमात्रे सम्बन्धग्रहेऽपि प्रमाणप्रमितत्वं बलादापततीत्याह—न च प्रतीतिमात्र इति ॥ स्मृतेरपि पूर्वानुभवमूलत्वात् प्रमाणपर्यवसायित्वमिति भावः ॥ अर्थवत्त्वमसम्प्रतिपन्नमिति, अत्राह—आनर्थक्ये चेति ॥ प्रतीतिमात्रगोचरत्वेऽपि शब्दैकसमधिगम्यत्वं व्याहन्यत एवेत्याह—यदि चेति ॥

यदुक्तमिष्टसाधने(नत्वस्य) लिङाद्यर्थत्वे तस्य प्रमाणान्तरगोचरत्वात् तस्य वेदप्रतिपाद्यत्वमनुपपन्नम् ; प्रमाणान्तरानुप्रवेशप्रसङ्गादिति, तत्राह—न च प्रमाणान्तरगम्यतेति ॥ कथं तर्हि शब्दार्थत्वमिति ? अत आह—सति हीति ॥ 'हरतेर्दृति-नाथयोः पशा'विति स्मरणाद् दृतिहरिशब्दस्य न केवलं दृतिहर्तृत्वं प्रयोगहेतुः ; अपशौ कर्मकारे प्रयोगादर्शनात्, नापि पशुत्वमात्रम् ; दृतिहरणाभावे गवादावसम्प्रयोगात् । तस्मादेकैकस्य केवलव्यतिरेकाद् मिलितं प्रयोगहेतुरवसीयत इत्यर्थः । दृष्टान्तमाह—यथेति ॥ मृत्सलिल-दण्डादावन्यतमाभावे कार्यादर्शनात् तस्यापि हेतुत्वं गम्यत इत्यर्थः ॥

भावशुद्धिः

P.108-19 रेकयोस्तुल्यत्वाद् लिङाद्यर्थत्वप्रसक्तिः, अत्राह—प्रमाणान्तरेति ॥ यथा
सत्यपि मानान्तरगम्यत्वव्यतिरेकाद् लिङादेः प्रयोगव्यतिरेकः शक्यो
दर्शयितुमित्यर्थः ॥

मानान्तराभावे श्रेयोहेतुत्वासिद्धेः, उभयव्यतिरेके तदप्रयोग
P.108-21 इति, अत्राह—तत्रेति ॥ न च संशयः ; श्रेयस्साधनताव्यतिरेकादेव
P.108-22 तत्प्रयोगव्यतिरेक इति निश्चयात्, अत्राह—तत्र श्रेयस्साधनताया इति ॥
मानान्तरगोचरत्वस्यापि स्वत एवान्वय-व्यतिरेकौ, तयोः कथमुपपत्तिः ?
P.109- 1 अत्राह—तन्मात्रेणेति ॥ प्रमेयत्वस्य तद्व्यापकत्वादन्यथासिद्धावन्वय-
P.109- 2 व्यतिरेकादित्यर्थः । तथापि शब्दार्थत्वेऽतिप्रसङ्गमाह—अन्यथेति ॥
P.109- 3 शङ्कते—अथेति ॥ शिंशपात्वाभावे सत्त्व-द्रव्यत्व-मेयत्वादिषु
सत्स्वपि पाषाणादावप्रयोगात् शिंशपात्वं शब्दार्थ इति निश्चयात्
सत्त्वाद्यभावे तदप्रयोगः शिंशपात्वाभावनिमित्त इति तदन्वय-व्यति-
रेकयोरुपपत्तौ न सत्त्वादेः शब्दार्थतेत्यर्थः । समः समाधिरिति,
P.109- 5 अत्राह—समानमिति ॥ श्रेयोहेतुत्वमात्रं शब्दार्थोऽपि मानान्तरगम्यत्वेन
P.109- 6 व्याप्तस्तदभावे न भवेदित्युक्तचोद्यमनुवदति—अथेति ॥ दूषयति—

अभिप्रायप्रकाशिका

दार्ष्टान्तिके तु श्रेयस्साधनताया एव केवलव्यतिरेकः, न प्रमाणान्तरगम्यताया इति साधयति—इह चेति ॥ प्रमाणान्तरगम्यताया अपि केवलव्यतिरेकोऽस्तीति, अत आह—प्रमाणान्तरेति ॥ प्रमाणान्तरगम्यताया अभावाद् लिङादिप्रयोगस्य न त्वदर्शनमिति योजना । इष्टसाधन(त्व)वत् प्रमाणान्तरगम्यस्याप्यन्वय-व्यतिरेकित्वात् किमिति न शब्दार्थत्वमित्याशङ्क्य, व्यतिरेको न निश्चित इत्याह—तत्रेति ॥ सन्देहमेव दर्शयति—उभयाभाव इति ॥ हितसाधनस्यापि सन्दिग्ध एव व्यतिरेक इति, नेत्याह—तत्र श्रेय इति ॥ अन्वय-व्यतिरेकमात्राच्छब्दार्थत्वम् । तर्हि का गतिरित्याकाङ्क्षायां प्रमाणान्तरस्य श्रेयस्साधनतावगमहेतुत्वात् तावन्यथासिद्धावित्यभिप्रेत्याह—[1]तावन्मात्रेणेति ॥

---

1. तन्मात्रेणेति मूलपाठः ।

भावशुद्धिः

तदसदिति ॥ मानगम्यत्वमात्रं व्यापकम्, न त्वन्तरार्थोऽपि ; व्यति- P.109- 7
रेकाभावादित्यर्थः । एतदेव साधयति---न हीति ॥

लोके श्रेयोहेतुत्वस्य मानान्तरगम्यत्वाद् वेदे तदभावात् गम्य- P.109- 8
मानमपि श्रेयोहेतुत्वं मिथ्या स्यात्, अत्राह---तदभावे वेति ॥ कुत इति ? अत्राह---समीपे हीति ॥ संनिकृष्टे देशेऽग्निः प्रत्यक्षः, विप्रकृष्टेऽनुमानेन, आप्तवचनेना(न वाऽ)वगम्यते । तत्र प्रत्यक्षेणाग्रहणाद् न बाध्यते यस्मादित्यर्थः । मानान्तरयोग्य(त्व)स्य तद्भावेऽभावनिश्चयात् कुतो वेदावगम्यता ? न हि नरविषाणं गमयन्नागमः प्रमाणमिति, अत्राह---तथा यागादिष्विति ॥ P. 109- 9

विप्रकृष्टत्वविशेषणेनायोग्यतां दर्शयति । श्रुति-स्मृत्यागमाभावाद् यथा चैत्यवन्दनादिषु श्रेयस्साधनता बाध्यते, तथा यागादीनामपि मानान्तराभावात् बाधिष्यते । श्रुतिरत्रास्तीति चेत्, न ; इह बुद्धादिवचनसंभवादिति, अत्राह—न चेति ॥ बुद्धवचनं तु नैवंविधे प्रमाण- P.109-10
मित्यर्थः । कुतस्तर्हि शब्दस्यैव गोचरो न मानान्तरस्यापीति, अत्राह—विषयेति ॥ P.109-11

अभिप्रायप्रकाशिका

अन्वय-व्यतिरेकमात्राच्छब्दार्थत्वेऽतिप्रसङ्गमाह—अन्यथेति ॥ शङ्कते पूर्ववादी—अथेति॥ खादिरादिषु सत्त्व-द्रव्या(त्वादि)भावेऽपि शिंशपाशब्दाप्रयोगान्न तेषां प्रयोजकत्वमित्यर्थः । आह सिद्धान्ती---समानमिति ॥

प्रमाणान्तरगम्यतया लिङाद्यर्थत्वाभावेऽपि श्रेयःसाधनतायाः प्रमाणान्तरगम्यत्वात् वेदप्रतिपाद्यत्वमनुपपन्नमिति शङ्कते---अथ श्रेय इति ॥ स्वरूपेण प्रमाणान्तरगम्यत्वेऽपि पदार्थान्तरविशिष्टताया वेदैकगम्यत्वं सम्भवतीत्याशयेन परिहरति—तदसदिति ॥ प्रमाणान्तरेणोपलब्धौ पूर्वप्रमाणानुवृत्त्यपेक्षाऽपि नास्तीत्याह—तदभाव इति ॥ तत्र दृष्टान्तमाह—समीपे हीति ॥ योग्यत्वे सत्यनुपलम्भादभावो निश्चीयते, वह्नौ तु दूरत्वादयोग्यत्वम्, इह तु प्रमाणान्तरयोग्यत्वात् तदभावे स्यादभाव इति, अत आह—न च प्रमाणेति ॥ लौकिकश्रेयस्साधनेऽनुमानादिप्रवृत्तावपि यागादेः श्रेयस्साधनत्वे न तत् प्रवर्तकम् ; तस्यान्वय-व्यतिरेकागोचरत्वादित्याह—विषयेति ॥

भावशुद्धिः

मानान्तरगोचरनियोगस्य वेदार्थत्वे मानानां विषयव्यवस्था स्यात्, अपेक्षितोपायत्वे वेदार्थे तस्य मानान्तरेण तत्र तत्र दर्शनात् तद्योग्यत्वमस्तीति मानान्तरमनन्तरफलानुपलम्भाच्चित्रादेर्निवर्तमानं स्वभावेन चोदनाप्रवृत्तिं निरुणद्धीति चोदयति—अथेति ॥ परिहरति—
P.109-12 स्यात्, यदीति ॥ "चित्रया यजेत पशुकामः" इति पठन्ति, न त्वनन्तरपदमपि, ततो न विरोध इत्याह—न चेति ॥ यागाद्यनुष्ठानात् स्वर्गो भविष्यतीत्येतावन्मात्रं वेदो बोधयति, नानन्तरमेव फलं भविष्य-
P.109-13 तीत्येतद् वृद्धोक्त्या द्रढयति—आनन्तर्यं हीति ॥

संप्रति पूर्वोक्तहेतुपरित्यागेन युक्त्यन्तरेण परः प्रत्यवतिष्ठते—अथ मा भूदिति ॥ सिद्धस्तर्हि मानान्तरविरोधाभाव इति, अत्राह—
P.106-15 सर्वथेति ॥ लौकिकी चेदपेक्षितोपायताऽऽश्रिता, सा क्रियाया एवेत्यर्थः ।
P.109-16 यथा मानान्तरेण सिद्धत्वम्, तथाऽनभ्युपगमे बाधमाह—अन्यथेति ॥
P.109-16 यथासिद्ध्यभ्युपगमे को दोषः? तत्राह—अनन्तरेति ॥ क्रिया चानन्तरफला गमन-भोजनादिरुपलब्धा, तदचोदितमप्यानन्तर्यमर्थलब्धम् । तथाच मानान्तरविरोध इत्यर्थः ॥

P. 109-17 तदेतदनैकान्तिकतया दूषयति—(न ता[1]वदिति ॥ नियोगतः= नियमेनेति यावत् । स एव तत्रावान्तरकार्यः, न तु यागादाविति,

अभिप्रायप्रकाशिका

अनन्तरफलसाधनत्वं लोके लिङाद्यर्थो दृष्टः, वेदे त्वनन्तरफलादर्शनाद् यागादेः श्रेयस्साधनत्वप्रतिपादनमयुक्तम्; प्रमाणान्तरविरोधादिति शङ्कते—अथ प्रमाणान्तरेति ॥ नियोगस्य तु शब्दार्थत्वे नैष दोष इत्याह—तदविषये त्विति ॥ परिहरति—स्यात्, यदीति ॥ यागादेरनन्तरफलसाधनत्वस्य लिङादिना प्रतिपादितत्वाभावात् श्रेयःसाधनतामात्रस्यैव प्रतिपादितत्वात् तत्र च प्रमाणान्तराप्रवृत्तेर्न तद्विरोधगन्धोऽपीत्यर्थः ॥

इष्टसाधनत्वस्यानन्तरफलत्वेनाविनाभावात् तद्दर्शनाच्च न तस्य वेदार्थत्वमिति शङ्कते—अथ मा भूदिति ॥ केनाऽऽकारेण तस्य प्रमाणान्तरसिद्धतेति ? तत्राह—अनन्तरेति ॥

1. (२) कुण्डलितो भागो A. पुस्तके नास्ति ।

भावशुद्धिः

अत्राह—अवान्तरेति ॥ अपूर्वस्य यागादौ । दृष्टलक्षणं हि फलमारोग्यम्, P.109-18
सस्याधिगमश्चेष्टम्, न तूदरपूरण-भूपाटने इत्यर्थः । नियोगादावपि श्रुतार्थापत्तितः सिद्धेरित्यर्थः । संप्रत्यभ्युपगम्यापि तद्व्यभिचारं परिहारान्तरमाह—अपि चेति ॥ विशिष्टस्यानन्तरश्रेयोहेतुत्वस्य सिद्धौ विशेष- P.109-19
णमपि(स्यापि) श्रेयोहेतुत्वमात्रं सिद्धमित्यर्थः । तथाच लाघवात् तन्मात्रं लिङादिशब्दार्थो भवेदित्याह—तावदिति ॥ अत्रापि मानान्तरविरोध- P.109-20
तादवस्थ्यमिति, नेत्याह—न चेति ॥ यद्यपि लोके दृष्टमानन्तर्यम्, तथापि न तन्निवृत्त्या श्रेयोहेतुत्वमपि निवर्तेत । न हि पार्थिवं सर्वं लोहलेख्यमिति वज्रमपि तथा, प्रामाणिकत्वं च तुल्यमिति भावः । प्रकृतमुपसंहरति—तदेवमिति ॥ अलौकिकनियोगो वैयर्थ्यान्न कल्प्यत इत्यर्थः । इतश्चायमलौकिको नियोगो भवतीत्याह—सुखादिवच्चेति ॥ P.109-21
एतदेव स्फुटयति—तथाहीति ॥ अयम्, सुखज्ञानवान्, विकसित- P.110- 1
वदनत्वात्, मद्वदिति मुखप्रसादकोपाधिनोन्नेयं संवेदनं येषाम्, ते तथा, मुखप्रसादादिना सुख-दुःखसंवेदनम्, संवेदनेन सह तद्विशेषणं सुखाद्यप्यनुमीयते, न तत्र मानान्तरमप्यपेक्षते, तथा नापि प्रवृत्त्यनुमितप्रत्ययेन सह तद्विशेषणप्रवर्तकानुमानाद् नास्य लौकिकत्वमित्यर्थः ।

अभिप्रायप्रकाशिका

मैवम्; व्यभिचारादिति परिहरति—[1]तदसदिति ॥ उद्देश्यफलस्यानन्तर्याभावेऽपि भूपाटनादिकार्यमनन्तरं दृश्यते कृषिकर्मणि, भेषजादावपि धातुसाम्यादवान्तरकार्यमनन्तरभावि सम्भवतीति चेत्, तर्हि प्रकृतेऽपि तदस्तीत्याह—अवान्तरेति ॥ ईश्वरप्रसादः, अपूर्वं वाऽत्रावान्तरकार्यमित्यर्थः । अनन्तरफलसाधनेष्वपि फलसाधन-मात्रं लिङाद्यर्थः, न तु विशिष्टं प्रयोजकम्; गौरवात् । तथाच न मानान्तरविरोध इत्याह—अपि चेति ॥

इष्टसाधनपक्षे दूषणाभावमुपपाद्य नियोगपक्षे पुनर्दूषणमाह—सुखादिवदिति ॥ मुखप्रसादादिलिङ्गेन सुखसंवेदनानुमाने संवेदनविशेषणीभूतस्य सुखस्य यथाऽनुमेयत्वम्, तथा प्रवृत्तिलिङ्गेन प्रवर्तकप्रत्ययानुमाने प्रवर्तकस्यापि कार्यस्यानुमेयत्वमायात्येवेत्यर्थः ॥

---

1. तन्नेति मूलपाठः

ब्रह्मसिद्धिकारिका

अथ प्रमाणरूपेण स स्वशब्दप्रकाशितः ॥ १२१ ॥
आक्षेप्ता निरपेक्षश्च कथ्यतेऽन्यप्रमां प्रति ॥ १२१$\frac{1}{2}$ ॥

---

भावशुद्धिः

पूर्वं पुरुषवचोऽर्थेऽपि प्रमाणमित्युक्तम्, इदानीं वक्तृज्ञानमात्रे तत्प्रा-
P.110- 2 माण्यमूरीकृत्याप्याह—यदापीति ॥
P.110- 3 कथं तर्हि तत्रार्थसिद्धिः ? अत्राह—तत्रेति ॥ अत्रापि दर्शने
P 110- 4 नियोगस्यापूर्वत्वभङ्ग इत्याह—तदाऽपीति ॥ प्रवृत्त्यनुमितप्रवृत्तिहेतुप्रत्ययः न प्रवृत्तिहेतुम(न ? )न्तरेणेत्यनुमेयत्वं तस्येत्यर्थः । प्रयोज्यवृद्धसमवायिप्रत्ययः प्रवृत्त्यनुमितो बालस्य प्रवर्तकानुमानहेतुः श्रोतुः शब्दादुत्पन्नः, इति बालस्यापि शब्द एव प्रवर्तके मानमिति चोदयति—
P.110- 5 अथेति ॥
P.110- 6 दूषयति—तदसदिति ॥ आप्तवाक्य(क्ये यदे)वम्भूतवक्तृज्ञानं सरित्तीरफलसत्ताविषयमिन्द्रियादुत्पन्नं यत्, तद्बलात् श्रोतुरर्थसिद्धिः, नैतावता श्रोतुरक्षगम्या भवति नदीतीरफलसत्तेत्यर्थः । प्रकृतं निगम-
P.110- 7 यति—तस्मादिति ॥ ११६, ११७, ११८, ११९, १२०, १२०$\frac{1}{2}$ ॥

कारिकाविवरणम्

संसर्गमन्तरेण नियोगस्यानर्थक्या(त्) संसर्गाक्षेपकत्वे पदार्थान्तरस्यापि तदन्तरेणानर्थक्यात् तदाक्षेपकत्वमिति यदुक्तमधस्तात्, तत्परिहारं चोदयति—

अभिप्रायप्रकाशिका

पौरुषेयवाक्यस्य वक्तृज्ञानमर्थ इति पक्षेऽपि प्रवर्तकस्य शब्दगम्यता नोपपद्यत इत्याह—यदाऽपीति ॥ प्रवृत्तिलिङ्गहेतुभूतप्रत्ययस्य मध्यमवृद्धसमवायिनः शब्दजन्यत्वाद् बालकप्रत्ययस्यापि प्रवर्तकविषयस्य शब्दप्रमाणकत्वमिति शङ्कते—अथानुमानेति ॥ अनुमीयतेऽनेनेत्यनुमानम्=प्रवृत्तिः । दूषयति—तदसदिति ॥ तथा सत्युत्तमवृद्धज्ञानस्य घटादिविषयस्य प्रत्यक्षत्वाद् मध्यमवृद्धस्यापि तद्वाक्याद् जातं ज्ञानं तत्र प्रत्यक्षं प्रसज्येतेत्यर्थः॥ ११७, ११८, ११९, १२०, १२०$\frac{1}{2}$ ॥

ब्रह्मसिद्धिकारिका

तथाप्यसिद्धे प्रागुक्तौ दोषौ सिद्धेऽनुवादता ॥ १२२ ॥
प्रामाण्यमस्य यत्राऽस्तु श्रुतेस्तत्र वृथा त्वयम् ॥ १२२½ ॥

भावशुद्धिः

कारिकाविवरणम्

अथेति ॥ सः=नियोगः, प्रमाणरूपेण=लिङादि(ना,)- P.110-9
प्रकाशितः, अतः ; आक्षेप्ता संसर्गस्य=संबन्धग्रहणमन्त-
रेणाक्षेपकत्वात्, अन्यप्रमां प्रति निरपेक्षश्चेत्यर्थः ॥
१२१, १२१½ ॥

ब्रह्मसिद्धिविवरणम्

श्रुति-लिङ्ग-वाक्यादिष्वनन्तर्गतनियोगस्य कथं प्रमाणत्वमित्या-
शङ्क्य व्याकरोति—अथोच्यत इति ॥ विधिः=नियोग इति यावत् । P.110.11
किं तर्हि ब्रू(ब्रु)थेति, अत्राह—किन्त्विति ॥ विषय-नियोज्यसंबन्धमन्तरे- P.101-12
णानुपपद्यमानरूपेण लिङादिना प्रतिपाद्यते, नैवं पदार्थान्तराणि स्वपदैः
प्रकाश्यन्त इत्यर्थः । संसर्गमन्तरेणानुपपन्नो नियोग इति प्रतिपादकः
शब्दो नास्तीति, अत्राह—तथाचेति ॥ शब्दादवगतं रूपं कस्य कस्मि-
न्निति साकाङ्क्षत्वात् तमन्तरेणानुपपद्यमानतया प्रमाणत्वात्
संसर्गस्य मानान्तरानवगतस्यापेक्षकमित्यर्थः। नियोगस्य संसर्गप्रमाणत्वे
शब्दवद् मानान्तरं संसर्गोऽपेक्षते, तत्राह—प्रमाणान्तरेति ॥ हेतुमाह— P.102-13
न हीति ॥ संबन्धबुध्यनपेक्षतयाऽबोधकत्वाद् नियोगोऽन्यनिरपेक्षः
संसर्गे मानमित्यर्थः ॥ १२१, १२१½ ॥

अभिप्रायप्रकाशिका

कारिकाविवरणम्

एवं तावन्न नियोगाधीनः संसर्ग इत्युक्तम्, इदानीं
प्रमाणान्तरेण नियोगस्य संसर्गहेतुत्वमाशङ्कते—अथ प्रमा-
णेति ॥ यथा चक्षुरादयः प्रमाणत्वात् तत्तत्प्रतिपन्नसंबन्धसम्बन्धि
स्वप्रमेयं प्रबोधयन्ति, तथा नियोगोऽपीत्यर्थः । विधायक-
स्यार्थस्य सम्बन्धग्रहणापेक्षायां स्वार्थप्रतिपादकत्वे संसर्गस्यापि
प्रमाणगम्यत्वं स्यादिति, अत आह—निरपेक्षश्चेति ॥

भावशुद्धिः

कारिकाविवरणम्

नियोगो मानान्तरादसिद्धः, सिद्धो वेति विक-
P.110-15 ल्प्याऽऽद्यं दूषयति—तथापीति॥ लिङादिपदस्य तत्रागृहीत-
सङ्गतिकस्य बोधकस्य प्रसक्तौ पदधर्मव्यतिक्रमः, वाक्य-
धर्माश्रयणं चेत्यर्थः ॥ द्वितीयं प्रत्याह—सिद्ध इति ॥
नियोगस्य प्रामाण्यमङ्गीकृत्योक्त्वा, तदपि न युक्त-
P.110-16 मित्याह—प्रामाण्यमिति ॥ १२२, १२२$\frac{1}{2}$ ॥

ब्रह्मसिद्धिविवरणम्

नियोगानुपपत्तिरूपोपादानप्रमाणगम्यसंसर्गमङ्गीकृत्य वेदान्ता-
P.110-17 नामविधिपदत्वं दुर्वचमित्याशङ्क्याह—एवमपीति ॥ अप्रतिपन्ने संब-
न्धिनि नियोगे लिङादिपदस्य तत्राशक्यसङ्गतिग्रहत्वादित्यर्थः ॥
P.110-18 उक्तदोषभिया मानान्तरसिद्धत्वोपगमे दोषमाह—अथेति ॥ पदार्थान्तर-

अभिप्रायप्रकाशिका

कारिकाविवरणम्

विधायकार्थः प्रमाणान्तरसिद्धः, असिद्धो वेति विकल्प्योभयत्र दूषणमाह—तथाऽप्यसिद्ध इति ॥ १२१, १२१$\frac{1}{2}$, १२२ १२२$\frac{1}{2}$ ॥

ब्रह्मसिद्धिविवरणम्

प्रागुक्तौ दोषौ दर्शयति—एवमपीति ॥ उत्तरार्धं व्याचष्टे—अपि चेति ॥ प्रमाणस्यानुद्यत्वेऽपि कथं प्रमेयस्यानुद्यत्वमित्याशङ्क्य, घटप्रमाणमितौ तत्प्रमेयमितिवत् संसर्गप्रमाणमपि सविषयमेवानुद्यमित्याह—न च [1]प्रमेयेति ॥ १२२, १२२$\frac{1}{2}$ ॥

कारिकाविवरणम्

नियोगप्रमाणत्वमभ्युपगम्यैतदुक्तम्; तदपि नोपपद्यते; तत्प्रमेयानिरूपणादित्याह—क्व चेति ॥ किं यागादि प्रमेयम्, किं वा विषय-नियोज्यादिसंसर्गः, अथवा फलसाधनसामर्थ्यादीति विकल्प्य क्रमेण दूषयति—न यागादाविति ॥ उपसंहरति—पदार्थान्तरतुल्यत्वादिति ॥ उत्तरत्र स्थितं 'तस्मा-

1. न प्रमेयेति मूलपाठः ।

ब्रह्मसिद्धिकारिका

क्व च प्रमाणमेषोऽर्थे न यागादौ स्वशब्दके ॥ १२३ ॥
लौकिकेऽपूर्वसंसर्गः श्रोतुरस्त्यविधावपि ।
फलसाधनशक्तौ चेच्छब्दस्तत्र न दुष्यति ॥ १२४ ॥
पदार्थान्तरतुल्यत्वाद् विध्याकाङ्क्षानिबन्धनः ।
न संसर्गः पदार्थानां स्वशब्दैस्तु प्रकाशिताः ॥ १२५ ॥
संबन्धयोग्यरूपेण तस्मात् संसर्गभागिनः ।
विशिष्टार्थप्रयुक्ता हि समभिव्याहृतिर्जने ॥ १२६ ॥
अतो न विध्यभावेन संसर्गो न प्रकल्पते ॥ १२६½ ॥

भावशुद्धिः

वत् स्वप्रमेयसंसर्गेण सहैवानूद्येत ; तस्य तथैव सिद्धत्वात् । अतश्च संसर्गस्यापि नियोगवत् तद्वाचकपदेनानूद्यमानत्वाद् नापूर्वार्थाक्षेपकत्वं नियोगस्येत्यर्थः । 'तथापी'त्यपिशब्दसूचितामरुचिं स्फोरयति= P.110-18 अपिचेति ॥

नियोगानङ्गीकरणेनापूर्वसंसर्गसिद्धिरित्युक्तं समारयति—ननु- P.110-19 क्तमिति ॥ दूषयति—नैतदिति ॥ न खल्वस्ति नियमः—अयं प्रमेय- P.110-20 विषय एव शब्दोऽनुवादकः, न तु प्रमाणविषय इति; उभयत्रापि संगतिसंवेदनस्याङ्गत्वात् । यथादर्शनं च प्रमाणेऽनूद्यमाने प्रमेयमप्यनुवाद्यमित्यर्थः । तदुपपादयति—न प्रमेयेति ॥ न हि प्रमेयनिरूपणाधीन- P.110-22 निरूपणं तदन्तरेण शक्यं निरूपयितुमित्यर्थः । फलितमाह—अत इति ॥ तथाच न मानान्तरादपूर्वबोधनमित्यर्थः ॥ १२२, १२२½ ॥

अभिप्रायप्रकाशिका

कारिकाविवरणम्

दि'ति पदं 'पदार्थान्तरे'त्यस्य श्लोकस्यादावनुषञ्जनीयम् । किं तर्हि संसर्गप्रयोजकमिति ? पदार्था एवेत्याह—स्वशब्दैस्त्विति ॥ यद्यपि संनिधि-योग्यतावन्तः पदार्थाः ; तथाप्याकाङ्क्षाभावाद् न तन्निबन्धनः संसर्गः, किंतु नियोगनिबन्धनः;

भावशुद्धिः

कारिकाविवरणम्

'प्रामाण्यमस्य यत्रास्तु श्रुतेरि'त्येतत् प्रपञ्चयति—
P.111- 1 क चेति ॥ नियोगोऽयं कस्मिन्नर्थे प्रमाणम् ? यागादौ,
अपूर्वसंसर्गे वा, फलसाधनसामर्थ्ये वा ? नाद्य इत्याह—न
यागादाविति ॥ 'यजेते'त्यादिस्वशब्देनैव सिद्धत्वात्, नापि
P.111- 2 द्वितीय इत्याह—लौकिक इति ॥ 'पुत्रस्ते जातः' इत्या-
दा(व)पूर्वसंसर्गप्रतीतिरस्ति, यस्मादित्यर्थः। तृतीयं शङ्कते
P.111- 3 —फलेति ॥ दूषयति—शब्द इति ॥ तस्मात् संबन्ध-
ज्ञानापेक्षत्वेन नियोगस्यार्थान्तरसमानत्वाद् न तन्नि-
P.111- 4 बन्धन एव पदार्थसंसर्ग इत्याह—पदार्थान्तरेति॥ यस्माद् न
नियोगनिबन्धनः संसर्गः, तस्मादाकाङ्क्षादिमत्तया
P.111- 5 स्वपदैः प्रकाशिताः पदार्थाः संसृज्यन्त इत्याह—
स्वशब्दैस्त्विति ॥

संसर्गमन्तरेणानुपपत्त्यभावान्न पदार्थसंसर्गसिद्धिः,
P.111- 7 अत्राह—विशिष्टेति ॥ जने=वृद्धे, समभिव्याहृतिः=पदानां
सहोच्चारणा । विशिष्टार्थप्रयुक्ता=क्रिया-कारकभावेन
विशिष्टार्थज्ञानप्रयोजनेन प्रयुक्ता ; पदार्थसाध्यव्यवहारा-
भावादित्यर्थः । पदार्थसंसर्गायैव विधिराश्रयितव्य
P.111- 8 इत्येतन्निराकृतं निगमयति—अत इति ॥ १२३, १२४,
१२५, १२६, १२६½ ॥

ब्रह्मसिद्धिविवरणम्

अपि च 'यत्रास्य प्रामाण्यमि'त्यनेन पुनरुक्तत्वमाशङ्क्य व्याचष्टे—
P.111- 9 न चेति ॥ प्रमेयानिरुक्त्या तदेव प्रपञ्च्यत इत्यर्थः । याग-दान-होमा-
स्तत्प्रमेया इति, अत्राह—न तावदिति ॥ हेतुमाह—तेषामिति ॥ 'यजति'

अभिप्रायप्रकाशिका

कारिकाविवरणम्

तस्य साकाङ्क्षत्वादित्याशङ्क्यते—सम्बन्धेति ॥ तामप्या-
काङ्क्षां दर्शयति—विशिष्टार्थेति ॥ १२३, १२४, १२५,
१२६, १२६½ ॥

भावशुद्धिः

'ददाति' 'जुहोती'त्यादिशब्दविषयत्वादित्यर्थः। क्रिया-कारकसंसर्गो मानान्तरापूर्वो नियोगप्रमेय इति, अत्राह—नापीति॥ हेतुमाह— P.111-10
तथाहीति॥ यागादेः स्वर्गसाधनत्वं नियोगप्रमेयमिति शङ्कते—अथेति॥ कथमिति? तदुपपादयति—न किलेति॥ काऽनुपपत्तिरिति? P.111-13
तामाह—अनुपायत्वे हीति॥ यो यं कामयते, स तत्साधनमनुतिष्ठतीति न्यायादित्यर्थः। नियोगे त्वया प्रमाणत्वेनाङ्गीकृतलिङादिशब्दस्य धात्वर्थसमवेतश्रेयोहेतुत्वे प्रामाण्यमस्तु; लाघवादिति परि-
हरति—तदपीति॥ श्रेयस्साधनत्वस्य प्रमाणान्तरगम्यत्वात् सापेक्ष- P.111-14
त्वेनाप्रामाण्यं वेदस्येति चेत्, तत्राह—प्रमाणान्तरेति॥ समीपे हि P.111-15
वह्निरिन्द्रियविषय इत्यत्र मानान्तरापेक्षता प्रत्युक्तेत्यर्थः। धात्वर्थस्य श्रेयोहेतुत्वं चेत् प्रत्ययार्थः, तदा क्रियानिष्पत्त्यनन्तरमेव फलेन भवितव्यम्; क्रियाया अनन्तरफलत्वस्य प्रसिद्धेः, अतो नियोगो
लिङाद्यर्थ इति, अत्राह—अनन्तरफलेति॥ अथ नियोगो धात्वर्थस्य P.111-16
साधनत्वमात्रं बोधयति, नानन्तरफलत्वमिति न विरोधः। शब्दोऽपि
तथेति न विरोध इत्याह—आनन्तर्यस्येति॥ P.111-17

द्वयोरपि तुल्यपक्षत्वे कतरोऽत्र पक्ष उपादेय इति? अत्राह—
अथवेति॥ फलसाधनत्वं बोधयति चेत्, किमत्र दुष्टमिति? अत्राह— P.111-18
न हीति॥ कथमिति चेत्, तत्राह—तच्चेदमिति॥ P.111-19

"नियोगस्य प्रकृत्या साधनत्वबोधकत्वं स्वाभाविकम्, नियोज्यपुरुषवियोगसंबन्धाद्वा। नाद्यः; नियोगस्य प्रवर्तकत्वप्रसङ्गात्। यथा

अभिप्रायप्रकाशिका

ब्रह्मसिद्धिविवरणम्

संसर्गोऽपि न प्रमेयमित्याह—नापीति॥ फलसाधनसामर्थ्यं प्रमेयमिति शङ्कते—अथेति॥ कयाऽनुपपत्त्येति? अत आह—न किल कामिन इति॥ उक्तमेवार्थं स्पष्टयति—अनुपायत्वे हीति॥

इष्टसाधनस्य प्रमाणान्तरगम्यत्वात्, शब्दस्य तत्र सापेक्षत्वं प्रसज्यत इति, नेत्याह—प्रमाणान्तरेति॥ अनन्तरफलानुपलब्धिविरोधाशङ्कापरिहारौ च नियोग इव शब्देऽपि तुल्यावित्याह—अनन्तरेति॥

भावशुद्धिः

शब्दो नियोगं बोधयन्न प्रवर्तकः, एवं भावार्थसाधनत्वं बोधयन्नियोगो न प्रवर्तकः स्यात्। न द्वितीयः; अनुपपत्त्यभावात्, असाधने नियोगानुपपत्तिरिति चेत्, न; 'जीवन् यजेते'त्यसाधनेऽपि नैयमिकाग्निहोत्रनियोगदर्शनात्। अथ 'स्वर्गकामः' इति नियोज्यपुरुषविशेषसंबन्धात् साधनत्वबोधकत्वम्; नैतत् सारम्; जीवनादिपदसाध्यस्याप्यधिकारिविशेषणत्वात्। अथ स्वर्गः साध्यः, अतो यागस्य स्वर्गं प्रति साधनत्वं बोधयेदितिकर्तव्यतावत्, यथा स्वर्गं विना नियोगानुपपत्तिः, एवमितिकर्तव्यतां विनाऽप्यनुपपत्तिरस्त्येव। तथापि तां न बोधयति; तत्समर्पकशब्दव्यतिरेकेणैवं धात्वर्थसाधनत्वमपि न बोधयेदवि-
P.111-20 शेषादि"त्यादिकं तत्रोक्तमित्यर्थः। फलितं निगमयति—तस्मादिति ॥

नामपदवद् विधायकपदस्यापि संबन्धज्ञानापेक्षस्य स्वार्थबोधकत्वात्, तदर्थस्य पदार्थान्तरैः प्रमाणविषयत्वाविशेषाद् न तन्निबन्धनः पदार्थसंसर्ग इत्यर्थः। 'तस्मादि'त्येतत् 'समानत्वादि'त्यनेन सामानाधिकरण्येन संबध्यते; विशेषेण तन्निबन्धनत्वाभावात् ॥

अभिप्रायप्रकाशिका

शब्ददोषाभावं व्याख्यायेदानीं नियोगदोषसद्भावपरतया व्याचष्टे—अथवेति ॥ तच्चेदमिति ॥

विषय-नियोज्याभ्यां विना नियोगप्रतीति-निष्पत्त्योरसम्भवाद् नियोगस्य यद्यपि तदपेक्षा; तथापि धात्वर्थस्य फलसाधनसामर्थ्यमन्तरेणानुपपत्त्यभावान्न तद्गमकत्वम्; नित्य-नैमित्तिकयोः फलाभावेऽपि नियोगसिद्धेः ॥

अथ "स्वर्गकामो यजेते"ति कामपदात् स्वर्गकामिनो नियोगः स्वर्गानुपाये धात्वर्थे न सम्भवतीति फलसाधनसामर्थ्यसिद्धिः, तर्हि स्वर्गकामपदसमभिव्याहारान्यथानुपपत्त्या तत्सिद्धिः, न नियोगसामर्थ्यात् ॥

किञ्च(।?)विशेषित्वा स्वाधिकारिसमर्पकमिदम्, न स्वर्गपरम्। अथ कामिविषयतया साध्यत्वावगमात् स्वर्गादेः साध्यसिद्धिः, तर्हि वक्तव्यम्—कामिविषयस्य स्वरूपेण साध्यत्वमवगम्यते, किं वा तद्वाक्यनिर्दिष्टधात्वर्थेनैव साध्यत्वमिति। नाद्यः; "परस्त्रीकामः प्रायश्चित्तं कुर्यादि"त्यादौ कामिविषयस्य स्त्र्यादेस्तदभावात्। नापि द्वितीयः; 'अध्येतुकामो भैक्षं चरेदि'त्यादावदर्शनात्। तस्मान्नियोगस्य फलसाधनत्वे प्रमाणासिद्धेर्न प्रमाणात्मनाऽपि तत्सिद्धिरित्यर्थः ॥

भावशुद्धिः

भावे हेत्वन्तरमाह—सर्व एवेति ॥ संनिधिं कथयति P.111-22
—संनिकर्षेणेति ॥ पदार्थानामाकाङ्क्षा-सन्निधि-योग्यतावशेना- P.111-23
न्योन्यसंबन्धहेतुमाह—यत इति ॥ व्यापारः=बोधनम् । कथं तर्हि लोके शब्दानामर्थप्रतिपादनव्यापार इति? अत्राह—लोके चेति ॥ अन्वित एवार्थे लोके पदानां प्रयोगो दृश्यते, न तु स्वार्थमात्रे, तेन व्यापार(रा)-भावात् । अन्वितार्थप्रतीतिसाध्यत्वं तस्येत्यर्थः । पदैरन्वितार्थाभिधाने वाक्यवैयर्थ्यम् ; तदर्थस्य पदैरेव प्रतिपादितत्वादिति, अत्राह—तथा
चेति ॥ योग्य(ग्ये)तरान्वितरूपेण प्रतिपन्नाः पदार्थाः केन योग्येतरेणेति P.112- 2
प्रतियोगिविशेषाकाङ्क्षास्तदाकाङ्क्षापूरणाय संनिहितं पदान्तरम्, इति वाक्यस्यार्थवत्त्वमित्यर्थः । पदार्थानां साकाङ्क्षत्वे पूर्वोक्तमेव हेतुं स्मारयति - सर्वे हीति ॥ विधेरर्थान्तरैस्तुल्यत्वे प्रकृते किमायातम्?
तदाह—एवमिति ॥ नियोगस्यापि पदार्थत्वेन संसर्गनिबन्धनत्वात् P.112- 3
तदभावे वेदे संसर्गो न युज्यत इति, अत्राह—सर्वपदार्थेति ॥ प्रकृत- P.112- 4
मुपसंहरति—तदेवमिति ॥ P.112- 5

पदानां कार्यपरत्वनिराकरणं चिन्तान्तरव्यग्रचेतस्तया कदा-
चिन्नानुसन्धीयेत, इति तदनुसन्धापनाय शङ्कते—कथं नोपासनीय इति ॥ P.112- 6
कार्यान्विते स्वार्थे पदानां सङ्गतिसंवेदनमुपपादयति—प्रवर्तकेति ॥ तन्नि- P.112- 7
राकरणमुदाहरणान्तरेण स्मारयति—नैतदिति ॥ किं स्वरूपनिष्ठं वाक्यम्? P.112- 8

अभिप्रायप्रकाशिका

तर्हि किन्निबन्धनः संसर्ग इति? अत आह—सर्व एव त्विति ॥ न च मन्तव्यम्—पदार्थानां संसर्गहेतुत्वेऽभिहितान्वयः प्रसज्यते—इति ; पदार्थानामेव संसृष्टार्थाभिधायकत्वात्, पदानां संसर्गप्रतिपादकत्वात् प्रयोजक-(त्व)मात्रस्वीकारादिति द्रष्टव्यम् ॥

यद्यपि पदानां संसर्गयोग्यता, संनिधिश्चाप्यस्ति ; तथा'प्ययं पुत्रः राज्ञः पुरुषोऽपसार्यतामि'त्यत्र राजपदं यथा पुत्रपदेन निराकाङ्क्षम्, न पुरुषपदेन सम्बध्यते, तद्वदिहापि पदार्थान्तराणां निराकाङ्क्षत्वात्, नियोगस्यैव च साकाङ्क्षत्वात तस्यैव प्रयोजकत्वमिति । तन्निराचिकीर्षुराह—यतो लोका-दिति ॥ पदैः पदार्थानां स्वरूपेणैव प्रतिपादनं कस्माद् न भवेदिति? अत

भावशुद्धिः

P.112-9 कथं च तत्र संबन्धग्रहणमिति ? तदाह—संनिधापितेति ॥ तत्रापि कार्य-
P.112-11 संसृष्टगोचर एव वाक्यात् प्रत्यय इति, अत्राह—न चेति ॥ कुत इति ?
P.112-12 अत आह—सत्तामात्रेति ॥ प्रमाण-प्रयोजनयोरभावे गुरुतरकल्पना न
युक्तिमतीत्यर्थः । पदार्थमात्रपरतायामनर्थकतया न प्रयोगः, न चान-
धिगतार्थबोधः श्रोतुरुपपद्यते, इति तत्सिध्यर्थं कार्यपरतैवाऽऽस्थेयेति,
P.112-14 अत्राह—अर्थान्तरान्वये चेति ॥ कार्यनिष्ठतैव लोके पदानां दृष्टा, इति
यथादर्शनं सामर्थ्यकल्पना युक्ता, तत्राह—अन्यथेति ॥ प्रयोजका-
प्रयोजकत्वेऽनादृत्य यथादर्शने चेत् कल्पना, ततो लोके विवक्षापरत्व-
दर्शनाद् वेदे तदभावाद् वेदार्थो निष्प्रमाणक एव स्यादित्यर्थः ॥ १२३, १२४, १२५, १२६, १२६½ ॥

अभिप्रायप्रकाशिका

आह—सर्वं हीति ॥ पदार्थानां स्वरूपमात्रपर्यवसायित्वाभ्युपगमेऽपि विधायक-पदार्थस्यापि तत् तुल्यम्, इति न तन्निबन्धनः संसर्ग इत्याह—एवमिति ॥ अवान्तरप्रकरणमुपसंहरति—तदेवमिति ॥

प्रवर्तकवाक्ये सम्बन्धग्रहणाद् विधिनिबन्धनः संसर्ग इति शङ्कते—कथं नेति ॥ नियोगपरतयैव वैदिकपदानां वैदिकपदव्यवहारादेव व्युत्पत्तिरिति पक्षमङ्गीकृत्योक्तम् । यद्वा नियोगशब्देनात्र कार्यमात्रं विवक्ष्यत इति द्रष्टव्यम् । कथमेतदिति ? अत आह—प्रवर्तकेति ॥

परिहरति—नैतदिति ॥ सम्बन्धग्रहणमेव दर्शयति—संनिधापितेति । प्रवर्तकपदाश्रवणेऽपि तदध्याहरणीयम्; अन्यत्र तथा दर्शनादिति, अत आह—न चेति ॥ अनुमानादग्निसत्ताऽवगम इव स्वत एव प्रवृत्तिसिद्धे-रित्यर्थः ॥

प्रवर्तकवाक्ये सम्बन्धग्रहाङ्गीकारेऽपि योग्येतरान्वये सामर्थ्यं पदानाम-भ्युपेयम्; लाघवात्, उभयवादिसम्प्रतिपन्नत्वाच्च तस्येत्याह—अर्थान्तरेति ॥ सर्वत्राव्यभिचारात् प्रवर्तकस्य शब्दार्थत्व-प्रमाणान्तरगम्यत्वविवक्षयोरपि शब्दार्थ-त्वं प्रसज्येत; तथासति वेदे तदभावाद् वेदार्थासिद्धिः स्यादित्याह—अन्य-थेति ॥ १२३, १२४, १२५, १२६, १२६½ ॥

ब्रह्मसिद्धिकारिका

अथ कर्तव्यताज्ञानाद्विनाऽऽनर्थक्यमुच्यते ॥ १२७ ॥
न प्रवृत्ति-निवृत्तिभ्यामन्यद्वाक्यप्रयोजनम् ।
प्रतिपत्तिविधौ तुल्यं यदि सैव प्रयोजनम् ॥ १२८ ॥
समानमेतदर्थं च समर्पयति चेदयम् ।
प्रज्ञाक्रियोपासनाधिकारसिद्धिव्यपेक्षितम् ॥ १२९ ॥
हन्त तर्हि स्वरूपे तन्न वचः पर्यवस्यति ।
तुल्यमेतत्, समाप्तं च वाक्यं वाक्यान्तरानुगम् ॥१३०॥
नियोगानुप्रवेशोऽस्ति तावद्यदि वृथाऽन्यथा ।
तत्त्वावबोधविध्वंशस्तावदेवं समुद्धृतः ॥ १३१ ॥

---

भावशुद्धिः

कारिकाविवरणम्

वाक्यजन्यज्ञानस्यार्थवत्त्वाय विधिराश्रयितव्य इति चोदयति—अथेति ॥ चोदक एवैकग्रन्थेनाह—न P.112-16
प्रवृत्तीति ॥ एतद् निराकृतमपि पुनरुपपत्त्यन्तरेण निरा- P.112-17
करोति—प्रतिपत्तिविधाविति ॥ तत्र प्रवृत्त्यन्तराभावेऽपि P.112-18
प्रतिपत्तिरेव प्रयोजनमिति चोदयति—यदीति ॥ स्वरूप-
निष्ठेऽपि तुल्यमेतदित्याह—समानमिति ॥ चोदक आह P.112-19

अभिप्रायप्रकाशिका

कारिकाविवरणम्

कथमानर्थक्यमिति? अत आह—न प्रवृत्तीति ॥ आह सिद्धान्ती—प्रतिपत्तिविधाविति ॥ तत्रापि प्रतिपत्तिव्यतिरिक्तप्रवृत्ति-निवृत्त्योरसम्भवादित्यर्थः। आह पूर्वपक्षवादी —यदि सैवेति ॥ स्वरूपप्रतिपत्तिरेव प्रयोजनं यदि, तत्स्वरूपमात्रपरेऽपि वचसि समानमित्यर्थः ॥ शङ्कते—अर्थं चेति ॥ अधिकारविध्यपेक्षितं प्रतिपत्तव्यमर्थं च प्रतिपत्तिविधिः समर्पयति चेदिति योजना ॥ स्वरूपनिष्ठेऽपि वचसि विषयसमर्पकत्वं समानमित्याह सिद्धान्ती—हन्त तर्हि स्वरूप

भावशुद्धिः

––समर्पयतीति ॥ प्रतिपत्तिविधिः स्वविषयं प्रज्ञादिविष-
P.112. 21 यत्वेनेत्यर्थः । परिहरति––हन्तेति ॥ स्वरूपे तद्वाक्य-
प्रयोजनं समानम् । चोदयति––न वचः पर्यवस्यतीति ॥
P.113. 1 स्वरूपे प्रज्ञाक्रियादिविधिपरत्वात् परिहरति–तुल्यमिति ॥
प्रतिपत्तिविधावपि । अथ विधावसति स्वार्थपर्यवसितमेव
वाक्यं वाक्यान्तरैरेकवाक्यतामुपैति ; यथा समिदादि-
वाक्यं दर्श-पूर्णमासादिवाक्येनेति, अत्राह––एतदिति ॥
एतदपि समानम् । स्वरूपनिष्ठमपि वाक्यं तत्र समाप्तम् ।
P.113. 2 प्रज्ञाक्रियोपासनादिविधिवाक्यान्तरानुगः शङ्कते–नियो-
गानुप्रवेशो हीति ॥ नियोगाननुप्रवेशे स्वरूपमात्रं वृथे-
P.113. 3 त्यर्थः । निराकरोति––तत्त्वावबोधेति ॥ कामं भवतु
प्रज्ञाक्रियादिविधिशेषताऽस्येति भावः ॥ १२७, १२८,
१२९, १३०, १३१ ॥

अभिप्रायप्रकाशिका

कारिकाविवरणम्

इति ॥ शङ्कते पूर्ववादी–स्वरूपे तन्न वचः पर्यवस्यतीति ॥ स्वरूपपदं च मध्यस्थप्रदीपवदुभयत्र सम्बध्यते । नियोगानुप्रवेशिनः स्वरूपे पर्यवसानं स्यादित्यर्थः । परिहरति––तुल्यमेतदिति ॥ अधिकारनियोगानुप्रवेशात् स्वगतं नियोगनिष्ठत्वमपि तन्न भवेदित्यर्थः । स्वार्थनिष्ठानां प्रयाजादिवाक्यानामधिकारविधिसम्बन्धवत् स्वगतनियोगनिष्ठस्याप्यधिकारनियोगानुप्रवेशित्वमिति शङ्कते––समाप्तं चेति ॥ स्वरूपमात्रपर्यवसितमपि वाक्यं विधिवाक्यान्तरानुप्रवेशीति स्वीकारेऽपि तुल्यमिति परिहारपरतयाऽप्येतदेव योजनीयम् । 'समाप्तं चे'ति चकारात् पुनः शङ्कते––नियोगानुप्रवेशोऽस्तीति ॥ अन्यथा वृथेति ॥ नियोगानुप्रवेशोऽस्ति तावदिति यदि मतमिति योजना । परिहरति सिद्धान्ती––तत्त्वावबोधेति ॥ अधिकारविधिविशेषत्वेऽपि प्रतिपत्तिविधिर्निराकृतः ; तद्विधि

भावशुद्धिः

विध्यर्थस्य पदार्थान्तरतुल्यत्वस्थितौ कथमुत्तरचोद्योत्थानम्? इति तदुपपादनाय व्याकरोति—अथेति॥ कस्य धीहीनत्वात् प्रवृत्ति- P. 113-4
निवृत्तिहीनम्? अत एव तत्साध्यफलविकलमित्यर्थः। सुख-दुःखप्राप्ति-परिहारमात्रं फलम्, न प्रवृत्ति-निवृत्तिसाध्यत्वमपीति, अत्राह—प्रवृत्ति-निवृत्तिप्रयुक्तेति॥ असाध्यं तन्नास्तीत्यर्थः॥

परिहरति—तत्रोच्यत इति॥ 'सर्वमात्मा प्रतिपत्तव्यम्' इति P.113-6
विधेः प्रवृत्तिः फलम्, प्रवृत्तिरेव वा नाद्य इत्याह—तथाहीति॥ P.113-7
द्वितीयं शंकते—अथेति॥ परिहरति— स्वरूपेति॥ P.113-8

पुनश्चोदयति—अथेति॥ "मोक्षकामः प्रज्ञां कुर्वीते"त्यधिका- P.113-9
रि(र)विधिविषयसमर्पणेनार्थवानित्यर्थः। व्यतिरेकमुखेनैतदुपपादयति —नानवगतेति॥ अज्ञाते विषये ज्ञानाभ्यासस्याशक्यत्वादित्यर्थः। P.113-11
विधिरहितमपि तथा फलवत् स्यादिति परिहरति—स्वरूपेति॥ हेतुमाह—तस्येति॥ विधिनिष्ठत्वे समारोपेणापि तदुपपत्तेर्नैकान्ततः P.113-13
प्रज्ञादिविषयसमर्पण(म्,) स्वरूपनिष्ठत्वे तु तदप्रत्यूहमिति सुतरा-मित्युक्तम्॥

अभिप्रायप्रकाशिका

कारिकाविवरणम्

विनाऽपि शब्दात् प्रतिपत्त्युपपत्तेरित्यर्थः॥ १२७, १२८, १२९, १३०, १३१॥

ब्रह्मसिद्धिविवरणम्

'यदि सैवे'त्येतद् व्याचष्टे—अथ स्वरूपेति॥ प्रतिपत्तिविधेः प्रतिपत्तिरेव प्रयोजनं न भवति, किन्तु प्रवृत्तिरपि; तस्य विषयसमर्पणद्वारेण प्रवर्तकाधिकार-विध्यनुप्रवेशादिति विशेषमाशङ्कते—अथेति॥ किं तत्समर्पणेनेति? अत आह—नानवगतेति॥ स्वरूपनिष्ठस्यापि वाक्यस्याधिकारिविध्यनुप्रवेशेन प्रवृत्तिपर्यवसायिता तुल्येति परिहरति—स्वरूपनिष्ठमपीति॥ सुतरामिति॥ प्रतिपत्तिविधिप्रधानमपि वाक्यं स्वरूपं समर्पयति चेत्, स्वरूपमप्रधानमतिशयेन तत् समर्पयतीत्यर्थः॥

'स्वरूपे तदि'ति भागं व्याचष्टे—नन्वेवमिति॥ तुल्यमित्येतद् व्याचष्टे—स्वगतेति॥ समाप्तमित्येतद् व्याचष्टे—अथ मतमिति॥ १२७–१३१॥

ब्रह्मसिद्धिकारिका

ननूत्पत्तिविधिः कर्मरूपबोधे व्यवस्थितः ।
यथा, तत्त्वज्ञानविधिस्तथा बोधेऽवतिष्ठताम् ॥ १३२ ॥
अधिकारात् प्रवृत्तिश्च मता कर्माधिकारवत् ।
अज्ञातज्ञापनमतोऽथाप्रवृत्तप्रवर्तनम् ॥ १३३ ॥
विधिमाचक्षते धीरा इत्येतदपि तादृशम् ।
कर्मस्वरूपावगमस्तत्र नेष्टं विधेः फलम् ॥ १३४ ॥

---

भावशुद्धिः

विषयसमर्पणेन विधिशेषत्वे तत्त्वमादिवचसो वस्तुस्वरूपपरत्व-विरोध इति चोदयति—नन्विति ॥ "सर्वमात्मेति प्रतिपत्तव्यमि"त्यस्यापि
P.113-13 वाक्यस्य स्वगतनियोगनिष्ठत्वं न स्यादिति परिहरति—स्वगतेति ॥ अधिकारविधेर्विषयसमर्पणेन तच्छेषत्वादिति हेतुमाह—नियोगान्तरेति ॥
P.113-14 वाक्यैकवाक्यत्वान्नेदमवद्यमिति चोदयति—अथेति ॥ विधे-
P.113-15 र्विध्यन्तरशेषत्वे नास्ति प्रमाणमिति, अत्राह—सोऽयमिति ॥ कर्त-व्यस्येतिकर्तव्याकाङ्क्षायामपेक्षितविशेषसमर्पकं प्रकरणम्, अपेक्षितं चाभ्यासविधेर्विषयज्ञानम्, तत्समर्पयत्यवान्तरविधिः प्रकरणसामर्थ्यादित्यर्थः। कुत एतत्? अत्राह—अन्यथेति ॥ पदैकवाक्यभावलक्षण एव संबन्धः स्यादित्यर्थः। अवान्तरनियोगानङ्गीकारेऽप्येतत् समानं
P.113-16 तत्त्वमादेर्वचस इत्याह—एतदपीति ॥ १२५, १२६, १२७, १२८, १२९, १३०, १३१ ॥

अभिप्रायप्रकाशिका

एवंविधोऽपि सम्बन्धः प्रसिद्ध एवेत्याह—सोऽयमिति ॥ कर्तव्य इतिकर्तव्यताकाङ्क्षायाः समर्पणेन सम्बन्ध इत्यर्थः। स्वरूपे पर्यवसानं विना शब्दान्तरेण सम्बन्धे वाक्यलक्षण एव सम्बन्धः स्यादित्याह—अन्यथेति ॥ 'संहत्यार्थमभिदधति पदानि वाक्यमि'ति लक्षणादित्यर्थः। कथं नियोगपरत्वे स्वरूपपरत्वमिति? अत आह—नियोगानुप्रवेशेऽपीति ॥ स्वरूपे पर्यवसाय पश्चान्नियोगेन सम्बन्धादित्यर्थः ॥ १२७, १२८, १२९, १३०, १३१ ॥

ब्रह्मसिद्धिकारिका

किंतु कार्यव्यपेक्षस्य फलवाक्येन संगतिः ।
इहाधिकारसंबन्धो यस्य तन्न विधीयते ॥ १३५ ॥
तत्त्वं तत्त्वावबोधस्य नाधिकारप्रवेशिता ।
न हि व्रीह्यादिविषयं प्रत्यक्षमधिकारभाक् ॥ १३६ ॥

---

भावशुद्धिः

ब्रह्मसिद्धिविवरणम्

अभ्यासनियोगशेषत्वम्, साक्षात्करणनियोगशेषत्वं वा वेदान्तानां त्वयाऽपीष्टं स्यादिति चोदयति—नन्विति ॥ तदङ्गीकृत्य तावच्छाब्द- P.113-17
ज्ञाने विधिं निराकरोति—कर्मेति ? (काममि)ति ॥ १२७-१३१ ॥ P.113-20

कारिकाविवरणम्

अधिकारविधिस्वीकारे शाब्दबोधोऽपि विधिः सिध्यतीति चोदयति–नन्विति ॥ "यदाग्नेयोऽष्टाकपालः कर्तव्यः" इति विधिस्तत्स्वरूपज्ञापकः तद्बोधे स्थितो यथा, तथाऽऽ'त्मा ज्ञातव्यः' इति ज्ञानोत्पत्तिविधिस्तत्त्वबोधे व्यवतिष्ठतामित्यर्थः । विदिते ज्ञाने प्रवृत्तिरनुष्ठानलक्षणम्—"प्रज्ञां कुर्वीते"त्यधिकारविधित इति, P.113-22
अत्राह–अधिकारादिति ॥ "दर्श-पूर्णमासाभ्यां स्वर्गकामो यजेते"त्यधिकारविधितो यथाऽऽग्नेयादियागानुष्ठानमित्यर्थः । अत एवाज्ञातकर्मस्वरूपज्ञापक उत्पत्तिविधिः, अप्रवृत्तप्रवर्तकोऽधिकारविधिरिति विधिद्वयं कल्पितमित्याह–अज्ञातेति ॥ अधिकारविधिरुत्पत्तिविध्यविनाभूत P.114-1
इति भावः । तदेतत् स्वरूपनिष्ठत्वेऽपि वेदान्तानामव-

अभिप्रायप्रकाशिका

कारिकाविवरणम्

ननूत्पत्तीति ॥ कुतस्तर्हि प्रवृत्तिरिति ? अत आह–अधिकारादिति ॥ अप्रवृत्तप्रवर्तनमेव विधिर्न स्यादिति, अत आह—अज्ञातेति ॥ विषमो दृष्टान्त इति परिहरति—कर्मस्वरूपेति ॥ कार्यव्यपेक्षस्येति ॥ प्रवृत्तिव्यपेक्षस्य वा-

भावशुद्धिः

कारिकाविवरणम्

कल्पते, इति कृतं विधिनेति दत्तोत्तरमिति दूषयति—
P. 114 -2 इत्येतदपीति ॥

अधिकारविधिः संबन्धप्रयोजकमत्र नास्तीति वक्तुं
P.114 -3 तत्प्रयोजकमन्यत्र स्थितं दर्शयति—कर्मस्वरूपेति ॥
'आग्नेयोऽष्टाकपालः' इत्यादेः कर्मस्वरूपज्ञानमात्रं न फलम्, अनिष्टलक्षणत्वादित्यर्थः। किं तर्हीष्टं फलम्?
P.114 -4 तदाह—किन्त्विति ॥ कर्मण इष्टसाधनत्वमात्रावगममुखेनेष्टविशेषाकाङ्क्षायामधिकारवाक्येन विषयाकाङ्क्षिणा संबन्धमुखेन प्रवृत्तिहेतुत्वात् प्रवृत्तिफल एवोत्पत्तिविधिरित्यर्थः॥ अत्रोत्पत्तिविधिसिद्धस्याऽऽत्मनोऽधिकारविधि-
P.114 -5 संबन्धः, तज्ज्ञानस्य वा। नाद्य इत्याह— इहाधिकारेति ॥ सिद्धत्वात्। द्वितीयं दूषयति—तत्त्वावबोधस्येति ॥ प्रमा-
P.114 -7 णमात्रतन्त्रत्वात्। दृष्टान्तमाह—न हीति ॥ १३३, १३४, १३५, १३६ ॥

ब्रह्मसिद्धिविवरणम्

"आत्मा ज्ञातव्यः" इत्यत एव प्रवृत्तिरस्तु, किमधिकारविधि
P.114- 8 संबन्धेनेत्याशङ्क्य व्याकरोति—यदपीति ॥ अर्थः; साक्षादिति शेषः।
P.114 -9 उत्पत्तिविधिमुदाहरति—आग्नेय इति ॥ हेतुमाह—अधिकारविधिनिबन्धनत्वा-

अभिप्रायप्रकाशिका

कारिकाविवरणम्

ऽधिकारसम्बन्धः=फलम्, तेन साक्षात्, परंपरया वा सर्वत्र प्रवृत्तिरेव विधेः फलमित्यर्थः। तर्हि तत्त्वावबोधविधेरप्यधिकारसम्बन्धात् प्रवृत्तिपर्यवसायिता भवेदिति, अत आह—इहाधिकारेति ॥ आत्मन एवाधिकारविधिसम्बन्धाभावाद् मैवमित्यर्थः। कथं बोधस्याधिकारविधिसम्बन्धाभावः? अवगतस्यैवात्मनोऽधिकारसम्बन्धादिति, अत आह—न हीति ॥ १३२, १३३, १३४, १३५, १३६ ॥

भावशुद्धिः

दिति ॥ "यदाग्नेयोऽष्टाकपालो भवती"त्यपि भावयेदिति परिणतं विधिसामर्थ्यलब्धचेतनसमीहितमात्रसाधनं समीहितभेदमपेक्षते, तदेव-मुत्पत्तिसिद्धं कर्मभेदम्, तत्प्रज्ञापितफलभेदं च प्राप्याप्रवृत्तप्रवर्तने, अज्ञात-ज्ञापने च निर्वृतो यथेत्यर्थः, तद्वदत्राप्युत्पत्तिविधेः फलाकाङ्क्षयाऽधि-कारविधेर्विषयाकांक्षया मिथः संबन्ध इत्याह—तथेति ॥ उत्पत्त्यधि-कार-नियोगयोरवान्तरफलभेदक्रमाह—यतश्चेति ॥ P.114-11

दूषयति—एतदपीति ॥ मानान्तरानवगतकर्मस्वरूपावगमे फले P.114-12
संभवति फलान्तरकल्पनं गौरवादयुक्तमिति, अत्राह—तथाहीति ॥ P.114-14
आत्मज्ञानविधेरप्येतत् फलं स्यादिति, अत्राह—न चेति ॥ हेतुमाह— P.114-15
यत इति ॥ उत्पत्तिविधिप्रतिपन्नस्याऽऽत्मनोऽननुष्ठेयत्वेऽपि तज्ज्ञानस्य P.114-16
विधिविषयत्वमिति, अत्राह—[1]यस्त्विति ॥ व्रीह्यादिप्रत्यक्षमपि प्रयोग- P 114-17
विधिनाऽनुष्ठाप्यत इति, अत्राह—न हीति ॥ न खलु यत्र द्रव्यादि P.114-18
सिद्धमुद्दिश्यते, त(य)था "व्रीहिभिर्यजते, (व्रीहीन् प्रोक्षति) अनो ददाति, वासो ददाती"ति, तत्र ज्ञानं वा, तत्क्रिया वा विधिनाऽपेक्षिताऽप्या-क्षिप्यते ; अनन्यलभ्यस्य तद्विषयत्वात्, तयोश्चान्यलभ्यत्वादित्यर्थः ।
एतदेव विशदयति—प्रमितानामिति ॥ अनः=शकटम्, वासःप्रभृतीनां P.114-19
क्रियामाह—वानेति ॥ अधिकारविधेर्न गोचर इत्यर्थः ॥ १३३, १३४, १३५, १३६ ॥

अभिप्रायप्रकाशिका

ब्रह्मसिद्धिविवरणम्

उत्पत्तिविधिनैव फलसाधनतायाः सिद्धत्वात् किमधिकारविधिसम्बन्धे-नेति शङ्कायां फलविशेषसम्बन्धसिद्धय इत्याह—तथाहीति ॥

इहापि तथाऽस्त्विति, अत आह—न चेति ॥ दृष्टान्तमेवोपपादयति —न हीति ॥ प्रमितानामधिकारसम्बन्धेऽपि न प्रमितेरधिकारसम्बन्ध इत्यत्र दृष्टान्तमाह—निष्पन्नानामिवेति ॥ तदेव स्पष्टयति—वान-तक्षणादिर्हीति ॥ वानम्=पटनिष्पादिका क्रिया, तक्षणम्=शकटनिष्पादिका, तयोर्यथा विधेय-सम्बन्धेऽपि न विधिसम्बन्धः, तथाऽऽत्मावबोधः स्यादित्यर्थः ॥ १३३, १३४, १३५, १३६ ॥

---

1. यत्तु इति मूलपाठः

ब्रह्मसिद्धिकारिका

सोपायमन्यत् तर्हीदं शाब्दाज्ज्ञानं विधीयते ।
प्रलीनग्रहण-ग्राह्यविभागोद्ग्राहमद्वयम् ॥ १३७ ॥
न हि भिन्नार्थसंसर्गरूपवाक्यार्थधीपदम् ।
आत्मतत्त्वं निष्प्रपञ्चमित्येतदपि पेलवम् ॥ १३८ ॥

---

भावशुद्धिः

अर्थविशेषं दर्शयन्नुत्तरग्रन्थतात्पर्यमाह—इदानीमिति ॥ कुतः
P.115- 1 कर्मप्राप्ता द्वितीया प्रतिपत्तिरतिक्रान्तेति ? तत्राह—तत्त्वावबोधेति ॥
द्वितीयप्रतिपत्तिविधिरपि तत्त्वधीविषयभावेति, अत्राह—द्वितीयेति ॥
उत्पत्तिसंनिधानमतीत्य प्रतिपत्तिसंनिधिराश्रितः ; प्रमाणवर्तिनो मुख्यत्वात्, प्रमेयवर्तिनो जघन्यत्वादिति भावः ॥

कारिकाविवरणम्

यदि शाब्दं ज्ञानं न विधीयते, तर्हि ततोऽन्यदिदं ज्ञानं शम-दमाद्युपायसहितं विधीयतामित्याह—
P.115- 5 सोपायमिति ॥ शाब्दज्ञानादस्य विशेषमाह—प्रलीनेति ॥
प्रलीनो ग्रहण-ग्राह्ययोर्विभागस्योद्ग्राहः=आकारो यस्य तत्. ता(त्सता?)दृक् ; अत एवाद्वयम् । शाब्दज्ञानेन ब्रह्मणः सिद्धत्वात् किं तृतीयप्रतिपत्तिविधि-
P.115- 6 नेति ? अत्राह—न हीति ॥ भिन्नानामर्थानां संसर्गरूपो वाक्यार्थः, तद्धीपदनिष्प्रपञ्चत्वादात्मतत्त्वं न भवती-
P.115- 7 त्यर्थः । दूषयति—एतदपीति ॥ पेलवम्=असारम् ।

अभिप्रायप्रकाशिका

उत्तरग्रन्थसन्दर्भस्य तात्पर्यमाह—इदानीमिति ॥ द्वितीयप्रतिपत्तिविधिमुल्लङ्घ्य तृतीयप्रतिपत्तिनिराकरणे कारणमाह—तत्त्वावबोधेति ॥ सोऽपि तत्त्वावबोधविषय एवेत्याशङ्क्य, मैवम् ; तत्सन्तानविषयत्वादित्याह—द्वितीयेति ॥

कारिकाविवरणम्

तत्र पूर्वपक्षं दर्शयति—सोपायमिति ॥ तस्यालौकिकस्य प्रमाणान्तरादुत्पत्त्युपायानवगमात् तदुत्पादकोपायैः

ब्रह्मसिद्धिकारिका

अद्वयात्मप्रकाशोऽसावनवच्छेदविभ्रमः ।
स्वात्मस्थितिः सुप्रशान्ता फलं तन्न विधेः पदम् ॥ १३९ ॥
तत्साधनावबोधे हि विधातृव्यापृतिर्मता ।
अपेक्षितोपायतैव विधिरिष्टो मनीषिभिः ॥ १४० ॥
ततो ह्यध्यवसायादिर्नाकस्माज्ञाभिधानतः ॥ १४०.½ ॥

---

भावशुद्धिः
कारिकाविवरणम्

हेतुमाह—अद्वयेति ॥ अद्वयश्चासावात्मप्रकाश इति तथा। P.115- 8
अत एवानवच्छेदविभ्रमः=स्थानत्रयकृतावच्छेदभ्रान्ति-
रहितः । अत एव स्वात्मस्थितिः=स्वमहिमप्रतिष्ठपरमा-
नन्दरूपः, सुप्रशान्तः=परास्तसमस्ताशिवः, फलम्।
फलत्वाद् न विधेयमित्यर्थः। फलस्याविधेयत्वे किं विधे-
यमिति? तदाह—तत्साधनेति ॥ अज्ञातं फलसाधनं P.115 10
विधायको बोधयति । अत्र वृद्धसंवादमाह—अपेक्षितेति ॥ P.115-11
विधीयत इति विधिर्विध्यर्थः। नन्वध्यवसाय, आकूतम्'
इत्यादिकं विधिं सङ्गिरन्ते वृद्धा इति, अत्राह—ततो हीति ॥ P.115-12
तस्मादपेक्षितोपायत्वादध्यवसायादिर्भवति; नाकस्मात्=

अभिप्रायप्रकाशिका
कारिकाविवरणम्

शमादिभिः सह तद् विधीयत इत्यर्थः । तस्य रूपमाह—प्रली-
नेति ॥ ग्रहण-ग्राह्यविभागोद्ग्राहः प्रलीनो यस्मिन् ज्ञाने,
तत् तथोक्तम् , शब्दादेव तथा भूतं ज्ञानमस्त्विति, नेत्याह—
न हीति ॥ तृतीयज्ञानस्य स्वरूपत्वादविधेयत्वं दर्शयितुं प्रथमं
तावदात्मस्वरूपतां तस्य दर्शयति—अद्वयात्मेति ॥ अत
एवावच्छेदविभ्रमरहित इत्याह—अनवच्छेदेति ॥

अत्र च पूर्वं पूर्वमुत्तरोत्तरस्य हेतुत्वेन सम्बध्यते;
शरीराद्यवच्छेदनिबन्धनत्वाद् भेदभ्रमस्य, तदभाव आत्मस्वरूपा-
वस्थानमुपपद्यत इत्यभिप्रायः। कुत्र तर्हि विधिरिति? अत्राह—

भावशुद्धिः

कारिकाविवरणम्

न निर्हेतुः । शब्द एव तस्य कारणमिति, अत्राह—नाभिधानत इति ॥ न शब्दात्=शब्दस्य ज्ञापकत्वेनोत्पादकत्वाभावादित्यर्थः ॥ १३७, १३८, १३९, १४०, १४०½ ॥

ब्रह्मसिद्धिविवरणम्

तत्त्वबुद्धेर्मानफलस्य न विधेयत्वमिति साधितत्वादुत्तरग्रन्थो-
P.115-13 ऽसङ्गत इत्याशङ्क्य व्याचष्टे—न ब्रूम इति ॥ कस्तर्हि विधेयः? तमाह—
किन्त्विति ॥ ज्ञान-ज्ञेयभेदाकाररहित इत्यर्थः । कुतोऽयं विधीयते—
P.115-14 तद्विधबोधस्य सुलभत्वादिति? अत्राह—अतश्चेति ॥ द्वितीयस्य
तद्विधस्य बोधस्य शब्दादिजनितस्याभावात् । एवं साक्षादेव बोधान्तराद्वैलक्षण्यमुक्त्वा तत्कारणप्रदर्शनद्वारेणाप्याह—प्रमात्रिति ॥ ज्ञानानन्तरम्=प्रमातृ-प्रमेय-विभागपुरस्सरमित्यर्थः । ततो हेतोरन्यः शाब्दात् बोधात् तादृशो बोधो निस्साधनो दुस्साध इति व्यर्थस्तद्विधिः,
P.115-15 अत्राह—तस्य चेति ॥ अहिंसाऽस्तेयादिरादिपदार्थः ॥ कुतोऽस्य शाब्द-
ज्ञानवैलक्षण्यम्? तदपि खल्वद्वैतगोचरमेव, तथाच कृतमनेनेति?
P.115-16 अत्राह—यत इति ॥ भवत्यात्मा कथंचिच्छब्दगोचरः, न तु तत्त्व-

अभिप्रायप्रकाशिका

कारिकाविवरणम्

तत्साधनेति ॥ इतोऽपि तत्साधने विधिरित्याह—अपेक्षितोपायेति । ननु—अध्यवसायादिरेव विधिः—इति, मैवम्, इष्टसाधनतामन्तरेणाध्यवसायादेरसम्भवादित्याह—ततो हीति॥ न ते निर्निमित्ता इत्याह—नाकस्मादिति । अस्तु तर्हि तदभिधानं लिङादिनोपनेतुमिति, तत्राह—नाभिधानत इति ॥ शब्दस्य प्रतिभासकतया तदुत्पादकत्वाभावादित्यर्थः ॥ १३७, १३८, १३९, १४०, १४०½ ॥

ब्रह्मसिद्धिविवरणम्

किं तर्हि विधीयत इति? अत आह—किंत्विति । द्वैतविरोधित्वादद्वयमुक्तम् । इदानीं तदभावः, तदन्यत्वं वा न शब्दार्थ इत्याह—द्विती-

भावशुद्धिः

मित्यर्थः। कुत इति? अत्राह—वाक्यलक्षणो हीति॥ वाक्यस्यैव P.115-17
गोचरो ब्रह्मेति, अत्राह—तस्य चेति॥ तदनुगमेन पदार्थानुगमेन संसर्गप्रतीतेरित्यर्थः। पूर्वपक्षं निगमयति—तज्ज्ञानस्येति॥ विविधानां पदार्थसंसर्गमात्राणां संभेदस्य संसर्गस्यावभासो यत्रेति विग्रहः। 'मात्रे'-त्यखण्डार्थनिरासः। तस्मात् ब्रह्मसिद्धये तस्य विधानमित्यर्थः॥

दूषयति—एतदपीति॥ सर्वप्रकारभेदभ्रमाभावादद्वयः, अत एव P.115-19
तस्य ब्रह्मात्मना स्वरूपेणावस्थानं स्वरूपमेवेत्यर्थः। घटानुभवः, पटानुभवः, जीवः, ब्रह्मेति भेदावभासविरोधाद् नाद्वयानुभवरूपमिति, अत्राह—अवच्छेदकलुषतयेति॥ भेदभ्रमगोचरतयाऽन्य इवाभासः, तेन पर- P.115-20
मार्थतोऽ(न)न्य इत्यर्थः। अत्र प्रमाणमाह—सत्यमिति॥ P.115-21

तृतीयबोधस्य स्वरूपत्वे मानमुक्त्वा तस्य फलत्वोपपादनाय
निरस्तानर्थत्वे मानमाह—आत्मतत्त्वं चेति॥ "अपहतपाप्मा विशोको P.116- 1
विजिघत्सः" इति श्रुतेरित्यर्थः। निरतिशयानन्दरूपत्वाभावे न
पुमर्थत्वं सामान्यफलत्वेन, इति तद्रूपत्वे मानमाह—प्रकाशमा- P.116- 2

अभिप्रायप्रकाशिका

य तद्विरोधेति। यथाऽस्मिन् ग्रामेऽयमद्वय इति तद्विधस्यान्यस्याभावादुच्यते, तद्वदित्यर्थः। तत इति। प्रमातृ-प्रमेययोरन्यत इत्यर्थः॥

'सोपायमि'ति श्लोकभागं व्याचष्टे—तस्य चेति। शब्दादेव तदस्त्विति अत आह—यत इति। उक्तमुपपादयितुं शब्दस्वरूपमेवाह—वाक्येति। अस्तु, किमेतावतेति? अत आह—तस्य चेति। कुत इति? अत आह—तदनुगमेनेति। शब्दजन्यज्ञानस्य द्वैतसम्भिन्नार्थत्वान्नैकरसात्मतत्त्वविषयसम्भव इत्याह—तज्ज्ञानस्येति। 'विविधार्थमात्रे'ति मात्रशब्देन लक्षणयाऽखण्डपरत्वं व्यावर्तयति॥

तत्त्वावबोधस्यात्मस्वरूपत्वाद् न विधेयत्वमित्याह—सोऽवच्छेदेति॥ तस्येति॥ आत्मतत्त्वस्येति यावत्। भवत्वेवंविधमेवात्मस्वरूपम्, तत्त्वावबोधस्य तु किमायातमिति? अत आह—न त्विति॥ तस्यैवात्मस्वरूपेणाद्वैतत्वेन च प्रतिपादनादिति हेतुमाह—सत्यमिति॥ आत्मस्वरूपतया विली-

भावशुद्धिः

P.116- 4 नेति ॥ फलितमाह—तथाचेति ॥ फलमिति संबन्धः । तत्स्वरूपस्थितिः= स्वरूपतया स्थितो बोध इति यावत् । 'तथाचे'त्येतत् प्रकटयति—
P.116- 5 विश्वाशिवेति॥ न चात्र दुःख-तद्धेतुरूपसंभेदोऽप्यस्तीत्याह—सुष्ठु प्रशान्तेति॥ ज्ञातात्मरूपस्य फलत्वे स्मृतिमुदाहरति—उक्तं चेति ॥ किमे-
P.116- 6 तावता प्रकृते सिद्धमिति ? अत्राह—न चेति ॥ विना शास्त्रोपदेशं रागत एव प्रवृत्तेरित्यर्थः । पुरुषार्थेऽप्यनवगतोपायें न प्रवर्तते, इत्यतो न
P.116- 7 युक्तं स्वयं प्रवृत्तेरित्येतदिति, अत्राह—न चेति ॥ हेतुमाह—यत इति ॥ इच्छा प्रवृत्तेः पूर्वरूपम् , इच्छा-प्रयत्नयोः कार्य-कारणभावात्, इच्छायाश्च विधायकप्रयत्नाभावे सति प्रवृत्त्याक्षेपात् 'कर्तव्यं मयैतदि'त्येवमाकाराच्च प्रयत्नात् फले प्रवृत्तिः, नान्यथा । न चेयमिच्छैव ; निसर्गसुन्दरे निषिद्धे सत्यामपीच्छायां कर्तव्यमित्यनुत्पादादित्याशयः । तथाच शास्त्रकाराः प्रवर्तयितुं मनस इच्छामुपदिशन्ति, व्यपदिशन्ति च तयोः परस्परावि-
P.116- 8 नाभावमित्याह—तथाचेति ॥ 'यो ही'त्यादिभाष्यमिच्छाद्वारक - प्रवृत्त्यभावे धर्मजिज्ञासेति न ब्रूयात्, धर्मज्ञानं कर्तव्यमिति ब्रूयात्,

अभिप्रायप्रकाशिका

नत्वादपि बोधो न विधेय इत्याह—आत्मतत्त्वं चेति ॥ एतेनानर्थनिवृत्तिरूपतया फलत्वं प्रशान्तपदेनाभिहितमित्यर्थः ॥

इदानीमानन्दतया फलत्वं 'सुप्रशान्ते'त्यत्र सुशब्देनोक्तं दर्शयति—प्रकाशमानेति ॥ भवत्वेवंरूपं ब्रह्म, जीवस्य किमायातमिति शङ्कायां तस्यापि तद्रूपेणावस्थानादेवंरूपत्वमुपपन्नमित्याह—तथाचेति ॥

तथापि विधिः कस्मान्न भवेदिति ? अत्राह—न चेति ॥ अवगतफलस्याप्युपायापरिज्ञाने पुंसः प्रवृत्त्यदर्शनाद्विधिरित्यपि नाशङ्कनीयम् ; इच्छालक्षणत्वात फलविषयायाः प्रवृत्तेः, तस्याश्चोपायपरिज्ञानात् प्रागपि सिद्धेरित्याह—न च पुरुषार्थेऽपीति ॥ इतश्चोपायज्ञानात् प्रागपि इच्छालक्षणा फले प्रवृत्तिरस्तीत्याह—तथाचेति ॥ फलविषयेच्छां सिद्धवत्कृत्य तद्द्वारेण तदुपाये प्रवृत्त्युपदेशो दृश्यते ; धर्मज्ञानफले पुरुषस्येच्छां सिद्धवत्कृत्य तदुपाये विचारे प्रवृत्त्युपदेशादित्यर्थः । फलेच्छायाः पूर्वरूपत्वमन्यैरपि दर्शितमित्याह—तथा यो हीति ॥

भावशुद्धिः

तस्मात् साधनज्ञानात् प्रागपि फले तदिच्छाद्वारिका प्रवृत्तिरस्तीत्युक्तम्। एतदेव साधयन्नाह—अपि चेति ॥ अज्ञातोपाये फले न प्रवर्तते यदि, P.116-10 तदुपायज्ञापनाय तत्र फले प्रवर्त्येत इत्यर्थः। एवं फलमपि विधेयं प्रसक्तम्, न प्रसक्तमित्याह—फलमुद्दिश्येति॥ काम्यत्वात्, ज्ञातत्वाच्च P.116-11 तस्य। तावता च तत्रापि फले प्रवृत्तिसिद्धेर्न विधायकस्य व्यापारोऽप्रवृत्तप्रवर्तनात्माऽऽश्रयितव्यः। अत्र जैमिनिसंवादमाह—[1]तथाचोक्तमिति॥ P.116-12 भावनाया विधेयत्वादनंशायाश्च तस्यास्तथात्वानुपपत्तेरंशसहितभावनाविधौ चागृह्यमाणविशेषतया करणेतिकर्तव्यतांशवत् फलांशोऽपि विधेय इति प्राप्तेऽप्रवृत्तप्रवर्तनात्मकत्वाद्विधेः, फलांशे च निसर्गसुन्दरतया स्वभावादपि कर्मणि निरूढवेगवता स्रोतसोह्यमानश्चेतनः प्रवर्तमानोऽप्युपायापरिज्ञानसेतुनाऽवरुद्धस्तत्परिज्ञाने सेतुभेदादप्रतिहतगतिनैव रागस्रोतसा प्रवर्तते, इत्यगृह्यमाणविशेषत्वासिद्धेर्न फलांशेऽपि विधि(धे)र्व्यापार इत्युक्तम्। तस्य=फलस्य लब्धुमिच्छाऽर्थलक्षणा=फलवस्तुनिबन्धना, न विधिनिबन्धनेति सूत्रार्थः। उपसंहरति—तस्मादिति ॥ P.116-13

उपायेऽपि विधिव्यापारमुक्तमाक्षिपति—नन्विति ॥ फलमीहमानस्तदुपायमपीहत एव, किन्तु तद्विशेषापरिज्ञानावरुद्धो न प्रवृत्तः; सामान्यमात्रस्य प्रवृत्तिगोचरत्वाभावात्, तद्विशेषपरिज्ञाने त्वप्रत्यूह-

अभिप्रायप्रकाशिका

अवगतस्य फलस्योपायाज्ञानात् प्रवृत्तावप्युपायज्ञानादुभयत्र प्रवृत्तिसिद्धेर्न पृथक् फले विधिरपेक्षणीय इत्याह—अपिचेति ॥ उक्तेऽर्थे सूत्रवाक्यं प्रमाणयति—तदुक्तमिति ॥ लिप्सा=लब्धुमिच्छा फलस्वभावनिबन्धना, न विधिनिबन्धनेत्यर्थः। फलसाधनत्वादेव फल इव तदुपायेऽपि प्रवृत्तिसम्भवाद् न विधायकव्यापार इति यावत्। फल-तत्साधनयोर्विधिव्यापाराभावे विधेर्निर्विषयत्वं प्राप्तमिति मन्वानः शङ्कते—क्व तर्हीति ॥ इतिकर्तव्यतायां विधिरिति प्राभाकरः परिहरति—इत्थम्भाव इति ॥ फलोपाय इव यागादौ तदितिकर्तव्यतायामपि रागत एव प्रवृत्त्युपपत्तेर्न विधेर्व्यापार इति सिद्धान्त्याह—

1. तदुक्तमिति मूलपाठः

भावशुद्धिः

मिच्छयैव प्रवर्तत इत्यर्थः। एवं वदता त्वया क्वचिद्विधेर्व्यापार इष्यते, न
वा। यदीष्यते, तर्हि ब्रूहीत्याह—क्व तर्हीति॥ आह—प्राभाकरः—इत्थ-
P.116-14 म्भाव इति। इतिकर्तव्यत्व इति यावत्। दूषयति—नैतदिति॥
यथा फलमसाधनं न संभवतीति तदिच्छुर्विधेः प्राक् तत्साधनमिच्छति,
एवं तदित्थंभावमपि प्रागेव विधेरिच्छतीत्यर्थः। हेतुमाह—यतो नानु-
P.116-15 [1]ग्रहमिति॥ अनुग्रहम्=इतिकर्तव्यम्। यद्यपीतिकर्तव्यसामान्ये फल-
रागात् प्रवृत्तः; तथापि तद्विशेषे वैधी प्रवृत्तिरिति शङ्कते—
P.116-16 अथेति॥ तत् साधनेऽपि समानमित्याह—साधनेति॥

विधायकपदस्य नियोगमर्थमङ्गीकृत्य तस्य साधन एव व्या-
पारः, न फल इत्युक्तम्। इदानीमिष्टसाधनमेव विधायकार्थ इत्याह—अपि
P.116-17 चेति॥ तस्यैव तल्लक्षणत्वेऽपि कथं विधित्वम्? यतः प्रवृत्तिहेतोरेव
तत्त्वम्, अत्राह—प्रवृत्तीति॥ प्रवृत्तिहेतुमात्रम्, तथापि विधिः स्यात्,
नेष्टसाधनम्; मानाभावादित्याशङ्क्य परिशेषात् तत्सिद्धिरित्याह—
P.116-18 इष्टताया इति॥ दुःख-तत्साधनोपेक्षणीयेष्वप्रवृत्तेरित्यर्थः। फलमेव तर्हि
P.106 20 मुख्यं प्रवृत्तिकारणम्, न विधिरिति, अत्राह—इष्टतायाश्चेति॥ प्रमाणान्त-
रम्=मानसम्। स्वयं प्रवृत्तिं विशदयति—जानात्येवेति॥ प्रसक्तप्रति-

अभिप्रायप्रकाशिका

नैतदिति॥ साधनाभाव इवेतिकर्तव्यताभावेऽपि फलासिद्धेस्तत्रापि रागः प्रविशतीति हेतुमाह—यत इति॥ इतिकर्तव्यसामान्ये रागतः प्रवृत्तावपि तद्विशेषे विधितः प्रवृत्तिरित्याशङ्कते—अथेति॥ साधनेऽपि समानमेतदिति परिहरति—साधनेति॥ फलवत्यर्थलक्षणा प्रवृत्तिरिति यदुक्तम्; तद् भग्नमित्यर्थः॥

लिङादेर्विधिबोधकस्य कथमिष्टसाधनबोधकतेति? अत आह—अपि-चेति॥ तस्या एव विधित्वमुपपादयितुं विधिलक्षणं तावदाह—तस्या-प्रवृत्तेति॥ प्रवर्तनाशब्दार्थं दर्शयन्निष्टसाधनेऽपि तत्सद्भावमाह—प्रवृत्ति-हेतोश्चेति॥ तर्हि फलमेव प्रवर्तनाधर्मकमस्त्वित्याह—इष्टतायाश्चेति॥ फले स्वतः प्रवृत्तावभियुक्तवाक्यमाह—जानात्येवेति॥ तथापि नेष्टसाधनताया

1. नानुग्राहकमिति मूलपाठः

भावशुद्धिः

षेधेऽन्यत्राप्रसङ्गाच्छिष्यमाणं दर्शयति—इष्टसाधनतायां त्विति ॥ फलि- P.116-21
तमाह—अत इति ॥ यतोऽनन्यलभ्यत्वमित्यर्थः। यजमानसमारो-
पिताकारी(र्यादि)र्भवत्यत्रग्रहविशोषितशालेयानां कृषीवलानामभिमतो-
पायः, न चेयं प्रवर्तिकेति, अत्राह—अनुतिष्ठतश्चेति ॥ कर्तव्यतैकार्थ- P.116-22
समवायिनी समीहितोपायता विधिरित्युक्तं भवतीत्याह—तेनेति ॥ P.117-1
उपसंहरति—अत इति ॥ P.117-2

"ततो ह्यध्यवसायादिरि"ति कारिकावयवमवतारयितुं चोदयति—
नन्विति ॥ अध्यवसायः=प्रयत्नः, आकूतम्=इच्छा। आद्या प्रवृत्तिरिच्छा- P.117-3
नन्तरभाविनी कायचेष्टा। 'पचती'त्यादौ गम्यमानव्यापारं व्यावर्तयति—
कालत्रयेति ॥ मानान्तरावसितो 'यजेते'त्यादौ प्रतीयमानः क्रिया-कर्तृ-
संबन्धो विधिरित्येवं विधिकल्पमाचक्षत इत्यर्थः। परिहरति—
नैतदिति ॥ हेतुमाह—यत इति ॥ अध्यवसायादीनां शब्दश्रवणा- P.117-4
नन्तरभाविनामुत्पत्तिकारणं निरूप्यमाणमिष्टोपायत्वमेव। अतस्तदेव
शब्दार्थ इत्यर्थः। नाकस्मादिति व्याचष्टे—न चेति ॥ P.117-5

लिङादीनां व्यापारः=अभिधानमध्यवसायादीनां हेतुरिति
शङ्कते—स्यादेतदिति ॥ निराकरोति—तच्चेति ॥ हेतुमाह—अभिधाना- P.117-6
द्धीति ॥ लिङादिव्यापारात् प्रतीतिरेतेषां स्यात्। घटादिशब्दाभि-

अभिप्रायप्रकाशिका

विधित्वम्; मानान्तरगम्यत्वादित्याशङ्क्य, स्वरूपेण मानान्तरगम्यत्वेऽपि न यागादिसंसृष्टायास्तथात्वमित्याह—इष्टसाधनतायामिति ॥ यजमानानुष्ठितं कारीर्यादि कृषीवलानामपि हितसाधनम्, स्वतः सिद्धश्चन्द्रोदयश्च; तथापि न तेषां प्रवर्तकमिति, अत आह—अनुतिष्ठतश्चेति ॥ कृतियोग्यमिष्टसाधनं प्रवर्तकम्, न स्वभावसिद्धम्, नापि प्रयत्नान्तरसिद्धमित्यर्थः। अतः=प्रवर्तकत्वात्, विधित्वमपि तस्य युक्तमित्याह—तेनेति ॥ अतः स एव लिङाद्यर्थ इति प्रकृतमुपसंहरति—अतोऽनुष्ठानमिति ॥

"ततो ह्यध्यवसायादिरि"ति श्लोकभागव्यावर्त्याशङ्कामाह—नन्विति ॥ अत्राध्यवसायः=प्रयत्नः, आकूतम्=इच्छा, साधनगोचराविच्छा-प्रयत्नौ। आद्या प्रवृत्तिरित्युच्यते। 'नाकस्मादि'त्यस्यार्थमाह—न चेति ॥

भावशुद्धिः

धानाद् घटादीनां न तूत्पत्तिरित्यर्थः। लिङाद्यभिधानात् प्रतीयताम्, तथाच तत्प्रतीतिरेव प्रवर्तनास्वभावा ने (?)तान् विधास्यतीति, अत्राह—

P.117- 7 न हीति॥ प्रतीतिमात्रेण=इष्टसाधनत्वव्यतिरेकेण पदार्था न प्रवृत्तिहेतवः; घटादीनां घटादिशब्दाभिधेयानां प्रतीतानां प्रवृत्तिहेतुत्वादर्शनादित्यर्थः॥

तदनेन 'नाभिधानतः' इति व्याख्यातम्। अस्यैव कल्पान्तर-

P.117- 8 माह—अथवेति॥ शब्दादध्यवसायादिः न भवति; शब्दस्य ज्ञापकत्वात्, अकारकत्वात्। यद्यध्यवसायादयः प्रवृत्तिहेतवः शब्दात् भवन्ति, तर्ह्यगृहीतसङ्गतिकोऽपि शब्दश्रवणानन्तरं प्रवर्तेत। कारकस्य शब्दस्य प्रामाण्यविरोध इति विधिविवेक एवोक्तमित्यर्थः॥

P.117- 9 'ततो ह्यध्यवसायादिरि'त्यस्य कल्पान्तरमाह—अथवा [1]योऽपीति॥ अत्र चाध्यवसायः=कर्तव्यं मयेदमिति प्रत्ययः, आदिपदेन नियुक्तोऽस्मीति प्रत्ययो गृह्यते, तौ च भिन्नावननुविधेयनियोगे सत्यपि नियुक्तोऽस्मीति प्रत्यये कर्तव्यज्ञानानुत्पादादित्यर्थः। आदिपदेन विधिशब्दपर्यायो वाचकान्तरं यस्य, स तथेति विग्रहः। तदुत्तरत्वेन

P.117-11 पदमवतारयति—तं प्रतीति॥

अभिप्रायप्रकाशिका

'नाभिधानतः' इति व्याचष्टे—स्यादेतदित्यादिना॥ तथापि किमिति? अत आह—न हीति॥ व्याख्यानान्तरमाह—अथवेति॥ शब्दोऽर्थबोधनिरपेक्षः पवनादिवन्न प्रवर्तक इत्यर्थः। न केवलं ज्ञापकत्वादेव प्रवर्तकत्वं शब्दस्य, अव्युत्पन्नप्रवृत्तिप्रसङ्गादपि न प्रवर्तक(त्व)मित्याह—अव्युत्पन्नेति॥

"प्रमाणत्वादनियमात् प्रवृत्तेः संविदाश्रयात्।
समभिव्याहृतेः शब्दो न विधिः कार्यकल्पनात्॥"

इति विधिविवेके दर्शितमित्यर्थः।

'ततोऽह्यध्यवसायादिरि'त्यस्य व्याख्यानान्तरमाह—अथवेति॥ तदेवोपपादयति—नियुक्तोऽस्मीति॥

1. य इति मूलपाठः

भावशुद्धिः

इष्टोपायत्वस्य तद्धेतुत्वमन्वय-व्यतिरेकाभ्यां स्थापयति—तथा हीति ॥ क्लेशरूपस्य कर्मणः कर्तव्यत्वप्रतीतौ हितहेतुत्वं प्रयोजकमिष्ट- P.171-12
मेवेत्याह—ते चेति ॥ P.117-14

अपेक्षितोपायत्वस्य विषयभावे तद्धेतुत्वमनुभवेन साधयति—[1]तथा हीति ॥ सर्वप्रवृत्तिहेतुर्नियोग इति, अत्राह—न चेति ॥ असुखरूपस्य P.117-15
सुखहेतुत्वाभावे प्रवर्तकत्वासंभवादिति भावः ॥

'नाकस्मादि'ति व्याचष्टे—न खल्विति ॥ इष्टोपायः कर्तव्यता-बुद्धिहेतुत्वेन [2](लोके दृष्टसामर्थ्यः प्रमाणं विना हेतुः कर्तव्यता-बुद्धेर्वेद इति न युक्तं वक्तुमित्यर्थः। तदेव विशदयति—न हीति ॥ इष्टो-पायं परित्यज्य कर्तव्यताबुद्धिहेतुत्वेना) लौकिकनियोगकल्पनमयुक्त-मित्यर्थः। 'नाभिधानतः' इति हेत्वन्तरेण योजयति—कुतश्चेति ॥ P.117-16
तस्मादिष्टोपाय एव वेदे कर्तव्यताधीविषय इत्यर्थः ॥

'ततो ही'त्यादेरर्थान्तरमाह—अथवेति ॥ अध्यवसायः=चिकीर्षा, P.117-18
प्रारम्भः=तत्पूर्वकः प्रयत्नः, अनुष्ठानम्, तत्पूर्वका(व)यवे(वचे)ष्टा, तस्य समापनमित्यर्थः। तत्र प्रमाणमाह—तत्संभव [3]इति ॥ अन्वयमुक्त्वा, व्यतिरेकमाह—यस्य कस्यचिदिति ॥ P.117-20

अभिप्रायप्रकाशिका

तदेव प्रपञ्चयति—तथाहीति ॥ तथाहि विनियुक्तोऽस्मीति बुद्धि-र्नियोगादिति, नेत्याह—तथा नियुक्तोऽस्मीति ॥ उक्तेऽर्थे 'नाकस्मादि'ति पदं हेतुत्वेनावतारयति—न खल्विति ॥ लोके यद्यपि हितसाधनं शब्दार्थः; तथापि वेदे नियोग एव शब्दार्थ इति, अत आह—न हि तमिति ॥ 'नाभिधानतः' इत्येतद्धेत्वन्तरपरतया योजयति—कुतश्चेति ॥ प्रकारान्तरेण व्याचष्टे—अथवेति॥ अध्यवसायः=चिकीर्षा। आरम्भम्, प्रयत्नम्, अनुष्ठानम्, कार्यां चेष्टां च श्लोकस्थादिशब्दार्थमाह—प्रारम्भेति ॥ नियोगादेव तदस्त्विति, अत आह—तत्सद्भाव एवेति ॥ तदेव कुत इति? अत आह—यस्य कस्यचिदिति ॥ अनाप्तनियोगे व्यभिचारादित्यर्थः। 'नाक-

---

1. तथेति मूलपाठः
2. कुण्डलितो भागः A. पुस्तके नास्ति।
3. तत्सद्भाव इति मूले पाठः

भावशुद्धिः

ननु यागादि कर्म कर्तव्यमिति प्रत्ययसामर्थ्यात् प्रवर्तत इति
P.118- 1 शङ्कते—स्यादेतदिति ॥ व्यतिरेके दण्डमाह—अन्यथेति ॥ तस्मान्नेष्ट-
P.118- 2 साधनत्वं लिङाद्यर्थ इत्यर्थः । दूषयति—तच्च नेति ॥ कुतस्तर्हीति ? अत्राह—स हीति ॥ स्वार्थोऽवाप्यते येन, स स्वार्थावाप्तिः; तन्निमित्तः =इष्टोपायताकृत इत्यर्थः ॥

P.118- 3 शङ्कते—स्यादेतदिति ॥ अपेक्षितसाधनता हि कर्तव्यताप्रमाणम्, तदपेक्षं च लौकिकं वचनं तस्यां प्रवर्तते, वैदिकं तु तदनपेक्षं स्वयमेव कर्तव्यताया अभिधानात् प्रमाणम्, इति कृतमपेक्षितोपायत्वेने-त्यर्थः ॥

P.118- 4 दूषयति—तत्रोच्यत इति ॥ कुत इति ? अत्राह—नियोगो हीति ॥ तत्र लिङाद्यर्थ इति शेषः । किमतः ? तत्राह—स हीति ॥ नियोक्ता पुरुषः, तद्धर्म इत्यर्थः ॥ विधायकः शब्दो नियोक्ता, तद्धर्मः प्रेरणा
P.118- 5 नियोग इति मतान्तरमाह—स्वतन्त्रो वेति ॥ कर्तव्यता तु याग-दानादि-विषयधर्मः, तत् कथं शब्दात् प्रतीयत इत्याह—कर्तव्यता त्विति ॥

कर्तव्यप्रत्ययोदयाद्विषयधर्मो नियोगशब्दार्थ इति शङ्कते—अथेति ॥ नामान्तरेण हि तद्धेतुत्वमुक्तं स्यादिति परिहरति—प्राप्तमिति ॥ अनिष्टहेतोरकर्तव्यत्वादित्यर्थः ॥

अभिप्रायप्रकाशिका

स्यादि'ति पदव्यावर्त्यशङ्कामाह—स्यादेतदिति ॥ विपक्षे दोषमाह—अन्यथेति ॥ कर्तव्यबुद्ध्या प्रवृत्त्यभावे कर्तव्यं न कृतं स्यात्; यद्बुद्ध्या प्रवर्तते, तदेव कृतं स्यादित्यर्थः । अस्तु तर्हि नियोगो हेतुरिति, नेत्याह—स हीति ॥

'नाभिधानतः' इत्यस्य व्यवर्त्याशङ्कामाह—स्यादेतदिति ॥ तत्र हेतु-माह—नियोगो हीति ॥ नियोगस्यैव कार्यत्वात् तद्वाचक एव शब्दः कर्तव्यताबुद्धिं जनयेदिति, अत आह—स हीति ॥ नियोक्ता पुरुषः, शब्दो वा, तद्धर्म इत्यर्थः । प्राभाकारपक्षमाह—स्वतन्त्रो वेति ॥ शङ्कते—अथेति ॥ प्राप्तमपेक्षितोपायत्वमिति । इष्टसाधनताया अपि तादृशत्वात्

भावशुद्धिः

नियोगादेव कर्तव्यताऽऽक्षिप्यते, नेष्टसाधनत्वात्, अन्यथेति-कर्तव्ये नियोगायोगादित्याह—अथेति ॥ दूषयति—एवमपीति ॥ तर्हि P.118- 7
नियोगान्यथानुपपत्त्यैव कर्तव्यताऽवगम्यतामिति, नेत्याह—नापीति ॥ P.118- 8

न हि यद् येन विना भवति, तत् तदाक्षिपतीति चोदयति—अथेति ॥ वैदिकाद् वचनादिति शेषः। 'यजेते'ति यागकर्तव्यता गम्यते, न नियोगकर्तव्यतेति, अत्राह—निष्पत्तिश्चेति ॥ तदेव हि कार्यत्वेनाव- P. 118-9
गम्यमानमात्मनि प्रेरयन्नियोज्यं तद्व्यपदेशं लभते। तच्च भावार्थसिध्यधीननिष्पत्ति, इति तदनुष्ठानं विधत्ते, यथाह—"यत्तु तत्सिध्यर्थमुपादीयते, तद् विधेयमिति तन्त्रेण व्यवहारः' इति। दूषयति—तदसदिति ॥ P.118-10
न तावद्विषयधर्मो नियोगः ; तस्यापेक्षितोपायतातिरिक्तस्यादृष्टपूर्वतया पदार्थत्वाभावेन वाक्यार्थत्वानुपपत्तेः। तस्मादाज्ञादय एव लोकसिद्धा नियोक्तृधर्मा वक्तव्याः। न च ते लिङादिभ्यः कार्यतया गम्यन्ते लोके, किन्तु तद्विषया इत्यर्थः। विषयकार्यतावगममेव लौकिकानां व्यतिरेकमुखेन दर्शयति—तथाहीति ॥ पुनरनारम्भे हेतुमाह—विषय- P. 118-11
स्येति ॥ गोदोहनस्य कार्यताप्रतीतेः, तस्य च नियुक्तदेवदत्तगमनात् प्रागेवान्येन निष्पादितत्वादित्यर्थः। नियुक्तदेवदत्तसंबन्धिनैव तन्नियो-

अभिप्रायप्रकाशिका

तत्परित्यागेनान्यस्य कल्पनायोगादित्यर्थः। अस्तु तर्हि कर्तव्यताबुद्धिर्नियोगादिति शङ्कते—अथ नियोगादिति ॥ तर्हि कर्तव्यताबुद्धेः शाब्दान्यत्वं न भवेदित्याह—एवमपीति ॥ नियोगान्यथानुपपत्त्या लिङादिशब्दाः कर्तव्यताबुद्धिमुत्पादयन्तीत्येतदपि न घटत इत्याह—नापीति ॥

नियोगस्य कृतिसाध्यत्वावगमाद् विषयानुष्ठानव्यतिरेकेण च तस्य साक्षात् साध्यत्वानुपपत्तेः, अर्थाद्विषयस्य कर्तव्यताऽवसीयत इति शङ्कते—अथेति ॥ विषयस्यैव लोके कर्तव्यतावगमान्न नियोगाधीना विषये कर्तव्यताबुद्धिरित्याह सिद्धान्ती—तदसदिति ॥

तस्मिन्नियोगस्यापि निष्पादितत्वात् पुनर्दोहानारम्भ इति? अत आह—न चान्येनेति ॥ पुनर्दोहारम्भः स्यादिति ॥ आज्यावेक्षण-वेदिशुद्ध्यादौ दर्शनादित्यर्थः ॥

भावशुद्धिः

गस्य निष्पादितत्वात् पुनरनारम्भः ; न विषयस्य निष्पादितत्वादिति,
P.118-12 अत्राह—न चेति ॥ हेतुमाह—तस्येति ॥ यदि नियोगकर्तव्यता
गम्यते, तदनुपपत्त्या विषयकर्तव्यता, तदा पुनरपि दोहारम्भो न भवे-
P.116-13 दित्याह—तत्रेति ॥ यथा स्वभावशुद्धेऽपि भूभागे परिलेपनमाचार्यनियो-
गात् क्रियते, एवं निष्पादितमपि दोहनं नियोगाद् निष्पादनीयमित्या-
द्यन्यत्रोक्तमित्याह—विस्तरेणेति ॥ कृतियोग्येष्टसाधनतावगमात् कर्त-
व्यमिति चिकीर्षा जायते, न तु तदतिरिक्तकार्यगोचरज्ञानादित्यर्थः।
तृतीयबोधः, विधेयः, वैदिकसाधनत्वात् ; अग्निष्टोमवदिति चोदयति—
P.118-15 स्यादेतदिति ॥ न चासिद्धो हेतुरित्याह—विद्येति ॥ श्रुतिमुदाहरति—
P.118-16 विद्ययेति ॥ विद्यया=विज्ञानेन, तत्=ब्रह्म, आरोहन्ति=गच्छन्ति, यत्र
कामाः परागताः=यस्मिन् ब्रह्मणि पराचीनाः कामविषयाः परावृत्ता न
जायन्त इत्यर्थः। तम्=अपहतपाप्मादिलक्षणमात्मानम्, अनुविद्य=
शास्त्राचार्योपदेशतोऽन्विष्य, विजानाति=स्वसंवेद्यतामापादयति;तस्यैव
सर्वलोककामावाप्तिः=सर्वात्मना फलं भवतीत्यर्थः। य आत्मानं
विशोकादिरूपं स्वात्मस्थानम्, यश्च सत्यान् कामान् साक्षात्कृतवान्, सः=
त्यक्तदेहः, यदि पितृलोककामः=पितरो जनयितारः, त एव सुखहेतुत्वेन
भोज्यत्वाल्लोका उच्यन्ते, तेषु कामो यस्य, तैः पितृभिः संदिन्धित्सा
यस्य भवति, तस्य संकल्पमात्रादेव पितरः समुत्तिष्ठन्ति, स्वात्मसंबन्धि-
तामापादयन्तीत्यर्थः ॥ अथ 'यदि मातृलोककामो भवती'त्यादिरादि-
पदार्थः ॥

अभिप्रायप्रकाशिका

अस्तु तर्हि मोक्षस्येष्टस्य साधनत्वाय ज्ञाने विधिरिति शङ्कायां तदुत्तरत्वेन श्लोकमवतारयितुं शङ्कते—स्यादेतदिति ॥

कृतकत्वादनित्यत्वमपि न प्रसज्यत इत्याह—न चेति ॥ पक्षधर्मतादिवदबाधितविषयताया अप्यनुमानाङ्गत्वात् शब्दबाधिते विषये नानुमानमुदेतीत्यर्थः। ज्वालैकत्वप्रत्यक्षबाधेन ज्वालाभेदानुमानवत् शब्दबाधेनान्तवत्त्वानुमा किं न स्यादिति ? अत आह—न हीति ॥ अनन्यथासिद्धं हि प्रमाणमनुमानबाधकम्, ज्वालैकत्वविषयं पुनः प्रत्यक्षं सदृशपरापरज्वालोत्पत्त्या सूक्ष्म-

ब्रह्मसिद्धिकारिका

न च मोक्षः फलं तस्य साध्यो मोक्षो न चापरः ॥ १४१ ॥
अविद्यास्तमयो मोक्षः सा संसार उदाहृता ।
विद्यैव चाद्वया शान्ता तदस्तमय उच्यते ॥ १४२ ॥

---

भावशुद्धिः

साध्यत्वे मोक्षस्यानित्यत्वं घटवदनुमेयम्, अत्राह—न चेति ॥ P.118 19
हेतुमाह—शब्देति ॥ अबाधितविषयत्वमपि पक्षधर्मत्वादिवदनुमानो-
दयसाधनम्; आगमबाधितविषयत्वेऽनुमानं नोदेतुमर्हतीत्यर्थः ॥
"हिरण्यदा अमृतत्वं भजन्ते" इति श्रुतममृतत्वं कर्मफलस्य कृतकत्वा-
नुमानेन बाध्यते, तद्वदत्रापीत्याशङ्क्याह—न ह्येष इति ॥ दृश्यस्य P.118 20
तर्कगोचरत्वम्; सामान्यतो व्याप्तिग्रहणविषयत्वात् । अ(न)न्यथासिद्ध-
लिङ्गस्यानुग्राह्यागमसहितस्यान्यथासिद्धागमबाधकत्वमित्यर्थः । मोक्षस्तु
शब्दैकगम्यः, इति शब्देनैवास्य तत्त्वं व्यवस्थापनीयमित्याह—शब्द- P.118-21
गम्यस्येति ॥ अस्तु वा साध्यत्वादनित्यत्वम्; तथापि कारणानन्त्यात्
कार्यानन्त्यमुपपन्नमित्याह—अनन्तेति ॥ क्षणिकाविद्या कथमनन्तेति ? P.119- 1
अत्राह—क्षणिकत्वेऽपीति ॥ १३७, १३८, १३९, १४०, १४०½ ॥

वृत्तिव्यक्तचैतन्यमविद्यानिवर्तकमङ्गीकृत्य तत्त्वज्ञानस्य मुक्ति-
रूपस्य मुक्तिसाधनत्वमसिद्धमिति तत्त्वविदः परिहरन्तीत्याह—अत्राहुरिति॥ P.119- 2

कारिकाविवरणम्

तस्य=तृतीयबोधस्य, न मोक्षः फलम्; नित्य
सिद्धात्मरूपत्वाद् ब्रह्मभावस्य । नित्यसिद्धत्वेऽपि

अभिप्रायप्रकाशिका

क्षणभङ्गिज्वालाभेदनिरीक्षणाक्षमतया सादृश्यविषयतयाऽप्युपपद्यमानमन्यथा-
सिद्धम्, इह तु मोक्षस्य शब्दैकगोचरत्वात् तेनास्य नित्यत्वेनैव प्रतीतेरनित्य-
त्वानुमानं धर्मिग्राहकप्रमाणविरुद्धमिति भावः । इदानीं तदवष्टम्भेनापि मोक्षस्य
नित्यत्वं साधयति—अनन्तेति ॥ लोकेऽन्तवत्साधनसाध्यस्यैवान्तवत्त्वदर्शनाद्
विद्यायाश्च ब्रह्मस्वरूपत्वेन, तद्गुणत्वेन वाऽनन्तत्वात् तत्साध्यस्याप्यनन्तत्व-
मित्यर्थः । ज्ञानस्यानन्तत्वमसम्प्रतिपन्नमिति, अत आह—क्षणिकत्वेऽपीति ॥
१३७, १३८, १३९, १४०, १४०½ ॥

भावशुद्धिः

कारिकाविवरणम्

P.119- 3 विद्यासाध्यो मोक्षस्तत्फलमिति, अत्राह—साध्य इति ॥
साध्यश्च मोक्षस्तृतीयबोधस्य । साध्यश्च मोक्षस्तृतीय-
बोधादपरो व्यतिरिक्तो न भवति; तदुपपादनाय
P.119- 4 तत्स्वरूपमाह—अविद्यास्तमय इति ॥ बन्धध्वंसो मोक्षः,
नाविद्याध्वंस इति, अत्राह—संसार इति ॥ मुक्तेर्बन्ध-
विश्लेषात्मकत्वात् । तथापि तत्साधनविधिरस्तीति,
P.119- 5 अत्राह—विद्यैवेति ॥ १४१, १४२ ॥

ब्रह्मसिद्धिविवरणम्

स्वरूपावस्थानं मोक्षमसाध्यमादर्शयितुमाचार्यदेशीयाभिमतान्
P.119- 6 मोक्षविकल्पान्निरसितुमनाः प्रश्नपूर्वकं तानुपन्यस्यति—कः पुनरिति ॥
आगामिबन्धानुदयो वा, ब्रह्मप्राप्तिर्वा, बन्धहेतुविच्छेदो वेत्यर्थः ।
आद्यमनुवदति—यदीति ॥ अत्र मानमाह—अशरीरं वावेति ॥ वाव-
P.119- 7 शब्दोऽवधारणार्थः । दूषयति—स इति ॥ प्रागभावस्यानादित्वा-
दित्यर्थः ॥

P.119- 8 द्वितीयमनुवदति—अथेति ॥ दूषणोक्तिविभागविज्ञप्तये विक-
ल्पयति—सा चैत्रेति ॥ संयोगलक्षणेत्यर्थः । प्रमाणमाह—मार्गेति ॥

अभिप्रायप्रकाशिका

कारिकाविवरणम्

ज्ञानरूपस्यापि मोक्षस्य न तत्साध्यत्वमित्याह—न चापर इति ॥ तत्र हेतुमाह—अविद्येति ॥ संसारनिवृत्तिर्मुक्तिः, न त्वविद्यानिवृत्तिर्मुक्तिरिति, अत आह—संसार इति ॥ तथापि कथं ज्ञानादनन्यत्वमिति ? अत्राह—विद्यैवेति ॥ १४१, १४२ ॥

ब्रह्मसिद्धिविवरणम्

अविद्यानिवृत्तिरेव मुक्तिरिति स्वपक्षं साधयितुं परमतान्युपन्यस्य दूषयति—कः पुनरित्यादिना ॥ तत्र प्रमाणमाह—अशरीरमिति ॥ दूषयति—स प्रागभाव इति ॥

भावशुद्धिः

श्रुतिमुदाहरति—शतं चेति ॥ हृदयस्य नाड्यः=हृदयसंबन्धिन्यः शतमेका च एकोत्तरशतम्, तासां मध्य एषा=ब्रह्मनाडी मूर्धानमभिलक्ष्य निस्सृता=निर्गता, तया ब्रह्म विद्वानूर्ध्वमायन्=ब्रह्म गच्छन्नमृतत्वमेतीति श्रुतेरित्यर्थः ॥ P.119-9

श्रुत्यन्तरमाह—स यावदिति ॥ मनो यावत् क्षिप्येत्=यावता कालेन मनसो गतिः, तावत्=तावता कालेन=मनोवेगेनेत्यर्थः। किमर्थमादित्यं गच्छतीति, उच्यते—एतदादित्यमण्डलं ब्रह्मलोकप्राप्तिद्वारमित्यर्थः ॥ P.119-12

श्रुत्यन्तरमाह—यथा वेति ॥ नानाकुसुमरसबिन्दवो मधुकरैरेकत्रैव समाहिताः समानजातीयाः परस्परावयवसंभेदवन्तो मध्ववयविनमेकमारचयन्त एकतामापद्यन्ते, तथा जीव-ब्रह्मणोरपि चैतन्येन समानजातीययोर्विभक्तयोरभ्यास-वैराग्याभ्यामविभागः परस्परमित्यर्थः ॥ P.119-13

अत्रापि मानमाह—यथा लोक इति ॥ "यथा सौम्य मधुकृतो निस्तिष्ठन्ति नानात्ययानां वृक्षाणां रसान् समुपहारमेकतां सरसं गमयन्ती"ति । "इमाः सौम्य नद्यः पुरस्तात्=प्राच्यः स्यन्दन्ते, पश्चात्=प्रतीच्यस्ताः समुद्रात् समुद्रमेवापियन्ति समुद्र एव भवती"ति च श्रुतिमर्थत उदाजहार ॥ P.119-15

[1](कार्यजीवस्य कारणब्रह्मापत्तिरिति कल्पान्तरमाह—कार्यस्येति ॥ अत्रापि मानमाह—तथा विद्वानिति ॥ "यथा नद्यः स्यन्दमानाः समुद्रेऽस्तं यन्ति नामरूपे विहाये"ति पूर्वार्धम् ।) ब्रह्मरूपपरिणामस्तद्रूपाप- P.119-16

अभिप्रायप्रकाशिका

ब्रह्मप्राप्तिं पञ्चधा विकल्पयति—सा चैत्रेति ॥ तत्र तत्र प्रमाणं दिदर्शयिषुः संयोगपक्षे तावत् प्रमाणमाह—मार्गेति ॥ मार्गश्रुतिमेव दर्शयति—शतं चैकेति ॥ "एतद्वै खलु लोकद्वारं विदुषां प्रधानमि"त्यत्र 'प्रपतत्यनेने'ति प्रपतनं सूर्यमण्डलं ब्रह्मप्राप्तौ द्वारत्वेन, मार्गत्वेन च निर्दिष्टमित्यर्थः ॥

'परमं साम्यमि'त्यनेन कार्यस्य=जीवस्य, कारणे=ब्रह्मण्येकत्वापत्तिर्विवक्ष्यते ; कार्यस्वरूपेणावस्थानदशायां साम्येऽपि परमसाम्याभावादित्यर्थः ॥

1. कुण्डलितो भागः A. पुस्तके नास्ति

भावशुद्धिः

P.119-17 त्तिरिति कल्पान्तरमाह तद्रूपेति ॥ यथौषधप्रयोगाद् मनुष्यस्य
P.119-18 व्याघ्रादिरूपपरिणाम इत्यर्थः । प्रमाणमाह—स यो हेति ॥

P.119-19 कल्पान्तरमाह—स्फटिकस्येति ॥ यथा स्फटिकस्योपाध्युपरागाद् रक्तत्वादिभावेन प्रतिभासमानस्य तदपनयात् स्वच्छरूपाविर्भावः, तथाऽऽत्मनो ब्रह्मरूपस्याविद्ययाऽनेकानर्थकलुषितस्याविद्याऽपनये स्वरूपाविर्भावो ब्रह्मप्राप्तिरित्यर्थः ॥

P.120- 3 आद्यमपवदति—तत्रेति ॥ अप्राप्तो हि ग्रामं चैत्रः प्राप्नुयात्, ब्रह्मणस्तु सर्वगतत्वेन जीवाः प्राप्ता एव, न्तदि (इ)ति किं प्रापणीयमित्यर्थः । किंचान्यमन्यः प्राप्नोति, ब्रह्म न तु जीवादन्यमि(दि)-
P.120- 4 त्याह—अनन्यत्वाच्चेति ॥ कुतोऽनन्यत्वम्? तत्राह—तद्विज्ञानेनेति ॥ 'एष त आत्माऽन्तर्याम्यमृतः' इत्यादौ प्रत्यगात्मवाचकशब्देन ब्रह्माभि-
P.120- 5 धानाच्चेत्याह—प्रत्यगात्मेति ॥ जीवानां ब्रह्मणो भेदाभावादेव न संभेदलक्षणमोक्षः । अन्यत् खल्वन्येन संभिद्यते, न तेनैव तत्, अतो
P. 120- 7 न द्वितीयोऽपीत्याह—अत एवेति ॥ किञ्च प्रागसंयुक्तानां [1](नदीनाम्, तदवयवानां च समुद्रेण तदवयवैश्च संबन्धः श्रुत्यादिषु दृष्टः,यो न दृष्टः । न च जीव-ब्रह्मणोः सन्त्यवयवाः, अवयवानामपि क्रियेत्याह—
P.120- 7 निरवयवत्वाच्चेति ॥ निष्कलम्=निरवयवमित्यर्थः ॥

P.120- 8 तृतीयं प्रत्याह—नापीति ॥) कार्यस्य कारणाभिन्नस्य सदा तदात्मत्वादित्यर्थः । कार्यस्य कारणात् भेदान्न स्वतस्तदात्मत्व-

अभिप्रायप्रकाशिका

तद्रूपपरिणामेति॥ नदी-समुद्रादौ पूर्वस्थितावविद्या(वयवा)विभागापत्तौ तदवयवतापत्तिर्नद्यादीनाम्, योगव्याघ्रादौ मनुष्यशरीरस्यापूर्वव्याघ्रावयवव्याकारेण परिणाम इति विशेषो द्रष्टव्यः ॥

सर्वगतत्वात् संयोगपक्षोऽनुपपन्न इत्याह—तत्र न तावदिति ॥ तदन्तरस्य सर्वस्येति ॥ ब्रह्मास्य सर्वस्य जगतोऽन्तर्वर्तत इत्युक्तत्वात सर्वगतत्वमुक्तमित्यर्थः । इतश्च संयोगो न युज्यत इत्याह—अनन्यत्वाच्चेति ॥

1. कुण्डलितो भागः A. पुस्तके नास्ति

भावशुद्धिः

मिति, अत्राह—अथेति ॥ अन्यदन्यत्कर्तुमशक्यमिति कारणकैवल्याय P-120-9
कार्य-नाश एषितव्य इत्यर्थः ॥ एवं चागमविरोध इत्याह—तत्रेति ॥ P.120-10
अपुरुषार्थता च मुक्तेः स्यादित्याह—आत्मोच्छेदस्येति ॥ पारमार्थिक- P.120-11
कार्य-कारणभावस्य निरस्तत्वादप्यसङ्गतोऽयं कल्प इत्याह—प्रतिषि-
द्धश्चेति ॥ न चासावागमानुगुण इत्याह—वाचारम्भणमिति ॥ P.120-12

जीव-ब्रह्मणोरभेदादेव चतुर्थोऽपि न युक्त इत्यह—नापीति[1]॥ न P.120-13
ह्यौषधादियोगाद् मनुष्यस्याप्यभिन्नव्याघ्ररूपेण (परिणामः ;) परिणा-
मत्वे व्याघ्रस्य पूर्वमेव भावादभेदायोगात् । जीवस्तु ब्रह्माभिन्नः, इति
कथं [2](तस्य स्वरूपपरिणाम इत्यर्थः । किंच जीवस्य ब्रह्मरूपपरिणामः
किम् ? चैतन्यमिति चेत्, न; तस्य नित्यसिद्धत्वादित्याह—चैतन्यस्येति ॥
जीवगतशोकादिनिवृत्तिर्ब्रह्मरूप)परिणामात् भवतीति चोदयति—अथेति॥ P.120-14

अभिप्रायप्रकाशिका

अनन्यत्वं साधयति—तद्विज्ञानेति ॥ यदि जीवादिभ्यो ब्रह्मान्यत् स्यात्, कथं तेषां ब्रह्मणि विज्ञाते विज्ञातत्वम्? तेन ब्रह्म जीवादिभ्योऽनन्यदित्यर्थः । न केवलं श्रुतार्थापत्तिरेव, श्रुतिरप्यस्तीत्याह—तत्त्वमसीति ॥ प्रत्यगात्मवृत्तिनेति ॥ "आत्मन आकाशः सम्भूतः" "आत्मा वा इदमेक एवाग्र आसीदि"त्यादौ जीववाचिनाऽऽत्मशब्देन जगत्कारणस्य ब्रह्मणो निर्देशादित्यर्थः ॥

सरित्सागरादीनां परिच्छिन्नानामेवाविभागापत्तिदर्शनादपरिच्छिन्ने ब्रह्मणि साऽपि न सम्भवतीति द्वितीयविकल्पं दूषयति—अत एवेति ॥ कलाः=अवयवा निरस्ता यस्मिन्, तन्निष्कलमिति श्रुत्या निरवयत्वाधिगमात् परस्परावयवसम्भेदलक्षणस्याविभागस्यानुपपत्तिरित्यन्वयः ॥

कार्य-कारणाभेदमङ्गीकृत्य दूषयति—कार्यस्येति ॥ भवतु को दोष इति? अत आह—तत्र विद्ययेति ॥ अमृतत्वसाधनभूताया विद्याया उच्छेदसाधनत्वप्रसङ्गादिति हेतुमाह—विद्ययैवेति ॥ दोषान्तरमाह—आत्मोच्छेदस्येति ॥ पक्ष एवायमनुपपन्न इत्याह—प्रतिषिद्धश्चेति ॥ न युक्त्यैव, अपि तु श्रुत्याऽपीत्याह—वाचारम्भणमिति ॥

1. नेति मूलपाठः 2. () कुण्डलितो भागः B पुस्तके नास्ति ।

भावशुद्धिः

शोकादयो जीवस्य स्वरूपम्, गुणो वेति विकल्प्याऽऽद्यं दूषयति—
P.120-15 तत्रापीति ॥ द्वितीयमुत्थापयति—अथेति ॥

अभेदे गुण-गुणिभावासंभवात्, भेदेऽप्यनादित्वे नाशायोगाद्
P.120-16 भिन्ना आगमापायिनश्चेत्यर्थः । दूषयति—क्षणिकत्वादेवेति ॥ आगा-
मिनां शोकादीनामनुत्पादाय ब्रह्मरूपपरिणामापेक्षेति, अत्राह—
P.120-17 न चेति । प्रागभावस्यासाध्यत्वादित्यर्थः ॥

शङ्कते—अथेति ॥ ब्रह्मगतैश्वर्ययोगस्तद्रूपापत्तिरित्यर्थः । दूषयति—
P.120-19 तदसदिति ॥ तद्रूपपरिणामस्तत्सदृशस्तज्जातीयो वा स्यात्, न पुनः
स एव । तथाच बहव ईश्वराः स्युरित्यर्थः । तेषां च निरतिशयैश्वर्यात्
P.121-1 ब्रह्मणो न्यूनं समं वैश्वर्यम् । न्यूनत्वं दूषयति—न्यूनत्वेनेति ॥ अस्तु
तादृशमेव स्वाराज्यम्, को दोष इति? अत्राह—तथाहीति ॥

P.121-2 एतावताऽपि किमिति? अत्राह—तथाचेति ॥ एवमपि का
P.121-3 हानिः? अत्राह—तत्र चेति । अतोऽन्यथा=आत्मरूपाद् भेदेनेत्यर्थः ।
P.121-4 न केवलं श्रुतेः, उपपत्तितश्चेत्याह—उपपद्यते चेति ॥

P.121-5 साम्यं दूषयति—समत्वस्येति । कुत इति? अत्राह—एकश्चेदिति ।
ईशानशक्तिरेवान्यस्य न सिध्येत; तत्कल्पककार्याभावादित्यर्थः । हेत्व-
P.121-6 न्तरमाह—विरोधाच्चेति ॥ स्वतन्त्राणां मा भूदैकमत्यम्,—कितः? अत्राह—
P.121-7 तत्रेति । एकाभिप्रायानुविधायित्वाद् जगद्वस्तुन इत्यर्थः । अस्तु
P.121-8 वस्तुन उभयानुविधानमिति, अत्राह—उभयेति ॥ नोभयाभिप्रायानुवि-
धानम्; विरोधात्, यदेकस्य वस्तुनो नवमिदमस्तु, पुराणमिदमस्त्विति
चाव्याहतकामावीशाते, तदैतदपर्यायं नवं पुराणं च प्रसज्येतेत्यर्थः ।
अथ नैवाव्याहतकामौ, किन्तु परस्परतन्त्रावित्याह—उभयोरिति ॥

यदुक्तं न खल्वेषामेकमतित्वे हेतुरस्तीति, तदमृष्यमाण आह
P.121-10 —कार्यासिद्धिश्चेति । दूषयति—प्रत्येकमिति । तदेवमपर्यायपक्षे निराकृते
P.121-11 पर्यायपक्षमुत्थापयति—अथेति ॥ दूषयति—अन्तवत्त्वेति । सर्वमैश्वर्यम-
न्तवदेव, न निरंकुशमित्यर्थः ॥

अभिप्रायप्रकाशिका

अन्यस्य पूर्वसिद्धान्यभावेन परिणामानुपपत्तेः गोविकारादीनामपि तत्सदृशाकारेणैव परिणामात् , जीवस्य ब्रह्मानन्यत्वाच्च चतुर्थपक्षोऽपि न युक्त इत्याह––न चतुर्थ इति ॥ किंच चैतन्याकारेण परिणामः, किं वाऽन्याकारेण ? नाद्यः ; तस्य जीवेष्वपि पूर्वं भावादित्याह–चैतन्यस्येति ॥ द्वितीयं कल्पमुत्थापयति—शोकेति ॥ शोकादयोऽप्यात्मनः स्वरूपम् , उत गुणा इति विकल्प्य क्रमेण दूषयति—तत्रापीति ॥ गुणानाममेदे स्वरूपवदनुच्छेद्यत्वापत्तेः । भेदमङ्गीकृत्याऽऽह—अर्थान्तरमिति ॥ उत्पन्नानां निवृत्तावप्यागामिनामनुद्भावापेक्षेति, अत आह––न चागामिनामिति ॥ 'स प्रागभावो न साध्यते' इत्यनेनैव न्यायेनैतदपि निरस्तमित्यर्थः ॥

ब्रह्मणि विद्यमानैश्वर्यप्राप्तिस्तद्रूपपरिमाण इति शङ्कते—अथैश्वर्येति ॥ अन्यस्य पूर्वसिद्धान्यभावासम्भवात् पृथक् परिणामोऽभ्युपगन्तव्यः, स चानुपपन्न इत्याह—तदसदिति ॥ अनुपपत्तिमेव दर्शयितुं विकल्पयति–ब्रह्मण इति ॥ उभयाभावमेव दर्शयति-—तथाहीति ॥ एवं च सत्यन्तवत्त्वान्मोक्षत्वमपि न घटत इत्याह—तत्र चेति ॥ युक्तितोऽप्यन्तवत्त्वमाह—उपपद्यते चेति ॥ समानैश्वर्यपक्षमपि युगपत् , क्रमेण वेति विकल्प्य न तावदाद्य इत्याह—[1]समस्येति ॥ अनुपपत्तिमेवाह—एकश्चेदिति ॥ विरोधमेव दर्शयति—न खल्विति ॥ एकमतित्वाभावे किमायातमिति ? अत आह–तत्रैकस्मिन्निति ॥ इदं जगद् जायतामित्येकस्य, अन्यस्य विलीयतामिति यदाऽभिप्रायः, तदा तस्य जगत एकतराभिप्रायानुविधायित्वेऽन्यतरस्य मोघसङ्कल्पतयाऽनीश्वरत्वादित्यर्थः । उभयाभिप्रायानुविधाने दोषमाह—उभयोरिति ॥

यदुक्तम्—न खल्वेषामेकमतित्वे हेतुरस्तीति, तदनुपपन्नम् ; परिदृश्यमानकार्यान्यथानुपपत्त्या तेषामेकमतित्वकल्पनादिति शङ्कते—कार्येति ॥ दूषयति—प्रत्येकमिति ॥ परिषद्वदेवैकैकस्येश्वरत्वं न स्यादित्यर्थः । क्रमेणैश्वर्यमिति द्वितीयं कल्पमुत्थाप्य दूषयति—अथेति ॥ एकस्यैश्वर्यकालेऽन्यस्याभावादैश्वर्यस्यान्तवत्ता स्यादित्यर्थः ॥

आस्तां तावदैश्वर्यस्य क्रम-यौगपद्याभ्यामनुपपत्तिः, स्वरूपतोऽप्ययं पक्षोऽनुपपन्नः ; ईश्वरस्यैव जगत्स्रष्टृत्वात् , तदुपासनाधीनत्वादितरेषामैश्वर्यप्राप्तिलक्षणाया मुक्तेरित्याह—जगत्सर्गस्येति ॥

---

1. समत्वस्येति मूलपाठः

भावशुद्धिः

इतश्च मुक्ताभिमतानां जीवानां न ब्रह्मतुल्यमैश्वर्यमित्याह—
P.121-11 जगत्सर्गस्येति ॥ जीवा अपि मुक्ताः कस्मान्न सृजन्ति जगदिति ?
P.121-12 अत्राह—यत इति ॥
P.121-13 पराभिमतं मोक्षं विकल्प्य दूषयित्वा स्वाभिमतमाह–तस्मादिति ॥
P.121-15 ब्रह्मसारूप्यलक्षणमोक्षप्राप्तिस्तत्रोच्यत इति, अत्राह—अन्यरूपेति ॥
चोदयति—निष्पद्यमानस्येति ॥ आगन्तुकस्य न पूर्वसिद्धाभेद इति,
P.121-16 अत्राह—संबन्धाद्वेति ॥ परिहरति—नेति ॥ आनर्थक्यं स्पष्टयति—
सर्वस्येति ॥

संभवे, व्यभिचारे च स्याद्विशेषणमर्थवत्, न संभवमात्रेणेत्यर्थः ।
अभिनिष्पत्तिः=अभूतप्रादुर्भावः । कथं स्वरूपावस्थानलक्षणो मोक्षो
P.121-17 विकल्पित इति ? अत्राह—तत्र यथेति ॥ कुतः पुनरेवं व्याख्यायते, न
P.121-19 तूत्पत्तिरेवोच्यत इति ? अत्राह–[1]तथाच ब्रह्मैवेति ॥ इयं श्रुतिर्न स्वरूपा-
वस्थानपरिहाण्या शक्या व्याख्यातुम् । निष्पत्तिः पुनरन्यथाऽपीत्यर्थः ॥

उपवर्णितेऽर्थे 'न च मोक्षः फलमि'ति कारिकां व्याचष्टे—
तदेवमिति ॥ प्रागपि=वृत्तिव्याप्तेः पूर्वमपीत्यर्थः । कार्योऽपि मोक्षस्व-
P.121-20 रूपं किं न स्यात् ? अत आह—आगन्तुकस्येति ॥ निष्पत्तिः=प्रागसत
आत्मलाभः ; वस्त्रस्याप्यशुक्लस्य वैमल्यं प्रागसदुत्पद्यते, तद्वदिहाप्य-
विद्याविगमस्याभूतस्य भवतः कार्यत्वे फलत्वम्, स एव मोक्ष इति,

अभिप्रायप्रकाशिका

अतः पञ्चमः पक्ष एव परिशिष्यत इत्याह—तस्मादिति ॥ एतावता स्वरूपावस्थानं कथमुक्तमिति ? अत आह—अन्यरूपेति ॥

स्वकीयस्यापि स्वशब्दवाच्यत्वादविरोध इति शङ्कते—निष्पद्यमानस्येति ॥ तदापि 'स्वेन रूपेणे'ति विशेषणमनर्थकं स्यादिति परिहरति—न, विशेषणेति ॥ भवत्पक्षे निष्पत्तिशब्दवैयर्थ्यम् ; स्वरूपस्य प्रागपि भावान्निष्पत्त्यनुपपत्तेरिति, अत आह—तत्र यथेति ॥ प्रतिबन्धविगममपेक्ष्यायं निष्पत्तिशब्दः 'कूपाकाशो निष्पन्नः' इति व्यपदेशवदित्यर्थः । अत्रैव श्रुत्यन्तरमाह—तथेति ॥

---

1. तथेति मूलपाठः ।

भावशुद्धिः

अत्राह—न चान्यत्वमिति ॥ हेतुमाह—यत इति ॥ ब्रह्मस्वरूपचैतन्यमेव P.121-21
वृत्तिव्याप्तमज्ञाननिवृत्तिरित्यर्थः ॥

संसारनिवृत्तिर्मोक्षः, नाविद्यानिवृत्तिः, अत्राह—अविद्येति ॥ अविद्याऽस्तमयो ब्रह्मणोऽन्यः, घटाभाव इव भूतलात्, अन्यथा तद्रूपस्य प्रागपि भावान्नित्यमुक्तं जगत् प्रसज्येतेति, अत्राह—विद्यैव चेति ॥ P.121-22
तदुपपादयति—यदीति ॥ अग्रहणम्=प्रागभावः । हेतुमाह—यत इति ॥ अनाद्यनिर्वचनीयमज्ञानं सर्वब्रह्मवादिभिरवश्याभ्युपेयम्, तत्कार्यं मिथ्याज्ञानं च, तन्निवृत्तिरन्येति शङ्कते—अथेति ॥ यस्या रूपमनिर्वच- P.122-1
नीयम्, तस्या(नु)भावोऽपि तदधीननिरूपणोऽनिर्वचनीय एव, अतो न तत्त्वाधिगमाद् भिद्यत इत्याह—तथापीति ॥

अत्रैव निदर्शनमाह—न हीति ॥ शुक्तिज्ञान-रजतज्ञाननिवृत्त्यो- P.122-2
रेकक्षणवर्तित्वाद् न तयोः कार्य-कारणभाव इत्यर्थः । प्रयत्नान्तरं प्रमाणान्तरोत्पत्त्यर्थम्, तदनपेक्षणाच्चेत्यर्थः ॥

यदुक्तम्—विद्यैवाविद्याऽस्तमयः, सैव मुक्तिः=ब्रह्मप्राप्तिरिति, तत्र विद्या-ब्रह्मप्राप्त्योरेककालतयैकत्वप्रतिपादनपराः श्रुतीरुपन्यस्यति—तथाचेति ॥ P.122-3

पौर्वापर्यमपि श्रूयत इति, अत्राह—यत्त्विति ॥ "तमेव विदित्वाऽ- P.122-4
तिमृत्युमेती"त्यादौ क्वचित् बहुश्रुतिविरोधात् तदुपचरितमित्यर्थः ॥

अभिप्रायप्रकाशिका

एवं मोक्षस्यासाध्यत्वं श्लोकोक्तमुपपाद्योपसंहरति—तदेवमिति ॥ इदानीं 'न चापरः' इति श्लोकभागं व्याचष्टे—न चान्यत्वमिति ॥ तत्र हेतुत्वेनोत्तरार्धं व्याचष्टे—यत इति ॥

बन्धविश्लेषो मुक्तिः, नाविद्यानिवृत्तिरिति, अत आह—अविद्येति ॥ तथापि कथं विद्यैवाविद्यानिवृत्तिरित्याशङ्क्य, यद्यग्रहणमविद्या, यदि वा विपर्यासः, उभयथाऽपि विद्योदय एवाविद्यानिवृत्तिरिति दर्शयति—विद्यैव चेति ॥ शुक्तिज्ञानेन, प्रयत्नान्तरेण वा साध्यत्वाभावे हेतुमाह—तयोरिति ॥ दार्ष्टान्तिके विद्योदयस्य, अविद्यानिवृत्तिलक्षणब्रह्मप्राप्तेश्च यौगपद्यश्रवणाद् न हेतुहेतुमद्भावः, किन्तु विद्योदय एव ब्रह्मप्राप्तिरित्याह—तथाचेति ॥ एतावता

भावशुद्धिः

सन्तानकालेऽपि क्त्वाप्रत्ययप्रयोगो यद्यप्यस्ति; तथापि
P.122-9 यौगपद्यमेकत्वेऽनुपपन्नम्; भेदाधिष्ठानत्वादिति चोदयति—नन्विति ॥
परिहरति—न, एकस्येति ॥ घटनाशो न कपालोदयादन्यः, तथा सत्य-
भावस्य भावादन्योन्यभावाभ्युपगमेनानवस्थानादित्यर्थः ॥

P.122-11 चोदयति—कथं तर्हीति ॥ मोक्षस्यात्मरूपत्वे मार्गश्रुतिः, ([1]अद्वि-
तीयत्वे विभागश्रुतिर्गन्तव्याभावात्, अद्वितीयत्वश्रुतिर्द्वितीयस्याभा-
वात्, एश्वर्यश्रुतिरपरिणामित्वे, "तत्तेजोऽसृजते"ति सर्गश्रुतिः सर्जनी-
यस्यान्यस्याभावात्, "स्वमपीतो भवती"ति स्वाप्ययश्रुतिः स्वस्यात्म-
न्यप्ययाभावात्) कथमुपपद्यत इत्यर्थः। प्रथमं तावद् मार्गश्रुतीनां निर्वाहं
P.122 12 दर्शयति—तत्राहुरिति ॥ हेतुमाह—यत्र हीति ॥ तत्र निरुपाधिब्रह्मण्यु-
पास्ये 'ब्रह्मैव सन्नि'त्यादिश्रुतयः प्रवृत्ता इत्यर्थः। एताः प्राणोत्क्रान्तिं प्रति-
P.122 14 षेधन्ति, न तु विज्ञानात्मनो गतिरिति, अत्राह—प्राणानुत्क्रमणेनेति ॥

अभिप्रायप्रकाशिका

कथं तुल्यकालतेति? अत आह—वेद भवतीति ॥ "निचाय्य तं मृत्यु-
मुखात् प्रमुच्यते" "तमेव विदित्वाऽतिमृत्युमेती"त्यादौ पौर्वापर्यमपि श्रूयत
इति, अत आह—यत्तु क्वचिदिति ॥

विद्योदय एव चेदविद्यानिवृत्तिः, तर्हि तुल्यकालताऽपि न युक्ता;
भेदाभावादिति शङ्कते—नन्विति ॥ एकस्यापि भावाभावरूपभेदादुपचरित-
भेदाङ्गीकारेणायं व्यपदेशः, तथा लोकेऽपि दृष्टत्वादिति परिहरति—न,
एकस्यापीति ॥

ब्रह्मप्राप्तेः संयोगादिचतुष्टयानन्तर्भावे का गतिरुदाहृतश्रुतीनामिति
शङ्कते—कथं तर्हीति ॥ तत्र मार्गश्रुतीनां सगुणब्रह्मविषयत्वेन गतिमाह—
तत्राहुरिति ॥ कथमेतन्निश्चीयत इति? अत आह—यत्र हीति ॥ मा
भूत् प्राणानां गतिः, विज्ञानात्मनां किमिति गतिर्न स्यादिति? अत आह—
न हीति ॥ विज्ञानात्मनः प्राणोपाधिकत्वात् प्राणोपाधिप्रलये तस्य ब्रह्मैक्याद्
गतिर्न सम्भवतीत्यर्थः ॥

---

1. कुण्डलितो भाग B. पुस्तके नास्ति।

भावशुद्धिः

प्राणगतिव्यतिरेकेण विदुषो गतिः किं न स्यात्? तत्राह—न हीति ॥ P.122-15
गमनमिति शेषः। कुत इति? अत्राह—ब्रह्मण इति ॥ ब्रह्म(स्व)रूपाद् भेदो न जीवस्य, जीवत्वम्, गमनं च तस्य प्राणोपाधित्वात्। ध्वस्तप्राणस्य न जीवत्वम्, गमनमि(नं वे)त्यर्थः ॥

मार्गश्रुतयस्तु सोपाधिब्रह्मोपासनाविषया इत्याह—यत्र त्विति ॥ P.122-16
'मनोमयमुपासीते'ति द्वितीयार्थे प्रथमा। किं तर्हि गन्तव्यमिति पृच्छति
—किं तर्हीति ॥ उत्तरम्—कार्येति ॥ किमस्ति कार्यब्रह्मलोकः? अस्ती- P.122-17
त्याह—यत्रैतदिति ॥ अरनामा ण्यनामा चार्णवौ समुद्रौ; इतस्तृतीय- P.122-18
स्यामिति जगत् त्रैलोक्येऽन्तर्भाव्य सर्वस्मादुपरीत्युच्यते, ऐरम्=इरा=अन्नरसः, तन्मयम्, मदीयम्=मदकरम्, प्रभुणा विमितम्=निर्मितं प्रभुविमितम्, हिरण्मयमिति श्रौतविशेषणेन विशेष्यं स्वयं दर्शयति—वेश्मेति॥

यदि पुनः कार्यब्रह्मलोको नाभविष्यत्, पञ्चाग्निविद्याभ्याससंपन्नानामब्रह्मविदां न तत्र गमनमुपपत्स्यते। न ह्यब्रह्मविदां परब्रह्मप्राप्ति-
संभव इत्याह—तथाचेति ॥ श्रद्धां कृत्वा सत्यं तपःपरायणा ब्रह्मोपासते, P.123- 2
तेऽर्चिषमभिसंभवन्ति। चशब्दात् पञ्चाग्निविदोऽपीत्यर्थः। परमेवार्चि-
रादिना गन्तव्यम्, अत्राह—परब्रह्मेति ॥ कुत इति? अत्राह— P.123- 3
विद्ययेति ॥ दक्षिणाः=कर्मिण इति यावत् ॥ P.123- 5

अभिप्रायप्रकाशिका

तर्हि किंविषयास्ता इति? अत आह—यत्र त्विति ॥ कार्यब्रह्मलोक एवेति कथं निश्चीयत इति? अत आह—यत्रैतदिति ॥ अरश्च ण्यश्चार्णवौ=अमृतपूर्णौ ह्रदौ, ब्रह्मणः=चतुर्मुखस्य लोके तृतीयः स्यात्—पृथिव्यन्तरिक्षापेक्षया, दिवि=द्युप्रतिष्ठितादित्यमण्डलद्वारकतया तेनोपलक्षिते, इराया विकार ऐरम्, मदीयम्=मदकरम्, सरः, तत्राश्वत्थः=वनस्पतिः, सोमसवनः=अमृतस्रवः, तत्रापराजिता पूः=सर्वपुरीणामुपरि वर्तमानतया दुरवगमत्वम्, तस्यां च पुर्यां प्रभुणा=ब्रह्मणा, विमितम्=निर्मितम्, वेश्म=ह्रद-महीरुह-पुर-गृहाणां श्रवणाल्लोक एवायमित्यर्थः। पञ्चाग्निविदां ब्रह्मविद्याशून्यानामपि तत्प्राप्तिश्रवणात् प्राप्यस्य न ब्रह्मतेत्याह—तथाचेति ॥ "तद्य इत्थं विदुरि"ति पञ्चाग्निविद्यावाक्यमनेनोपलक्षितमिति द्रष्टव्यम् ॥

तथापि कथं गन्तव्यस्याब्रह्मत्वमिति? तत्राह—परब्रह्मेति ॥

भावशुद्धिः

अपुनरावृत्तिश्रुतिरयुक्ता ; कार्यब्रह्मलोकस्यानित्यत्वादिति
P.123- 7 चोदयति—अपुनरावृत्तीति ॥ परिहरति—अत्रेति ॥ क्रममाह—तत्-
कार्यब्रह्म, प्राप्येति । इहैवानुष्ठितसाधनस्य ब्रह्मलोकं गतस्य हिरण्यगर्भो-
पदेशाद् ज्ञानोत्पत्तिरित्येतदुत्प्रेक्षामात्रम्, न मानमस्तीति, अत्राह—
P.123- 9 यथोक्तमिति ॥

कथं पुनरवगम्यते—कार्यब्रह्मलोकमाह श्रुतिरियम्, न पुनः
P.123-14 परब्रह्मेति, अत्राह—ब्रह्मलोकेष्विति ॥ तस्याप्येकत्वान्न बहुवचनोपपत्तिः,
अत्राह—तत्रेति ॥ परस्य तु निरवयवत्वेन तदनुपपत्तिरित्यर्थः । परश्चा-
सावन्तकालश्चेति कर्मधारयप्रतीतिं व्यावर्त्य षष्ठीसमासाभिप्रायेणाह—
P.123-15 परान्तेति ॥ संन्यास एव योग इति व्याख्यां वारयति—संन्यासेति ॥
P.123-16 संन्यासं दर्शयति—परमेश्वर इति ॥ योगस्वरूपमाह—सर्वमिदमिति ॥
P.123-18 अयमेव श्रुत्यर्थ इति निर्णयार्थं तन्मूलस्मृतिमुदाहरति—तथाचेति ॥
प्रतिसञ्चरः=महाप्रलयः ॥

अभिप्रायप्रकाशिका

तत्प्राप्तानामपुनरावृत्तिश्रवणात् प्राप्तस्य परब्रह्मत्वमेष्टव्यमिति शङ्कते—अपुनरावृत्तीति ॥

ब्रह्मलोकं गतानां तत्रैवोत्पन्नपरब्रह्मदर्शनानां परब्रह्मप्राप्तेरपुनरावृत्तिरुपपन्नेति परिहरति—अत्र केचिदिति ॥ किमनया कल्पनया ? ब्रह्मैव लोको ब्रह्मलोक इति कस्मान्न स्वीक्रियत इति ? मैवम्; बहुवचनविरोधादित्याह—ब्रह्मलोकेष्विति ॥ ब्रह्मलोकस्याप्येकत्वात् तत्रापि कथं बहुवचनमिति ? भोगभूमीनां बहुविधत्वात् तत्र बहुत्वमुपपन्नमित्याह—तत्रेति ॥ तथापि कथं क्रममुक्तिप्रतीतिरित्याकाङ्क्षायां मन्त्रव्याख्यानेन स्पष्टयति—परामृता इति ॥ संन्यास-योगशब्दयोरर्थमाह—भेदेनेति ॥ एवंभूतसंन्यासात्, योगाच्च शुद्धसत्त्वा यतयः परिमुच्यन्ति=परिमुच्यन्ते क्रमेणेति शेषः । उक्तेऽर्थे स्मृतिं प्रमाणयति—तथाचेति ॥ प्रतिसञ्चरः=महाप्रलयः ॥

आत्यन्तिकानावृत्तिमेव श्रुतिर्न प्रतिपादयति, किंतु स्थिते ब्रह्मलोके तस्मादनावृत्तिः, प्रलीने त्वावृत्तिः सम्भवतीति 'नैषा मुक्तौ प्रमाणमित्यन्येषां

भावशुद्धिः

अपुनरावृत्तिश्रुतेर्गत्यन्तरमाह—अन्ये त्विति ॥ संपतत्यस्मा- P.123-21
ल्लोकादमुं लोकमनेनेति संपातः=कर्माशयः। इष्टादिकारिणां धूमादि-
मार्गेण चन्द्रमण्डलमधिरूढानां स्थित एव तस्मिंस्ततः प्रत्यवरोहणं
श्रूयते—"यावत् संपातमुषित्वाऽथैतमेवाध्वानं पुनरावर्तन्ते यथेतमि"ति।
तत्र चन्द्रमण्डलस्य प्रत्यवरोहणेऽपादानत्वम्, नैवं ब्रह्मलोकस्यापादा-
नत्वमित्यर्थः। किं तर्हि नित्यैव तत्र स्थितिरिति? अत्राह—किन्त्विति॥ P.123-22
तस्य=ब्रह्मलोकस्य, प्रलयः=पर्यवसानं यस्याः सा, तथा तत्प्रलये
व्यावर्तते चेदपुनरावृत्तिविरोध इति, अत्राह—तत्प्रलये हीति॥ अत्र P.124-1
गमकमाह—तथाचेति॥ मनुना प्रवर्तितं मानवम्, न तेषां पुनरिहाऽऽ- P.124-2
वृत्तिरिति। इहेति विशेषणमन्यथाऽनर्थकं स्यादित्यर्थः॥

अपादानत्वाभावात् ततो नाऽऽवृत्तिरस्तु, "तयोर्ध्वमायन्नमृतत्व-
मेती"ति कथम्? अत्राह—अमृतत्वमिति॥ चन्द्रलोकस्थितानपेक्ष्य P.124-3
ब्रह्मलोकस्थिता अमृता इत्यर्थः। चिरजीवत्वमात्रेणामृतत्वप्रयोगो न
दृष्ट इति, अत्राह—यथेति॥ प्रमाणश्चास्तीत्याह—तथाचेति॥ भूत- P 124-4
संप्लवः=भूतप्रलयः॥

मार्गश्रुतीनां स्वयं गतिमुक्त्वा स्वयूथ्यै रूप्या(च्यमा)नां गतिमनु-
वदति—[1]ये त्विति॥ यद्यपि परं ब्रह्म सर्वगतम्; तथापि विकृतत्वम्, P.124-5

अभिप्रायप्रकाशिका

मतमाह—अन्ये त्विति। सम्पतत्यस्माल्लोकादमुं लोकमनेनेति सम्पातः= कर्म, तेन यावत्सम्पातं यावत्कर्मोपभोग्यमस्ति, तावदुषित्वेत्यर्थः। उत्तरकालमा- वृत्तिश्चेत्, कथमनावृत्तिश्रुतिरिति? तत्राह—तत्प्रलये हीति॥ उक्तेऽर्थे लिङ्गमाह—तथाचेति॥ तेषामिह न पुनरावृत्तिरित्यस्यापि श्रुतेरुपलक्षण- त्वादिहेति विशेषणमिति द्रष्टव्यम्। कथं तर्हि "तयोर्ध्वमायन्नमृतत्वमेती"ति श्रुतिरिति? तत्राह—अमृतत्वमेतीति॥ एकदेशिनां गतिश्रुतिनयनप्रकार- मनुवदति दूषयितुम्—ये त्विति। देशभेदाभावेऽपि पारमार्थिकमविकृतत्वम्, विकृतत्वं तु काल्पनिकमिति कृत्वा विकृतत्वव्यपदेशः किं न स्यादिति? मैवम्; श्रुत्यैव देशभेदोपदेशादित्याह—तथाचेति॥

1. यत्तु इति मूलपाठः।

भावशुद्धिः

अविकृतत्वं नाम ब्रह्मणो धर्मद्वयम्। अतश्च देशभेदेन भवितव्यम्;
P.124- 6 विरुद्धयोरेकत्रावस्थानायोगादित्यर्थः। अत्रैव श्रुतिमुदाहरति—तथा
चेति ॥ दिवः परः=परस्तादित्यर्थः। तस्मात् परविषयेऽपि प्रदेश-
P.124- 7 विशेषावच्छिन्नाविकृतब्रह्मप्राप्तये मार्गोऽत्रकल्पत इत्याह—अत इति ॥
अयं मार्गः किं विद्याहीनस्य, विद्यावतो वेति राद्धान्ती विकल्प(ल्प्य
P.124- 8 निरस्य)ति—तत्संप्रधार्यमिति ॥ आद्यं दूषयति—न तावदिति ॥ ब्रह्मविदं
प्रकृत्य श्रुतत्वादित्यर्थः। छन्दोगेषु परविदं प्रकृत्य "तयोर्ध्वमाय-
P.124- 9 न्नि"ति श्रवणात् द्वितीयोऽस्त्विति, अत्राह—नापीति ॥ विद्याप्रकरणे
तच्छ्रवणं विद्वानप्यनया गच्छन्नेव मुच्यते, तस्मादुत्कृष्टेयं ब्रह्मनाडीति
P.124-10 स्तुत्यर्थमित्यर्थः। का तर्ह्यविभागश्रुतेर्गतिरिति ? तामाह—मधु-नदीति ॥
भेददृष्टिनिरासनपरा, न मध्वादिवदत्राविभागः; निरवयवत्वाद्
ब्रह्मात्मनोरित्यर्थः ॥

P.124 12 सृष्टिश्रुतीनामपि गतिमाह—सर्गेति ॥ पृच्छति—किं तर्हीति ॥
तर्हि किम्परेत्यर्थः। उत्तरम्—एकात्मेति ॥ गुण मुख्यव्यतिक्रमे गुणस्य
P.1?4-13 मुख्यानुरोधेन नयनमित्याह—तत इति ॥ सर्गश्रुतेरौत्सर्गिकस्वार्थपरत्व-
P.124-14 त्यागेनैकात्म्यपरत्वं कस्मात् कल्प्यत इति ? अत्राह—तथाहीति ॥

अभिप्रायप्रकाशिका

दूषयति—तत्सम्प्रधार्यमित्यादिना। किमनुत्पन्नविद्यस्य मार्गोपदेशः, किं वोत्पन्नविद्यस्येति विकल्प्य न तावदाद्य इत्याह—न तावदिति। ब्रह्मविदो गमनसाधनाभावाद् न द्वितीयोऽपीत्याह—नापीति। परिशेषात् सगुणविषयोऽयं मार्गोपदेश इति भावः ॥

मार्गश्रुतीनां गतिमभिधायाविभागश्रुतेर्गतिमाह—मधु-नदीति ॥ मुक्तौ विभागदर्शनाभावप्रतिपादिका सेत्यर्थः ॥

सम्प्रति सर्गश्रुतीनां गतिमाह—सर्गेति ॥ ऐकात्म्यपरत्वेन देवताधिकरणन्यायेन सर्गेऽपि प्रामाण्यं स्यादिति, मैवम्; शेष(षि)विरोधादित्याह—ततस्तदनुगुणतयैवेति ॥

एवदेव प्रपञ्चयति—तथाहीति ॥ कस्मिन्नु भगव इति। पूर्व-

भावशुद्धिः

एतत्=सत् ब्रह्म, आत्मा स्वरूपं यस्य जगतस्तदेतत्, आत्मस्वभावः—ऐतदात्म्यम् । "तदैक्षत तत्तेजोऽसृजते"ति तेजोऽबन्नानां सर्गश्रवणात् तत्परत्वमपीति, अत्राह—तत्र यदीति ॥ P.124-17

उपक्रमोपसंहारयोरेकार्थत्वे तन्मध्यवर्ति वाक्यमपि तत्परमित्येतदुदाहरणेनाह—यथेति ॥ P.124-18

निरूपितं द्वितीये "पौर्णमासीवदुपांशुयाजः स्यात्"। "जामि वा एतद्यज्ञस्य क्रियते यदन्वञ्चौ पुरोडाशावुपांशुयाजमन्तरा यजति विष्णुरुपांशु यष्टव्योऽजामित्वाय, प्रजापतिरुपांशु यष्टव्योऽजामित्वाय, अग्नीषोमावुपांशु यष्टव्यावजामित्वाये"ति श्रुतम् ॥

तत्र किं "विष्णुरुपांशु यष्टव्यः" इत्येवमादिभिर्यागविधानम्, "उपांशु(याज)मन्तरा यजती"ति समुदायानुवादः, उतो"पांशुयाजमन्तरा यजती"ति यागविधिः, विष्ण्वादिनिर्देशश्चार्थवादा इति चिन्त्यते ॥

विष्ण्वादिवाक्ये यागविधौ प्रतिवाक्यमनुबन्धभेदात् शास्त्रभेदः। "अन्तरा यजती"त्यस्मिन् विधायकेऽनुबन्धभेदाभावादेकं शास्त्रम्, इति तत्र विष्ण्वादिवाक्यान्येव विधायकानीति पूर्वः पक्षः ; साक्षाद्रूपश्रवणात्, विधिप्रत्ययदर्शनाच्च; 'अन्तरा यजती'ति रूपाभावात्, वर्तमाननिर्देशाच्च समुदायानुवादः । न हि भेदकं रूपमन्तरेण कर्मान्तरप्रतीतिः। अन्तरालकालः प्रयोगाङ्गत्वान्न कर्मरूपम्। न चोपांशुयाजशब्दावगत उपांशुत्वगुणो रूपम्, तथा सत्युपांशु यजनमुपांशुयाग इत्यवयवार्थानुसारेण यजेर्यागवचनतया क्रत्वप्राप्तेरुपांशुयाग इति रूपं स्यात्। तस्मात्—'य एवं विद्वान् पौर्णमासीं यजते' इति यथा पौर्णमासीशब्द आग्नेयादियागसमुदायवचनः, एवमुपांशुयाजशब्दोऽपि विष्ण्वादिवाक्यविहितयागसमुदायानुवाद इति प्राप्ते,

राद्धान्तः—चोदना वाऽप्रकृतत्वात् कर्मान्तरमेव विधीयते ; प्रकृतानामभावेन समुदायानुवादानुपपत्तेः । तथाहि—जामितादोषोपक्रमस्य तत्साधनान्तस्यैकवाक्यत्वात् द्वितीयो(विधेय)यागानुसारित्वान्नियोगस्य, "उपांशुयाजमन्तरा यजती"ति विधायकम्, विष्ण्वादिश्रवणमस्यार्थवादः । यत्तु—विष्ण्वादिवाक्ये विधिश्रवणम्—इति, तन्न ; तव्यप्रत्ययाद्विष्ण्वादीनां कर्मत्वावगतेश्चिकीर्षितार्थत्व-

भावशुद्धिः

सन्देहाद् न सहसा तद्विषयविधिः, किन्तु तेषां कार्यान्तरे विनियोगाभावात् सक्तुवद् विपरिवृत्त्या विलम्बिता विधिधीः; "अन्तरा यजती"त्यत्र भावार्थस्यानन्यनिष्ठत्वात् पञ्चमलकारान्तेन शब्देन सहसैव यागविधानं सिद्धम्। न च ऋत्वप्राप्तिः; वैदिकत्वेन वर्णविकारत्वोपपत्तेः॥

न च रूपाभावः; ध्रौवाज्यं सर्वार्थमुत्पन्नमस्य भविष्यति; देवतापेक्षायां वाक्यशेषसंकीर्तनाद् विष्ण्वाद्यो रात्रिसत्रन्यायेन स्वीक्रियन्ते, इतीत्थं महाभागोऽयमुपांशुयाजः, यदत्र विष्णु-प्रजापतिप्रभृतयो यष्टव्या इति स्तुत्यर्थतयेत्यर्थः॥

P.125- 2 दार्ष्टान्तिकमाह—तथेति॥ एकत्वोपायतयाऽऽनुकूल्येन व्यवतिष्ठन्त इत्यनुषङ्गः। वाक्यभेदपरिहारायैकार्थत्वकल्पनायामप्येकत्वश्रुतिरेव भेदप्रतिपत्त्यर्थाऽस्तु; भेदप्रतिपत्तेरेकत्वज्ञानकार्यत्वादिति, अत्राह—न चेति॥

P.125- 3 हेतुमाह—सर्वत्रेति॥ किमतः? तत्राह—येनेति॥ उपक्रमादेस्तात्पर्यलिङ्गत्वात्, तात्पर्यगोचरस्यैव शब्दार्थत्वादित्यर्थः। फलवत्सन्निधाव-

P.125- 4 फलस्य तदङ्गत्वाच्च सृष्टिश्रुतिरेकत्वप्रतिपत्त्यर्थेत्याह—भेदेति॥ तुल्यमेतदेकप्रतीतेरपीति, अत्राह—एकत्वेति॥ दृष्टम्=विद्वदनुभवसिद्धम्।

P.125- 5 हेतुमाह—विशुद्धेति॥ श्रुतिमाह—तत्रेति॥ फलितमाह—फलवदिति॥

अभिप्रायप्रकाशिका

वाक्येऽपि "पुरुष एवेदं विश्वं कर्म तपो ब्रह्म परामृतमि"त्युपसंहारो द्रष्टव्यः।

उक्तमर्थं दृष्टान्तप्रदर्शनपूर्वमुपसंहरति—अतो यथेति। "उपांशुयाजमन्तरा यजती"त्यनेनोत्पत्तिवाक्येनोपांशुयागस्य विहितत्वात् "विष्णुरुपांशु यष्टव्यः" इत्यादिवाक्यमन्यपरं वाक्यमपि यथा स्तुतिपरत्वेनावतिष्ठते, तथा सर्गश्रुतयोऽपीत्यर्थः। विपरीतो गुण-प्रधानभावः किं न स्यादिति? अत आह—न चेति।

तथापि सृष्टिः प्रतिपाद्याऽस्त्विति, अत्राह—येनेति॥ 'फलवत्सन्निधावफलं तदङ्गमि'ति न्यायाच्चैकत्वमेव प्रतिपाद्यमित्याह—भेदप्रतिपत्तेश्चेति॥ दृष्टं फलमाह—शोकादीति॥ दृष्टफलतामेवोपपादयति—विशुद्धेति॥ फलस्य श्रौतत्वमाह—तत्र को मोह इति॥ ततः किमिति? अत आह—फलवदिति॥ उपकारकमङ्गं भवति, भेदप्रतिपत्तेश्चैकत्वविरोधिन्याः कथं

भावशुद्धिः

फलवद्दर्शपूर्णमाससंनिधिसमाम्नाताफलप्रयाजादेरिवेत्यर्थः । उपकार-
व्याप्तोपायता ; न च भेदप्रतिपत्तिर्विरोधिन्युपकारिका भवितुमर्हत्ये-
कत्वप्रतिपत्तेरिति, अत्राह––उपायत्वं चेति ॥ नेदं जगदसत्कारणकम्, P-125- 7
असतः कारणत्वायोगात्, तस्मात् सत्कारणकं सद(जगद)पि विभक्तं कुत-
श्चित्, न कारणम् ; विभक्तस्य कार्यत्वेन कारणत्वायोगादित्यर्थः ।
कार्यस्य परस्परं भेदप्रतिभासविरोधाद् नाद्वितीयप्रतीतिसाधनत्व-
मिति, अत्राह––कारणेति ॥ कार्यस्य कारणाभेदे दृष्टान्तमाह––घटा- P.125- 8
दिवदिति ॥ न च साध्यविकलो दृष्टान्त इत्याह––मृद्रूपेणेति ॥ कारणद्रव्या- P.125- 9
तिरिक्तप्रपञ्चस्य मिथोऽभेदायोगात् कार्यत्वेन गृह्यमाणं जगत् स्वका-
रणस्याद्वयत्वं साधयतीत्यर्थः ॥

मृदादिवत् ब्रह्मणः कारणत्वेऽनिष्टं चोदयति––नन्विति ॥
तदा चास्ति भेदः कथंचित् प्रपञ्चस्य परस्परमित्यर्थः । P.125-10
परिहरति––नैतदिति ॥ "येनाश्रुतं श्रुतमि"त्येकविज्ञानेन सर्वविज्ञान-
प्रतिज्ञानादद्वैतमात्मतत्त्वं प्रतिज्ञातम्, तत् कथं स्यादिति जिज्ञासोरे-
कत्वज्ञानसिद्धये सृष्टिरुपदिश्यत इत्यर्थः । एतदेवोपपादयति––न P.125-11
खल्विति ॥ कथं सृष्टेरेकत्वज्ञानोपायत्वम्? अत्राह––एकत्वं चेति । तज्ज- P.125-12
त्वादिभिर्विकारस्य ब्रह्ममात्रत्वात्, इत्यद्वितीयं ब्रह्मेति पुरुषो बोध्यत
इत्यर्थः । एवमपि परमार्थः कार्य-कारणभावः किं न स्यात्? अत्राह––
स चेति ॥ भेदं विना मुख्यकार्य-कारणभावासंभवात् । न च प्रधान- P.125-13
विरोधी गुणो युक्त इत्यर्थः । अद्वैतस्य प्रतिपाद्यतया प्रधानत्वे हेतुमाह––

अभिप्रायप्रकाशिका

तदङ्गतेति? तत्राह––उपायत्वं चेति ॥ भवतु सत्कारणप्रतिपत्तिहेतुत्वम्,
तथाप्यद्वैतप्रतिपत्तिहेतुता कथमिति? अत आह––कारणाव्यतिरेकादिति ॥

मृदादिदृष्टान्तोपादानात् परिणामवाद एवाश्रितः स्यादिति शङ्कते––
नन्वेवमिति ॥ अन्यपरत्वाद् नैवमिति परिहरति––नैतदिति ॥ तदेव
प्रपञ्चयति––न खल्विति ॥ पूर्वमन्यपरत्वाद् न मुख्यः कार्य-कारणभाव
इत्युक्तम्, इदानीं शेषि-विरोधादप्यमुख्य इत्याह––एकत्वं चेति ॥

कारणात्मनैकत्वेऽपि कार्यात्मना नानात्वमस्ति, तथा सति सृष्टि-

भावशुद्धिः

P.125-14 एकमेवेति ॥ अद्वैतश्रुतिः कारणात्मनां कार्याणामेकत्वं ब्रूते, न तु परस्परमपि, इति कुतस्तद्विरोध इति ? अत्राह—न शक्यमिति ॥ हेतुमाह—
P.125-15 तत् सत्यमिति ॥ का तर्हि कार्यनानात्वप्रतीतेर्गतिः ? तामाह—अन्यत्र चेति ।
P.125-17 प्रतिपन्नोपाधौ बाधाच्च न कार्यप्रपञ्चस्य सत्यत्वमित्याह—साक्षाच्चेति ॥

न च कारणात्मनां कार्याणामभेदः, परस्परं च भेदः संभवी=
P.125-18 विरोधादित्युपपादितं तर्ककाण्ड इत्याह—भेदाभेदयोश्चेति ॥ एकरस-
P.125-19 त्वमेव प्रतिपाद्यं प्रधानं यस्मात्, तस्मादेकत्वाविरोधेन कार्य-कारणभावः श्रुत्या वर्ण्यत इत्याह—तदविरोधेनेति ॥ तदेवाह—तदुपादानेति ॥ विकल्पस्य ब्रह्मोपादानत्वात् तद्गोचरोऽपि तदुपादान इत्यर्थः ॥

अत्र लौकिकोदाहरणमाह—बिम्बेति ॥ वैदिकोदाहरणमाह—
P.125-21 वर्णपदेति ॥ आद्योदाहरणं विशदयति—यथाहीति ॥ प्रतिबिम्बानां बिम्बाद-न्यत्वाद् मुख्यमेव तत्कार्यत्वम्, न तु तद् विकल्पस्य बिम्बोपादानत्वाद्
P.125-22 भाक्तमिति, अत्राह—न हीति ॥ मदीयमिदं मुखमिति प्रत्यभिज्ञाना-
P.126- 1 दित्यर्थः । अभेदे कथं हेतु-हेतुमद्भावः ? अत्राह—बिम्बोपादानं त्विति ॥
P.126- 2 द्वितीयोदाहरणं व्यनक्ति—तथाचेति[1] ॥ साकाङ्क्षानेकवाक्यसंबन्धः प्रकरणम्, एकार्थधीहेतुत्वेनावच्छिन्नवर्णानां पदत्वम्, आकाङ्क्षादि-

अभिप्रायप्रकाशिका

श्रुतीनां मुख्यार्थत्वसम्भवादुपायोपेयभावस्योपपत्तेः(कथं)शेषिविरोधाच्चेति, अत आह—एकमेवेति ॥ सजातीय-विजातीय-स्वगतनानात्वनिरासेनैकत्वस्यैव प्रतिपादनादित्यर्थः । हेत्वन्तराण्याह—तत् सत्यमित्यादिना ॥

युक्तिविरोधाच्च न भेदाभेदावित्याह—भेदाभेदयोश्चेति ॥ तद-विरोधेनेति ॥ एकत्वाविरोधेन, सः=कार्य-कारणभावः श्रुत्या वर्ण्यते ; भेदविकल्पस्य तदधिष्ठानत्वमात्रेण तत्कारणत्वव्यपदेशादित्यर्थः । तत्र लौकिकानां वादिनां च सम्प्रतिपन्नमुदाहरणद्वयमाह—बिम्ब-प्रतिबिम्बेत्यादिना ॥

तत्रापि परमार्थत उत्पत्तिः कस्माद् न भवेदिति ? अत आह—न हीति ॥

---

1. तथेति मूलपाठः

भावशुद्धिः

त्रयावच्छिन्नपदानामेकत्रान्वयन्त्वमिनि स्वीकारादित्यर्थः ॥ कथं तर्हि शास्त्रे कार्य-कारणभावेन तद्व्यवहार इति? अत्राह—तदुपादानमात्रत्वादिति॥ P.126- 3

जाग्रत्सृष्टिः, मिथ्या; सृष्टित्वात्; स्वप्नसृष्टिवदित्याह—अपिचेति॥ P.126- 4

रथे युज्यन्त इति रथयोगाः=तुरगाः। न केवलं युक्तितस्तन्मिथ्यात्वम्, श्रुतितोऽपीत्याह—स्वयमेव चेति॥ P.126- 6

ऐश्वर्यश्रुतिरपि सोपाधिब्रह्मविषयेत्याह—ऐश्वर्येति॥ विपाकः= P.126- 8
फलम्। स विद्वान् प्राक् सृष्टेः कारणात्मा, एकधा भवति, परस्तात् कार्योपाधिभेदात् त्रिधा भवति; स एकधा भवति त्रिधा भवतीत्यादेर्निरुपाधिब्रह्मविषये विरोधादित्यर्थः॥ ऐश्वर्यश्रुतिषु क्वचिदपुनरावृत्ति- P.126-10
श्रवणात् कथं तासामविद्योपाधिब्रह्मविषयत्वमिति? अत्राह—यदपीति॥

मतान्तरमाह—अन्ये त्विति॥ आविर्भूतब्रह्मरूपो यः, तस्य P.126-12
तत्संकीर्तनमिति संबन्धः। ब्रह्मणः सर्वात्मत्वात् तद्रूपः सर्वानाप्नोति; तस्य सर्वेशितृत्वात्, विद्वान् स्वराट् भवति; ब्रह्मणः सर्वभोगानां भोक्तृत्वात्, आविर्भूतब्रह्मरूपः सर्वान् कामानाप्नोति। ब्रह्मणस्तद्भोक्तृत्वे हेतुमाह—तदानन्देति॥ 'मात्रामुपजीवन्ती'ति श्रुतेरित्यर्थः। स्तुत्यर्थम्, न तु P.126-13
तादृश एव ब्रह्मभावो विदुष इत्यर्थः॥

अभिप्रायप्रकाशिका

अन्यसृष्टिश्रुतेः कल्पितविषयत्वदर्शनाद् न तद्बलात् सृष्टेः पारमार्थिकत्वमित्याह—अपि चेति॥ अन्यपरत्वादिति॥ स्वयंज्योतिष्ट्वप्रतिपादनपरवाक्यस्याप्येकत्वप्रतिपादनपरत्वादित्यर्थः। सृज्यमानविकारस्यानृतत्वप्रतिपादनादपि न सृष्टेः परमार्थत्वमित्याह—स्वयमेवेति॥

ऐश्वर्यश्रुतीनामिदानीं गतिमाह—ऐश्वर्येति॥ अपुनरावृत्तिश्रवणाद् मोक्ष एवायमिति, नेत्याह—यदपीति॥ एकदेशिनामैश्वर्यश्रुतिनयनप्रकारमाह—अन्ये त्विति॥ आविर्भूतब्रह्मस्वरूपः सर्वान् लोकानाप्नोति स स्वराट् भवतीति सम्बध्यते। तत्र हेतुमाह—ब्रह्मण इति॥ सर्वकामप्राप्तौ हेतुमाह—सर्वोपभोगानामिति॥ हेत्वन्तरमाह—तदानन्दमात्रेति॥ मुमुक्षुणा प्राप्यविशुद्धस्य सर्वात्मत्वाद्यभावात् कथं प्रशंसेति? सत्यम्, भूतपूर्वगत्या विद्यमानत्वादुपपद्यत इत्याह—तस्य तदिति॥

भावशुद्धिः

ब्रह्मणः सर्वात्म(तया)तत्प्राप्तस्य सर्वानन्दप्राप्तौ विदुषः सर्वदुःखा-
P.126-15 प्तिरपि स्यादिति चोदयति––नन्विति ॥ परिहरति––नेति ॥ बिम्बरूपे
ब्रह्मणि दुःखादीनामविद्याध्यस्तानामभावात् प्रतिबिम्बगतानां बिम्ब-
प्राप्त्यभावात् 'न लिप्यते लोकदुःखेन बाह्यः' इति श्रुतेरित्यर्थः। तर्हि
ज्ञानादीनामप्यब्रह्मरूपत्वात् तदप्राप्तस्य न ज्ञानादिप्राप्तिरिति, अत्राह–
P.126-17 ज्ञानैश्वर्येति ॥ तन्मानमाह––विज्ञानमिति ॥ ज्ञानादीनां ब्रह्मरूपत्वे,
P.127- 2 प्रकृते किं स्यादिति ? तदाह—तथाचेति ॥ शोकादीनां ततो वैलक्ष-
P.127- 4 ण्यमाह—शोकादयस्त्विति ॥ आस्कन्देयुः=ढौकेरन् ॥

P.127- 5 ज्ञानैश्वर्ययोर्ज्ञेयेशितव्यापेक्षयोस्तदभावेऽनुपपत्तिरिति चोद-
यति—नन्विति ॥ 'यः सर्वज्ञः सर्ववित्' इत्यादिश्रुतिसिद्धत्वान्नानुपपत्ति-
P.127- 6 रिति, अत्राह–तत्रेति ॥ जाड्यपारतन्त्र्याभावोपलक्षितं रूपं ज्ञानादि,
P.127- 7 न तु सविषयमिति परिहरति––नैतदिति ॥ 'विनियुङ्क्ते' इत्यस्य पर्या-
P.127- 8 येण स्पष्टनं प्रशास्ति चेति। प्रकाशेत्यादि दृष्टान्तं विशदयति––सिद्धेन
P.127- 9 हीति ॥ सप्रमाणं दार्ष्टान्तिकं दर्शयति—तथाचेति ॥ ब्रह्मचैतन्येन
सर्वस्य भास्यत्वावगमात् सर्वज्ञत्वं गम्यत इत्यर्थः। तथापि
कथं सर्वेश्वरत्वम् ? राजादीनामपि कतिपयविषयविषयैश्वर्य-

अभिप्रायप्रकाशिका

पूर्वोक्तमेव प्रपञ्चयितुं पूर्वपक्षमुत्थापयति —नन्विति ॥ अनात्मभूत-
देहाद्यात्माभिमाननिमित्तत्वाद् नैवमिति परिहरति—न ; तेषामिति ॥ ज्ञानै-
श्वर्यादिष्वप्येतत्तुल्यमिति, अत आह—ज्ञानैश्वर्येति ॥ तेषां तद्रूपत्वे क्रमेण
प्रमाणमाह—विज्ञानमिति ॥ ततः किमिति ? अत आह—तथाचेति ॥

विशुद्धे ब्रह्मणि ज्ञेयस्येशितव्यस्य चाभावात् कथं सर्वज्ञत्वम् , सर्वेशित्वं
चेति शङ्कते—नन्विति ॥ अस्तु तर्ह्यानन्दैकरसमेव ब्रह्मेति, मैवम् ; श्रुति-
विरोधादित्याह—तत्रेति ॥

विषयसम्बन्धनिमित्तमैश्वर्यम्, ज्ञानं च न भवति, किन्तु विद्यमान-
स्यैव विषयसम्बन्ध इत्याह—नैतत् सारमिति ॥ दार्ष्टान्तिकमाह—तथाचेति ॥

भावशुद्धिः

दर्शनात् । न ह्येकविषये द्वयोरैश्वर्यं युक्तमिति, अत्राह — सर्वेश्वरत्व- P.127-13
मिति ॥ राजामात्यन्यायेन विरोधादित्यर्थः । ब्रह्मेन्द्रादेरैश्वर्यं परमात्मै-
श्वर्यमेवेत्यत्र प्रमाणमाह—एवं चेति ॥

P.127-14

एवं सर्वज्ञत्व-सर्वेश्वरत्वयोरुपपत्तावपि कथं सर्वकामावाप्तिरुच्यत
इति? अत्राह—सर्वकामेति ॥ काम्यन्त इति सर्वकामाः विषयाः, तेष्वा- P. 127-15
नन्दस्य तदीयत्वाद् ब्रह्मानन्दलेशत्वमित्यर्थः । तर्हि ब्रह्म प्राप्तस्य देवा-
दिविषयभोगप्राप्तिः, अत्राह—आनन्दप्राप्त्येति ॥ "जक्षन् क्रीडन्नि"त्यादि- P.127-16
वाक्यं ब्रह्मानन्दे जक्षणादिजन्यानन्दान्तर्भावाभिप्रायेण योज्यमि-
त्याह—एवमिति ॥ एवंशब्दपरामृष्टं स्पष्टयति—तद्विषयेति ॥ ब्रह्मा- P.128- 1
नन्दसाक्षात्कारेणैव तत्साध्यानन्दसाक्षात्कारादित्यर्थः । उदाहरण-
व्याजेन वाक्यान्तरमप्येवं योजनीयमित्याह—यथेति ॥ आत्मन्येव
रतिः=अभिरुचिर्यस्य सः, आत्मरतिः । बाह्यसाधना क्रीडा । मनोमात्र-
साधना रतिः । क्रीडादिसुखस्यात्मसुखानन्तर्भावाभिप्रायेण योजनीयत्वे
हेतुमाह—न हीति ॥ द्वितीयापेक्षत्वात् तेषामित्यर्थः । ज्ञानानन्दैश्वर्याणि P.128- 2
ब्रह्मरूपाणि कल्पितावच्छेदानि भूतेष्वनुभूयन्त इत्यत्र भगवद्वचनं साक्षि-
त्वेनोदाहरति—यतश्चेति ॥ यत्र यत्रोपाधौ नात्यन्तमवच्छेदः=कुण्ठनम् P.128- 3
=रागादिभिस्तिरस्करणं नास्ति, तत्र तेषां ज्ञानादीनां समुत्कर्षात् तानि

अभिप्रायप्रकाशिका

इन्द्रादीनां पृथक् पृथगैश्वर्ययुक्तानां कथं ब्रह्मणः सर्वेश्वरत्वमिति? तत्राह—तदैश्वर्येणैवेति ॥ तत्र प्रमाणमाह—एवं चेति ॥

एवमैश्वर्यमुपपाद्य सर्वकामावाप्तिमुपपादयति—सर्वकामेति ॥ भवत्वेवमानन्दप्राप्तिः, तथापि कथं कामशब्दवाच्यविषयाणां प्राप्तिरिति? तत्राह—कामेष्विति ॥ उक्तन्यायं वाक्यान्तरेऽप्यतिदिशति— एवं स तत्रेति ॥ नेदमपूर्वम्; अन्यत्राप्येवं व्यपदेशदर्शनादित्याह—यथेति ॥

ननु—तत्रापि कथमिति? अत आह—न हीति ॥ रति-क्रीडादीनां द्वितीयप्रतियोगिकत्वेनैकस्मिन्नसम्भवादित्यर्थः । स्वरूपभूतानामैश्वर्यज्ञानादीनामिन्द्रादिषु प्रतीतिकल्पितावच्छेदादित्युक्तम् । इममेवार्थं स्मृत्यवष्टम्भेन साधयति—यतश्चेति ॥ अतो यत्र यत्र भूतेषु सत्त्वोत्कर्षतारतम्याद् ज्ञाना-

भावशुद्धिः

तानि भूतानि 'मुनीनामप्यहं व्यासः' इत्यादिनाऽऽत्मत्वेनोक्त्वोपसंजहारे-
त्यर्थः ॥ ज्ञानमात्मस्वरूपमेव कल्पितावच्छेदमित्यत्र श्रुतिरपि प्रमाण-
P.128- 6 मित्याह—तथाऽदृष्टमिति ॥ कूटस्थब्रह्मणः कथं द्रष्टृत्व-श्रोतृत्व-विज्ञातृत्वा-
P.128- 7 दिव्यपदेश इति ? अत्राह—सर्वभूतेति ॥
P.128- 8 सर्वज्ञत्वादिव्यपदेशस्य गत्यन्तरमाचार्यान्तरमतेनाह—अन्ये
त्विति ॥ अनाम-रूपे परमात्मनि नाम-रूपोपदेशस्योपासनार्थत्वे दृष्टा-
P.128- 9 न्तमाह—यथेति ॥ "य एषोऽन्तरादित्ये हिरण्मयः पुरुषः" इत्याद्युपदेशो
यथोपासनार्थः; न परमार्थतः; "अशब्दमि"त्यादिश्रुतिविरोधादित्यर्थः ।
नाम-रूपोपदेशस्य परात्मविषयत्वाभावे युक्तिमाह—न हीति ॥ देश-
विशेषावरोधः=आदित्यमण्डलादिस्थानविशेषस्वीकारः, तथा हिरण्मय-
त्वादिरूपविशेषसंबन्धश्च न युक्त इत्यर्थः ॥

आदित्यमण्डलान्तर्गतः पुरुष आदित्यदेवतैव, न परमात्मेति,
P.128-11 अत्राह—परश्चेति ॥ हेतुमाह—सर्वपाप्मेति ॥ सर्वलोककामेशितृत्व-
श्रवणाच्चेत्यर्थः । परस्य देशविशेषाद्युपदेशो न घटत इति, अत्राह—
P.128-12 [1]आध्यानं त्विति ॥ सर्वज्ञत्वादिगुणोऽप्युपासनार्थमुच्यते ; अन्यथाऽस्थू-
P.128-13 लादिवाक्यविरोधादित्याह—तथेति ॥ प्रकृतमुपसंहरति—तदेवमिति ॥

अभिप्रायप्रकाशिका

ज्ञानादीनां नात्यन्तमवच्छेदः, तानि भूतानि 'मुनीनामप्यहं व्यासः' इत्यादिना-ऽऽत्मत्वेनाभिधाय 'यद्यद्विभूतिमत् सत्त्वमि'त्युपसंजहारेत्यन्वयः। इन्द्रादीनां ज्ञानैश्वर्याद्यतिशय एव परमेश्वरं प्रत्यासक्तिः, एवं ब्रह्मचैतन्यमेव कल्पितावच्छेदं तत्र तत्र द्रष्टृत्वादिरूपेण व्यपदिश्यत इत्याह—तथाऽदृष्टमिति ॥

नाम-रूपोपाधिकत्वादैश्वर्यादीनां न ब्रह्मस्वभावता, किन्तूपासनार्थमध्यारोप इति मतान्तरमाह—अन्ये त्विति ॥ तत्र दृष्टान्तमाह—यथेति ॥ हिरण्यश्मश्रुत्वादि वास्तवमेव किं न स्यादिति ? अत आह—न हीति ॥ तर्हि मा भूत् परमेश्वरः, किन्त्वादित्यः क्षेत्रज्ञ एवास्त्विति, तत्राह—परश्चेति ॥ किमर्थस्तर्हि रूपाद्युपदेश इति ? तत्राह—आध्यानं त्विति ॥ दार्ष्टान्तिकमुपसंहरति—तथेति ॥ अवान्तरप्रकरणमुपसंहरति—तदेवमिति ॥ महा-

1. ध्यानमिति मूलपाठः

भावशुद्धिः

यस्मादेवमुक्तेन प्रकारेण संयोगादिलक्षणा ब्रह्मप्राप्तिरयुक्ता, तस्मात् परिशेषात् स्फटिकस्य रागापकर्षात् स्वरूपाविर्भाववद् जीवस्य ब्रह्मरूपाविर्भावो ब्रह्मप्राप्तिर्मोक्षः। स च तृतीयबोधात्, नान्यतः, अतो न तेन साध्य इत्यर्थः। चोदयति—अथेति॥ तर्हि फलाभावात् तृतीयबोधे विध्यभावः सिद्ध इति, अत्राह—बन्धहेत्विति॥ P.128-15

न खल्वयं विद्यात्मा; तद्विरोध्यपनयो हि तदात्मा स्यात्। न च कर्माणि विद्याविरोधीनीत्यर्थः। तथाविधस्य किमायातम्? तत्राह—तदिति॥ ब्रह्मविद्यायास्तदुद्देशेन विधानाभावात् कथमस्यास्तत्क्षयहेतुतेति? अत्राह—श्रूयते चेति॥

परः=हिरण्यगर्भादिः, अवरः=निकृष्टो यस्मात् तत् ब्रह्म परावरम्, तस्मिन् दृष्ट इत्यर्थः। विद्योदयात् पूर्वमुपार्जितकर्मणामनारब्धफलानां विद्यया दाहे=क्षये वाक्यान्तरमुदाहरन्ति—तद्यथेति॥ नन्वेतत् पापानां क्षयमुपदिशति, न तु पुण्यानाम्, तान्यपि बन्धहेतवः, इति कथं विद्या बन्धहेतुध्वंसिकेति? अत्राह—पाप्मशब्देनेति॥ साधनपारतन्त्र्य-सातिशयत्व-क्षयिष्णुत्वानि पुण्यफलस्यावद्यानि, सेयं भक्तिः। स्वार्थापरिहाण्या चैष भाक्तः प्रयोग इत्यर्थः॥ P.128-16 P.128-17 P.128-18

किं पुनः कारणं भाक्तस्येति, अत्राह—अन्यत्रेति॥ चो हेत्वर्थे। एकवाक्यतायामुपक्रमानुरोधेनोपसंहारवर्णनात् पुण्येऽपि पापशब्दप्रयोग इति, तथाऽत्रापि तत्रैव प्रयुक्त इति गम्यत इत्यर्थः। अपि P.128-19

अभिप्रायप्रकाशिका

प्रकरणमुपसंहरति—सा चेति॥ ब्रह्माविर्भावलक्षणस्य मोक्षस्य साध्यत्वं मा भूत्, कर्मक्षयस्य साध्यत्वात् तदर्थमात्मज्ञानं विधीयतामित्याशङ्कते—अथ मतमिति॥ तत्र प्रमाणमाह—श्रूयते चेति॥ पापस्यैव कर्मणः क्षयो दर्शितः, न पुण्यस्य, तत् कथं कृत्स्नस्य बन्धहेतोः क्षय इति? अत आह—पाप्मशब्देनेति॥ पाप्मशब्देन पुण्यस्य लक्षणायां कारणमाह—सावद्येति॥ न चैतदपूर्वम्; अन्यत्रापि प्रकृतयोः सुकृत-दुष्कृतयोरविशेषेण पाप्मशब्दप्रयोगादित्याह—अन्यत्र चेति॥ कर्मक्षयस्य साध्यत्वे श्रुतिमुक्त्वा युक्तिमाह—न चेति॥ विद्यया कर्मक्षयाभ्युपगमे कर्मणः फलसाधनत्वप्रतिपादिका श्रुति-

ब्रह्मसिद्धिकारिका

प्रायश्चित्तदिशा बन्धहेतूच्छेदोऽपि नो ततः ।
सर्वाविद्याप्रविलये न छेद्यमवशिष्यते ॥ १४३ ॥
बन्धहेतुरविद्यात्मा विद्यायां साऽस्तमागता ॥ १४३½ ॥

---

भावशुद्धिः

चेयं ब्रह्मविद्या क्षेमप्राप्तिफलाऽऽम्नायते। न चेयं सत्यपि पापक्षयेऽनुपहत-पुण्या क्षेमाय कल्पते ; पुण्य-पापयोर्बन्धहेतुत्वाविशेषात् । तदनया
P.129-1 क्षेमप्राप्तिफलया पापमिव पुण्यमपि क्षेप्तव्यमित्याह—न च तदिति ॥
अप्राप्तफलानां कर्मणां न क्षयः; "नाभुक्तं क्षीयते कर्म कल्पकोटि-
P.129-2 शतैरपी"ति स्मृतेरिति, अत्राह—न चेति ॥ स्मृतिरज्ञस्याकृतप्राय-श्चित्तकर्मविषयेत्यर्थः । तस्मात् कर्मक्षयोऽवश्योपेय इति निगमयति—
P.129-3 तस्मादिति ॥ मुक्तिसाधनविधिं प्रस्तुत्य कर्मक्षयसाधनं ब्रुवतो विरोध
P.129-4 इत्याह—सैवेति ॥ लिङ्गभाजनं हेतुमाह—बन्धन इति ॥ 'मुचिर् मोक्षणे' इत्यस्य धातोरित्यर्थः । मुक्तेः साध्यत्वे स्यादनित्यत्वं घटादि-
P.129-5 वदिति, अत्राह—एवं चेति ॥ १४१, १४२ ॥
P.129-6 परिहरति—तत्रोच्यत इति ॥

कारिकाविवरणम्

ततः=ब्रह्मदर्शनात्, प्रायश्चित्तेनैव बन्धहेतूच्छेदः,
P.129-8 कर्मक्षयो नो भवति। हेतुमाह—सर्वाविद्येति ॥ अविद्या-

अभिप्रायप्रकाशिका

विरुध्येतेति, अत आह—न चादत्तेति ॥ न च—गृहदाहादिवद् दोष-संयोगस्य निमित्तत्वमात्रमिति—शङ्कनीयम् ; श्रूयमाणदोषस्य क्षये प्रायश्चित्त-विधानफले सम्भवति फलान्तरस्य, नैष्फल्यस्य वा कल्पयितुमयुक्तत्वादिति भावः । विद्याया मोक्षफलत्वात् कथं कर्मक्षयहेतुत्वमिति ? अत आह—सैव चेति ॥ १४१, १४२ ॥

कारिकाविवरणम्

अविद्यानिवृत्तावपि कथं कर्मनिवृत्तिरित्याशङ्क्य, कर्मणामविद्यात्मकत्वादुपपन्नमेतदित्याह—बन्धहेतुरिति ॥ १४३, १४३½ ॥

भावशुद्धिः

कारिकाविवरणम्

निरासेऽपि कुतो न कर्मणामवशेष इति? अत्राह— P.129-9
बन्धहेतुरिति ॥ १४३, १४३१/२ ॥

ब्रह्मसिद्धिविवरणम्

ज्ञानस्याज्ञानमात्रविरोधिनो न कर्मनिवर्तकत्वम्, इति तन्निवृत्त्यर्थं दर्शनविधिरुक्त इति, अत्राह—बन्धहेतुध्वंसोऽपीति ॥ तदुपपादनाय P.129-10
तद्व्यापारमाह—तदिति ॥ विद्योदयेनाविद्या निवर्तताम्, कर्मनिवृत्तेः किमायातम्? अत्राह—कर्मफलेति ॥ स्वापे विक्षेपरूपाविद्यानिरासेऽपि P.129-11
न कर्मादि निरस्यत इति, अत्राह—तत्रेति ॥ अनवयवेन=कात्स्न्र्येनेति यावत्। यद्यपि न स्वरूपेण विद्या कर्माशयविरोधिनी, (तथापि) तन्निदानाविद्याविरोधिरूपाऽविद्याकल्पितकर्माशयविरोधिनी तोयमिव धूमस्येत्यर्थः। अविद्यानिदानत्वमेव कर्मणामसिद्धमिति, अत्राह— P.129-12
अविद्येति ॥ कूटस्थात्मनि पारमार्थिककर्मायोगादित्यर्थः। अद्वैतदर्शने कर्मफलभोगस्यानवकाशे हेतुमाह—भेददर्शनेति ॥ अविद्यानिवृत्त्यैव P.129-14
कर्मनिवृत्तौ श्रौतं लिङ्गमाह—यतश्चेति ॥

अनुशयनिमित्तमुद्धाटयति—नन्विति ॥ मा भूद् जीवन्मुक्तिः, P.129-18
का नः पीडेति? अत्राह—तत्रेति ॥ यस्यापि विद्यैव कर्माण्युच्छिनत्ति, P.129-19
न तस्यापि देहपातप्रतीक्षोपपत्तिरिति, अत्राह—यस्य त्विति ॥ तदनु- P.129-20
सारेण=शास्त्रानुरोधेनेत्यर्थः। शास्त्रानुसारं स्फोरयति—तत्र क्षीयन्ते P.130-1

अभिप्रायप्रकाशिका

ब्रह्मसिद्धिविवरणम्

भवत्वविद्याव्यवहारस्य प्रविलयः, कर्मफलभोगस्य किमायातमिति? अत आह—कर्मफलेति ॥ तत् प्रपञ्चयति—अविद्याध्यस्तानीति ॥ विद्योदये भोगहेतूनामभावादपि न कर्मफलभोगसम्भव इत्याह—तद्विपाकस्येति ॥ अज्ञानकार्यसंशयादिभिः सह पाठादपि कर्मणामविद्योच्छेदेनैवोच्छेद इत्याह—यतश्चेति ॥

विद्याया अविद्यानिवर्तनद्वारेण सकलकर्म(क्षय)हेतुत्वे जीवन्मुक्तिश्रुतिविरोध इति शङ्कते—नन्विति ॥ कर्मक्षयाय ज्ञानविधिपक्षेऽपि समानमिति, अत आह—यस्य त्विति ॥ तदनुसारेण=शास्त्रानुसारेण। पूर्वोक्तमेव प्रपञ्चयति—तत्रेति ॥ ननु—अस्मिन् वाक्ये देहपातावधिमत्त्वमेव मुक्तेः

भावशुद्धिः

चेति । "तस्य तावदि"ति देहपातप्रतीक्षामाह, न तु सर्वकर्मक्षया-
P-130- 4 भावम्, अत्राह—न हीति ॥ अस्मिन्नर्थे पारमर्षं सूत्रं पठति—तदुक्त-
मिति ॥ "तदधिगम उत्तरपूर्वाघयोरश्लेष-विनाशौ", "तद्व्यपदेशादि"-
ति स्थिते किं पूर्वयोरनारब्धफलयोरेव विनाशः, किं वाऽऽरब्धफल-
योरपीति विशये सत्यविशेषात् कर्ममात्रस्य नाश इति प्राप्ते सूत्रित-
मित्यर्थः । संपद्यते=मुच्यत इति यावत् । अयमेव विभागो ममापि
P.130- 6 भवेत्, अत्राह—विद्यया त्विति ॥ तथाचाऽऽचार्यस्योपदेष्टुरभावाद् विद्यापि
न स्यादित्याशयः । न्यायबलेनायं नियम उच्यते, श्रुतिबलेन वेति विक-
P.130- 7 ल्प्याऽऽद्यं दूषयति—नैष दोष इति ॥ न खलु नाम-रूपप्रपञ्चविलयात्मा
विद्याविभवः कञ्चिदेव कर्माशयं क्षिणोति, न सर्वमिति नियमहेतुरस्ति ।
न खलु समानदहनसंपर्कभाजां कलमबीजानां कस्यचिदेव बीजभावो
विगच्छति, न सर्वेषामिति नियमहेतुरित्यर्थः ॥ द्वितीयं दूषयति—
न हीयमिति ॥ 'तस्य तावदि'ति श्रुतिश्चिरत्वं मुक्तेर्न प्रतिपादयति,
किन्तु विदुषः क्षिप्रमुक्तिरिति प्रतिपादयतीत्यर्थः । 'चिरकालतामि'ति
द्वितीयान्तपाठे विशिष्टश्चरमो देहस्तत्पात एवावधिरस्यां चिरकालता-
P.130- 8 यामित्यर्थः । अत्रैव लौकिकप्रयोगमुपन्यस्यति—यथा कश्चिदिति ॥
एवमियमपि श्रुतिः क्षेपीयस्ताप्रतिपादनपरेति कुतोऽवगम्यते ? अत्राह—

अभिप्रायप्रकाशिका

श्रूयते, न तु कर्मणामवस्थानम्, अथ कर्मणामनवस्थाने श्रूयमाणो विधिरेवानु-
पपन्नः स्यादिति चेत्, सत्यम्; तथाप्यतुल्यबलत्वात् श्रुतार्थापत्त्या श्रुति-
व्यवस्थापनमनुपपन्नम्; तुल्यबलयोर्हि विशेषाभावे न व्यवस्थेति, मैवम्,
अर्थापत्तिबाधे देहपातावधिश्रुतेरेव बाधप्रसङ्गाद् व्यवस्था युक्तैवेत्यभिप्रेत्याह—
न हीति ॥ उक्तेऽर्थे सूत्रमुदाहरति—तदुक्तमिति ॥ इतरपक्षेऽप्येतत
समानमिति, मैवम्; दृष्टसामर्थ्यात् कर्मक्षयाभ्युपगमे सर्वस्य निवृत्तिप्रसङ्गा-
दित्याह—विद्यया त्विति ॥

प्रथमं तावदेकदेशिमतेन परिहरति—न हीति ॥ चिरकालविशिष्टा-

भावशुद्धिः

अन्यथेति ॥ "तावदेवे''ति विशेषणमनर्थकं स्यादित्यर्थः । व्यतिरेकमु- P.130-10
खेनोक्तार्थमन्वयमुखेनाह—तावदेवेतीति ॥ प्रतीक्षणीयोऽस्ति देहपात P.130-11
इति, अत्राह—देहपातेति ॥ P.130-12

देहपातस्यावधित्वेनाविवक्षितत्वे "यावन्न विमोक्ष्ये" इति न वाच्यं स्यादिति, अत्राह—अथवेति ॥ चिरत्वं पक्षे प्राप्तमिति शेषः । P.130-14
उभयमपि विधेयं किं न स्यात्? अत्राह—अन्यथेति ॥ कस्तदा वाक्यस्य
विवक्षितोऽर्थ इति? अत्राह—तत्रायमर्थ इति ॥ यस्य कस्यचिद्विदुषः P.130-15
प्रारब्धकार्यकर्मक्षयेऽपि संस्कारविशेषादाभासमात्रेण सांसारिकधर्मानुवृत्तिः, ततस्तस्यापि तावदेव चिरम्, न यावद् देहपातः, पतिते तु देहे तस्मिन्न पुनर्देहान्तरारम्भस्तस्य भवति; संस्कारस्य कालपरिपाकवशात्
स्वकार्येण निरोधादित्यर्थः । चोदयति—नन्विति ॥ वाक्यस्य क्षेप्यपर- P.130-17
त्वमिति पूर्वस्मिन्नित्यर्थः । ज्ञानोदये सर्वक्षयात् किमनूद्यते, किं वा

अभिप्रायप्रकाशिका

वधिमेव कस्मान्न प्रतिपादयेदिति? अत आह—अन्यथेति ॥ देहपातव्यतिरेकेण मुक्त्यसम्भवात् तथापि चिरत्वमर्थसिद्धमिति? अत आह—देहेति ॥

इदानीं सिद्धान्तमाह—अथवेति ॥ उभयं प्रतिपाद्यतामिति, अत आह—अन्यथेति ॥ अस्मिन् पक्षे वाक्यस्यार्थमाह—तत्रेति ॥

पक्षद्वयमप्याक्षिपति समर्थयितुम्—नन्विति ॥ तत्र प्रथमं पक्षं समर्थयते—स्थितप्रज्ञ इति ॥ द्वितीयपक्षं समर्थयते—न चेति ॥ विद्योत्पत्तावविद्या, तत्कार्यं च निवर्तत एव, उत्तरकालीन-भोगानुवृत्तिस्तु संस्कारादेवेत्यविरोध इत्यर्थः ॥

तर्हि कथं 'यदि कस्यचिच्चिरमि'ति चिरत्वस्य पाक्षिकत्वं दर्शितमिति? तत्राह—तत्र कस्यचिदिति ॥ संस्कारानुवृत्त्यननुवृत्तिभ्यामुपपद्यत एवायं भेद इति दृष्टान्तेनोपपादयति—यथेति ॥ दार्ष्टान्तिकमाह—तथा सर्वेति ॥

अविद्यानिवृत्तावपि संस्कारात् भोगानुवृत्तौ वर्तमानदेहपातोत्तरकालमपि देहान्तरं सम्पाद्य संस्कारो भोगं सम्पादयेत्, अतो विद्याया मोक्षसाधनत्वं न नियतं स्यादिति शङ्कते—नन्विति ॥

भावशुद्धिः

P.130-19 विधीयत इति । द्वितीयोऽप्यनुपपन्न इत्यर्थः ॥ परिहरति—उच्यत
इति ॥ स्थितप्रज्ञस्तावन्न साक्षात्कृतब्रह्मा, किन्तु शमादियुक्तश्रवणा-
दिनिष्ठो नैरन्तर्येण श्रवणाद्यनुतिष्ठन्; अतस्तस्य देहधारणं युक्त-
P.130-21 मित्यर्थः ॥ द्वितीयपक्षेऽपि नानुपपत्तिरित्याह—न च ब्रूम इति ॥
P.131- 1 कथं तर्हि क्षैप्र्यमुक्तम्? अत्राह—तत्रेति ॥ प्रारब्धकर्मसंस्कारस्य
विद्योदयादेव क्षये तदैव मुक्तिः, अपरथा कियान् क्षेप इत्यर्थः । मिथ्या-
ऽध्याससाम्येऽपि तत्संस्कारानुवृत्त्य(ननु)वृत्तिवैचित्र्ये दृष्टान्तमाह—यथेति॥
संस्कारादिति ॥ अनिष्टजिहीर्षाजनितप्रयत्नवदात्मसंयोगादुत्पन्नं कर्म
शरीरे संस्कारं वेगाख्यमारभते । स च निवृत्तेऽपि भये किंचित्काल-
मनुवर्तमानो यावत् प्रबलं कर्मप्रवाहमारभ्य दुर्बलम्, कुतश्चिदपि, मूर्तद्रव्य-
P.131- 4 संयोगमात्रान्निवर्तत इत्यर्थः । दार्ष्टान्तिकमाह—तथेति ॥ तत्र स्मर्य-
माणः सर्प एव कम्पाद्यनुवृत्तिकारणम्, न संस्कार इत्याशङ्क्योदाहरणा-
P.131- 5 न्तरमाह—कुलालेति ॥
P.131- 7 मूलकारणतुल्यफलत्वं संस्कारस्य मन्वानश्चोदयति—नन्विति ॥
P.131- 8 अनुवर्तताम्, का नो हानिः? अत्राह—तत्रेति ॥ तथापि किमनिष्टम्?
तत्राह—तथाचेति ॥ निदानस्याज्ञानस्य प्रशमाद् निदानिनः संस्कारस्य
P.131- 9 प्रशम इत्याह—अथेति ॥ तर्हि विद्योदयसमसमयमेव संस्कारवृत्तिः स्या
P.131-10 दिति दूषयति—क्षणमपीति ॥ स एव=देहपातावधिश्रुतिविरोध
एवेत्यर्थः ॥

अभिप्रायप्रकाशिका

उक्तं चोद्यं दृष्टान्तेन परिहर्तुं दृष्टान्तं प्रथममुपपादयति—यथेति ॥ संस्कारानुवृत्तिरस्तीत्येतावता न पक्ष(?)धर्मश्चिरमनुवर्तत इत्याह—न च भयेति ॥ संस्कारादपि कम्पाद्यनुवर्तते चेत्, भ्रमाभ्रमवतोः को भेद इति? अत आह—न च मूलेति ॥ भ्रमनिवृत्तावपि कम्पादीनामनुवृत्तौ कथं तन्निवृत्तिरिति? तत्कारणसंस्कारस्य विनाशित्वादित्याह—न च स्थायीति ॥ अस्थायित्वमेवोपपादयति—अन्यथेति ॥ संस्कारस्य निवर्तकाभावे कथं तन्निवृत्तिः? न च तत्त्वज्ञानं निवर्तकम्; तद्भावेऽपि भावादिति, अत आह—न च भयेति ॥ तर्हि तत्त्वदर्शनसमय एव तन्निवृत्तिः स्यादिति, अत आह—तत एव हीति ॥ तत्त्वदर्शनसंस्कार उपचीयमानो विपर्ययसंस्कारं निवर्तय-

भावशुद्धिः

निदाननिवृत्तावपि किंचित्कालमनुवृत्तिः संस्कारस्य स्वभाव इति परिहरति—उच्यत इति ॥ यदुक्तम्—देहपातादुत्तरकालेऽप्यनुवर्तेते- P.131-11
ति, तत् प्रत्याह—न चेति ॥ भयवत्संस्कारस्य कम्पादिहेतोरनाभासं कम्पादिजनकत्वम्, चिरकालावस्थायित्वं च स्यादिति, अत्राह—न च P.131-12
मूलेति ॥ कुत इति ? अत्राह—अन्यथेति ॥ संस्कारोऽत्र वेगाख्यः । P.131-13
अविद्यासंस्कारस्य निवर्तकमस्ति चेत्, तस्यापि निवर्तकान्तरमित्यन-वस्था, न चेत्, अनिवृत्तिरित्याशङ्कां परिहरन्नाह—न च भयेति ॥ P.131-14
तत्त्वदर्शनात्=रज्जुतत्त्वज्ञानादिति यावत् । हेतुमाह—तत एवेति ॥

तत्त्वदर्शनाभ्यासपरिपाकक्रमेणेत्यर्थः । कल्पान्तरमाह— P.131-15
स्वयमिति ॥ छिन्नमूलः कम्पसंस्कारः कृतकार्यप्रबन्धो दुर्बलः कुलालचक्र-भ्रान्तिवत् स्वकार्यमात्रान्निवर्तमानो न तु ज्ञानमपेक्षत इति स्वय-मित्युक्तम्, न तु स्वतः कस्यचिद्विनाशो वैनाशिकनयवदित्यर्थः । तदेवं दृष्टान्तं दर्शयित्वा दार्ष्टान्तिके योजयति—तथेति ॥ P.131-16

पूर्वं साधकः स्थितप्रज्ञ इत्युक्तम्, इदानीं साक्षात्कृतब्रह्मैव स इत्यङ्गीकारेऽपि न विरोध इत्याह—स चायमिति ॥ "प्रजहाति यदा P.131-18

अभिप्रायप्रकाशिका

तीत्यर्थः । स्वयमेव वेति ॥ कार्यनाश्यत्वाभिप्रायेणोक्तम्, न तु सौगतवत् स्वरसभङ्गित्वाभिप्रायेण ॥

दृष्टान्तोक्तमर्थं दार्ष्टान्तिके समर्पयन्नाह—तथेति ॥ अस्मिन् पक्षे स्थितप्रज्ञलक्षणकथनमप्युपपन्नमित्याह—स चेति ॥ ईदृशि पुरुषे "प्रजहाति यदा कामानि"त्यादीनि भगवद्गीतोक्तलक्षणान्युपपादयति—वीतकाम इत्यादिना ॥ अत्रैव दृष्टान्तमाह—यथेति ॥ उक्तेऽर्थे प्रमाणमाह—यथा-ऽहिनिर्ल्वयनीति ॥ अहिनिर्ल्वयनी=अहिनिर्मोकः, तन्मुक्ता त्वक् । सति संसारसंस्कारे कथमनास्थेति ? अत आह—यत इति ॥ दृष्टान्तोक्तमर्थं दार्ष्टान्तिके समर्पयति—नाचिरकालानुवृत्तिरित्यादिना ॥ विदुषः प्रारब्ध-कर्मणां भोगेन क्षपणावस्था जीवन्मुक्तिः, तेषामेवाभावे कथं जीवन्मुक्तिरिति ? अत आह—सा चेति ॥ भोगाभासानुवृत्तिरेव विदुषो जीवन्मुक्तिरिति

भावशुद्धिः

P.131-21 कामानि"त्यादितल्लक्षणवचनार्थं संक्षेपतो दर्शयति--विगतेति ॥ संस्कारमात्रात् द्वैतदर्शनाभासं सोदाहरणमाह—यथा खल्विति ॥ नोदाहरणमात्रादर्थसिद्धिः ; प्रमाणाधीनत्वात् प्रमेयसिद्धेः, इति तन्मानमाह–
P-132- 1 तथाचेति ॥

अविद्यावत्, तत्संस्कारो निरूढाभिनिवेशादिकार्यं कुर्यादिति,
P.132- 3 अत्राह—यत इति ॥

जीवन्मुक्तोऽपि विद्वानाचार्यो विद्योपदेष्टा न सिध्यतीति,
P.132 6 अत्राह--सा चेयमिति ॥ न चैष दुर्बलतनुः संस्कारो देहान्तरारम्भाय कल्पते; तत्कारणोपार्जितदेहपातादेव तन्निवृत्तिप्रतीतेः, अन्यथा तद्पातप्रसङ्गादित्याह—आरब्धकार्येति ॥ तत्क्षयगमकं फलं स्पष्टयति–
P.132- 7 तदनुवृत्ताविति ॥ प्रारब्धकर्मसंस्काराद् देहान्तरे फलोपभोगाभावे हेत्व-
P.132- 9 न्तरमाह--येन हीति ॥

अनारब्धकार्यकर्मसंस्काराद् देहान्तरारम्भः स्यादिति, अत्राह—अनारब्धेति ॥ कर्मत्वमात्रं संस्कारजनकत्वप्रयोजकम्, न तु लब्धवृत्ति-
P.132-10 त्वम्, अलब्धवृत्तित्वं वा ; विशेषणायोगात्, अत्राह—लब्धवृत्तीति ॥
P.132-11 कुत इति ? अत्राह—न खल्विति ॥ फलितं निगमयति--तस्मादिति ॥

P.132 14 संस्कारानुवृत्तेर्न देहापाय इत्युक्तम्, तत्संस्कारं विभजते–अत्र चेति ॥ स पुनरयं लब्धवृत्तिसुकृत-दुष्कृतापूर्वजनितसंस्कारो वासना-वेगाभ्यामन्यः प्रोक्षणादिजनित इव व्रीह्यादिषु नैकान्ततः प्रमाणपद्धति-

अभिप्रायप्रकाशिका

भावः। किञ्च संस्काराद् देहान्तरोपभोगानुवृत्तिं प्रसञ्जयता वक्तव्यं किमारब्धफलं संस्कारादिति, न; दृष्टान्तमाह--न खल्विति ॥ अप्रतिलब्धवृत्तितामेव दर्शयति--अनुपजनितेति ॥ एवं च सति विद्याया नियतफलत्वमपि सिद्ध-मित्युपसंहरति--तस्मादिति ॥

क्वचित् कारणसंस्कारादनुवृत्तिरुक्ता, क्वचित् कार्यसंस्कारात् इति तदुभयं विविच्य प्रपञ्चयति – अत्र चेति ॥ अत्रानुरूपं दृष्टान्तमाह—भयेति ॥

भावशुद्धिः

मभ्यास्ते; तद्विपाकवासनाया इव तत्र तत्र क्लृप्ताया इहापि संभवात्, अतस्तस्मिन्नपरितुष्यन्नाह—कार्यसंस्कारादेवेति। कारणापरितोषं सूचयति। अयं तु बुद्धिभेदः संस्कारमारभत इति भावः। सर्वस्मिन्नपि पक्षे विवक्षितांशमाह—सर्वथेति॥ फलितमाह—अत इति॥ विद्वान् P.132-17
संस्कारसामर्थ्यात् कञ्चित्कालं सशरीरो भवतीत्यत्र कापिलसंवादमाह—तदुक्तमिति॥ P.132-18

प्रारब्धफलस्य कर्मणो ज्ञानेन क्षयायोगात्, तद्बलादेव विदुषः P.132-20
शरीरस्थितिरिति मतान्तरमनुवदति—ये त्विति॥ दूषयति—तदसदिति॥ उपस्थितभोगं कर्म प्रतिबद्धुमशक्यम्; बलवत्त्वादिति, अत्राह— P.133- 1
स्वप्नादीति॥ स्वप्ने खरयानादिना, जागरिते सवितृसुषिरादिदर्शनेनावगतासन्नमरणादिफलकर्मनिवृत्तये शान्तिकादिकर्मविधानानुपपत्त्या प्रवृत्तफलकर्मक्षयो गम्यत इत्यर्थः। स्वपक्षमुपसंहरति—तस्मादिति॥ P.133- 3

चोदयति—नन्विति॥ संस्कार-सुखाद्याभासयोरविद्यात्वे किं हीयत इति? अत्राह—तत्रेति॥ विदुषः सर्वाविद्या न ध्वस्ता, इति न छेद्यमवशिष्यत इति दुरुक्तमित्यर्थः। तयोर्बाधितयोरनुवर्तनादविरोध

अभिप्रायप्रकाशिका

पक्षत्रयेऽपि विवक्षितांशे दृष्टान्तो लभ्यत एवेत्याह—सर्वथेति॥ इदानीं दार्ष्टान्तिकेऽपि विवक्षितमंशं निगमयति—अतो लब्धवृत्तीति॥ उक्तमर्थं सांख्यानां वचनेन द्रढयति—तदुक्तमिति॥

प्रवृत्तफलानां कर्मणां भोगादेव प्रक्षयः, न ज्ञानेनेति मतान्तरमुत्थाप्य दूषयति—ये त्वित्यादिना॥ शान्तिकर्मविध्यन्यथानुपपत्तिरपि प्रारब्धफलानां कर्मणां विद्योदये भोगम्, प्रतिबद्धमुच्छेदं वा सूचयतीत्याह—स्वप्नादीति॥ स्वप्नादिना सूचितः=उपस्थितो विवेको येषां वर्तमानदेहभोग्यकर्मणाम्, तानि=तथोक्तानि, तेषां क्षयार्थानि शान्तिकर्माणि विधीयन्त इत्यर्थः। संस्कारपक्षेऽप्यविद्याशेषोऽभ्युपगन्तव्यः, तथा सति किं संस्कारपक्षावलम्बनेनेति शङ्कते—नन्विति॥ सति बाधके तयोरपि सद्भावो दुर्निरूपः, किं पुनरविद्याया इति परिहरति—उच्यत इति॥ तदेव प्रपञ्चयति—विशुद्धं

भावशुद्धिः

P.133- 5 इति परिहरति—उच्यत इति ॥ विलीनावेव=विलीनकल्पावेव । तत्र
P.133- 6 हेतुमाह—अकिञ्चित्करत्वादिति ॥

अकिंचित्करत्वादिकमेव कथमिति ? अत्राह—विशुद्धमिति ॥
P.133- 7 नित्यमुक्तब्रह्मस्वरूपसाक्षात्कारप्रतिहतस्य न किंचित्करत्वमित्युक्तम्,
अत्र निदर्शनमाह—यथेति ॥ चित्रे स्त्र्याद्याभासो भवतु, अत्र तु
P.133- 8 ब्रह्मात्मनोर्भेदावभासे सत्यात्मनि सुखाद्यवभासो नाभासत इत्याश-
P.133- 9 ङ्क्योदाहरणान्तरमाह—तथाऽवदातमिति ॥ श्यामाद्याभासः प्रलीन एवेति
P.133-11 कुतोऽवगम्यत इति ? अत्राह—तथाचेति ॥ यदि संस्काराद्विदुषः
साक्षात्कृतब्रह्मणोऽपि शरीरस्थित्यादिरभ्युपगम्यते, किं संस्कारपरि-
P.133-13 भाषया ? कर्मण एव(कथं) न स्यादिति चोद्यमुत्थापयति—एवं चेति ॥
कर्मक्षयोऽप्यस्मिन् पक्षे न युक्त इत्याह—कश्चेति ॥ विपाकानुवृत्तौ
P.133 14 कर्मक्षयो नावगन्तुं शक्यत इत्यत्र हेतुमाह—तन्निवृत्त्या हीति ॥ तस्मात्
P.133-15 कर्मण एव शरीरस्थितिः, भोगादेव तत्क्षय इत्याह—तस्मादिति ॥

यदि कर्म स्वरूपेण स्थित्वा फलं प्रयच्छति, तदा विद्वदविदुषो-र्विशेषो न स्यात्, बाधितकर्मानुवृत्तौ वा संज्ञान्तरेण संस्कारपक्ष एवोक्तः स्यादिति दूषयति—तदपीति ॥ आभासमात्रत्वे दृष्टान्तमाह—मणि-कृपा-

अभिप्रायप्रकाशिका

खल्विति ॥ उक्तमर्थं दृष्टान्तेनोपपादयति—यथेति ॥ अनिमित्तत्वात् प्रलीन एवेति शेषः । स्वात्मविपर्यासस्य वा विषयविषयो विपर्यासो नानुरूपो दृष्टान्तः, इत्यनुरूपं दृष्टान्तमाह—तथाऽवदातमिति ॥ अवदातम्, अनवदातं वा तत्त्वम्, आत्मानं वा जानतः खड्गादिषु तद्विपर्ययेण प्रतिभासः प्रलीन एव भवति; शोकाद्यनिमित्तत्वादित्यर्थः ॥

उक्तं परिहारं पूर्वपक्षान्तरेऽप्यतिदेष्टुं पूर्वपक्षान्तरमाह—एवं चेति ॥ फलनिवृत्त्या हि कर्मणां निवृत्तिः, सति फले कथं तन्निवृत्तिरित्याह—कश्चेति ॥ इदानीमुक्तमेव परिहारमतिदिशति—कर्मविपाको हीति ॥

कर्मनिबन्धनायां शरीरस्थितौ कर्मफलमात्मसंस्पर्शि हर्षालम्बनं चाव-भासेत, तद्विलयस्य तु तथाऽनवभासनात् संस्कारादेवानुवृत्तिरिति विशेषः ।

भावशुद्धिः

णेति ॥ श्यामाद्याभासवदित्यर्थः । तदनुवृत्त्याऽपि विपाकोऽनुवर्तत एवेति, अत्राह—न विपाक इति ॥ इष्टलक्षणत्वात् फलस्येत्यर्थः । अन- P.133-17
भिनन्द्यमानत्वे मानमाह—तथाचेति ॥ तत्प्रतीतेराभासत्वेऽपि मान- P.133-18
माह—तथा यस्यामिति ॥ द्वैतदर्शनलक्षणायामित्यर्थः । पश्यतो निशेति P.133-19
व्याघात इति, अत्राह—पश्यत एवेति ॥ वाक्यादेव तत्त्वज्ञानस्योत्पत्ते- P.133-20
रुत्तरकालभाविभावनोपासनादिकं नादरणीयम्; कालविपाकस्य तत्त्वज्ञानप्रती(ति)हतस्याबन्धत्वादिति चोदयति—नन्विति ॥ मन्द-मध्य- P.134- 1
मादि(धि)कारिणां श्रवणमात्रादसंभावनादिग्रस्तं परोक्षमिवापरोक्षम्, P.134- 2
अतो न तेनापरोक्षभ्रमबाध इति परिहरति—उच्यत इति ॥ परोक्षस्य रूपमिव रूपं यस्य, तत् परोक्षरूपमिति विग्रहः । यतः परोक्षापरोक्षविषयरूपभेदः, अतो न विरोध इत्याह—तेनेति ॥ परोक्षरूपस्यापि वस्तु- P.134- 3
बलप्रवृत्तस्य बलवत्त्वाद् बाधकत्वमिति, अत्राह—यथेति ॥ खण्डादौ P.134- 4
माधुर्यसाक्षात्कार एव तिक्तसाक्षात्कारपरिपन्थी, तन्निवर्तयंस्तदनुरूपं व्यवहारं निवर्तयति, पित्तोपहतेन्द्रियस्य तु माधुर्यमवधारयतोऽपि खण्डादेर्न तिक्तसाक्षात्कारो निवर्तते । न च तदनुरूपो व्यवहारः; परोक्षापरोक्षयोरविरोधादित्यर्थः, अर्थक्रियाकारि च भवतीति, अत्राह—तथाचेति ॥ थूत्कृत्य त्यागदर्शनादित्यर्थः । केनोपायेन संसारभ्रम- P.134- 6

अभिप्रायप्रकाशिका

कर्मफलानुवृत्तिरप्यसिद्धा; शोक-हर्षाविषयत्वादित्यर्थः । उक्तेऽर्थे प्रमाणमाह—तथाचेति ॥

तत्साक्षात्कारोत्तरकालं बाधितत्वात् प्रतिभासमानेनापि प्रपञ्चेन संस्पर्शो नास्तीति चेत्, शाब्दज्ञानोत्तरकालमपि प्रपञ्चसंस्पर्शो मा भूत्; बाधितत्वाविशेषादिति शङ्कते—नन्विति ॥

अपरोक्षभ्रमस्यापरोक्षज्ञानमेव निवर्तकम्; न तु परोक्षज्ञानं शाब्दम्; तस्य दुर्बलत्वादिति परिहरति—उच्यत इति ॥ एतदेव दृष्टान्तेनोपपादयति—यथेति ॥ तदेव कस्मादिति? दुःखलक्षणकार्यहेतुत्वादित्याह—तथाचेति ॥

भावशुद्धिः

P.134-7 निवर्तकसाक्षात्कारसिद्धिः ? अत्राह—उपासनादिनेति ॥ निदिध्यासनेन, मननेन चाङ्गेन सहकृतश्रवणेनेत्यर्थः । तत्त्वसाक्षात्कारस्य विपरीताव-
P.134-8 भासनिवर्तकत्वे दृष्टान्तमाह—देवदत्त इवेति ॥

शाब्दोऽद्वैतावगमः क्षणिकः, शब्दाधीनश्च, तदयं शब्दानुसन्धानेन जातोऽपि सहसैव विलीयते ॥

P.134-10 अनाद्यविद्यया, संस्कारेण वा द्वैतानुभवः शाश्वतिकः केनापि(भि)-भूयत इति ? अत्राह—नित्यश्चेति ॥ तृतीयबुद्धिवृत्तिव्यक्तचैतन्यं नित्य-
P.134-11 मित्यर्थः । शाब्दज्ञानस्यापि विपर्ययविरोधित्वात् तेनैवाविनिवृत्तविपर्यय-
P.134-12 स्य पुनर्नावकाश इति, अत्राह—शाब्दं त्विति ॥ कुत इति ? अत्राह—दृष्टं हीति ॥ शाब्दज्ञानाननुसन्धान एव दोषः, तदनुसन्धाने तु न प्रसज्यत इति ॥

P.134-13 चोदयति—अथेति ॥ परिहरति—किमन्यदिति ॥ मनन-निदिध्यासन-सहकृतश्रवणजन्यसाक्षात्कारसंस्कारपाटवात् तत्स्मृतिसन्तान एवोपासनम्, नान्यद्विधेयमस्तीत्यर्थः । प्रकृतमुपसंहरति—तस्मादिति ॥ विद्योत्पत्ते-

अभिप्रायप्रकाशिका

अपरोक्षज्ञानस्य तु निवर्तकत्वम्; सम्भवादित्याह—उपासनादिनेति ॥ शाब्दज्ञानादपरोक्षज्ञानस्य भ्रमनिवर्तकत्वे वैलक्षण्यान्तरमाह—नित्यश्चेति ॥ 'अद्वयात्मप्रकाशोऽसावि'त्युक्तनीत्या साक्षात्कारस्यात्मरूपतया नित्यत्वमुक्तमिति द्रष्टव्यम् । उत्पन्नस्यापि तत्त्वज्ञानस्यानुवृत्तौ पुनर्विपर्ययानुवृत्तिं दृष्टान्तेन दर्शयति—दृष्टं हीति ॥

तर्ह्यनुसन्धीयतां शाब्दमेव ज्ञानं भ्रमनिवृत्तये, किं साक्षात्कारेणेति शङ्कते—अथेति ॥ आह सिद्धान्ती—किमन्यदिति ॥ शाब्दज्ञानातिरिक्तं तदनुसन्धानाख्यमुपासनं चेद् भ्रमनिवृत्तये स्वीक्रियेत, कस्तर्हि तत्साध्यसाक्षात्कारे प्रद्वेषः ? न हि तमन्तरेणापरोक्षभ्रमस्य परोक्षज्ञानमात्रान्निवृत्तिः सम्भवतीति भावः । इदानीं प्रकृतमुपसंहरति—तस्मादिति ॥ दृष्टसामर्थ्येनैव विद्याया अविद्यात्मककर्मक्षयहेतुत्वे स्वाप्नकर्त्रादिबाधे तत्कर्माश्लेषवदविद्या-

ब्रह्मसिद्धिकारिका

न ब्रह्म शब्दधीगम्यं यद्यशक्यो धियो विधिः ॥१४४॥
धीविशेषप्ररूपाय नासिद्धो विषयः क्षमः ।
विधिर्नारूपितपदो धीमात्रं न विधीयते ॥ १४५ ॥

---

भावशुद्धिः

रुत्तरकालीनकर्मनिवृत्तिर्विद्यासाध्या, इति तद्विधिरिति, अत्राह–एवमुत्तरेति॥ P.134-14
तद्विश्लेषेत्यपि सत्यां विद्यायां तया साध्यत इत्यर्थः ॥ तदश्लेषे P.1a4-15
मानमाह—यथेति ॥ तस्य विद्यामात्रत्वे हेतुमाह–कर्तृ-कर्तव्येति ॥ P.134-16

अस्मिन् पक्षे लाभमाह—एवं न विद्याया इति ॥ बन्धहेतुक्षयस्य, मोक्षस्य च विद्यासाध्यत्वे स्यादनेकफलकल्पनेत्यर्थः । "न च पुनरावर्तते" इतिश्रुतीनामपुनरावृत्तिकामो ज्ञानं कुर्यादिति फलविधित्वेन विपरिणामोऽप्यस्मत्पक्षे न कार्य इत्याह—वर्तमानेति ॥ अविद्यानिवृत्ति- P.134-17
रेवैकं फलमन्वय-व्यतिरेकसिद्धमित्यर्थः ॥ १४३, १४३½ ॥

चोद्यान्तरानुवादेन श्लोकान्तरमवतारयति–यदुक्तमिति ॥ P.134-19

कारिकाविवरणम्

विधेरशक्यत्वे हेतुमाह—धीविशेषेति ॥ विधेय- P.134-21

अभिप्रायप्रकाशिका

कल्पितप्रमातृत्वादिबाधे तदाश्रयकर्मभिरप्यश्लेषः शास्त्रोक्तः सिध्यतीत्याह—एवमुत्तरेति ॥ स्वपक्षे लाभान्तरमाह—एवं न विद्याया इति ॥ विद्याया अविद्यानिवर्तक(न)नान्तरीयकतया कर्मक्षयहेतुत्वे क्वचित् कर्मणां क्षयः फलम्, क्वचिदश्लेष इति नानेकफलकल्पना । तदुद्देशेन ज्ञानविधानपक्षे तु सा प्रसज्यत एवेति भावः । "क्षीयन्ते चास्य कर्माणी"त्यादिवर्तमानापदेशानां फलत्वेन विपरिणामो विज्ञानविधानपक्षश्च नास्मन्मते प्रसज्यत इत्याह—वर्तमानेति ॥

यदुक्तम्–शाब्दज्ञानगोचरत्वाभावाद् ब्रह्मणः तत्प्रमित्यर्थमलौकिकं ज्ञानं विधेयम्—इति, तदनूद्य दूषयति—यदुक्तमिति ॥

कारिकाविवरणम्

कुतो विधिरशक्य इति ? अत आह—धीविशेषेति ॥

किं ब्रह्मविशेषितं ज्ञानं विधेयम्, उत केवलम् ? नाद्यः;

भावशुद्धिः

कारिकाविवरणम्

ज्ञानप्ररूपाय=निरूपणाय, शब्दादसिद्धो न क्षमः ; विशे-
षणासिद्धौ विशिष्टासिद्धेः। अनिरूपितविषयो विधिस्तर्हि
P.135- 1 स्यात्, अत्राह—विधिरिति ॥ ज्ञानमात्रगोचरः स्यात्,
अत्राह—धीमात्रमिति ॥ १४४, १४५ ॥

ब्रह्मसिद्धिविवरणम्

वेदान्तैर्ज्ञानमात्रं विधीयताम्, तावताऽपि प्रतिपत्तिकर्तव्यतापरत्वं
P.135- 2 वेदान्तानां सिध्यतीति, अत्राह—न खल्विति ॥ तस्य घटादौ सिद्धत्वा-
दित्यर्थः। किं तर्हि वेदान्तेषु विधेयमिति ? ब्रह्मरूपमितो ज्ञानविशेष
इत्याह—ज्ञानेति॥ अस्तु ब्रह्मविशिष्टं ज्ञानं विधेयम्, अत्राह—न चेति॥
P.135- 3 हेतुमाह—न हीति ॥ अखण्डापरोक्षब्रह्मज्ञानमनूद्य तत्कर्तव्यताबोधना-
संभवादित्यर्थः। सिद्ध एव तर्हि ज्ञानविशेषो विधीयतामिति,
अत्राह—ज्ञानस्य चेति ॥ "अर्थेनैव विशेषो हि निराकारतया धिया-
P.135- 4 मि"ति न्यायादित्यर्थः। तथापि किं हीयत इति ? अत्राह—न चेति ॥
"नागृहीतविशेषणा विशेष्ये बुद्धिरि"ति न्यायादित्यर्थः। मानान्तरात्
सिद्धं ब्रह्म ज्ञाननिरूपकं भविष्यतीति, अत्राह—न चात्मेति ॥ रूपादिहीन-

अभिप्रायप्रकाशिका

कारिकाविवरणम्

ब्रह्मणोऽसिद्धौ तद्विशेषितज्ञानासिद्धेरित्यर्थः। नापि द्वितीय
इत्याह—धीमात्रमिति ॥ तस्य सिद्धत्वेन वैयर्थ्यादित्यर्थः ॥
१४४, १४५ ॥

ब्रह्मसिद्धिविवरणम्

विधेयं परिशेषयति—न खल्विति ॥ अस्तु स एव विधेय इति,
अत आह—न चाप्रसिद्ध इति ॥ नियोगविषयः स्वरूपेणास्ति चेत्, तावतैव
नियोगोऽस्ति, अत आह—न हीति ॥ अस्तु तर्हि प्रसिद्धिरिति, अत आह—
ज्ञानस्य चेति ॥ अस्तु, किमेतावतेति ? अत आह—न चेति ॥ ज्ञान-
विशेषणस्यात्मनोऽप्रसिद्धेर्न तद्विशिष्टं ज्ञानं प्रसिद्धं स्यादित्यर्थः। अस्तु तर्हि
तस्य शाब्दादन्यत एव प्रसिद्धिरिति, अत आह—न चात्मस्वरूपेति ॥
अशनायाद्यतीतं रूपं ज्ञानविशेषणीभूतस्यात्मनोऽन्यतोऽप्रसिद्धमित्यर्थः। तथा

ब्रह्मसिद्धिकारिका

विधिः स्वसिद्धिनिष्ठो वा क्रियासिद्धिपरोऽथवा ।
अद्वैतब्रह्मतत्त्वस्य प्रतिपत्तिरहेतुका ॥ १४६ ॥
विनियोगादधिगतिर्याऽस्या ज्ञानक्रियार्थता ।
अतत्परा न प्रमाणं साऽर्थवादोत्थबुद्धिवत् ॥ १४७ ॥
विधिः क्रियागोचरत्वान्न द्रव्ये व्यापृतिक्षमः ।
सत्तान्वयात्तु तत्सिद्धिः प्रत्युतेति स दुष्यति ॥ १४८ ॥
विशिष्टान्यक्रियाबोधः प्रमाणं च विशेषणे ।
प्रतिपत्तिर्विशिष्टाऽपि विषयस्य नियोगतः ॥ १४९ ॥
सत्तां न साधयत्येव समारोपेण संभवात् ॥ १४९½ ॥

भावशुद्धिः

त्वेन तदगोचरत्वादित्यर्थः ॥ अखण्डापरोक्षरूपस्य शब्दादपि प्रती- P.135- 5
त्यनङ्गीकारेऽनिष्टं फलितमाह—शब्दादपीति ॥ १४४, १४५ ॥

विषयासिद्ध्या विधिर्न सिध्यतीत्युक्त्वा विधिः स्वसिद्धिनिष्ठः, स्वविषयसिद्धिनिष्ठो वेति ब्रुवतो विरोध इति, अत्राह—[1]अपि वेति ॥ P.135- 7
वेति मतभेदोपन्यासः ॥

कारिकाविवरणम्

पदार्थानां परस्परान्वयात् "आत्माऽपहतपाप्मे"त्यादे-

अभिप्रायप्रकाशिका

सति किं फलितमिति ? अत आह—शब्दादपीति ॥ १४४, १४५ ॥

उत्तरश्लोकं तात्पर्यकथनेनावतारयति—अपि चेति ॥

कारिकाविवरणम्

स्वसिद्धिनिष्ठ इति प्राभाकराभिप्रायेण, क्रियासिद्धिपर इति भाट्टानुसारेणोक्तम्। उभयथाऽप्यन्यपरत्वात् तव तद् न सिध्यतीत्याह—अद्वैतेति ॥ यद्यपि विधिवाक्यान्न प्रतीयते वस्तु; तथापि "य आत्माऽपहतपाप्मे"त्याद्यवान्तरवाक्यं वस्तु प्रतिपाद्य विधिवाक्येनैकवाक्यतां याति, ततो विधि-

1. अपि चेति मूलपाठः ।

### भावशुद्धिः

### कारिकाविवरणम्

P.135-11 ब्रह्मतत्त्वधीः स्यादिति, अत्राह—विनियोगादिति ॥ अन्या-
धिगते ज्ञानक्रियार्थता=ईदृग् ब्रह्म ज्ञातव्यमित्येवम्परता। अतः साऽधिगतिर्न तत्त्वे मानम्; अर्थवादार्थबुद्धिवत्, यत्परः शब्दः स शब्दार्थः। अथ ब्रह्मस्वभावपर एव
P.135-13 कस्माद् न विधिरिति? अत्राह—विधिः क्रियेति ॥ न
केवलं सिद्धत्वेन विधिविषयत्वाभावः, सत्तान्वयेन कालसंभेदादपि न तद्विषयत्वम्। न खल्वयं कालत्रयासंभिन्नार्थावगाही तत्संभिन्नमर्थमभिनिविशत इत्याह—
P.135-14 सत्तान्वयात्त्विति ॥ अविधेयकालत्रयान्यतमविशिष्टसत्ता-
नुगमेन तत्सिद्धिर्विरोधिनीत्यर्थः। ब्रह्मविशिष्टज्ञाननियोगे प्रमाणं बोधो विशेषणे ब्रह्मण्यपि मानमिति,
P.135-15 अत्राह—विशिष्टेति ॥ प्रतिपत्तितोऽन्या विशिष्टा या
क्रिया, तद्बोध इत्यर्थः। विशेषणं विना विशिष्टायोगात्

### अभिप्रायप्रकाशिका

### कारिकाविवरणम्

परादपि वाक्याद्वस्तुसिद्धिरिति, अत आह—**विनियोगादिति** ॥ विनियोगात्="य आत्माऽपहतपाप्मा" इत्यादिपदानां परस्परसम्बन्धात्, या हि विनियोगादधिगतिः, सा न प्रमाणं क्रियार्थत्वेन; अतत्परत्वात्; प्रमाणान्तरविरोधे देवताधिकरणन्यायस्याप्रवृत्तेरित्यर्थः। मा भूत् तर्हि क्रियापरो विधिः, अस्तु वस्तुपर एवासाविति, अत आह—**विधिः क्रियेति** ॥ किंच वस्तुनो भूतादिकालानामन्यतमकालान्वयित्वेन प्रतीतेः, विधेयस्य च तथाऽभावाद्वस्तुपरत्वे न विधिसिद्धिरित्याह—**सत्तान्वयादिति** ॥ यथा "सोमेन यजेत" इत्यादौ विशेषणतया सोमादिद्रव्यस्य प्रमितिः, तथाऽऽत्मनो विधीयमानप्रतिपत्तिविशेषणतया प्रमितिः किं न स्यादिति? अत आह—**विशिष्टेति** ॥ क्रियाविधेर्विशेषणे प्रामाण्येऽपि प्रति-

भावशुद्धिः

कारिकाविवरणम्

प्रतिपत्तिरेव विशेषणं साधयेदिति, अत्राह—प्रतिपत्ति- P.135-16
रिति ॥ १४६, १४७, १४८, १४९, १४९½ ॥

ब्रह्मसिद्धिविवरणम्

अद्वैतब्रह्मज्ञानं कार्यमिति वाक्यं नियोगकर्तव्यतापरम्, तद्वि-
षयकर्तव्यतापरं वेति विकल्प्याऽऽद्यमपवदति--यदि तावदिति ॥ P.135-18
द्वितीयमुत्थापयति--अथेति ॥ दूषयति–तथापीति ॥ पर्यवसित इत्य- P.135-19
नुषङ्गः। पक्षद्वयेऽपि साधारणं दूषणमाह–उभयथेति ॥ विधायकवाक्यस्य P.135-20
ब्रह्मणि मानत्वाभावेऽपि वाक्यान्तरात् ब्रह्मसिद्धिरिति चोदयति— P.135-22
स्यादेतदिति ॥

"सर्वमिदं ब्रह्मे"ति ज्ञानं कर्तव्यमिति नियोगात्, अन्यथाऽनु-
पपत्त्या वा वस्तुसिद्धिरित्याह—अन्यथा वेति ॥ तद्वाक्यं नियोगपर- P.135-23
त्वाद् न यथाश्रुतार्थे मानमिति परिहरति–तच्च नेति ॥ एतद् विशदयति–
सा हीति ॥ सा=प्रतिपत्तिरित्यर्थः । वृत्तान्तेषु=यथाश्रुतार्थो रुद्ररोदना-
दिष्विति यावत्। ब्रह्मविषयाद् नियोगाद् ब्रह्मसिद्धिः; निर्विषयनियोगा-
योगादिति, अत्राह—न चात्मेति ॥ तथाभावात्=अनुष्ठेयत्वात्। दध्या- P.136-3
दिगुणे दृष्टो नियोग इति, अत्राह—सिद्धवदिति ॥ "अग्निहोत्रं जुहो- P.136-4

अभिप्रायप्रकाशिका

कारिकाविवरणम्

पत्तिविधेर्न स्वविषयभूते विशेषणे प्रामाण्यम्; आरोपितविषयप्रतिपत्तेरपि "योषा वाव गौतमाग्नि"रित्यादौ विधानदर्शनादित्यर्थः ॥ १४६, १४७, १४८, १४९, १४९½ ॥

ब्रह्मसिद्धिविवरणम्

तथापि विषयसिद्धौ पर्यवसितः ॥ सहशब्देनेत्यनुषङ्गः ॥ अन्यथा वेति ॥ "एष त आत्मे"त्यादिवैयधिकरण्येन सम्बन्धं दर्शयति ॥

'विधिः क्रियागोचरत्वादि'त्यादि श्लोकभागं व्याचष्टे—न चात्मतत्त्वमिति ॥ क्रियावदेव वस्तुन्यपि व्यापारो भविष्यतीति, अत आह—सिद्धवदिति ॥ 'सत्तान्वयादि'त्येतद् व्याचष्टे—प्रत्युतेति ॥

भावशुद्धिः .

ती'ति वाक्यान्तरसिद्धहोमानुवादेन क्रियोपरक्तसाध्यरूपगोचर एव
तत्रापि नियोग इत्यर्थः । द्रव्यस्य नियोगायोग्यत्वाच्च न तद्विधिरि-
P.136- 5 त्याह—प्रत्युतेति ॥ 'स दुष्यती'त्येतद् व्याचष्टे—तस्मादिति ॥

P.136- 7 विधेयव्या(स्या)पि कालातिरिक्तस्य वस्तुनः कालसंबन्धितया
प्रतीतेर्न दोष इति, अत आह—न हीति ॥ कुत इति ? अत्राह—न हि
यजेतेति ॥

P.136-9 लिङादियुक्तवाक्याद् नियोगस्य भविष्यत्कालोपरक्ता सत्ता प्रती-
यत इति चोदयति—नन्विति ॥ दूषयति—नैतदिति ॥ नियोगस्य,
नियोगविषययागस्य वा भविष्यत्कालसत्तावगमे विषयस्यावश्यमनु-
ष्ठानेन भवितव्यम्; अन्यथा प्रमाणस्य निरालम्बनत्वप्रसङ्गात् । एवं च
P.136-10 विहितस्याकरणमेव न सिध्येदित्यर्थः ॥ अस्तु को दोषः ? तत्राह—
विहिताकरणेति ॥

वस्तुनि विध्यभावेऽपि ज्ञानविधेरेव वस्तुसिद्धिरिति चोदयति-
P.136-11 नन्विति ॥ विशिष्टविधेर्विशेषणसिद्धौ वैदिकोदाहरणमाह—यथेति ॥
सत्य-ज्ञानानन्तानन्दलक्षणं ब्रह्म ज्ञातव्यमित्यनेकविशेषणविशिष्टज्ञान-
P.136 12 विधानात्, विशेषणकलापसिद्धौ लौकिकोदाहरणमाह–तथा अङ्गदीति ॥
व्यूढोरस्कः=विशालवक्षाः ॥

विशिष्टप्रतीतेर्विशेषणप्रतीतकार्यत्वाद् विशेषणप्रतीतेः प्रामाण्य -
P.136-13 मङ्गीकृत्य परिहरति–सत्यमिति ॥ किमन्यत्रेति विशेषणेनेति ? अत्राह–
P.136-14 प्रतिपत्तिर्हीति ॥ विशिष्टप्रतिपत्तिविधिर्विशेषणस्य प्रतीतिमात्रमाक्षिपेत्,

अभिप्रायप्रकाशिका

तत्र हेतुमाह—न हीति ॥ तदेवोदाहरणेन स्पष्टयति—न हि
यजेतेति । भविष्यत्काला वा सत्तेति ॥ विधेरिति शेषः ॥

विहिताकरणदोषाभावप्रसङ्गादिति ॥ अयमर्थः—यथा सोमादौ
भविष्यत्कालसम्बन्धे प्रमिते न विधेर्व्यापारः, तथा यागादेरपि भविष्यत्काल-

ब्रह्मसिद्धिकारिका

नन्तु नो विपरीतार्था धीः प्रतीतिविरोधतः ॥ १५० ॥
अनाश्वासाच्च रजतप्रत्ययो रजते स्मृतिः ॥ १५०$\frac{1}{2}$ ॥

---

भावशुद्धिः

न तु प्रमाणमित्यर्थः । हेतुमाह—अन्यथाभूत इति ॥ उदाहरति—असौ P.136-15
वावेति ॥ द्यु-पर्जन्य-पृथिवी-पुरुष-योषित्स्वित्यर्थः ॥ १४६, १४७, P.136-16
१४८, १४९, १४९$\frac{1}{2}$ ॥

समारोपममृष्यमाणश्चोदयति—अत्राहेति ॥ विपरीतख्यातेः सर्व- P.136-17
लोकप्रसिद्धत्वाद् नेदं प्रत्यवस्थानं युक्तमिति, अत्राह—न खल्विति ॥ P.136-20
अनुभवविरोधं साधयति—कथमस्मिन्निति ॥ घटज्ञाने पटोऽवभासत इत्युक्ते यथाऽनुभवविरोधः, तथाऽन्याकारं ज्ञानं योषिदाद्यालम्बनमिति
विरोध इत्यर्थः । इतश्चान्यथाख्यातिरयुक्तेत्याह—अनाश्वासाच्चेति ॥ P.136-21
एतदेव स्पष्टयति—विषयेति ॥ यथा ज्ञानम्, तथाऽर्थानभ्युपगमे किमयं घटे पटबुद्धिः, पट एवेति संशयप्रसक्तेरित्यर्थः ॥

किंचान्याकारं ज्ञानमन्यालम्बनमिति ब्रुवतो निरालम्बनमेव

अभिप्रायप्रकाशिका

सम्बन्धित्वे प्रमिते विधेर्वैयर्थ्यम्; स्वयमेवोत्पत्तेरिति । लौकिकोदाहरणमाह—तथाऽङ्गदीति ॥ १४६, १४७, १४८, १४९, १४९$\frac{1}{2}$ ॥

कारिकाविवरणम्

प्रतिपत्तेरारोपितविषयायां अपि विधानदर्शनात् प्रतिपत्तिविधिर्विषये विशेषणभूते न प्रमाणमित्युक्तम्; अत्राख्यातिवादी—सर्वाऽपि प्रतीतिर्यथार्थैवेति न निर्विषया काऽपि प्रतीतिरस्तीति शङ्कते—नन्विति ॥

का तर्हि रजतप्रत्ययस्य गतिरिति? अत्राह—रजतप्रत्यय इति ॥ १५०, १५०$\frac{1}{2}$ ॥

ब्रह्मसिद्धिविवरणम्

प्रतीतिविरोधमाह—कथमिति ॥ रजताकारं ज्ञानं शुक्त्यालम्बनमित्यनुभवविरुद्धमित्यर्थः । अनाश्वासमेव दर्शयति—विषयरूपेति ॥ क्वचिद् विषयव्यभिचारिणि विज्ञानेऽन्यत्रापि निर्विषयत्वाशङ्का दुर्निवारणा स्यादित्यर्थः ॥

भावशुद्धिः

P.136-22 ज्ञानं स्यादित्याह---अपि चेति ॥ अर्थप्रकाशनपरमार्थं हि ज्ञानमर्थरूपमनुकुर्वदर्थालम्बनं भवति । तच्चेद् नानुकुर्वीत, न तदालम्बनमिति निरालम्बनं स्यादित्यर्थः । आलम्बनशब्दस्याश्रयवचनत्वान्निरालम्ब-
P.136-23 नत्वमित्यनाश्रयत्वमुक्तमिति भ्रमं व्यावर्तयति—अग्राह्यमेवेति ॥ अधिष्ठानसाधारणाकारस्य गृह्यमाणस्य विशेषारोपकारणत्वात् तदालम्बनत्वमिति, अत्राह— हेतुमात्रस्येति[1] ॥ भवत्वनालम्बनत्वं रजतज्ञानस्य, अस्तु तेनैव निदर्शनेन ज्ञानमात्रस्य तत्तथा, को दोष इति ? अत्राह—तथाचेति ॥ ज्ञानमात्रस्यापरिच्छेदकत्वात् प्रमाणान्तरसंवादापेक्षादपि ततो नार्थसिद्धिः ; तस्मादनारोपितबाह्यरजतविषयमेव रजतज्ञानं युक्तमित्यर्थः ।
P.137- 1 चोदयति— किं तर्हीति ॥ यदि शुक्तिं नालम्बते रजतमिति ज्ञानम्, किं तर्हि 'इदं शुक्तिसन्निकृष्टं रजतमिति ज्ञानम् ? शुक्तिकेयमिति ज्ञानं शुक्तिसन्निकृष्टे चक्षुपि जायमानं शुक्तिकालम्बनं दृष्टम्, इति रजतज्ञानमपि तादृशं
P.137- 2 तथैव भवितुमर्हतीत्यर्थः । उत्तरमाह—स्मृतिरिति ॥ शुक्लभास्वरत्वरूपसादृश्यग्रहणसमुद्बुद्धरजतानुभवसंस्काराद् रजते स्मृतिरित्यर्थः ॥

अभिप्रायप्रकाशिका

किंच प्रतिभासमानाकारस्याविषयत्वाद् ज्ञानं निर्विषयं स्यादित्याह— अपि चेति ॥ प्रतिभासमानाकारस्य बहिरपलापे च विज्ञानाकार एवायमाश्रित इति सुगताभिमतो निरावलम्बनवाद आश्रितः स्यादित्याह—अनालम्बनमिति ॥ जानातेः सकर्मकत्वनियमोऽपि भज्येतेत्याह— अग्राह्यमेवेति ॥ अस्तु तर्हि शुक्तिरेवालम्बनमिति, नेत्याह—हेतुमात्रस्येति ॥ आकारासमर्पकस्यान्वय-व्यतिरेकवतोऽपि नालम्बनत्वं चक्षुरादेरिवेत्यर्थः । इष्यत एवानालम्बनत्वमौत्सर्गिकं ज्ञानानाम्, यत्र पुनरर्थक्रिया, तत्र सालम्बनत्वं ज्ञानस्यापवाद इति सौगतं मतं निराचिकीर्षुराह---तथाचेति ॥ विषयावभासकस्यैवार्थक्रियापेक्षयाऽपि प्रामाण्यम्, नानवभासकस्येत्यर्थः । यदि भ्रान्तिज्ञानमन्यथाख्यातिर्न सम्भवति, का तर्हि तस्य गतिरिति पृच्छति—किं तर्हीति ॥ आहाऽख्यातिवादी—स्मृतिरिति ॥ शुक्तिसम्प्रयोगान्वय-व्यतिरेकानुविधायिनः स्मृतिरनुपपन्नेति, मैवम् ; संस्कारोद्बोधकशुक्लभास्वरादिरूप-

1. ज्ञानहेतुमात्रस्येति मूलपाठः

ब्रह्मसिद्धिकारिका

नैतन्न हि प्रवर्तेत शुक्तिकाशकले तदा ॥ १५१ ॥
रजते सा प्रवृत्तिश्चेत् न तस्यासंनिधानतः ।

---

भावशुद्धिः

यदीदमिति ग्रहणम्, रजतमिति स्मरणम्, कथं तर्हि भ्रमः ? ग्रहणस्मरणयोर्यथार्थयोर्भ्रमत्वासंभवादिति चोदयति—भ्रान्तिरिति ॥ परिहरति=प्रत्यक्षेति ॥ गृह्यमाणं शुक्तिशकलमिन्द्रियदोषात् सितभास्वरसाधारणरूपेण गृह्यते, स्मर्यमाणमपि रजतं मनोऽपराधान्न पूर्वदेश-कालविशिष्टं स्मर्यते, किन्तु रूपमात्रेण ; तदनयोर्गृह्यमाण-स्मर्यमाणयोर्विवेको न गृह्यत इत्यर्थः। कथं तर्हि सामानाधिकरण्यव्यपदेशः? रजतार्थिनः पुरोवर्तिप्रवृत्तिश्चेति? अत्राह—सोऽयमिति ॥ 'इदमि'ति विज्ञानादपरोक्षावभासादगृहीतभेदं संनिहितरजतगोचरानुभवतुल्यं तदुभयप्रयोजकम् । तथाच भ्रान्तित्वं तत्प्रसञ्जितव्यवहारबाधेन, बाधकत्वं बाधकस्योपपन्नमित्यर्थः । अभिमानः=व्यपदेश इति यावत् । अत्रैव निदर्शनमाह—यथेति ॥ स्मृतिश्चेत् गृह्यमाणात् स्वार्थं गवयादिस्मृतिवद् विवेचयेदिति P.137-3 P.137-4
शङ्कां निराकुर्वन्नुपसंहरति—तस्मादिति ॥ १५०, १५०½ ॥ P.137-5

परिहारं सूचयति—अत्रोच्यत इति ॥

---

अभिप्रायप्रकाशिका

ब्रह्मसिद्धिविवरणम्

सामान्यग्रहणेनान्यथासिद्धत्वादित्याह—सामान्येति ॥ स्मृतित्वे कथं भ्रमः ? कथं बाध्यत्वमिति शङ्कते—भ्रान्तिरिति ॥ उत्तरमाह—प्रत्यक्षेति ॥ बाह्येन्द्रियदोषवशात् पुरोवर्तिनः सामान्यरूपमेव प्रतीतम्, मनोदोषवशाच्च स्मर्यमाणरजतं यथावद् न प्रतिपन्नम्, अतस्तयोरविवेकादयथाव्यवहारो विभ्रमः, तथाभूतव्यवहारनिवृत्तिश्च बाध इत्यर्थः । पुरोवर्तिनि रजतत्वाग्रहणे कथं तदर्थिनस्तत्र प्रवृत्तिरिति ? अत आह—सोऽयमिति ॥ सर्वत्राऽसंसर्गाग्रहादेव प्रवृत्तिरिति भावः ॥ १५०, १५०½ ॥

कारिकाविवरणम्

विवेकाग्रहणस्य प्रवृत्तिहेतुतां तावद् निराचष्टे—नैत-

ब्रह्मसिद्धिकारिका

असंनिधानाबोधाच्चेत् प्रवृत्तिनियमः कुतः ॥ १५२ ॥
प्रवर्तते यत् तत्रैव तत्तत्संनिधिकारितम् ।
अन्यत्र भेदग्रहणाद्विवेकाग्रहणात्तथा ॥ १५३ ॥
प्रवृत्तिभेदः सादृश्याद् विवेकाग्रहणं यदि ।
अदृष्टेषु प्रवर्तेत लोष्टादिष्वविवेकतः ॥ १५४ ॥
न तत्र यदि तद्बुद्धिः शुक्तिकाशकलेऽपि न ।
अथाऽस्ति विपरीतार्था ख्यातिर्निह्नूयते कथम् ॥१५५॥
अदृष्टत्वादप्रवृत्तिः शुक्तिकाशकले समा ।
दृष्टं तद् येन रूपेण तत् प्रवृत्तेरकारणम् ॥ १५६ ॥
दृष्टस्मृताविवेकाच्चेदिदमत्र परीक्ष्यताम् ।
तत्त्वबोधादथातत्त्वाबोधाद्रजतवेदनात् ॥ १५७ ॥
दृष्टे प्रवृत्तिः पूर्वस्मिन् विपरीतार्थता मतेः ।
न दृष्टादृष्टयोर्भेदः परस्मिन्नोपयोगिनी ॥ १५८ ॥
खयोगदर्शने ते हि समारोपोपयोगिनी ।
नादृष्टेऽसंप्रयुक्ते वा चाक्षुषः स्याद्विपर्ययः ॥ १५९ ॥

---

भावशुद्धिः
कारिकाविवरणम्

P.137- 6 एतत्=शुक्तिशकलं रजतात्मना न प्रतीयाद् यदि, तथा(दा)रजतार्थी शुक्तिशकले न प्रवर्तेत । स्मर्यमाणरजत-
P.137- 7 गोचरा प्रवृत्तिरिति शङ्कते—रजते सेति ॥ दूषयति—नेति ॥ प्रतीतरजतस्य संनिहिताद् विवेकाग्रहणात् पुरोवर्तिनि प्रवृ-
P 137- 8 त्तिरिति चोदयति—असंनिधानेति ॥ दूषयति—प्रवृत्ति-

अभिप्रायप्रकाशिका
कारिकाविवरणम्

दिति ॥ अस्तु तर्हि रजतविषयैव सा प्रवृत्तिरित्याह—रजते सेति ॥ रजतस्यासन्निहितत्वाग्रहणात् पुरोवर्तिनि प्रवृत्तिरित्य-प्ययुक्तम्; लोष्टादावपि प्रवृत्तिप्रसङ्गादित्याह—असंनिधाने-ति ॥ प्रवृत्तिनियमाच्च तथात्मत्वग्रहणमपि सिध्यतीत्याह—

भावशुद्धिः

कारिकाविवरणम्

नियम इति ॥ शुक्तिशकल एव प्रवृत्तिर्न स्यात्, तदुपपादयति—प्रवर्तेत इति ॥ यत्=यस्मात्, तत्रैव P.137-9
प्रवर्तते, तस्मात् तत्प्रवृत्तिरूपं तत्संनिधिकारितं शुक्तिशकलस्य रजतात्मना प्रतीतिकृतम्, रजतभानात्, तस्य च स्मृति-विवेकाग्रहणात् प्रवृत्तिर्लोष्टादावपि स्यात्; भेदा- P.137-10
ग्रहणस्य तुल्यत्वादिति शङ्कते—अन्यत्रेति ॥ लोष्टादौ रजताद् भेदग्रहणादप्रवृत्तिः, शुक्तिशकले तु तद्विवेकाग्रहणात् प्रवृत्तिभेदः, रजतार्थिप्रवृत्तिविवेकाग्रहणं च सादृश्यादिति दूषयति—अदृष्टेष्विति ॥ लोष्टादौ रजत- P.137-12
ज्ञानाभावादप्रवृत्तिरिति शङ्कते—न तत्रेति ॥ तद्भावः P.137-13
प्रकृतेऽपि सम इत्याह—शुक्तिकेति ॥ रजतार्थिप्रवृत्तिगोचरत्वात् शुक्तिशकले रजतत्वज्ञानमस्तीत्याशङ्क्याह— P.137-14
अथाऽस्तीति ॥ अदृष्टलोष्टादावदृष्टत्वादेव न प्रवृत्तिरिति, अत्राह—अदृष्टत्वादिति ॥ शुक्तिशकलमिदमिति साधा- P.137-15
रणरूपेण दृष्टमिति, अत्राह—दृष्टं तदिति ॥ गृहीतस्मृतयोरविवेकाद् गृहीत एव प्रवृत्तिरिति शङ्कते—दृष्टेति ॥ P.137-16

अभिप्रायप्रकाशिका

कारिकाविवरणम्

प्रवर्तते यदिति ॥ लोष्टादेर्विवेकाग्रहणात् शुक्तिकायाश्चागृहीतविवेकत्वात् तत्रैव प्रवृत्तिरिति शङ्कते—अन्यत्रेति ॥ विवेकाग्रहणे कारणमाह—सादृश्यादिति ॥ अस्तु विवेकतः, तथाप्यविवेकात् प्रवृत्तावदृष्टलोष्टादावपि प्रवृत्तिः स्यादित्याह—अदृष्टेष्विति ॥ लोष्टादिषु रजतबुद्ध्यभावादप्रवृत्तिश्चेदख्यातिवादिनः शुक्तिकायामपि तद्बुद्ध्यभावः समान इत्याह—न तत्र यदीति ॥ अथ विशेषसिद्ध्ये शुक्तौ तत्सिद्धिरस्तीत्यभ्युपगम्यते, तदाऽन्यथाख्यातिरभ्युपेता स्यादित्याह—अथास्तीति ॥ लोष्टादेरदृष्टत्वादप्रवृत्तौ शुक्तेरप्यदर्शनं समानमित्याह—अदृष्टत्वादिति ॥ सामान्यरूपेण दृष्टत्वाददर्शनमसिद्धमिति, अत आह—दृष्टं तदिति ॥ अस्तु तर्हि गृह्यमाण-स्मर्यमाणयोरविवेकात् प्रवृत्तिरिति, अत आह—दृष्टेति ॥

भावशुद्धिः

कारिकाविवरणम्

P.137-17 तदु(पपाद)यति—इदमत्रेति ॥ संनिहितासन्निहितयोर्विवेकाग्रहादसंनिहितस्य तत्त्वबोधात् संन्निहितत्वप्रतीतेः प्रवृत्तिस्तत्त्वावबोधात् प्रवृत्तिः, उतातत्त्वावबोधात्=संनिहितत्वाग्रहाद् रजतस्मृतेश्च प्रवृत्तिरिति। तत्राऽऽद्यं
P-137-19 दूषयति— पूर्वस्मिन्निति ॥ परस्मिन् कल्पे दृष्टादृष्टयोर्न विशेष इत्यदृष्टलोष्टादावपि प्रवृत्तिप्रसङ्गः, शुक्तिशकलस्य साधारणरूपेण दर्शनमिन्द्रियसंप्रयोगश्चास्ति, कथमविशेष
P.137-20 इति? अत्राह —नोपयोगिनीति ॥ क्व तर्हि तयोरुपयोग
P.137-21 इति? विपरीतख्याताविति आह—ते हीति ॥ तत्रोपयोग-
P.137-22 मुपपादयति—नादृष्ट इति ॥ १५१, १५२, १५३, १५४, १५५, १५६, १५७, १५८, १५९ ॥

अभिप्रायप्रकाशिका

कारिकाविवरणम्

किमविवेकशब्देनाभेदग्रह उच्यते, किं वा भेदाग्रहमात्रमिति विकल्पयति—तत्त्वबोधादिति ॥ अग्रहणात् प्रवृत्तौ सुषुप्तेऽपि प्रवृत्तिप्रसङ्ग इति चोद्यं निवारयन्नाह—रजतवेदनादिति ॥ आद्यं कल्पं दूषयति—पूर्वस्मिन्निति ॥ द्वितीयं दूषयति—न दृष्टेति ॥ सम्प्रयुक्तासंप्रयुक्तयोर्विवेकाग्रहस्य तुल्यत्वादविशेषेण प्रवृत्तिः स्यादित्यर्थः। इन्द्रियसम्प्रयोगः, तज्जन्यं ज्ञानं चास्त्येव विशेषः शुक्तिकाया अदृष्टलोष्टादिभ्य इति, नेत्याह—नोपयोगिनीति ॥ विवेकाग्रहस्य प्रागभावतयाऽनादित्वाद् न तदुत्पत्तावुपयोगः, नापि तत्प्रतीतौ; अप्रतीतस्यापि तस्य प्रवर्तकत्वाभ्युपगमादिति भावः। अख्यातावुपयोगो नास्तीति चेत्, कुत्र तर्ह्युपयोग इति? अन्यथाख्यातावित्याह—ते हीति ॥ उपयोगप्रकारमेवाह—नादृष्ट इति ॥ अधिष्ठानस्याप्रत्यक्षत्वे तत्र प्रत्यक्षभ्रमानुपपत्तेरित्यर्थः ॥ १५१, १५२, १५३, १५४, १५५, १५६, १५७, १५८, १५९ ॥

भावशुद्धिः

उभयवादिसिद्धभेदाग्रहादेव प्रवृत्त्युपपत्तौ नान्यथाख्यातिः कल्पनीया; गौरवादित्याशङ्क्य व्याचष्टे—यदि चक्षुषेति ॥ रजतं वा P.137-23
तथेदमिति न प्रतीयादित्यर्थः। दूषयति–न शुक्ती[1]ति ॥ हेतुमाह–तस्येति ॥ P.137-24
तटस्थरजतस्मरणादियं प्रवृत्ती रजतगोचरेति, अत्राह—न चेति ॥ P.138- 1
हेतुमाह—तद्देशेति ॥ तस्मिन् देशे तस्यासंनिहितत्वादित्यर्थः। तज्ज्ञानं P.138- 2
तत्प्रवृत्तिप्रयोजकम्, न तु तस्य तत्र संनिधानमिति, अत्राह–न हीति ॥ रजतस्य प्रतीतत्वेऽपि तस्यासत्त्वात् पुरोदेशे न स्यात् तदर्थिनस्तत्रानादिप्रवृत्तिरित्यर्थः ॥

स्मर्यमाणरजतस्य गृह्यमाणेदमंशाद्विवेकाग्रहात् पुरोवर्तिनि प्रवृत्तिरिति शङ्कते—स्यादेतदिति ॥ रजतार्थिप्रवृत्तेः शुक्तिविषयत्वनियमानु- P.138 3
पपत्त्या दूषयति—तन्नेति ॥ विमता प्रवृत्तिः, पुरोवर्तिरजतधीपूर्विका, रजतेच्छाधीनपुरोवर्तिप्रवृत्तित्वात्; सम्यग्रजतप्रवृत्तिवदित्याह—
तत्रैवेति ॥ रजतमात्रस्य प्रतीतत्वे ग्रहण-स्मरणविवेकरहिताद् रजतज्ञाना- P.138- 4
दुक्तप्रवृत्त्युपपत्तेर्न विपक्षे बाधकमस्तीति, अत्राह—रजतमात्रेति ॥ लोष्टा- P.138- 5
दावपि रजतार्थिप्रवृत्तिप्रसक्तौ हेतुमाह—असंनिधानेति ॥

अभिप्रायप्रकाशिका

रजतं वा तथेति ॥ पुरोवर्त्यात्मना रजतं न प्रतीयादित्यर्थः। मा भूत् तद्देशे रजतस्य सन्निधिः, तथापि स्वरूपेण प्रतीतेः प्रवृत्तिरस्त्विति, अत आह—न हीति ॥ व्यवहिते स्मर्यमाणे, गृह्यमाणे वा भुवादौ प्रवृत्त्यदर्शनादित्यर्थः ॥

तथा सति लोष्टादिपरिहारेण पुरोवर्तिन्येव प्रवृत्तिः परिदृश्यमाना नोपपद्येतेत्याह–तन्नेति ॥ अतः पुरोवर्तिनि रजतार्थिनः प्रवृत्तिस्तस्य रजतात्मना प्रतीतिमनुमापयतीत्याह—तत्रैवेति ॥ शुक्तिशकलाद् गृह्यमाणात् स्मर्यमाणस्य रजतस्य, तत्प्रतीत्योर्वा विवेकाग्रहणात् प्रवृत्तिरिति, अत आह—रजतमात्रेति ॥ अन्यत्र=लोष्टादावित्यर्थः। मा भूदेवं दृष्टेषु लोष्टादिषु प्रवृत्तिः, अदृष्टेषु पुनः स्यादेवेत्याह—एवमपीति ॥

---

1. शुक्तिकेति मूलपाठः

भावशुद्धिः

P.138- 7 लोष्टादिषु प्रत्यक्षेण रजताद्भेदग्रहणादप्रवृत्तिरित्याह—अथेति ॥
P.138- 8 शुक्तिशकलस्यापि प्रत्यक्षत्वाद्रजताद्भेदग्रहः स्यादिति, अत्राह—शुक्तीति ॥
P.138-10 अतिप्रसक्त्या प्रत्याह—एवमपीति ॥

P.138-10 अदृष्टलोष्टादीनां रजतात्मना प्रतीत्यभावान्न रजतार्थिप्रवृत्तिगोचरतेति चोदयति—अथेति ॥ शुक्तावपि तर्हि रजतरूपप्रतीतेरभावात्
P.138-11 प्रवृत्तिर्न स्यादिति, अत्राह—इतरत्रेति ॥ तत्प्रवृत्तिसिद्धये शुक्ते रूप्यरूपेण प्रतीतिस्वीकारेऽनिष्टमाह—भाव इति ॥ लोष्टादेः स्वरूपेणाप्यप्रतीतत्वान्न
P.138-12 तत्र प्रवृत्तिरिति शङ्कते—अथेति ॥ गूढाभिसन्धिः परिहरति—शुक्तावपीति ॥

अभिसन्धिमविद्वानाशङ्कते—नन्विति ॥ अभिसन्धिमुद्घाटयन्
P.138-13 परिहरति—सत्यमिति ॥ इदमिति सामान्यग्रहणं रजतार्थिप्रवृत्तिप्रयोजकं
P.138-14 न चेत्, किं तत्प्रयोजकमिति ? अत्राह—यत्तु तथा रजतेति ॥ रजतरूपं तत्र प्रतीतं तत्प्रवृत्तिप्रयोजकं यथेत्यर्थः। तदभाव उभयत्रापि समान इत्याह—न तेनेति ॥ दृष्टान्तमाह—[2]यथेति ॥ असंप्रयुक्तस्य लोष्टादेस्तेन रूपेणावगमो यथा नास्तीत्यर्थः ॥

गृह्यमाण-स्मर्यमाणयोरविवेकात् प्रवृत्तिः कथमसंप्रयुक्तलोष्टादौ
P.138-15 स्यादिति शङ्कते—यदीति ॥ तदेतद् दूषयितुं विकल्पयति—तथा[3]पीति ॥ शुक्तिरजतयोर्विवेकग्रहणस्य = भेदज्ञानस्य विवेककृतः = विविक्तरूप-
P.138-18 प्रकाशकस्याभावाद्रजतस्य च सन्निधिप्रतीतेः स्मरामीत्यभिमानाभावा'दिदं रजतमि'त्यभेदज्ञानात् शुक्तिशकले प्रवृत्तिरित्याद्यं दूषयति—पूर्वस्मिन्निति ॥ अन्यथाख्यातिरिष्टा स्यादित्यर्थः। द्वितीयं दूषयति—उत्तरस्मिन्निति ॥ संप्रयुक्तशुक्तेः, असंप्रयुक्तलोष्टस्य च रजतरूपेण प्रतीत्यसंभवादुभयत्र भेदाग्रहणस्य तुल्यत्वादप्रवृत्तिः, प्रवृत्तिर्वा स्यादित्यर्थः। संप्रयुक्तत्वम्, सामान्यात्मना गृह्यमाणत्वं च शुक्तिशकलस्य

अभिप्रायप्रकाशिका

अख्यातिवादिनः शुक्तावपि न रजतप्रत्यय इत्याह—इतरत्रेति ॥

1. शुक्तिकेति मूलपाठः
2. स यथेति मूलपाठः
3. तत्रापीति मूलपाठः

ब्रह्मसिद्धिकारिका

स्मृतं प्रत्यक्षतो भिन्नं स्वज्ञानादेव चेत्, कुतः ।
अविवेकोऽन्यथा तु स्यात् सदा सामान्यदर्शने ॥ १६० ॥
विपर्ययोऽन्यं स्मरतो न च संशयदर्शनात् ।
स्मृतद्वयाविवेकोत्थं संशयं यदि मन्यते ॥ १६१ ॥
तन्नोभयोरपि यतः स्मृतौ दृष्टो विपर्ययः ।
विशेषज्ञानतोऽध्यक्षे स्मृतं यदि विविच्यते ॥ १६२ ॥
न स्वज्ञानादसत्यस्मिन् द्विस्मृतौ कथमेकधीः ? ।
एकत्वमेव स्मरतः प्राग्रूपं शशिनि स्फुटम् ॥ १६३ ॥
तिमिरादिप्रदोषेण कथं ते द्वित्वविभ्रमः ।
पिपासतश्च सलिलं शुक्तिकाहितचेतसः ॥ १६४ ॥
विपर्ययो न हि भवेद् भवन्वा सलिले भवेत् ॥ १६४½ ॥

भावशुद्धिः

विशेष उक्त इति, अत्राह—न हीति ॥ भेदाग्रहणमात्रस्य भ्रमत्वे संप्रयोग - सामान्यदर्शनयोरप्रयोजकत्वमग्रहणस्यानादित्वेनाप्रयोज्यत्वा- P.138-19
दित्यर्थः । तत्रापि समानमेतत्, अत्राह—अभूतेति ॥ मिथ्याज्ञाने P.138-20
कारणत्वेन तयोरुपयोगमुपपादयति—न कथञ्चिदिति ॥ १५१, १५२, १५३, १५४, १५५, १५६, १५७, १५८, १५९ ॥

कारिकाविवरणम्

किञ्च स्मृतिः स्वविषयं गृह्यमाणाद् विवेचयेत्

अभिप्रायप्रकाशिका

विवेककृत इति । भेदव्यवहारकारणस्येत्यर्थः । संनिधिप्रतीतेरिति ॥ नैरन्तर्येण स्फुरणादित्यर्थः । संप्रयोगदर्शने विशेष इति, मैवम्; तयोरनुपयोगादित्याह—न हीन्द्रियेति ॥ १५१, १५२, १५३, १५४, १५५, १५६, १५७, १५८, १५९ ॥

कारिकाविवरणम्

अख्यातिपक्षे प्रवृत्तिरनुपपन्नेत्युक्तम्, इदानीं विवेकाग्रहणमप्यनुपपन्नमित्याह—स्मृतमित्यादिना ॥ स्मर्यमाणात्

भावशुद्धिः

कारिकाविवरणम्

P.138-22 न वेति विकल्प्याऽऽद्यं दूषयति——स्मृतमिति ॥ द्वितीयं
P.139- 1 दूषयति——अन्यथा त्विति ॥ स्मृतेरविवेचकत्वेऽन्यं स्मरतः
पुरोवर्तिनि सदा विपर्ययः स्यादित्यर्थः। अस्तु तथा, का
P.139- 2 हानिः ? अत्राह— न चेति ॥ द्वयोः स्मरणे गृह्यमाणाद्-
विवेकः संशय एवा(,अ)स्मृतौ तदविवेको भ्रम इति शङ्कते
P.139- 3 –स्मृतद्वयेति ॥ दूषयति–तत्रेति ॥ रजत-शुक्तिकयोर्द्वयोः
स्मृतावपीदं रजतमिति भ्रमदर्शनादित्यर्थः। स्मृतेः स्वार्थ-
P.139- 5 विवेचकत्वाभावेऽपीन्द्रियसंयुक्तशुक्तेः शुक्तित्वादिविशेष
ज्ञानात् स्मृत-गृहीतविवेककारणान्न सर्वदा विपर्ययप्रसङ्ग
इति शङ्कते–विशेषेति ॥ दूषयति–नेति ॥ असत्यस्मिन्निति।
अधिष्ठानविशेषाग्रहे द्वयोः स्मृता'विदं रजतमि'ति भ्रमो न
स्यात्, संशय एव स्यादित्यर्थः। गृह्यमाण-स्मर्यमाणयोर-
विवेकस्य भ्रमत्वे बाधकान्तरमाह–एकत्वमेवेति ॥ द्वित्व-
P.137- 7 स्यास्मर्यमाणत्वात् स्मर्यमाण-गृह्यमाणविवेकाभावाद्

अभिप्रायप्रकाशिका

कारिकाविवरणम्

प्रत्यक्षात्=पुरोवर्तिनः स्वज्ञानादेव विविच्यते, न वेति विकल्प्याऽऽद्यं दूषयति——स्मृतमिति ॥ द्वितीयं दूषयति——अन्यथा त्विति ॥ भवत्येव तथेष्टम्, मैवम्; संशयस्यापि कदाचिद् दर्शनादित्याह——न चेति ॥ सामान्यदर्शने सति स्मृतिद्वयं चेत्, तत्र संशयः, स्मृतेरेकत्वे तु विपर्यय इत्याशङ्कते——स्मृतिद्वयेति ॥ मैवम्; बलाकां रजतं च स्मरतो विपर्ययदर्शनादिति परिहरति——तत्रेति ॥ स्वज्ञानात् स्मर्यमाणस्य विवेकः, किंतु विशेषदर्शनात् शुक्त्यादेः प्रत्यक्षादिगतस्येति शङ्कते——विशेषज्ञान इति ॥ परिहरति–असत्यस्मिन्निति ॥ ऊर्ध्वमात्रेण दर्शने सति विशेषदर्शनाभावा-

भावशुद्धिः

कारिकाविवरणम्

द्वौ चन्द्राविति भ्रमो न भवेदित्यर्थः । इतश्च गृह्यमाणस्मर्यमाणविवेको न भ्रम इत्याह—पिपासतश्चेति ॥ शुक्तिकायामाहितं चेतो यस्य तस्य = शुक्तिकां गृह्णतः सलिलं P.139- 9
स्मरतो रजतभ्रमो न स्यात्; स्मरणाभावादित्यर्थः ॥
१६०, १६१, १६२, १६३, १६४, १६४½ ॥

ब्रह्मसिद्धिविवरणम्

सामान्यग्रहण-तटस्थरजतस्मरण-तदविवेकानां विशेषप्रवृत्तिहेतुत्वाभावेऽपि स्मर्यमाणं गृह्यमाणादविविक्तमेव व्यवहारकारणमिति,
अत्राह—अपि चेदमिति ॥ प्रथमविकल्पे बीजमाह—स्मृतीति ॥ गृह्य- P.139-11
माणात् स्वार्थविवेचकत्वं स्मृतिज्ञानस्य स्वभाव इत्यर्थः । द्वितीयकल्पावष्टम्भमाह—स्वरूपेति ॥ स्वात्ममात्रप्रकाशकं विवेकाविवेकयोरुदास्त P.139-13
इत्यर्थः ॥

आद्यं दूषयति—तत्रेति ॥ स्मृति(ते)र्ज्ञानेन स्वार्थे गृह्यमाणाद्विवेकेन
प्रकाशनादित्यर्थः । द्वितीयं दूषयति—इतरस्मिन्निति ॥ हेतुमाह—सामा- P.139-14
न्येति ॥ सित-भास्वरत्वादिसादृश्यादर्शने रजतस्मृतौ सदाप्यविवेकसंभ-

अभिप्रायप्रकाशिका

कारिकाविवरणम्

दुभयस्मरणे सत्युभयोरपि विवेकाग्रहणाविशेषणात् संशय एव स्यात्, न तु विपर्ययः, कदाचित्तु विपर्ययो दृश्यते; 'चोरोऽयमि'ति पलायनदर्शनादित्यर्थः । किंच गृह्यमाण-स्मर्यमाणाविवेको न भ्रमः; चन्द्रैकत्वं स्मरतोऽपि द्वित्वभ्रमदर्शनादित्याह—एकत्वमेवेति ॥ एकत्ववद् द्वित्वमपि स्मर्यते चेत्, संशय एव स्यात्, न विपर्यय इति भावः । इतोऽपि न स्मर्यमाणाविवेको भ्रम इत्याह—पिपासतश्चेति ॥ सलिलस्मरणस्य स्वविषयविवेचकत्वानङ्गीकारात् सलिलभ्रम एव स्यादित्याह—भवन्वेति ॥

ब्रह्मसिद्धिविवरणम्

विकल्पमेवोक्तं प्रपञ्चयति—स्मृतिज्ञानस्येति । भवत्पक्षेऽपि कथमनेकस्मरणे संशयादिभेद इति? अत आह—अथ तु

भावशुद्धिः

P.139-15 त्वादित्यर्थः। अस्तु तथा, को दोष इति? अत्राह—न चेति॥ हेतुमाह—
संशयस्यापीति॥

P.139-16 संशयप्रयोजकाभावे गृह्यमाणस्य स्मर्यमाणादविवेके भ्रम एवेति
चोदयति—अथ मतमिति॥ दूषयति—तदसदिति॥ ऊर्ध्वत्वधर्मिणि
गृह्यमाणे स्थाणुपुरुषस्मृतावपि कदाचित् पुरुष एवेति भ्रमो दोषविशेषाद्
दृश्यत इत्यर्थः॥

यदुक्तमितरस्मिन्नपि स्मृतौ सदा विपर्ययः स्यादिति, तत्परि-
P.139-18 हारं शङ्कते—यदि चेति॥ शुक्तित्वादिविशेषज्ञानात् स्मर्यमाणं गृह्य-
P.139-19 माणाद्विविच्यत इत्यर्थः। दूषयति—असतीति॥ तत्र-पुरोवर्तिनि
वक्रकोटरत्वादिविशेषज्ञाने चासति संशयेनैव भवितव्यम्। स्मृत-
द्वयाविवेकात् संशयव्यवहार इत्युक्तत्वादित्यर्थः॥

स्मृतेः स्वार्थविवेचकत्वं स्वभाव इति प्रथमकल्पावलम्बनेन
P.139-20 शङ्कते—अथ त्विति॥ आगतोऽसीदानीमन्यथात्वमित्याह—तदेति॥
P.139-21 अनेकस्मरणेऽपि कारणदोषाद्विपर्यय इत्ययमर्थः—'अनेकस्मरणेऽपि
हि दृश्यते विपर्ययः' इत्यत्र दर्शितोऽस्माभिरित्याह—दर्शितं चेति॥
कस्मात् पुनर्दोषाणां विपर्ययोदयं प्रति सामर्थ्यमुपवर्ण्यते, न पुनर्वि-
P.139-22 वेकाग्रहमात्रं प्रतीति? अत्राह—सामान्यदर्शनेऽपीति॥ उपसंहरति—
P.139-23 अत इति॥ एवकारव्यवच्छेद्यमाह—न दृश्येति॥ दृश्यविशेषपरिच्छेदस्य
विवेकहेतुत्वेऽनवस्था, तत्परिच्छेदस्यापि विशेषान्तरपरिच्छेदाधीन-
स्वविषयविवेचकत्वात्, कस्यचिद्वा स्वतो विवेचकत्वे सर्वस्यैव तथा-
त्वमविशेषादित्यर्थः। भवतु स्वज्ञानादेव विवेकः? ततः किमिति,
P.139-24 अत्राह—एवं चेदिति॥ सर्वत्र स्मृतिप्रमोषेणैव विभ्रममिच्छतो जरतः

अभिप्रायप्रकाशिका

स्वज्ञानादिति॥ कथमनेकस्मरणे विपर्ययोऽस्तीति? अत आह—दर्शितं चेति॥ किंच सत्यपि सामान्यदर्शने तत्रापि स्मृतौ चाविवेकदर्शनादेव विवेक इत्याह—सामान्येति॥ इन्द्रियरश्मिनिष्ठद्वित्वाविवेकात्, ज्ञानगत-

ब्रह्मसिद्धिकारिका

न च सर्वा नियोगेन भ्रान्तिः सादृश्यबन्धना ॥ १६५ ॥
श्वेते पीतभ्रमो दृष्टो मधुरे तिक्तविभ्रमः ।

---

भावशुद्धिः

प्राभाकरान् प्रत्याह—अपिचेति ॥ P.140- 1

ये तु——भेदाग्रहमात्रेणैव विभ्रमः, भेदाग्रहश्च क्वचित् स्मर्यमाण-गृह्यमाणयोः—यथा इदं-रजतविज्ञाने क्वचिद् गृह्यमाणयोरेव, यथा द्विचन्द्रज्ञाने——इति वदन्ति, तन्मतेन इह खल्वङ्गुळि-तिमिरादि-दोषादिन्द्रियमहःस्तोतो द्वेधा प्रवृत्तं द्वे ज्ञाने करणदौर्बल्येन विहतैकत्वं चन्द्रमण्डलावगाहि तीव्रत्वं नयनतोते च भिन्ने सति भिन्नगोचरः बुद्धिद्वयतुल्ये भिन्नगोचरं व्यवहारं प्रवर्तयत इत्याशङ्क्याह—न चेति ॥ कुत इति ? अत्राह—तयोरिति ॥ अत्र हि भेद-चन्द्रमण्डलयोर्गृह्यमाणयोर- P.140- 2
संसर्गाग्रहोऽभ्युपेतव्यः, स चानुपपन्नः ; भेदस्य भिद्यमानसंवेदनाधीन-ज्ञानस्यात्यन्तपरोक्षज्ञानवर्तिनोऽशक्यग्रहत्वात्, स्वसंवेदनाभ्युपग-मेऽपि विज्ञानस्वलक्षणानामर्थरूपणानामर्थभेदं विना भेदानिरूपणात्, विज्ञानभेदात् तद्भेदसिद्धावन्योन्याश्रयप्रसङ्गादित्यर्थः ॥ गृह्यमाणयोर-विवेको न संभवति चेत्, गृह्यमाणस्मर्यमाणयोरविवेको भविष्यतीति, अत्राह——अस्मर्यमाणत्वाच्चेति ॥ गृह्यमाण-स्मर्यमाणयोरविवेको भ्रम P.140- 3
इत्यत्रानिष्टान्तरमाह——शुक्तिकेति ॥ पुरोदेशस्थं शुक्तिशकलं गृह्णतः सलिलं च स्मरत 'इदं रजतमि'ति भ्रमो न भवेत्; रजतस्मरणाभावादि-त्यर्थः ॥ इन्द्रियदोषाद् भवेद् विभ्रम इति, अत्राह——सलिलेति ॥ 'इदं P.140- 4
सलिलमि'ति भ्रमो भवेत्; सलिलस्य स्मर्यमाणत्वात्, स्मरणस्य च गृह्यमाणात् स्वविषयाविवेचकत्वादित्यर्थः ॥ १६०, १६१, १६२, १६३, १६४, १६४½ ॥

अभिप्रायप्रकाशिका

द्वित्वाविवेकाद्वा विभ्रम इति, अत्राह—न चेति ॥ न स्याद्विपर्यय इति ॥ स्मर्यमाणसलिलव्यतिरिक्तरजतविपर्ययो न भवेदित्यर्थः । प्रत्युत सलिलविपर्यय एव स्यादित्याह—सलिलाभास इति ॥ १६०, १६१, १६२, १६३, १६४, १६४½ ॥

ब्रह्मसिद्धिकारिका

किंचित्सादृश्यतो हि स्यान्न कश्चित्तत्र न भ्रमः ॥ १६६ ॥
तस्मादिन्द्रियदोषाणां सामर्थ्यस्य विभागतः ।
भ्रमेषु नियमो दोषादग्रहे न भ्रमे यमः ॥ १६७ ॥

---

भावशुद्धिः

कारिकाविवरणम्

P.140- 5 सदृशदर्शनात् सदृशान्तरस्मरणे गृहीत-स्मृतयोरविवेके भ्रमो भवतीति यदुक्तम्, तद् दूषयति—न चेति ॥ नियोगेन=नियमेनेत्यर्थः । 'पीतः शङ्खः,' 'तिक्तो गुड'
P-140- 7 इत्यादिभ्रमोऽपि सादृश्यनिबन्धन एव ; तत्रापि किञ्चित्सादृश्यसंभवादिति, अत्राह—किंचिदिति ॥ सर्वस्य सर्वेण वस्तुत्वादिसादृश्यात् सर्वस्य सर्वत्र भ्रमप्रसङ्ग इत्यर्थः ॥
P.140- 8 कुतस्तर्हि शुक्त्यादौ रजतादिभ्रमनियम इति ? अत्राह—तस्मादिति ॥ अग्रहे भ्रमे न यमः=नियमो न स्यात् ; अग्रहस्य दोषविशेषकार्यत्वाभावादित्यर्थः ॥ १६५, १६६, १६७ ॥

ब्रह्मसिद्धिविवरणम्

'भवन् वा सलिले भवेदि'त्ययुक्तम् ; सादृश्यनिबन्धनत्वाद्

अभिप्रायप्रकाशिका

कारिकाविवरणम्

रजतादिवत् सलिलादौ सादृश्याभावाद् न तद्विपर्यय इति शङ्कां प्रत्याह—न चेति ॥ तत्रापि सत्त्वादिरूपेण सामान्यमस्तीति चेत्, न ; एकस्मिन् वस्तुनि सर्वविभ्रमप्रसङ्गादित्याह—किञ्चित्सादृश्यत इति ॥ भवत्पक्ष इवास्मत्पक्षेऽपि दोषाद् भ्रमनियमो भविष्यतीति, अत आह—दोषादग्रह इति ॥ १६५, १६६, १६७ ॥

ब्रह्मसिद्धिविवरणम्

यत्र तु गृह्यमाण-स्मर्यमाणयोरविवेकः, तत्रारोप्योपस्थापकतया सादृश्यमुपयुज्यताम्, इह पुनरान्तरमपि ; पित्तगतपीतिमादेर्ग्रहणेनैवोपस्थानाद् न

भावशुद्धिः

ब्रह्मसिद्धिविवरणम्

भ्रमस्येति, अत्राह—यदि चेति ॥ पित्तधातुसमवेततिक्तगुणमात्रस्य, गुड- P.140-10
द्रव्यमात्रस्य च ग्रहणे तदविवेकात् 'तिक्तो गुडः' इति भ्रम इति, अत्राह—
आन्तरेति ॥ आन्तरपित्तसंवेदने बहिरिन्द्रियमव्यापारयतोऽपि पुंसः— P.140-11
'तिक्तो गुडः' इति भ्रान्तिः कथमित्यर्थः ॥

ये तु मन्यन्ते—नेत्रोपरिभागवर्तिनः पित्तद्रव्यस्य प्रसादस्वाभाव्यात् काचाभ्रपटलवदिन्द्रियवृत्तिप्रतिघातित्वाभावेन तद्गतस्य पीतिम्नोऽधिकरणाकाङ्क्षस्यानुभवात् पुरोऽवस्थितशङ्खस्य दोषाच्छादितसितिमगुणस्य गुणाकाङ्क्षस्य दर्शनादसंसर्गाग्रहे 'पीतः शङ्खः' इति संसृष्टव्यवहार इति, तान् प्रत्याह—अञ्जनवच्चेति । प्रसादः काचाभ्रपटलादिवन्नाज्ञानेऽस्तीति, अत्राह—तद्गतेति ॥ अतिसामीप्यात् पित्त-तद्गुणयोरदृष्टत्वान्न तदविवेको भ्रम इत्यर्थः ॥

शङ्खादिद्रव्यस्य, पीतिमादिगुणस्य चैकेन्द्रियग्राह्यत्वसादृश्यमन्तरेणापि वस्तुत्वादिसादृश्यात् 'पीतः शंखः' इत्यादिभ्रम इति, अत्राह
—किञ्चिदिति ॥ शङ्खादौ हस्त्यादिभ्रमोऽपि स्यादित्यर्थः । कथं तर्हि P.140-12
तथापि भ्रमनियम इति? अत्राह—तस्मादिति ॥ इन्द्रियदोषोऽपि P.140-13
विवेकाग्रह एव व्याप्रियते, न विपर्यय इति चेत्, अत्राह—अग्रहमात्रे त्विति ॥
गृहीतशुक्तिशकलादेरिवागृहीतलोष्टादेरप्यविवेकस्य तुल्यत्वादित्यर्थः ॥
एवं तर्हीन्द्रियदोषवशात् सादृश्यं विषयदोषो विपर्ययज्ञानोत्पत्तौ व्या-
प्रियताम्, भ्रमनियमश्च तेन, अत्राह—न हीति ॥ १६५,१६६,१६७ ॥ P.140-14

अभिप्रायप्रकाशिका

ब्रह्मसिद्धिविवरणम्

सादृश्यस्योपयोगः । तथाहि—नयनदोषादनाकलितशुक्लगुणः शङ्खः स्वरूपेणावभासते, नयनवर्तिनः पित्तस्य पीतिमा च द्रव्यरहितो गृह्यते, तदनयोर्गुण-गुणिनोरसंसर्गाग्रहात् 'पीतः शङ्खः' इति व्यवहारस्तत्र, कुतः सादृश्यम्? इत्याशङ्क्याऽऽह—आन्तरेति ॥ विषयग्रहणाय निस्सरन्तो नयनरश्मयः परावृत्त्य नयनगतपित्तपीतिमानमवगृह्णन्ति, न पुनः बहिरव्यापृता एवेति, अत आह—अञ्जनवच्चेति ॥ तत्रापि सत्त्वादिरूपेण सादृश्यमाशङ्क्याह—किंचिदिति ॥
१६५, १६६, १६७ ॥

ब्रह्मसिद्धिकारिका

विशेषस्मरणान्नो चेत् स्मृतावपि तदग्रहः ।
देश-कालविशेषाच्च न स्मृतं प्रविविच्यते ॥ १६८ ॥
अनेकदेशाधिगतं विविक्तं न पुनस्ततः ।
स्मृतिरित्यपि विज्ञानं स्मृतेरन्यदुदाहृतम् ॥ १६९ ॥
न च मानफलाद् भिन्नात् तत् सिध्यति फलादृते ।
सति स्मृतिविवेके च प्रत्यभिज्ञानविभ्रमः ॥ १७० ॥
अथासंनिहितो व्यर्थो वेद्यः संनिधिमत्तया ।
अविवेकस्मृतेरेवं विपरीतार्थता भवेत् ॥ १७१ ॥
मनसोऽनुपघाताच्च नासं(सां)निध्यपरिग्रहः ।
दोषो ह्यग्रहणे हेतुरिन्द्रियाणामुदाहृतः ॥ १७२ ॥
प्रवृत्तिनियमो न स्यादिति चात्र निवेदितम् ।
सर्वज्ञानानि मिथ्या च प्रसज्यन्तेऽत्र कल्पने ॥ १७३ ॥
सर्वात्मनाऽर्थो ज्ञानेन केनचिन्न हि गृह्यते ।
तथाज्ञातविवेकस्य द्विचन्द्रादिविपर्ययात् ॥ १७४ ॥
अनुवृत्तिमतः पश्यन् कस्य स्वात्माऽपनिह्नुते ॥ १७४½ ॥

भावशुद्धिः

कारिकाविवरणम्

P.140-16 यदुक्तम्—स्वज्ञानादेव स्मृतस्य प्रत्यक्षतो विवेके न कदाचिदप्यविवेक इति, तदयुक्तम्; स्मृतस्य स्वज्ञानादेव विवेकेऽपि कदाचिद्विशेषाग्रहादविवेकोपपत्तेरिति, अत्राह—विशेषस्मरणादिति ॥ रजतस्मृतौ विशेषाग्रहो नो

अभिप्रायप्रकाशिका

कारिकाविवरणम्

स्मृतेः स्वार्थविवेचकत्वमौत्सर्गिकम्, अपवादादविवेकः, इह तु विशेषणाप्रतीतेरापवादिकमपि विवेचकत्वमिति, मैवम्; 'रजतमि'तीहापि विशेषणस्मरणादिति । अस्त्येव विवेकाग्रहः; देश-कालाख्यविशेषाप्रतीतेरिति, अत आह—देश-कालेति ॥ एकस्यानेकदेश-कालविशिष्टतयाऽधिगतस्य

भावशुद्धिः

कारिकाविवरणम्

भवति; रजतमिति विशेषस्मरणादित्यर्थः। यस्मिन् देशे, काले तद्रजतम्, तयोरग्रहादविवेकः, तद्ग्रहाद्विवेक-इति, अत्राह—देशेति ॥ हेतुमाह–अनेकेति ॥ अनन्तेषु P.140 17
देशेषु, कालेषु चावगतं रजतं स्मर्यमाणं गृह्यमाणाद्विविक्तं गम्यते। न च तत् ततो देश-कालभेदग्रहणाद्विविच्यते; अनन्तदेशादिस्मरणानुपपत्तेरित्यर्थः। स्मरामीति स्मर्यमाणत्वाग्रहणादविवेक इति, अत्राह—स्मृतिरित्यपीति ॥ P.140-19
परिपूर्णा स्मृतिः स्वविषयं विवेचयेदित्यर्थः। किंच स्मृतेः स्वयमविवेचकत्वे स्मरामीति विवेक एव न स्यादित्याह—न चेति ॥ कार्यगम्यत्वाद् ज्ञानस्य तत्त्द्भेदः P.140 20
कार्यभेदानुमेय इत्यर्थः। सत्यपि स्मृतिविवेके प्रत्यभिज्ञाभ्रमो दृश्यते स एवेति, अतो न तदंशप्रमोषादविवेक इत्याह—सतीति ॥ P.140-21

शङ्कते—अथेति ॥ असंनिहितस्य संनिहितरूपेण P.140-22
धीरविवेक इत्यर्थः॥ दूषयति–अविविक्तेति ॥ असंनिधे- P.140 23
रग्रहादविवेक इति, अत्राह–मनस इति ॥ मा भून्मनसो P.140-24
दोषः, किमतः? अत्राह—दोषो हीति ॥ अतो मानस- P.140-25
स्मृतौ विवेकग्रहः स्यादित्यर्थः ॥

अभिप्रायप्रकाशिका

कारिकाविवरणम्

तत्तद्देशादिविशिष्टतया सकृदेव प्रतिपत्तियोगाद् न कदाचिदपि विवेकः स्यादित्याह–अनेकदेशेति ॥ तत इति=देश-कालविशेषादित्यर्थः। यत्र स्मरामीत्यभिमानः, तत्र विवेकः, इह तु स्मरणाभिमानप्रमोषादविवेक इति, मैवम्; तस्य स्मृतेरन्यत्वात्। स्मृतिः पुनः परिपूर्णा स्वविषयं विविञ्च्यादेवेत्याह–स्मृतिरित्यपीति ॥ स्मरामीति विज्ञानं स्मृतेरन्यदेवास्तु, तथापि तस्मिन् सत्येव स्मृतेर्विवेचकत्वमिति, मैवम्; ततः प्रागेव विवेकस्यावगन्तव्यत्वादित्याह–न चेति॥ मानफलाद्

भावशुद्धिः

कारिकाविवरणम्

गृह्यमाण-स्मर्यमाणयोरविवेकस्य भ्रमत्वे दोषान्तर-
P.141- 1 मुक्तं स्मारयति—प्रवृत्तिनियम इति ॥ किञ्च रजतस्य
स्वरूपेण ग्रहेऽप्यंशान्तरस्याग्रहात् भ्रान्तित्वे, प्रमाण-तदा-
P.141- 2 भासविवेको न स्यादित्याह—सर्वेति ॥ हेतुमाह—सर्वात्म-
नेति ॥ अयं चन्द्रः, एकः, चन्द्रत्वात्; ह्यस्तनचन्द्रवदिति
ज्ञातेऽपि द्वित्वभ्रमानुवृत्तिदर्शनाद् नाग्रहमात्रं भ्रम इत्याह
P.141- 4 —तथाऽज्ञातेति ॥ १६८, १६९, १७०, १७१, १७२,
१७३, १७४, १७४३ ॥

अभिप्रायप्रकाशिका

कारिकाविवरणम्

भिन्नं यत् फलम्, तस्मात् फलादते स्मृतिरित्यपि विज्ञानं न सिध्यतीति योजना। तस्मात् स्मरामीति विज्ञानात् प्रागेव विवेको द्रष्टव्य इत्यर्थः। स्वयंप्रकाशवादिनाऽपि ग्राह्य-ग्रहण-ग्राहकादिभ्यो भेदेन स्मृति-स्मर्यमाणानवगमे ग्रहणादिशब्द-परिहारेण स्मर्तृ-स्मरणादिवाचकप्रयोगात् प्रागेव 'स्मरामी'ति विज्ञानाद् भेदावभास एष्टव्य इत्यपि द्रष्टव्यम्। इतोऽपि 'स्मरामी'ति ज्ञानं न विवेचकम्; तस्मिन् सत्यपि विवेचका-दर्शनादित्याह—सतीति ॥

असंनिहितस्य सन्निहिततया प्रतीतिरविवेक इति शङ्कते—अथेति ॥ तर्ह्यन्यथाख्यातिप्रसङ्ग इति दूषयति—अविवेकेति ॥ स्वाप्नज्ञाने मनस उपघातादस्मिन् सन्निधेर-ग्रहः, ऐन्द्रियिकज्ञाने तु तदनुपपन्नमित्याह—मनस इति ॥ तदेव स्फुटयति—दोषो हीति ॥ अग्रहपक्षे प्रवृत्तिनियमा-भावश्चोक्त इत्याह—प्रवृत्तीति ॥ स्वरूपेण वस्तुनि स्फुरत्यपि तद्धर्मभेदस्यासंनिहितत्वादेरग्रहादविवेक इति प्रसङ्गश्च स्या-दित्याह—सर्वज्ञानानीति ॥ इतोऽप्यविवेकाद् न भ्रम इत्याह—तथा ज्ञातेति ॥ १६८, १६९, १७०, १७१, १७२, १७३, १७४, १७४३ ॥

भावशुद्धिः

ब्रह्मसिद्धिविवरणम्

"विशेषस्मरणान्नो चेदि"ति कारिकां व्याचिख्यासुर्भूमिकामारचयति—अथ मतमिति ॥ स्वविषयविवेचनं स्मरणस्यौत्सर्गिकं P.141- 6
गृह्यमाणादित्यर्थः । किं तर्ह्यविवेक इति ? अत्राह—कदाचित्त्विति ॥ कदाचिद्वस्तुविशेषाग्रहादविवेकः, सोऽयं विशेषाग्रहलक्षणापवादाभावे विशेषग्रहे सति स्मरणज्ञानादौत्सर्गिकः, तद्गोचरात् सामान्यमात्रादपि विवेको व्यवतिष्ठत इत्याह—सति त्विति ॥ तथाच नोदाहृतदोषापत्ति- P.141- 7
रित्याह—तत इति ॥ औत्सर्गिकस्य स्वविषयविवेचनस्य विशेषाग्रहान्न P.141- 8
चोदितस्य स्मृतौ भावात् सत्यपि प्रत्यक्षस्य विशेषावग्रहे न सन्देहविपर्यासावित्यर्थः ॥ दूषयति—एवमपीति ॥ एकस्मृतेः स्वविषयाविवे- P.141- 9
चकत्वेऽप्युभयस्मृतावुभयत्वोल्लेखादस्ति विशेषस्मरणम्, यच्च स्मरणं स्मरणान्तरगोचरात् स्वगोचरं विविनक्तितराम् । 'तद्ग्रहणगोचरादि'त्युभयं स्मरणेनैकावभासो विपर्ययः स्यात्, दृश्यते च स्थाणु-पुरुषौ स्मरत आरोह-परिणाहवति पुरोवर्तिनि दृश्यमाने पुरुषावभासविपर्यासः । सोऽयमौत्सर्गिके स्मर्यमाणस्य स्वज्ञानाद्विवेके न भवेदित्यर्थः ॥

रचितायां भूमौ कारिकां योजयति—न चेति ॥ रजतत्वविशेषस्मृतावपि पूर्वानुभवोपाधिदेशविशेषाग्रहादविवेक इत्याह—अथेति ॥ P.141-10

अभिप्रायप्रकाशिका

ब्रह्मसिद्धिविवरणम्

कथं तर्हि विवेकाग्रह इति ? तत्राह—कदाचित्तु तत्र प्रत्यक्ष इवेति ॥ प्रत्यक्षस्य विवेचकत्वेऽपि यथाकथञ्चिद् विशेषाग्रहादविवेकः, तथैव स्मृतावपीत्यर्थः । ततश्च पूर्वोक्तोऽपि दोषः परिहृतो भवतीत्याह—सति त्विति ॥ स्मर्यमाणस्य विशेषाग्रहः, अन्यत्र तु तत्र सम्प्रयुक्तस्य सामान्यावधारणेऽपि न दोष इत्यर्थः । ततश्च रजत-बलाकयोः स्मरणेऽप्यन्यतरस्य विशेषप्रतीतेर्न संशय इत्याह—तत उभयेति ॥ सलिलादेर्विशेषस्मरणे च नोभयमित्याह—एकेति ॥ पूर्वोक्तमेव परिहारं स्मारयति सिद्धान्ती—एवमपीति ॥ स्मर्यमाणे कदाचिद् विशेषप्रतीतावपि रजत-बलाकयोर्द्वयोः स्मरणे द्वित्वोल्लेखेन तयोः स्फुरणात् तत्रावश्य-

भावशुद्धिः

विपर्ययः = विवेक(का)ग्रह इत्यर्थः। दूषयति—तन्नेति। नानादेश-कालस्य
P.141-11 सामान्यादेरभेदादेकदेश-कालानामपीति, गन्ध-रस-रूप-स्पर्शादीनां भेदात् तत्स्मरणमेवानन्तदेश-कालावगतं वा दृश्याद् रस-गन्धादेर्भेदेन परिच्छिनत्ति, न तु तद्भेदं प्रति देश-कालभेदेन तन्त्रीकरोतीत्यर्थः॥

मा भूद् देशभेदस्तन्त्रम्; तद्देशावगतस्यापि विवेचनात्, काल-
P.141-12 भेदस्तु प्रयोजकः; तद्देश-कालावगतेऽपि तद्भावात्, अत्राह—न चेति॥
P.141-13 हेतुमाह—अनन्तेति॥ सम्पातायातस्य देशभेदस्याप्रयोजकत्वं स्मारयति—तद्देशावगते चेति॥ विशेषान्तरं शङ्कते—अथेति॥ स्मरणा-
P-141-14 भिमानस्य प्रमोषाद्विवेकः, तदप्रमोषाच्च विवेक इत्यर्थः। किमतः? तत्राह—तस्मादिति॥ अविवेकभ्रमहेतव इत्यर्थः॥

P.141-15 दूषयति—परिपूर्णैवेति॥ स्वविषयस्य सर्वात्मना प्रकाशितत्वा-
P.141-17 दित्यर्थः॥ 'स्मरामी'त्यंशखण्डनात् कथं परिपूर्णेति? अत्राह—यत इति॥ न चान्यस्याभावादन्यस्याविवेचकत्वम्; अतिप्रसङ्गादित्यर्थः। विपक्षे
P.141-19 बाधकमाह—अथ न स्मृतिरिति॥

पुरोवर्तिनि सामान्यग्रहेऽन्यस्मृतौ सदा विपर्ययः स्यादित्यर्थः।
P.141-20 शङ्कते—यदेति॥ नोक्तदोषप्रसङ्गः। स्मरामीति विवेकाद् यत्र वस्तुमात्रो-

अभिप्रायप्रकाशिका

मभ्युपेयं स्मरणयोरन्योन्यविषयविवेचकत्वम्, यच्च स्मरणं स्मर्यमाणान्तरगोचरात् स्वगोचरं विविनक्ति, तत् सुतरामेव ग्रहणगोचरात् स्वविषयं विवेचयेदित्युभयस्मरणे न विपर्ययः स्यात्, दृश्यते चोभयस्मरणेऽप्युक्तविपर्यास इत्यर्थः॥

इदानीं श्लोकोक्तं दूषणमाह—न च स्मृताविति॥ रजतत्वं विशेषो न भवति, किन्त्वन्य एव देशादिरिति शङ्कते—अथेति॥ देश-कालादिविशेषाग्रहणेऽपि स्मृतेः स्वार्थविवेचकत्वदर्शनाद् न देशादिग्रहाविवेक इत्याह—तन्नेति॥

तत्रापि देशादिविशेषग्रहाद्विवेकः किं न स्यादिति? अत आह—न च देशेति॥ एकदेशस्थतयैवावगते च देशविशेषाभावाद्विवेकः कदाचिदपि न भवेदित्याह—तद्देशेति॥ अंशखण्डनात् कथं परिपूर्णतेत्याशङ्क्य, परिपूर्णतामेवोपपादयति—यत इति॥ अविवेचकत्वे तूक्तमेव दूषणमित्याह—अथ नेति॥

भावशुद्धिः

पलम्भे स्मरन्नपि स्थाणु-पुरुषौ न सन्दिग्धे, न च विपर्यस्यति, अस्ति P.141-21
तत्रोभयत्रापि 'स्मरामी'त्युल्लिखन्, (ति) तदभावे संशयो वा, विपर्ययो
वा स्यादित्यर्थः ॥ P.141-22

एष भेदो दुश्शक इति निराकरोति—स एवेति ॥ स्मृतस्वसंवेदनत्वे स्वरूपं च स्वगोचरश्च ग्रहणात् तद्गोचराच्च विवेचितः, इति नाविवेचकः, तस्मात् कार्यानुमेयत्वं वाच्यमित्याह—कार्यगम्यस्य हीति ॥ किमतः ? तत्राह—न चेदिति ॥

यदि स्वयमेव स्मृतिरनुभवफलाद् विविक्तं स्वफलं न जनयति, ततोऽसावपि विवेकवती । तथाच स एव स्मरामीत्यानुमानिको विवेको न स्यात् । कार्यं च ज्ञेयाभिव्याप्तिः=ज्ञेयप्रवणतेत्यर्थः । 'स्मरामी'ति न स्मृतिविषयज्ञानम्, किन्तु स्मृतिगोचरगतमनुभूतत्वं लक्ष्यते, अतोऽनुभूतत्वेनानुभाव्यमानालम्बना स्मृतिरनुभवगोचराद् विविनक्ति
स्वगोचरं तत्प्रमोषे नालं विवेक्तुमिति, अत्राह—सत्यपीति ॥ आरण्यको हि P.141-23
नगरमागतो 'वने यमद्राक्षं गवयम्, तमेतर्हि नगरे पश्यामी'त्यसत्यप्यनुभूतत्वांशमोषे भ्राम्यति, सोऽयं प्रत्यभिज्ञाभ्रमो भवन्मते न स्यादित्यर्थः ॥ स्मर्यमाणस्य विविक्तत्वेऽपि गृह्यमाणस्य तदविवेकात् प्रत्यक्षप्रत्यभिज्ञा-
भ्रम इति, अत्राह—न चेदिति ॥ गृह्यमाणस्य स्मर्यमाणादविवेकात् प्रत्यक्ष- P.141-24
प्रत्यभिज्ञाभ्रमो न स्यादिति, अत्राह—स्मृतादिति ॥ यतो ज्ञानविषयो P.141-25

अभिप्रायप्रकाशिका

स्मृतेः स्वयमविवेचकत्वेऽपि स्मरणाभिमानात् तत्र न विपर्ययप्रसक्तिरिति शङ्कते—न स्मरामीति ॥ नेत्युक्तनिषेधः । उत्तरमाह सिद्धान्ती—स एवेति ॥ स्मरामीत्यभिमानात् प्रागेवानुभवफलविलक्षणफलजनकत्वेन स्मृतेर्भेदावगतेर्न तस्य विवेचकत्वमित्यर्थः । उक्तमेवोपपादयति—न कार्यगम्यस्येति ॥ फलभेदाभावे स्मरामीत्यपि ज्ञानं न भवेत्; तद्गमकलिङ्गाभावाद् इत्याह—न चेति ॥ सत्यपि स्मरणाभिमाने विभ्रमदर्शनाद् न तस्माद्विवेक इत्याह—सत्यपीति ॥

स्मृतेस्तत्र विवेचकत्वेऽपि प्रत्यक्षस्य विवेचकत्वाभावात् प्रत्यभिज्ञाभ्रमः स्यादिति, अत आह—न चेदिति ॥ अभ्युपगम्याप्यविवेकं दोषान्तरमाह—स्मृतादिति ॥ प्रत्यभिज्ञाभ्रमश्च प्रत्यक्षभ्रम इति सर्वैरभ्युपेयत इत्यर्थः ।

भावशुद्धिः

P.141-26 ज्ञेयविषयो वा स्मरणाभिमानो न संभवतीत्युपसंहरति—तस्मादिति ॥

स्मरणाभिमानादविवेके दूषिते देशान्तरादिगतस्य रजतादेः
पुरोवर्तिशुक्त्याद्यात्मना धीरविवेके(क.इ)त्याह—अथेति ॥ अन्यथाख्या-
P.142- 1 तिप्रसक्त्या दूषयति—स्मृतेरिति ॥ चोदयति—अथेति ॥ निद्रादुष्टमनो-
P.142- 2 जन्यस्वप्नज्ञानेनासंनिहितस्यासन्निहितत्वाग्रहः स्यादित्याह—भवत्विति ॥
स्वस्थस्वान्तस्येन्द्रियजायां भ्रान्तौ न युक्तमेतदित्याह—न त्विति ॥

P.142- 3 मा भून्मनसो दोषः, किमतः ? अत्राह—उपघातहेतुत्वाच्चेति ॥ न
खल्वसंनिधिरिन्द्रियगोचरा, येनैतद्दौर्बल्यान्न गृह्येतेत्यर्थः । असं(ां)निध्य-
ग्रहादविवेकभ्रमे रजतार्थिनः प्रवृत्तिनियमो न स्यादित्याह—न
चेत्थमिति ॥

यदा च विवेकाग्रहपरिपन्थिनो विद्यमानत्वाद् न संनिहितविषय-
ज्ञानतुल्यतया तदुचितव्यवहारहेतुत्वं भ्रान्तीनामित्युपपादितम्, तदा
कस्यचिदंशस्याग्रहमात्रादेव भ्रान्तित्वमवशिष्यते । तथाच संनिहित-
वस्तुग्रहे कस्यचिदंशस्य शुक्तित्वादेरग्रहाद् भ्रान्तौ सर्वज्ञाने भ्रमत्वं स्या-
P.142- 4 दित्याह—सति चेति ॥ तदेव स्फोरयति—न हीति ॥ इतोऽपि नाग्रह-
P.142- 5 मात्रं विपर्यय इत्याह—सत्यपि चेति ॥ प्रमाणान्तरात्=आप्तवचना-
दित्यर्थः ॥ १६८, १६९, १७०, १७१, १७२, १७३, १७४,
१७४½ ॥

अभिप्रायप्रकाशिका

सत्सु काचकामलादिदोषेषु कथमग्रहो न स्यादिति ? अत आह—उपघातहेतुत्वाच्चेति ॥ सत्यपि बाह्येन्द्रियदोषे स्मरणहेतोर्मनसो दोषैरनुपहतत्वादस्मर्यमाणस्य नासांनिध्यग्रहः । न हीन्द्रियान्तरदोषादिन्द्रियान्तरं स्वविषयं न गृह्णातीति युक्तमित्यर्थः । अविवेकादयथाव्यवहारे रजताविवेकाल्लोष्टादावपि प्रवृत्तिः स्यादित्याह—न चेत्थमिति ॥

वस्तुनि गृह्यमाणेऽपि तद्धर्मस्यासंनिहितत्वादेरग्रहापराधाद्विभ्रमाभ्युपगमे दोषमाह—सति चेति ॥ १६८, १६९, १७०, १७१, १७२, १७३, १७४, १७४½ ॥

ब्रह्मसिद्धिकारिका

प्रसक्तप्रतिषेधात्मा ख्यातिः प्राप्तौ प्रकल्पते ॥ १७५ ॥
नाग्रहः प्रापकोऽभावः प्रापिका विपरीतधीः ।
ये च ख्याती तु रजतचक्षुःसंयुक्तवस्तुनोः ॥ १७६ ॥
नायं तदुपनीतार्थप्रतिषेधोऽवगम्यते ।
न चाग्रहणमेवैषा प्रतीतिरपबाधते ॥ १७७ ॥
सर्वा ह्यग्रहबाधेन जन्म न स्यात्तथेदृशी ।
विवेकविज्ञानमिदं न प्रसक्तनिषेधधीः ॥ १७८ ॥
इति ब्रुवाणो वैयात्यात् स्वां प्रतीतिमपह्नुते ।
न क्रमे, यौगपद्ये वा विवेकमतिरीदृशी ॥ १७९ ॥
प्राप्ते स्यादैक्यसंवित्तौ न भेदस्यानिरूपणे ।
रजतस्य स्मरंश्चक्षुःसंयुक्तस्य च वस्तुनः ॥ १८० ॥
सामान्यदृष्ट्या रजतादबुद्ध्वा च विविक्तताम् ।
पश्चाद्विविञ्चन् प्रत्येति नैवं सामान्यदर्शने ॥ १८१ ॥
कोटिद्वयस्मृत्यभावे संशयो न नियोगतः ।
विवेकग्रहणाभावात् कालसंनिधिसंविदः ॥ १८२ ॥
तद्वदाभासनात् प्राप्ताविष्टः स्यादन्यथाग्रहः ।
तत्राग्रहो निमित्तं स्यादथवा संनिधिग्रहः ॥ १८३ ॥
भेदग्रहापवादेन रहितो भावरूपतः ।
विपर्ययानभ्युपाये भ्रमोऽग्रहनिबन्धनः ॥ १८४ ॥
शब्दैकगम्य उक्तः स्यादग्रहोऽग्रहबन्धनः ॥ १८४½ ॥

---

भावशुद्धिः

कारिकाविवरणम्

भ्रान्त्यनुपपत्त्याऽख्यातिं निरस्य बाधकानुपपत्त्याऽपि निराचष्टे—प्रसक्तेति ॥ विवेकाग्रहप्रसक्तं प्रति- P 142- 7

अभिप्रायप्रकाशिका

कारिकाविवरणम्

अख्यातिमते भ्रमानुपपत्तिमभिधायेदानीं बाधोऽप्यनुपपन्न इत्याह—प्रसक्तेति ॥ अग्रहश्चाभावत्वाद् न प्रसञ्जक

भावशुद्धिः

कारिकाविवरणम्

P.142- 8 षेधति बाधक इति, अत्राह—नाग्रह इति ॥ अभावत्वादित्यर्थः। किं तर्हि प्रापकम्? तदाह—प्रापिकेति ॥ शुक्तिशकलस्य साधारणग्रहणम्, रजतस्मरणं चास्ति, ताभ्यां
P.142- 9 प्रसक्तस्य प्रतिषेध इति, अत्राह—ये चेति॥ चक्षुस्संयुक्तस्य रजतरूपत्वनिषेधत्वावगमादित्यर्थः। नेदमित्यग्रहणमेव बाध्यत इति, अत्राह—न चेति ॥ हेतुमाह—सर्वा
P.142-11 हीति॥ ग्रहप्रागभावावबाधेन जन्मतो हेतोः सर्वा धीर्बाधिका स्यादित्यर्थः। विवेकज्ञानमात्रमिदम्, न प्रसक्तप्रतिषेध-
P.142-13 रूपमिति, अत्राह—विवेकेति ॥ वैयात्यात् = धार्ष्ट्यात्। हेतु-
P.142-15 माह—न क्रम इति ॥ रजत-शुक्तिशकलयोर्विविक्तयोर्ग्रहस्य क्रमे, यौगपद्ये वा नेदृशविवेकमतिरित्यर्थः ॥

ऐक्यसंवित्तौ = विपरीतख्यातौ, प्राप्तेः = संप्रयुक्तस्य रजतरूपत्वस्य प्राप्तत्वात्, तन्निषेधधीः स्यात्,
P.142-16 न भेदाग्रहमात्र इति, अत्राह—[1]प्राप्तेरिति ॥ इतश्चाख्यातौ
P.142-17 न युक्तो बाधक इत्याह—रजतस्येति ॥ कर्मणि षष्ठी;

अभिप्रायप्रकाशिका

कारिकाविवरणम्

इत्याह—नाग्रह इति ॥ भवतो किं प्रापकमिति? अत्राह—प्रापिकेति ॥ अस्माकमपि ग्रहणस्मरणे प्रापके विद्येते इति, अत आह—ये चेति ॥ इदन्तामात्रस्य, रजतमात्रस्य चानिषेधादित्यर्थः। अस्तु तर्ह्यग्रहणमेव बाध्यमिति, अत आह—न चेति ॥ तत्र हेतुमाह—सर्वा हीति ॥ तथा सति सर्वासां धियामग्रहनिवर्तकतयोत्पत्तेर्बाधकत्वप्रसक्तिरित्यर्थः। जन्मन इति ॥ उत्पत्तेरिति यावत्। प्रसक्तप्रतिषेधमपेक्ष्य प्रसञ्जकापेक्षा; इदं तु तथा न भवतीत्याशङ्क्यानुभवविरोध इति परिहरति—विवेकेति ॥ कथमिति? अत आह—

1. प्राप्ते इति मूलपाठः।

भावशुद्धिः

कारिकाविवरणम्

"अधीगर्थदयेशां कर्मणी"ति स्मरणात्, कदाचिद्रजतस्मृतिमान् स्मर्यमाणाद्विविक्तं संयुक्तं न गृह्णाति, पश्चाद्विविश्चन्निति=विविक्तं गृह्णाति, तदा नैवं धीः; विवेकाविवेकयोरुभयोरप्यग्रहादित्यर्थः । सामान्यदर्शने यत्र न भ्रमः, तत्र संशयः । अतस्तन्निवर्तकनिर्णयज्ञानमीदृशमिति, अत्राह—सामान्यदर्शन इति ॥ विवेकाग्रहात्, कालसंनिधिप्रतीतेश्च रजतस्य चक्षुस्संयुक्तिबलाद् ज्ञानाप्राप्तौ प्रतिषेधोपपत्तिरिति, अत्राह—विवेकग्रहणेति ॥ तत्रान्यथाग्रहेऽग्रहो निमित्तं स्यात्, यस्त्वभावरूपस्य निमित्तत्वं न रोचयते, तं प्रत्याह—अथवेति ॥ भेदग्रहेऽप्ययमस्तीति, अत्राह—भेदग्रहेति ॥ भेदाग्रहस्यैव भ्रमत्वे भागा(बाधा)न्तरमाह—विपर्ययेति ॥ विपर्यासानङ्गीका-

P.142-19 P.142-21 P.142-23 P.142-24 P.142-25

अभिप्रायप्रकाशिका

कारिकाविवरणम्

न क्रम इति ॥ पूर्वमिदमाकारं गृहीत्वा पश्चाद् रजतं स्मरतः पुनस्तयोर्विवेकं गृह्णतोऽपि नेदं रजतमिति मतिर्न दृष्टेत्यर्थः ॥

अविविक्ततया प्रतीतयोरीदृशी विवेकमतिः, न तु ज्ञानमात्रमीदृशमिति चेत्, तर्हि वक्तव्यम्—अविविक्ततया प्रतिपन्नत्वं नामाऽभिन्नतया प्रतिपन्नत्वम्, किं वा भेदेनाप्रतिपन्नत्वमिति । नाद्यः; विपरीतख्यात्यभ्युपगमप्रसङ्गात्, नापि द्वितीयः; प्राप्त्यभावादित्याह—प्राप्तेरिति ॥ ऐक्यसंवित्तौ सत्यामीदृशी मतिः स्यात्, प्राप्तेरित्यन्वयः । इतश्च विवेकज्ञानमीदृशं विवेकाग्रहवादिनो न युक्तम्; सम्प्रतिपन्नस्थलेऽसम्प्रतिपन्नस्थले वा दर्शनादित्याह—रजतस्येति ॥ चक्षुःसंयुक्तस्य वस्तुनः सामान्यदृष्ट्या रजताद्विविक्ततामबुध्वेत्यन्वयः । सामान्यदर्शनेऽन्यस्मृतौ संशयविपर्यययोरन्यतरस्यावश्यम्भावाद्विवेकज्ञानमीदृशमवश्यं भवत्येवेति चेत्, मैवम्; नियमाभावादित्याह—सामान्येति ॥ विपर्ययस्याप्युपलक्षणमेतत् । विवे-

भावशुद्धिः

रेऽग्रहनिबन्धनो भ्रम उच्यमानोऽग्रहोऽग्रहनिबन्धनः शब्दैकगम्यः=वाङ्मात्रादुक्तः स्यात्, न त्वर्थोऽस्तीत्यर्थः॥ १७५, १७६, १७७, १७८, १७९, १८०, १८१, १८२, १८३, १८४, १८४½॥

ब्रह्मसिद्धिविवरणम्

भेदाग्रहप्रसञ्जितव्यवहारनिरोधेन बाधकोपपत्तिरित्याशङ्क्य
P.143- 2 तत्स्वरूपप्रदर्शनपूर्वकं व्याकरोति—नेदं रजतमिति ॥
P.143- 3 विवेकग्रहप्रसञ्जितो निषेध इति, अत्राह—न खल्विति॥ हेतुमाह—अभावो हीति ॥ चेतनप्रवृत्तेर्ज्ञानकार्यत्वात्; अन्यथा स्वापेऽपि तत्प्रसङ्गादित्यर्थः। शुक्ति-रजतयोरभेदस्य सत्त्वे भ्रमबाधानुपपत्तिः,

अभिप्रायप्रकाशिका

कारिकाविवरणम्

काग्रहणादेव रजतस्य शुक्तिदेश-कालसांनिध्यावगमात् तद्वदवभासनादस्त्येव प्राप्तिरित्याशङ्क्य, तर्ह्यन्यथाख्यात्यभ्युपगमप्रसङ्ग इति परिहरति—विवेकेति ॥ तथाप्यस्मदभिमतस्याग्रहणस्य विभ्रमनिमित्तत्वमस्त्येवेति, अत आह—तत्राग्रह इति ॥ विरोधितत्त्वग्रहाभावतया निमित्तम्, न तु साक्षादित्याशयः। किं तर्हि साक्षाद् निमित्तमिति? अत आह—अथवेति॥ कथं तर्ह्यग्रहस्य निमित्तत्वमुक्तमिति? अत आह—भेदग्रहेति ॥ भेदग्रहस्य प्रतिबन्धकत्वात् तदभावत्वात् भेदग्रहस्य तत्सन्निहितसन्निधिग्रह एवं निमित्तम्; निरपवादकत्वात्, भेदाग्रहस्त्वभावत्वाद् न साक्षान्निमित्तमित्यर्थः। विपर्ययख्यात्यनभ्युपगमे चाग्रहो भ्रमनिमित्तमिति वदताऽग्रहस्यैवाग्रहनिमित्तत्वमुक्तं स्यादित्याह—विपर्ययेति ॥ शब्दैकगम्य इति ॥ युक्तिशून्यं तद्वाक्यमेवास्य प्रतिपादकम्, न तु प्रमाणमस्तीत्यर्थः ॥ १७५, १७६, १७७, १७८, १७९, १८०, १८१, १८२, १८३, १८४, १८४½ ॥

भावशुद्धिः

असत्त्वे प्रसक्त्यनुपपत्तिस्तत्रापि तुल्येति, अत्राह—विपरीता त्विति ॥ P.143-4
अभूता=मिथ्येत्यर्थः ॥

ग्रहण-स्मरणाभ्यां प्रसञ्जितस्य निषेधोऽस्त्वति चोदयति—
नन्विति ॥ परिहरति—सत्यमिति ॥ तदुपपादयति—न हीति ॥ किं तर्हि P.143-5
निरस्यमानमध्यवस्याम इति ? अत्राह—किंत्विति ॥ चक्षुस्संयुक्तस्य P.143-8
रजतता, रजतस्य वा चक्षुस्संयुक्तता निरस्याऽस्त्विति, अत्राह—न चेति ॥ P.143-9
परिशेषसिद्धं निगमयति—तस्मादिति ॥

विवेकाग्रहणस्यैव बाध्यत्वान्नायं प्रसङ्ग इति, अत्राह—न चेति ॥ P.143-10
हेतुमाह—सर्वज्ञानेष्विति ॥ बाधकत्वप्रसङ्गमुपपादयति—सर्वेति ॥ P 143-11
स्वविषयाग्रहनिवर्तकत्वेन सर्वज्ञानानामुत्पत्तेरित्यर्थः । नेदं रजतमिति
प्रत्ययो न बाधकज्ञानमग्रहनिवर्तकम्, किंतु विवेकप्रत्ययः,
अतो नोक्तदोष इति, अत्राह—न चेति[1] ॥ कुत इति ? अत्राह—
न हीति ॥ 'इमे शुक्ति-रजते' 'रजतमिदम्' 'इयं शुक्तिरि'ति वा युगपद्, P.143-12
क्रमेण वा विविक्तप्रत्ययो नैवं बाधको यस्मादित्यर्थः । अविविक्तयोः=
अभिन्नयोर्ग्रहे प्रसक्तप्रतिषेधरूपा ख्यातिः स्यादिति चोदयति—अविविक्त- P.143-13
योरिति ॥ अङ्गीकरोति—युक्तेति॥ हेतुमाह—अविवेकेति ॥ न विविच्यत इत्य- P.143-14
विवेकः तादात्म्यम्, तत्प्रतिषेधरूपत्वादित्यर्थः । विविक्तयोरग्रहादप्येवं
किं न स्यात् ? अत्राह—विविक्तयोरिति ॥ प्रतीतयोरबाध्यत्वादित्यर्थः ॥

'रजतस्य स्मरन्नि'त्येतद् व्याचष्टे—अपिचेति ॥ मात्रशब्दार्थमाह— P.143-15
न रजतादिति ॥ कश्चिद् दूरस्थः शुक्तिसामान्यं गृह्णाति, रजतस्य स्मरति, P.143-16
रजताद्विविक्तं शुक्तिशकलं न गृह्णाति, पुनः समीपग्रहणेन गृह्णाती-
त्यर्थः । किमतः ? तत्राह—न चेति ॥ तत्र विवेकधीप्रसक्तप्रतिषेधा- P.143-17

अभिप्रायप्रकाशिका

किं तर्हि निरस्यमानमिति ? अत आह—चक्षुःसम्प्रयुक्तस्येति ॥
निरस्यमानमध्यवस्याम इति शेषः ॥ अविविक्तयोर्ग्रहण इति ॥ अभिन्नयोर्ग्रह
इत्यर्थः । प्रत्येति ॥ विवेकमिति शेषः । तथा प्रतीतिः=नेदं रजतमिति
प्रतीतिरित्यर्थः ॥

सामान्यदर्शने सति संशय-विपर्यययोरन्यतरो भवत्येव, तथासति बाधक-

1. नेति मूलपाठः

भावशुद्धिः

त्मा न भवति; अभेदस्याग्रहीतत्वात्, एवमियमपि तथा भवेत्,
P.143-18 नेयं तथा भवतीत्यर्थः ॥ 'सामान्यदर्शने' इत्यस्य निरस्यं दर्शयति–
P.143-19 नन्विति ॥ दूषयति—नैतदिति ॥

कोटिद्वयस्मरणाभावाद् मा भूत् संशयः एकस्य स्मृतत्वात्, पुरो-
P.143-20 वर्तिनि सामान्यस्य गृहीतत्वाद् विपर्ययः स्यादिति, अत्राह–[1]न चेति ॥
विपर्ययाभावं साधयति—भवति हीति ॥ अभेदवद् भेदस्याप्यग्रहात्
P.143-22 भेदाग्रहनिवर्तकं विज्ञानं प्रसक्तप्रतिषेधरूपमिति, अत्राह–[2]न च विवेक-
विज्ञानमिति ॥ हेतुमाह—एकत्वेति ॥

प्रसक्तप्रतिषेधबाधोपपादनकातरतया चोदयति—अथेति ॥
P.143-24 सिद्धं नः समीहितमित्याह—अभ्युपेतेति ॥ हेतुमाह—न हीति ॥ तत्रा-
ग्रहो निमित्तं स्यादित्येतद् व्याचष्टे—काममिति ॥ कुतस्तद्धेतुत्वम्?
तत्राह—न हीति ॥

P.144- 1 'अथवा संनिधिग्रहः' इत्येतद् व्याकरोति–तत्रापीति ॥ भेदग्रहेऽपि
P.144- 2 संनिधिग्रहाद् भ्रमप्रसङ्गः, तत्राह—तस्यास्त्विति ॥ तर्हि भेदाग्रहस्य
कारणत्वमन्वय-व्यतिरेकसिद्धमिति, अत्राह–अग्रहण इति ॥ अपवादेनौ-
त्सर्गिकं निरुध्यते, न पुनस्तदभावोऽप्यस्य हेतुः; एकहेतुत्वेनोपप-
त्तावनेकहेतुत्वकल्पनानुपपत्तेरित्यर्थः ॥

तर्हि लाघवाद् विवेकाग्रहनिबन्धन एव भ्रमः स्यादिति, अत्राह–
P.144- 3 विपरीतख्यातीति ॥ अग्रहनिबन्धनव्यवहारानुपपत्तेरुक्तत्वादित्यर्थः ॥

अभिप्रायप्रकाशिका

ज्ञानं वा, निर्णयज्ञानं वा भवतीदृशमिति शङ्कते—**नन्विति** ॥ नैवम्;
नियमाभावादिति परिहरति–**नैतदिति** ॥ तदेवोपपादयति–**भवति हीति** ॥

भवत्वेवम्, तथापि विवेकाग्रहणस्य भ्रमनिमित्तत्वादस्मदभिमतं सिद्ध-
मिति शङ्कते—**काममिति** ॥ तत्रैव युक्तिमाह—**न हीति** ॥ उत्तरमाह
सिद्धान्ती—**तत्रापीति** ॥ अन्वय-व्यतिरेकाभ्यामग्रहणस्यापि कारणत्वमव-
सीयत इति चेत्, मैवम्; प्रतिबन्धकाभावविषयतया तयोरन्यथासिद्धेरित्याह–
**तस्यास्त्विति** ॥

---

1. नेति मूलपाठः 2 नेति मूलपाठः

ब्रह्मसिद्धिकारिका

य: प्रतीतिविरोधस्तु स स्वदोष उदाहृतः ॥ १८५ ॥
सामानाधिकरण्येन बोधाद्रूप्यमिदं सितम् ॥ १८५½ ॥

---

भावशुद्धिः

गृह्यमाण-स्मर्यमाणाविवेकस्य भ्रमत्वे स्वप्नभ्रमो न भवेत्; तत्र गृह्यमाणाभावादित्याह—स्वप्ने चेति ॥ स्मृतरूप्यस्य स्मृतत्वरूपेण गृहीता- P.144- 4
दविवेको भ्रमः। स्मृतत्वेन भेदग्रह बाध इत्यत्र प्रसङ्गान्तरमाह—स्मृतत्वेनेति ॥ सर्वस्य निर्विकल्पकस्य भ्रमत्वम्, सविकल्पकस्य बाध- P.144- 5
कत्वं च स्यादित्यर्थः ॥ १७५, १७६, १७७, १७८, १७९, १८०, १८१, १८२, १८३, १८४, १८४½ ॥

कारिकाविवरणम्

अख्यातौ भ्रमबाधानुपपत्तिमापाद्य परोक्तदूषणं तत्पक्ष एव योजयति—य: प्रतीतीति ॥ १८५ ॥ P.144-10

ब्रह्मसिद्धिविवरणम्

विरोधं स्पष्टयति-इदं शुक्लमिति ॥ ग्रहण-स्मरणरूपेण ज्ञानयो-भेदात् सामानाधिकरण्यमसिद्धमिति, अत्राह—ज्ञानभेदेति ॥ १८५ ॥ P.144-11

कारिकाविवरणम्

प्रतीतिविरोधं परमत आपाद्य स्वमते परिहरति—

अभिप्रायप्रकाशिका

किञ्च स्वप्ने स्मर्यमाणयोरविवेकः, किं वा गृह्यमाणयोः, अथवा गृह्यमाणस्मर्यमाणयोः? नाद्यः; सर्वस्य परोक्षत्वप्रसङ्गात्। न द्वितीयः; गजादेः प्रतिभासमानस्य ग्रहणसाधनचक्षुरादेस्तत्राभावात्। नापि तृतीयः; आत्मव्यतिरिक्तस्य तत्र गजादेरग्रहणात्। नाप्यात्मनैव गृह्यमाणेन स्मर्यमाणानामविवेकः; तथासति सत्यं न नीलमहं गज इति व्यवहारप्रसङ्गादित्यभिप्रेत्याह—स्वप्ने चेति ॥ यदि च स्मर्यमाणानां स्मृतत्वेनाग्रहणं भ्रमः, स्मृतत्वेन ग्रहणं च विवेकः, तथासति देवदत्तस्य स्वरूपेण प्रतिपत्तिर्भ्रमः, कुण्डलादिमत्तया प्रतीतिर्बाध इत्यपि प्रसज्येतेत्याह—स्मृतत्वेनेति ॥ १७५, १७६, १७७, १७८, १७९, १८०, १८१, १८२, १८३, १८४, १८४½ ॥

कारिकाविवरणम्

एवमख्यातिपक्षमुन्मथ्य, तेनोक्तं दूषणं तत्पक्ष एव प्रसज्यते, नासत्पक्ष इत्याह—य: प्रतीतीति ॥ कथमिति ?

ब्रह्मसिद्धिकारिका

अनाश्वासो ज्ञायमाने ज्ञानेनैवापबाध्यते ॥ १८६ ॥
व्यभिचारादसामर्थ्यं न तत्कार्यस्य लाभतः ।
व्यभिचारात् प्रमेयत्वकार्यमेव न लभ्यते ॥ १८७ ॥

---

भावशुद्धिः

कारिकाविवरणम्

P.144-12 अनाश्वास इति ॥ ज्ञानस्यार्थव्यभिचारादसामर्थ्यमप्रा-
P.144-13 माण्यमिति, अत्राह—व्यभिचारादिति ॥ हेतुमाह—तत्कार्य-
स्येति ॥ मानकार्यस्यार्थपरिच्छेदस्येत्यर्थः । प्रमेयत्वादे-
र्लिङ्गाभासस्य व्यभिचारादप्रामाण्यं दृष्टमिति, अत्राह—
P.144-14 प्रमेयत्व इति ॥ मानकार्यस्याभावात् प्रमेयत्वादेरप्रमाणत्वम्,
न व्यभिचारादित्यर्थः ॥ १८६,१८७ ॥

ब्रह्मसिद्धिविवरणम्

रजतज्ञानस्य शुक्त्यालम्बनत्वे घटोऽयमिति ज्ञानं घटालम्ब-
नम्, अघटालम्बनं वेत्यविश्वासः किमर्थावधारणज्ञाने प्रसज्यते, अनव-
P.144-15 धारणज्ञाने वा? नाद्य इत्याह—यो हीति ॥ यद् यथा भाति, तद् तथैवे-
त्युत्सर्गसिद्धत्वादित्यर्थः ॥

P.144-16 अथ तथात्वग्राहिज्ञानान्तरादाद्यज्ञानप्रामाण्यम्, न स्वत इति प्रस-
ङ्गादाशङ्क्याह—तथाहीति ॥ द्वितीयज्ञानस्यासिद्धप्रामाण्यस्याद्यज्ञानप्रामा-
ण्यनिश्चायकत्वे तदाद्यज्ञानमेवार्थनिश्चायकं तथा स्यात्; अन्यथाऽनवस्थे-
त्यर्थः । विमतं ज्ञानम्, अमानम्, व्यभिचारित्वात्, व्यभिचारि च;
P.144-17 ज्ञानत्वात्; शुक्तिरजतज्ञानवदिति, अत्राह—न चेति ॥ हेतुमाह—प्रमाणेति ॥

अभिप्रायप्रकाशिका

कारिकाविवरणम्

अत आह—सामानाधिकरण्येनेति ॥ रूप्यमिदं सितमिति
सामानाधिकरण्येन बोधात्, अविवेकपक्षे च तदनुपपत्तेरित्यर्थः ॥

यदुक्तमख्यातिवादिना—अनाश्वासाच्चेति, तत्राह—
अनाश्वास इति ॥ अथ व्यभिचारादत्राश्वासः स्यादिति, अत
आह—व्यभिचारादिति ॥ असामर्थ्यम्=अप्रामाण्यं न
भवतीत्यर्थः । कुत इति? अत आह—तत्कार्यस्येति ॥
प्रमाणकार्यस्य परिच्छेदस्य ज्ञानादेवोत्पत्तेरित्यर्थः । इदम्,

भावशुद्धिः

प्रमाकरणत्वरूपप्रामाण्याभावसाधनमध्यक्षबाधितमित्यर्थः। न चान्यत् P.144-18
प्रामाण्यमिति, अत्राह–परिच्छेदतो हीति॥ अज्ञाताधिगन्तृ मानमिति तल्लक्षणादित्यर्थः ॥ कुतस्तयोरतन्त्रत्वम्=अप्रयोजकत्वमिति ?अत्राह
—असतीति ॥ तस्मिन्=परिच्छेद इत्यर्थः। अव्यभिचारस्य प्रामाण्यं P.144-19
प्रत्यप्रयोजकत्वे हेतुमुक्त्वा, व्यभिचारस्याप्रामाण्यप्रयोजकत्वाभावे
तमाह—व्यभिचारवतोऽपीति॥ यद्यपि परिच्छेदकं प्रमाणम्; तथापि P.144-20
तिमिरादिवत् प्रामाण्यविरोधी व्यभिचारः, तत्राह–न चेति॥ बाधहेतुर्दोष-
वदिति॥ यथा बाधकप्रत्ययः, कारणदोषश्च प्रामाण्यविरोधीत्यर्थः॥ P.144-21

'न दृष्ट' इति यदुक्तम्, तत्र चोदयति–नन्विति॥ शब्दः, अनित्यः, प्रमेय- P.144-22
त्वात्; घटवदित्यत्र प्रमेयत्वम्, अयम्, पुरुषः, ऊर्ध्वत्वात्; चैत्रवदित्यत्रोर्ध्वत्वम्, आदिपदादभिधेयत्वादिकं च व्यभिचारादप्रमाणं दृष्टमित्यर्थः।

अभिप्रायप्रकाशिका

कारिकाविवरणम्

नित्यम्, प्रमेयत्वात्; आत्मवदित्यादौ व्यभिचारस्य प्रामाण्योपघातकत्वं दृष्टमिति, अत आह–व्यभिचारात् प्रमेयत्वेति ॥ तत्र प्रमाणकार्यपरिच्छेदस्याभावादप्रामाण्यम्, न तु व्यभिचारादित्यर्थः ॥ १८५, १८५½ १८६, १८७ ॥

ब्रह्मसिद्धिविवरणम्

संप्रयोग-संस्कारयोरेकज्ञानजनकत्वानुपपत्तेर्ज्ञानभेदोऽभ्युपगन्तव्यः, ततश्चाविवेकभ्रम इति, नेत्याह—ज्ञानभेदेति ॥ संप्रयोग-संस्काराभ्यां प्रत्यभिज्ञानस्यैकस्यैवोत्पत्तिदर्शनादित्यर्थः ॥ १८५, १८५½ ॥

ज्ञायमानेऽपि व्यभिचारदोषाद् ज्ञानान्तरमपेक्षणीयमिति चेत्, मैवम्; अपेक्ष्यमाणस्यापि तादृशत्वात् तेन निश्चये पूर्वेणैव निश्चयोपपत्तेरित्याह—तथाहीति ॥ व्यभिचारदोषादप्रामाण्यमित्यपि नाशङ्कनीयम्; प्रमाणस्य परिच्छित्तेर्ज्ञानोदयमात्रेण सिद्धत्वादित्याह—न चेति ॥ व्यभिचाराव्यभिचारयोरप्रयोजकत्वादपि नाव्यभिचारात् प्रामाण्यम्, न च व्यभिचारादप्रामाण्यमित्याह—परिच्छेदतो हीति ॥ परिच्छेदव्यतिरेके सत्यव्यभिचारे प्रामाण्यव्यतिरेकात्, असति च परिच्छेदे व्यभिचारेऽपि प्रामाण्यदर्शनादिति हेतुमाह—असति च तस्मिन्निति ॥ बाधक-कारणदोषयोः प्रामाण्यो-

भावशुद्धिः

P.144-23 दूषयति—नैतदिति ॥ मानकार्यपरिच्छेदाभावः कुतः ? तत्राह—तदभाव-
P.145- 2 श्चेति ॥ हेत्वभावं साधयति—अव्यभिचाराद्धीति ॥ कुतोऽयं विनिगम
इति ? अत्राह—यत्र त्विति ॥ भवतु ज्ञानकरणं चक्षुरादि व्यभिचार्यपि
P.145- 4 प्रमाणम्, ज्ञानं तु लिङ्गवदव्यभिचार्येव प्रमाणमिति, अत्राह—तद्वदेवेति ॥
ज्ञानस्य स्वतो निश्चायकत्वे व्यभिचारोऽपि कुतः सिध्येदित्यर्थः।
व्यभिचारस्य कारणदोषवत् प्रामाण्यविरोधित्वाभावेऽपि, किमिदं
घटज्ञानं रजतज्ञानवदयथार्थम्, शुक्तिज्ञानवद् यथार्थं वेति संशयोत्पादनेन
P.145- 5 प्रामाण्यापहन्तृत्वमिति, अत्राह—न चेति ॥ हेतुमाह—परिच्छिन्न इति ॥
अबाधिते निश्चिते द्वैविध्यस्य=किंचिज्ज्ञानं यथार्थम्, किंचिदयथार्थ-
मिति द्वैविध्यस्य साधारणधर्मस्य द्विविधसंबन्धिनो ज्ञानस्येत्यर्थः।
P.145- 6 कुत इति ? अत्राह—न निश्चित इति ॥ साधक-बाधकमानाभावस्यापि
संशयहेतुत्वादित्यर्थः। सम्यक् परिच्छेद एव कथम् ? अत्राह—उत्पत्त्यैवेति ॥
P.145- 7 अनवधारणज्ञानेऽनाश्वासप्रसङ्ग इति द्वितीयं कल्पं दूषयति—अनव-
धारकं त्विति ॥ संशयज्ञानं विचार्यतया न प्रस्तुतमित्यर्थः। निश्चयात्मकं

अभिप्रायप्रकाशिका

पघातित्वात् तदभावः प्रामाण्ये यथाऽपेक्ष्यते, एवं व्यभिचारस्यापि प्रामाण्यो-पघातित्वात् तदभावोऽपेक्षणीय इति, मैवम्; व्यभिचारेऽपि चक्षुषः प्रामाण्य-दर्शनादित्याह—न च व्यभिचार इति ॥

अनित्यः, शब्दः, प्रमेयत्वात्; ऊर्ध्वत्वादयं पुरुष इत्याद्यनुमाने व्यभिचा-रादप्रामाण्यं दृष्टमिति शङ्कते—नन्विति ॥ परिहरति—नैतदिति ॥ तर्हि परिच्छेदायाव्यभिचारोऽपेक्षणीय इति, मैवम्; अव्यभिचारिणो लिङ्गत्वात्। अव्यभिचारो लिङ्गत्वहेतुः, अतो हेत्वभावादेव तत्र परिच्छेदाभाव इत्याह—तदभावश्चेति ॥ तदेव स्पष्टयति—अव्यभिचाराद्धीति ॥ एवमनुमानज्ञान एव परम्परया व्यभिचारापेक्षा, न तु प्रत्यक्ष इत्याह—यत्र त्विति ॥

ननु लिङ्गवदेव ज्ञानमपि परिच्छेदायाव्यभिचारमपेक्षतामिति, नेत्याह—तद्वदेवेति ॥ अस्तु तर्हि संशयोत्पादनेन व्यभिचारः प्रामाण्योपघातीति, नेत्याह—न चेति ॥ द्वैविध्यस्य=प्रतीतिद्वैविध्यस्येति यावत्। तदेव व्यति-रेकमुखेनोपपादयति—न निश्चित इति ॥ परिच्छेदादूर्ध्वं मा भूत् संशयः, प्राक् तु भविष्यतीति, अत आह—उत्पत्त्यैवेति ॥ उत्पन्नेऽपि ज्ञाने क्वचिन्न निश्चयो दृश्यत इति, अत आह—अनवधारकं त्विति ॥ प्रमाणप्रसञ्जितस्यानाश्वासस्य

ब्रह्मसिद्धिकारिका

अपि चाग्रहणेऽभीष्टं यद्विवेकनिबन्धनम् ।
न पराणुद्यते दण्डैस्तद्विपर्ययदर्शने ॥ १८८ ॥

---

भावशुद्धिः

ज्ञानं विचार्यतया प्रस्तुतम्, तथापि तत्राविश्वासः साधारणधर्मदर्शनात् स्यात्, अत्राह—एवं चेति ॥ विशेषदर्शनं संशयविरुद्धमित्यर्थः ॥

ज्ञानमक्षवद् मानम्, न लिंगवदित्युक्तम्—यदि लिङ्गवदिति, P.145- 8
तत्राह—य एवेति ॥ अव्यभिचारज्ञानं स्वार्थेनाव्यभिचारेणानवगताव्यभिचारम्, अवगताव्यभिचारं वा? तत्राद्यं दूषयति—न हि तदिति । P.145- 9
द्वितीयं दूषयति—ज्ञानान्तरादिति ॥ तस्मादुत्पत्त्यैव निश्चायकम् ॥

व्यतिरेके दण्डान्तरमाह—अपि चेति ॥ संबन्धिनोऽर्थस्यासिद्धौ P.145-10
नाविनाभावसिद्धिरित्यर्थः । इतश्च स्वतः प्रमाणं ज्ञानं वाच्यमित्याह—किंचेति ॥ त्वया विज्ञानरूपादेः ज्ञानस्यार्थाव्यभिचारः कथ्यते, विप- P.145-12
रीतख्यातौ तद्विरोधादव्यभिचाराभावप्रसङ्गादिति वदतेत्यर्थः ॥
किमतः? तत्राह—तथा सतीति ॥ यथाऽव्यभिचारसाधकं ज्ञानं स्वतः P.145-13
प्रमाणत्वात्, तथा घटादिज्ञानं स्वतः प्रमाणत्वादेव स्वार्थं साधयेत्, किमव्यभिचारेणेत्यर्थः । व्यभिचारप्रयुक्ताप्रामाण्यनिवृत्त्यर्थमव्यभिचार इति, अत्राह—न चेति ॥ १८६, १८७ ॥

कारिकाविवरणम्

अपि चायमनाश्वासोऽख्यातिपक्षेऽपि तुल्यः,
किमिदमविविक्तानेकज्ञानम्, संसृष्टैकज्ञानं वेति दोष-

अभिप्रायप्रकाशिका

निराक्रियमाणत्वादित्यर्थः ॥ प्रमाणमनिश्चायकं चेति स्ववचनविरोध इत्याह—एवं चेति ॥ स्वतः प्रामाण्येऽनाश्वासं परिहृत्य परतः प्रामाण्ये तमापादयति—य एव त्विति ॥ तदेवोपपादयति—न हि तदिति ॥ ज्ञानस्यार्थेनाव्यभिचारः कथं ज्ञानादर्थासिद्धौ गृह्येतेत्याह—अपि चेति ॥ सर्वं ज्ञानं यथार्थमिति वदता च नेत्थमभ्युपगन्तव्यमित्याह—किंचेति ॥ कथं वैयर्थ्यं तद्भाव एव प्रामाण्यादिति? अत आह—न चेति ॥ १८६, १८७, ॥

कारिकाविवरणम्

किञ्च भ्रान्तिस्थलेऽन्यस्यान्यताप्रतीत्यभ्युपगमे परमार्थस्थलेऽप्यनाश्वासश्चेत्, भवतामपि तर्हि भिन्नयोरेव विवेका-

ब्रह्मसिद्धिकारिका

नोद्रेकहेतवो दोषाः कार्यसामर्थ्यघातिनः ।
ग्रहाग्रहविभागः स्यादतस्तत्सदसत्त्वतः ॥ १८९ ॥
विपर्यये हि नितरामुपघातः प्रकल्पते ।
इष्टकार्योपरोधेन विपरीतोदयेन च ॥ १९० ॥
तस्मात् तत्सदसत्त्वाभ्यां विवेकोऽत्रापि कल्पते ।
दोषेऽसत्यग्रहाशङ्का कथं च विनिवर्तते ॥ १९१ ॥
न हि कारणसद्भावे कार्यसत्ता नियोगतः ।
प्रत्यक्षं कार्यमेवं च हेतुनाऽनुमितं भवेत् ॥ १९२ ॥
विपर्यये फलाभावो हेत्वभावात्तु युज्यते ॥ १९२½ ॥

भावशुद्धिः

कारिकाविवरणम्

भावाभावाभ्यां विवेकोऽस्मन्मतेऽपि तुल्य इत्याह—
P.145-15 अपिचेति ॥ अख्यातिवाद्याह––नोद्रेकेति ॥ दोषाणां न
विपरीतकार्यहेतुत्वम्, प्राप्तकार्यनिरोधमात्रहेतुत्वादि-
P.145-19 त्यर्थः । तदेतन्निराकरोति––विपर्यये हीति ॥ तदर्थं दर्श-
P.145-20 यति—इष्टकार्येति ॥ अपि चास्माकमेव विवेकहेतुरस्ति,
P. 145-22 नाख्यातिवादिन इत्याह––दोषेऽसतीति ॥ असतीति
च्छेदः । अदुष्टकारणसद्भावलिङ्गेन ग्रहस्यानुमानादग्रहा-

अभिप्रायप्रकाशिका

कारिकाविवरणम्

ग्रहाद् भ्रान्तौ प्रवृत्तिः, इति परमार्थस्थलेऽपि तथात्वशङ्का स्यात् । अथ दोषसदसत्त्वाभ्यां विवेकः, तर्ह्यस्माकमपि स सम्भवतीत्याह— अपि चेति । प्राप्तकार्यप्रतिबन्धक एव दोषः, न तु विपर्ययहेतुः, तत् कथं तद्भावभावनिबन्धनो भवन्मते विवेक इति शङ्कते—नोद्रेकेति ॥ दाहे बीजस्य प्राप्तकार्यविरोधेन विपरीतकार्यहेतुरपि दृष्ट इति परिहरति—[1]विपर्ययेऽपीति ॥

किञ्च भवत एव विवेकोऽनुपपन्न इत्याह—दोषेऽसतीति ॥ अस्तु सति दोषे चक्षुरादिकारणमेव विवेकज्ञानं

1. विपर्यये हीति मूलपाठः

भावशुद्धिः

कारिकाविवरणम्

शंकानिवृत्तिरिति, अत्राह—न हीति ॥ कार्यस्य सामग्रीसाध्यत्वादित्यर्थः ॥ कारणसामग्र्या मानफलं ज्ञानमनुमिमानस्य स्वसंवेदनत्वाभ्युपगमविरोध इत्याह- P.146- 1
प्रत्यक्षमिति ॥ अन्यथाख्यातौ दोषाभावे भ्रान्त्यभावो निश्चीयते; कारणाभावस्य कार्याभावेन व्याप्तत्वादि- P 146- 2
त्याह—विपर्यय इति ॥ १८८, १८९, १९०, १९१, १९२, १९२½ ॥ P.146- 3

ब्रह्मसिद्धिविवरणम्

अख्यातिपक्षे योऽनाश्वासपरिहारः, सोऽन्यत्रापि सम इत्येतस्मिन्नर्थे कारिकां योजयति—विवेकोपायश्चेति ॥ दोषः करण- P.146- 4
सामर्थ्यं विहन्ति, न विपरीतकार्यं करोतीति, अत्राह—विपर्यय-
हेतवोऽपीति ॥ दग्धवेत्रबीजेभ्यः कदलीकाण्डजननादित्यर्थः । उप- P.146- 5
घातकत्वम्=दोषत्वं सुतरामित्युक्तं विशदयति—इष्टेति ॥

दोष-तदभावाभ्यां ग्रहाग्रहविवेकश्चेदेवं ममाऽपीत्युक्तम्, इदानीं मम ताभ्यां विवेकः स्यात्, न तवेत्याह—न चेति ॥ हेतुमाह—यत इति ॥ P.146- 6
नावश्यमदुष्टानि कारणानि कार्यं जनयन्ति । न हि कलमबीजमदुष्टमित्येव कलमाङ्कुराय कल्पतेऽन्तरेण सहकारिसमवधानमित्यर्थः । भवतु

अभिप्रायप्रकाशिका

कारिकाविवरणम्

जनयेदित्यस्मन्मते विवेकः सम्भवतीति, मैवम्; नियमाभावादित्याह—न हीति ॥ संवित्प्रत्यक्षवादिनः स्वसिद्धान्तविरुद्धमनुमेयत्वमपि संविदः प्राप्तमित्याह—प्रत्यक्षमिति ॥ त्वन्मतेऽपि तर्हि कथमनुमानमिति? अत आह—विपर्यय इति ॥ १८८, १८९, १९०, १९१, १९२, १९२½ ॥

ब्रह्मसिद्धिविवरणम्

कार्यं भवत्येवेति न नियन्तुं शक्यमित्युक्तम्, इदानीं कारणाभावेऽपि कार्याभावो दृश्यत इति, अत आह—विपर्ययश्च स्यादिति ॥ अस्मन्मते तु फललिङ्गेन ज्ञानानुमानम्, दोषाख्यकारणादिभावेन विपर्ययकारणादिभावानु-

ब्रह्मसिद्धिकारिका

अनालम्बनतापत्तिर्यथाकारान्तरार्पणम् ॥ १९३ ॥
स्वरूपानर्पणादेवं भवेदग्रहणेऽपि ते ।
कस्यचित्त्वर्पणं तुल्यमथ तत्र न तत्तथा ॥ १९४ ॥
परस्यापि हि तत्रैवमथ तत्र तथा स्थितेः ।
सर्वत्र स्यात्तथाभावः स्यादेवं ग्रहणेऽपि ते ॥ १९५ ॥
यथा तत्रानिमित्तत्वात् सम्यग्ज्ञानेऽनिमित्तता ।
शङ्क्यते ग्रहणेऽप्येवमग्रहे सा निरूपिता ॥ १९६ ॥
ज्ञानादेव निमित्तत्वमन्येषां न विशिष्यते ॥ १९६½ ॥

---

भावशुद्धिः

P.146- 7 वा दुष्टादिन्द्रियात् सम्यगग्रहणम् ? तथाप्यन्यो दोषः स्यादित्याह—विपर्ययश्चेति ॥ इयम्, सम्यक् संवित्तिः, अदुष्टकारणजत्वात्; संमतवदिति स्वप्रकाशा संविदनुमेया स्यादित्यर्थः। न केवलमपरोक्षफलस्यानुमेयत्वेन वैपरीत्यम्, कार्यलिङ्गेन कारणानुमानं युक्तम्, इह कारणेन कार्या-
P.146- 8 नुमानादपीत्याह—फलात्त्विति ॥ मम नायं दोष इत्याह—दोषाभावात्त्विति ॥ १८८, १८९, १९०, १९१, १९२, १९२½ ॥

कारिकाविवरणम्

यच्चाख्यातिवादिभिरनालम्बनत्वमापादितम्, तत्
P.146-10 तेषामपि समानमित्याह—अनालम्बनतेति ॥ चक्षुस्संयुक्ते

अभिप्रायप्रकाशिका

मानं च युक्तमित्याह—फलात्त्विति ॥ १८८, १८९, १९०, १९१, १९२, १९२½ ॥

कारिकाविवरणम्

यदुक्तम्—अविषयमनालम्बनमग्राह्यमेव स्यादिति, तत्राऽऽह—अनालम्बनतेति ॥ सम्प्रयुक्तस्य शुक्त्यादेराकारान्तरस्य रजतस्य समर्पणाद् यथाऽन्यथाख्यातावनालम्बनत्वम्, तथाऽख्यातावपि सम्प्रयुक्तस्य विशेषाकारानर्पणात् पुरोवर्तिज्ञानस्यानालम्बनत्वं तुल्यमित्यर्थः। कथं सम्प्रयुक्तस्याकारस्यावभासमानत्वादा-

भावशुद्धिः

कारिकाविवरणम्

भासमानसामान्यरूपस्य स्वाकारत्वाद् न निरालम्बनत्वमिति, अत्राह—कस्यचित्त्विति ॥ शङ्कते—अथेति ॥ तत्र=अग्रहे, तत्=चक्षुस्संयुक्तम्, तथा=रजताकारज्ञानस्यालम्बनम्, न भवतीत्यर्थः ॥ परिहरति—परस्येति ॥ ममापि तत्र मिथ्याज्ञाने शुक्तिशकलं स्वरूपेणैवमनालम्बनमित्यर्थः ॥ विपर्यये चक्षुस्संयुक्तस्यालम्बनत्वादन्यत्राप्यनालम्बनताशङ्का स्यादित्याह—अथ तत्रेति ॥ दूषयति—स्यादेवमिति ॥ तत्रापि ग्रहणे=सम्यक्ज्ञाने चक्षुस्संयुक्तस्य न सर्वात्मना ग्रहणम्, अनालम्बनत्वं चेति स्यादाशङ्केत्यर्थः। तदेव स्पष्टयति—यथेति॥ तत्र=विपर्यये, अनिमित्तत्वात्=संप्रयुक्तस्यानालम्बनत्वादित्यर्थः। दार्ष्टान्तिके योजयति—ग्रहणेऽपीति ॥ अग्रहे=संसृष्टख्यात्यभावे, सा=संप्रयुक्तानालम्बनता संसृष्टैकज्ञानेऽपि शङ्क्येतेत्यर्थः । दोषहेतुकाग्रहे दृष्टमनालम्बनत्वं P.146-12 P-146-13 P.146-14 P.146-15 P.146-16

अभिप्रायप्रकाशिका

कारिकाविवरणम्

कारान्तरानवभासेऽपि न निरालम्बनत्वमिति ? अत आह—कस्यचिदिति ॥ अथ सम्प्रयुक्तस्य शुक्तित्वादिविशेषानवभासनात्, तस्य ज्ञानस्य तदालम्बनमेव न भवतीत्युच्यते, तर्ह्यन्यथाख्यातावप्यनवभासमानः शुक्त्याकारो नालम्बनमिति तुल्यमित्याह—अथ तत्रेति ॥ विपर्ययज्ञानस्य सम्प्रयुक्तानालम्बनत्वेऽन्यत्रापि ज्ञानत्वसामान्यादनालम्बनत्वशङ्का स्यादिति शङ्कते—अथ तत्र तथेति ॥ परिहरति—स्यादेवमिति ॥ तदेव प्रपञ्चयति—यथा तत्रेति ॥ अनिमित्तत्वात्=अनालम्बनत्वात्, अनिमित्तता=अनालम्बनता। ग्रहणेऽप्येवमिति ॥ अयमर्थः—भ्रान्तिस्थले सम्प्रयुक्तस्यानालम्बनत्वात् सम्यक्स्थलेऽप्यख्यातिपक्षेऽनालम्बनत्वशङ्का दुर्निवारा स्यादिति।

भावशुद्धिः

कारिकाविवरणम्

सम्यग्ज्ञाने नास्ति; तस्य दोषरहितज्ञानत्वादिति, अत्राह
P.146-17 —ज्ञानादेवेति॥ १९३, १९४, १९५, १९६,१९६½ ॥

ब्रह्मसिद्धिविवरणम्

अन्याकारं ज्ञानमन्यालम्बनमित्यनङ्गीकारात् कथमख्यातिम-
P.146-18 तेऽनालम्बनत्वस्याभिधानमित्याशङ्क्य व्याकरोति—आलम्बनत्वेति॥

यथा चक्षुस्संयुक्तस्य रजतरूपेण ग्रहणे नालम्बनत्वम्, एवमग्रहेऽपि निरालम्बनत्वम्; संयुक्तविषयज्ञानेन तदीयरूपस्य यथावदप्रकाशसाम्यादित्यर्थः,। मत्पक्षे कथमनालम्बनत्वशङ्का? संप्रयुक्तगतस्य कस्य-
P.146-19 चिदंशस्य स्वरूपेणावभासादिति शङ्कते—अथेति॥ कस्यचिदित्युक्तं
P.146-20 विशदयति—अथ कानिचिदिति॥ सित-भास्वरत्वादीनीत्यर्थः। परिहरति
P.146-21 ——तुल्यमिति॥ नास्मत्पक्षे चक्षुस्संयुक्तं रजतरूपितस्य ज्ञानस्यालम्बन-
P.147- 1 मिति वैषम्यं शंकते—अथेति॥ अन्यथाख्यातिवाद्यपि चक्षुस्संयुक्तं न स्वरूपेण रजतज्ञानालम्बनं ब्रूते, किन्तु रजतात्मनैवेति परिहरति—
P.147- 2 परोऽपीति॥ अत्राभियुक्तवचनमुदाहरति—एवं हीति॥ अन्यस्यान्यात्मत्वं नास्ति यस्मात्=तस्मात्, अन्यथा सन्तम्=ज्ञानेऽनवभासमानाकारमित्यर्थः॥

अभिप्रायप्रकाशिका

कारिकाविवरणम्

ननु—अख्यातिपक्षेऽनालम्बनता नाभ्युपगम्यते ज्ञानानामिति, तत्राह—अग्रहे सा निरूपितेति॥ सा=अनालम्बनता विवेकाग्रहपक्षेऽपि निरूपिता=सम्प्रयुक्तस्य विकलरूपाग्रहणात् स्वरूपानर्पणात्। एवमिति॥ अत्रेत्यर्थः। ज्ञानस्य सालम्बनत्वं नाम तदाकारधीमत्त्वमेवेति चेत्, तर्ह्यस्मन्मतेऽपि रजताकारज्ञानस्य तन्निमित्तव्यवहारयोग्यं पुरोवर्तिरजताकारेणानालम्बनं स्यादित्याह—ज्ञानादेवेति॥ १९३, १९४, १९५, १९६, १९६½ ॥

ब्रह्मसिद्धिविवरणम्

सङ्ग्रहवाक्यं विभजते—अथ कानिचिदिति॥ तत्राभियुक्तवाक्यमाह—एवं हीति॥ सम्प्रयुक्तस्य शुक्त्यादेस्तेनाकारेणानालम्बनत्वं नेष्यते;

भावशुद्धिः

"अथ तत्र तथास्थितेः" इत्येतस्यार्थं कथयति—अथेति ॥ P.147-5
परिहरति अग्रहणेऽपीति ॥ तुल्यतामापादयति—यथा खल्विति ॥ P.147-6
दार्ष्टान्तिकमाह—तथेति ॥ अविकलस्वरूपम्=परिपूर्णस्वरूपमित्यर्थः । P.147-7
अग्रहे दृष्टानालम्बनत्वस्य ग्रहोऽसंशयादकारणं शङ्कते—दोषेति ॥ समः P.147-10
समाधिरित्याह—विपर्ययेऽपीति ॥ यश्च विज्ञानकारणत्वमात्रेणालम्बनत्वे चक्षुरादीनामपि तत्प्रसङ्गश्चोदितः, तं परिहरति—न चान्यथालम्बन इति ॥ स्वाभिमतमालम्बनत्वमाह—आलम्बनार्थश्चेति। तदुपपादयति—तथाहीति ॥ तत्र तद्व्यवहारदर्शनात् तद्योग्यत्वसिद्धावपि नायमा- P.147-12
लम्बनार्थ इति, अत्राह—घटस्यापीति ॥ यत् खलु विज्ञानं यत्र तदर्थनिबन्धनहानोपादानोपेक्षाबुद्धिप्रसवसमर्थम्, तत् तदालम्बनमित्यर्थः । तदाकारत्वं तदालम्बनत्वमिति, अत्राह—यत इति ॥ साकारविज्ञान- P.147-13

अभिप्रायप्रकाशिका

रजतज्ञाननिमित्तव्यवहारयोग्यस्य तदाकारेणैवानालम्बनतास्वीकारात्, एतादृशमेव ज्ञानानां निरालम्बनत्वम्, अभावालम्बनत्वं च, न तु सौगतानामिव सर्वथाऽऽलम्बनशून्यत्वमित्यर्थः ॥

एतादृशमप्यनालम्बनत्वं भ्रान्तिस्थलेऽभ्युपगम्यते चेत्, परमार्थस्थलेऽपि तथात्वाशङ्का स्यादिति शङ्कते—अथ विपर्यय इति ॥ अख्यातावपि तुल्यमेतदित्याह सिद्धान्ती—अग्रहणेऽपीति ॥ तदेव प्रपञ्चयति—यथा खल्विति ॥

अभ्युपगम्यैतदुक्तम्, निरालम्बनत्वमपि ज्ञानानां नास्माभिरभ्युपगम्यत इत्याह—न चेति ॥ पुरोवर्तिन एवाकारान्तरेणालम्बनत्वादित्यर्थः । यत् पुनरुक्तं हेतुमात्रस्यानालम्बनत्वं चक्षुरादिवदिति, तत्राह—चक्षुस्त्वन्यथाऽपीति ॥ यथा संप्रयुक्तं पुरोवर्ति ज्ञानं प्रति हेतुः स्वासाधारणाकारान्तरेणानालम्बनमप्यारोपितेनाकारान्तरेणालम्बनं भवति, एवं ज्ञानहेतुरपि चक्षुर्न स्वरूपेण, नाप्यारोपितस्वरूपेण ज्ञानेनालम्ब्यत इत्यर्थः ॥

तन्निरालम्बनत्वमेव निराकर्तुमालम्बनशब्दार्थं निरूपयति—आलम्बनार्थश्चेति ॥ तत्प्रयुक्तव्यवहारयोग्यत्वमेव तदालम्बनत्वमिति कुतः? तदाकारसमर्पकत्वमेव विषयस्यालम्बनत्वं किं न स्यादिति? अत आह—यतो

ब्रह्मसिद्धिकारिका

अवघातप्रोक्षणादेर्यथा द्रव्यार्थता स्थिता ॥ १९७ ॥
ज्ञानं स्वभावाद् द्रव्यार्थं कर्मत्वाच्चात्मनस्तथा।
भवत्वेवं तथापीष्टरूपसिद्धिः कुतो मता ॥ १९८ ॥
शब्दस्तदर्थकार्यत्वे तावज्ज्ञानस्य निष्ठितः ।
ज्ञानाज्ज्ञेयस्य कोऽन्योऽर्थः स्वरूपप्रतिभासनात् ॥१९९॥
अदृष्टकल्पना युक्ता न च दृष्टस्य संभवे ।
तस्माद्यथा प्रोक्षणादिविधेर्व्रीहिषु गम्यते ॥ २०० ॥
अदृष्टा संस्कृतिर्ज्ञानविधे रूपं तथात्मनः ॥ २००½ ॥

भावशुद्धिः

ब्रह्मसिद्धिविवरणम्

नयनिषेधादित्यर्थः ॥ एवं तर्हि सम्यङ्मिथ्याविभागः कथम्? उभय-
P.147-14 व्यवहारयोग्यत्वस्य समानत्वात्, तत्राह—तत्र शुक्तिरिति ॥ तत् सिद्ध-
मेतत् प्रतिपत्तिविधिपरागमो नैवम्भूतं ब्रह्म गमयितुमर्हति; समारोपेणापि
संभवादिति ॥ १९३, १९४, १९५, १९६, १९६½ ॥

P.147-16 तत्र चोदयति—क्रियानिष्ठेऽपीति ॥

कारिकाविवरणम्

P.147-17 द्रव्यार्थता स्थिता ; "व्रीहीन् प्रोक्षति" "व्रीहीन-
वहन्ती"ति व्रीहीणां द्वितीयानिर्देशादीप्सिततमत्वावगमा-
P.147-18 दित्यर्थः। किमतः? अत्राह—ज्ञानमिति ॥ ज्ञानस्य

अभिप्रायप्रकाशिका

नेति ॥ "अनाकारामेव बुद्धिमनुमिमीमहे" इति भाष्यदर्शनादित्यर्थः।
तर्हि कथं रजतज्ञानालम्बनता शुक्तेरिति? अत आह—तत्र शुक्तिरिति ॥
१९३, १९४, १९५, १९६, १९६½ ॥

प्रसङ्गाऽऽगतं परिसमाप्य विधिनिराकरणमेव प्रकृतमनुवर्तयितुं पूर्वपक्षं तावदाह— क्रियानिष्ठेऽपीति ॥

कारिकाविवरणम्

सकर्मकस्यैव ज्ञानस्य विधेयत्वात् कर्मगतातिशयार्थत्वाच्च
प्रोक्षणादिवद् ज्ञानस्य न विधिपरादपि वाक्यात् कर्मत्वेनात्मा

भावशुद्धिः

ज्ञेयपरत्वात्, शब्दतश्चात्मनः कर्मत्वादपहतपाप्मादिरूप आत्मा ज्ञातव्य इति। तस्मादात्मज्ञाननियोग एवास्य, तथाऽऽत्म(न)मवगमयतीत्यर्थः। सिद्धान्ती चोदयति–
भवत्वेवमिति ॥ शब्दादेवापहतपाप्मत्वादीष्टरूपसिद्धिरिति, P.147-19
अत्राह–शब्द इति ॥ तदर्थकार्यत्वे=तदुद्देशेन कर्तव्यता- P.147-20
यामित्यर्थः। परिहरति–ज्ञानादिति ॥ तत्राकिञ्चित्करस्य P-147-21
तादर्थ्यायोगाद् ज्ञानस्य किञ्चित्करत्वे सत्यात्मरूपसिद्धिस्तत्फलमित्यर्थः ॥ विहितज्ञानानुष्ठानाददृष्टं फलमिति,
अत्राह—अदृष्टकल्पनेति ॥ उपसंहरति–तस्मादिति ॥ P.148- 1
तथाऽऽत्मनो रूपं गम्यते=प्रतीयत इत्यर्थः ॥ १९७, १९८, १९९, २००, २००½ ॥

अभिप्रायप्रकाशिका

सिध्यतीत्यर्थः। तथाप्यन्यपराद् वाक्यादपहतपाप्मादिलक्षणं रूपं कथं सिध्यतीति सिद्धान्ती शङ्कते—भवत्वेवमिति ॥ शब्दादेवंरूप आत्मा किं न सिध्येदिति? मैवम्; तस्यान्यपरत्वादित्याह—शब्द इति ॥ तदर्थतया=आत्मार्थतया ज्ञानस्य कार्यत्वे व्यवस्थितः, न त्वेवंरूप आत्मेत्यस्मिन्नर्थे इत्यर्थः। विधिवादी परिहरति–ज्ञानादिति ॥ आत्मज्ञानविषयादपि विधेरात्मनोऽपहतपाप्मादिरूपं सिध्यति; तथाभूतात्मप्रतीतये ज्ञानविधानात्, अन्यथा विधीयमानज्ञानस्यात्मार्थत्वासम्भवादित्यर्थः। न(नु)विधिवादी(दे)तथारूपात्मप्रतीतेरन्यदेव किञ्चिद् दृष्टं रूपं ज्ञानविधेः फलमस्त्विति, अत आह–अदृष्टेति ॥ उक्तमेवार्थं दृष्टान्तपूर्वकं प्रपञ्चयति–तस्मादिति ॥ यथा व्रीहिप्रोक्षणादिविधेरात्मगतादृष्टाख्योऽतिशयः फलम्, एवं ज्ञानविधेरपि कर्मभूतात्मनो विशिष्टरूपप्रकाश एव फलमित्यर्थः। १९७, १९८, १९९, २००, २००½ ॥

भावशुद्धिः

ब्रह्मसिद्धिविवरणम्

P.148- 3 कारिकां व्याकरोति—[1]यथा किलेति ॥ अवघातप्रोक्षणावेक्षणादयोऽवहन्यमान-प्रोक्ष्यमाणावेक्ष्यमाणपराः; संस्काराणां संस्कार्यार्थत्वादित्यर्थः। हेत्वन्तरमाह—द्वितीयेति ॥ "व्रीहीनि"त्यादिद्वितीयानिर्देशादीप्सिततमत्वावगमाच्च तात्पर्यम्, तच्च तेषां तत्राकिञ्चित्कराणां नोपपद्यत इत्यवघातजन्यं दृष्टमेव तुषकणविमोचनं विकारः, प्रोक्षणजन्यं तु न किंचिद् दृष्टमुपलभ्यते, इति संस्कारस्तत्र कश्चिददृष्टात्मा कल्प्यत इत्यर्थः।

P.148- 4 दार्ष्टान्तिकमाह—तथेति ॥ ज्ञानस्य ज्ञेयपरत्वस्वाभाव्यादित्यर्थः ॥ युक्त्यन्तरमाह—कर्मत्वेन चेति ॥ "आत्मानमेव लोकमुपासीते"ति द्वितीययाऽऽत्मनः कर्मत्वेन समर्पणादप्यात्मज्ञानमात्मार्थमित्यर्थः।

P.148- 5 किमतः? अत्राह—अत इति ॥ स्पृशति=अर्थाद् गमयतीत्यर्थः। यागविधिर्यथा यागमात्रपर्यवसायी, तथा ज्ञानविधिस्तन्मात्रपर्यवसा-

P.148- 6 यीति, अत्राह—न ज्ञानेति ॥ हेतुमाह—ज्ञानस्येति ॥ निर्विषयज्ञानस्य विधातुमशक्यत्वादित्यर्थः ॥ लौकिकात्मज्ञानस्य सिद्धत्वेन विधेय-

P.148- 7 त्वादपहतपाप्मादिरूपं ज्ञानं विधेयम्। तत्र चोदयति—स्यादेतदिति ॥

P.148- 8 धीविधायकशब्द एव तत्सिद्धौ मानमिति, अत्राह—शब्दस्तावदिति ॥

P.148-10 तदुपपादयति=एवंविधेति॥ अपहतपाप्मादिरूपस्यात्मनो ज्ञानं कुर्यात्, इति तत्कर्तव्यतायां पर्यवसित इत्यर्थः॥

P.148-11 परिहरति—तत्रोच्यत इति ॥ स्वसमवेतक्रियाफलशालि कर्मेति लक्षणादित्यर्थः। एवं तर्ह्यदृष्टः कश्चिदतिशयस्तथाविधात्मनि कल्प्यता-

P.148-12 मिति, अत्राह—ज्ञानस्येति ॥ तत्र हेतुमाह—न हीति ॥ आत्माभिव्याप्तौ दृष्टे

अभिप्रायप्रकाशिका

ब्रह्मसिद्धिविवरणम्

द्रव्यार्थत्वे व्रीह्यादिगतातिशयार्थत्वं कथमिति? व्रीहीन्प्रोक्षतीत्यादिना तेषां कर्मत्वप्रतिपादनादित्याह—द्वितीयया चेति ॥

'भवत्वेवम्, तथापि' इत्येतद्व्याचष्टे—स्यादेतदित्यादिना ॥

"ज्ञानाज्ज्ञेयस्ये"त्यादिश्लोकद्वयमेतदुत्तरत्वेन व्याचष्टे—तत्रोच्यत इत्यादिना॥

तथापि कथमन्यपराच्छब्दादन्यसिद्धिः, तदर्थसामर्थ्यात्सिध्यतो वा कथं

1. यथेति मूलपाठः

ब्रह्मसिद्धिकारिका

उक्तोत्तरमिदं यस्मादरूपेणापि भासकम् ॥ २०१ ॥
ज्ञानं प्रदर्शितं न स्यादन्यथा तद्विधेः फलम् ।
लयो निवर्त्यो न तथा विक्षेपो हि यथाऽसुखः ॥२०२॥

---

भावशुद्धिः

प्रयोजने सत्यदृष्टकल्पना न युक्तेत्यर्थः । ज्ञानविधानादात्मस्वरूप- P.148-13
सिद्धिं दृष्टान्तेन साधयति—तत्रेति ॥ कयाऽनुपपत्त्या तदवगमः ? P.148-14
तत्राह—नान्यथेति ॥ तदेव कुतः ? तत्राह—न हीति ॥ आत्मनो ज्ञान-
नियोगानुपपत्तिगम्यत्वे स्यादौपनिषदत्वविरोध इत्याशङ्क्याह— P.148-16
यथेति ॥ स्वर्गानुपाये नैयमिकाग्निहोत्रे नियोगवदनुपायेऽपि यागे
नियोग इति, अत्राह—अनुपाये चेदिति ॥ एवं नियोज्यताबलादुपायो- P.148-18
पेयभावमुक्त्वा, कर्तृत्वबलादपि तमाह—अनुष्ठितोऽपीति । यो हि P.148-19
यदिच्छति, स तं करोति, इतीच्छा-प्रयत्नयोः समानविषयत्वादित्यर्थः ।
दृष्टान्ते प्रतिपादितमर्थं प्रकृते योजयति—तथेति ॥ हेतुमाह—न हीति ॥ P.148-20
१९७, १९८, १९९, २००, २००½ ॥

कारिकाविवरणम्

तदेतद् दूषयति—उक्तोत्तरमिति ॥ विमतम्, यथार्थम्, P.148-23
ज्ञानत्वात्; ज्ञानान्तरवत्, इत्यन्यथाज्ञानमेव नास्तीति,

अभिप्रायप्रकाशिका

शब्दप्रमाणत्वमिति शङ्कायां दृष्टान्तप्रदर्शनेन परिहरति—तत्र यथेति ॥
तत्रैव युक्त्यन्तरमाह—अनुपाये चेदिति ॥ नियोज्यान्वयबलात् स्वर्ग-
यागयोरुपायोपेयभावः सिध्यतीत्यर्थः । तेनानुष्ठीयमानत्वात् तस्यैव नियुक्तत्वं
स्यादिति, अत आह—अनुष्ठितोऽपीति ॥ यो हि यदिच्छति, स तत्करोति,
इतीच्छा-प्रयत्नयोः समानविषयत्वनियमात् कर्त्रन्वयबलादप्युपायोपेयभावः
सिध्यतीत्यर्थः । दार्ष्टान्तिकमाह—तथा ज्ञानेति ॥ कयाऽनुपपत्त्येति ?
अत आह—न हीति ॥ १९७, १९८, १९९, २००, २००½ ॥

कारिकाविवरणम्

"योषा वाव गौतमाग्निरि"त्यादावारोपितरूपेणापि
ज्ञानविधानदर्शनान्न ज्ञानविधिबलादात्मयाथार्थ्यसिद्धिरिति

ब्रह्मसिद्धिकारिका

लयविक्षेपभेदश्च न स्यादग्रहमात्रके ।
नन्वरूपावभासे स्याददृष्टफलकल्पना ॥ २०३ ॥
रूपावभासे दृष्टं तु फलं तत्सिद्धिलक्षणम् ।
न दृष्टमात्राद् दृष्टार्थं पुरुषार्थानुगं तु तत् ॥ २०४ ॥
न भिद्यते च तद्भावो रूपारूपावभासयोः ।
यथा प्रपञ्चशून्यत्वे तत्त्वे ज्ञानावभासिते ॥ २०५ ॥
दुःख-कर्म-क्लेशहानमतत्त्वेऽपि तथा भवेत् ।
एतच्चात्र भवेद् युक्तं प्रत्यक्षाद्यविरोधतः ॥ २०६ ॥
अनौपचारिकार्थाश्च स्युः कर्मविधयो यतः ॥ २०६½ ॥

---

भावशुद्धिः
कारिकाविवरणम्

P.148-24 अत्राह—न स्यादन्यथेति ॥ अयथार्थज्ञानाभावे त्रिधिवैफल्य-
P.148-25 मुपपादयति—लय इति ॥ अप्राप्तस्यानिषेध्यत्वात्
प्रतीतस्य परमार्थत्वादित्यर्थः । न सुखयतीत्यसुखः=
दुःखहेतुरित्यर्थः । अख्यातिपक्षे तद्भेदश्च न स्यादित्याह
P.149- 1 —लयविक्षेपेति ॥ लीयते सर्वमस्मिन्निति लयः । अनादि-

अभिप्रायप्रकाशिका
कारिकाविवरणम्

परिहरति सिद्धान्ती—उक्तोत्तरमिति ॥ किञ्च विपर्ययख्याति-मनिच्छतो ज्ञानविधिरपि निष्फलः स्यात्; निवर्त्याभावादित्याह—न स्यादिति ॥ कथं निवर्त्याभावः ? लयशब्द-वाच्यस्य निवर्त्यत्वादिति, अत आह—लयो निवर्त्य इति ॥ विक्षेपनिवृत्तेः पुरुषार्थतां सूचयति—असुख इति ॥ विपर्यास-मनिच्छतश्च लय-विक्षेपरूपाविद्यारूपभेदः सर्ववेदान्तप्रसिद्धो न सिध्येदित्याह—लय-विक्षेपेति ॥ विधीयमानस्यारोपित-विषयत्वे किञ्चित् फलं न दृश्यते, इत्यत्रादृष्टं फलं कल्पनीयं स्यात्, आत्मयाथाम्यविषयत्वे तु दृष्टमेव फलं तत्स्वरूप-प्रकाशनम्, ततश्च न दृष्टे सत्यदृष्टकल्पना न्याय्येति

भावशुद्धिः
कारिकाविवरणम्

भेदः । चोदयति—नन्विति ॥ अनात्मरूपेण प्रतिपत्तेर्न P.149- 2
दृष्टं किञ्चित् फलम्, इत्यदृष्टकल्पना स्यादित्यर्थः ॥ P.149- 3
आत्मरूपप्रतीतौ नायं दोष इत्याह—रूपावभास इति ॥
परिहरति=न दृष्टेति ॥ न यस्य कस्यचिद् दर्शनाद् दृष्टार्थते- P.149- 4
त्यर्थः ॥ किं तर्हीति ? अत्राह—पुरुषार्थेति ॥ पुरुषेणार्थ्य-
मानविषयदर्शनम्, तथेत्यर्थः । रूपावभास एव पुरुषा-
र्थोऽस्ति, नेतरस्तत्रेति, अत्राह—न भिद्यते चेति ॥ तदुप- P.149- 5
पादयति—यथेति ॥ दार्ष्टान्तिकमाह—अतत्त्वेऽपीति ॥ P-149- 7
आरोपितेऽपि प्रपञ्चशून्यत्वे तद्भावनाप्रकर्षाद् दुःखादि-
हानं स्यादित्यर्थः । अपरमार्थेनैवार्थेनाऽऽत्मज्ञानविधिः,
इतीदमेव युज्यत इत्याह—एतच्चात्रेति ॥ २०१, २०२, P.149- 8
२०३, २०४, २९५, २०६, २०६½ ॥

ब्रह्मसिद्धिविवरणम्

आत्मार्थं ज्ञानविधानादात्मनि धीः प्रमैव; धियां स्वतो
मानत्वादिति, अत्राह—आत्मार्थेति ॥ कथमपहतपाप्मादिरात्मा शक्यो P.149-10
दर्शयितुं समारोपपक्ष इति ? अत्राह—आलम्ब्यत इति ॥ नार्थसारूप्येण

अभिप्रायप्रकाशिका
कारिकाविवरणम्

शङ्कते—नन्विति ॥ परिहरति—न दृष्टमात्रादिति ॥
विधीयमानज्ञानस्य यथार्थत्वायथार्थत्वयोर्दृष्टरूपपुरुषार्थसिद्धेरप्य-
विशेषाद् न तद्बलाद् यथार्थत्वादिनियम इत्यर्थः । तदेवोपपाद-
यति—यथेति ॥ तुल्यफलत्वेऽपि कथमयथार्थत्वनिर्णय इति ?
अत आह—एतच्चेति ॥ अद्वैतात्मयाथात्म्यविषयत्वे विधीय-
मानज्ञानस्य प्रत्यक्षादिप्रमाणान्तरविरोधात् कर्मकाण्डविरोधाच्चा-
यथार्थत्वमेवाभ्युपेयं तदविरोधायेत्यर्थः ॥ २०१, २०२,
२०३, २०४, २०५, २०६, २०६½ ॥

ब्रह्मसिद्धिविवरणम्

परमार्थत्वाभावे ज्ञानाकारप्रदर्श्यस्य कथं तदवभास्यत्वमिति ? अत
आह—आलम्ब्यत इति ॥ अतदात्मत्वेऽकिंचित्करस्य कथमालम्बनत्वमिति ?

भावशुद्धिः

ज्ञानमर्थमादर्शयति, अपितु विषय-विषयिभावेन संबन्धेन । निराकारं हि
ज्ञानमित्यर्थः । अयं विषय-विषयिभावोऽपि तत्राकिंञ्चित्करस्यायुक्त
इत्याह—व्यवहारयोग्यतामिति ॥ ज्ञानस्य यथार्थत्वनियमाद् नाधिकं
P.149-11 तद्रूपमिति, अत्राह—तच्चेति ॥ स्मृत-गृहीतयोर्विवेकाग्रहमात्रं तत्रापीति,
P.149-12 अत्राह—प्रतिपादितमिति ॥ ज्ञानस्य यथार्थत्वनियमाभावे फलितमाह—
P.149-14 तत्रेति ॥ यदि कश्चिदागमिको वैयात्यादन्यथाख्यातिं न मन्यते, तं
प्रति बाधकान्तरमाह—अन्यथेति ॥

न ह्यसत्यामन्यथाख्यातावात्मनो निष्प्रपञ्चस्य प्रपञ्चात्मना
प्रथा संभवति, तदसंभवे च कस्य प्रविलयाय तदुपदेश इत्यभि-
P.149-15 सन्धायाऽऽह—स खल्विति ॥ हेतुमाह—अनात्मरूपेति ॥ किमतः ?
P.149-16 तत्राह —यदि चेति ॥

अख्यातिवादी ज्ञानविधेः फलं दर्शयति—अथेति ॥ मिथ्याज्ञान-
P.149-17 मविद्या क्वेति ? अत्राह—स्वप्नेति ॥ ब्रह्मण आच्छादिकान्यासुषुप्ति-
P.149.18 मूर्च्छादावित्याह—सुषुप्त इति ॥ दूषयति—तच्चासदिति ॥ पुरुषेण
यदर्थ्यते, तद्विद्याफलम्; लयस्य स्वयमनर्थत्वाभावाद् न तन्निवृत्तिरर्थ्यत
P.149-20 इत्यर्थः । विक्षेपनिवृत्तेः पुरुषार्थत्वे हेतुमाह—स हीति ॥ न तन्नि-
वृत्तिर्विद्याफलं त्वयाऽभ्युपगम्यत इत्यर्थः ॥

अभिप्रायप्रकाशिका

अत आह—व्यवहारयोग्यतामिति ॥ अतदात्मनोऽपि तदर्थव्यवहारयोग्यत्वं
शुक्त्यादौ दृश्यत एवेति भावः । ततः किमायातमिति ? अत आह—
तच्चेति ॥ रजतात्मना शुक्तिर्नावभासते, किंतु विवेकाग्रहणमेतदिति, अत
आह—प्रतिपादितमिति ॥ ज्ञानविधौ पुरुषार्थपर्यवसायितामिच्छताऽवश्या-
भ्युपेयाऽन्यथाख्यातिरित्याह—नान्यथेति ॥

तदेव प्रपञ्चयति—स खल्विति ॥ एतदेव व्यतिरेकमुखेनाऽऽह—
यदि चेति ॥

पूर्ववादी स्वमतेऽपि प्रविलाप्यमस्तीति शङ्कते—अथ मतमिति ॥
कुत्राच्छादिका, क्व विक्षेपिकेति ? तत्राह—स्वप्नेति ॥ एतावता तव किं
सिद्धमिति ? अत आह—तत्रेति ॥

दूषयति—तच्चेति ॥ कथं विक्षेपनिवृत्तिः पुरुषेणार्थ्यत इति ? अत

भावशुद्धिः

न केवलं लयनिवृत्तेरपुमर्थत्वम्, तद्विरोधिबाधितत्वमपीत्याह—लयस्त्विति ॥ लयप्रधाने सुषुप्तिस्थाने 'एष एव परमानन्दः' इत्यानन्द- P.149-21
श्रवणादित्यर्थः । अविद्याद्वैविध्यमपि परस्य न सिध्यतीत्याह—अपिचेति ॥ P.149-22

ये त्वग्रहणकारणमनाद्यनिर्वचनीयम्, मिथ्याज्ञानं च तत्कार्यं
वाञ्छन्ति, तेषामयमविद्याविभागः स्यादिति, अत्राह—अपिचेति ॥ P.149-23
—तस्मादिति ॥ अयं च विभागः कार्य-कारणभावेन गौडपादाचार्यैर्दर्शित
इत्याह—तदुक्तमिति ॥ P.150- 2

चोदकोऽनुशयनिमित्तमुद्घाटयति—नन्विति ॥ असम्यग्ग्रहणमेव P.150- 5
विपर्यासातिरिक्तं दर्शयति—तथाहीति ॥ तथाभावस्य=निर्भागत्व(स्य)- P.150- 6
चेत्यर्थः । प्रत्यवभासः=व्याहारः ॥

तदेतद् दूषयितुं विकल्पयति—नैतदिति ॥ स्वविषयप्रतिपादना- P.150-.7
क्षमत्वमिति प्रथमकल्पस्य सामान्यात्मना ज्ञानम्, न विशेषात्मनेति
द्वितीयकल्पस्यार्थः । नोभयमप्यविद्येत्याह—तत्रेति ॥ न च तदविद्या; P.150- 9

अभिप्रायप्रकाशिका

आह—स हीति ॥ लयनिवृत्तिस्तु न पुरुषार्थः ; लयस्यैव पुरुषेणार्थ्यमानत्वादित्याह—लयस्त्विति ॥

किञ्चोक्ताविद्याभेदो विपर्ययासिद्धौ न सिध्येदित्याह—अपि चेति ॥ उक्तेऽर्थे गौडपादवचनमाह—तदुक्तमिति ॥

अख्यातिवादी विपर्ययानभ्युपगमेऽप्यविद्याद्वैविध्यमुपपन्नमिति शङ्कते—नन्विति ॥ तयोरवस्थाभेदेन व्यवस्थामाह—अग्रहलक्षणेति ॥ अन्तरेणैव विपर्ययमसम्यग्ग्रहणं क्व दृष्टमिति ? अत आह—तथाहीति ॥ अप्रदेशस्य=निरवयवस्येति यावत् । आकाशादौ दृश्यत इत्यर्थः ॥

सिद्धान्ती दूषयति—नैतदिति ॥ सर्वात्मना वाऽग्रहणमिति शेषः । तत्रापटुज्ञाने, केनचिद्रूपेण(?) ग्रहणपक्षे चाविद्यात्वमसम्यग्ग्रहणस्य न सिध्यतीत्याह—तत्रेति ॥ सर्वात्मना तत्र तथाभावस्याग्रहणे भिन्नत्व-निष्प्रदेशत्वयोरग्रहणे स्वरूपमात्रेणैव स्फुरणे पृथक्त्वेन व्यवहरणमसम्यग्ग्रहणमित्यपि पक्षोऽनुप-

भावशुद्धिः

P.150-10 प्रसिद्ध्यभावादित्यर्थः । द्वितीये दूषणान्तरमाह—न च किञ्चिदिति ॥
P.150-11 मिथ्याज्ञानानङ्गीकारे ज्ञानविधानानर्थक्यमित्याह—अभेदस्येति ॥
P.150-12 अग्रह एव निवर्त्यताम्, अत्राह—न खल्विति ॥ हेतुमाह—न हि तदिति ॥ दुःख-तद्धेतुत्वयोरभावादग्रहस्येत्यर्थः । भेदस्तु विपर्यासविषयो विविधदुःखनिदानं निवर्तनीयम्; प्रेक्षावतः प्रतिकूलवेदनीयत्वादित्याह—भेदस्त्विति ॥ विधान्तरेणासम्यग्ग्रहणं चोदयति—
P.150-13 अथेति ॥ अन्यथाख्यातिप्रसक्त्या प्रत्याह—अभ्युपेतेति ॥

अद्वयस्य द्वयात्मना ज्ञानं नासम्यग्ग्रहणम्, किन्तु द्वयवद्
P.150-14 ज्ञानमित्याह—अथेति ॥ इवशब्दार्थः किमर्थगतः, उत ज्ञानगत इति
P.150-16 विकल्पयति—क इति ॥ आद्यमनुवदति—यदीति ॥ यथा किञ्चिद् दूरस्थं वस्त्वप्रकाशमानैकत्वं प्रकाशते, तथाऽऽत्मतत्त्वमपीत्यर्थः ।
P.150-17 दत्तोत्तरमिदमित्याह—केनचिदिति ॥ द्वितीयकल्पमनुवदति—अथेति ॥

तस्मिन्नपि पक्षे प्रकाशनोपमार्थं तन्निबन्धनव्यवहारो वा, तद्-
P.150-19 भिमानो वेति (विकल्पयति—तत्रेति (?) विकल्पं मनसि निधाय) आद्यमनुवदति—तन्निबन्धनेति ॥ द्वयभानव्यतिरेकेणाद्वयव्यवहार इत्यर्थः । दूषयति—तन्निबन्धनश्चेदिति ॥ हेतुमाह—नासतीति ॥ धीकार्यत्वाद् व्यव-
P.150-20 हारस्येत्यर्थः ॥

अभिप्रायप्रकाशिका

पन्नः; सर्वज्ञानानामविद्यात्वप्रसङ्गादित्याह—न च किञ्चिदिति ॥ असम्यग्ग्रहणाविद्यापक्षे भेदप्रतीतेरनभ्युपगमादभेदाग्रहणस्य चानिवर्त्यत्वाद् न निवर्तनीयाविद्यासिद्धिरिति, अत आह—अभेदस्येति ॥ निवर्त्यलाभायासम्यग्ग्रहणं नाम भेदावभास इति शङ्कते—अथासम्यगिति ॥ परिहरति—अभ्युपेतेति ॥

इवशब्दार्थं दूषयति—क इवेति ॥ आह पूर्ववादी—तन्निबन्धन इति ॥ व्यवहारस्य ज्ञानपूर्वकत्वनियमादन्यथाख्यातिरभ्युपेता स्यादिति परिहरति—तन्निबन्धनश्चेदिति ॥

एकत्वस्याग्रहणे पृथग्ग्रहाभिमान इवशब्दार्थ इति शङ्कते—अथाग्रहण इति ॥ अग्रहणस्याभावत्वात् तत्प्रतीत्यभ्युपगमेऽपसिद्धान्तप्रसक्तिरिति दूषयति—तदसदिति ॥ अग्रहो नाभ्युपेयते, किन्त्वग्रहाभिमान एवेति,

भावशुद्धिः

द्वितीयमुत्थापयति—अथेति ॥ दूषयति—तदसदिति ॥ पररूपेण= P.150-21
समारोपितेन रूपेण ग्रहणानभ्युपगमात् प्राभाकरैः, तन्मतेनाप्रमेयत्वा-
दभावस्येत्यर्थः । अग्रहस्याधिष्ठानस्य ग्रहणानुपपत्त्या दूषणमुक्तम्, P.150-22
इदानीमनुपपत्त्यन्तरमाह—अप्रकाशमाने चेति ॥ किञ्चाद्वयं ब्रह्म भ्रमा-
धिष्ठानं न भवति, किंतु तदग्रहणमिति ब्रुवता किं परिहृतं भवतीत्याह
—अभिन्ने चेति ॥ विपर्ययाभ्युपगमेऽपसिद्धान्तात्, अनभ्युपगमेऽवि-
द्याद्वैविध्यासिद्धेरित्यर्थः । प्रकरणार्थमुपसंहरति—तस्मादिति ॥ P.150-24

विहितज्ञानमयथार्थं चेददृष्टकल्पना स्यादिति चोदयति—नन्विति॥ P.151-1
यथार्थत्वे नायं दोष इत्याह—आत्मरूपेति ॥ (परिहरति[1]—उच्यत इति ॥ P.151-2
(आ)श्रमादि(क?) विहितं कर्म कुर्वतोऽदृष्टम्, इति न तेन दृष्टार्थ-
तेत्यर्थः । हेतुमाह—तेन हीति ॥ पुरुषार्थश्च ज्ञानस्य विहितस्य यथार्थ- P.151-3
त्वे, अयथार्थत्वे च समान इत्याह—न चेति ॥ P.151-4

तदुपपादयति—यथा हीति ॥ सशरीरस्य कथमीदृग्भावः ?
तत्राऽऽह—एवं जीवन्नेवेति ॥ अन्वयेन प्रतिपत्तौ तद् योजयति—तथेति ॥ P.151-7
निष्प्रपञ्चत्वमविद्यमानं कथं संसारनिवृत्तये स्यात्? अत्राह—अभूतो- P.151-8
ऽपीति ॥ सत्यपि तस्मिन्नन्तरेण ज्ञानमनुत्पादात्, असत्यपि तस्मिन्
ज्ञानमात्रादेव तदुत्पत्तेरित्यर्थः ॥

अभिप्रायप्रकाशिका

तत्राह—अभिन्ने चेति ॥ अभेदाग्रहे भेदग्रहाभिमानः केवलं गौरवाय; अभेद एव भेदाभिमानात् तथाभूतव्यवहारोपपत्तेरित्यर्थः ॥

'नन्वरूपावभासे' इति श्लोकभागं व्याचष्टे—नन्विति ॥ न दृष्टमात्रादिति परिहारश्लोकं व्याचष्टे—उच्यत इति ॥ पुरुषार्थपर्यवसानायैव यथार्थदर्शनं तर्ह्यभ्युपेयतामिति? अत्राह—न चेति ॥

तदेव प्रपञ्चयति—यथाहीति ॥ साक्षादिव प्रतिपाद्यमानः । न शोकेन स्पृश्यत इत्यादिवाक्यशेषः । भावनातः स्पष्टं भयं भ्रमादवभासते, अभूतानपि पश्यन्ति, पुरतोऽवस्थितानिवेति । प्रसिद्धेश्चैवमुपेयमित्याह—अभूतोऽपीति ॥

1. कुण्डलितो भागः A. पुस्तके नास्ति ।

ब्रह्मसिद्धिकारिका

जानातिस्तत्त्वबोधे चेन्न मिथ्यादिविशेषणात् ॥ २०७ ॥
नात्मा ज्ञातस्तथा स्याच्चेन्न तद्रूपाविधानतः ।
प्रमाणान्तरसिद्धत्वे नतरामन्यथा यदि ॥ २०८ ॥
शब्दार्पितेन रूपेण तस्य ज्ञानं विधीयते ।
अतत्त्वेनापि तेनास्य विज्ञानमवकल्पते ॥ २०९ ॥

---

भावशुद्धिः

समारोपितस्य प्रपञ्चशून्यत्वस्य पारमार्थिकत्वे न विशेषण-
P.151-9 मित्याह—इदमेव चेति ॥ व्यतिरेकद्वाराऽप्याह—परमार्थे हीति ॥ निग-
P.151-12 मयति—तस्मादिति ॥ २०१, २०२, २०३, २०४, २०५, २०६, २०६½ ॥

कारिकाविवरणम्

विधेयस्यायथार्थत्वे ज्ञानत्वमेवानुपपन्नमिति चोदयति—जानातिरिति ॥ परिहरति—नेति ॥
P.151-13 मिथ्या-ज्ञानम्, संशयज्ञानमिति दर्शनादित्यर्थः । अनात्मरूपेण
P.151-14 प्रतीतावात्मज्ञानं न स्यादिति शङ्कते—नात्मा ज्ञात इति ॥

अभिप्रायप्रकाशिका

उभयथा सम्भवे कथमत्रैवाग्रह इति, तत्राह—इदमेव चेति ॥ एत-देव व्यतिरेकमुखेनाऽऽह—परमार्थो हीति ॥ अभूतकल्पनैवोपादानं यस्य व्यवहारस्य, तत्सिद्धार्थविषयाः स्युरित्यर्थः ॥ २०१, २०२, २०३, २०४, २०५, २०६, २०६½ ॥

कारिकाविवरणम्

'ज्ञा अवबोधने' इति धातुमवलम्ब्य पुनः शङ्कते—जानातिरिति ॥ मैवम्; मिथ्याज्ञानं संशयज्ञानमिति विशेषणे विरोधप्रसङ्गात्, सम्यग् ज्ञानमिति च विशेषणे पौनरुक्त्य-प्रसङ्गाच्चेति परिहरति—न मिथ्यादीति ॥ 'आत्मा ज्ञातव्यः' इत्यात्मतत्त्वज्ञानस्य विधानायोगादित्यर्थः । प्रमाणान्तरासिद्ध-त्वेऽप्यात्मनः शब्दप्रमाणसिद्धत्वात् तज्ज्ञानं शक्यमेव विधातु-

भावशुद्धिः

लौकिकात्मज्ञानस्याविधानान्नैवमिति परिहरति—न तदिति ॥ अलौकिकात्मरूपमपि ज्ञानं यथार्थमेव विधेयमिति, अत्राह—प्रमाणान्तरेति ॥ आत्मनो मानान्तरसिद्धत्वे तज्ज्ञानविधेरानर्थक्यात्, असिद्धत्वे चाशक्यत्वादित्यर्थः। मानान्तरसिद्धस्याऽऽत्मनोऽपहतपाप्मादिरूपेण शब्दसमर्पितेन ज्ञानं विधीयत इति चोदयति—यदीति ॥ दूषयति—अतत्त्वेनापीति ॥ २०७,२०८, २०९ ॥ P.151-15 P.151-17

ब्रह्मसिद्धिविवरणम्

शङ्कते—यदि मतमिति ॥ जानातिः खल्वयं तत्त्वबोध एव निरूढवृत्तिः। न हि व्याकरणज्ञो यज्ञदत्त इत्युक्ते विपर्ययज्ञानमस्याध्यवस्यन्ति, सन्दिहते वा, किन्तु तत्त्वत एवेति प्रतियन्ति लौकिका इत्यर्थः। निराकरोति—तन्नेति ॥ किमतः ? तत्राह— तदेकनियम इति ॥ यदि हि सम्यग्ज्ञानमेव जानात्यर्थः, ततो न ज्ञानस्य सम्यक्त्वं विशेषणम्; ज्ञानपदेनैव सम्यक्त्वस्योक्तत्वेन पौनरुक्त्यात्, न संशयविपर्यासौ; विरोधादित्यर्थः ॥ P.151-18 P.151-19

आत्मशब्दः स्वरूपवचन इति तत्समभिव्याहृतो जानातिस्तत्स्वरूप एवात्रतिष्ठते, पररूपावगमे तु नात्मावगमः स्यादिति चोदयति—स्यादेतदिति ॥ परिहरति—तच्च नेति ॥ "आत्मा ज्ञातव्यः" इति लौकिकविद्याऽऽत्मरूपज्ञानमेव। तावन्मात्रं तु विधेयं न भवति, किंतु लौकिकात्मविषयमित्यर्थः। स्यादलौकिकात्मज्ञानविधिः, को दोष इति P.151-21

अभिप्रायप्रकाशिका

कारिकाविवरणम्

मिति शङ्कते—यदि शब्दार्पितेनेति ॥ उत्तरमाह—अतत्त्वेनेति ॥ "योषा वाव गौतमाग्निरि"त्यादावारोपितरूपेणापि ज्ञानविधानदर्शनाद् न शाब्दत्वमात्रेण यथार्थत्वनिश्चय इत्यर्थः ॥ २०७, २०८, २०९ ॥

ब्रह्मसिद्धिविवरणम्

न खल्वेतावदेवेति यदुक्तम्, तत् प्रपञ्चयति—आत्मा ज्ञातव्यः इति। आत्मज्ञानविधेः सम्भवे त्वदुक्तं स्यात, स एव तु विधिर्न सम्भवतीत्यर्थः। 'शब्दार्पितेने'ति श्लोकं व्याचष्टे—स्यादेतदित्यादिना ॥ उत्तरार्धं परि-

ब्रह्मसिद्धिकारिका

ज्ञानं यदि च दृष्टार्थं प्राप्तं दृष्टत एव तत् ।
आत्मरूपविजिज्ञासोरजिज्ञासोर्वृथैव तत् ॥ २१० ॥

---

भावशुद्धिः

P.152- 1 शङ्कते—यदि स्यादिति ॥ दूषयति—तच्चेति ॥ मानान्तरसिद्धत्वे, असिद्धत्वे वाऽनुपपत्तेरित्यर्थः । तदुपपादयति—प्रमाणान्तरेति ॥ सिद्धत्वा-
P.152- 2 दित्यर्थः । द्वितीयमनूद्यापवदति—अथेति ॥ असिद्धं चेत् , नायमात्मशब्दोऽस्य वाचकः; अगृहीतसंबन्धस्यावाचकत्वात् । अतस्तत्स्वरूपाप्रतिपत्तिः । अविदितपदार्थो न वाक्यार्थः प्रमीयते, इति सर्वथैव नास्य विधिरित्यर्थः । मानसिद्धत्वेऽप्यात्मरूपस्य शब्दसमर्पितरूपेण साक्षा-
P.152- 3 त्कारो विधीयत इति चोदयति—स्यादेतदिति ॥ निराकरोति—तच्च नेति ॥ फलितमाह—तेनेति ॥

अथ[1]वा न खल्वेतदेवेति ॥ 'आत्मा ज्ञातव्यः' इत्येतावदेव ज्ञानविधिमात्रं नास्तीत्यर्थः । तद्विधिमात्रनिराकरणस्य प्रकृतोपयोगमाह—यदि स्यादिति ॥ "तच्च ने"त्यादि तद्धीविधिमात्रनिराकरणार्थतया योजनीयम् ॥ २०७, २०८, २०९ ॥

कारिकाविवरणम्

किञ्च ज्ञानस्य दृष्टार्थत्वाच्च व्यर्थो विधिरित्याह—
P.152- 7 ज्ञानं यदि चेति ॥ स्यात् तर्हि योऽनुभवं न कामयते, तं
P.152- 8 प्रति तद्विधिः, अत्राह—अजिज्ञासोरिति ॥ विधिसह-

अभिप्रायप्रकाशिका

हारत्वेन व्याचष्टे—तेन चेति ॥ शब्देनेत्यर्थः ॥ २०७, २०८, २०९ ॥

कारिकाविवरणम्

अपिचात्मज्ञानस्य दृष्टार्थत्वादपि न विधेयत्वमित्याह—ज्ञानमिति ॥ दृष्टत एव तदिति ॥ दृष्टफलेच्छयैव प्रवृत्तिसिद्धेर्व्यर्थो विधिरित्यर्थः । तथापि न सर्वेषां प्रवृत्तिर्दृश्यत इति, अत आह—अजिज्ञासोरिति ॥ विधीयमानं ज्ञानं व्यर्थम् । अतो विधिशतेनापि तत्र न प्रवृत्तिरित्यर्थः । दृष्टफलेऽपि

---

1. अस्या एव कारिकाया व्याख्यानप्रसङ्गे 'न खल्वेतावदेवे'त्यस्य द्वितीयं विवरणम् ,

ब्रह्मसिद्धिकारिका

तदुपायो न चेद् ज्ञातस्तस्यैवास्तु विधिस्ततः।
अवघातादिविधयो नादृष्टस्पर्शवर्जिताः ॥ २११ ॥
अलौकिकमिदं ज्ञानमतो यदि विधीयते।
न रूपसिद्ध्ये तावद् यतः कर्तव्यता विधेः ॥ २१२ ॥
कर्तव्यता च दृष्टार्थे दृष्टादेव प्रसिध्यति।
अलौकिकेऽर्थरूपेऽतः शब्देन प्रतिपादिते ॥ २१३ ॥
ज्ञाने ज्ञेयाभ्युपायत्वात् स्वयमेवोन्मुखः पुमान्।
तदुपाये त्वविज्ञाते विधिना स प्रवर्त्यताम् ॥ २१४ ॥

---

कारिकाविवरणम्

स्रेणापि तस्य प्रवर्त्तयितुमशक्यत्वादित्यर्थः। ज्ञानस्य दृष्टार्थत्वेऽपि तदुपादायाज्ञानात् तत्र न प्रवर्तते, अतो न विधिरिति, अत्राह—तदुपाय इति ॥ दृष्टफलेऽप्य- P.152-9
वघातादौ विधानं दृष्टम्, एवमत्रापीति, अत्राह—
अवघातेति ॥ अलौकिकत्वादात्मज्ञानं विधेयमिति P.152-10
शङ्कते—अलौकिकमिति ॥ तद्रूपसिद्ध्ये विधिः, अनुष्ठा- P.152-11
नार्थं वा। नाद्य इत्याह—न रूपेति ॥ हेतुमाह—यत P.152-12
इति ॥ द्वितीयं दूषयति—कर्तव्यता चेति ॥ दृष्टादेव P.152-13
फलादिति शेषः। एतदेव विशदयति–अलौकिक इति ॥ P.152-14
क्व तर्हि विधितः प्रवृत्तिः? अत्राह—तदुपाये त्विति ॥ P.152-16
यतो नियोगपरत्वे वेदान्तानां ब्रह्मरूपे तात्पर्यानुप-

अभिप्रायप्रकाशिका

विधिर्दृश्यत इति, अत आह—अवघातादीति ॥ दृष्ट-फलत्वेऽप्यलौकिकत्वाद् ज्ञानस्य विधेयत्वमिति शङ्कते—अलौकिकमिति ॥ किं तत्स्वरूपप्रवृत्तये विधिः, आहोस्वित् तदनुष्ठानायेति विकल्प्य क्रमेण दूषयति—न रूपेति ॥ उक्तमेवार्थं प्रपञ्चयन्नुपसंहरति–अलौकिक इति ॥ श्रवणा-दावपि तर्हि विधिर्निराकृत इति, नेत्याह–तदुपाये त्विति ॥

ब्रह्मसिद्धकारिका

नियोगानुप्रवेशोऽतो विहन्त्येव प्रमाणताम् ।
भूतार्थ इति नोपास्यो भूतार्थगतिमिच्छता ॥ २१५ ॥

भावशुद्धिः

कारिकाविवरणम्

P.152-17 पत्तिः, अतो नियोगो नाङ्गीकार्य इति निगमयति—
नियोगानुप्रवेश इति ॥ २१०, २११, २१२, २१३, २१४, २१५ ॥

ब्रह्मसिद्धिविवरणम्

आत्मज्ञानम्, विधेयम्, वैदिकसाधनत्वात्; अग्निष्टोमवदि-
P.152-19 त्याशङ्क्याह—यदि चेति ॥ तदुपपादयति—यो हीति ॥ यस्यानुभव-
P.152-20 कामो नास्ति, तस्याप्रवृत्तप्रवृत्तिर्विधिफलमस्तीति, अत्राह—
यस्त्विति ॥ चोदयति—अथेति ॥ अत्र श्रवण-मनन-ध्यानाभ्यास-ब्रह्म-
P.152-22 चर्यादिसाधनविशेषज्ञाने प्रवर्तत इत्यर्थः । दूषयति—तच्चेति ॥ हेतु-
माह—यत इति ॥ प्राप्ताप्राप्तविवेकेन ब्रह्मचर्यादिरेव विधीयते, न
ज्ञानमित्यर्थः । दृष्टफले व्यर्थो विधिरिति यदुक्तम्, तत्र चोदयति—
P.153- 1 स्यादेतदिति ॥ परिहरति—सत्यमिति ॥ कुत इति? अत्राह—तत्रापीति ॥
"व्रीहीनवहन्ती"ति विधिरवघातस्य हितहेतुत्वं गमयति, द्वितीयया
व्रीहीणामीप्सितमत्वं च । व्रीहिस्वरूपमात्रनिष्ठेऽवघाते किं तत्फलम्? इति
विध्युपहितावघातभावना पुरुषार्थाकाङ्क्षापरम्परया तमाक्षिपतीत्यर्थः ।
"सक्तून् जुहोती"तिवद् विनियोगभङ्गेन व्रीहिसाधनावघातादेव फलं
P.153- 2 कल्पयेत्, तत्राह—तत्प्रणाड्या वेति ॥ क्रतुभावनापेक्षितक्रतुसाधनीभूत-
पुरोडाशप्रकृतिपिष्ट-तत्प्रकृतितण्डुलनिष्पत्तिरवहतेभ्यो व्रीहिभ्यः, न तु
नखभिन्नेभ्य इति परम्परया पुरुषार्थसिद्धेर्न सक्तुन्याय इत्यर्थः । तण्डुल-
गतनियमादृष्टानुत्पत्तौ न प्रधानापूर्वसिद्धिरित्युक्तं भवति । तत्प्रणा-
ड्या वेति वाशब्दः समुच्चये ॥

यथा खलु कारीरिः स्वरूपतोऽनवगतानन्तरफलाऽपि विधीयते,
P.153- 3 एवमद्वैतज्ञानमपीति चोदयति—अथेति ॥ परिहरति—तत्रोच्यत इति
P.153- 4 आद्यं दूषयति—तत्रेति ॥ हेतुमाह—अनुष्ठानेति ॥ कारीरिविधिरपि
समीहितसाधनत्वमगमयन्ननुष्ठापयतीत्यर्थः । द्वितीयं दूषयति—
P.153- 6 नानुष्ठानायेति ॥ एतदेव विशदयति—तस्मादिति ॥

ब्रह्मसिद्धिकारिका

अत एव न विज्ञानसंतानविधिनिष्ठता ।
तत्रापि पूर्ववद् न स्यात् स्वरूपावगतिप्रमा ॥ २१६ ॥
स्वरूपनिष्ठाद् शब्दात्तु प्रमितस्य वचोऽन्तरात् ।

---

भावशुद्धिः

अत्रोदाहरणमाह—यथेति ॥ 'अष्टौ वर्षान् ब्राह्मणः सकलविद्या- P.153- 9
पारगः' इत्युक्ते तत्साक्षात्करणाय तत्समीपवर्तिनो विधिं विना प्रवर्तन्ते, तथा ब्रह्मणि निरतिशयसुखरूपे शास्त्रात् प्रतिपन्ने तत्साक्षात्करणफले ज्ञाने स्वयमेव प्रवर्तन्ते, किं विधिनेत्यर्थः । यदि शमादीनां तदुपायत्वं नावगतम्, अस्तु तत्र विधिरित्याह—तदुपायेष्विति ॥ तृतीयप्रति- P.153-10
पत्तिनियोगनिराकरणप्रकरणमुपसंहरति—तदेवमिति ॥ २१०, २११, P.153-11
२१२, २१३ २१४, २१५ ॥

उत्तरग्रन्थसन्दर्भस्यापुनरुक्तमर्थं दर्शयति—इदानीमिति ॥ P.153-14

कारिकाविवरणम्

अतश्शब्दपरामृष्टं हेतुं स्पष्टयति—तत्रापीति ॥ P.153-16
तत्त्वनिष्ठवाक्येनावगते तत्त्वे न ततो तद्धीसन्तानविधि-
रित्याशङ्क्य तमङ्गीकरोति—स्वरूपनिष्ठादिति ॥ ज्ञानाभ्यासं P.153-17

अभिप्रायप्रकाशिका

कारिकाविवरणम्

अतो भूतार्थपरेषु वाक्येषु तत्प्रामाण्यविरोधान्नियोगो नाभ्युपेय इत्युपसंहरति—नियोगेति ॥ आगमात् प्रतिपन्न इति यथा श्रीशैलशिखरस्य ज्योतिषि देवह्रदे सौवर्णराजतपद्मेषु शब्दात् प्रतिपन्नेषु स्वयमेव साक्षात्करणाय प्रवर्तेत इत्यर्थः ॥ २१०, २११, २१२, २१३, २१४, २१५ ॥

अत एवेत्युक्तं हेतुं प्रपञ्चयति—तत्रापीति ॥ तर्हि किमुपासन-विधिर्नास्तीति ? तत्राह—स्वरूपनिष्ठादिति ॥ मतान्तर-

ब्रह्मसिद्धिकारिका

उपासनविधानं स्यात् प्राप्तेस्तदपि वा वृथा ॥ २१७ ॥
अभ्यासेन प्रत्ययस्य प्रकर्षस्याभिवीक्षणात् ।
तस्माद् भवत्यकार्येऽर्थे वेदान्तानां प्रमाणता ॥ २१८ ॥

---

भावशुद्धिः

P.153-18 विनाऽपूर्वविधिरिति, अत्राह—प्राप्तेरिति ॥ अभ्यासस्य साक्षात्करणफलत्वं कथमन्वय-व्यतिरेकसिद्धमिति ?
P.153-19 अत्राह—अभ्यासेनेति ॥ रत्नतत्त्वपरीक्षादाविति शेषः । यस्मात् त्रिविधविज्ञाने न विधिसंभव इत्युपसंहरति—
P.153-20 तस्मादिति ॥ २१६, २१७, २१८ ॥

ब्रह्मसिद्धिविवरणम्

शाब्दज्ञानाभ्यासस्य विधेयत्वशङ्का निर्मूलत्वादयुक्तेति, अत्राह—
P.153-21 यदपीति ॥ क्रतुः=अध्यवसायो वेदान्तेषु विधेय इत्यर्थः । तत्त्वमादि-
P.153-22 प्रधानवाक्येषु विधानं न श्रूयत इति, अत्राह—यत्रापीति ॥

शाब्दज्ञानमात्रात् पुरुषार्थासिद्धेरमृतत्वकामो ध्यानं कुर्यादिति
P.154- 1 विधीयते, ध्यानपदार्थव्याख्या प्रत्ययप्रवाह इति । दूषयति—तदपीति ॥ हेतुमाह—पूर्वोक्तादिति ॥ यथा ज्ञानद्वयविधानपक्षेऽभिप्रेतवस्त्वसिद्धिः; विधिपरत्वाच्छब्दस्य, तथाऽभ्यासविधानेऽपीत्यर्थः ॥

यद्यप्यभ्यासविधायकवाक्याद् न वस्तुसिद्धिः; नियोगपरत्वात्; तथापि वाक्यान्तरमस्ति वस्तुनिष्ठम्, ततो वस्तुसिद्धिरिति चोदयति—
P.154- 2 अथेति ॥ वस्तुपरवाक्यान्तरस्वीकारे न विरोध इत्याह—भवत्विति ॥
P.154- 3 तदुपपादयति—तथाचेति ॥ "विज्ञाये"ति वाक्यान्तरं सिद्धात्मज्ञानानुवादेन 'प्रज्ञां कुर्वीते'ति तदभ्यासो विधीयत इत्यर्थः । यदि वाक्यान्तरात् पुरुषार्थरूपमात्मवस्तु प्रतिपन्नम्, तदा तत्साक्षात्करणोपाये
P.154- 4 ज्ञानाभ्यासे स्वयमेव प्रवृत्तेः किं विधिनेत्याशङ्क्याह—तदपि वेति ॥

अभिप्रायप्रकाशिका

माह—प्राप्तेस्तदपीति ॥ वैयर्थ्यमेव प्रपञ्चयति—अभ्यासेनेति ॥ प्रत्ययस्याभ्यासेन प्रकर्षस्य वीक्षणादित्यन्वयः । निदिध्यासितव्य इति प्रत्ययप्रवाहो विधीयत इत्यन्वयः ॥ २१६, २१७, २१८ ॥

भावशुद्धिः

प्राप्तार्थत्वं कुतः ? अत्राह—साक्षात्करणेति ॥ अभ्यासश्चेत् साक्षात्कार- P.154- 5
फलत्वेन दीर्घप्रपाठकादौ सिद्ध इत्यर्थः ॥

अमृतत्वमन्यददृष्टफलमस्तीति, अत्राह—अमृतत्वं हीति ॥ स्वरूप-
साक्षात्करणमेव तदित्युपपादितमित्यर्थः । नष्टपुत्रादिभावनाप्रकर्षात्
तत्साक्षात्कारदर्शनाच्चाभ्यासस्य दृष्टार्थत्वमित्याह—दृष्टेति ॥ तदेव स्पष्ट- P.154- 6
यति—भावनेति ॥ तदेवमभ्युपगम्य निरुपाधिविद्याविषयत्वमेषां विधी- P.154- 7
नामेतदुक्तम्, परमार्थतस्तु ते सोपाधिब्रह्मविद्याविषया इत्याह—
स क्रतुमिति ॥ P.154- 8

"तमेवे"त्यपि वाक्यमभ्यासस्य विधेयत्वे मानत्वेनोक्तम्,
तदपि नाभ्यासविधायकमित्याह—तमेवेति ॥ क्व तर्हि तस्य तात्पर्यम् ? P.154-11
तदाह—तमेवेत्यन्येति ॥ उदाहरति—रक्त इति ॥ अन्यस्य प्रज्ञेयत्वे- P.154-12
नाप्राप्तस्य निवृत्तिप्रतिपादनमनर्थकम्, तत्राह—अत्र हीति ॥ "यस्मिन् P.154-13
पञ्च पञ्चजना आकाशश्च प्रतिष्ठितः" इत्याकाशादिप्रपञ्चाधारत्वेनाऽऽत्म-
तत्त्वमुक्तम्, तस्य तथैव ज्ञातव्यत्वप्रसक्तौ तन्निवृत्त्यर्थं तमेव, नान्यम्,
आत्मानं विद्वान् ब्रह्मामृतो इत्युच्यत इत्यर्थः । एवं "तमेव धीरो
विज्ञाये"त्यत्राप्येवकारार्थ एवं विधीयत इत्याह—तथाच पूर्वार्धेनेति ॥ P.154-14
तस्य=आत्मतत्त्वस्य, तथैव=आशाभेदेनैव ज्ञातव्यत्वप्रसक्तौ तन्नि-
वृत्त्यर्थं तथोच्यत इत्यर्थः । आकाशादिप्रपञ्चनिरासेन प्रज्ञाकरणविधिः
किं न स्यात् ? अत्राह—अन्यथेति ॥ निवर्त्याभावादेवकारानर्थक्य- P.154-17
मित्यर्थः । "नानुध्यायाद्"त्यादिनाऽप्येवकारार्थ एव विधीयते, न
प्रज्ञाकरणमित्याह—तथाचेति ॥

अभिप्रायप्रकाशिका

ब्रह्मसिद्धिविवरणम्

मोक्षः कथं दृष्टं फलमिति ? अत आह—अमृतत्वं हीति ॥ का तर्हि 'स क्रतुं कुर्वीते'त्यादिश्रुतीनां गतिरिति ? तत्राह—स क्रतुमिति ॥

उक्तमेवार्थं वाक्यस्य पूर्वापरालोचनया दर्शयति—अत्र हीति ॥ न केवलं प्रकरण एव तथा प्रतिपादनमित्याह—तथा पूर्वार्ध इति ॥

वाक्यशेषपर्यालोचनायामप्यनिवृत्तिपरत्वमवसीयत इत्याह—तथाचेति ॥

भावशुद्धिः

P.154-18 "नानुध्यायादि"त्यस्यान्यनिषेधार्थत्वेऽपि "तमेवे"ति वाक्यं
प्रज्ञाकरणविधिपरमेवेति, अत्राह—एकवाक्यतेति ॥ उभयत्रान्य-
प्रतिषेधप्रतीतेरित्यर्थः। विधिपक्षे दण्डमाह—अन्यथेति ॥ शब्दानुध्यान-
P.154-19 निषेधोऽयम्, नान्यमात्रस्य ध्येयत्वनिषेध इति, अत्राह—शब्दमात्रे
चेति ॥ शब्दार्थस्याकाशादेः पुमर्थसाधनत्वभ्रान्त्याऽनुध्यानप्राप्तौ
शब्दार्थविषयमेवेदं ध्याननिषेधनं शब्दगतत्वेनोपचर्यते "नानुध्या-
यादि"ति; शब्दपूर्वकत्वादर्थानुध्यानस्येत्यर्थः ॥

P. 154-20 उक्तं न्यायमन्यत्रातिदिशति—एवमात्मेति ॥ 'निदिध्यासितव्यः'
इत्यादयस्तु यद्यपि निरुपाधिब्रह्मविषयाः; तथापि न विधयः; आत्म-
स्वरूपप्रतिपादनेनोपक्रमात्, तेन चोपसंहारात् तदेकवाक्यत्वमेषाम्,
न चैकवाक्यत्वे सम्भवति वाक्यभेदो न्याय्य इत्याह—निदिध्यासि-
तव्य इति ॥ विध्यर्थकृत्यप्रत्ययप्रयोगाद्विधित्वम्, अत्राह—
P.155- 1 तदन्तर्गता इति ॥ "अर्हे कृत्य-तृचश्चे'त्यर्थान्तरेऽपि तद्विधा-
नादित्याह—कृत्यप्रत्ययेति ॥ अत्रैव निदर्शनमाह—यथोपांशुयाजेति ॥
यदुक्तम्—"तत्त्वमसी"त्यत्र चेतो धारयेदिति विधिर्द्रष्टव्य इति, तद-
युक्तम्; पौर्वापर्यपर्यालोचनाद् वचसो वस्तुपरत्वावगमादिति, अत्राह

अभिप्रायप्रकाशिका

तत्र शब्दभेदानुचिन्तनमेव निवर्त्यते, न त्वाकाशादिप्रपञ्चभेदानुचिन्तनमिति, अत आह—शब्दमात्रे चेति ॥

उक्तन्यायं वाक्यान्तरेऽप्यतिदिशति—एवमात्मेति ॥ कस्तर्हि तव्यप्रत्ययार्थ इति? तत्राह—कृत्यप्रत्ययस्येति ॥ अर्हार्थतया किं प्रयोजनमिति? अत आह—स्तुत्यर्था इति ॥ अत्रैव निदर्शनमाह—यथेति ॥

एवमाम्नायते "वर्म वा तद्यज्ञस्य क्रियते तदन्वञ्चौ पुरोडाशावुपांशुयाजमन्तरा यजत्यजामित्वाय विष्णुरुपांशु यष्टव्योऽजामित्वाय प्रजापतिरुपांशु यष्टव्योऽजामित्वायाऽग्नीषोमावुपांशु यष्टव्योऽजामित्वाये"ति। तत्र "विष्णुरुपांशु यष्टव्यः" इत्येवमादिभिर्यागविधानम्, "उपांशुयाजमन्तरा यजती"ति तत्समुदायानुवादः, अथवा—"उपांशुयाजमन्तरा यजती"ति विधिः, विष्ण्वादिवचनमर्थवाद

भावशुद्धिः

—ऐतदात्म्यमिति ॥ काण्डार्थमुपसंहरति—तस्मादिति ॥ अत्रार्थे पारमर्षं P.155- 4
सूत्रमुदाहरति—तथाचेति ॥ P.155- 8

सूत्रं व्याचष्टे—चोदनालक्षणादिति ॥ समन्वयपदार्थमाह— P.155- 9
समन्वयो हीति ॥ अस्ति हीतरेतरयोगे सर्वेषामेव पदार्थानां स्वप्रधा- P.155-10

अभिप्रायप्रकाशिका

इति सन्देहः। तत्र "विष्णुरुपांशु यष्टव्यः" इत्यादिषु विष्ण्वादिदेवतारूपप्रतीत्या यागोपलब्धेर्यद् यष्टव्य इति विधायकप्रत्ययश्रवणात् "अन्तरा यजती"त्यत्र तद्विपरीत्यात् "अन्तरा यजती"ति चान्तरालस्थकालतया कर्मरूपत्वाभावात्, उपांशुयाजशब्दस्य च यौगिकत्वेनोपांशुत्वरूपानभिधायकत्वादुपांशुयजनमुपांशुयाज इति लौकिकत्वे वा "यजेः कु घिण्यतोरि"ति कुत्वेनोपांशु याग इति प्रयोगप्रसङ्गात् विष्ण्वादिवाक्यमेव विधायकमितरत्तत्समुदायानुवादमित्येवं प्राप्ते इदमुच्यते—पुरोडाशयोरजामित्वोपक्रमादजामित्वोपसंहाराच्चैकवाक्यतावगतेर्वाक्यभेदोपपादकविष्ण्वादिरूपयागत्रयविधिरूपत्वपरित्यागेनोपांशुयाजवाक्यसङ्कीर्तितोपांशुत्वबलेन वाक्यान्तराधिगतोपांशुत्वधर्मकविष्ण्वादिदेवताप्रतीतेर्विलम्बिताया अप्याश्रयितुं युक्तत्वात् "तावब्रूतामग्नीषोमावाज्य(स्यैव ना)वुपांशु पौर्णमास्यामयजन्नि"ति कालविधिपराद् वाक्यादग्नीषोमयोराज्यस्य च हविषः प्रतीतेर्द्रव्य-देवताख्यरूपद्वयोपेतोपांशुयाजनाम्नो यागस्य विधानोपपत्तिः। विष्णुर्यष्टव्य इति कर्मणि विहितकृत्यप्रत्ययेन विष्ण्वादीनामेव भावार्थरूपाणां प्राधान्यप्रतीतेर्भावार्थकविषयस्य विधेस्तत्रानुपपत्तेरौत्सर्गिकत्वात् यत् "अन्तरा यजती"त्यत्रान्तरालस्ययागं भावार्थं प्रति गुणत्वात्, यागस्य प्राधान्याद्विधेयत्वोपपत्तेः, वर्तमानापदेशित्वेऽपि "समिधो यजती"त्यादाविव पञ्चमलकारतया विधित्वोपपत्तेः "उरुपांशुयाजमन्तरा यजती"ति विधिः, विष्ण्वादिवाक्यं त्वर्थवाद इति प्रथमे तन्त्रे दर्शितमित्यर्थः॥

यत् पुनरुक्तम्—तत्त्वमस्यादिवाक्येऽपि सदस्मीति धारयेदिति विधिः कल्पनीय इति, अत्राह—ऐतदात्म्यमिति ॥

काण्डार्थमुपसंहरति—तस्मादिति ॥ उक्तमेवार्थमभियुक्तवाक्येन द्रढयति—तथाचेति ॥ तावता कथं विधिप्रमाणत्वं निरस्तमिति? अत आह—समन्वयो हीति ॥

भावशुद्धिः

नानां संसर्गः, न तु तत्रैकः कश्चित् प्रधानमितरो गुणभूतः प्रतीयते। तथाच न तादृशात् संसर्गात् ब्रह्मणः प्रधानस्येतरोपसर्जनस्य प्रतीतिसंभव इति, अत आह—विनियोग इति ॥ गुणभूतपदार्थान्तरोपरागः= प्रधानभूतस्यैकस्य पदार्थस्य संसर्गो विनियोग इत्यर्थः ॥

संप्रति चोदनासूत्रव्याख्यानमङ्गीकृताभिहितार्थविरुद्धं निरसितु-
P.155-12 मुपन्यस्यति—नन्विति ॥ निरस्यति—नैतदिति ॥ प्रामाण्ये हि सिद्धे
P.155-14 वेदस्य तद्विशेषविचारः प्रस्तूयते—किं तत् सिद्धविषयमपि, आहोस्वित् कर्मविषयं वेत्यसिद्धे तु न युक्त इत्यर्थः। उत्तरलक्षणवत्=भेदादि-लक्षणवदित्यर्थः। प्रत्यक्षं हि प्रथमे पादे चोदनास्वप्रामाण्यमाशङ्क्य प्रामाण्यं प्रतिपाद्यते, तद्विरुद्धं चेदमित्याह—तत्रानन्तरमिति ॥ द्वितीया-ध्यायोपक्रमे च प्रमाणलक्षणमुक्तमिति भाष्यं नोपपद्यत इत्याह—
P.155-15 वृत्तमिति ॥ किंच कार्यरूपश्चेद् वेदार्थः साधितः प्रथमपाद एव, ततो

अभिप्रायप्रकाशिका

पदार्थानां हि संसर्गो विधिवाक्येऽपि विद्यत इति, अत आह—विनियोग इति ॥ अपुनरुक्तानां पदार्थानां खण्डैकरसार्थानां प्रतिपत्तिशेषत्व-मित्यर्थः ॥

परिहरति—नैतत् सारमिति ॥ वेदप्रामाण्येऽर्थवत्त्वनिश्चये विचा-रात् प्रागेव संजाते किं वेदार्थश्चोदनालक्षणः, किं वाऽर्थवादादिलक्षण इति च विशये नार्थवादादिलक्षणः, किन्तु चोदनालक्षणो वेदार्थ इति निर्णयपरं स्यात्, तच्चानुपपन्नम्; अनिश्चितत्वादर्थवत्त्वस्येत्यर्थः। अत्र दृष्टान्तमाह—उत्तर-लक्षणवदिति ॥ पूर्वमीमांसाद्वितीयाध्यायवदित्यर्थः। "अथातो धर्मजि-ज्ञासे"ति प्रथमसूत्रेणैवाध्ययनविधेर्दृष्टार्थज्ञानफलत्वमङ्गीकुर्वता वेदस्य विवक्षि-तार्थत्वप्रतिपादनात् वेदार्थमुद्दिश्य चोदनालक्षणत्वप्रतिपादनं न विरुध्यत इति, अत आह—तत्रानन्तरमिति ॥ प्रथमसूत्रे वेदस्य विवक्षितार्थत्वेन प्रामाण्ये सिद्धे पुनः—"औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धः" इत्यादिना वेदस्य प्रामाण्यस्थापनं न युज्येतेत्यर्थः। किञ्च वेदस्यार्थवत्त्वपुरस्सरश्चेद् विचारारम्भः, तर्हि प्रथमाध्यायेन वेदस्य प्रामाण्यमेव साधितमिति द्वितीयाध्यायारम्भे भाष्यकारस्य वचनं विरुद्धं स्यादित्याह—वृत्तं प्रमाणलक्षणमिति ॥ प्रथमे-

ब्रह्मसिद्धिकारिका

यथाऽन्यमानव्यतिभेदमुक्ता मतिः प्रमाणत्वमुपैति कार्ये।
अपौरुषेयागमलब्धजन्मा तथैव सिद्धे निरपेक्षभावात् ॥ २१९ ॥

भावशुद्धिः

मन्त्रार्थवादा अपि कार्यार्थाः सिद्धाः, इति न तत्र विप्रतिपत्तिः स्यादित्याह—मन्त्रेति ॥ नास्त्येव विप्रतिपत्तिरिति, अत्राह—सा चेति ॥ P 155-16
द्वितीयपाद इत्यर्थः। अपि चास्मिन्मते स्मृत्यादिविचारस्यापि न सङ्गतिः। तत्प्रामाण्येऽपि बुद्धादिवाक्यवच्चोदनाप्रामाण्यानिघातादित्यादि बहु वक्तव्यमित्याह—बहु चेति ॥ २१६, २१७, २१८ ॥

कारिकाविवरणम्

काण्डार्थं कारिकया संगृह्याह—यथेति ॥ अपौ- P.155-18
रुषेयागमोत्पन्ना बुद्धिरन्यमानसंबन्धरहिता निरपेक्षा यथा कार्ये प्रमाणम्, एवं सिद्धेऽपि; निरपेक्षत्वहेतोरुभयत्राविशेषादित्यर्थः ॥ २१९ ॥

इति श्रीमदनुभवा(दभया)नन्दपूज्यपादशिष्येणानन्दपूर्णमुनीन्द्रेणविरचिते ब्रह्मसिद्धिव्याख्यारत्ने (भावशुद्धौ) तृतीयो नियोगकाण्डः समाप्तः ॥

अभिप्रायप्रकाशिका

ऽध्याये प्रमाणलक्षणं प्रवृत्तमिति हि भाष्यं तत्र दृश्यत इत्यर्थः। अपि च वेदार्थस्य चोदनाप्रमाणकत्वस्य द्वितीयसूत्रेण प्रतिपादनाद् मन्त्रार्थवादानां प्रामाण्यं तत्र निराकृतम्, इति तत्प्रामाण्ये पुनर्विप्रतिपत्तिदर्शनं नोपपद्यत इत्याह—मन्त्रार्थवादेष्विति ॥ मा भूत् तर्हि विप्रतिपत्तिरिति, तत्राह—सा चेति ॥ "आम्नायस्य क्रियार्थत्वात्" इत्यारम्भे त्रिपाद्या हि तत्प्रामाण्यविप्रतिपत्तिनिराकृतेत्यर्थः। तस्मात् लोकप्रसिद्धधर्ममुद्दिश्य तत्र लक्षणम्, प्रमाणं वा प्रतिज्ञायते द्वितीयसूत्रेण, न तु वेदार्थस्य चोदनालक्षणत्वमुच्यत इत्युपसंहरति—बहु चेति ॥ २१६, २१७, २१८ ॥

इदानीं नियोगकाण्डस्यार्थं श्लोकेन संगृह्णाति—यथाऽन्येति ॥२१९॥

इति परमहंसपरिव्राजकाचार्य-श्रीमज्ज्ञानोत्तमपूज्यपादशिष्य-श्रीचित्सुखमुनि-विरचितायां ब्रह्मसिद्ध्यभिप्रायप्रकाशिकायां तृतीयो नियोगकाण्डः समाप्तः ॥



## ॥ अथ चतुर्थः (सिद्धि) काण्डः ॥

ब्रह्मसिद्धिकारिका

नन्वन्वितपदार्थत्वाद्वाक्यार्थस्य पदार्थताम् ।
अप्राप्य न स्याद् वाक्यार्थः पदार्थत्वेऽन्यमानकः॥२२०॥

---

भावशुद्धिः

ब्रह्मसिद्धिविवरणम्

द्वितीय-तृतीयकाण्डाभ्यां तृतीय-द्वितीयविप्रतिपत्ती निराकृत्य
P.156- 2 प्रथमां विप्रतिपत्तिं निराचिकीर्षुस्तुरीयं काण्डमारभते—एवं तावदिति ॥
P.156- 3 कारिकातात्पर्यमाह—तत्रेति ॥

कारिकाविवरणम्

ब्रह्मात्मा वाक्यार्थः, पदार्थो वा ? नाद्य
P.156- 4 इत्याह—नन्विति ॥ पदार्थानां(र्थता)मप्राप्यात्राक्यार्थत्वे
हेतुमाह—अन्वितपदार्थत्वादिति ॥ द्वितीयं दूषयति—
P.156- 5 पदार्थत्व इति ॥ २२० ॥

ब्रह्मसिद्धिविवरणम्

अलौकिकब्रह्माद्यर्थे पदं प्रमाणम्, वाक्यं वा ? नाद्य इत्याह–

अभिप्रायप्रकाशिका

ब्रह्मसिद्धिविवरणम्

इदानीं वृत्तं सङ्कीर्त्य चतुर्थकाण्डस्य प्रथमविप्रतिपत्तिनिरासे तात्पर्यमाह–तत्रेति ॥

कारिकाविवरणम्

ब्रह्म वाक्यार्थः, किं वा पदार्थ इति विकल्प्य, नोभयथाऽपि तस्य वेदान्तप्रमेयत्वमिति दूषयति—नन्विति ॥ २२० ॥

ब्रह्मसिद्धिविवरणम्

तत्र हेतुमाह—अपदार्थे ज्ञानस्येति ॥ अभावात् । वाक्यार्थज्ञान-

भावशुद्धिः

न तावदिति ॥ पदस्य स्मारकत्वेनाप्रमाणत्वादित्याह——संबन्धज्ञानेति ॥ P.156- 6
न द्वितीय इत्याह——नापीति ॥ हेतुमाह——न हीति ॥ पदवद् वाक्य- P.156- 7
स्यार्थेन संबन्धानवगमादित्यर्थः । कुतस्तर्हि वाक्यार्थावगतिः ? अत्राह
——पदार्थेति ॥ पदस्य पदार्थेन संबन्धग्रहणे सति पदार्थद्वारको वाक्याद्
वाक्यार्थप्रत्यय इत्यर्थः । कुतोऽयं नियमः ? तत्राह—अपदार्थ इति ॥ P.156 8

पदार्थज्ञानाभावे वाक्यार्थज्ञानस्याभावादित्यर्थः । व्यतिरेक-
मुखेनोक्तमर्थमन्वयमुखेनाप्याह——ते हीति ॥ विशेषण-विशेष्यभावेन
संसृष्टाः पदार्थाः वाक्यार्थबुद्धिमुत्पादयन्तीत्यर्थः ॥

तथाप्यपदार्थस्य वाक्यार्थत्वं भवतीति, अत्राह—तत्रेति ॥ अस्तु P.156- 9
पदार्थ एवैकः प्रधानं गुणभूतार्थान्तरविशिष्टो वाक्यार्थः, किमेता-
वताऽपीति ? अत्राह——न चेति ॥ किमेतावतापीति ? अत्राह—— P.156-10
तत्रापदार्थत्व इति ॥ वाक्यादवगतत्वाद् वाक्यार्थत्वमिति, अत्राह—— P.156-11
अनवबोधकमिति ॥ अस्तु तर्हि पदार्थत्वमपीति, अत्राह—पदार्थत्व इति ॥ P.156-12
उक्तमर्थं प्रपञ्चयति—तत्रात्यन्तेति ॥ येषां संसर्गो वाक्यार्थः, तान् प्रत्याह—
संसृज्येरन्निति ॥ येषां तु भेदः, तान् प्रत्याह——न भिद्येरन्निति ॥ द्वितीय- P.156-14
मनूद्य दूषयति——अथ त्विति ॥ सत्तामात्रेणानधिगतानां संसर्गगम- P.156-15
कत्वम्, अत्राह——अप्रतिपन्नाश्चेति ॥ उदाहरति——तत्र यथेति ॥ P.156-16
पिकः=कोकिलः, तत्पदार्थानवगम इत्यर्थः । स्वपक्षमुपसंहरति—तस्मा- P.156-17
दिति ॥ तत्स्वरूपपर्यालोचनयाप्याह—सा हीति ॥ पुरुषस्य, क्रियायाश्च P.156-18

अभिप्रायप्रकाशिका

स्येति शेषः । कथं तर्हि वाक्यार्थप्रतिपत्तिरिति ? तत्राह——ते हीति ॥
अस्तु तर्हि ब्रह्माप्येवम्भूतमिति, अत आह——न चेति ॥ तदेवाह——
अनवबोधकमिति ॥

एवमुक्तं सामान्यन्यायं प्रकृते स्पष्टीकुर्वन्नाह——तत्रात्यन्तेति ॥ 'न
त इतरैरि'त्यत्र तच्छब्देन पदार्थाः परामृश्यन्ते। संसर्गवाक्यार्थाभिप्रायेणाह——
न संसृज्येरन्निति ॥ भेदवाक्याभिप्रायेणाह——न भिद्येरन्निति ॥ तथा-
प्यनधिगतसम्बन्धानां पदानां बहुत्वात् तदनुरोधेन वाक्यार्थप्रतिपत्तिः किं न
स्यादिति ? अत आह——तत्र यथेति ॥ चोदयति——नेति ॥ वैदिकवाक्य-

67

ब्रह्मसिद्धिकारिका

सामान्येन पदार्थत्वे सिद्धेऽसाधारणैर्गुणैः ।
शक्याऽपूर्वविशेषस्य लोकवत् प्रतिपादना ॥ २२१ ॥

---

भावशुद्धिः

मानान्तरसिद्धत्वात् तत्संसर्गप्रतीतिर्वाक्याद् नानुपपन्नेत्यर्थः। यद्यप्रमाणमेव वेदान्ताः, किमिति तर्हि त्रैविद्यवृद्धैः प्रयत्नेन परिगृह्यन्ते—यथोक्तम्
P.156-19 "तुल्यं च साम्प्रदायिकमि"ति ? अत्राह—त्रैविद्येति ॥ हेतुमाह—
उपनिषद इति ॥ रहस्यवचनानीत्यर्थः । २२० ॥
P.156-20 परिहरति—अत्रोच्यत इति ॥

कारिकाविवरणम्

P.156-21 सामान्येन=सत्तासामान्येन रूपेण, असाधारणैः=
P.156-22 स्थूलादिपदार्थैः, संसर्गात् अपूर्वविशेषस्य=मानान्तरानवगतविशेषस्य=वाक्येन प्रतिपादनेत्यर्थः ॥ २२१ ॥

ब्रह्मसिद्धिविवरणम्

P.157- 1 'लोकवदि'ति दृष्टान्तं स्पष्टयति—यथा लोक इति ॥ चञ्चुः=
P.157- 4 तुण्डम्। केन तर्हि रूपेण वाक्यप्रमेयत्वम् ? अत्राह—वाक्येन चेति ॥
P.157- 5 हेतुमाह—सर्वस्यैवेति ॥
P.157- 7 दार्ष्टान्तिकमाह—तथा कारणेति ॥ भेदाच्चेति ॥ विज्ञानानन्दादिपदार्थैर्जड-दुःखात्मताऽव्यावृत्तेरित्यर्थः । कारिकार्थं निगमयति—

अभिप्रायप्रकाशिका

मात्राभिप्रायेणोक्तम्, तर्हि किम्परा सा चोदनेति ? अत आह—सा हीति ॥ कथं तर्हि वेदान्तेषु पूर्वाचार्याणामादर इति ? अत आह—त्रैविद्येति ॥ तदेव कथमिति ? अत आह—उपनिषद इति ॥

"वेदान्तशतरुद्रीयप्रणवादिजपं बुधाः स्वाध्यायमाहुरि"ति जपे वेदान्ता विनियुक्ता इत्यर्थः ॥ २२० ॥

ब्रह्मणः कारणत्व-सत्त्वात्मत्वादिरूपेण सामान्यतः प्रसिद्धत्वादप्रसिद्धविशेषरूपेण वाक्यप्रतिपाद्यत्वमुपपन्नमिति परिहरति—[1]अत्रोच्यत इत्यादिना ॥ 'लोकवदि'ति दृष्टान्तभागं विवृणोति—यथा लोक इति ॥

---

1. तत्रेति मूलपाठः ।

ब्रह्मसिद्धिकारिका

सर्वप्रत्ययवेद्ये वा ब्रह्मरूपे व्यवस्थिते ।
प्रपञ्चस्य प्रविलयः शब्देन प्रतिपाद्यते ॥ २२२ ॥
प्रविलीनप्रपञ्चेन तद्रूपेण न गोचरः ।
मानान्तरस्येति मतमाम्नायैकनिबन्धनम् ॥ २२३ ॥

---

भावशुद्धिः

तदेवमिति ॥ कारणसामान्यम्, सत्तासामान्यं वा मानान्तरसिद्धैरस्थूल- P.157-8
त्वादिभिः प्रत्येकं साधारणैरपि मिलितैः, असाधारणैः संसृष्टं वा तदन्य-
व्यावृत्तं वा वाक्येनानधिगतं शक्यं प्रतिपादयितुम्, इति नोक्तदोष
इत्यर्थः ॥ २२१ ॥

कारिकाविवरणम्

तदेवं वाक्यार्थो ब्रह्मादिपदार्थानां मानान्तरसि-
द्धानां संसर्गेण, भेदेन वा प्रतीयत इत्युक्तम्, संप्रति
पदार्थत्वं वाऽभ्युपेयमित्याह—सर्वप्रत्ययवेद्ये वेति ॥ तह्यौ- P.157-10
पनिषदत्वं पुरुषस्य भज्यत इति, अत्राह—प्रविलीनेति ॥ P.157-12
२२२, २२३ ॥

ब्रह्मसिद्धिविवरणम्

सर्वप्रमाणगम्यत्वे ब्रह्मणो न तत्र शब्दः प्रमाणम्; अनुवादक-
त्वादिति, अत्राह—अथवेति ॥ कथं सर्वप्रत्ययवेद्यत्वम्? अत्राह— P.157-14
ब्रह्मणो व्यतिरेकेणेति ॥ घटादि ज्ञातव्यमस्तीति, अत्राह—विशेषेति ॥ P.157-15

अभिप्रायप्रकाशिका

तथापि कथं सामान्यतः प्रसिद्धस्यानुवादपरिहारेण प्रतिपाद्यत्वमिति? अत आह—सर्वस्यैवेति ॥ ब्रह्मणः कारणत्वरूपेण प्रसिद्धौ श्रुतिमाह—यत इति ॥ तस्य विशेषरूपप्रतिपादनपरां श्रुतिमाह—अस्थूलमिति ॥२२१॥

कथं सर्वप्रत्ययवेद्यत्वमिति? अत आह—ब्रह्मण इति ॥ ननु—विशेषाः प्रत्येतव्या इति, अत आह—विशेषप्रत्ययानामिति ॥ किं तर्हि ब्रह्मणोऽसाधारणं रूपमिति? अत आह—भेदोपसंहारेति ॥ तत्रैव सूचकमाह—वाचारम्भणमिति ॥

न चायमसिद्धत्वादप्रतिपाद्य इति शङ्कनीयमित्याह—तत्र प्रपञ्चेति ॥

ब्रह्मसिद्धिकारिका

ननु चापुरुषार्थत्वं भूतनिष्ठे प्रसज्यते ॥ २२३½ ॥
प्रमाणस्य न चैतावत् पुरुषार्थैकनिष्ठता ॥ २२४ ॥
(उपेक्षामपि हि फलं प्रमाणस्य प्रचक्षते ।)[1]
अपि चाज्ञानतः शोकी दुःखी जीवः प्रकाशते ॥ २२५ ॥
तन्निवृत्तिश्च विज्ञानं पुरुषार्थः स्वयं मतम् ।

---

भावशुद्धिः

प्रकाश एव प्राणभृन्मात्रसाधारणः स्वसंवेदनासिद्धो ब्रह्म, तदसिद्धौ सर्वसंवेद्यासिद्धेरित्यर्थः । सविशेषं तर्हि ब्रह्म ज्ञेयं स्यात्, अत्राह—
P.157-16 भेदोपसंहारेति ॥ सत्यमिति संहारे, यदन्ते व्यवतिष्ठत इति बोधनाद्
P.157-16 द्वैतस्य कल्पितस्य तत्त्वधिया बाधादित्यर्थः । कल्पितत्वे मानमाह
—वाचारम्भणमिति ॥

P-157-17 यद्येवम्, किं तर्हि शब्देन प्रतिपाद्यमिति पृच्छति—किं तर्हीति ॥
P.157-18 उत्तरमाह—प्रपञ्चेति ॥ प्रपञ्चस्याप्रामाणिकस्य कथं निषेधः ? "लब्धरूपे क्वचित् किञ्चिदि"त्युक्तत्वात् ? अत्राह—तत्र प्रपञ्चपदार्थोऽपीति ॥ सत्यं सिद्धं निषिध्यते, न तु प्रमितम् । न प्रमितिरेव सिद्धिः, अपि तु प्रतीति(रपि) सिद्धिरित्यर्थः ॥

कारिकाविवरणम्

ब्रह्मणो मानान्तरसिद्धत्वात् प्रपञ्चाभावस्य शास्त्रगम्यत्वस्वीकारात् कथमौपनिषदत्वं ब्रह्मण इति? अत्राह
P.157-19 —आम्नायैकेति ॥ २२२, २२३ ॥

अभिप्रायप्रकाशिका

प्रत्यक्षादिगोचरत्वात् तर्हि ब्रह्मणः कथमाम्नायैकगम्यत्वमिति ? अत आह—प्रत्यक्षादीनामिति ॥ सर्वप्रत्ययवेद्यमपि तदविद्यानुबद्धमेव, न तु शुद्धरूपमित्यर्थः ॥ २२२, २२३ ॥

---

1. अत्र प्रथमे संस्करणे 'उपेक्षामपि हि फलं प्रमाणस्य प्रचक्षते' इति श्लोकार्धेनाप्यत्र भाव्यमित्यभ्यूहः, परन्तु मातृकासु न दृश्यत इति लिखति ।

इदं तु प्रतिभाति —'उपेक्षामपि प्रमाणफलं प्रमाणविद आचक्षते' इति ब्रह्मसिद्धिः 'प्रमाणस्य न चैतावत्पुरुषार्थैकनिष्ठता' इति कारिकाया अर्थतोऽनुवादमात्रपरा । अत एव कारिकाविवरणावसरे न तस्यापि विवरणं भावशुद्धौ, अभिप्रायप्रकाशिकायाम्, शङ्खपाणिव्याख्यायां वा दृश्यते ।

ब्रह्मसिद्धिकारिका

कस्मिंश्चिदर्थे विज्ञाते कुतूहलवतां नृणाम् ॥ २२६ ॥
आकुलानां ज्ञानजन्म पुरुषार्थत्वसंमतम् ।
आक्षादौ च यथारूपनिष्ठे नापुरुषार्थता ॥ २२७ ॥
न च प्रवृत्तिनिष्ठत्वं तथाऽस्मिन् केन वार्यते ।
ज्ञेयस्य पुरुषार्थत्वं तत्र चेदत्र तत् समम् ॥ २२८ ॥
पुरुषार्थः स्वयं ब्रह्म प्रशान्तं विजरादिकम् ।
अतस्तत्त्वमसीत्येवमनुशिष्याय शिष्यते ॥ २२९ ॥
परप्रवृत्तेरङ्गत्वं प्रत्यक्षादेर्मतं यदि ।
अत्रापि साक्षात्करणप्रवृत्तावङ्गतेष्यताम् ॥ २३० ॥

---

भावशुद्धिः

ब्रह्मसिद्धिविवरणम्

कारिकार्धं व्याचष्टे--यत् खल्विति ॥ तृणादिगोचरप्रत्यक्षवत् P.157-24
प्रामाण्यं स्यादिति, अत्राह—अपुरुषार्थत्वाच्चेति ॥ P.158- 1

शब्दस्यायं धर्मः, यत् फलवदर्थप्रतिपादकत्वेन प्रामाण्यमित्यर्थः।
किमतः ? तत्राह—तथाचेति ॥ २२३$\frac{1}{2}$ ॥ P.158- 2

यद्यपि स्वाध्यायविधिस्वीकृततया वेदराशेरेकोऽपि वर्णो नापुरुषार्थो युक्तः ; तथापि परस्य पुरुषार्थत्वे प्रमाणत्वं हेतुं व्यभिचारयितुमाह--उच्यत इति ॥ P.158- 3

कारिकाविवरणम्

उपेक्षाविषयप्रत्यक्षादेः प्रमाणत्वाद् न च शब्दस्येति विशेषणीयम् । प्रमितिकारणत्वेन प्रमाणत्वोप-

अभिप्रायप्रकाशिका

प्रकारान्तरेणाप्रामाण्यमाशङ्क्य निराचष्टे—परः पुनः प्रत्यक्षतिष्ठत इत्यादिना ॥ २२३$\frac{1}{2}$ ॥

कारिकाविवरणम्

अपुरुषार्थपर्यवसायित्वं क्वचिद् दृष्टमिति, अत्राह--
कस्मिंश्चिदिति ॥ यदुक्तम्-प्रवृत्ति-निवृत्तिपरत्वादपुरुषार्थत्वमिति, तत्राह—अक्षादौ चेति ॥ भवतु ब्रह्म स्वयंप्रकाश-

भावशुद्धिः

कारिकाविवरणम्

पत्तेरित्यर्थः। न च ब्रह्मतत्त्वविज्ञानस्य न पुरुषार्थते-
P.158- 6 त्याह—अपि चाज्ञानत इति॥ न च शाब्दज्ञानं प्रवृत्ति-
निवृत्ती एव विदधत् पुरुषार्थम्, नान्यथेत्यप्येकान्तः;
तत्र ज्ञानमात्रस्यापि क्वचित् प्रेक्षावद्भिरर्थ्यमानत्वादि-
P.158- 8 त्याह—कस्मिंश्चिदिति॥ न च वस्तुरूपनिष्ठमपुरुषार्थ-
मित्यप्यैकान्तिकमित्याह—अक्षादौ चेति॥ यदि मतम्-
P.158-10 वस्तुनिष्ठत्वेप्यक्षादीनां वस्तुनः प्रार्थ्यतया प्य(पि)
P.158-12 पुरुषार्थत्वम्, तदविशिष्टमत्रापीत्याह—ज्ञेयस्येति॥ साम्य-
P.158-13 माह—पुरुषार्थ इति॥ फलितमाह—अत इति॥ अनु-
P.158-14 शिष्याय=अनुशासनयोग्याय श्वेतकेतवे। अथ मतम्—
प्रत्यक्षादिना प्रमाणेनावगम्यार्थं तमीप्सति वा, जिहासति
वा; अर्थे प्रेप्सा-जिहासाभ्यां प्रयुक्तः समीहते, न
पुनः शब्दादवगम्यं ब्रह्म समीहत इत्याशङ्क्य, साम्यमा-
P.158-15 पादयति—परप्रवृत्तेरिति॥ २२४, २२५, २२६,
२२७, २२८, २२९, २३०॥

ब्रह्मसिद्धिविवरणम्

हिताहितोपादान-हानयोर्मानफलत्वादैकान्तिकं पुरुषार्थपर्यव-
P.158-17 सायित्वं प्रमाणस्येति, अत्राह—न तावदिति॥ हेतुमाह—न खल्विति॥
पुरुषार्थसाधनत्वं मानलक्षणम्, तदभावे कथं प्रामाण्यम्? अत्राह—
P.158-18 न चेति॥ किं तर्हि तल्लक्षणम्? तदाह—प्रमाहेतुत्वमिति॥ किमितः?
P.158- 19 तत्राह—तस्मादिति॥

वाक्यजन्यबोधस्य निष्फलत्वमभ्युपगम्योक्त्वा तदपि नास्ती-
P.158-20 त्याह—अपि चेति॥ केन तन्निवृत्तिः?, अत्राह—तन्निवृत्तिरूपं चेति॥

अभिप्रायप्रकाशिका

कारिकाविवरणम्

शान्ताशेषाशिवतया परमानन्दपरतया पुरुषार्थः, तथापि
श्रोतुः किमायातमिति? अत आह—अतस्तत्त्वमसीति॥

ब्रह्मसिद्धिकारिका

एषा वेदान्ततत्त्वप्रविचयचतुरप्रस्फुरन्न्यायतेजा
मार्गं मुक्तेर्निरुन्धन्निबिडमपि तमोऽनादि निर्दारयन्ती।
सद्यः प्रक्षालयन्ती घनमपि जगतां तीर्थदुस्तर्कपङ्कं
व्याख्यातोत्खातविश्वाऽशिवनिरतिशयश्रेयसे ब्रह्मसिद्धिः ॥२३१॥

भावशुद्धिः

किमेतावताऽपीति ? अत्राह—तत् स्वरूपेणेति ॥ P.158-22

ब्रह्मसाक्षात्कारवतोऽपि संस्कारात् संसारानुवृत्तिदर्शनात् कथं फलत्वं दर्शनस्येति? अत्राह—यद्यपि चेति ॥ सन्तन्वतः=नैरन्तर्येणाभ्यस्यत P.158-23
इत्यर्थः। संस्काराद् देहाद्याभासानुवृत्तिर्न कदाचिन्निवर्तते, इति तन्निवृत्त्यर्थं न साधनान्तरापेक्षेति, अत्राह—निवर्तते चेति ॥ शाब्दज्ञानस्य P.158-24
स्वरूपलाभमात्रेण न क्वचित् पुरुषार्थत्वं दृष्टमिति, अत्राह—दृष्टा चेति ॥
तदुपपादयति—न हीति ॥ वैदिकं विज्ञानं साध्यविषयमेव फलवत्, P.158-25
न सिद्धविषयमिति, अत्राह—न च प्रवृत्तीति ॥ कुत इति ? अत्राह— P.159-1
प्रत्यक्षादीनीति ॥ प्रवृत्त्यादिपर्यवसायित्वं तेषामपीति, अत्राह—न चेति ॥ P.159-2

परः परिचोदयति—यदि मतमिति ॥ समाधिसाम्यमाह— P.159-3
अत्रापीति ॥ P.159-5

यस्माद् ब्रह्म पुरुषार्थात्मकम्, अत एवात्मनो ब्रह्मणोऽभेद उपदिश्यत इत्याह—अत एव तत्त्वमिति ॥ ब्रह्मात्मनोर्भेदो लोकसिद्धः, P.159-6
कथमभेदः ? अत्राह—अभिन्नं हीति ॥ विषयस्य पुरुषार्थाक्षादेः प्रवृत्ति- P.159-8
साध्यफलत्वेनैव प्रामाण्यमिति चोदयति—यदि मतमिति ॥ एतदपि P.159-10
समानमित्याह—ईदृशमिति ॥ हेतुमाह—शब्दादिति ॥ २२४, २२५, P.159-12
२२६, २२७, २२८, २२९, २३० ॥

कारिकाविवरणम्

"आदावन्ते च मध्ये च कृतानि मङ्गलानि

अभिप्रायप्रकाशिका

उत्तरकालीनप्रवृत्तिनिवृत्त्यङ्गत्वं प्रत्यक्षादिषु दृश्यत इति वैषम्यमाशङ्क्य, तर्हि शब्देनापि प्रतिपादिते ब्रह्मणि साक्षात्करणाय मननादिप्रवृत्त्यङ्गता समानेति, अत आह—परप्रवृत्तेरिति ॥
२२४, २२५, २२६, २२७, २२८, २२९, २३०॥

भावशुद्धिः

कारिकाविवरणम्

शास्त्राणि प्रथन्ते वीरपुरुषाणि भवन्ति च" इति न्यायात् तत्त्वानुसरणरूपं मङ्गलं कुर्वन् विशिष्टप्रयोजनोक्तिपुरस्सरं
P.159-14 शास्त्रार्थमुपसंहरति—एषेति ॥ श्लोकरूपा=ब्रह्मसिद्धिरेषा मया व्याख्यातेति निबन्धकर्तृत्वोपाधौ ब्रूते । प्रयोजनमाह—उत्खातेति ॥ उत्खातम्=उन्मूलितं विश्वम्, अशिवम्=दुःखं यत्र । तच्च निरतिशयश्रेयश्च तस्मै फलाय अज्ञाननिवृत्तिमन्तरेण कथमुक्तफलसिद्धिः? अत्राह—
P.159-15 मार्गमिति ॥

अनादि तमः=अनाद्यज्ञानम् । मुक्तेर्मार्गम्=अद्वितीयब्रह्मात्मत्वानुभवम्, निरुन्धत्=आच्छादयत्, निबिडमहंकाराद्यध्यासद्वारेण घनम्, निर्दारयन्ती ब्रह्मसिद्धिः। अज्ञाननिवर्तकज्ञानं वेदान्तजन्यम्, न ब्रह्मसिद्धिजन्यमिति, अत्राह—वेदान्तेति ॥ वेदान्तानां तत्त्वमद्वितीयब्रह्मात्मपरत्वम्, तस्य प्रकर्षेण विचये=विकसने, चतुरः=समर्थः, प्रस्फुरन् न्यायः=अनुग्राहकस्तर्को यस्यां प्रतिपाद्यतयाऽस्ति, सा तथोक्ता, वेदान्तानामनुग्राहकस्तर्कः श्रीमच्छारीरकशास्त्रे प्रतिपादित इति, अत्राह—सद्य
P.159-16 इति ॥ जगताम्=मुमुक्षूणां जन्तूनां परप्रत्ययमात्रशरणानाम्, तरत्यनेन संसारमिति तीर्थम्=शास्त्रम्, तद्बुध्या प्रणीतद्वैतशास्त्राभासम्, तत्र प्रतिपादितो यो

अभिप्रायप्रकाशिका

ब्रह्मसिद्धिविवरणम्

कथं ज्ञानस्य शोकादिनिवृत्तिः फलम्; विदुषोऽपि शोकादिदर्शनादिति? अत आह—यद्यपि चेति ॥

इतश्चाभेदेनैव तदुपदिश्यत इत्याह—भेदेन चेति ॥ तथाभावादिति । श्रोतुरपि ब्रह्मभावादित्यर्थः ॥ २२४, २२५, २२६, २२७, २२८, २२९, २३० ॥

भावशुद्धिः

कारिकाविवरणम्

दुस्तर्कः=तदात्मकं पङ्कं सद्यः प्रक्षालयन्ती। श्रीमच्छारीरकशास्त्रे विस्तरेण तत्र तत्र प्रतिपादिततर्ककलापं संगृह्यैकत्र प्रदर्शयन्ती; तत्प्रकरणत्वादित्यर्थः ॥२३१॥

श्रीमदनुभवा(अभयान)नन्द पूज्यपादशिष्येणानन्दपूर्णमुनीन्द्रेण विरचिते ब्रह्मसिद्धिव्याख्यानरत्ने (भावशुद्धौ) चतुर्थ (सिद्धि) काण्डः समाप्तः।

ब्रह्मसिद्धिटीका समाप्ता ॥

अभिप्रायप्रकाशिका

इदानीं ब्रह्मसिद्धिश्लोकव्याख्यानमुपसंहरति—एषेति ॥ २३१ ॥ P.159-14

व्याख्यानेऽस्मिन् स्नस्तदुस्तर्कवाक्याशङ्काव्याजव्यञ्जिताशेषपक्षा।
एषाऽदोषा भाषिता ब्रह्मसिद्धेः साध्वी टीकाऽसौ मया चित्सुखेन ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्य-श्रीमज्ज्ञानोत्तमपूज्यपादशिष्य श्रीचित्सुखमुनिविरचितायां ब्रह्मसिद्ध्यभिप्रायप्रकाशिकायां चतुर्थ (सिद्धि) काण्डः समाप्तः ॥



## (क) परिशिष्टम्

(१) कर्मणां विविदिषायामेवोपयोगः—'असिना जिघांसती' त्यादाविव करणस्येच्छायामेवान्वयादिति शाब्दापरोक्षवादिनः, यत्र कर्मणां कृत्स्नस्याम्नायस्य प्रपञ्चप्रविलयमुखेनाऽऽत्मज्ञान उपयोगः (२) कृतकर्म-निर्बर्हणेन प्राजापत्यपदमवाप्य ततोऽद्वैतज्ञानम्, (३) ऋणापाकरण-द्वाराऽऽत्मज्ञानाधिकारनिर्वाहकत्वेन कर्मणामुपयोगः, (४) पुरुषसंस्कार-द्वारा कर्मणां ज्ञानाधिकार उपयोग इति चत्वारः कल्पाः, यत्र कर्मणां ज्ञानेनासंबन्धकल्प एव लक्ष्यम् ॥

कर्मणां "औषधेन बुभुक्षति" इत्यादाविव सन्नर्थेच्छाविषयप्रति-बन्धनिरासकत्वेन विद्यायामेव विनियोगः, न तु विविदिषायामिति शाब्दपरोक्षवादिनो मण्डनमिश्राः, येषां मते विविदिषापक्षाभिमतः प्रपञ्च-प्रविलयमुखेन कर्मणामुपयोगः, कृतकर्मनिर्बर्हणेन प्राजापत्यपदं प्राप्यैव ज्ञानाधिकारः, पुरुषसंस्कारद्वारा, ऋणापाकरणद्वारा वा कर्मणामुपयोग-पक्षश्च न स्वीक्रियते, किन्तु संयोगपृथक्त्वन्यायेनैव कर्मणामुपयोगो लक्ष्यम्, यत्र कर्मणां ज्ञानासंबन्धपक्षो न मुख्यः सिद्धान्तः, किन्तु प्रस्थानभेदमात्रम् । ज्ञानस्यैव कर्मण्युपयोग उद्गीथादिविज्ञानादेरिवेति पक्षस्तु नोभयोरपि ।

तत्र ब्रह्मसिद्धिः—निरस्यां समर्थनीयां च मिलित्वा सप्त कल्पान् कर्मणो ज्ञानोपयोगपक्षमाश्रित्य संकलयति ॥

तत्र कर्मणां ज्ञानासंबन्धपक्षः, तथा तत्संबन्धपक्षश्च संयोगपृथक्त्व-नयेन इति कल्पद्वयमपि प्रस्थानभेदमात्रमिति भावशुद्धिः, अभिप्रायप्रका-शिका च ( पुटे ११६ ) वदति । तत्र कल्पद्वयस्यापि सिद्धान्तत्वात् तत्रैकतरेणान्यतरस्य निरसने न निर्भरः ॥

शङ्खपाणिस्तु—कर्मणां ज्ञानासंबन्धं पूर्वपक्ष इति, तेषां तत्संबन्धं सिद्धान्त इति च व्याचष्टे । तत्र पूर्वपक्षसिद्धान्तत्वोक्तिः मण्डनस्यैकत्र निर्भरेणान्यतरत्रानिर्भरेण च प्रस्थानभेदमात्राभिप्राया, न त्वन्यतरस्य खण्डनीयत्व-मण्डनीयत्वाभिप्राया ॥

"द्रष्टव्यं मनसैवैतन्नान्या गतिरिहेष्यते ।
कथं तदिति चेदत्र मानव्यापार उच्यते ॥ ७११ ॥

तत्त्वमस्यादिवाक्योक्तौ शब्दमात्रावलोकनम् ।
श्रोत्रेण क्रियते तस्य शब्दस्याऽऽलोचितस्य तु ॥ ७१२ ॥

स्वर-वर्ण-पदोक्त्याऽऽनुपूर्वी या प्रविभागभाक् ।
प्रविभक्तक्रमवती मनसा तस्य कल्प्यते ॥ ७१३ ॥

स्वेनार्थेनाभिसंबन्धः सिद्धशब्दस्य यः सदा ।
दृश्यते मनसैवासौ नातोऽन्येनेह केनचित् ॥ ७१४ ॥

मनसैवानुद्रष्टव्यमिति यद् भवतेरितम् ।
सत्यमेतद् मनो मुक्त्वा न तस्यास्त्यन्यतो गतिः ॥ ७४३ ॥

तत्त्वस्माभिर्यथाऽभाणि मनसैवेति दर्शनम् ।
मनसा शक्यते द्रष्टुं तत्तथैव प्रमान्वयात् ॥ ७४४ ॥"

इति वार्तिके भर्तृप्रपञ्चमत इव, स्वमतेऽपि मनस एव साक्षात्कारकारणत्वमिति स्वीकृत्य तत्र प्रसङ्ख्यानस्य विधितन्त्रत्वमेव निषिध्यते, प्रमाणतन्त्रत्वं तु समर्थ्यते । ततश्च संबन्धवार्तिके—

"दर्शनस्य विधेयत्वात् तत्संबन्धोपलक्षितः ।
प्रसंख्यानात्मकोऽत्रापि प्रयत्नोऽनुभवं प्रति ॥" (पृष्ठे २११)

इत्यादिना—

"तथैव शास्त्र-तद्युक्ती स्वाभिधेयार्थपालनम् ।
कुर्वत्यौ मानतां यातः प्रसंख्यानेन नान्यथा ॥" (पृष्ठे २१८)

इत्यन्तेन प्रसंख्यानेन परोक्षेणापरोक्षसाक्षात्कारविधिरिति पक्षः शाब्दापरोक्षवादनिरासपूर्वकमुपपाद्य, तत्रैव (७११ पृष्ठे) वार्तिकमारभ्य तद्विधिपक्षस्य निरासोऽपि शाब्दपरोक्षवादस्य न विरोधी ; मण्डनमतेऽपि प्रसंख्यानस्यापुरुषतन्त्रत्वस्यैव स्वीकारेण विधितन्त्रत्वस्यास्वीकारात् । अतः शाब्दापरोक्षवाद इव तत्परोक्षवादोऽपि सुरेश्वरस्यापि सम्मत एव । सुरेश्वरस्य, मण्डनस्य च प्रमाणतन्त्रः साक्षात्कार इति पक्षस्यैवाभिप्रेतत्वात् । अत एव (पृष्ठे—११२६)

"दृश्यते त्वग्र्यया बुद्ध्या मनसैवेति यद्वचः ।
तदात्मविद्याविध्यर्थं नोपासनविधायकम् ॥"

इति वार्तिकमुपपद्यते। तत्राऽऽत्मविद्याविध्यर्थमित्यत्र विधिपदमज्ञातज्ञापनमात्रपरम्, न कार्यपरमिति समन्वयसूत्रे "कथं तर्ह्यात्मा वा अरे द्रष्टव्यः" इति विधिच्छायापन्नानि वाक्यानि; स्वभावतः प्रवृत्तिविषयविमुखीकरणार्थानी" त्युक्तरीत्याऽनुसन्धेयम्। अतोऽत्र प्रस्थानभेदमात्रम्, न सिद्धान्तभेदः, लक्ष्यभेदो वा। ब्रह्मसिद्धेर्निर्भरातिशयस्तु शाब्दपरोक्षवादे, ज्ञानस्य वस्तुतन्त्रक्रियात्वे च – संयोगपृथक्त्वन्यायेन प्रसंख्यानेन सह कर्मणां सहसमुच्चये निर्भरातिशयनिबन्धनः। न चात्र ब्रह्मसिद्धिः कर्मणां वार्तिकमिव पुरुषसंस्कारविधया, चित्तशुद्ध्यादिविधया वा विविदिषाङ्गत्वपक्षमपि स्वीकरोति। तत्र कर्मासंबन्धपक्षे वार्तिकस्य निर्भरः, तत्संबन्धपक्षे तु ब्रह्मसिद्धेः ॥

## समानार्थानां-ब्रह्मसिद्धि-वार्तिकवाक्यानां संग्रहः।

### १. ब्रह्मसिद्धिः (पृ॰ २६)

तत्र सर्वत्रैवाम्नाये क्वचित् कस्यचिद्भेदस्य प्रविलयो गम्यते—यथा 'स्वर्गकामो यजेत' इति शरीरात्मभावस्य प्रविलयः। अत्र हि देहव्यतिरिक्तस्वर्गोपभोगसमर्थोऽधिकारी गम्यते, तेन देहात्मभावप्रविलयः। तथा "गोदोहनेन पशुकामस्य प्रणयेत्" इत्यधिकृताधिकारादधिकारिभेदप्रविलयः। तथा विधिनिषेधचोदनास्वपि नैसर्गिकीणां रागादिनिबन्धनानां प्रवृत्तीनां प्रविलयः; निषेधेषु साक्षात्, विधिषु प्रवृत्त्यन्तरनियोगेन, लोकेऽप्यनभिप्रेतात् पथः साक्षाद्वा निवारणम्, पथ्यन्तरोपदेशेन वा। एवं च रागादिनिबन्धननैसर्गिकप्रवृत्तिभेदविलयद्वारेण दृष्टेनैव कर्मविधय आत्मज्ञानाधिकारोपयोगिनः। तथा हि—शान्तस्य, दान्तस्य, समाहितस्य चात्मनि दर्शनमुपदिश्यते, शक्यं च। न हि विषयैराकृष्यमाणस्तदुपायप्रवृत्तिकृतचेताः शक्नोत्यात्मनि समाधातुम्; नैसर्गिकीभ्यस्तु प्रवृत्तिभ्य उपरतो नियतमानस आत्मदर्शनेनाधिक्रियते; सामर्थ्यात् ॥

### १. वार्तिकम्

अन्ये तु मन्वते केचिद् गम्भीरन्यायवादिनः ।
भेदस्य विलयो वेदे गम्यते कस्यचित् क्वचित् ॥ २७८ ॥

देहात्मभावविलयः स्वर्गकामपदे यथा ।
देहाद्भिन्नोऽधिकार्यत्र स्वर्गभोग्यवगम्यते ॥ ३७९ ॥

गोदोहनेनेत्यत्रापि विलयोऽन्याधिकारिणः ।
अधिकृताधिकारित्वान्नान्योऽधिक्रियते यतः ॥ ३८० ॥

रागाद्युत्थप्रवृत्तीनां निषेधेषु लयोऽञ्जसा ।
विधिष्वपि लयस्तासां कार्यान्तरनियोगतः ॥ ३८१ ॥

लोकेऽपि चानभिप्रेतात् पथः साक्षान्निवारणम् ।
मार्गान्तरोपदेशाद्वा वेदेऽप्येवं प्रतीयताम् ॥ ३८२ ॥

एवं रागादिहेतूत्थप्रवृत्तिलयवर्त्मना ।
आत्मज्ञानाधिकारार्था निश्शेषा विधयः स्थिताः ॥ ३८३ ॥

## २ ब्रह्मसिद्धिः

तत्र न तावत् प्रथमः कल्पः । न हि कर्मादिविधयः स्ववाक्यसमधिगतस्वर्गादिकार्याः कार्यान्तरमपेक्षन्ते ; नाप्यात्मज्ञानविधिर्यथोदितब्रह्मचर्यादिसाधननिराकाङ्क्षः कर्मविधीनपेक्षते । तत्र कुत एकाधिकारित्वम् ? अथानवगतकार्या एव कर्मादिविधयः, स्वर्गादीनां गुणत्वेन संवन्धादिति ; स्वर्गकामाधिकरणमस्मै व्याचक्षीत । अपिच सर्वविधि-निषेधानां नाम-रूपप्रविलयकार्यापवर्गित्वे जन्तूनामभ्युदयविनिपाता अकर्मनिमित्ता आकस्मिकाः स्युः ; तथाऽपवर्गोऽपि स्यादिति वैयर्थ्यं शास्त्रस्यापि । अथ स्वर्गादिकार्यद्वारेण कर्मविधीनां ज्ञानाधिकारानुप्रवेशिता मार्ग-ग्राम-गमनोपदेशानामिवाभिमतनगरगमनोपदेशानुप्रवेशित्वम्, तदसत् ; युक्तं मार्ग-ग्रामप्राप्तेरनभिमतत्वादनभिमतदेशप्राप्त्युपदेशानुप्रवेशित्वम् । न हि मार्ग-ग्रामोपदेशेषु पुरुषार्थप्राप्तिः । अतः साकाङ्क्षत्वाद् यत्र पुरुषार्थप्राप्तिः, तमनुप्रविशन्ति, न त्वेवं कर्मविधिषु पुरुषार्थस्यालाभः; स्वर्गादीनां पुरुषेणार्थ्यमानत्वात् । तत्र च नैराकाङ्क्ष्ये कथमन्यानुप्रवेशः ? अथ मतम्—यदोपच्छन्द्य नीयत उत्तरोत्तरग्राम-गुणोपदर्शनेनाभिप्रेतं देशम्, तदा पूर्वग्रामोपदेशाः प्राप्ताभिमतकार्या उपदेशान्तरानुप्रवेशिनश्चेति, युक्तं तत्रापि प्रमाणान्तरेण वक्तुरभिप्रायाधिगमात् । प्रमाणान्तरेण हि तत्रेदमधिगतम्—एतद्देशप्राप्तिरिदमस्य समीहितं वक्तुः संपद्यते, तस्मादिदमस्य विवक्षितमिति ; न तु शब्दवृत्तमात्रानुसारेण । इतश्चैतदेवम्—यत् प्रतिग्रामं वक्तुः, श्रोतुश्च सत्यामर्थप्राप्तौ प्रमाणान्तरेणानधिगते परदेशप्राप्त्यभिप्राये पूर्वोपदेशान् पूर्वार्थानेव पार्श्वस्थाः प्रतिपत्तारः प्रतिपद्यन्ते, परदेशोपदे

च स्वार्थनिष्ठम्। यद्यपि वस्तुस्थित्या पूर्वोपदेशार्थाः परोपकारिणः; तथापि न शब्दस्य तात्पर्यम्—द्रव्यार्जनादिविधेरिव क्रतुविध्यर्थोपकारेऽपि ; शब्दवृत्तानुसारेण चेह तात्पर्यम्, प्रमाणान्तराभावादिति। अपि च अध्व-ग्रामोपदेशानां तत्परत्वाध्यवसायेनैव तत्र गमनम्, अर्थप्राप्तिश्च। तत्र परदेशप्राप्तिपरतायां तु न नियोगतस्तत्र गमनम्; मार्गान्तरेणापि तत्प्राप्तेर्विवक्षितत्वाद् गच्छेत्। न च नियोगतोऽर्थप्राप्तिः; अन्यपरेषु प्रयोजनश्रुतेरप्यर्थवादत्वात्। तदिह यदि विधि-निषेधाः कार्यान्तरपराः, न स्वर्गादिकार्याः। न खलु स्वर्गादिकार्ये प्रयाजादिकार्यतुल्यम्, येन कार्यान्तरमनुपतेत्। कथं च दृष्टेनैवात्मज्ञानाधिकारोपकारिण इति वक्तव्यम्। यदि तावद्रागाद्याक्षिप्तदृष्टार्थप्रवृत्तिनिरोधेन, भवतु प्रतिषेधानामेवम्भावः। कर्मविधयस्तु कथं निरुन्धन्तीति वाच्यम्। न हि ते परिसंख्यायकाः, न च नियामकाः; अत्यन्तमप्राप्तार्थत्वात्। प्राप्तार्थो हि विधिरन्यनिवृत्तिफलो विज्ञायते। न च तुल्यकार्यत्वेन विरोधेन निवृत्तिः। अनियतकालफला हि नैयोगिक्यः प्रवृत्तयोऽदृष्टार्थाः, दृष्टार्थास्तु रागाद्याक्षिप्ताः स्वाभाविक्यः। न च साङ्गुण्याः, सेवायाश्च ग्रामोपायत्वे कश्चिद्विरोधः; एतावति प्रमाणत्वाच्छास्त्रस्य। तत्र युगपत्, क्रमेण वा फलभूमार्थिनः सेवा-साङ्गुण्यावनुतिष्ठतः को विरोधः? अपि च सकलदृष्टार्थप्रवृत्तिनिरोधे नियोगनिष्ठा अपि प्रवृत्तयो निरुध्येरन्; अनार्जितधनस्य साधनविकलस्य तासामसंभवात्। अपि च तुल्ये कामोपायत्वे दृष्टादृष्टार्थप्रवृत्त्योर्न विशेषो रागाद्याक्षिप्तत्वे। तथा हि—'स्वर्गकामः' इति रागाद्याक्षिप्तप्रवृत्त्यनुवादेन विशेषविधानम्। तथाच प्रपञ्चाभिनिवेशे तुल्ये केन विशेषेणैकाऽऽत्मज्ञानानुगुण्यं भजते, तद्विरोधिन्यपरा? कामाक्षेपो ह्यविशिष्टो मनसः। अथ कामोपायत्वमेव न मन्येत, वर्णितमाकस्मिकत्वम्, उक्तश्च न्यायः प्रत्युद्ध्रियेत; तुल्यकार्यनिबन्धनत्वाच्च। विरोधात् यां निरोधाशङ्का, सा दूरतो निरस्तावकाशा स्यात्। अथ कामप्राप्त्या कर्मविधयः कामान् प्रविलापयन्तो ज्ञानाधिकारानुगुणाः। यथोक्तम्—

"यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि श्रिताः।
अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते ॥"

इति, तदप्यसत्; यतो न कामप्राप्त्या कामप्रविलयः, अपि तु दोषपरिभावनासुवा प्रसंख्यानेन। कलयापि चेत् कामैर्मनः संस्पृश्यते, ह्रियत एव हारिभिः। उक्तं हि—"न जातु कामः कामानामुपभोगेन शाम्यति", "भोगाभ्यासमनु विवर्धन्ते रागाः कौशलानि चेन्द्रियाणाम्" इति च। अनुपायत्वादपि तावदयं कामेभ्यो

विनिवर्तेत। निखिलक्लेशोपशमरूपं चात्मज्ञानं संश्रयेत। कर्मविधिनिदर्शितविविधोपायस्तु तानेव प्रकृतिहारिणो भोगानभिनिविशेत, तत्प्रविलयरूपाच्चात्मज्ञानादुद्विजेत। श्रुतोऽपि ह्यात्मन्यानन्दोऽननुभूतो नानुभूतविषयनिबन्धनानन्दाभिलाषं मन्दीकर्तुमप्युत्सहते, प्रागेवोच्छेत्तुम्। तस्मात् प्रसंख्यानमेवैकः कामनिबर्हणोपायः, कर्मविधयस्तु विपर्ययहेतवः। यदपि—सर्वत्रैवाम्नाये क्वचित् कस्यचिद्भेदस्य विलयः, यथा 'स्वर्गकामो यजेत' इति शरीरात्मत्वप्रविलयः- इति; तदप्यसत्; अनिदम्परत्वात्। न हीदं वचनं देहव्यतिरिक्तात्मतत्त्वावबोधपरम्। अथान्यपरादप्यर्थादेवमवसीयत इति, तदपि हस्तिनि दृष्टे तत्पदेन तस्यानुमानमिव। साक्षाद्धि "अस्थूलम्" इत्युपक्रम्य देहेन्द्रियविलयो दर्शितः, अर्थाच्च कामादिग्रन्थेः काठिन्यं वैदिकं स्यादिति॥

## २. वार्तिकम्

नैतदेवं यतोऽशेषा न कर्मविधयः श्रुतौ।
स्ववाक्यावगतात् कार्यादपेक्षन्ते फलान्तरम्॥ ३८४॥
वेदेऽनुष्ठानतात्पर्यान्न लयो गम्यते क्वचित्।
फलश्रुतेरभावो हि साध्यः स्यादफलः कथम्॥ ३८५॥
वस्तुनोऽवगतिर्नापि लयाद्भवति कुत्रचित्।
अभावेऽप्युपपन्नत्वात् सुषुप्ते चाप्यनीक्षणात्॥ ३८६॥
स्वाभाविकः प्रपञ्चश्चेत् स निरोद्धुं न शक्यते।
कार्यश्चेत् कारणोच्छेदे कार्योच्छेदः स्वतो न हि॥ ३८७॥
कृत्स्नप्रपञ्चविलयः कर्तुं शक्यो न केनचित्।
स्वेन्द्रियादिलयः स्वापे स्वत एव न शास्त्रतः॥ ३८८॥
उत्थितस्य पुनर्भावादनुच्छेदोऽथ शङ्क्यते।
आयातस्तर्हि नाश्वासस्त्वदभ्युपगतावपि॥ ३८९॥
प्रपञ्चनाशनेनाथ नाश्यते भेदकारणम्।
नैवं न कार्यनाशेन कारणं नश्यति क्वचित्॥ ३९०॥
कारणस्याप्यविद्याया वस्तुबोधाद्विनाशतः।
यतोऽतोऽविद्यानाशार्थं प्रपञ्चविलयोऽफलः॥ ३९१॥
रज्जुज्ञानाद्धि सर्पादिप्रपञ्चविलयो यतः।
सर्पाभासलयेऽपीयं रज्जुस्तमसि नेक्ष्यते॥ ३९२॥

लयनिष्ठे प्रमाणे नो वस्तुगोचरभेदतः ।
अथ वस्तुनि तन्मानं न लये स्यान्न च द्वये ॥ ३९३ ॥

भाव्युच्छेत्तुमशक्यस्ते भूतोऽप्युपरतः स्वतः ।
प्रपञ्चो वर्तमानस्तु कार्यत्वान्नश्यति स्वतः ॥ ३९४ ॥

श्रुतेर्विलयतात्पर्ये फलमाकस्मिकं भवेत् ।
फलार्थो चेल्लये न स्यान्नोभयं वाक्यभेदतः ॥ ३९५ ॥

प्रपञ्चविलयेनैव सर्वानर्थप्रहाणतः ।
पुरुषार्थस्य संसिद्धेर्विद्या नैष्फल्यमापतेत् ॥ ३९६ ॥

अत ऐकात्म्ययाथात्म्यज्ञानादज्ञानहानतः ।
सिद्धे पुमर्थे विलयकल्पना निष्प्रयोजना ॥ ३९७ ॥

स्वकार्योपक्षयादेव विधीनां च परस्परम् ।
कुत एकाधिकारत्वमपेक्षाभावतो वद ॥ ३९८ ॥

विधीनां चापि सर्वेषां निषेधवचसां तथा ।
कामादिलयनिष्ठत्वे ह्यभ्युपेतेऽप्रमाणके ॥
अनिमित्तोऽपवर्गोऽपि शास्त्रं चैवमनर्थकम् ॥ ३९९ ॥

स्वर्गादिकार्यमार्गेण मन्यसे यदि कर्मणाम् ।
सोपानपङ्क्तिगत्येव हर्म्यपृष्ठाधिरोहणम् ॥
आत्मज्ञानाधिकारानुप्रवेशित्वं भविष्यति ॥ ४०० ॥

यथैव नगराध्वस्थग्रामगत्युपदेशनम् ।
नगराध्वोपदेशस्य शेषत्वं प्रतिपद्यते ॥ ४०१ ॥

नाकामितत्वाद् ग्रामादिगतेर्युक्तैव शेषता ।
स्वर्गादेर्न तु शेषत्वं पुरुषार्थत्वहेतुतः ॥ ४०२ ॥

अथोपच्छन्दनार्थानि स्वर्गादीनि विमुक्तये ।
नगरासौ तदध्वस्थग्रामादिगुणगीरिव ॥ ४०३ ॥

नैवं मान्तरतः सिद्धेर्नृवाक्ये तत् समञ्जसम् ।
वेदे तु वक्त्रभावत्वादभिप्रायाद्यसंभवः ॥ ४०४ ॥

यद्वा तत्रैव तात्पर्यं यत्रोपच्छन्द्य नीयते ।
नगरासौ तु माभावात् प्रयतेत पुमान् कुतः ॥ ४०५ ॥

यदाऽपि वस्तुवृत्तेन नगरावाप्तिसाधनम् ।
ग्रामाप्तिर्नगरप्राप्तिस्तदाऽप्यर्थान्न मानतः ॥ ४०६ ॥

अर्थादपि न तात्पर्यं द्रव्यार्जनविधेरिव ।
शब्दमात्रानुसारेण वेदे तात्पर्यधीर्यतः ॥ ४०७ ॥

स्वर्गादौ यदि तात्पर्यं न स्यादैकात्म्यबोधने ।
मुक्तौ चेन्न भवेत् स्वर्गे वाक्यभेदान्न च द्वये ॥ ४०८ ॥

न च स्वर्गादिकार्याणां प्रयाजार्थसमानता ।
अनुप्रवेशः कल्प्येत येन कार्यान्तरं प्रति ॥ ४०९ ॥

वक्तव्यं च कथं त्वेते दृष्टेनैवोपकारिणः ।
आत्मज्ञानाधिकारस्य यदि तावदिदं मतम् ॥ ४१० ॥

रागाद्याक्षिप्तदृष्टार्थप्रवृत्तिप्रतिषेधतः ।
अस्त्वेवं प्रतिषेधेषु निवृत्तेरुपकारतः ॥ ४११ ॥

विधयस्तु कथं रागं निरुन्धन्तीति भण्यताम् ।
न हि ते परिसंख्यार्था नापि चैते नियामकाः ॥ ४१२ ॥

अत्यन्ताप्राप्तमर्थं हि विधयो बोधयन्ति नः ।
प्राप्तार्थो यो विधिः सोऽन्यनिवृत्तिफल इष्यते ॥ ४१३ ॥

सेवा-सांग्रहणीहावत् तुल्यकार्यतया न च ।
यतोऽनियतकालीनफला वैधी क्रियेष्यते ॥ ४१४ ॥

अदृष्टार्था हि दृष्टार्था रागाद्युत्थाः प्रवृत्तयः ।
ग्रामोपायेन सेवायाः सांग्रहण्याऽविरुद्धता ॥ ४१५ ॥

क्रियातः फलमित्येवं शास्त्रमेतावति प्रमा ॥

क्रमेण युगपद्वाऽतः सेवा-सांग्रहणीहयोः ।
नानुष्ठाने विरोधोऽस्ति फलभूमार्थिनः क्वचित् ॥ ४१६ ॥

रागाद्युत्थप्रवृत्तीनां कार्त्स्न्येन च विरोधतः ।
नैयोगिक्योऽपि नैव स्युर्द्रव्याभावात् प्रवृत्तयः ॥ ४१७ ॥

दृष्टादृष्टप्रवृत्त्योश्च न विशेषोऽस्ति कश्चन ।
उपायत्वेन काम्यानां रागद्याक्षिप्तहेतुतः ॥ ४१८ ॥

प्रपञ्चाभिनिवेशित्वहेतौ तुल्येऽपि चानयोः ।
कं विशेषमपेक्ष्यैका चेष्टा मुक्त्यनुरोधिनी ॥ ४१९ ॥
कामोपायत्वमेवाथ नेष्टं यदि च कर्मणाम् ।
उक्तो न्यायः प्रहीयेत फलं चाऽऽकस्मिकं भवेत् ॥ ४२० ॥
सर्वकामाशनेनाथ कृत्स्नकामलयाध्वना ।
यान्ति मुक्त्यानुगुण्यं चेद्विधयो वार्तमेव तत् ॥ ४२१ ॥
यन्निमित्ता प्रवृत्तिः स्यात् सा कथं तन्निवर्तिका ।
प्रवृत्तोऽपि निवर्तेत न कामोपायकर्मतः ॥ ४२२ ॥
उद्विजेताथवा ज्ञानात् सर्वपुंभोगघस्मरात् ।
अपि वृन्दावने शून्य इति कामिवचस्तथा ॥ ४२३ ॥
उक्तं यदपि वेदेऽस्मिन् कस्यचिद्विलयः क्वचित् ।
तन्नातत्परतस्तूक्तेर्न देहादिलयस्ततः ॥ ४२४ ॥
श्रुतेऽपि स्वर्गतात्पर्ये कल्पना चेल्लयेऽर्थतः ।
तन्न प्रत्यक्षवचनाद् देहादिलयसिद्धितः ॥ ४२५ ॥
साक्षाद् हस्तिनि दृष्टेऽपि न हि हस्तिपदानुमा ।
अस्थूलादिवचः साक्षाद् देहादिप्रतिषेधकृत् ॥ ४२६ ॥

## २. ब्रह्मसिद्धिः

अन्ये तु मन्यन्ते—अनवाप्तकामः कामोपहतमना न परमाद्वैतदर्शन-योग्यः; कर्मभिस्तु कृतकामनिबर्हणः सहस्रसंवत्सरपर्यन्तैः प्राजापत्यात् पदात् परमद्वैतमात्मानं प्रतिपद्यत इति । उभयोरपि पक्षयोरनयोः कृत्स्न आम्नाय आत्मज्ञानैककार्यपर्यवसायी ॥

द्वितीयोऽपि कल्पो वर्णितादेव कामानां कामनिबर्हणसामर्थ्याभावात् स्वकार्यनिराकाङ्क्षाणां चान्यानुप्रवेशो प्रमाणाभावादसमञ्जसः; एकाधिकारत्वे तु समुच्चयः सर्वकर्मणां स्यात्; स चाशक्य इति ॥

## ३. वार्तिकम्

अन्ये त्वाहुर्न शक्नोति कामसंदूषिताशयः ।
द्रष्टुं तत्परमद्वैतं सर्वकामासमाप्तितः ॥ ३४३ ॥
द्वैतैकत्वमतीहाभिः सूत्रान्तं फलमाप्य ना ।
प्राजापत्यं पदं भुक्त्वा तदैकात्म्यं प्रपद्यते ॥ ३४४ ॥

नैवं न कामसंप्राप्त्या तन्नाशोऽब्दशतैरपि ।
तत्सेवातोऽतिवृद्धिः स्यान्निवृत्तिर्दोषदर्शनात् ॥ ३४५ ॥
न जातु कामः कामानामुपभोगेन शाम्यति ।
हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते ॥ ३४६ ॥
निवर्तेतापि कामेभ्यस्तदुपायाप्रसिद्धितः ।
सर्वक्लेशोपशान्त्यात्मज्ञानं चापि समाश्रयेत् ॥ ३४७ ॥
अथाऽऽनन्दः श्रुतः साक्षान्मानेनाविषयीकृतः ।
दृष्टानन्दाभिलाषं स न मन्दीकर्तुमप्यलम् ॥ ३४८ ॥
कामप्रविलयायातस्तद्विपक्षार्थभावनम् ।
विषयस्तत्क्रियाणां स्युस्तद्विपर्ययहेतवः ॥ ३४९ ॥
द्वारं न नियतं मुक्तेः प्राजापत्यं पदं भवेत् ।
न ह्युपाधिषु तत्त्वस्य विशेषः कश्चिदीक्ष्यते ॥ ३५० ॥
नाऽऽकाशस्य विशेषोऽस्ति कुम्भ-द्रोण्याद्युपाधिषु ।
दूरान्तिकादिभिन्नेषु कल्पिताकल्पितेष्वपि ॥ ३५१ ॥
सत्तत्त्वापेक्षयाऽभेदो भावानां नाभ्युपेयते ।
स्वभावहानादन्योन्यं विशेषो बाह्य एव सः ॥ ३५२ ॥
कार्य-कारणपक्षेऽपि कार्यं नान्यत्र कारणात् ।
न च तत्त्वे विशेषोऽस्ति कटकादीव हेमनि ॥ ३५३ ॥
अतः प्रजापतौ तत्त्वं कृमौ वा न विशिष्यते ।
तर्कादागमतश्चापि 'तद्यो यः' इति हीदृशात् ॥ ३५४ ॥
'यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि श्रिताः ।
अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते" ॥ ३५५ ॥
"एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा ।
कर्माध्यक्षः सर्वभूताधिवासः साक्षी चेता केवलो निर्गुणश्च"॥३५६॥
विज्ञान-कर्मणोस्त्रेधा यद्युच्येत समुच्चयः ।
पूर्वोक्तैकात्म्यतात्पर्याद्वेदस्यासौ न युज्यते ॥ ३५७ ॥
एकवाक्यावशीभावात साध्यैक्यायोगतस्तथा ।
समुच्चयः कुतो द्रव्य-गुणवद् ज्ञान-कर्मणोः ॥ ३५८ ॥
भेदाभेदाश्रयत्वेन ह्येकात्म्यज्ञान-कर्मणोः ।
परस्परोपकारित्वहानात् कीदृक् समुच्चयः ॥ ३५९ ॥

देवता-द्रव्ययाथात्म्यज्ञानं कर्माङ्गतां गतम् ।
तावदेव हि तत्कर्म नाज्ञातद्रव्यदैवतम् ॥ ३६० ॥
तद्विशेषेऽङ्गभूयस्त्वात् फलभूयस्त्वमित्यतः ।
समुच्चयो न तस्य स्यान्नाङ्गेनाङ्गिसमुच्चयः ॥ ३६१ ॥
यच्चाप्यैकात्म्यविज्ञानं तदज्ञानैकघस्मरम् ।
तस्मिन् सति कुतः कर्म का वाऽपेक्षाऽस्य गोचरे ॥ ३६२ ॥
ब्राह्मणत्वादिविज्ञानमग्निहोत्रादिकर्मणाम् ।
यद् दृष्टं साध्यसिद्ध्यै तु कर्मानुगुणमेव तत् ॥ ३६३ ॥
ऐकात्म्यवस्तुयाथात्म्यबोधे जात्यादिबाधनात् ।
न केवलं क्रिया न स्यात् कर्मणां प्रत्युताक्रिया ॥ ३६४ ॥
अयथावस्तुसर्पादिज्ञानं हेतुः पलायने ।
रज्जुज्ञानेऽहिधीध्वस्तौ कृतमप्यनुशोचति ॥ ३६५ ॥
न कर्मव्याप्तिर्मुक्तावास्त्याद्यदीनामभावतः ।
न च श्रुत्यादयस्तत्र तेन स्यान्न समुच्चयः ॥ ३६६ ॥
अन्तरङ्गं हि विज्ञानं प्रत्यङ्मात्रैकसंश्रयात् ।
बहिरङ्गं तु कर्म स्याद् बाह्यद्रव्याश्रयत्वतः ॥ ३६७ ॥
सत्यन्तरङ्गे विज्ञाने बहिरङ्गं न सिध्यति ।
संस्कारकं तु कर्म स्यात् ज्ञानात्त्वज्ञाननिह्नुतिः ॥ ३६८ ॥
यथावस्त्वात्मविज्ञानं मोहमात्राश्रयाः क्रियाः ।
सम्यग्ज्ञाने कुतः कर्म कर्महेतूपमर्दनात् ॥ ३६९ ॥
नित्यप्राप्तं च विज्ञानं प्रतीचः संनिधेः सदा ।
कर्मानित्यं पृथग्रूपं नित्यं चानित्यबाधकम् ॥ ३७० ॥
क्षयी कर्मार्जितो लोकः स्वराड्ब्रह्मावबोधतः ।
लब्धे त्रैलोक्यराज्ये ना भिक्षामाद्रियते तु कः ॥ ३७१ ॥
भिन्नप्रकरणं ज्ञानं काङ्क्षितं न च कर्मणा ।
विरोधाच्च स्वतन्त्रं तद्गुणभूतं न कस्यचित् ॥ ३७२ ॥
यतो वस्त्वनुरोध्येतन्न ज्ञातृवशवर्त्यतः ।
अज्ञानोच्छित्तये ज्ञानं स्वतन्त्रं तेन भण्यते ॥ ३७३ ॥
अनावृत्तिश्च कर्मभ्यो न क्वचिच्छ्रूयते स्फुटम् ।
ज्ञानादेव त्वनावृत्तिः श्रूयते बहुशः श्रुतौ ॥ ३७४ ॥

एकरूपं च विज्ञानमेकरूपात्मेयतः ।
भिन्नरूपाणि कर्माणि बहुकारकसंश्रयात् ॥ ३७५ ॥
एकरूपस्य मोक्षस्य भिन्नरूपं न साधनम् ।
एकरूपस्य मोक्षस्य ह्येकरूपं हि साधनम् ॥ ३७६ ॥
तस्मात् कर्मफलं नाना नानाकर्मसमुद्भवम् ।
देव-मानुष-तिर्यक्षु कर्तुः शास्त्रैर्निदर्शितम् ॥ ३७७ ॥

## ४. (१) ब्रह्मसिद्धिः

अन्ये तु—एतदेव विपरीतं वर्णयन्ति—आत्मज्ञानमेव कर्तृसंस्कारतया कर्माधिकारानुप्रवेशि—इति ॥

येऽपि विपर्ययेण ज्ञान-कर्मणोरेकाधिकारत्वमाहुः, तैरपि ज्ञानस्य कर्मसंबन्धे प्रमाणं वक्तव्यम्। न तावत् "व्रीहीन् प्रोक्षति" इति यथा; तत्र हि प्रकरणात् प्रकृतकर्मापूर्वलक्षणापरो व्रीहिशब्दः स्वस्वरूप आनर्थक्यात् प्रकृतापूर्वसंबन्धं बोधयति। नापि यथा 'यस्य पर्णमयी जुहूर्भवति" इति; तत्र हि जुह्वादि अव्यभिचरितकर्मसंबन्धमसत्यपि प्रकरणे कर्मोपस्थापयति; तत्र वाक्येनैव संबन्धः। आत्मज्ञानं तु न प्रकरणे श्रुतम्; नाप्यात्माऽव्यभिचरितः कर्मसंबन्धः, तेनास्य कर्मसंबन्धो दुर्वचः। तथा चाज्ञाते पारार्थ्ये या नाम फलश्रुतिर्न साऽर्थवादिनी भवति, इति पृथगधिकारत्वम्। अथ मतम्—वर्तमानापदेशात् "न च पुनरावर्तते" इति कामोपबन्धाभावात् फलं विपरिणमय्य कल्पयितव्यम्। तच्च तदाकाङ्क्षायां सत्याम्; न तु दृष्टे सति तदाकाङ्क्षा। अस्ति चात्मज्ञानविधेर्दृष्टफलं देहान्तरोपभोग्यफलेषु कर्मसु प्रवृत्तिः। तस्मात् स्वाध्यायाध्ययनविधिवदात्मज्ञानविधिः। स्वाध्यायाध्ययनविधिर्हि दृष्टकर्मावबोधनिराकाङ्क्षो नार्थवादतः फलं प्रार्थयते, तथाऽऽत्मज्ञानविधिरपीति नाधिकारान्तरम्, तदप्यसत्; यतोऽयमन्य एवौपनिषदः पुरुषो वेदान्तेषु जिज्ञास्यते। न च तज्ज्ञानं कर्मप्रवृत्तिहेतुः। न हि तस्य कर्तृत्व-भोक्तृत्वे; एवं ह्याह—"न तदश्नाति किंचन" "अनश्नन्नन्योऽभिचाकशीति" इति। यस्तु कर्मणां कर्ता भोक्ता च, स एव सर्वप्रत्यक्षसिद्धः; न शब्दप्रमेयः। ननु जीव परमात्मनोरेकत्वमेव। एवं ह्याह—"अनेन जीवेनात्मना" इति, सत्यम्; तस्यैव तु जीवस्यैवमविद्यानुबन्धं प्रत्यक्षावसेयं रूपम्। तच्च कर्मप्रवृत्तिहेतुः। न च तत् शब्दमपेक्षते। यत्तु स्वयंप्रकाशं सर्वविभागरहितम्, तत् शब्दाद् ज्ञातुमिष्यते।

तच्च कर्मप्रवृत्तिविरोधि । तज्ज्ञानस्य कथं कर्मप्रवृत्तिर्दृष्टं प्रयोजनं स्यात् ? तथा हि—ब्रह्मानन्दमेकमद्वयमात्मानं विजानतः किमर्थम् ? कथं वा प्रवृत्तिः स्यात् ! आप्तकामत्वात्, साधनाद्युपायाभावाच्च । स्यादेतत्—औपनिषदपुरुषज्ञानमेव कर्माङ्गत्वेन चोदितम्—"यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति" इति, तथा "यो वा एतदक्षरं गार्ग्यविदित्वाऽस्मिँल्लोके जुहोति" इत्युपक्रम्य यागादिफलस्यान्तवत्तादर्शनेन ब्रह्मविद्यायास्तादर्थ्यं दर्शितम् ; 'तं विद्याकर्मणी समन्वारभेते' इति च विद्याकर्मणोः साहित्यं दर्शितम् । पूर्वं तावत् प्रकृतोद्गीथविषयम् ; "ओमित्येतदक्षरमुद्गीथम्" इत्युपक्रमात् । परेणापि कर्मनिन्दयाऽक्षरज्ञानस्तुतिः ; विद्या-कर्मणोश्च समन्वारम्भो भेदेन—विद्यावन्तं विद्याऽन्वारभते कर्मवन्तं कर्मेति । तस्मादेवमपि न कर्म-ज्ञानयोरेकाधिकारत्वमिति ॥

## ४. (२) ब्रह्मसिद्धिः

अन्येषां दर्शनम्—पृथक्कार्या एव सन्तः कर्मविधय आत्मज्ञानाधिकारमवतारयन्ति पुरुषम्, अनपाकृतर्णत्रयस्य तत्रानधिकारात्—"ऋणानि त्रीण्यपाकृत्य मनो मोक्षे निवेशयेत्" इति ॥

यदपि—पृथक्कार्या एव कर्मविधयो ज्ञानाधिकारमवतारयन्ति, अपाकृतर्णत्रयस्य तत्राधिकारात्, तदपि न नियोगतः ; आश्रमविकल्पस्य स्मरणात्—"तस्याश्रमविकल्पमेके" "यमिच्छेत्तमावसेत्" इति, "यदि वेतरथा ब्रह्मचर्यादेव प्रव्रजेत्" इति श्रवणात् ; "एतद्ध स्म वै तत्पूर्वे विद्वांसोऽग्निहोत्रं न जुहवांचक्रिरे" तथा "किं प्रजया करिष्यामः" तथा "किमर्था वयमध्येष्यामहे किमर्था वयं यक्ष्यामहे" इति कर्मत्यागदर्शनात् । प्रतिपन्नगार्हस्थ्यस्याऽऽत्मविद्ययैव कृतकृत्यतां मन्वानस्य ऋणापाकरणं प्रत्यनादृतस्य विहिताकरणनिमित्तस्य पाप्मनो विद्योदयप्रतिबन्धृत्वं दर्शयति—"ऋणानि त्रीण्यपाकृत्य" इति ॥

## ४. (३) ब्रह्मसिद्धिः

अन्ये तु—संयोगपृथक्त्वेन सर्वकर्मणामेवात्मज्ञानाधिकारानुप्रवेशमाहुः "विविदिषन्ति यज्ञेन" इति श्रुतेः, "येन केनचन यजेतापि दर्वीहोमेनानुपहतमना एव भवति" इति च ।

[1]इदं तु युक्तम्—कार्यान्तरनिराकाङ्क्षाणामपि कर्मणां संयोगपृथक्त्वात्

1. संयोगपृथक्त्वन्यायेन कर्मणामनुपयोगपक्षे पञ्चम-सप्तमपक्षौ । षष्ठस्तु संयोगपृथक्त्वन्यायेन कर्मणामुपयोगपक्षो मण्डनसिद्धान्तः 'अत्रोच्यते' (पृ. १३८) इत्यादिना विशदीक्रियते । वार्तिके तु सोऽपि पक्षो 'मन्यते' इति तु ५४० पृष्ठे विवेचितम् ।

"तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन" इति विद्याङ्गभावः; सोऽप्युत्पत्त्यर्थतया, न प्रयाजादिवत् कार्योपयोगेन ; विद्यायाः कार्यान्तराभावात् ॥

## ४. (४) ब्रह्मसिद्धिः

अन्ये तु—पुरुषसंस्कारतयाऽऽत्मज्ञानाधिकारसंस्पर्शं कर्मणां वर्णयन्ति—"महायज्ञैश्च यज्ञैश्च ब्राह्मीयं क्रियते तनुः", "यस्यैते चत्वारिंशत संस्कारा अष्टावात्मगुणाः" इति च ॥

## ४. (५) ब्रह्मसिद्धिः

संस्कारपक्षो वा ; स्मृतेः ; संस्कृतस्य हि विद्योत्पत्तेः ; तदुक्तम्—"विहितत्वाच्चाश्रमकर्मापि" इति ॥

## ४. (१) वार्तिकम्

विपर्ययेण येऽप्याहुर्यथोक्तज्ञान-कर्मणोः ।
एकाधिकारिताम् वाच्यं मानं तैर्ज्ञानसंगतौ ॥ ४२७ ॥

न तावत् प्रक्रियेहास्ति व्रीह्यादिप्रोक्षणे यथा ।
प्रकृतापूर्वसंवन्धलक्षणापरतः स्थितेः ॥ ४२८ ॥

व्रीहिशब्दस्य हि व्रीहिस्वरूपे तु निरर्थकम् ।
प्रकृतापूर्वसंवन्धं वोधयेदिति युज्यते ॥ ४२९ ॥

नापि वाक्येन संवन्धो जुहूपर्णमयीत्ववत् ॥ ४३० ॥

जुह्वाद्यव्यभिचारित्वकर्मसंगतिकारणात् ।
विनाऽपि प्रक्रियां तेन कर्मोपस्थापयेद् ध्रुवम् ॥ ४३१ ॥

वाक्येनैवाभिसंवन्धस्तत्र तस्येति वर्णितम् ।
आत्मज्ञानं तु नैवं स्याद् न तत् प्रकरणे श्रुतम् ॥ ४३२ ॥

नापि चाव्यभिचारित्वमात्मनः कर्मणेक्ष्यते ।
तेनास्य कर्मसंवन्धो न मानेनोपपद्यते ॥ ४३३ ॥

एवं चाज्ञातपारार्थ्ये नार्थवादः फलश्रुतिः ।
पृथगेवाधिकारोऽतो यथोक्तज्ञान-कर्मणोः ॥ ४३४ ॥

अर्थाक्षेपोऽपि योग्यस्य कर्तुर्भोक्तुश्च युज्यते ।
न तु विध्वस्तभेदस्य स्यादौपनिषदस्य सः ॥ ४३५ ॥

प्रत्यक्षवेदवचनप्रामाण्याद्याश्रयत्वतः ।
[1]आदौ सन्यासरसंसिद्धेर्ऋणानीति ह्यपस्मृतिः ॥ ४३६ ॥

४. (२) (३) (४) (५) वार्तिकम्

स्वाध्यायेन व्रतैर्होमैस्त्रैविद्येनेज्यया सुतैः ।
महायज्ञैश्च यज्ञैश्च ब्राह्मीयं क्रियते तनुः ॥ १०४९ ॥
इत्येवं शतशः सन्ति यथोक्तार्थप्रसिद्धये ।
स्मृतिवाक्यानि पुंबुद्धिशुद्धिशंसीनि कर्मभिः ॥ १०५० ॥
संसारानर्थहेतुत्वज्ञानायैव च कर्मणाम् ।
काम्यानामिह निर्देशस्तज्जिहासाप्रसिद्धये ॥ १०५१ ॥
यद्वा विविदिषार्थत्वं काम्यानामपि कर्मणाम् ।
तमेतमिति वाक्येन संयोगस्य पृथक्त्वतः ॥ १०५२ ॥
न चोद्गीथादिविषयज्ञानवत् कर्मसंगतिः ।
ऐकात्म्यबुद्धेस्तद्बुद्धिद्वारं नैव निरीक्ष्यते ॥ ३३२ ॥
श्रुत्या नैकात्म्यविज्ञानं विनियुक्तं श्रुतौ क्वचित् ।
उपस्थानं यथैन्द्या स्यान्नापि लिङ्गेन संगतिः ॥
"बर्हिर्देवसदनं दामी"त्यादौ च यथा तथा ॥ ३३३ ॥

---

आनन्दगिरिः "ब्रह्मचर्यादेव प्रव्रजेदि"त्यादिस्पष्टविधिश्रुतिप्रामाण्यावष्टम्भाद् ब्रह्मचर्याश्रमे स्थितस्यैव सन्याससिद्धिः, यस्मिञ्जन्मनि ज्ञानेऽधिक्रियते तस्मिन्नेव भाव्यमृणापाकरणेनेत्यनियमात्, यदा कदाचित् तत्कर्तव्यतामात्रं श्रुति-स्मृत्योरिष्टमिति भावः। यदि त्वस्मिन्नेव जन्मनि कार्यमृणापाकरणमिति श्रुत्यादेरिष्टोऽर्थः, तदा नार्थवादो विधिविरोधे मानम्, प्रत्यक्षश्रुतिविरोधे च स्मृतिरमानमिति व्याचक्षाणो मनुस्मृतेरप्रामाण्यवर्णनमत्र वार्तिके न समुचितमि"ति सूचयति ॥

ब्रह्मसिद्धिस्तु आश्रमविकल्पस्मरणात् ब्रह्मचारिव्यतिरिक्तविषया मनुस्मृतिरिति मन्यते। तदप्यानन्दगिर्युक्तरीत्या जन्मान्तरीयर्णत्रयापाकरणेन यद्यपि निर्वोढुं पार्यते; तथापि मण्डनहृदयवित्तमो वाचस्पतिः 'जायमानो वै ब्राह्मणः' इति श्रुतिः मनुस्मृत्येकवाक्यतया गृहस्थविषया॥ अतो ब्रह्मचारिणो न ऋणानि सन्ति, "जायमानः" इति तु गृहस्थः सम्पद्यमान इति व्याख्येयमिति वदति। नागेशस्तु मञ्जूषायाम्—भीष्मादेरश्वमेधयागस्मरणात्, काण्वादीनामपि दत्तकपुत्रेण प्रजित्वोपपत्ते ऋणत्रयापाकरणमविरुद्धमिति लिखति। अत्र मूलन्तु प्रतिपन्नगार्हस्थस्याऽऽत्मविद्ययैव कृतकृत्यतां मन्वानस्यर्णापाकरणं विहिताकरणनिमित्तस्य पाप्मनो विद्योदयप्रतिबन्धृत्वं दर्शयति—"ऋणानि त्रीण्यपाकृत्यै"ति। तत्र वार्तिकक्वत्यमुक्तानुक्तदुरुक्तचिन्तनमिति स्मृतेरप्यप्रामाण्यवर्णनसाहसं वार्तिके, न तु प्रकरणे ब्रह्मसिद्धौ तदुपपद्यते। अथवा संयोगपृथक्त्वनयेन कर्मणामुपयोगपक्षे ऋणापाकरणस्मृतेरर्थवादत्वमित्यनुसन्धेयम् ॥

## ५. ब्रह्मसिद्धिः

७. अन्ये तु—परस्परविरोधिनोः कर्मात्मज्ञानयोः द्वैताद्वैतविषयत्वेनासंबन्ध एवेति—मन्यन्ते ॥

येऽपि—विरोधादसंबन्ध एव कर्म-ज्ञानयोः—'द्वैतविषयं कर्म, अद्वैतविषयं ज्ञानम्' इति—मन्यन्ते, तेषामनुत्पाद एवाद्वैतज्ञानस्य प्रसज्यते; प्रमाणादिविभागाद्वैतप्रतिपत्त्योर्विरोधात्। अथोपायोपेययोरयौगपद्यादविरोधः, प्रलीयत एवाद्वैतप्रतिपत्तौ सर्वो विभागः। न च विरोधोऽनुपायत्वं वा; उपायस्य पूर्वकालत्वात्, तदा च तस्याप्रलीनत्वात्। भेद एव चाभेदप्रतिपत्तावुपायः; न तर्हि कर्मभिरपि विरोधः; उपायत्वादेव ॥

स्यादेतत्—असाध्यत्वाद्ब्रह्मणो न कर्मणामुपयोगो विद्यते। श्रूयते च—"नास्त्यकृतः कृतेन" इति। न च ज्ञानोत्पत्तावुपयोगः; ज्ञानस्य प्रमाणाधीनत्वात्। न च ज्ञानसहकारीणि कर्माणि; ज्ञानस्य साध्यान्तराभावात्। न तस्य मोक्षः साध्यः; अनित्यत्वप्रसङ्गात्। अथ बन्धहेतुविच्छेदः साध्य इति तस्मिन् विच्छिन्ने तदभावाद् मुच्यते, कः पुनर्बन्धहेतुः? यद्यनाद्यविद्या, न तर्हि पृथक्तद्विच्छेदः साध्यः। यतो विद्योदय एवाविद्याव्यावृत्तिः।

स्यादेतत्—भवत्वग्रहणलक्षणाविद्याव्यावृत्तिर्विद्योत्पादः, यतो भाव एवाभावव्यावृत्तिः। न च विद्योत्पाद एव विपर्यासज्ञानव्यावृत्तिः। न खलु भावान्तरं भावान्तरव्यावृत्तिः। न हि परस्पराभावात्मानो भावाः; अभावत्वप्रसङ्गात् ॥

यदि मन्येत—तत्त्वाग्रहणनिमित्तो विपर्यासो निमित्तनिवृत्तौ स्वयमेव निवर्तिष्यते, तच्च न; न खल्वग्रहणमभावः कस्यचिन्निमित्तम्; मूर्छादिषु प्रसङ्गात्। किं तर्हि निमित्तम्? "अनादिरप्रयोजना चाविद्या" इत्युक्तम्। तत्र च हेत्वनुयोगो निरवकाशः; विपर्यास-तत्संस्कारयोश्च परस्परहेतु-फलभावेन व्यवस्थानान्न दोषः। अतो विपर्ययज्ञानस्य निवृत्तिर्विद्यया साध्या, इति तत्र ज्ञानस्य सहकार्यपेक्षा स्यात्, एतच्च वार्तम्; न खलु शुक्तिकादिषु विपर्यासपुरःसरं समुपजातसम्यग्ज्ञानास्तन्निवृत्तये पृथक् प्रयतन्ते, सहकारि वाऽन्यदपेक्षन्ते; यतो विरोधिभावान्तरोत्पाद एव पूर्वप्रध्वंसः, न शून्यम्; अन्यथा न प्रध्वंसो हेतुमान् स्यात्, विरोधिनी च विद्या विपर्ययज्ञानस्य, तदुत्पत्तौ विपर्यासो नष्ट एव भवति ॥

अथोच्येत—कर्माणि बन्धहेतवः, तत्क्षयो ज्ञानात् सहकारिसव्यपेक्षादिति; तच्च न; यावदविद्यं कर्मफलविभागव्यवहारमात्रम्, तस्य प्रमृष्टाशेषविशेषविशुद्धज्ञानोदये

कुतः संभवः ? तथा च विपर्यास-संशयाभ्यां तुल्यवत् प्रसंख्यातानि कर्माणि—

"भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः।
क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे ॥" इति ॥

अथ—विज्ञानवैमल्यायान्यापेक्षा, सापि मुधा; संशय-विपर्यासयोर्ज्ञानमलयोः प्रमाणोत्थविज्ञानेऽसंभवात्। अथ मतम्—शाब्दज्ञानादन्यदपि प्रत्यक्षं ज्ञानमिष्यते विगलितविभागोद्ग्राहं सर्वविकल्पातीतम्, तस्य हि ब्रह्म गोचरः, न शाब्दस्य विभक्तपदार्थसंसर्गोद्ग्राहिणः; तदुत्पत्तौ कर्मोपासनाद्यपेक्षा—इति ॥

कः पुनरस्य विशेषः, येन तदर्थ्यते ? स्पष्टाभत्वम्, न तस्योपयोगः। ज्ञानं हि ज्ञेयाभिव्याप्तये, शाब्दज्ञाने चोत्पन्ने आप्तमेव ज्ञेयम्; प्रमितेः प्रत्यक्षपरत्वात्। तत्र च नैराकाङ्क्ष्यात् तदर्थ्यत इति चेत्, एतदधिगते प्रमेये किमन्यदाकाङ्क्षेत ? प्रमाणान्तरमिति चेत्, न; प्रमेयसिद्ध्यर्थत्वात्तदाकाङ्क्षायाः। पुनः सिद्ध्यर्थमिति चेत्, न; पूर्वस्मादप्यसकृत् तत्सिद्धेः, सिद्धस्य च सिद्ध्यपेक्षायां न हेतुरस्ति। उपायान्तरसद्भावश्चेत्, उपायान्तरं तर्ह्यपेक्ष्येत; प्रमेये तु नैराकाङ्क्ष्यमेव। प्रीति-विशेषश्चेत्, स पूर्वप्रमाणजादपि दर्शनात् सिध्यति; न तत्सिद्ध्यर्थं प्रमाणान्तरम्।

प्रत्यक्षदृष्टमपीतरैस्तत्संभवात् जिज्ञास्येत, विशेषाभावात्। निश्चायकत्व-मितरेषामपि; प्रमाणभावात्। हानादियोग्यविषयं प्रत्यक्षम्, सन्निकृष्टार्थत्वात् नेतराणीति चेत् संनिकर्षहेतुस्तर्ह्यपेक्ष्यताम्, न प्रमाणम्; सिद्धत्वात् प्रमायाः। प्रकृते च प्रमेये नैव विशेषोऽस्ति ॥

सामान्यविषयाः शब्दादयः, विशेषविषयं प्रत्यक्षमिति चेत्; अनधिगत एव तर्हि शब्देन प्रत्यक्षस्य विषयः। बाढम्; उक्तमेतत्—न शाब्दस्य ज्ञानस्य विषयो ब्रह्मेति। यदि तर्हि न शब्देनाधिगतं ब्रह्म, कथं तस्मिन्नुपासना प्रवर्तताम् ? न चान्यस्मिन्नुपास्यमानेऽन्यत् साक्षाद्भवति ॥

कस्य च रूपस्य साक्षात्करणाय यज्ञादिविधानम् ? शब्दोपदर्शितनिरतिशयानन्दापहतपाप्मादिरूपब्रह्मस्वभावस्यात्मनः साक्षात्करणाय यज्ञादिविधिरुपपद्यते; अविदितपुरुषार्थरूपे, तद्विपरीतरूपे वा तस्मिंस्तद्विधिरसदर्थः। तस्मादपहतपाप्म-त्वादिगुणब्रह्मस्वभाव आत्मनि निर्विचिकित्सात् प्रमाणात् प्रकटतां प्राप्ते नापर-मपेक्ष्यमस्ति ॥

नन्ववगतेऽपि "तत् त्वमसि" इति शब्दाद् ब्रह्मात्मभावे प्रागिव सांसारिकधर्मदर्शनात् तन्निवृत्तये भवत्यन्यापेक्षा, नैतत् सारम्; कथं खल्ववगत-

ब्रह्मात्मभावो विदितात्मयाथातथ्यो मिथ्यादर्शननिमित्तैर्धर्मैर्युज्यते ? श्रूयते च— "ब्रह्म वेद ब्रह्मैव भवति" इति। न च ब्रह्मण्यपहतपाप्मनि तेषामवकाशः। तथा—

"आत्मानं चेद्विजानीयादयमस्मीति पूरुषः।
किमिच्छन् कस्य कामाय शरीरमनुसंज्वरेत्॥"

तथा "अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः" इति। मिथ्याभिमाननिमित्तः शरीरसंबन्धः, तस्मिन् याथातथ्यदर्शनान्निवृत्तेऽशरीरत्वम्, तत्र प्रियाप्रिययोरसंबन्ध आख्यायते। तस्मान्नावगतब्रह्मात्मभावः प्रागिव सांसारिकधर्मभाक्; यस्तु तथा, नासाववगतब्रह्मात्मभाव, इति॥

## ५. वार्तिकम्

विज्ञान-कर्मणोस्त्रेधा यद्युच्येत समुच्चयः।
पूर्वोक्तैकात्म्यतात्पर्याद् वेदस्यासौ न युज्यते॥ ३५७॥
एकवाक्यावशीभावात् साध्यैक्यायोगतस्तथा।
समुच्चयः कुतो द्रव्य-गुणवद् ज्ञान-कर्मणोः॥ ३५८॥
भेदाभेदाश्रयत्वेन ह्यैकात्म्यज्ञान-कर्मणोः।
परस्परोपकारित्वहानात् कीदृक् समुच्चयः॥ ३५९॥
देवता-द्रव्ययाथात्म्यज्ञानं कर्माङ्गतां गतम्।
तावदेव हि तत्कर्म नाज्ञातद्रव्य-दैवतम्॥ ३६०॥
तद्विशेषेऽङ्गभूयस्त्वात् फलभूयस्त्वमित्यतः।
समुच्चयो न तस्य स्यात् नाङ्गेनाङ्गिसमुच्चयः॥ ३६१॥
यच्चाप्यैकात्म्यविज्ञानं तदज्ञानैकघस्मरम्।
तस्मिन् सति कुतः कर्म का वाऽपेक्षाऽस्य गोचरे॥ ३६२॥
ब्राह्मणत्वादिविज्ञानमग्निहोत्रादिकर्मणाम्।
यद् दृष्टं साध्यसिद्ध्यै तु कर्मानुगुणमेव तत्॥ ३६३॥
ऐकात्म्यवस्तुयाथात्म्यबोधे जात्यादिबाधनात्।
न केवलं क्रिया न स्यात् कर्मणां प्रत्युताक्रिया॥ ३६४॥
वेदानुवचनादीनामैकात्म्यज्ञानजन्मने।
'तमेतमि'ति वाक्येन नित्यानां वक्ष्यते विधिः॥ ३२१॥
यद्वा विविदिषार्थत्वं सर्वेषामपि कर्मणाम्।

'तमेतमि'ति वाक्येन संयोगस्य पृथक्त्वतः ॥ ३२२ ॥
लोकतः सिद्धमादाय पशु-व्रीह्यादिसाधनम् ।
इदं कार्यमिदं नेति कर्मकाण्डश्रुतेर्गतिः ॥ ३२३ ॥
मानान्तरेण संप्राप्तां साध्य-साधनसंगतिम् ।
कर्मशास्त्रं व्यनक्तीति न तु वस्त्ववबोधकृत् ॥ ३२४ ॥
वेदो हि सर्व एवायमैकात्म्यज्ञानसिद्धये ।
अतो नान्योऽभिसंबन्धः कर्म-विज्ञानकाण्डयोः ॥ ३२५ ॥
नित्य-नैमित्तिकानीह कर्तृसंस्कारतो यतः ।
नान्यत्र पर्यवस्यन्ति ज्ञानादैकात्म्यगोचरात् ॥ ३२६ ॥
"प्लवा ह्येते परीक्ष्ये"ति तथा "तद्य इहे"ति च ।
निन्दाश्रुतेर्न काम्यानां कार्यताऽध्यवसीयते ॥ ३२७ ॥
विधि-निन्दासमावेशो नैवमप्युपपद्यते ।
फलाभिसन्धिमात्रे तु निन्दायामिव युज्यते ॥ ३२८ ॥
उपासनं च यत्किञ्चिद्विद्याप्रकरणे श्रुतम् ।
तदप्यैकात्म्यविज्ञानयोग्यत्वायैव कल्प्यते ॥ ३२९ ॥
'विमुच्यमान' इत्युक्तेरर्चिराद्युक्तितस्तथा ।
स्वार्थमात्रावसायित्वं नोपास्तीनां प्रतीयते ॥ ३३० ॥
इत्येवमभिसंबन्धः कर्मकाण्डस्य युज्यते ।
इतोऽन्यथाऽभिसंबन्धे न किंचिन्मानमीक्ष्यते ॥ ३३१ ॥
न चोद्गीथादिविषयज्ञानवत् कर्मसंगतिः ।
ऐकात्म्यबुद्धेस्तद्बुद्धिद्वारं नैव निरीक्ष्यते ॥ ३३२ ॥
श्रुत्या नैकात्म्यविज्ञानं विनियुक्तं श्रुतौ क्वचित् ।
उपस्थानं यथैन्द्र्या स्यान्नापि लिङ्गेन संगतिः ।
"बर्हिर्देवसदनं दामी"त्यादौ च यथा तथा ॥ ३३३ ॥
न चापि वाक्याद्विज्ञानं कर्तृद्वारेण गच्छति ।
कर्मण्यप्रक्रियास्थं सज्जुहूपर्णमयीत्ववत् ॥ ३३४ ॥
जुह्वाद्याकृतिसंपत्तिव्यपेक्षापूरणक्षमम् ।
विशेत् पर्णमयीत्वादि प्रकृत्युपनयात् क्रतुम् ॥ ३३५ ॥
कर्मापेक्षितकर्त्रादिरूपविध्वंसकृन्न तु ।
ऐकात्म्यज्ञानमन्वेति स्वातन्त्र्येऽप्यर्थवत्त्वतः ॥ ३३६ ॥

जुह्वाद्यव्यभिचारित्वात् प्रत्युपस्थापयेत् क्रतुम् ।
कर्ताऽन्यत्रापि सद्भावान्नाऽऽक्षेप्ता व्यभिचारतः ॥ ३३७ ॥
अनारभ्योक्तितश्चापि नेह प्रकरणग्रहः ॥ ३३८ ॥
सिद्धे सामान्यतो लिङ्गात् संबन्धे कर्मभिस्ततः ।
विशेषावगतिर्नाम्नः क्रमाच्चेति व्यवस्थितम् ॥ ३३९ ॥
इह त्वैकात्म्यधीयोगः काम्ययाज्येष्टिवन्न हि ।
तस्मात् कर्माभिसंबन्धो नैवैकात्म्यधियोऽमितेः ॥ ३४० ॥
न चाप्यस्यार्थवादत्वं विधिना वाक्यभेदतः ।
दृष्टार्थत्वाच्च तद्बुद्धेः पाठान्नादृष्टकल्पना ॥ ३४१ ॥
"तमेतमि"ति वाक्यात्तु यागादेः प्रत्युताङ्गता ॥ ३४२ ॥
स्वाध्यायेन व्रतैर्होमैः त्रैविद्येनेज्यया सुतैः ।
महायज्ञैश्च यज्ञैश्च ब्राह्मीयं क्रियते तनुः ॥ १०४९ ॥
इत्येवं शतशः सन्ति यथोक्तार्थप्रसिद्धये ।
स्मृतिवाक्यानि पुंबुद्धिशुद्धिशंसीनि कर्मभिः ॥ १०५० ॥

## ६. ब्रह्मसिद्धिः

[1]अत्रोच्यते—निश्चितेऽपि प्रमाणात् तत्त्वे सर्वत्र मिथ्यावभासा निवर्तन्ते, हेतुविशेषादनुवर्तन्तेऽपि;—यथा द्विचन्द्र-दिग्विपर्यासादय आप्तवचनविनिश्चितदिक्चन्द्रतत्त्वानाम् ; तथा निर्विचिकित्सादाम्नायादवगतात्मतत्त्वस्यानादिमिथ्यादर्शनाभ्यासोपचितबलवत्संस्कारसामर्थ्यात् मिथ्यावभासानुवृत्तिः । तन्निवृत्तयेऽस्त्यन्यदपेक्ष्यम् । तच्च तत्त्वदर्शनाभ्यासो लोकसिद्धः ; यज्ञादयश्च शब्दप्रमाणकाः । अभ्यासो हि संस्कारं द्रढयन् पूर्वसंस्कारं प्रतिवध्य स्वकार्यं संतनोति ॥

यज्ञादयश्च केनाप्यदृष्टेन प्रकारेण । श्रेयःपरिपन्थिकलुषनिबर्हणद्वारेणेत्यन्ये; नित्यानां कर्मणां दुरितक्षयार्थत्वात् । स्यादेतत्—अनुवर्तन्तां मिथ्यावभासाः । प्रमाणात्तु निश्चयः । यथातत्त्वं यथानिश्चयं च व्यवहारः । तस्मान्नावगतात्मतत्त्वस्य काचन शुभ, अशुभा वा प्रवृत्तिरुपपद्यते ॥

उच्यते—जातेऽपि तत्त्वदर्शने, अनाहिते च पटौ संस्कारे, द्रढीयसि च मिथ्यादर्शनजे संस्कारे निश्चया अपि मिथ्यार्था भवन्ति ; यथा दिङ्मूढस्यानु-

1. वक्ष्यमाणः शब्दपरोक्षवादः, यत्र संयोगपृथक्त्वन्यायेन कर्मणामुपयोगः

संहितासवचसः; प्रागिव प्रवृत्तिदर्शनात्, तथा प्रमितरज्जुभावाया अपि रज्वाः प्रमाणाननुसन्धाने सर्पभ्रान्त्या भयदर्शनम्। तस्माज्जातेऽपि प्रमाणात् तत्त्वदर्शने अनादिमिथ्यादर्शनाभ्यासपरिनिष्पन्नस्य द्रढीयसः संस्कारस्याभिभवाय उच्छेदाय वा तत्त्वदर्शनाभ्यासं मन्यन्ते। तथाच "मन्तव्यो निदिध्यासितव्यः" इत्युच्यते; शम-दम-ब्रह्मचर्य—यज्ञादिसाधनविधानं च; अन्यथा कस्तदुपदेशार्थः?

स्यादेतत्—ब्रह्मचर्यादिसाधनोपकरणादेवाम्नायात् तत्त्वविज्ञानम्, तदसत्; शब्दमात्रात् प्रतिपत्तेरुत्पत्तेः। न हि प्राक् साधनविशेषेभ्यस्तत्त्वप्रतिपत्तिपर आम्नायोऽवाचकः, नाप्यनिश्चायकः; अशेषाशङ्कानिर्मोक्षात्, अन्यथा तदुपदिष्टेषु साधनेष्वपि दुर्लभा प्रतिपत्तिः॥

अपि च अन्यथानिश्चयेऽपि रङ्गगता भरतादयो मिथ्यावभासेन शोक-भयादिहेतवः—निश्चितेऽपि गुलस्य माधुर्ये तत्र मिथ्यातिक्तावभासोऽवितथ इव दुःखयति; अवितथस्येव तस्यापि थूत्कृत्य त्यागात्। तस्मात् तन्निवृत्तये विनिश्चित-ब्रह्मात्मभावेनापि साधनान्यपेक्ष्याणि; यथैव प्रमाणात् तत्त्वाभिव्यक्तौ न मुक्तेः कार्यता, तथाऽभिव्यक्तिविशेषेऽपि साधनेभ्यः। श्रुतयस्त्वभ्यासपरिनिष्पत्त्यवस्था-विषयाः, शब्दसाधनज्ञानापेक्षा वा भवन्तु, तद्धेतुत्वादुत्तरस्य—इत्यलमति-विस्तरेण॥

## ७. ब्रह्मसिद्धिः तर्ककाण्डे

आहुर्विधातृ प्रत्यक्षं न निषेद्धृ विपश्चितः।
नैकत्व आगमस्तेन प्रत्यक्षेण विरुध्यते॥ ४॥

## ७. वार्तिकम्

तस्माद्वस्त्वेकनिष्ठत्वान्न भेदोऽक्षादिगोचरः॥ ९७८॥
घटोऽयमिति संवित्तेर्घटो मेयः प्रतीयते।
न व्यावृत्तिः पटादीनामताद्रूप्यात् तथा पटे॥ ९७९॥
नाक्षादिपञ्चकं तस्य बोधकं सत्समन्वयात्।
नयतस्तदभावो वा मेयत्वेनैव तत्स्थितेः॥॥ ९४१॥
नीलादिवदभावस्य यद्यक्षादिविशेषणम्।
विशेषणेन तद्व्याप्तेस्तदभावः कुतो मितेः॥ ९४२॥
अथाविशेषणोऽभावो भवद्भिरभिधीयते।
मेयाभावस्य मानत्वमविशेषात्प्रसज्यते॥ ९४३॥

## ८. (विध्यर्थः) ब्रह्मसिद्धिः

तत्साधनावबोधे हि विधातृव्याप्तिर्मता ।
अपेक्षितोपायतैव विधिरिष्टो मनीषिभिः ॥ १०४ ॥

## ८. वार्तिकम्

लिङादिः प्रेरणावाची कुतः कार्यमितीर्यताम् ।
विषयत्वेन नाक्षेपो भावार्थो विषयो मतः ॥ ६३३ ॥
प्रेरणापीह नैव स्यादज्ञातज्ञापनात् पृथक् ।
समस्तकार्यदोषोक्तिप्रसङ्गान्नित्यभावतः ॥ ६३४ ॥
न स्वरूपं लिङादीनां प्रेरणाज्ञापकत्वतः ।
अन्योन्यरूपभेदेऽपि प्रेरणानुगमात्तथा ॥ ६३५ ॥
शक्तेरनभिधेयत्वात् तद्व्यापारोऽपि नेष्यते ।
प्रेरकाभावतो वेदे तद्व्यापारोऽपि नेरणा ॥ ६३६ ॥
अतः समीहितोपायतया वस्त्ववबोधयन् ।
अबुद्धं प्रेरको वेदो ज्ञापना प्रेरणा मता ॥ ६३७ ॥

—:*:—

## पी. पी. एस्. शास्त्रिमहोदयसंगृहीतानि समानार्थानि ब्रह्मसिद्धि–वार्तिकवाक्यानीमानि

### ब्रह्मसिद्धिः

1. 47—24. अपरः कल्पः—भेदः परस्परानात्मस्वभावः । स चेद्वस्तुनः स्वभावः वस्तूनामभावप्रसङ्गः, अभावात्मकत्वप्रतिज्ञानात् ।

2. 50—21, 22. अर्थक्रियाकृते भेदे रूपभेदो न लभ्यते ॥ 7 ॥
दाह-पाकविभागेन कृशानुर्न हि भेदवान् ॥ 7½ ॥

3. 56— 3, 4. यथैव भिन्नशक्तीनामभिन्नं रूपमाश्रयः ॥ 9 ॥
तथा नानाक्रियाहेतु रूपं किं नाभ्युपेयते ॥ 9½ ॥

4. 76—24 to 77—25. अथाविवक्षितार्थत्वनिवृत्त्यै प्रार्थ्यते विधिः ।
अर्थो ज्ञातव्य इत्युक्ते ज्ञेयः स्यान्नाविवक्षितः ॥ 5 ॥

तद्वार्तमर्थपरता शब्दानां लोकवेदयोः ।
अविशिष्टस्तु वाक्यार्थ इत्युत्सर्गवती यतः ॥ 6 ॥
दृष्टार्थता च स्वाध्यायविधेरत्र न भिद्यते ।
भवेदितरथा कृत्स्नः स विध्यर्थोऽविवक्षितः ॥ 7 ॥
ज्ञानस्य पुरुषार्थत्वसिद्धये विधिरिष्यते ।
सर्वत्र पुरुषार्थत्वं विधेरित्यप्यपेशलम् ॥ 8 ॥
ज्ञेयाभिव्याप्तितो यस्मान्न विज्ञानात् फलान्तरम् ।
इष्यते मोक्ष इति चेत् साध्यस्तत्त्वच्युतेर्न सः ॥ 9 ॥

5. 95— 1, 2. } अस्तु वा मानयोग्यत्वं सत्त्वं तच्च प्रमीयताम् ॥ 51 ॥
तस्मिन् मिते वस्तुसत्त्वं भवत्यागमगोचरः ॥

6. 96— 3. न खलु प्रमाणान्तरसंभिन्नार्थमपि वचो न प्रमाणम्; प्रमाणमेव ह्याप्तवाक्यम् ।

7. 96—16. एवं च प्रमाणान्तरसंभिन्नार्थत्वेऽपि वेदान्तवचसां न प्रामाण्यव्याहतिः, आप्तवाक्यवत् । तथाहि—तान्यपि ज्ञान-ज्ञेयविभागविकलं स्वप्रकाशरूपमलौकिकं काममवगमयन्तु प्रमाणान्तरम् । तद्द्वारा चार्थसिद्धिराप्तवचनवत् ।

8. 104—12. तस्यैवमनुमेयत्वे कथं शब्दैकगोचरः ॥ 80 ॥
तस्यापि शब्दपूर्वत्वादनुमानैकगोचरः ।
कस्मान्न शब्दबोधोऽपि ह्यनुमानपुरःसरः ॥ 81 ॥

9. 110—16. प्रामाण्यमस्य यत्रास्तु श्रुतेस्तत्र वृथा त्वयम् ।
111— 1. क्व च प्रमाणमेषोऽर्थो न यागादौ स्वशब्दके ॥ 87 ॥
लौकिकेऽपूर्वसंसर्गः श्रोतुरस्त्यविधावपि ।

10. 112— 1. प्रतिपादनं संनिकर्षेण विशिष्टार्थपरता, न स्वार्थमात्रप्रतिपत्तिपरता । तथाच सर्वपदार्थाकाङ्क्षानिबन्धन एव संसर्गः ।

---

## वार्तिकम्

1. 954. वस्तुनो भेदरूपत्वे वस्त्वभावः प्रसज्यते ।

2. 957. दाह-पाक-प्रकाशादिभेदेऽप्यग्नेरभिन्नता ।
कार्यतोऽपि न भेदः स्याद्वस्त्वभेदव्यवस्थितेः ॥

3. 958. विभिन्नकार्यकर्त्रीणां शक्तीनां यद्वदाश्रयः ।
न विरुद्धोऽग्निरेकोऽपि तद्वत् कार्येऽपि किं न ते ॥

4. 666. अविवक्षितनुत्त्यर्थमथात्र विधिरिष्यते ।
अयं ज्ञेयोऽर्थ इत्युक्तौ स्याद्विवक्षितधीर्यतः ॥

667. नैवमुत्सर्गतो यस्माच्छब्दानां लोक-वेदयोः ।
विशिष्टार्थैकनिष्ठत्वं स्वतो न विधिहेतुतः ॥

668. अविशिष्टश्च वाक्यार्थः तथा लौकिक-वैदिक-
वाक्ययोर्गम्यते यस्माद्विधिर्नातो विवक्षितः ॥

671. मतं पुमर्थसिद्ध्यर्थं ज्ञानस्य विधिरिष्यते ।
फलस्य विध्यधीनत्वादुपेक्षाफलतान्यथा ॥

672. ज्ञेयव्याप्त्यतिरेकेण न विज्ञानात् फलान्तरम् ।
इष्यते कर्मवन्नातस्तदर्थं विधिकल्पना ॥

5. 705. यदापि मानयोग्यत्वं सत्त्वं तच्च प्रतीयते ।
तदापि वस्तुपरता नागमस्य विहन्यते ॥

6. 706. मानान्तरेणापि संबद्धमर्थं वाक्यं प्रबोधयत् ।
मानतां न जहात्येव जगत्याप्तवचो यथा ॥

7. 709. एवं च सति वेदान्ता यदि मानमलौकिकम् ।
प्रबोधयन्ति विध्वस्तनिखिलद्वैतगोचरम् ॥

710. कथं तेषाममानत्वं तदा स्यादाप्तवाक्यवत् ।
अर्थसिद्धिश्च मासिद्धौ सिद्धैवेति न साध्यते ॥

8. 736. श्रोतृस्थकार्यलिङ्गत्वात् कथं शब्दैकगोचरः ॥

737. तस्यापि शब्दपूर्वत्वादनुमानैकगोचरः ।
कस्मान्न शब्दबोधोऽपि ह्यनुमानपुरःसरः ॥

9. 750. प्रामाण्यं चास्य यत्रेष्टं श्रुतेस्तत्रास्त्वनेन किम् ॥

751. क चेष्टमस्य मानत्वं न यागादौ स्वशब्दके ।
लौकिकोऽपि न संसर्गो विध्यायत्तः स्थितो यतः ।

10. 754. तस्मात् सर्वपदार्थानामाकाङ्क्षा-योग्य-संनिधेः ।
परस्पराभिसंबन्धाद्विशिष्टार्थावबोधिता ॥

—:*:—

# (ख) परिशिष्टम्

## निबन्धान्तरेषु ब्रह्मसिद्धिवाक्यानामुद्धारः, तद्विमर्शश्च

### प्रकरणपञ्चिका

१. "तत्रान्यः पण्डितम्मन्यो मन्यते—नन्विदमसमञ्जसमुच्यते । सर्वत्र ह्युपाधिभेदमवगम्यौपाधिकशब्दानुविद्धः प्रत्ययो भवति, न पुनः प्रागेव, सह वा । इह च प्रमाणमेव जायमानमस्तीत्येवमेव जायते । प्रमाणोदयोत्तरकालं ह्यनया भवितव्यम् । किंच सत्यपि प्रमाणयोगे किंचिदस्तीति गम्यते, किंचिच्चासीदिति, तथाऽन्यद्भविष्यतीति । तत्र प्रमाणसंबन्धस्य वर्तमानत्वात् सर्वत्र वर्तमानसत्ताप्रत्ययेन भवितव्यम् । तदतिरेकिणि तु सत्त्वे तस्य त्रेधा व्यवस्थानाद्युक्तस्त्रिधावभासः । अपिच भूमितलनिखातेषु चिरतरकालवर्तिषु प्रलीनज्ञातृपुरुषेषु लिङ्गादिरहितेषु सकलप्रमाणप्रत्यस्तमयेऽपि वर्तमानसत्तासंदेहः । स च प्रमाणसंबन्धातिरेकिणीं सत्तामन्तरेणानुपपन्न इति । तदिदमनाकलितपरवचनस्य केवलं गलगर्जितम् ।"

२. "कः पुनरेष मोक्षः ? अविद्यास्तमय इति केचित् । एवमेवाद्वितीयमसंसृष्टं सकलोपाधिपरिशुद्धं ब्रह्म, तदनाद्यविद्यावशेन शरीरादिसद्वितीयमिवोपाधिकलुषितावभासमानं लब्धजीवव्यपदेशं सत् बद्धमिव कल्प्यते । अतोऽनाद्यविद्यैव संसारः, निखिलविकल्पातीतपरिशुद्धविद्योदयात् तदस्तमय एव मोक्षः । तदिदं श्रद्धाविजृम्भितमिति प्रमाणपरतन्त्राः ।"

३. "सोऽयमात्मीय एव बाणो भवन्तं प्रहरति—

लब्धरूपे क्वचित् किंचित् तादृगेव निषिध्यते ।
विधानमन्तरेणातो न निषेधस्य संभवः ॥" इति

---

(1) Vide page 28, line 21 of the Prakaraṇapañcikā Chowkhamba Sanskrit Series No. 17 and c.f. the Brahmasiddhi III 39 and 40.

(2) Vide page 154, line 1 of the book referred to above and the Brahmasiddhi III-106.

(3) Vide page 155, line 6 of the book referred to above and the Brahmasiddhi II-2.

१. "तत्र केचित् पण्डितमानिन आहुः—काल्पनिकी सुखादिव्यवस्था भविष्यति। यथैकस्मिन्नेव शरीरे पादादिवेदनाव्यवस्था न व्यतिकीर्यते, तथा नानाशरीरेषु न व्यतिकरिष्यत इति। न हि पादगता वेदना शिरसि, शिरोगता वा पादे। न च वेदना पादादिष्वेव समवेतेति शक्यते वक्तुम्; तेषामज्ञत्वात्। ज्ञाता हि वेदनाभिः सह संबध्यते, दुखविशेषरूपत्वात् तासामिति। तदिदं मन्द-बालजनमोहनमिति वृद्धाः।"

"अत्रापर आह—सत्यं कार्यावगमादेव प्रवृत्तिः। इष्टसाधनतैव तु कार्यता, न परा काचित्। सैव प्रवृत्तिहेतुर्विधिरित्युच्यते। तदाह—

२. अपेक्षितोपायतैव विधिरिष्टो मनीषिभिः।
ततो ह्यध्यवसायादिर्वा कस्मान्नाभिधानतः॥"

---

प्रकरणपञ्चिकाव्याख्या—न्यायसिद्धिः

३. "उक्तमेवार्थं कृत्स्नमबुद्ध्वा मण्डनाचार्येणात्र किंचिद् दूषणमुक्तम्, तन्निराकर्तुं सोपालम्भमाह—तत्तान्य इति"॥

"तदेवमनुवृत्ताकारप्रत्ययविरहादेव निराकृते पदार्थस्वरूपातिरेकिणि महासामान्ये सत्ताख्ये द्वैतप्रतिपादनपरतया चोदनायां प्रत्यक्षविरोधं दर्शयितुं मण्डनाचार्येण सन्मात्रविषयं प्रत्यक्षमिति साधितम्—

४. 'आहुर्विधातृ प्रत्यक्षं न निषेद्धृ विपश्चितः।
नैकत्व आगमस्तेन प्रत्यक्षेण विरुध्यते॥'

इति। तदपि निराकृतमित्याह"

---

(1) Vide page 159, line 11 of the book referred to above and c.f. the Brahmasiddhi page 7, line 1.

(2) Vide page 178, line 2 of the book referred to above and the Brahmasiddhi III-104.

(3) Vide page 80, line 5 of the MS. described under R. No. 3647 of the Triennial Catalogue of Sanskrit MSS., in the Govt. Oriental MSS., Library, Madras, Vol. IV-C; and c. f. the Brahmasiddhi III-39 and 40.

(4) Vide page 82, line 4 of the MS. referred to above and the Brahmasiddhi II-1.

१. "यदुक्तं ब्रह्मसिद्धिकारेण—इतरेतराश्रयप्रसङ्गादेव सर्वत्र भेदो ग्रहीतुं न शक्यते। तथाहि घट-पटयोरिह भेदो गृह्यते। तत्र घटात् पटस्य भेदो ग्रहीतुमिष्टश्चेत्, पूर्वमेव घटस्यापि भेदो ग्रहीतव्यः; इतरथा कस्मात् पटस्य भेदो गृह्यत इति ज्ञायेत? तेन पूर्वमेव घटस्य भेदं गृहीत्वा घटात् पटस्य भेदे ग्रहीतव्ये स्पष्टमितरेतराश्रयं भवति। तन्न"।

---

२. "नन्वेवमपि भेदेतरेतराभावयोर्भेदादभावस्य चान्यापेक्षत्वात् पुनरपि भेदग्रहणेऽन्योन्याश्रयणमापद्यत इत्याह—लब्धरूपे क्वचित्किंचिदिति"॥

---

नैष्कर्म्यसिद्धिः

३. "एवमुपसंहृते केचित् स्वसम्प्रदायबलावष्टम्भादाहुः—यदेतद् वेदान्तवाक्यादहं ब्रह्मेति विज्ञानं समुत्पद्यते, तन्नैव स्वोत्पत्तिमात्रेणाज्ञानं निरस्यति। किं तर्हि? अहन्यहनि द्राघीयसा कालेनोपासीनस्य सतो भावनोपचयान्निःशेषमज्ञानमपगच्छति" etc.॥

---

बृहदारण्यकभाष्यवार्तिकम्

४. "अन्ये तु पण्डितम्मन्याः संप्रदायानुसारतः।
विज्ञायेति वचः श्रौतमिदं व्याचक्षतेऽन्यथा॥
तत्त्वमस्यादिवाक्योत्थविज्ञानेन यथोदितम्।
विज्ञाय वस्त्वसंसर्गि प्रज्ञां कुर्वीत यत्नतः॥"

---

(1) Vide page 135, line 10 of the MS. referred to above and c.f. the Brahmasidhi II-10.

(2) Vide page 135, line 18 of the MS referred to above and the Brahmasiddhi II-3.

(3) Vide page 38, line 3 of the Naiṣkarmyasiddhi, Bombay Sanskrit Series No. 38 and c. f. the Brahmasiddhi page 35, line 15 and page 154, line 2.

(4) Vide page 1852, stanzas 796 and 797 of the Bṛhadāraṇyakabhāṣyavārtika, Ānandāśrama Sanskrit Series No. 16 and c. f. the Brahmasiddhi page 154, line 2.

### ब्रह्मसूत्रभाष्यव्याख्या—भामती

१. "अभ्यासे हि भूयस्त्वमर्थस्य भवति, यथाऽहो दर्शनीयाऽहो दर्शनीयेति, न न्यूनत्वम्, प्रागेवोपचरितत्वम्।"

---

२. "यथा पयः पयोऽन्तरं जरयति, स्वयं च जीर्यति; यथा विषं विषान्तरं शमयति, स्वयं च शाम्यति; यथा वा कतकरजो रजोऽन्तराविले पयसि प्रक्षिप्तं रजोऽन्तराणि भिन्दत् स्वयमपि भिद्यमानमनाविलं पाथः करोति, एवं कर्माविद्यात्मकमप्यविद्यान्तराण्यपगमयत् स्वयमप्यपगच्छति"॥

---

### भामतीव्याख्या—कल्पतरुः

३. "स्थितप्रज्ञः साधको न साक्षात्कारवानिति मण्डनमिश्रैरुक्तं दूषणमुद्धरति—स्थितप्रज्ञस्येति।"

---

### विधिविवेकव्याख्या—न्यायकणिका

४. "यथाऽऽहुराचार्याः—

"सामान्यरूपभूयस्त्वे तस्मात्त्वं प्रकाशते।
विलक्षणत्वमल्पत्वे चकास्ति तदनुद्भवात्॥"

"इति, तदेतत् ब्रह्मसिद्धौ कृतश्रमाणां सुगममिति नेह प्रपञ्चितम्।"

---

(1) Vide page 8, line 9 of the Bhāmati (Catussūtri), Nirnayasagar Press, Bombay, 1915 and the Brahmasiddhi page 6, lines 24 and 25.

(2) Vide page 58, line 11 of the book referred to above and c. f. the Brahmasiddhi page 12, lines 17 and 25.

(3) Vide page 959, line 22 of the Kalpataru, Nirnayasagar Press, Bombay, 1917 and c.f. the Brahmasiddhi page 130. line 19.

(4) Vide page 80, line 15 of the Vidhivivēka with commentary. Pandit Series No. XXV and the Brahmasiddhi III-66.

## न्यायमञ्जरी

" तदुक्तम्—

१. आहुर्विधातृ प्रत्यक्षं न निषेद्धृ विपश्चितः ।
नैकत्व आगमस्तेन प्रत्यक्षेण विरुध्यते ॥ "

---

## पञ्चपादिकाविवरणम्

२. " ब्रह्मसिद्धिकारेण च एवमेवेयमविद्या माया मिथ्याप्रत्यय इत्युक्तत्वात् । "

---

## प्रशस्तपादभाष्यव्याख्या—न्यायकन्दली

३. " एतेन तत् प्रत्युक्तम्—यदुक्तं मण्डनेन विशेषगुणनिवृत्तिलक्षणा मुक्तिरुच्छेदपक्षान्न भिद्यत इति " ॥

---

## श्रीभाष्यम्

४. "अत्र केचिदद्वितीयत्वं ब्रह्मणोऽभ्युपयन्त एवैवं समादधते—एकस्यैव ब्रह्मणः प्रतिबिम्बभूतानां जीवानां सुखित्व-दुःखित्वादय एकस्यैव मुखस्य प्रतिबिम्बानां मणि-कृपाण-दर्पणादिषूपलभ्यमानानामल्पत्व-महत्त्व-मलिनत्व-विमलत्वादिवत् तत्तदुपाधिवशात् व्यवस्थाप्यन्ते " ॥

---

(1) Vide page, 526 line 17 of the Nyāyamañjari, Vizianagaram Sanskrit Series No. 10 and the Brahmasiddhi II-1.

(2) Vide page 32, line 17 of the Pañcapādikāvivaraṇa, Vizianagaram Sanskrit Series No. 5 and the Brahmasiddhi page 9, line 12.

(3) Vide page 6, line 23 of the Nyāyakandali Vizianagaram Sanskrit Series No. 6 and the Brahmasiddhi page 16, lines 14 and 15.

(4) Vide the Sribhāṣya II-1-15 and c. f. the Brahmasiddhi page 7, line 9.

न्यायमकरन्दः

१. "एतदेवाभिप्रेत्याभिहितम्—अपि च जन्मैव बुद्धेरर्थापारोऽर्थावग्रह-रूपायाः" इति ॥

---

यथोक्तम्—

२. "सर्वात्मनाऽर्थो ज्ञानेन केनचिन्न हि गृह्यते।" इति।

"तदुक्तम्—

३. "न स कल्पयितुं शक्यस्तत्सिद्धेर्लौकिकादपि।" इति।

"तदाहुरत्रभवन्तो मण्डनमिश्राः—

४. "पदं स्वधर्मं व्युत्क्रामेदन्यसिद्धार्थतान्यथा।" इति।

"तदभिहितमाचार्यवर्यैः—

५. अपेक्षितोपायतैव विधिरिष्टो मनीषिभिः। इति।

"तदाह स—

६. "अविद्यास्तमयो मोक्षः सा संसार उदाहृतः।" इति।

७. "यदपि कैश्चित् प्रमेयविकल्पेन सामान्यमेव वस्त्विति स्थापयित्वा सत्ताया महासामान्यरूपत्वात् सन्मात्रमेव सत्त्वमिति साधितम्, तदपि न सत्कल्पम्" ॥

---

(1) Vide page 35, line 6 of the Nyāyamakaranda, Chowkhamba Sanskrit Series No. 38 and the Brahmasiddhi page 45, line 13.

(2) Vide page 127, line 4 of the book referred to above and the Brahmasiddhi III-138.

(3) Vide page 231, line 9 of the book referred to above and the Brahmasiddhi III-85.

(4) Vide page 234, line 8 of the book referred to above and the Brahmasiddhi III-78.

(5) Vide page 256, line 4 of the book referred to above and the Brahmasiddhi III-104.

(6) Vide page 271, line 5 of the book referred to above and the Brahmasiddhi III-106.

(7) Vide page 290, line 9 of the book referred to above and c. f. the Brahmasiddhi II-32.

१. "न हि निषेधवाक्येषु कस्यचिदात्यन्तिको निषेधः, किंतु किंचित् क्वचिन्निषिध्यते। ब्रह्माद्वैताभिमानी तु भवानात्यन्तिकमेव निषेधमभिलषति। तथाच सोऽयमात्मीय एव बाणो भवन्तं प्रहरति—

"लब्धरूपे क्वचित् किंचित् तादृगेव निषिध्यते।
विधानमन्तरेणातो न निषेधस्य संभवः।" इति।

"यथोक्तम्—

२. 'सर्वप्रत्ययवेद्ये वा ब्रह्मरूपे व्यवस्थिते।
प्रपञ्चस्य प्रविलयः शब्देन प्रतिपाद्यते॥
प्रविलीनप्रपञ्चेन तद्रूपेण न गोचरः।
मानान्तरस्येति मतमाम्नायैकनिबन्धनम्॥' इति।

३. "यदपि मतम्—बीजाङ्कुरवदनादिरविद्या-जीवविभागः, ततो नान्योन्याश्रयत्वमिति, तदप्यसांप्रतम्"॥

---

न्यायदीपावलिः

"तदुक्तम्—

४. 'यः प्रतीतिविरोधस्तु स स्वदोष उदाहृतः।
सामानाधिकरण्येन बोधाद्रूप्यमिदं सितम्॥' इति।

---

(1) Vide page 292, line 7 of the book referred to above and the Brahmasiddhi II-2.

(2) Vide page 298, line 8 of the book referred to above and the Brahmasiddhi IV-3 and 4.

(3) Vide page 312, line 3 of the book referred to above and c.f. the Brahmasiddhi page 10, line 12.

(4) Vide page, line 9 of the Nyāyadīpāvali, Chowkhamba Sanskrit Series No. 117 and the Brahmasiddhi III-149.

### न्यायमकरन्दव्याख्या

१. "तदुक्तं ब्रह्मसिद्धिकारैः—

'यः प्रतीतिविरोधस्तु स स्वदोष उदाहृतः।
सामानाधिकरण्येन बोधाद्रूप्यमिदं सितम्'"॥

इति तवात्मीय एव बाणो भवन्तं प्रहरति"

---

### तत्त्वप्रदीपिका

२. "तथाच ब्रह्मसिद्धौ मण्डनमिश्रैः—विपर्ययाभावस्तु युक्तोऽनुमातुं हेत्वभावे फलाभावः" इति।

३. "अज्ञाननिवृत्तेर्ब्रह्मज्ञानरूपतया तज्जन्यत्वाभावात् ज्ञातोऽर्थस्तज्ज्ञप्तिर्वाऽज्ञानहानिरिति इष्टसिद्धिकारैरभिधानात्।

"विद्यैव चाद्वया शान्ता तदस्तमय उच्यते"।

इति ब्रह्मसिद्धिकारैरप्युक्तत्वात्।"

---

### शतदूषणी

४. "एवमाश्रयज्ञानेनापि विरोधः। न हि यत्किंचिदाश्रयप्रतीतिमन्तरेणाभावप्रतिपत्तिमनुमन्यामहे।

उक्तं चाभियुक्तैः—

"लब्धरूपे क्वचित् किञ्चित् तादृगेव निषिध्यते"॥ इति।

---

(1) Vide page 74, line 22 of the Nyāyamakaranda with commentary, Chowkhamba Sanskrit Series No. 38 and the Brahmasiddhi III-149.

(2) Vide page 140, line 2 of the Tattvapradīpikā, Nirnayasāgar Press, Bombay and c.f. the Brahmasiddhi page 146, lines 8 and 9.

(3) Vide page 381, line 9 of the book referred to above and the Brahmasiddhi III-106.

(4) Vide page 251, line 5 of the Satadūṣaṇī, Śāstramuktāvali Series No. 36, Vol. III and the Brahmasiddhi II-2.

अधिकरणसारावलिव्याख्या—अधिकरणचिन्तामणिः

१. अत्र विधिः कार्यमेकेषाम्, शब्दभावना पुनरन्येषाम्, इष्टसाधनत्वं मण्डनस्य, इष्टस्य कृत्यधीनत्वलक्षणमाचार्यैकदेशीयानाम्, धात्वर्थभावनेति केचिदूचुः। आप्तस्य हितकामस्य नियोग इति न्यायवादिनः।"

---

न्यायसारव्याख्या—न्यायमुक्तावलिः

२. "स्यादेतदेवं यदि प्रत्यक्षेण भेदः प्रमीयेत। तदेव तु दुःसंवादमिति त्र्यन्तदन्तिनः; तस्य विधिमात्रव्यापारत्वात्। तदुक्तम्—

'आहुर्विधातृ प्रत्यक्षं न निषेद्धृ विपश्चितः।
नैकत्व आगमस्तेन प्रत्यक्षेण विरुध्यते'।

*  *  *  *

'लब्धरूपे क्वचित् किंचित् तादृगेव निषिध्यते।
विधानमन्तरेणातो न निषेधस्य संभवः॥'

*  *  *  *

'क्रमः संगच्छते युक्त्या नैकविज्ञान-कर्मणोः।
न संनिहितजं तच्च तदन्यामर्शि जायते॥' इति।'

'यदप्यभिहितम्—

३. 'अन्योन्यसंश्रयाद्भेदो न प्रमान्तरसाधनम्।
नास्मिन्नयं नायमयमिति भेदाद्विना न धीः॥' इति।"

"यदप्यभिहितम्—

४. 'मीयमानैकरूपेषु न निषेधोऽवकाशवान्"॥ इति।

---

(1) Vide stanza 20 in Śāstrāvatāra of the Adhikaraṇasārāvali with Adhikaraṇacintāmaṇi. Telugu edition, Madras and c.f. the Brahmasiddhi III-104.

(2) Vide page 488, line 1 of the MS. described under R. No. 3262 of the Triennial Catalogue of Sanskrit MSS., in the Govt. Oriental MSS. Library, Madras, Vol. IV-B; and the Brahmasiddhi II-1, 2 and 3.

(3) Vide page 490, line 8 of the MS. referred to above and the Brahmasiddhi II-10.

(4) Vide page 491, line 17 of the MS. referred to above and the Brahmasiddhi II-11.

"यदुक्तम्—

१. 'आलोच्यते वस्तुमात्रं ज्ञानेनापातजन्मना।
अचेत्यमानो भेदोऽपि चकास्तीत्यतिसाहसम्॥' इति।"

---

### न्यायचन्द्रिका

२. "न च प्रत्यक्षं बाधकम्। तद्धि बाधकं भवत् भेदाभावमभेदं वा गृह्णीयात्। न तावत् भेदाभावं गृह्णाति; प्रत्यक्षस्य विधिमात्रनिष्ठत्वेन भेद-निषेधकत्वानुपपत्तेः। यथाऽऽहुः—

'आहुर्विधातृ प्रत्यक्षं न निषेद्धृ विपश्चितः।" इति।

---

### अद्वैतसिद्धिः

३. "अत एव—'घटादिकं सद्रूपे कल्पितम्, प्रत्येकं तदनुविद्धत्वेन प्रतीयमानत्वात्, प्रत्येकं चन्द्रानुविद्धजलतरङ्गचन्द्रवत्।' इति ब्रह्मसिद्धि-कारोक्तमपि साधु"॥

### विमर्शः

तत्र प्रकरणपञ्चिका, न्यायमञ्जरी, न्यायकन्दली, शतदूषणी, अधिकरण-सारावलीव्याख्या अधिकरणचिन्तामणिः, न्यायसारव्याख्या न्यायमुक्तावलिश्च मण्डनसिद्धान्तनिरासपराः, अन्ये तु—भामती-कल्पतरु-न्यायकणिका-पञ्चपा-दिकाविवरण-न्यायमकरन्द-न्यायदीपावलि-तत्त्वप्रदीपिका-न्यायचन्द्रिकाऽद्वैत-सिद्ध्यादयस्तु तदुपष्टम्भकाः॥

---

(1) Vide page 492, line 14 of the MS. referred to above and the Brahmasiddhi II-27.

(2) Vide page 246, line 14 of the Nyāyacandrika MS, described under R. No. 2931 of the Triennial Catalogue of Sanskrit MSS., in the Govt. Oriental MSS., Library, Madras. Vol. IV-A and the Brahmasiddhi II-1.

(3) Vide page 316, line 11 of the Advaitasiddhi, Nirnayasagar Press, Bombay, 1917 and the Brahmasiddhi II-31.

तत्र प्रकरणपञ्चिका 'तत्रान्यः' इत्यादिर्गलगर्जितमित्यन्ता, तद्व्याख्या न्यायसिद्धिः—'तदेवमनुवृत्ताकारप्रत्ययविरहादेव निराकृते' इत्यादिः 'तदपि निराकृतमि'त्यन्ता, 'यदप्यभिहितमि'त्यादिः 'न निषेधोऽवकाशवान्' इत्यन्ता न्यायमुक्तावलिश्च सन्मात्रप्रामाण्यपक्षं मण्डनस्य निराचक्षते। तत्र न्यायमकरन्दः सर्वत्र प्रकरणपञ्चिकायाः साक्षात्, तेन न्यायेनान्येषामपि प्रतिपक्षाणां निरसनेन ब्रह्मसिद्धिसिद्धान्तं समर्थयति ॥

तथाहि—न्यायमकरन्दो हि—'यदपि कैश्चिदि'त्यादिना मण्डनमते सन्मात्रप्रामाण्यपक्षायोगं प्राभाकराभिमतं पूर्वपक्षतयैवोपक्षिप्य (page 297) 'तदेतदाकाशरोमन्थायितमुत्पश्यामः' इत्यादिना तन्निरासेन मण्डनमतं समर्थयति।

न्यायसारव्याख्यायां न्यायमुक्तावलौ—यदभिहितम् 'मीयमानैकरूपेषु न निषेधोऽर्थवान्' इत्यादिना मण्डनमतानुवादः, तन्निरासश्च सत्सामान्यातिरिक्तविशेषस्यापि सत्त्वमङ्गीकृत्य—विशेषाणामपि सदात्मना प्रतीतेरिति।

अयमेव न्यायः सर्वत्र न्यायमकरन्दगृहीतेषु मण्डनवाक्येषु। अतोऽत्र न्यायमकरन्दव्यवस्थानुसारिण्येव व्यवस्था सर्वत्रानुसन्धेया।

यत्तु प्रकरणपञ्चिकायाम् (page-154)—कः पुनरेष मोक्ष इत्यादिना—तदिदं श्रद्धामात्रविजृम्भितमिति प्रमाणपरतन्त्राः। न खल्वद्वैतं कस्यचित् प्रमाणस्य गोचरः। स्यान्मतम्—प्रत्यक्षादिप्रमाणविषयत्वस्याद्वैतनिरसनं तत्र तदपि (page 290) यथावदनूद्याक्षरशो न्यायमकरन्दो मोक्षनिरूपणे निरस्य मण्डनाभिमतमेव मोक्षस्वरूपं समर्थयति। सारांशस्तु—प्रभाकरमतनिरसनं ब्रह्मसिद्ध्या, तस्य निरसनं प्रकरणपञ्चिकया, तन्निराकरणेन ब्रह्मसिद्धिसमर्थनं न्यायमकरन्देनेति। अत्र च शास्त्रिपादाः ब्रह्मसिद्ध्युत्तराणां प्रकरणपञ्चिकान्यायमकरन्दादीनां तत्तत्प्रकरणसंग्रहेण पण्डितकुलस्योत्तमर्णाः। प्रकरणपञ्चिकाव्याख्या न्यायसिद्धिरप्यत एव व्याख्याता। न्यायमकरन्दोक्तास्तन्निरसनप्रकारा न तयाऽपि निरस्ताः।

एतेन—तत् प्रत्युक्तम्, यदुक्तं मण्डनेन विशेषगुणनिवृत्तिलक्षणा मुक्तिरुच्छेदपक्षाद् न भिद्यते—इति। न्यायकन्दली हि मण्डनमनुवदति तं निरसितुम्। तदभिमता युक्तयस्तु—विशेषगुणोच्छेदे हि सत्यात्मनः स्वरूपेणावस्थानात् नोच्छेदः; नित्यत्वात्। न चायमपुरुषार्थः; समस्तदुःखोपशमस्य

परमपुरुषार्थत्वात् । समस्तसुखाभावादपुरुषार्थत्वमिति चेत्, न; सुखस्यापि क्षयितया बहुलप्रत्यनीकतया च साधनप्रार्थनाशतपरिक्लिष्टतया च सदा दुःखाक्रान्तस्य विषमिश्रस्येव मधुनो दुःखपक्षे निक्षेपात्—इति। तत्र च सुखस्य पुरुषार्थत्वं मण्डनमते नित्यानन्दात्मरूपत्वेन, न तु क्षयिष्णुसुखरूपत्वेन, इति न समस्तविशेषगुणोच्छेदस्य मुक्तित्व आत्मोच्छेदादविशेषस्तदवस्थ एव। मण्डनमते हि दुःखाभावस्यापि प्रपञ्चप्रविलयात्मरूपतयैव पुरुषार्थत्वं मोक्षत्वेन, न तु दुःखाभावरूपत्वेन। अत एव मण्डनमते न भावाद्वैतमपि ॥

न्यायमञ्जर्याम्—'आहुर्विधातृ प्रत्यक्षमि'ति मण्डनकारिकाया अनुवादोऽद्वैतसिद्धान्तोपक्षेपप्रसङ्ग एव, यस्य निरासः (page 526) अन्यनिषेधमन्तरेण तत्स्वरूपपरिच्छेदस्यासंप्रतिपत्त्या क्रियते। परंतु—मण्डनमते 'सत्संप्रयोगे पुरुषस्येन्द्रियाणामि'ति न्यायात् स्वरूपमात्रं स्वरूपेणैव प्रत्यक्षेण गृह्यते, न त्वितरव्यवच्छिन्नरूपेण। इतरपरिच्छेदो हि भेदविधानमन्तरा न संभवतीति हि

"आहुर्विधातृ प्रत्यक्षं न निषेद्धृ विपश्चितः।
नैकत्व आगमस्तेन प्रत्यक्षेण विरुध्यते ॥"

इति प्रतिज्ञाय क्रमेण, युगपद्वा भेदविधानायोगादेव प्रत्यक्षस्य स्वरूपमात्रावगाहित्वं मण्डनो व्यवस्थापयति। अत्र च न्यायमञ्जरी तूष्णीम्भावमेवावलम्बते ॥

एतेन—न हि निषेधवाक्येषु कस्यचिदात्यन्तको निषेधः, किन्तु किञ्चित् क्वचिन्निषिध्यते। ब्रह्माद्वैतमानी तु भवानात्यन्तिकमेव निषेधमभिलषति। तथाच सोऽयमात्मीय एव बाणः भवन्तं प्रहरति ॥

लब्धरूपे क्वचित् किञ्चित् तादृगेव निषिध्यते।
विधानमन्तरेणातो न निषेधस्य संभवः ॥

इति न्यायमकरन्दोद्धारः, एवं (page 155-6) प्रकरणपञ्चिकोद्धारश्च व्याख्यातः। तत्र प्रकरणपञ्चिका यद्यपि मण्डनखण्डनपरा, न्यायमकरन्दस्तु पूर्वपक्षतयैव प्रकरणपञ्चिकावाक्यमेवोदाहरति, यस्य निरास एव (page 30-5)। न चैवं सति 'लब्धरूप' इत्यादिस्वोक्तिविरोधः। तत्र हि सिद्धनिषेधो निषिध्यते, न तु प्रमितनिषेधः, न च प्रमितिरेव सिद्धिः, अपि तु प्रतीतिः। स चानाद्य-

विद्यावासनातो भवति प्रपञ्चविलयः। अतो भवति प्राप्तिः। भवति चात्यन्तिकनिषेधो रजतवत्। अतो न स्वोक्तिविरोध इति न्यायमकरन्देन स्वयं निरस्यते। अतो 'लब्धरूपे' इति मण्डनसिद्धान्तस्य न विरोधः, येन स्वकीय एव बाणः मण्डनं प्रहरतीति स्यात्, यत्र स्वोक्तिविरोधः, तत्रैव तदीय एव बाणस्तं प्रहरति।

अत्र न्यायसारव्याख्या न्यायमुक्तावल्यपि (page 137) मण्डनसिद्धान्तमेतं सर्वमनूद्य—"तत्र पक्षान्तराणि भवन्तु वा, मा भूवन्, विधिव्यवच्छेदयौगपद्ये तु न कामपि विरोधकलामाकलयामः। अङ्गुल्योरपर्यायमेव परस्परव्यावृत्तिः प्रतिभासते। यद्यपि वस्तुविधिव्यतिरेकेण व्यवच्छेदो न प्रतिभाति; तथापि व्यक्त्या समेत्य ज्ञानगोचरभावं जातिराचरति, न तु प्राथमिकीं वराकीं व्यक्तिप्रतीतिमपेक्षते, तथेहापि वस्तुयोग्यतामन्तर्भाव्येति वस्तुना सहैकस्यां संविदि भासतामिति लिखति॥

तत्र जाति-व्यक्त्योः परस्परव्याघाताभावात्, व्यक्तिज्ञानानन्तरं जातिभानस्य संभवाच्च नात्रोदाहरणतामर्हति; विधि-निषेधयोः तेजस्तिमिरयोरिव व्याघातेनैकस्यां संविदि विषयैकत्वायोगात्। सूचितं चैतद् अभिप्रायप्रकाशिकायाम्, भावशुद्धौ च–"विधिव्यवच्छेदयोः परस्परसङ्घट्टनात्" इति च॥

शङ्करपाणिरपि—शुक्तिरजतनिषेधरूपं चित्रमेव बाधकज्ञानं जायते, जन्म च तस्य व्यापारः, न चैकः; उत्पन्नस्य पुनरनुत्पत्तेः। अनेकत्र च क्रमो भवति, नैकत्र, तेन न युगपदेव विधि-निषेधौ॥

अङ्गुल्योः परस्परव्यावृत्तज्ञानं तु नैकम्, किन्तु द्वे एव ज्ञाने, न वा तयोर्व्याघातः, अतो न तत्राप्यपर्यायव्यावृत्तिज्ञानं दृष्टान्ततामर्हति॥

तदेवं मण्डनमतनिरासार्थं मण्डनोद्धाराणां व्यवस्था न मण्डनमतनिराकरणाय प्रभवतीति विमृष्टम्। तत्समर्थनपराणां तु निबन्धानां विषये न किमपि विशिष्टं वक्तव्यमिति न तत्र व्याप्रियते॥

---

# ग–परिशिष्टम्

॥ ओम् ॥

॥ ब्रह्मसिद्धिकारिकाणामकारादिक्रमेणानुक्रमणिका ॥

# शुद्धाशुद्ध पत्रिका

## भूमिकाविषयानुक्रमणिका

| शुद्धम् | अशुद्धम् | पृष्ठः | पं. |
|---|---|---|---|
| स्यामेयस्य | स्यभिधेयस्य | २ | १ |
| **भूमिका** | | | |
| तुरीयेण | तुरीयेन | 1 | 13 |
| गृह्णाति | गृह्वाति | ,, | 22 |
| पृष्ठाष्टक | पृष्टाष्टक | 3 | 11 |
| त. पृ. | तं. पृ. | 7 | 1 |
| प्रसंख्यानमेव | प्रसंख्यासनमेव | 12 | 27 |
| विशेष | विशष | 15 | 9 |
| नादिर्निर्हेतुका | नादिर्निहेतुका | 20 | 15 |
| वर्तनं | वार्तनं | 37 | 26 |
| भेदसामानाधि | सामानाधि | 40 | 15 |
| त्रैणाप्रामाण्य | त्रैण प्रामाण्य | 48 | 17 |
| प्रथमा द्वितीया च | प्रथमा | 55 | 9 |
| पनमात्रं | पनभानं | 56 | 10 |
| क्रिया हि | क्रियादि | ,, | 24 |
| मन्यास्सं | मन्या सं | 57 | 12 |
| वाङ्मानवचस्त | वाङ्मानवस्त | ,, | 18 |
| स्वपक्षस्य | स्वप्रक्षस्य | 58 | 14 |
| भाष्यारूढ | भाष्यरूढः | 59 | 5 |
| निदिध्यासन | मिदिध्यासन | ,, | 15 |
| साक्षात्कार | साक्षोत्कार | ,, | 24 |
| साक्षात्कारात्मकं | साक्षात्कात्मकं | 60 | 2 |
| न शाब्दमपि | शाब्दमपि | ,, | 3 |
| मीमांसायाः | मीगांसायाः | ,, | 16 |
| प्रयत्नान्तर | प्रयत्नानन्तर | 63 | 18 |
| ज्ञानाभाव | ज्ञानभाव | 64 | 19 |
| विद्या | द्विधा | 72 | 22 |
| साङ्ख्ययोग | साख्ययोग | 73 | 24 |
| साक्षात्कारफलत्वं | साक्षात्कारत्वं | 76 | 14 |
| पाप्म | पाम्म | 77 | 3 |
| मपि न | मपि | ,, | 18 |
| मिथ्यात्वविरोधि | मिथ्यात्वाविरोधि | 88 | 1 |
| समन्वयादिति | समन्वादिति | ,, | 9 |
| सुष्ठु | सुष्टु | 93 | 9 |
| न धर्म | धर्म | 94 | 15 |
| पूर्वपक्ष | पूर्वमक्ष | 102 | 2 |
| शाब्दापरोक्ष | शाब्दपरोक्ष | 112 | 1 |
| ख्यातिं | ख्याति | 123 | 24 |
| केषुचन | केचन | 125 | 26 |
| मुनेर्देश | मुनेदर्शे | 126 | 28 |
| अधिकं | धिकं | 130 | 13 |
| मातृकायाः | मातृकाया | 132 | 2 |
| शिरसि कृत्वा | शिरसिकृत्य | ,, | 11 |
| **ब्रह्मसिद्धिव्याख्ये** | | | |
| परिणाम | परिणा म | ४ | १४ |
| -मुपनिषदां परि | -मुपनिषदो परि | ६ | २४ |
| साध्यसाधने- | साध्य साधने- | ८ | १९ |
| य एवार्थो | य एवार्थ | ९ | २२ |
| नमिह | न मिह | १० | १५ |
| दुःखहीन | दुःखही न | ११ | ९ |
| सति न मुक्तिः | सति मुक्तिः | १२ | २ |
| -न्नाश्मादौ | -न्नाश्भादौ | १३ | १९ |
| दुःख | दुःस्व | १४ | १३ |
| दुःखयो- | दुखयो- | ,, | २४ |
| एकेन्द्रियं द्वारं | एकेन्द्रियद्वारं | १५ | ७ |
| मागममात्र | मागमात्र | ,, | १४ |
| स्मरणारूढ- | स्मरणा रूढ | २० | १० |
| रुचयोः | रुचय | २२ | २४ |
| सुखाहेतु- | सुखहेतु- | २३ | १७ |
| दुःखानात्मसु | दुःस्वानात्मसु | ,, | २४ |
| हीति | हीते | २९ | १० |
| नन्दयोर्भावरूप | नन्दयोभयविरूप | ३४ | ८ |
| प्रकाश | प्राकश | ३७ | ६ |
| प्रातिपदिकार्थ | प्रातिपादिकार्य | ,, | १८ |
| धर्मयो- | घर्मयो- | ,, | २२ |
| विद्याप | बियाप- | ३९ | २० |

| शुद्धम् | अशुद्धम् | पृष्ठः | पं. |
|---|---|---|---|
| भावानु | भवानु | ४० | १२ |
| रप्याचार्य | रप्याचार्ये | ,, | १३ |
| काममिति 2 | काममिति 1 | ४३ | ९ |
| भावशुद्धिः | भावशुद्धिः | ४५ | १ |
| व्यवस्थावादिनामपि | व्यवस्था वादिनामपि | ,, | २५ |
| वेदना | वेदाना | ४६ | १८ |
| विरुद्ध | विरुद्धा | ,, | २२ |
| दृग्दृश्य | द्रग्दृश्य | ४९ | ५ |
| द्रष्टृ | द्रष्टृ | ,, | १५ |
| अभिप्राय | अभिप्राय | ,, | १९ |
| स्तादात्म्यम् | स्तदात्म्यम् | ५० | ३ |
| योगाचारमते | योगाचारामते | ५२ | १६ |
| विवर्तमान | विवर्तमान | ,, | २३ |
| -रनाद्यविद्या | -रनाद्याविद्या | ५३ | १७ |
| -स्वभावा | -स्वमावा | ५४ | २० |
| विकल्प्य | विकल्प्य | ,, | २६ |
| स्वापेक्षया | स्वपेक्षाया | ५५ | ३ |
| नाग्रहणा | नाग्राहणा | ,, | १३ |
| वाद्यविवादः | वाद्यधिवादः | ५६ | ८ |
| Foot note (क) should be placed in the Page 63. | | ६४ | २६ |
| द्यानिवेशनादित्यर्थः। | द्यनिवेशना। | ६६ | १९ |
| कार्यत्वेना | कार्यात्वेना | ६७ | २२ |
| पादस्यार्थ | पदस्यार्थ | ६९ | २५ |
| इत्यम्भावो | इन्थंभावो | ७० | ३ |
| असतो | वस्तुतो | ७१ | ७ |
| ब्रह्मण- | व्रह्मण- | ७२ | ४ |
| गमकत्व | ममकत्व | ७३ | १९ |
| अविद्येति | अविद्या | ७४ | ११ |
| कुत इत्यत्राह | कुत | ,, | १३ |
| -वभ्युपगतौ | -वभ्युगतौ | ,, | २५ |
| सोपप्लव | सोपप्लुव | ७५ | २० |
| तदुपादानम् | तदुषादानम् | ७६ | १३ |
| इन्द्रियजन्य | इन्द्रिजन्य | ७८ | १५ |
| तद्व्याप्यं | तद्याप्यं | ७९ | २५ |
| वाक्स्वनु- | वाक्क्स्वनु- | ८३ | १२ |
| -नुगतिरेवो | -नुमतिरेवो | ,, | २५ |
| निर्विशेषस्य | निर्विशषस्य | ,, | २८ |
| ऽकालात्मभ्याम् | ऽकालात्माभ्यां | ८८ | ९ |
| निगमयति | निमगयति | ,, | १५ |
| सत्येव | सत्यव | ९० | ६ |
| -श्चित्त्वोपपत्ति- | -श्चित्तोपपत्ते- | ,, | १५ |
| ऋषभ | ऋर्षभ | ,, | २६ |
| श्वेत्यमी | श्वेत्यती | ,, | ,, |
| दर्शयति | दशर्यति | ९२ | ४ |
| स्यान्निवृत्तिः | स्यान्निवृत्ति- | ९२ | १४ |
| प्रतिवन्धादिति | प्रतिन्धादिति | ,, | १५ |
| वन्धः स्यात्, | वद्धः। स्यात्, | ९४ | १० |
| वेदमग्र | वेदग्र | ९५ | ५ |
| सम्भवत इत्यर्थः। | सम्भव इत्यर्थः। | ,, | १७ |
| कादाचित्कं | कदाचित्कं | ९६ | ६ |
| इह हीति। | इहीति | ,, | २२ |
| द्रष्टृ-दृश्ययोः | द्रष्टृ-दृश्ययोः | ९७ | २ |
| -मवगच्छतः। | -मवपगच्छतः। | ,, | ११ |
| निवन्धन इत्यत्राप्याह अविद्यापूर्व- | निवन्धनस्व इत्यत्राप्यविद्यापूर्व- | ,, | २१ |
| कर्मभि- | कार्मभि- | ९९ | १८ |
| -कर्माभावा | -कर्मभावा- | ,, | ,, |
| श्रुति-स्मृती | स्मृति-स्मृती | १०० | २० |
| चिह्ना | चिह्ना | ,, | ,, |
| के नास्ति | कावदिस्ति | ,, | ,, |
| कौटस्थ्यात् | कौटस्थात् | १०१ | ७ |
| प्रभवाभेद- | प्रभावभेद | १०२ | ८ |
| निषेधरूप इत्यस्तु | निषेधरूपावित्यस्तु | १०३ | २ |
| लम्भात्, | -लम्भयात्, | ,, | ८ |
| लम्भे योग्या- | -लभ्भयोग्या | ,, | ९ |

